।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् ३ जिज्ञासाधिकरणम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् – ३

## जिज्ञासाधिकरणम्

(बन्धमिथ्यात्वपूर्वपक्षनिराकरणविषयतः
प्राभाकराख्याति-अनुवादविषयपर्यन्तम्)

पुटसंख्या ९७३ तः १४८४

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

# श्रीमन्न्यायसुधा
परिमळाद्युपेता

संपुटम् – ३

प्रथमं मुद्रणम् - ई.सन् २००३

# Śrīman-Nyāyasudhā
Parimaḷādyupetā

**Volume - 3**

First Edition -2003 A.D.

स्वभानु संवत्सर, शके १९२५, ज्येष्ठ कृष्ण त्रयोदशी, शुक्रवासरः
**श्रीविजयीन्द्रतीर्थश्रीपादानाम् आराधनामहोत्सवः**

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**
**Śrī Rāghavendra Swāmy Mutt**
Mantrālayam - 518 345
India.

* मुद्रकः *

वरखेडकरोपाह्वप्रद्युम्नरसिंहयोः ।
पौत्रो धनंजयो न्यायसुधां मुद्रापयत्यसौ ॥

**सुधा मुद्रणम्**
शंकरपुरम्, बेंगळूर - ५६० ००४
दूरवाणी– ६६७ ६९४२

**SUDHA MUDRANA**
Shankarpuram, Bangalore - 560 004
Phone : 667 6942



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-

**श्रीमन्मध्वाचार्यसमलंकृत-**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

## श्रीमूलरघुपतिपादकमलयोः

**समर्पितोऽयं ग्रन्थः ॥**

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-
**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**
वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-
**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**
**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**
**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसंपादकेभ्यः वैकुण्ठवासिभ्यः श्री साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः श्री धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे।

*इति नारायणस्मृतिः।*

*मन्त्रालयक्षेत्रम्,*
*स्वभानु संवत्सर*
*ज्येष्ठ कृष्ण त्रयोदशी*



श्रीराघवेन्द्रस्वामिमठाधीशानां श्री श्री सुशमीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

**श्री श्री सुविद्येन्द्रतीर्थश्रीपादानां**

परमानुग्रहपूर्वक मार्गदर्शने संपादितोऽयं ग्रन्थः ।

* * *

श्री श्रीपादानां आज्ञानुसारेण ग्रन्थस्यास्य संशोधनादिकार्यं

तत्कालीन श्रीगुरुसार्वभौमसंस्कृतविद्यापीठाध्यक्षैः

श्री राजा एस्. गिरिआचार्यैः तथा तत्पुत्रैः श्री राजा एस्. पवमानाचार्यैः

कृतमिति विशेषरूपेण स्मर्यते ।

* * *

# संपादकविद्वन्मंडली

**प्रधानसंपादकाः**

**श्री आचार्य साणूरु भीमभट्टाः**

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**संपादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री कडपा राघवेन्द्राचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री वरखेडकर भीमसेनाचार्याः

विद्वान् श्री डॉ. पुरोहित नरसिंहाचार्याः

**निर्वाहकाः**

**श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः**

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा संक्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | संक्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गळगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबाळूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### संपुटम् – ३

## विषयानुक्रमणिका





* * * * *

**२०६ सु०— इहापि ज्ञानमज्ञानस्यैव निवर्तकमिति नियमोऽस्तीति चेन्न । सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेन तदनिश्चयात् । न च दर्शनादर्शनमात्रं व्याप्तेर्नियामकमिति वक्ष्यामः । नियतपूर्वक्षणवृत्तित्वशून्यमपि कारणमस्त्विति व्याहता शङ्कैव नोदेति यन्निवृत्तये बाधकमुपन्यसनीयम् । सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेति चेन्न । व्याप्त्यभावात् । विपक्षे बाधकाभावाच्च । अनादेश्च अज्ञानस्य निवृत्तावात्मनोऽपि निवृत्तिः किं न स्यात् । मिथ्याभूतमज्ञानमनाद्यपि निवर्तते न सत्य आत्मेति चेत् । क्वेदमुपलब्धं भवता यत्सत्यं न निवर्तत इति । निवृत्तावनादित्वमप्रयोजकीकृत्य मिथ्यात्वं प्रयोजकीकुर्वताऽज्ञानस्य येन केनापि निवृत्तिः कस्मान्नेष्यते । किं ज्ञाननियमेन । ज्ञानमेवाज्ञानविरोधीति चेत् । हन्त तर्हि विरोधिसद्भाव एव निवृत्तौ प्रयोजक इति कुत आत्मनिवृत्तिः ।**

**बिन्दुः**— नन्वेवं सति यागस्थलेऽप्यपूर्वकल्पनमर्थापत्त्या न स्यात् श्रुतिबोधिताकारणता चिरविनष्टस्यापि यागस्यैवास्त्वित्यत आह **नियतपूर्वेति** ।

**परि०**— प्रबोधे मिथ्याभूतस्वाप्ननिगडबन्धनिवर्तकत्वं दृष्टम् । सत्यनिवर्तकत्वं तु ज्ञानस्य न दृष्टमित्यत आह **न च दर्शनेति** । **वक्ष्याम इति** । 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इति वैशेषिकाधिकरणे विपक्षे बाधकं विना दर्शनमात्रं व्याप्तिनिश्चायकं नेति वक्ष्याम इत्यर्थः । ननु यथा सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेन तन्निवर्त्यबन्धस्य मिथ्यात्वं न कल्प्यमित्युच्यते तथा यागस्यापि कालान्तरभाविस्वर्गहेतुत्वे बाधकाभावान्मध्येऽपूर्वमपि न कल्प्यमिति वक्तुं शक्यत एवेत्यत आह **नियतेति** । सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेनेत्युक्तमयुक्तमिति भावेन बाधकमाशङ्कते **सत्यस्यापीति** । आत्मनो निवृत्त्यापत्तिभयेनाज्ञानस्य सत्यत्वत्यागेऽनादित्वत्यागोऽपि स्यादिति भावेनाभाससाम्यं चाह **अनादेश्चेति** ।

**गु०दी०**— **न च दर्शनादर्शनमात्रम्** इत्यत्र लोके प्रत्यक्षेण ज्ञानस्याज्ञाननिवर्तकत्वदर्शनं संसारबन्धनिवर्तकत्वादर्शनं चेत्यर्थः । **न नियामकम्** इत्यस्य लोके अदृष्टपूर्वेश्वरवत् श्रुत्यैवापूर्वस्याप्यर्थस्य सिद्धिसंभवादित्यर्थः । तर्हि यागेऽपि श्रुतिबलाल्लोके अदृष्टाऽपि विनष्टस्यैव कारणताऽप्यङ्गीक्रियतामित्याशङ्क्य व्याहतमेतन्न श्रुतिशतेनापि साधयितुं शक्यमिति भावेनाह **नियतेति** । सत्यस्य घटादेः मुद्गरेण निवृत्तिदर्शनादिति भावेनाह **क्वेदमुपलब्धम्** इति ।





**यादु०— न च दर्शनेति** । सहचारदर्शनं व्यभिचारादर्शनं चेत्येतावन्मात्रमित्यर्थः । **वक्ष्याम इति** । 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यादाविति शेषः । किन्त्वनुकूलतर्कसहितम् । प्रकृते च स नास्तीति पूरणीयम् । नन्वेवं यत्कालान्तरभावि न तत्कारणमिति नियमोऽपि न संभवति । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्याशङ्कायामाह **नियतपूर्वेति** । सत्यस्यापि ज्ञानेन निवृत्तौ बाधकतर्कमाशङ्कते **सत्यस्यापि निवृत्ताविति** । ननु यद्येनाविशिष्टं तत्तथेति व्याप्तिरस्तीत्यत आह **विपक्ष इति** । ज्ञानमज्ञानस्यैव निवर्तकमिति नियमे न केवलमनुकूलतर्काभावः । किन्तु प्रतिकूलतर्कपराहतिश्चेत्याह **अनादेश्चेति** । प्रतिकूलतर्के मिथ्यात्वमुपाधिमाशङ्कते **मिथ्याभूतमिति** । **क्वेदमिति** । आत्मातिरिक्तस्य सत्यस्य त्वन्मतेऽभावादिति भावः । ततश्च नोपाध्यभावेनात्मनोऽनिवृत्तिसाधनं संभवतीत्युक्तं भवति । किञ्चैवं सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेति त्वदीयतर्केऽपि विरोधसन्निपातस्योपाधित्वात्तदभावेनात्मनोऽनिवृत्तिरस्त्विति वक्तुं विरोधिसद्भावस्य निवृत्तिप्रयोजकत्वं तावत्परेणाप्यङ्गीकारयितुमाह **निवृत्तावनादित्वमिति** ।

**वं०प०—** ननु ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति शुक्तिज्ञाने सहचारदर्शनाद्व्यभिचारादर्शनाच्च नियमोपपत्तिरिति चेत्तत्राह **न दर्शनेति** । **कुत आत्मनिवृत्तिरिति** । सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेत्यात्मनिवृत्त्यापादनं कुतः । विरोधिनोऽभावादिति भावः ।

**आनन्दः— सत्यस्यापीति** । तथाचाप्रयोजकोऽयं नियम इति भावः । ननु ज्ञानेन सत्यनिवृत्तेरदृष्टत्वान्मिथ्याभूतरजतनिवृत्तेर्दृष्टत्वादेवं नियम इत्यत आह **न चेति** । अन्यथा धूमवह्न्योरपि सहचारदर्शनाद्धूमनिरूपितवह्निनिष्ठव्याप्तिरपि गृह्येतेत्यतिप्रसङ्गः स्यादित्यर्थः । **वक्ष्याम इति** । अपि च सत्यस्यापीत्यादाविति शेषः । ननु तर्हि कालान्तरभाविनो नियतपूर्वक्षणवृत्तित्वशून्यस्यापि कारणत्वमस्तु बाधकाभावादिति सोऽपि नियमोऽप्रयोजक इति नापूर्वं कल्प्येतेत्यत आह **नियतेति** । **व्याहतेति** । कारणत्वं हि नियतपूर्वक्षणवृत्तित्वं एवं च नियतपूर्वक्षणवृत्तित्वशून्यं नियतपूर्वक्षणवृत्त्यस्त्विति व्याहतेत्यर्थः । बाधकं शङ्कते **सत्यस्यापीति** । **व्याप्त्यभावादिति** । यत्र सत्यबन्धनिवृत्तिः तत्र आत्मनिवृत्तिरिति व्याप्त्यभावादित्यर्थः । यस्य यद्भवति तत्तदविशिष्टस्यापि भवतीति सामान्यव्याप्तिरस्तीत्यत आह **विपक्ष इति** । आभाससमानयोगोऽप्ययं नियम इत्याह **अनादेरिति** । . . . . . . . . .।

**कं०रा०—** सत्यस्यापि निवृत्तौ बाधकाभावादिति वदन्तं मां प्रति सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेत्यनिष्टप्रसञ्जनं यदि क्रियेत तर्ह्यनादेरज्ञानस्य निवृत्तिं स्वीकुर्वन्तं त्वां प्रत्यनादेर्निवृत्तावात्माऽपि निवर्तेतेत्यनिष्टप्रसञ्जनं तुल्यमापद्येतेत्याह **अनादेरिति** । **आत्मेति** । परमात्मतत्त्वज्ञानेनात्मगतधर्मादिनिवृत्त्यापादने तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादित्यधिकरणन्यायेन तेन तन्निवृत्तेरङ्गीकृतत्वादिष्टापादनमिति भावः ।

**श्रीनिधि०— दर्शनादर्शनमात्रमिति** । दर्शनमात्रस्य व्याप्तिनियामकत्वे पार्थिवत्वलोहलेख्यत्वयोर्व्याप्तिप्रसङ्गः । अतो व्यभिचरितं दर्शनमिति वक्तव्यम् । तच्च प्रकृते सत्यस्यानिवर्त्यत्वनिश्चयाधीनम्, तच्चेदानीं

नास्ति । अदर्शनमात्रस्य व्याप्तिनियामकत्वमपि किमदर्शनमात्रस्य उत प्रमितस्य । आद्ये वह्निमान् धूमवान् वह्नेरित्यत्राप्यापाततः उपाध्यभावदर्शनेन वह्नेरपि धूमव्याप्तिप्रसङ्गः । द्वितीये तु सत्यस्य निवृत्त्यदर्शनं मयापि न प्रमितम् । विवादे जागरूके प्रमानुत्पत्तेः विशेषप्रमाणाभावाच्चेति भावः । ननु लोके अव्यवहितपूर्वक्षणवर्तिन एव कारणत्वदर्शनेऽपि यागस्य व्यवहितपूर्वकालवर्तिनोऽपि श्रुतिबलात् स्वर्गसाधनत्वं भवतु अथ तत्र किञ्चिन्नियामकमुच्यते । तत्पूर्वपक्षिणोऽपि सममित्याशङ्क्य नेयं प्रतिबन्दी युक्ता शङ्काया एवानुदयादित्याह **नियतपूर्वेति** । **यन्निवृत्तये** यस्याः शङ्कायाः निवृत्तये । यद्यनादिर्निवर्तेत तर्ह्यात्मापि निवर्तेत । अनादित्वाविशेषादिति प्रतितर्कपराहतिमाह **अनादेश्चेति** । **क्वेदमिति** । अनादेर्निवृत्तावपि आत्मा न निवर्तते चेत् सत्यस्य निवृत्तावपि आत्मा न निवर्तत एवेति भावः । ननु निवृत्तौ मिथ्यात्वमेव प्रयोजकम् अनिवर्त्यात्मव्यावृत्तत्वात् । न त्वनादित्वं ततो व्यावृत्तेः । तत्र प्रयोजकान्तरस्याभावाच्चेति शङ्कायां येन मिथ्यात्वं तत्र प्रयोजकं उच्येत । नैवं प्रयोजकान्तरमवश्यं वक्तव्यम् । तथात्मनोऽपि तदभावादेवानिवृत्तिसंभवे किमप्रयोजकेनाजागलस्तनायितेन मिथ्यात्वेनेति भावेन निवृत्तौ प्रयोजकान्तरं परमुखेनैव वादयितुमुपोद्घातमाह **निवृत्तावनादित्वमप्रयोजकीकृत्येति** ।

**वा०चं०**— वस्तुतः सतो ज्ञाननिवर्त्यताया अदर्शनान्मिथ्याभूतस्य च ज्ञाननिवर्त्यतादर्शनेन ज्ञानमज्ञानस्यैव निवर्तकमिति नियमस्यावश्यकत्वात्तद्विरोधेन श्रुतेरप्रामाण्यापत्त्या तदुपपादकतया बन्धमिथ्यात्वमवश्यं कल्प्यमित्याशयेन शङ्कते **इहापीति** । अप्रयोजकतया त्वदुक्तनियमस्य असिद्धेर्वैषम्यमेवेत्याह **सत्यस्यापीति** । परोक्तं दर्शनस्य नियामकत्वमन्यथयति **न चेति** । तर्हि बाधकाभावेन मदुक्तनियमोऽप्यप्रयोजक इति न वैषम्यमित्यतो बाधकानुपन्यासेऽपि व्याहत्याशङ्कानुदयेन तदुक्तनियमसिद्धेस्त्वदुक्ते च शङ्कानुदयप्रयोजकव्याहत्यभावाद्बाधकानुपन्यासाच्च वैषम्यमेवेत्याशयेनाह **नियतेति** । नियतपूर्ववृत्तित्वशून्यत्वं कालान्तरभावित्वव्यापकं कालान्तरभाविशब्दबललब्धमिति द्रष्टव्यम् । ननु सत्यस्यापि निवृत्तौ बाधकाभावेनेत्यनुपपन्नम् । बाधकसद्भावात् । तथा च दृष्टान्ते व्याहत्याशङ्कानुदयः । प्रकृते चोत्पन्नशङ्काया बाधकवशान्निवृत्तिरिति वैषम्यमात्रमप्रयोजकमेवेत्याशयेन शङ्कते **सत्यस्यापीति** । **व्याप्त्यभावादिति** । सत्यनिवृत्त्याऽऽत्मनिवृत्तिरूपापाद्यापादकयोर्व्याप्तिग्राहकप्रमाणाभावेन व्याप्त्यभावादिति भावः । ननु माऽस्तु विशेषव्याप्तिः । यस्य यद्वत्ति तदविशिष्टस्यापरस्यापि तद्वतीति सामान्यव्याप्तिस्तावत्सर्वसिद्धा । तथाच सत्यत्वाविशेषात्तदाश्रयेण प्रकृतेऽप्यापादनं सुलभमेव । नापि विपक्षे बाधकाभावः । सत्यस्य निवृत्तावप्यात्मनोऽनिवृत्तावविशेषानुपपत्तेरेव तथात्वादित्यतो विरोधिसदसद्भावाभ्यां विशेषादविशेषोऽसिद्ध इत्याशयेन विरोधिसद्भावस्य निवृत्तिप्रयोजकत्वं परमुखेनैवानेतुं सत्यस्य निवृत्तावात्मनिवृत्त्यापादनेऽज्ञानकल्पितत्वपक्षेऽप्यनादित्वाविशेषेणाज्ञाननिवृत्तावात्मनिवृत्तिः स्यादित्यापादनसौलभ्यादाभाससाम्यं तावदाह **अनादेश्चेति** । नन्वनादेरपि प्रागभावस्य निवृत्तेर्भावत्वेन विशेषणेऽपि तत्तद्वादिरीत्याऽनादिभावानामपि निवृत्तेर्नानादित्वमनिवृत्तौ प्रयोजकम् । सत्यस्य चानिवृत्तेर्मिथ्यात्वमेव निवृत्तौ प्रयोजकमिति तद्वत्त्वादज्ञाननिवृत्तावपि प्रयोजकाभावान्नात्मनिवृत्तिरिति विशेषं शङ्कते **मिथ्याभूतमिति** । मिथ्यात्वस्य निवृत्तिप्रयोजकतानिश्चयस्य मुख्यतो व्यतिरेकसहचारनिश्चयनिबन्धनत्वादात्मप्रपञ्चयोश्च प्रकृततर्कयोरापाद्यापादककोटिनिविष्टतया तत्र तन्निश्चयासंभवान्न





मिथ्यात्वस्य निवृत्तिप्रयोजकतानिश्चय इत्याशयेनाह **केदमिति** । ननु सत्यस्यानिवृत्त्यदर्शनेऽपि निवृत्तेरदर्शन-मात्रेण व्यतिरेकसहचारनिश्चयो भविष्यतीति चेत् तर्हि सादिभावत्वस्य निवृत्तिप्रयोजकत्वेऽवयवतत्संयोग-नाशाभ्यामेवावयविनाशो न येन केनचिदिति नियमसंभवेऽपि मिथ्यात्वस्य प्रयोजकत्वे न तत्संभवो नियामकाभावादिति बाधकान्न तस्य प्रयोजकतानिश्चयः । यदि च मिथ्यात्वस्य निवृत्तिप्रयोजकताग्रहेण दृष्टमप्यवयवतत्संयोगविनाशाभ्यामेवावयविनाश इति नियममपलपसि तर्हि ज्ञानेनैवाज्ञाननिवृत्तिरिति नियममपि त्यज । तथा च न पूर्वोक्तं बाधकमित्याशयेनाह **निवृत्ताविति** । यद्वा सत्यस्यानिवृत्त्यदर्शनेऽपि निवृत्त्यदर्शन-मात्रेण व्यतिरेकसहचारनिश्चयो भविष्यतीत्युक्तशङ्कापरिहारः, एवं तर्हि निवृत्तावनादित्वादेरप्रयोजकत्वेन मिथ्यात्व-स्यैवावश्यकत्वान्निवर्त्ये सादित्वादिनियमवन्निवर्तके ज्ञानत्वादिनियमोऽपि परित्याज्यः स्यादित्याह **निवृत्ताविति** । मिथ्यात्वं प्रयोजकमङ्गीकुर्वताऽपि विरोधिसद्भावस्य निवृत्तिप्रयोजकताया अपरित्यागान्नायमतिप्रसङ्ग इति भावेनाशङ्कते **ज्ञानमेवेति** । तर्हि प्राप्ताप्राप्तविवेकेन विरोधिसद्भावस्यैव निवृत्तिप्रयोजकतापर्यवसानेन मिथ्यात्वोक्तेः रिक्तत्वात् सत्यत्वेऽपि विरोधिसद्भावात्प्रपञ्चनिवृत्तावपि नात्मनिवृत्तिस्तदभावात् । तथा च मां प्रत्यप्यात्म-निवृत्त्यापादनमनुपपन्नमेव विशेषाभावादित्याह **हन्तेति**।

**वा०र०**— तत्त्वप्रदीपिकातन्नयनप्रसादिन्योरपीदं प्राभाकरादिमतद्वयमुपन्यस्तमस्ति । तत्प्रकारोऽप्युप-योगानुसारेण ज्ञेयः । तथैव चशब्दस्तद्व्यापारो वा प्रवर्तक इति निरस्तमिति वक्ष्यमाणमूलटीकाव्याख्याने व्यापारादिविवेकः करिष्यते सोऽप्युपयोगानुसारेण ज्ञेयः । अज्ञानस्य येनकेनापि निवृत्तिः किं नेष्यते । किं ज्ञानेनेत्यनेनानादित्वस्य केवलस्य भावत्वविशेषितस्य वा निवृत्त्यभावप्रयोजकत्वस्य प्रागभावादौ व्यभिचारेणायोगे निवृत्तिप्रयोजकतया मिथ्यात्वमङ्गीकुर्वता सादिभावत्वस्य निवृत्तावप्रयोजकत्वमपि वाच्यम् । तथाच अनादित्व-मविनाशेऽप्रयोजकीकृत्य विनाशे सादिभावत्वं चाप्रयोजकीकृत्य विनाशे मिथ्यात्वं प्रयोजकं त्वया कार्यम् । तदा तु अवयवतत्संयोगनाशाभ्यामेवावयविनाश इति नियमविरोध इत्युच्यत इत्याह **तर्हि सादिभावत्वस्येति** । ननु मिथ्यात्वस्य प्रयोजकत्वेऽप्युक्तनियमः किं न स्यात्ततो न विरोध इत्यत उक्तं **नियामकाभावादिति** । सादिभावत्वस्य प्रयोजकत्वे गुणगुण्याद्यभेदमतानुसारेण वा सादिभावत्वस्य वा नाशं प्रति अवयवादिनाशस्य प्रयोजकता शक्या वक्तुम् । अवयविनः प्रकारान्तरेण नाशानुसारेण दृष्टत्यागादृष्टकल्पनाप्रसङ्गात् । मिथ्यात्वस्य प्रयोजकत्वे तु नावयवादिनाशस्य कार्यनाशप्रयोजकत्वनियमो वक्तुं शक्यः । अवयवित्वादेः सादिभावत्व-घटकतयोक्तनियमप्रसङ्गेऽपि मिथ्यात्वप्रयोजकत्वे अवयवित्वादिप्रापकाभावेनोक्तनियमस्याप्रसरात्प्रत्युत तद्विरोध एवेति भावः । **तस्य** मिथ्यात्वस्य । ननु मिथ्यात्वस्य प्रयोजकत्वमङ्गीकुर्वता अवयवादिनाशेनैवावयविनाश इति नियमस्यैवानङ्गीकारान्न तदसंभवो वा तद्विरोधो वाऽनिष्ट इत्याह **यदि च मिथ्यात्वस्येति** । यदि स्वाग्रहमात्रेण दृष्टस्यापि अवयवादिनाशरूपप्रयोजकस्य त्यागस्तर्हि दृष्टोऽपि ज्ञानेनाज्ञाननाशः परित्याज्यः । तथाच ज्ञानमज्ञानस्यैवेति नियमरूपं पूर्वोक्तं न बाधकमित्यर्थः । एतद्योजनायां **निवृत्ताविति** मूलम् । मिथ्यात्वं निवृत्तौ प्रयोजकीकुर्वतेति संबन्धः । अनादित्वमप्रयोजकीकृत्येत्यत्र योग्यतया विनाशाभावं प्रतीति संबद्ध्यत इति योजितं





भवति । **निवृत्तावनादित्वादेरिति** । एवं च निवृत्तावनादित्वमिति यथाश्रुत एव संबन्धः । निवृत्तिं प्रत्यनादित्वं न प्रयोजकं न तन्नियामकम् । तदभावसंपादनाय नालमिति यावत् । उपलक्षणमेतत् । सादित्वं निवृत्तौ न प्रयोजकं न निवृत्तिमापादयतीत्यपि बोध्यम् । अत एव अनादित्वादेरित्यादिपदम् ।

**स०व्र०**— साम्यमाशङ्कते **इहापीति** । किमत्र सत्यस्य निवृत्तौ बाधकसद्भावान्मिथ्यात्वमुच्यते उत मिथ्याभूतस्य शुक्तिरजतादेर्निवृत्तिदर्शनात् । नाद्य इत्याह **नेति** । न द्वितीय इत्याह **न चेति** । यद्वा न च दर्शनमिति सहचारदर्शनं व्यभिचारादर्शनमित्यर्थः । वक्ष्यामः, 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यनेन । ननु यत्कालान्तरभावि न तत्कारणमिति व्याप्तिनिश्चयो न युक्तः कालान्तरभाविनोऽपि कारणत्वे बाधकाभावेन अप्रयोजकत्वादित्यत आह **नियतेति** । व्याघातान्नाप्रयोजकत्वमिति भावः । सत्यस्य निवृत्तौ बाधकं शङ्कते **सत्यस्यापीति** । परिहरति **क्वेदमिति** । निवर्तकसद्भावस्य प्रयोजकत्वानभ्युपगमेऽतिप्रसङ्गमाह **निवृत्ताविति** । एवं च सत्यस्य निवृत्तौ बाधकं नास्तीत्युपसंहरति **इतीति** ।

**वि्ठ०**— कल्पकं शङ्कते **इहापीति** । ननु कथं बाधकाभावः शुक्तिरजतज्ञानस्य तदज्ञाननिवर्तकत्व-दर्शनात् सत्यस्य ज्ञानेन निवृत्तेरदर्शनाच्चेत्यत आह **न चेति** । सहदर्शनमात्रेण न व्याप्तिरवसीयते इत्यत्र वक्ष्याम इति भावः । ननु दर्शनमप्रयोजकीकृत्य श्रुत्यनुरोधात् सत्यस्यापि ज्ञाननिवृत्त्यङ्गीकारे तथैव दर्शनमप्रयो-जकीकृत्य व्यवहितकालवृत्तिनोऽपि यागस्य श्रुत्यनुरोधात् कारणत्वं वक्तुं शक्यते विनिगमकस्य विपक्षे बाधकस्यानुपन्यासात् एवं चापूर्वं दत्तजलाञ्जलिकं च स्यादित्यत आह **नियतपूर्वेति** । नियतपूर्वक्षणवृत्तित्वं खलु कारणत्वं तथाच तच्छून्यमपि तद्विशिष्टमित्युक्ते व्याहतिरित्याशयः । सत्यस्य ज्ञानेन निवृत्तौ बाधकं तर्कमाशङ्कते **सत्यस्यापीति** । अविशेषोक्तिरित्यत आह **विपक्ष इति** । आत्मनोऽनादित्वं बाधकमित्यत आह **अनादेश्चेति** । अनादित्वमप्रयोजकमिति भावः । न ह्यनादित्वं निवृत्त्यभावे प्रयोजकं किन्तु मिथ्यात्वाभावः तथाच मिथ्यात्वाभावात् आत्मा न निवर्तते अज्ञानं तु मिथ्यात्वाद्विनिवर्तते इत्याशयेन शङ्कते **मिथ्याभूतमिति** । आत्मातिरिक्तस्य सत्यस्यैवानङ्गीकारात् यत्सत्यं तन्न निवर्तते इति व्याप्तेः दर्शनात् आत्मनः सत्यत्वात् अनिवृत्तिरिति वक्तुं न शक्यते इत्याह **क्वेदमिति** । निवृत्तौ मिथ्यात्वमप्रयोजकमित्याह **निवृत्तौ अनादित्वमिति** । **कुत आत्म-निवृत्तिरिति** । विरोधिसद्भावस्यैव निवृत्तिप्रयोजकतया निश्चितत्वादात्मनिवर्तकविरोध्यभावात् कुत आत्मनिवृत्ति-रूपप्रतिबन्दी शङ्क्यते इति भावः ।

**चषकः**— **वक्ष्याम इति** । 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यादावित्युपस्कर्तव्यम् । कार्याव्यवहितपूर्वक्षणावच्छेदेनावर्तमानस्यापि कारणतास्त्विति शङ्कामपाकुरुते **नियतेति** । सत्यस्यापि ज्ञानेन निवृत्त्युपगमे सत्यत्वानिवृत्त्योरापाद्यापादकयोरात्मनि व्याप्त्यवधारणेनाज्ञानं यदि सत्यं स्यात्तर्हि न निवर्तेत निवर्तते चातो न सत्यमिति विपक्षे बाधकतर्कमाशङ्कते **सत्यस्यापीति** । **व्याप्त्यभावादिति** । घटादेरपि सत्यत्वोपगमेनापादके आपाद्यनिरूपितव्याप्त्यभावादिति भावः । **विपक्ष इति** । आत्मनोऽनिवृत्त्युपगमे बाधकप्रमाणाभावादिति भावः ।





अज्ञानं यद्यनादि स्यात्तर्हि आत्मवन्न निवर्तेत निवर्तते चातो नानादीत्यज्ञानधर्मिकानादित्वापादककानिवर्त्यत्वापाद्यकप्रतिकूलरूपापत्तेरात्मावधृतापाद्यापादकव्याप्तिकायाः पराहतिं चाभिधत्ते **अनादेरिति** । भावत्वाविशेषितानादित्वस्य निवृत्तिप्रतियोगिन्यपि प्रागभावे तद्विशेषितस्य च तत्तद्वादिदिशा तत्प्रतियोगिभूतदर्शितसदर्थेषु दर्शनिनानिवृत्तिप्रयोजकतावैधुर्येण सत्यत्वस्यैव तादृशतया आत्मनस्तादृशानिवृत्तिप्रयोजकसत्यत्वाक्रान्ततया अनिवर्त्यत्वेऽप्यज्ञानस्य मिथ्यात्वेन तादृगनिवृत्तिप्रयोजकराहित्यान्निवृत्तिः सङ्गच्छत इति दर्शितप्रतिकूलतर्कहेतुभूतापाद्याभिमतानिवर्त्यत्वनिरूपितापादकीभूतानादित्वनिष्ठव्याप्तौ सत्यत्वमुपाधिमाशङ्कते **मिथ्याभूतमिति** । आत्मनो निवृत्त्यापत्तिभयेनाज्ञानस्य सत्यत्वत्यागेऽनादित्वत्यागोऽपि स्यादिति भावेन आभाससाम्यं चाह । **अनादेश्चेती**त्यवतारयन्ति । दर्शितापत्तिहेतुभूतप्रकृतापाद्यनिवर्त्यत्वनिरूपितप्रकृतापादकानादित्वनिष्ठव्याप्तौ सत्यत्वस्योपाधित्वं क्व किमधिकरणावच्छेदेनोपलब्धं भवतीति योजना । आत्मान्यसर्वस्य त्वन्मते सत्यत्वानुपगतेस्तत्र सत्यत्वस्यानिवर्त्यत्वव्यापकत्वानवधारणेनात्मनि सत्यत्वेनानिवृत्तिनिश्चयस्तदभावेनाज्ञाने निवृत्तिनिश्चयश्च दुःशक इति भावः । सत्यस्यापि निवृत्तावात्मापि निवर्तेतेति त्वदीयप्रसङ्गेऽप्यापाद्यापादकव्याप्तौ विरोधिसन्निपातस्योपाधितया तादृशोपाध्यभावादात्मनो न निवृत्तिरित्यभिधित्समानः प्रतिवादिदिशाऽपि विरोधिसन्निपातस्य निवृत्तिप्रयोजकतासंप्रतिपत्तिं संपिपादयिषति **निवृत्तावनादित्वमिति** ।

**गूढ०—— सत्यस्यापीति** । तथा च अप्रयोजकोऽयं नियम इति भावः । न तु ज्ञानेन सत्यनिवृत्तेरदृष्टत्वान्मिथ्याभूतरजतनिवृत्तेर्दृष्टत्वादेवं नियम इत्यत आह **न चेति** । अन्यथा धूमवह्न्योरपि सहचारदर्शनाद्धूमनिरूपितवह्निनिष्ठव्याप्तिरपि गृह्येतेत्यतिप्रसङ्गः स्यादित्यर्थः । **वक्ष्याम इति** । अपि च सत्यस्यापीत्यादाविति शेषः । ननु तर्हि कालान्तरभाविनो नियतपूर्वक्षणवृत्तित्वशून्यस्यापि कारणत्वमस्तु बाधकाभावादिति सोऽपि नियमोऽप्रयोजक इति नापूर्वं कल्प्येतेत्यत आह **नियतेति** । **व्याहतेति** । कारणत्वं हि नियतपूर्वक्षणवृत्तित्वम् । एवं च नियतपूर्वक्षणवृत्तित्वशून्यं नियतपूर्वक्षणवृत्त्यस्त्विति व्याहतेत्यर्थः । बाधकं शङ्कते **सत्यस्यापीति** । **व्याप्त्यभावादिति** । यत्र सत्यबन्धनिवृत्तिः तत्रात्मनिवृत्तिरिति व्याप्त्यभावादित्यर्थः । यस्य यद्वति तत्तदविशिष्टस्यापि भवतीति सामान्यव्याप्तिरस्तीत्यत आह **विपक्ष इति** । आभाससमानयोगोऽप्ययं नियम इत्याह **अनादेरिति** । सत्यत्वमिथ्यात्वाभ्यां निवृत्त्यनिवृत्ती इत्याशङ्कते **मिथ्याभूतमिति** । सत्यत्वस्य निवृत्त्यभावप्रयोजकत्वमनुपलब्धिबाधितमित्याह **क्वेदमिति** । मिथ्यात्वस्यैव निवृत्तिप्रयोजकत्वेऽतिप्रसङ्गमाह **निवृत्ताविति** । निवृत्तौ मिथ्यात्वमित्यन्वयः । अनादित्वमप्रयोजकीकृत्य आत्मादौ निवृत्त्यभावप्रयोजकतया उपलब्धमिति शेषः ।

**प्रदीपः——** भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनं गुरुमते परमापूर्वसिद्ध्यर्थमिति विभागसाम्यमाशङ्कते **इहापीति** । किमत्र सत्यस्य निवृत्तौ बाधकसद्भावात् मिथ्यात्वमुच्यते उत मिथ्याभूतस्य शुक्तिरजतादेर्निवृत्तिदर्शनात् । अथ मिथ्याभूतस्य निवृत्तौ बाधकाभावात् नाद्य इत्याह **नेति** । न द्वितीय इत्याह **न चेति** । न तृतीयः मिथ्याभूतशङ्काया एवानुदयादित्याह **नियतेति** । सत्यस्य निवृत्तौ बाधकं शङ्कते **सत्यस्यापीति** । परिहरति **नेति** ।





निवर्तकसदसद्भावाभ्यां विशेष इत्याशयः । निवर्तकसद्भावस्य निवृत्तौ प्रयोजकत्वं परेणाप्यङ्गीकारयितुमाह **अनादेश्चेति** । मिथ्यात्वमेव प्रयोजकं न निवर्तकसद्भाव इति शङ्कते **मिथ्येति** । अन्वयव्यतिरेकाभ्यां हि मिथ्यात्वस्य प्रयोजकत्वमवधेयम् । ब्रह्मणोऽपि निवृत्त्यापादने संप्रतिपन्नस्थलाभावात् क्वान्वयव्यतिरेकौ गृह्येयातां यतो मिथ्यात्वस्य प्रयोजकत्वं निश्चीयत इत्याशयेन परिहरति **क्वेदमिति** । निवर्तकसद्भावस्य प्रयोजकत्वानभ्युपगमेऽतिप्रसङ्गमाह **निवृत्ताविति** । विरोधिनिवर्त्यत्वानभ्युपगमेऽन्वयव्यतिरेकाभ्यां प्रयोजककल्पनालाघवाच्च मिथ्यात्वं त्यजतीत्याह **ज्ञानमेवेति** । एवं च सत्यस्य निवृत्तौ बाधकं नास्तीत्युपसंहरतीति ।

**२०७ सु०— ननु ज्ञानेन सत्यं निवर्तमानं किं विषयगतं निवर्तते । उताश्रयगतम् । अथोभयगतम् । नाद्यः । यतश्चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं स्वविषयं वा स्वविषयसमवेतं वा रसादिकं विरोधिनं वा पीतिमादिगुणं न निवर्तयति । न द्वितीयः । घटादिज्ञानेनात्मगतधर्माद्यनिवृत्तेः । न तृतीयः । आत्मनः शरीरविषयज्ञानेन शरीरात्मसंबन्धानिवृत्तेरिति ॥ मैवम् । उक्तोत्तरत्वात् । यदि ज्ञानमाश्रयगतं निवर्तयेत् तदा धर्मादिकमपि निवर्तयेदित्यत्र व्याप्त्यभावात् । विपक्षे बाधकाभावाच्च । घटादिज्ञानं धर्माद्यविरोधि आत्मयाथात्म्यज्ञानं तु बन्धविरोधीति वैषम्याच्च । आत्मयाथात्म्यज्ञानस्यैवापादनविषयतायामिष्टापादनम् । चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं तु मिथ्याज्ञानमेव । नापि तत्र पीतिमगुणोऽस्ति । एकमेव हि चित्रं नाम रूपमाश्रयव्याप्यवृत्तीति पदार्थविदः ।**

**बिन्दुः—** **स्वविषयमिति** । स्वस्य श्यामोऽयमिति ज्ञानस्य विषयः श्यामं रूपमित्यर्थः । ननु शुक्तित्वज्ञानस्य शुक्तित्वरूपस्वविषयानिवर्तकत्वात् कथमिदमापाद्यत इत्यत आह **स्वविषयसमवेतं वा रसादिकमिति** । ननु तथापि शुक्तित्वज्ञानं न स्वविषयसमवेतशुक्लरूपादिनिवर्तकं किन्तु तद्विरोधिरजतादिकमेव निवर्तयतीत्यत आह **विरोधिनं वा पीतिमादिगुणमिति** । विषयगतोभयगतनिवर्तकतायाः अनभ्युपगमेनैव परास्तत्वादाश्रयगतस्य सत्यस्यापि बन्धस्य ज्ञानान्निवृत्तिरित्यस्मिन् पक्षे दूषणानि परिहरति **यदीति** । ननु घटादिज्ञानेन न धर्मादिनिवृत्तिरापाद्यते किन्तु आत्मज्ञानेनेति चेदित्यत आह **आत्मयाथात्म्येति** । तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति वक्ष्यमाणचातुर्थिकन्यायेन परमात्मविषयापरोक्षज्ञानस्य आत्मनिष्ठधर्मादिनिवर्तकतायाः सिद्धान्ते स्थितत्वादित्यन्यस्य त्वविरोधित्वादिति भावः । अनभ्युपगमनिरस्तेऽपि पक्षे परस्य व्युत्पत्त्यभावं सूचयन्नुक्तिं खण्डयति **चित्रेति** । **एकमेव हि चित्रं नामेति** । मूर्तविशेषगुणानां आश्रयव्याप्यवृत्तित्वात् अवयविनि एकं रूपं चित्रमिति प्रतीत्या रूपैकत्वसिद्धिः । न चावयवगतनानारूपैरेव तादृशप्रतीतौ धर्मिणि रूपप्रतीत्यभ्युपगमो व्यर्थ इति





वाच्यम् । यतो महत्त्वसमानाधिकरणोद्भूतरूपतायाः बहिर्द्रव्यप्रत्यक्षताप्रयोजकत्वेन . . . . . . . . समवायप्रत्यक्षत्वमेव न स्यात् । न च रूपवत्समवेतत्वमेव तत्र प्रयोजकं गौरवात् । रूपत्वस्यैव प्रयोजकत्वे लाघवादिति भावः । ननु सिद्धान्ते अवयवावयविनोरभेदात् अवयवरूपमेवावयविरूपं न चावयवेषु चित्रं रूपमस्ति तत्कथं चित्ररूपाङ्गीकार इति चेत् अस्त्यत्र महान्विशेषः । सिद्धान्ते हि अवयविनः पटादिना एकैकेन तन्त्वादिनात्यन्ताभेदः । किन्तु भेदाभेद एव समुदितैरवयवैः परमत्य-न्ताभेदः । न च समुदाये एकं रूपमस्ति किन्तु नानारूपसमुदाय एव । तदेव च चित्रं रूपं नाम । समुदायसमुदायिनोर्भेदाभेदाङ्गीकारात् । येनैव हि न्यायेन तन्तुपटयोर्विशेषः तेनैव न्यायेनावयवगत-नानारूपसमुदायस्यावयविगतचित्ररूपस्य च विशेषः सर्वैरपि वादिभिरभ्युपेय एव । तत्र यदि अत्यन्तभेद आरम्भवादिभिरङ्गीक्रियेत तर्हि अत्रापि तथास्तु यदि परिणामवादः सोऽपि समान एव । परमाणुपुञ्जवादिभिरपि प्रत्येकपरमाण्वपेक्षया घटे कश्चन विशेषोऽवश्यं वाच्य एव तेनैव न्यायेनात्रापि गले पतत्येव । न हि निर्विशेषात्यन्ताभेदं कोऽपि वादी शक्ष्यति स्वीकर्तुम् । तदेतत्सर्वमभिप्रेत्याह **इति पदार्थतत्त्वविद इति** । ये तु सेनावनादौ समुदायसमुदायिनोर्विशेषं न मन्यन्ते किन्तु एकस्थानस्थिता अनेके करितुरगा एव सेनापदार्थः वृक्षा एव वनपदार्थ इति तेषां संयोगविशेषापन्ना एव तन्तुकपालादय इति सुवचत्वात् । अतिरिक्तावयविकल्पनमर्द्धजरतीयन्यायसेनावनन्यायेन परमाणुपुञ्जवाद एव पर्यव-सानम् । ननु परमाणोरतीन्द्रियत्वात् तत्समुदायरूपत्वाङ्गीकारे घटादेरपि तथात्वापत्तिरित्यतिरिक्तं द्रव्यं घटः सिद्ध्यतीति चेत् । तर्हि दूरस्थस्य एकैकस्य वृक्षस्य पदातेर्वा प्रत्यक्षेणाग्रहणात् । तन्नानात्वे वनसेनयोरपि दूरात्प्रत्यक्षं नैव स्यात् इति तत्राप्यतिरिक्तसमुदायसिद्धिः । ननु यथा एकैकस्य कुन्तलस्य दूरादप्रत्यक्षत्वेऽपि सजातीयसंवलनरूपसहकारिवशात् कुन्तलकलापः प्रत्यक्षः तथा सेनावनादावप्य-स्त्विति चेत् । पक्षतुल्यत्वात् । परमाणुघटादावपि तथा वक्तुं शक्यत्वाच्च । तस्मात् यादृश्यत्र व्यवस्था तादृशी चित्ररूपेऽप्यस्त्येव । सोऽयं न्यायः चित्ररसादावपि तुल्य एव । तदेतदप्याह **पदार्थतत्त्वविद इति** ।

**परि०**— विवरणोक्तमाशङ्कते **ननु ज्ञानेनेति** । **विषयेति** । ज्ञानविषयगतं ज्ञानाश्रयगतं वेत्यर्थः । आद्ये किं स्वविषयगतं किञ्चित्स्वविषयमेव निवर्तयति ज्ञानं उत स्वविषयसमवेतं यत्किञ्चिन्निवर्तयति । अथ स्वविषयसमवेतं स्वविषयस्य विरोधिनमेव विषयगतमिति त्रीनपि कल्पान् क्रमेण निराह **स्वविषयं वेत्यादि** । स्वविषयं नीलमित्यर्थः । स्वविषयसमवेतं वा रसादिकमित्येकान्वयः । **घटादिज्ञानेनेति** । न्यायमते घटादिज्ञानस्य धर्मादिश्चात्मधर्मत्वात् आत्मगतेत्युक्तम् । उक्तोत्तरत्वादित्येतद्व्यनक्ति **यदीति** ।





घटादिज्ञानस्य धर्माद्यनिवर्तकत्वेऽप्यात्मज्ञानस्य तु स्यादेवेत्याह **घटादीति** । आत्मयाथात्म्यज्ञानं स्वाश्रयगतं निवर्तयति चेद्धर्मादिकमपि निवर्तयेदित्यापाद्यत इत्यत आह **आत्मेति** । **इष्टेति** । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'त्यादेरिति भावः । एतच्चेष्टापादनं न्यायमतरीत्येति ध्येयम् । तन्मते षोडशपदार्थविविक्तत्वेनात्मयाथात्म्यज्ञानस्यैव धर्मादिनिवर्तकत्वात् । यद्वाऽऽत्मपदेन परमात्मैव ग्राह्यः । परमात्मयाथात्म्यविषयकज्ञानस्यैव जीवगतस्य स्वाश्रयसंबन्धि सकलकर्मनिवर्तकत्वात् । यदपि चित्रावयविनीत्यादि तदपि न । ज्ञानपदेन प्रमारूपज्ञानस्य विवक्षितत्वादिति भावेनाह **चित्रेति** । **एकमेव हीति** । नानारूपोपेतावयवैर्जाते द्रव्ये जायमानं रूपमनेकं न भवति । तथात्वे रूपस्य संयोगादि-वदव्याप्यवृत्तित्वापत्तेः । किन्तु कार्यद्रव्यरूपस्वाश्रयव्यापिचित्ररूपं नामैकमेव तद्रूपमिति पदार्थविदो नैयायिका मन्यन्ते । तान्प्रति त्वया कथ्यमानमापादनमसङ्गतमेवेति भावः ।

**गु०दी०**— यज्ज्ञानं तत्सर्वं यस्य कस्यचित्सत्यस्य निवर्तकमिति वदन्तं प्रति स्यादिदमनिष्टापादनं यज्ज्ञानं तद्यस्य निवर्तकत्वेन दृष्टमनुमितं श्रुतं वा तत्तस्य निवर्तकमिति वदन्तं प्रत्यसङ्गतमिदमनिष्टापादनमिति भावेनाह **उक्तोत्तरत्वात्** इति । **आत्मयाथात्म्यज्ञानस्यैवापादनविषयतायाम्** इत्यस्य आत्मयाथात्म्यज्ञानं बन्धनिवर्तकं चेत् स्वाश्रयगतधर्मादिकमपि निवर्तयेत् इत्यापादनविषयतायामित्यर्थः । "पुण्यपापे विधूय" इति श्रुतेस्तदिष्टमिति भावेनाह **इष्टापादनम्** इति । परकीयतर्कस्याश्रयासिद्धिमाह **चित्रावयविनि** इति ।

**यादु०**— प्रकारान्तरेण सत्यस्य ज्ञानेन निवृत्तौ बाधकमाशङ्कते **ननु ज्ञानेन सत्यमिति** । जीवगतेन ब्रह्मज्ञानेन सत्यं निवर्तमानं किं विषयभूतब्रह्मगतं नियन्तृत्वादिकमेव । तन्निवृत्तौ जीवगतनियम्यत्वादिपञ्चस्यापि तत्सापेक्षस्य निवृत्तिर्र्थाल्लब्धैवेत्यभिप्रायः । यद्वा आश्रयजीवगतनियम्यत्वादिकमेव ब्रह्मज्ञाननिवर्त्यम् । तन्निवृत्तौ तत्सापेक्षस्यापि ब्रह्मगतनियन्तृत्वादिकस्य निवृत्तिरार्थिकीति । अथवा आश्रयविषयीभूतजीवब्रह्मलक्षणोभयसंबद्धं कर्तृत्वादिकमिति यथाक्रमं विकल्पत्रयार्थः । सर्वत्रापि क्रमेण व्यभिचारमाह **यत इत्यादिना** । नानारूपसमाहार-श्चित्रमिति कस्यचिन्मतमाश्रित्येदमुदितमित्याहुः । आद्यपक्षेऽपि नियन्तृत्वादिविशिष्टब्रह्मविषयं ज्ञानं स्वविषयभूतं नियन्तृत्वादिविशिष्टं निवर्तयति उत केवलब्रह्मविषयमेव ब्रह्मगतनियन्तृत्वादिकमिति विकल्प्याद्यं दूषयति **नीलविशिष्टद्रव्येति** । स्वविषयं नीलविशिष्टमित्यर्थः । चित्रावयविनीत्येतद्विरोधिनं वा पीतिमादिगुणमिति वक्ष्यमाणगुणोपपत्त्यर्थम् । द्वितीयं दूषयति **स्वविषयसमवेतमिति** । नीलज्ञानस्य न रसादिनिवर्तकत्वमविरोधात् । शुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्याशङ्क्य तत्रापि व्यभिचारमाह **विरोधिनं वेति** । द्वितीयपक्षमाश्रित्य विरोधिसद्भावस्य निवृत्तौ प्रयोजकत्वान्नोक्तदोष इत्याह **मैवमित्यादिना** । **उक्तोत्तरत्वादिति** । सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेत्यस्य यदुत्तरमुक्तं व्याप्त्यभावादित्यादि तदेवात्रापीत्यर्थः । तदेव दर्शयति **यदि ज्ञानमिति** । यदि ब्रह्मज्ञानमाश्रयगतं नियम्यत्वादि निवर्तयेत्तदा स्वाश्रयगतं धर्मादिकं निवर्तयेदित्यत्र व्याप्त्यभावादित्यर्थः । पूर्ववदविशेषनिष्ठव्याप्तिनिरासायाह **विपक्ष इति** । असिद्धश्चाविशेष इत्याह **घटादिज्ञानमिति** । **बन्धेति** ।

आश्रयगतनियम्यत्वादिरेव दुःखादिबन्धरूप इति हृदयम् । ननु यदि ब्रह्मज्ञानमाश्रयगतनियम्यत्वादि निवर्तयेत्तदा तद्गतं धर्मादिकमपि निवर्तयेदविशेषादित्यापाद्यते न घटादिज्ञानमतस्तद्वैषम्येऽपि न दोष इत्याकाङ्क्षायामाह **आत्मयाथात्म्येति** । परमात्मयाथात्म्यज्ञानेन जीवगतधर्मादिबन्धनिवृत्तेरस्माभिरप्यङ्गीकृतत्वादिति भावः । **मिथ्याज्ञानमेवेति** । अतो न याथात्म्यज्ञानस्य विषयतद्गतनिवर्तकत्वे व्यभिचारोदाहरणस्थलमिदमिति भावः । **एकमेव हीति** । नानारूपसमाहारस्य चित्रत्वे नीलधवलारुणेषु पटेषु कर्बुरार्थचित्रप्रत्ययापत्तिः । एकस्मिन्धर्मिणि नानारूपसमाहारातिरिक्तचित्ररूपानङ्गीकारे एकस्य अनारम्भकत्वेन सितपीततन्तुद्वयमात्रारब्धपटे रूपोत्पत्त्यसंभवेन तस्य नीरूपत्वापत्त्याऽचाक्षुषत्वापत्तिश्चेति तेषां भावः । इदं च परस्यासंबद्धप्रलापित्वप्रकटनायैवोक्तं न तु तत्पक्षकक्षीकरणार्थम् । एकस्याप्यारम्भकत्वे रूपस्याव्याप्यवृत्तित्वे च बाधकाभावेनैकस्मिन्धर्मिणि नानारूप-समाहारातिरिक्तचित्ररूपाङ्गीकारे साधकाभावात् । अत एव 'पीतशुक्लारुणो हरिः । कृष्णश्चे'त्यादीनि वचनानि समञ्जसानीत्यवधेयम् ।

**कं०रा०— एकमेवेति** । नानारूपवदवयवारब्धेऽवयविनि चित्ररूपं नामैकमेवरूपम् । न तु नानारूप-समाहारः । रूपस्य व्याप्यवृत्तित्वनियमादिति हि पदार्थविदो वदन्तीत्यर्थः । ननु चित्ररूपस्यातिरिक्तत्वे नानारसव-द्रव्यारब्धेऽवयविनि चित्ररसोऽप्यङ्गीकर्तव्यः स्यात् । तुल्यन्यायत्वादिति चेन्मैवम् । तत्रावयविनि रसोपलम्भ-स्यावयवगतरसैरेवोपपत्त्या रसान्तराभ्युपगमे बीजाभावात् । न चैवमुक्तन्यायेन चित्ररूपस्याप्यपलापः स्यादिति वाच्यम् । अवयवगतरूपव्यतिरेकेणावयविनि रूपान्तराभावेऽवयविनोऽचाक्षुषत्वप्रसङ्गात् । चाक्षुषत्वप्रयोजनकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्याभावात् । न च वाच्यं महत्त्वसमानाधिकरणोद्भूतरूपवदवयवारब्धत्वं तत्प्रयोजकमिति । लाघवेन महत्त्वे सत्युद्भूतरूपवत्त्वस्यैव चाक्षुषत्वप्रयोजकत्वादिति दिक् ।

**श्रीनिधि०—** विषयगतमित्यत्र किं विषयगतं विषयं निवर्तयति उत विषयगतं स्वविषयविरोधिनम् । अथवा विषयगतं स्वविषयमिति विकल्पान् हृदि निधाय निराह **नाद्य इत्यादिना** । अत्राद्यविषयशब्देन धर्म उच्यते । द्वितीयविषयशब्देन विषयगतधर्म उच्यत इति ज्ञेयम् । अथवा किं विषयगतं स्वविषयं निवर्तयति उत स्वविषयं द्वितीयेऽपि विषयगतस्वविषयाविरोधिनम् उत विरोधिनमिति विकल्पो द्रष्टव्यः । **उक्तोत्तरत्वादिति** । अज्ञानां ज्ञानदः ज्ञानिनां मोक्षद इत्युक्तत्वेन बन्धस्य आत्मगतत्वादाश्रयगतं निवर्तयतीति पक्षपरिग्रहस्य कृतत्वेन विकल्पानवकाश इति भावः । अत्रोक्तदोषं, किं यत्किञ्चित् ज्ञानेन धर्मादिनिवृत्तिरापाद्यते उतात्मयाथार्थ्यज्ञानेनेति विकल्पौ हृदि निधायाद्ये परिहरति **यदि ज्ञानमित्यादिना** । स्वाश्रयगतत्वाविशेषेण धर्मादिकमपि निवर्तयेदेव । घटगतस्य तेजस्संयोगरूपपाकस्य तद्रूपनिवर्तकत्ववत् रसनिवर्तकत्वस्यापि दर्शनात् इत्यत आह **आत्मयाथात्म्यज्ञानं त्विति** । द्वितीय आह **आत्मयाथात्म्यज्ञानस्यैवेति** । चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं त्वित्यादि । अस्माभिस्तु यथार्थ-ज्ञानस्यैव बन्धनिवर्तकत्वमुक्तं न तु ज्ञानमात्रस्येति । तथा च विषयगतं निवर्तयतीति पक्षेऽपि तवापादकासिद्धिरिति भावः । इदं च दूषणं न्यायरीत्या । **पदार्थविदः** नैयायिकाः ।

**वा०चं०**— एवं ज्ञानाद्बन्धनिवृत्तिर्न दृष्टसामर्थ्यात् । आगमप्रतीते च साध्यसाधनभावे न काऽप्यनुपपत्तिरिति पक्षे विवरणोक्तबाधकं परिहृत्यास्तु वा दृष्टसामर्थ्यादिव बन्धनिवृत्तिस्तथाऽपि नानुपपत्तिरित्यभ्युच्चयेन पक्षमभ्युपेत्य तत्रापि विवरणोक्तानुपपत्तिं परिहर्तुं शङ्कते **नन्विति** । यद्यप्यत्र प्रथममेवास्तु वा ज्ञानाद्बन्धनिवृत्तिः सा च दृष्टसामर्थ्यादित्युक्त्वा तत्रैतदाशङ्क्य परिहृत्यानन्तरमभ्युपेत्य चेदमुदितम् । न वयं दृष्टसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिं ब्रूम इत्यादिग्रन्थकरणे विवरणोक्तक्रमेणैव दूषणमुक्तं भवति । तथाऽप्यत्र तत्प्रमेयानङ्गीकारेण पराभिमतं निराकृत्यास्तु वेत्यादिनोत्तरोत्तरं तदङ्गीकारेणापि पराभिमतनिरासस्याभ्युच्चयेन प्रस्तावादागमेन ज्ञानाद्बन्धनिवृत्तौ प्राप्तानुपपत्तिनिरासानन्तरं किमागमपर्यन्तधावनेनास्तु वा दृष्टसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिरिति पक्षस्तथापि परोक्तदूषणपरिहारः सुशक इत्युक्तेः सङ्गतत्वादुक्तातिदेशेन दूषणसौकर्याच्चैवं सन्निवेश इति द्रष्टव्यम् । न चैवमप्यस्तु वा दृष्टसामर्थ्याद्बन्धनिवृत्तिस्तथाऽपि नानुपपत्तिरिति साक्षादेवोक्त्वा तद्दूषणपरिहारः कुतो न कृत इति वाच्यम् । ज्ञाननिवर्त्यस्य सत्यस्य विषयगतत्वाद्यन्यतमवत्त्वस्यावश्यवाच्यतया ज्ञानेन विषयगतादिबन्धनिवृत्तौ च विषयगतादिनिवृत्तिदर्शनस्यैव मूलत्वात्तस्य चानुपपन्नतया मूलाभावेन विषयगतादिनिवृत्त्यसंभवे सत्यस्य ज्ञानेन निवृत्तिर्न स्यादिति सत्यस्यापि निवृत्तावात्मनिवृत्तिरपि स्यादितिवत् सत्यस्यापि निवृत्तौ तस्य विषयगतत्वाद्यन्यतमत्वमपि स्यात् । तन्मूलतया ज्ञानेन विषयगतादिनिवृत्तिदर्शनमप्यनुपपन्नमङ्गीकार्यं स्यादिति बाधकान्तरकथनेऽपि तात्पर्यात् । अत्र चात्मज्ञानेन स्वविषयात्मनिष्ठनियन्तृत्वादिनिवृत्तौ तत्सापेक्षस्य जीवगतस्य नियम्यत्वादेरप्यर्थान्निवृत्तिसिद्धिरित्याशयेनाद्यः । ज्ञानाश्रयजीवगतनियम्यत्वादिप्रपञ्चनिवृत्तौ तत्सापेक्षब्रह्मगतनियन्तृत्वादेरप्यर्थान्निवृत्तिरिति द्वितीयः । उभयगतकर्तृत्वादिनिवृत्तिरिति तृतीयः । आद्येऽपि निवर्त्यनियन्तृत्वादिरूपप्रपञ्चविशिष्टविषयकमात्मज्ञानं तन्निवर्तकमुत निवर्त्यप्रपञ्चाविषयकम् । उभयत्रापि विशिष्टविषयस्य केवलविषयकस्य वाऽऽत्मज्ञानस्य स्वविषयगतनियन्तृत्वादिनिवर्तकत्वं दृष्टसामर्थ्याद्वदता विशिष्टादिविषयकस्य विषयगतनिवर्तकत्वं दृष्टमिति वक्तव्यम् । न च तद् दृष्टं प्रत्युत तदभाव एव दृष्ट इति व्यभिचार इत्याशयेनाद्यं निराह **यत इति** । अत्र ब्रह्मज्ञानेन सत्यं निवर्तमानं विषयगतं नियन्तृत्वादि निवर्तते यतो ज्ञानेन विषयगतं निवर्तते लोक इति योजनयोक्ताभिप्रायलाभोऽत एव शङ्काग्रन्थे सामान्यनिर्देश इति । एवमेवोत्तरकल्पद्वयेऽपि योजना द्रष्टव्या । विषयगतपक्षदूषणावसरे नीलादेः स्वविषयत्वोक्तिस्तु विशिष्टविषयकस्य विशेषणविषयकत्वस्यापि सत्त्वाभिप्रायेणेति द्रष्टव्यम् । केवलविषयकं तद्गतनियन्तृत्वादिनिवर्तकमित्यत्रापि व्यभिचारमाह **स्वविषयसमवेतमिति** । नीलज्ञानस्य न रसादिनिवर्तकत्वमविरोधाच्छुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्यतस्तत्रापि व्यभिचारमाह **विरोधिनं वेति** । अथवा निवर्त्यस्य सत्यस्य विषयगतत्वाद्यन्यतमवत्त्वनियमाद् ब्रह्मज्ञानेन विषयादिगतसत्यनियन्तृत्वादिनिवृत्तौ ज्ञानेन स्वविषयादिगतमन्यदपि सत्यं निवर्तेतेति सत्यस्यापि निवृत्तौ बाधकप्रसङ्गोऽत्र शङ्काग्रन्थेऽभिमतः । तत्र चेष्टापत्तौ तर्हि तत्तज्ज्ञानेन स्वस्वविषयादिगतं निवर्तते किमित्यापाद्यापादकयोः सूचनाय । ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तौ सत्यस्यापि निवृत्तिः किं न स्यादिति सामान्यस्यैव प्रस्तुतत्वाच्च सामान्येनानुवादोऽयम् । एवं च ज्ञानमज्ञानस्यैव निवर्तकमित्यत्राप्रयोजकत्वाशङ्कायां विपक्षे बाधकान्तरं विवरणोक्तमाशङ्कते **नन्विति** । आपादनत्रयेऽपीष्टापत्तिं निरस्यति नाद्यो यत इत्यादिनेति योज्यम् । एवं च विवरणे दृष्टसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिरिति दर्शनमूलपक्षदूषण-





त्वेनैतदुक्तावप्युक्तरीत्या विपक्षबाधकत्वस्यापि संभवात्तथा शङ्कितम् । अत्र च पक्षे आपादनविवक्षाप्रवृत्तोत्तर-ग्रन्थस्वारस्यं यथास्थितविन्यासानुपपत्तिशङ्कानुदयश्चेति द्रष्टव्यम् । आत्मज्ञानेनात्मगतनियन्तृत्वादेरुभयगत-कर्तृत्वादेर्वा निवृत्तेः सिद्धान्तेऽनभ्युपगमात्प्रथमतृतीयावनङ्गीकारेण पराकृत्य द्वितीयं पक्षमाश्रित्य तत्रोक्तदूषणं परिहरति **मैवमिति** । यदि ज्ञानमाश्रयगतं निवर्तयेत्तर्हि धर्मादिकमपि निवर्तयेत् । न च धर्मादिकं निवर्तयति । तस्मान्न ज्ञानमाश्रयगतनिवर्तकम् । ततश्च नाश्रयगतनियम्यत्वादिनिवर्तकत्वमात्मज्ञानस्येति ज्ञानसामान्यस्यापादन-विषयतामभिप्रेत्य आत्मज्ञानस्य नियम्यत्वादिनिवर्तकत्वाभावसिद्धिरार्थिकीति मनुषे आहोस्विदात्मज्ञानं यद्याश्रय-गतनियम्यत्वादिनिवर्तकं तर्हि धर्मादिनिवर्तकमपि स्यादित्यात्मज्ञानरूपविशेषस्यापादनविषयतामभिप्रेत्य यज्ज्ञान-माश्रयगतं निवर्तयति तद्धर्मादिकमपि निवर्तयतीति व्याप्तौ च घटादिज्ञानेनेति व्यभिचारोद्भावनमिति वा । तत्राद्यं सत्यस्य निवृत्त्यभावात्माऽपि निवर्तेतेति परोक्ततर्के पूर्वोक्तदूषणातिदेशेन दूषयति **यदीति** । हन्त तर्हि विरोधिरुद्भाव एवेत्युक्तदूषणातिदेशेनापि तं दूषयति **घटादीति** । मयाऽऽत्मज्ञानेन नियम्यत्वादिवद्धर्मादिनिवृत्तेरभ्युपगमा-दिष्टापत्तिरिति भावेन द्वितीयं निराचष्टे **आत्मेति** । एवं चोक्तोत्तरत्वादित्याद्यकल्पनिरासायैवेति द्रष्टव्यम् । इदं च व्यभिचारपरतापक्षे व्यभिचारोपपादनाय विवक्षितेऽन्यथा पटादिज्ञानेनापि धर्मादिनिवृत्तिः स्यादित्यापादने दूषणं विपक्षबाधकतापक्षे यथास्थित आपादन एवेति द्रष्टव्यम् । एवमाद्यपक्षस्यानङ्गीकारपराहतत्वात्तद्दूषणमनुद्धृत्य स्वाभिमतद्वितीयपक्षदूषणमेवोद्धृतम् । अधुना प्रतिवादिस्खलितं नोपेक्षामर्हतीत्याशयेनाद्यपक्षोक्तव्यभिचारस्थलं निराकरोति **चित्रावयविनीति** । तत्र नीलरूपस्य तद्विरोधिपीतिम्नोऽप्यभावान्न तस्य व्यभिचारोदाहरणत्वं युक्तमिति भावः । न च चित्रावयव्यारम्भकनीलावयवविवक्षया नीलविशिष्टवस्तुज्ञानस्यानिवर्तकत्वोदाहृतेर्न विरोध इति वाच्यम् । तथा सति चित्रावयविनीत्यस्य वैयर्थ्यापत्तेः । नीलज्ञानस्य स्वविषयनिवर्तकत्वे चित्रावयविन एवानुपपत्तिरिति प्रदर्शनार्थत्वेन कथञ्चिदवैयर्थ्ये स्वविरोधिनं पीतिमानमित्यस्यानुपपत्तेरेव । तदेतदप्याह **चित्रावयविनीति** । नापि तत्र पीतिमगुणोऽस्तीति च । नापि चित्रावयव्यारम्भकपीतावयवे नीलोऽयमासीदिति ज्ञानस्य वा नीलमिति ज्ञानस्य वा विवक्षितत्वात्तज्ज्ञानस्य वा नीलमिति ज्ञानस्य वा विवक्षितत्वात्तज्ज्ञानस्य च वर्तमानपीतनिवर्तकत्वा-न्नोदाहरणासङ्गतिरित्यपि युक्तम् । वर्तमानविषयज्ञानस्य स्वविषयविरोधिनिवर्तकतां वदन्तं सत्यत्ववादिनं प्रत्येतस्यानुदाहरणत्वात् । न च तथा सति पारमार्थिकप्रपञ्चवादिनस्तत्काले प्रपञ्चाभावासंभवेन निष्प्रपञ्च-ब्रह्मज्ञानस्य प्रपञ्चनिवृत्तेः पूर्वं वर्तमानप्रपञ्चाभावविषयकत्वासंभवेन ततः प्रपञ्चनिवृत्त्यसंभव इति वाच्यम् । तन्मते निष्प्रपञ्चब्रह्मज्ञानस्य प्रपञ्चनिवर्तकत्वासंप्रतिपत्तेः । तदिदमुक्तम् । **भ्रम एवेति** । नन्वस्तु तर्हि प्रतिभासबलाच्छुक्लादिरूपस्य समानजातीयरूपारम्भकत्वनियमेन कारणे चित्ररूपाभावे कार्ये तदयोगाच्च नानारूपसमाहार एव चित्रमिति यथास्थितोदाहरण एव नासङ्गतिरिति । न चैवं चित्ररूपमिति प्रतीतिमाश्रित्य चित्ररूपमङ्गीकुर्वतोऽन्यथाप्रतीतौ विप्रतिपत्तेः अव्याप्यवृत्तेर्व्याप्यवृत्तिसजातीयताविरोधेन रूपाणां व्याप्यवृत्तिता-नियममभ्युपगच्छतो रूपस्य सजातीयरूपारम्भकत्वनियमस्य च असिद्धेः नानारूपवदवयवारब्धद्रव्यरूपस्याव्याप्य-वृत्तित्वमनुभवबलादित्यस्य तु अनुभवविप्रतिपत्त्या निरस्ततया नानारूपसमाहारपक्षानुपपत्त्या कथं नोदाहरणासङ्गति-रिति वाच्यम् । तथाऽप्यनुभवद्वयस्य नियमद्वयस्य च प्रतिपक्षतया नैकस्यापि निर्णय इति भ्रम एवेत्युक्तमयुक्तमित्यत





आह **एकमेव हीति** । पदार्थविद इत्यनेन तदुक्तयुक्त्यैव प्रकृतसिद्धौ वाक्यार्थमीमांसाऽभिनिविष्टानां किं पृथक् तत्र युक्त्युपन्यासाऽऽयासेनेति परस्य पदार्थक्लृप्तिशून्यस्य वाक्यार्थमीमांसायां नाधिकार इति च सूचयति । एवं हि पदार्थविदामाशयः । नानारूपवदवयवारब्धस्यावयविनो न तावन्नीरूपत्वम् । अप्रत्यक्षत्वप्रसङ्गात् । न चावयवरूपमेव स्वाश्रयसमवेतत्वप्रत्यासत्त्या तत्र हेतुः । चित्रावयवारब्धावयविप्रत्यक्षे तथापि व्यभिचारात् । न च अव्याप्यवृत्तिनानारूपाण्येव तथा । अव्याप्यवृत्तेर्व्याप्यवृत्तिसजातीयताविरोधात् । न च व्याप्यवृत्तीन्येव तानि । नीलावयवानवच्छेदेन सन्निकर्षे नीलादेरुपलम्भापत्तेः । अतो नीलपीतादिभिरेकं संभूय चित्ररूपमारभ्यते । न च सामग्रीसत्त्वान्नीलादिभिर्नीलादेरपि जननापत्तिः । अगत्या नीलेतररूपादेर्नीलादिकं प्रति प्रतिबन्धकत्वकल्पनात् । प्रतिबन्धकतावच्छेदकं स्वसमवायिसमवेतत्वं प्रतिबद्ध्यतावच्छेदकः समवायः संबन्धः । कपालादौ नीलेतररूपसत्त्वे घटादौ समवायेन नीलादेरनुत्पादनात् । तथाऽपि चित्ररूपजनकतावच्छेदकं किमिति चेत् । रूपत्वमेव । न चैवमवयवे केवलनीलसत्त्वे चित्रोत्पादः स्यादिति वाच्यम् । नीलाभावपीताभावादीनामवयवस्थितानां चित्रत्वावच्छिन्नं प्रति हेतुत्वात् । हेतुतावच्छेदकसंबन्धः स्वाश्रयसमवेतत्वं कार्यताघटकः समवायः । एवं च नीलाभावादेर्वाय्वादावपि सत्त्वात्तत्र चित्रोत्पत्तिवारणाय चित्रत्वावच्छिन्ने रूपत्वेन हेतुत्वमुक्तम् । एवं च न कोऽपि दोषः । ननु स्यादियं प्रतिबन्धकादिकल्पना यदि चित्ररूपस्थले नीलेन नीलजनने बाधकं स्यात् । न चाव्याप्यवृत्तेर्व्याप्यवृत्तिसजातीयताविरोधो बाधक इति वाच्यम् । तद्विरोधस्य निष्प्रमाणकत्वात् । अप्रामाणिकविरोधं प्रकल्प्य नीलेतररूपादेर्नीलादिप्रतिबन्धकत्वकल्पनस्य गौरवकरत्वात् । एवं चाव्याप्यवृत्तिनानारूपाण्येव चित्रम् । अत एव 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुर' इत्यादिशास्त्रं 'त्रिश्वेता शल्की'त्यादिव्यवहाराश्चोपपद्यन्ते । न चैवं क्वचित्किञ्चिदवयवावच्छिन्नं क्वचिच्च सर्वावयवावच्छिन्नं नीलाद्युत्पद्यते । तत्र च न नियामकमिति वाच्यम् । अवच्छेदकतासंबन्धेन नीलादिकं प्रति समवायेन नीलादेरुत्पत्तिवारणायावच्छेदकतासंबन्धेन नीलं प्रति नीलेतररूपं प्रतिबन्धकमतो न तत्र कपालावच्छेदेन नीलरूपोत्पत्तिः । किन्तु नीलकपालावच्छेदेन । न च सर्वनीलारब्धघटादिवृत्तिनीलरूपादेरप्यवच्छेद्यत्वापत्तिरुक्तसामग्रीसत्त्वादिति वाच्यम् । नीलरूपाभावोऽपि नीलरूपं प्रति हेतुः । कार्यताघटकः संबन्धोऽवच्छेदकत्वं कारणताघटकः संबन्धः स्वाश्रयवृत्तिद्रव्यसमवायः । एवं पीतरूपादौ पीतरूपाभावादिस्तथा । एवं च न कोऽपि दोष इति चित्ररूपाङ्गीकारोऽनुपपन्न इति चेत् । उच्यते । यद्यपि चित्ररूपाङ्गीकारपक्षे नीलादिकं प्रति नीलेतररूपत्वादिना प्रतिबद्ध्यप्रतिबन्धकभावोऽगत्या कल्पनीयः । नीलाभावादीनां चित्ररूपं प्रति हेतुता च कल्पनीया । अव्याप्यवृत्तिरूपपक्षेऽवच्छेदकतासंबन्धेन नीलादिकं प्रति नीलेतररूपादिकं समवायेन प्रतिबन्धकम् । व्याप्यवृत्तिनीलस्थलेऽवच्छेदकतासंबन्धेन नीलोत्पत्तिवारणाय पूर्वोक्तद्रव्यघटितसंबन्धेन नीलाभावादीनामवच्छेदकतासंबन्धेन नीलादिकं प्रति हेतुता कल्पनीयेति कार्यकारणभावकल्पना तुल्या । तथाऽप्यव्याप्यवृत्तिरूपपक्षे चित्रस्थलेऽवयविनि बहूनि रूपाणि तद्ध्वंसप्रागभावादीनि कल्पनीयानि । चित्रपक्षे एकमेव रूपमिति लाघवम् । तस्माच्चित्रं रूपमेकमेवेति पक्ष एव साधुरिति । एवं च नानारूपसमाहारश्चित्रमिति पक्षस्यायुक्तत्वात्प्रतिभासस्य च मिथ्याज्ञानत्वाच्चित्रावयविनि नीलविशिष्टवस्तुज्ञानोदाहरणमयुक्तमित्याशयः ।

**वा०र०— ननु ज्ञानेन सत्यमित्यादि** मूलमसङ्गतम् । प्राक् न हि दृष्टसामर्थ्यात् ज्ञानाद्बन्धनिवृत्तिरिति तत्पक्षस्यानङ्गीकारपूर्वकमागम एव चेत्यागमपक्षस्यैवाङ्गीकारमुक्त्वा तत्र विवरणोक्तदूषणपरिहारस्य कृततयेदानीं परित्यक्तस्य दृष्टसामर्थ्यपक्षस्याश्रयणेन दोषाशङ्का तत्परिहारयोरसङ्गतत्वादित्याशङ्कानिरासायाङ्गीकारवादेनायं ग्रन्थः प्रवृत्त इति योजयति **एवं ज्ञानाद्बन्धेति । बाधकमिति** । आग्नेयादिस्थले श्रुतापूर्वादिसाधनत्वानुपपत्तिमूलकमध्ये अपूर्वादिकल्पना तर्हि न स्यादित्यादिबाधकमित्यर्थः । **अस्तु वा दृष्टेति** । अनेन मूलेन ननु ज्ञानेनेति ग्रन्थोऽस्तु वा दृष्टसामर्थ्यादेव ज्ञानात् बन्धनिवृत्तिस्तथापि नानुपपत्तिरित्येतावत्प्रमेयं सिद्धान्त्यङ्गीकारानुसारेण सिद्धवत्कृत्य प्रवृत्तम् । अन्यथाऽसङ्गत्यापत्तेरिति सूचितम् । **यद्यप्यत्रेति** । विवरणग्रन्थानुक्रमेण तत्रत्यशङ्कानां समाधानरूपतां तत्रत्यपरिहाराणां च शङ्कारूपतामाश्रित्य तत्प्रवृत्तोऽयं मूलग्रन्थ इति तावद्ग्रन्थे तद्ग्रन्थमर्यादावलोकने स्पष्टम् । सति चैवं तत्र प्रथमतो दृष्टसामर्थ्याश्रयणेन बन्धनिवृत्तिपक्षं चित्रावयविनीत्यादिना निराकृत्य पश्चान्ननु न दृष्टसामर्थ्यादित्यादिना आगमाश्रयणेन बन्धनिवृत्तिपक्षस्याशङ्क्य निराकृतत्वात्तदनुसारेणैव दृष्टसामर्थ्यपक्षं प्रथमत आश्रित्य तत्पक्षप्राप्तं ननु ज्ञानेन इत्यादिदूषणनिरासं चाभिधाय पश्चादङ्गीकृत्य चैतदुक्तम् । वस्तुतो न दृष्टसामर्थ्यादित्यादिरूपेण आगम-पक्षाङ्गीकारतत्पक्षप्राप्तदोषनिराकरणादिप्रवृत्तिरूपेणैतद्ग्रन्थवाक्यरचना कर्तव्या । तत्परित्यागेन व्युत्क्रमानुष्ठानं तु निर्निबन्धनमापद्यते । उक्तरचनापक्षे च विवरणग्रन्थक्रमानुसारेण तदीयं समाधानमत्र शङ्कारूपम् । तदनन्तरं प्रवृत्ता तदीया शङ्कैवास्मत्परिहाररूपेत्येवं क्रमोऽपि संरक्षितो भवतीत्यर्थः । **तथाऽप्यत्रेति** । सत्यं विवरणस्थशङ्का-समाधानयोरेवात्र विपर्ययेण प्रवर्तनं प्रतीयत इत्यादि । तथापि न दोषः । तद्ग्रन्थे दूषितपक्षाणां मध्ये केषाञ्चित् पक्षाणामनङ्गीकारेणैव तत्पक्षोक्तदोषस्य स्वमतेऽवकाशाभाव इति प्रथमतः प्रतिपाद्य तदनन्तरमस्तु वा पक्षान्तरमपि तथापि तत्पक्षे परोक्तानुपपत्तिर्नास्तीत्येवमभ्युच्चयेन तदाश्रयणपूर्वकं तत्पक्षप्राप्तानुपपत्तिपरिहारस्यात्र मूलग्रन्थे स्पष्टप्रतिभासतया विवरणक्रमोल्लङ्घनस्यापि सत्त्वेनापेक्षितक्रमाश्रयणेन दोषपरिहारकरणस्य सङ्गतत्वादित्यर्थः । यद्यपि मिथ्याभूतस्य स्वाप्ननिगडबन्धस्य प्रबोधेनैव साक्षादिति पूर्वमूलानुसारेणैव प्रबोधनिवर्त्यस्वाप्ननिगडादिबन्धे मिथ्यात्वं दृष्टमित्येवंरूपं दृष्टं भिन्नप्रकारमेव प्राप्तम् । तदेव परेण विरोधितया शङ्कितम् । न हि दृष्टेत्यादिना पूर्वं तत्सामर्थ्यानाश्रयणमेव चोक्तम् । ज्ञानेन सत्यमित्येतद्विवरणग्रन्थस्तु तत्सामर्थ्याश्रयणपक्षे न प्रवृत्त इति तदङ्गीकारोक्तिरत्र कथमित्याभाति । तथापि दृष्टमात्रस्य विरोधित्वेन पूर्वमूलोक्तस्येव विवरणोक्तस्यापि दृष्टस्य निवृत्त्यभाव एव दृष्ट इत्येवंरूपस्य विरोधितया तद्दृष्टविरोधमपि निराकर्तुं सामान्यत एवास्तु वा दृष्टसामर्थ्यादिति तत्सामर्थ्यपक्षमाश्रित्य तत्र विवरणोक्तस्याप्याशङ्कापूर्वकं तत्परिहारं कृत्वा तदुभयदृष्टस्याप्रयोजकत्वं वक्तुं दृष्टसामर्थ्यं नाश्रीयत इति वक्तुमुचितमिति शङ्काशयान्न दोष इति ज्ञेयम् । **उक्तातिदेशेनेति** । सत्यस्यापि निवृत्तावात्मापि निवर्त्येतेत्याशङ्कापरिहारकतयोक्तव्याप्त्यभावबोधकाभावरूपदूषणातिदेशेनेत्यर्थः । न च तर्ह्येतत्पक्षदूषणतया व्याप्त्य-भावबाधकाभावयोः प्रथममभिधाने सति पश्चान्निराकरिष्यमाणागमपक्षे उक्तदूषणातिदेशोपपत्तेर्विपरीतमपि सौकर्य-मिति वाच्यम् । आगमपक्षे यथाश्रुतार्थे बाधकापत्तिपूर्वकापूर्वादिकल्पनायाः परेणैवोपक्षेपे सति सत्यस्य निवृत्तौ बाधकाभावेन तदनुपपत्तिपूर्वकमिथ्यात्वकल्पनायोग इति प्राधान्येन बाधकाभावादेरुपन्यासेन दृष्टसामर्थ्यपक्षीय-द्वितीयपक्षनिरासाय पूर्वोपन्यस्तबाधकाभावादेरतिदेशोपपत्तावप्यागमपक्षेऽतिदेशाश्रयणायोगः । दृष्टसामर्थ्यपक्षे





बाधकाभावादेः प्राधान्येनोपन्यासाप्राप्तेरित्यत्र तात्पर्यात् । प्रकारान्तरेण प्राप्तमूलकाराचातुरीमप्याशङ्क्य परिहरति **न चैवमपीति** । **इति साक्षादेवेति** । आगमाश्रयणपक्ष इवेति पूरणीयम् । ननु ज्ञानेनेत्यादिग्रन्थदर्शनेनागमपक्षाश्रयणे एतदप्रसङ्गाद्दृष्टसामर्थ्याश्रयणेनायं ग्रन्थ इति बहिरेव शिष्यैः कल्प्यत्वादित्याशयः । तद्दूषणेत्यत्रापि साक्षादिति वर्तते । तथाच ब्रह्मज्ञानेन सत्यं निवर्तमानं विषयगतं नियन्तृत्वादिकं निवर्तत इत्यादिरूपेण साक्षाद्दूषणोद्भावनपूर्वकं तत्परिहारप्रवृत्तिमपहाय ज्ञानेन सत्यमिति नीलज्ञानात्मज्ञानसाधारणज्ञानसामान्यस्य नियन्तृत्वादिनीलादिसाधारण-सत्यसामान्यस्य च पुरस्कारेण प्रवृत्तितत्परिहारौ च न युक्तावित्याशयः । कार्यान्तरार्थं मूलकृता मुखत एव दृष्टसामर्थ्यपक्षो नोक्तः अपि त्वभिप्रायेणैव स्वीकृतः ज्ञानसामान्यमुखेनैव च बन्धनिवृत्तिदूषणप्रवृत्तिरत्रेति तत्पुरस्कारोऽपीति न दोष इति परिहारं सूचयन् ननु ज्ञानेनेत्यादिना बन्धनिवृत्त्ययोगबाधकान्तरप्राप्तिप्रकारयोरप्रतीतेः तत्प्राप्तिप्रकारं च दर्शयति **ज्ञाननिवर्त्यस्येत्यादिना** । सत्यस्येत्यनन्तरं बन्धस्येति शेषः । अन्यतमवत्त्वस्यावश्य-वाच्यतयेति पाठः । विषयगतत्वाश्रयगतत्वोभयगतत्वेषु यदन्यतमं तद्वत्त्वस्येत्यर्थः । ज्ञानेन सत्यं निवर्तत इति वदता तत्सत्यं विषयगतं वा आश्रयगतं वोभयगतं वा वाच्यम् । अतिरिक्तप्रकाराभावादित्याशयः । ज्ञाननिवर्त्यस्येत्युक्तयैव मिथ्याभूतस्थले शुक्तिज्ञानेन विषयगतादिभूतरजताकाररजतत्वसंस्कारादिनिवृत्तिदर्शनेन तद्वदत्र सत्येऽपि ज्ञानेन निवर्तमाने विषयगतत्वादि प्राप्तमिति सूचयति । ज्ञानेन निवर्तमानः सत्यो बन्धो विषयादिगत एव तर्हि भवत्वित्यत आह **ज्ञानेनेति** । निवृत्तौ चेत्यतः परं ज्ञानेनेत्यनुवर्तते । विषयगतादीत्यतःपरं सत्येति योज्यम् । लोके विषयगतादेः सत्यस्य कस्यचिज्ज्ञानेन निवृत्तेर्यद्दर्शनं तन्मूलकत्वादित्यर्थः । तावतापि किमित्यत आह **तस्य चेति** । चित्रावयविनीत्यादिवक्ष्यमाणरीत्येति सिद्धत्वान्नोक्तम् । दर्शनाभावात्प्रत्युतेति रीत्याऽनुपपन्नत्वम् । विषयगतादी-त्यतःपरं बन्धेति पूरणीयम् । सत्यस्येत्यतःपरं बन्धस्येति च । **न स्यादितीति** । न संभवतीति वक्तव्ये न स्यादित्युक्तिरस्य ग्रन्थस्यापादनेऽपि तात्पर्यम् । **अत एव** यदि ज्ञानमाश्रयगतं निवर्तयेदिति वक्ष्यमाणमूलेऽनुवाद इति सूचनाय एवमुत्तरत्रापि । इतीत्यतःपरं योजनया सत्यस्यापीति पाठादिति । सत्यस्यापीतिं पाठेऽनन्वय इति शङ्कानवकाशः । **इतिवदिति** । इति दृष्टसामर्थ्यमनाश्रित्य प्रवृत्ते पक्षे बाधककथनवदित्यर्थः । सत्यस्यापि बन्धस्येति योज्यम् । विषयादिगतत्वाद्यन्यतमवत एव सत्यस्य बन्धस्य निवृत्तिरङ्गीकार्या स्यादिति यावत् । मूलभाव-प्रतिपादनलब्धमिष्टापत्तिनिरासकतर्कान्तरमाह **तन्मूलतयेति** । विषयगतादेर्लोके ज्ञानेन निवृत्तेरभावेऽपि स्वाङ्गीकृत-विषयादिगतबन्धनिवृत्तिमूलतया लोके तथादर्शनमनुपपन्नमेव स्वीकार्यम् । अन्यथा लोके दर्शनाभावयुक्त्या बन्धनिवृत्तिस्वीकारो दुर्घटः स्यादिति भावः । **तात्पर्यादिति** । ज्ञानेन सत्यमित्यादिग्रन्थेन ज्ञानेन विषयादिगतस्य सत्यस्य लोके निवृत्त्यदर्शनात्प्रकृते बन्धस्य तथाविधस्य निवृत्त्ययोग इति शङ्काप्रवृत्तावेवोक्तरीत्यागमपक्षोऽपि बाधकान्तरं लभ्यते । यदि तु साक्षादेव बन्धस्य विषयादिगतस्य निवृत्तिर्न युक्तेत्येवं दूषणं प्रवर्त्येत । तदा तावन्मात्रं दूषणं प्राप्नोति । न तूक्तं बाधकान्तरमतस्तल्लोभात् ज्ञानसामान्यमुखेन ज्ञानमित्यादिग्रन्थः प्रवर्तित इति तात्पर्योक्त्या प्रतिपादितमिति बोध्यम् । यदि ज्ञानमाश्रयगतमित्येतन्मूलावतारिकारूपं यदि ज्ञानमाश्रयेत्यादिटीकायां सामान्या-पादनेत्युक्तप्रकारस्तु स्वातन्त्र्येण बाधककथनपरतया योजनापक्षस्य दर्शनपुरस्कारेण प्रवृत्तैतद्योजनाश्रयणेनाप्रवृत्तत्वात् प्रकारान्तरमेवेति न बाधकद्वयस्यानुगुण्यं चिन्तनीयम् । सर्वप्रपञ्चनिवर्तकतया ज्ञाने वादिनाऽङ्गीकृते सति





विषयगतादियत्किञ्चिद्विशेषनिवृत्तिविकल्पनमंपूर्णमित्यतस्तद्विकल्पान् पूरयति **अत्र चेत्यादिना** । जीवगतस्य नियम्यादेरपीतित्येव पाठः । जीवगतं यज्ज्ञानं गन्तादिकं नियम्यमुत्पाद्यं स्थाप्यं विनाश्यं वा अधीनमात्रं वा तस्येत्यर्थः । यद्यप्येवं विषयगतपक्षे तत्त्वदीपनकृता नोक्तम् । तथापि स्वाश्रयगतं वस्तु ज्ञानेन निवर्तत इत्येतद्विवरणव्याख्यानतत्त्वदीपने जीवगतनियम्यादिप्रपञ्चनिवृत्तौ तत्सापेक्षो नियन्तृत्वादिरपि ब्रह्मगतोऽर्थान्निवर्तत इत्यभिप्रायकथनात्समानन्यायतया विषयगतनिवृत्तिपक्षेऽप्येतदेवाभिप्रायतया योजितमित्यदोषः । यद्यपि च तत्त्वदीपने एतत्पक्षदूषणावसरे पृथक्पृथगभिहितम् । तथापि सौकर्यात्प्रथमातिक्रमे कारणाभावाच्च प्रथममेव सङ्गृह्योक्तमित्यवधेयम् । निवृत्तिरितीत्यतःपरमाशयेनेति वर्तते । **उभयेति** । कर्तृत्वादेराश्रयविषयसंबन्धिनो ज्ञानेन निवृत्तिरित्याशयेन तृतीय इत्यर्थः । **तन्निवर्तकं** नियन्तृत्वादिरूपप्रपञ्चनिवर्तकम् । प्रपञ्चाविषयकमित्यतःपरं तन्निवर्तकमित्यनुवर्तते । आश्रयगतत्वपक्ष इव गतत्वविषये पक्षदूषणावसरे स्वविषयनिवर्तकत्वाभाववचनमसङ्गत-मित्यतस्तन्निराकरणं सङ्गमयितुं विशिष्टविषयकत्वपक्षादिविकल्प उत्थापितः । वक्ष्यति च विशिष्टविषयकस्य विशेषणविषयकत्वस्यापीति । ननु चात्मज्ञानस्य बन्धनिवर्तकत्वायोगोपयोगितया विकल्पितात्मरूपविषयगतत्वपक्ष एव निराकार्यस्तत्किमर्थं नीलविशिष्टज्ञानस्य स्वविषयादिनिवर्तकत्वाभाववर्णनमित्यतस्तस्योपयोगो यथा स्यात्तथा योजयति **उभयत्रापीति** । उभयथापीत्येव मूलकोशपाठः । **तदभाव एवेति** । विशिष्टविषयकस्य विषयादिगत-निवर्तकत्वाभाव इत्यर्थः । **इति व्यभिचार इति** । इत्यतो हेतोर्व्यभिचार इति फलप्रदर्शनं तत्त्वदीपनग्रन्थानुसारेण व्यभिचारपरत्वेन योजनेति दर्शयितुम् । ततश्च सत्यपि निवर्तकतयाऽभिमते निवृत्तेरभावाद्यत् विशिष्टादिविषयकं तद्विषयगतादिनिवर्तकमित्यन्वयस्य व्यभिचार इत्यर्थः । एवमुत्तरत्रापि व्यभिचारपदार्थोऽवधेयः । **इत्याशयेनेति** । अनेनान्यत्र तथाविधज्ञानस्य विषयादिनिवर्तकत्वाभाववचनं स्वमुखेनात्मज्ञानेऽपि तन्निवर्तकत्वाभावप्रतिपादना-भिप्रायेणेत्यतस्तत्रैव तत्पर्यवसन्नमिति नासङ्गतिरिति सूचितम् । **आद्यं निराहेति** । विशिष्टस्यावतारः तत्र विशिष्टविषयकत्वरूपाद्यपक्षस्य स्वविषयमित्यन्तेन निराकरणम् । इत्यादिकमित्यन्तेन च केवलविषयकत्वपक्ष-निराकरणमिति तु विवेकः । अत एव च विषयगतपक्षदूषणेत्यादिपरिहारकथनेनैव विशिष्टविषयकत्वपक्षनिराकरणं स्वविषयमित्यन्तेन कृतमिति सूचयित्वा केवलविषयकमित्यादिना स्वविषयसमवेतरसादिकमित्यंशस्य केवल-विषयकत्वपक्षनिरासकत्वमिति प्रतिपादयिष्यते । स्वविरोधिनमित्यादेस्तु प्रयोजनान्तरं कथयिष्यतीति ज्ञेयम् । ननु नीलविशिष्टोदाहरणे विषयगतनिवर्तकत्वपक्षस्य विशिष्टविषयककेवलविषयकविकल्पेन निराकरणमात्रस्य च तच्चित्रेत्यादिवाक्येन प्रतीतावपि विषयगतनिवर्तकत्वादृष्टत्यादिना आत्मज्ञानस्याप्युभयविधस्य विषयगतनिवर्तकत्वा-योग इत्यस्य प्रतिपादनाप्रतीतिरेव । किञ्च चित्रावयविनीत्यनेनोदाहरणविशेषेऽदर्शनोक्तावपि सर्वथा दर्शनाभावानुक्तेः कथं दृष्टसामर्थ्यनिराससिद्धिर्यत इत्यादिना स्यात् । ततश्चायुक्तमिदमित्याशयेनेतीत्यतो यत इत्यादिना आपातत-स्तदाशयाप्रतीतावपि तद्वाक्ययोजनायां तेनोक्तरूपविशिष्टार्थस्य लाभसंभव इत्याह **अत्रेति** । अयमाशयः । नाद्य इत्यस्य हि ज्ञानेन सत्यं निवर्तमानं विषयगतं निवर्तत इति नेत्यर्थः । तदनुवादोऽयं ब्रह्मज्ञानेन सत्यं निवर्तमानं विषयगतं नियन्तृत्वादिना निवर्तत इति । यतश्चित्रावयविनीत्युक्तस्य तु तात्पर्यकथनं **यत इत्यादि** । विषयगतं न निवर्तत इति पाठः । अत्र लोक इति वदतान्यत्र सर्वत्र दर्शनाभावलाभायोपलक्षणयोदाहरणान्तरेऽपि विशिष्टादिविषयकस्य





विषयगतनिवर्तकत्वं नास्तीति प्रतिपादनं यत् इति वाक्येऽभिप्रेतमिति सूचितम् । अत एव विषयगतमित्येव सामान्यत उक्तम् । न तु नीलादीत्यपि । चित्रेत्याद्युदाहरणोपादानं तु प्रत्युत विषयगतनिवर्तकत्वाभाव एव दृष्ट इत्यस्य प्रदर्शनार्थम् । अत एवोक्तं प्राक् । न च तद् दृष्टम् । प्रत्युत तदभाव एव दृष्ट इति । ततश्च नाद्यो यतश्चित्रेत्यादिप्रतिज्ञाहेतुमेलने न विशिष्टयोजनया विशिष्टादिरूपब्रह्मज्ञानेन विषयगतनियन्तृत्वादिनिवर्तनं दृष्टसामर्थ्यादित्ययुक्तम् । विशिष्टादिविषयकज्ञानस्य विषयगतनिवृत्तिहेतुत्वादृष्टेः प्रत्युत तदभावस्यैव दर्शनाद्यद्विशिष्टविषयकं तद्विषयगतनिवर्तकमित्यादिव्याप्तौ व्यभिचार इत्यभिप्रायलाभः संभवतीति । एवं प्रतिज्ञाहेतुवाक्यमेलनेनोक्ताभिप्रायलाभवर्णने सति कथमत्र तल्लाभस्तत्प्रापकाभावादिति शङ्काऽप्यनवकाशा । योजनयेति वदतोक्ताभिप्रायलाभायैवं योजना कार्येत्यपि सूचितम् । नियन्तृत्वादि निवर्तते विषयगतं निवर्तते इति स्थलद्वयेऽपि नञ्शून्यया हेतुः न निवर्तयतीति मूलगतनञःसंबन्धं सिद्धवत्कृत्यावशिष्टभागयोजनामात्रप्रदर्शनमित्यदोषः । यत इत्यादेर्ब्रह्मज्ञानस्य उभयविधस्य विषयगतनियन्तृत्वादिनिवर्तकत्वं दृष्टेत्यादिः प्रागुक्ताशयोऽपि ज्ञानेन सत्यमिति शङ्कोपक्रमवाक्ये मूलकारीयो नीलात्मज्ञानयोर्यः सामान्यरूपेण पुरस्कारस्तद्बलगत इति न निर्मूलैषा योजनेति शङ्क्यमित्याह **अत एवेति** । ज्ञानसामान्यस्य सत्यसामान्यस्य च निर्देश इत्यर्थः । आपाद्यापादकयोः सूचनाय सामान्यानुवाद इति ज्ञानसामान्यस्यापादनेति चोत्तरग्रन्थेऽपीदमुभयं विवक्षितम् । अत एव ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तौ सत्यस्यापि निवृत्तिः किं न स्यादिति सामान्यस्यैव प्रस्तुतत्वादित्युत्तरत्रोभयग्रहणमिति ज्ञेयम् । अन्यथा ब्रह्मज्ञानेन सत्यमित्याद्ये वा अवक्ष्यदिति भावः । चित्रावयविगतनीलादेः रसादेश्चाश्रयगतत्वाविशेषेऽपि प्रागुक्तविशिष्टादिविकल्पानुसारेणाद्ये नीलादित्वेन द्वितीये च रसादित्वेन ग्रहणं युक्तमिति सूचयन् मूलकारीयाचातुर्री परिहरति **विषयगतेति** । **केवलेति** च । यतश्चित्रेतिवाक्यस्य तत्तज्ज्ञानस्यान्यत्र विषयगतनिवर्तकताया अदृष्टत्वात् तदभावस्यैव दृष्टत्वाच्च न दृष्टसामर्थ्याद्ब्रह्मज्ञानस्य विषयगतनिवर्तकताश्रयणमिति वक्तुं युक्तमित्यर्थसमर्पकतासिद्ध्यर्थमत्र ब्रह्मज्ञानेन सत्यमित्यादि योजनावत् आश्रयगतोभयगतनिवर्तकत्वनिरासपरं न द्वितीयः पटादीत्याद्युत्तरकल्पद्वयेऽपि विवक्षितार्थलाभाय प्रतिज्ञामेलनेन योजना कार्येत्याह **एवमेवेति** । न द्वितीय इत्यस्य ब्रह्मज्ञानेन सत्यं निवर्तमानमाश्रयगतं नियम्यादि न निवर्तत इति पटादीत्यस्य च ज्ञानेनाश्रयगतस्य लोके निवृत्त्यभावादिति च द्वितीयकल्पे योजना । तथा न तृतीय इत्यस्य ब्रह्मज्ञानेन सत्यं निवर्तमानमुभयगतं कर्तृत्वादि न निवर्तते इति आत्मन इत्यस्य च ज्ञानेनोभयगतस्य लोके निवृत्त्यभावादिति च तृतीयकल्पे योजना द्रष्टव्येत्यर्थः । योजना द्रष्टव्येत्येकदेशोक्त्या तद्योजनालब्धाभिप्रायोऽपि द्रष्टव्यत्वेनाभिप्रेतः । केवलयोजनामात्रस्य वैयर्थ्येनाद्यकल्प इवाभिप्रायसमर्पकताया वाच्यत्वेन तद्योजनाद्वयेन तत्कल्पद्वयेऽभिप्रायस्योन्नेयत्वलाभात् । तथाहि । ब्रह्मज्ञानस्याश्रयगतनियम्यादिप्रपञ्चनिवर्तकत्वं दृष्टसामर्थ्याद्वदताऽन्यत्र तत्तज्ज्ञानस्य आश्रयगतनिवर्तकत्वं दृष्टमिति वक्तव्यम् । न च तद्दृष्टं प्रत्युत तदभाव एव दृष्ट इति यज्ज्ञानं तदाश्रयगतं निवर्तयतातिव्याप्तौ व्यभिचार इति द्वितीयकल्पे आशयः । तृतीयकल्पे तु ब्रह्मज्ञानस्योभयगतकर्तृत्वादिनिवर्तकत्वं दृष्टसामर्थ्याद्वदताऽन्यत्र तत्तज्ज्ञानस्योभयगतनिवर्तकत्वं दृष्टमिति वक्तव्यम् । न च तद्दृष्टम् । प्रत्युत तदभाव एव दृष्ट इति यज्ज्ञानं तदुभयगतमिति व्याप्तौ व्यभिचार इत्याशय इति ज्ञेयम् । **अविरोधादिति** । निवृत्तौ विरोधस्यैव





प्रयोजकत्वान्नीलादिज्ञानेनाविरोधान्नीलादिरसादिनिवृत्त्यभावेऽपि प्रकृते ब्रह्मज्ञानस्य नियन्तृत्वादिविरोधात्तन्निवर्तकत्वं युक्तमित्याशयः । **तत्रापीति** । तर्हि विरोधे ज्ञानेन विरोधिनिवृत्तिं दृष्टसामर्थ्याद्वदताऽन्यत्र विरोधस्थले ज्ञानेन स्वविरोधि निवर्तत इति दृष्टमिति वाच्यम् । न च तद्दृष्टं प्रत्युत तदभाव एव दृष्ट इति तत्रापि व्यभिचार इत्यर्थः । एवमेवोत्तरकल्पद्वयेऽपि योजना द्रष्टव्येत्यनेनैव न द्वितीयः । पटादीत्यादिकल्पद्वयनिराकरणग्रन्थस्य व्याख्यातप्रायत्वान्न पृथक् तद्व्याख्यानमिति ज्ञेयम् । एवं ज्ञानाद्बन्धनिवृत्तिर्न दृष्टसामर्थ्यादित्यादिप्रागुक्तरीत्या ननु ज्ञानेन सत्यं निवर्तमानमित्यादिमूलस्य दृष्टसामर्थ्याश्रयणेन ज्ञानाद्बन्धनिवृत्तिरित्यभ्युच्चयेन अङ्गीकृतपक्षे विवरणोक्तबाधका-शङ्कनपरत्वेन योजनायां तत्तत्त्वदीपनाद्यनुसारेण विषयादिगतस्य ब्रह्मज्ञानेन निवृत्तिरित्यभ्युपगमे विषयादिगतस्य ज्ञानेन लोके निवृत्त्यदर्शनादिति प्रागुक्तरीत्या व्यभिचारपरतया नाद्यो यतश्चित्रेत्यादिग्रन्थो योजनीयतया प्राप्नोति । तद्योजनेनैतन्मूलवाक्यार्थोपपत्तावपि मैवमुक्तोत्तरत्वादित्यादिसिद्धान्तग्रन्थस्यास्वारस्यमायाति । तस्य हि यदि ज्ञानमाश्रयगतं निवर्तयेदित्यादिनेष्टापादनमित्यन्तेन शङ्काग्रन्थस्य तर्कपरतामुपेत्य तद्दूषणाय प्रवृत्तिरिति सिद्धत्वात् । तदानुगुण्याय चागमपक्षे बाधकान्तरकथनेऽपि तात्पर्यं च कल्पनीयं भवति । अस्तु वा ज्ञानाद्बन्धनिवृत्तिर्दृष्ट-सामर्थ्यादिति साक्षादेवोक्त्वा तद्दूषणपरिहारः कुतो न कृत इति शङ्कापरिहारायाप्युक्तं तात्पर्यं कल्पनीयं भवति । तथा विवरणोक्तदूषणक्रमानुसारेणात्र मूले ग्रन्थविन्यासापत्तिशङ्काप्राप्तौ तत्परिहारायात्र तत्तत्प्रमेयेत्यादिटीकोक्तरीत्या तदुपपादनमाश्रयणीयं भवति । न च सति गत्यन्तरे तदुभयाश्रयणेन ग्रन्थप्रवृत्तिरभ्युपेतुं शक्येति मनसि कृत्वोक्तप्रकारे अनादरं सूचयन्नागमपक्ष एव बाधकाभावाक्षेपाय बाधकान्तरकथनपरतेति प्रकारान्तरेण नन्वित्यादिग्रन्थयोजना कार्येत्येतावन्मात्रमुपर्येवाह । अथवा निवर्त्यस्येत्यादिनाऽनुवादोऽयमित्यन्तेनापूर्वपक्षादेतत्पक्षे स्वारस्यकथनपरात्र च पक्षे आपादनेत्युत्तरटीकायामेव पूर्वत्रास्वरससूचनं चोक्ताभिप्रायकम् । विषयगतादिरूपेण निवर्त्यविकल्पबीज-प्रदर्शनेन तदवकाशप्रदर्शनं निवर्त्यस्येत्यादिनियमादित्यन्तेन । **बाधकप्रसङ्ग इति** । सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावे सिद्धान्तिनोक्ते सति सत्यस्यापि निवृत्तावात्मापि निवर्तेतेति प्रागाशङ्कितविपक्षे बाधकप्रसङ्गवदयमपि बाधकप्रसङ्गोऽप्रयोजकत्वमाक्षेप्तुं प्रवृत्तोऽत्र ननु ज्ञानेनेत्यादिशङ्काग्रन्थेऽभिमत इत्यर्थः । अभिमत इत्युक्त्यैव वाक्यादप्रतीतोऽपि तद्वाक्यगतज्ञानसत्ययोः सामान्यानुवादबलाल्लब्धस्तदनुगुणोऽभिधातव्य इति सूचितम् । एतत्तर्कीयापाद्यापादकादिप्रतीत्यभावात्कथमस्य ग्रन्थस्य तर्कसूचकत्वमित्यत आह **तत्र चेति** । नन्वित्यादि-शङ्काग्रन्थ इत्यर्थः । तत्र च ज्ञानेन स्वस्वविषयादिगतं सत्यं निवर्तते किमित्ययं सामान्येनानुवाद आपाद्यापादकयोः सूचनायेति संबन्धः । अनेन ब्रह्मज्ञाननीलज्ञानसाधारण्येन नियन्तृत्वादिनीलसाधारण्येन च ज्ञानसत्ययोरापादक-प्रविष्टयोर्ग्रहणे सति किंशब्दस्य भिन्नक्रमतां काकुं चाश्रित्य लब्धसत्यज्ञानेन सत्यं निवर्तमानं विषयगतं निवर्तते किमित्यादेर्ब्रह्मज्ञानेन विषयगतं सत्यं नियन्तृत्वादि निवर्तते किम् । तथात्वे च तत्तज्ज्ञानेनान्यदपि स्वस्वविषयगतं निवर्तते किमित्यादियोजनया ब्रह्मज्ञानेन सत्यनिवृत्तिरापादकाज्ञानेनान्यस्यापि सत्यस्य निवृत्तिरापाद्येति तयोरुभयोरपि तन्त्रेण सूचनमित्युक्तं भवति । न त्वत्राभिमतस्तर्क इत्युक्तेरापादकं बहिरुन्नेयतकदिवावसेयं तर्हीत्यनुवादादेव तत्सूचनमित्यर्थः । आपाद्यापादकयोरिति तदुभयस्याविशेषेण ग्रहणात् । आपादकस्य सर्वथा मूलस्पृष्टत्वप्राप्तेश्च । ब्रह्मज्ञानेनेत्यादि किमित्यन्तेनापादकप्रतिपादने लब्धेऽनिष्टं प्रसञ्जयितुं तर्हि ज्ञानेनेत्यादिना





आपाद्यप्रतिपादनावसरे तर्हीत्येतल्लाभोऽपि सुलभ एवेति स्पष्टम् । तदेतदुक्तं **तर्हि तत्तदित्यादि** । निवर्तत इत्यस्य लकारव्यत्यययाश्रयणे किंपदास्वारस्यमित्यतस्तदाश्रयणेन तर्कलाभायोग इत्याशयेनापाद्यापादकयोरेव ग्रहणम् । अन्यथा तर्कसूचनायेत्यवक्ष्यदिति ज्ञेयम् । भवेदेतदेवं यदि सामान्यानुवादस्यापि प्रयोजनं स्यान्न चैतदस्तीत्यत उक्तम् **इष्टापत्ताविति** । **तत्र चेति** वर्तते । तत्राभिमते बहिरुन्नेये तर्के ज्ञानेन स्वविषयादिगतमन्यदपि सत्यं निवर्ततामितीष्टापत्तिशङ्कायामित्यर्थः । इष्टापत्तावित्यनन्तरं नाद्य इत्यादिना तथा निवृत्त्यदर्शनादिप्रतिपादनेन तन्निवृत्तेरप्रामाणिकतया प्रमाणविरुद्धतया चानिष्टत्वं वक्तुमिति पूरणीयम् । तथा च अभिमततर्के इष्टापत्तिशङ्कावारणाय तर्कीयापाद्यापादकयोः सूचनफलकसामान्येनानुवादपूर्वकं नाद्य इत्यादिना तत्तज्ज्ञानेन स्वस्वविषयादिगतनिवृत्तिस्तु नास्तीत्युच्यत इति योजना सूचिता भवति । लोकेऽपि कस्मिंश्चिदप्रामाणिकेऽर्थेऽङ्गीकृते सति तर्ह्यन्यदप्येवमङ्गीकर्तव्यं स्यादित्यापादितेऽपि तदनन्तरमिष्टापत्तिशङ्कावारणाय पुनर्यदि पर्वतस्य वह्निमत्त्वाभावोऽङ्गीक्रियते तर्हि धूमवत्त्वाभावोऽपि किमङ्गीक्रियत इति काक्काऽनूद्य न च धूमाभावोऽङ्गीकर्तुं युक्तः । धूमस्य प्रत्यक्षसिद्धत्वादित्यनिष्टत्वोपपादनं कुर्वन्ति । नन्वस्तु सामान्यानुवादेनोभयसूचनादिव्युत्पादनम् । तदनुवादकरण एव किं मूलम् । स्पष्टमेवात्र कुतस्तदनुवादाभाव इत्यतः प्रस्तावरूपं मूलमाह **ज्ञानमज्ञानस्यैवेति** । व्याप्तावित्यन्तेन ज्ञानमज्ञानस्यैव निवर्तकमिति नियमोऽस्तीति पूर्वोदाहृतं वाक्यमर्थतः सङ्गृहीतम् । ततश्चेति व्याप्तावित्येतद्व्याप्तिप्रतिपादकवाक्ये ज्ञानमिति ज्ञानसामान्यस्य प्रस्तुतत्वात् । सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेनेत्यस्यार्थानुवादः **सत्यस्यापि निवृत्तिः किं न स्यादिति** । अत्रेति चेति चशब्दान्तर्भावेन व्याख्येयम् । तथा च इति च तद्व्याप्तावप्रयोजकत्वाभिधायकवाक्ये सत्यस्यापीति सत्यसामान्यस्य प्रस्तुतत्वादिति विवेकः । एवं समुदाययोजनाभिधानेन पूर्वयोजनातो भेदप्राप्तावपि नन्वित्यादिग्रन्थस्य पूर्वसङ्गतत्वेन योजनायाः स्पष्टमप्रतीतेर्मन्दानुकम्पया तद्योजनाप्रकारं स्पष्टयति **एवं चेति** । स्पष्टनाभिप्रायेणैवैवं चेत्यनेनोक्तरीत्या समुदायप्रमेयस्योक्तरूपत्वे सतीति निमित्ततया कीर्तनम् । सत्यस्यापि निवृत्तौ बाधकाभावेनेत्यनेन प्राक्कृताप्रयोजकत्वाशङ्कोद्धारायेत्यर्थः । सत्य आत्मापीत्येतद्बाधकापेक्षयाऽन्यत्वाभिप्रायेण तदन्तरत्वोक्तिः । **नन्वितीति** । तथा चात्र निवर्त्यस्य सत्यस्य विषयगतत्वादीत्युक्तरीत्या बाधकप्रसङ्गोऽभिमतः । ज्ञानेन सत्यमित्यादिकं तूक्तप्रसङ्गीयापाद्यापादकयोस्तर्हि तज्ज्ञानेन विषयादिगतं निवर्तते किमिति पूर्वोक्तरीत्या सामान्येनानुवादरूपमित्युक्तं भवति । उताथशब्दावपि पक्षभेदार्थौ किंशब्दार्थकाविति सिद्धवत्कृत्य तद्योजना नोक्ता । तथा च किंशब्द एव तयोः पर्यवसानमिति तत्रापि पूर्ववदेव योजनेत्याशयान्न दोषः । **आपादनत्रयेऽपीति** । विषयादिगतमिति पूर्वत्रोक्तिलाघवाय सङ्ग्रहेण कथनेऽपि यदि ब्रह्मज्ञानं विषयगतं सत्यं नियन्तृत्वादिकं निवर्तयेत् तर्हि अन्यत्रापि ज्ञानेन स्वस्वविषयगतं निवर्ततेत्यादिरूपापादनत्रयमेव पूर्वत्र विवक्षितत्वेन प्राप्तमिति न दोषः । **इष्टापत्तिमिति** । अन्यस्यापि ज्ञानेन निवृत्तिरस्त्वितीष्टापत्तिमित्यर्थः । **निरस्यति** । क्रमेणेति शेषः । तन्निवृत्तेरदृष्टत्वात्प्रत्युत तदभावस्यैव दृष्टत्वादिति युक्त्यैति पूरणीयम् । नन्वेवं सत्यस्यापि निवृत्तौ बाधकाभावोक्तेराक्षेपार्थं बाधकान्तराशङ्कापरमेतन्मूलमिति स्वीकारे विवरणोक्तदूषणक्रमविरोध इत्यतस्तत्र दृष्टसामर्थ्यपक्षदूषणायैतद्बाधकोपन्यासेऽप्येतद्बाधकस्यागमपक्षीयप्रागुक्तबाधकाभावाक्षेपकतयापि व्यापारयितुं शक्यत्वात्तदाशङ्कनं श्रुतिप्रतीतकार्यकारणभावपक्षेऽपि युक्तमित्याशयेनाह





**एवं चेति** । एवं तर्कपरतया किंपदे काक्वाश्रयणादिना योजनाकरणे मूलकारीयोत्तरग्रन्थरूपज्ञापकमाह **अत्र पक्ष इति** । आपादनविवक्षानिमित्तं तु वक्ष्यामः । **यथास्थितेति** । तथाऽप्यत्र तत्तत्प्रमेयानङ्गीकारेणेति प्रागुक्तरीत्या विवरणोक्तदूषणक्रमानुसरणस्यान्यस्थले तत्र तत्राङ्गीकारेऽप्यत्र श्रुतिप्रतीतकार्यकारणभावाश्रयणस्यैव मुख्यतया स्वीकारेण दृष्टसामर्थ्यपक्षाङ्गीकारमकृत्वा तत्पक्षोक्तदोषस्य समानन्यायतया प्राप्तिमाशङ्क्य तन्निराकरणमात्रं कृतमिति तत्क्रमाननुसरणान्न यथास्थितविन्यासेऽनुपपत्तिशङ्कावकाश इत्याशयः । विषयगतमाश्रयगतमुभयगतमिति प्राक्पक्षत्रयविकल्पे तन्निरासे च सति तेषु द्वितीयपक्ष एव प्राप्तदूषणपरिहारे निमित्ताभाव इत्यतस्तत्र निमित्तं वदन् द्वितीयपक्षनिरासपरमूलमवतारयति **आत्मज्ञानेनेति** । **द्वितीयपक्षमाश्रित्येति** । आत्मज्ञानस्याश्रयगतनियम्यादि-निवर्तकत्वं दृष्टसामर्थ्यादङ्गीक्रियत इति द्वितीयपक्षमित्यर्थः । **तत्रोक्तेति** । ब्रह्मज्ञानेन सत्यं निवर्तमानमाश्रयगतं नियम्यादि न निवर्तते । लोके ज्ञानेनाश्रयगतस्य निवृत्त्यदर्शनात् । ततश्च व्यभिचार इति दूषणमित्यर्थः । तर्कदूषणत्वेन प्रतीयमानस्यास्य ग्रन्थस्यैतत्पक्षदूषणपरिहारकत्वं चेदं च व्यभिचारपरतापक्ष इत्यादिना व्यभिचारोपपादनाय विवक्षितेऽन्यथा पटादिज्ञानेनापि धर्मादिनिवृत्तिः स्यादिति तर्के दूषणमिति वदता टीकाकृतैवोपपादयिष्यत इति ज्ञेयम् । ननु पदादिज्ञानेनात्मगतधर्माद्यनिवृत्तेरित्येव तावत्तदीयं द्वितीयपक्षे दूषणम् । तस्य यदीत्यादिना तर्कपर्यवसानाश्रयणेन दूषणे निमित्ताभावः । न च ज्ञानेन सत्यं निवर्तमानमिति शङ्काग्रन्थ एव तर्कपरतया प्रागुक्तरीत्या प्राप्त इति दूषणस्य तत्र पर्यवसानमिति वाच्यम् । तद्ग्रन्थस्यापि तर्कपरतया योजनायां निमित्ताभावात् । एतदनुसारेण पूर्वग्रन्थस्य तर्कपरतया योजनायां तु स्फुटमितरेतराश्रयत्वमिति चेत् । अत्र ब्रूमः । पूर्वं विपक्षे बाधकाभावेन सत्यस्यापि ज्ञानेन निवृत्तिरस्त्वित्यप्रयोजकत्वशङ्कायां विपक्षे बाधकतर्काशङ्कैव परेण कार्या । तद्दूषणं च सिद्धान्तिना कर्तव्यमिति सिद्धत्वात् सत्यस्यापि निवृत्तावात्मापीत्यनेनैको बाधकस्तर्क आशङ्कितः निराकृतश्च अतो ननु ज्ञानेन सत्यमित्यादि ग्रन्थेऽपि विपक्षे बाधकतर्कोत्तराशङ्कैवोचिता । तर्कदूषणमेव वोचितम् । यद्यपि मूलकृता ब्रह्मज्ञानेन विषयादिगत-नियन्तृत्वादिनिवृत्तौ । ज्ञानेनान्यदपि स्वस्वविषयादिगतं निवर्तेतेति स्वातन्त्र्येण तर्कमुत्थाप्य तद्दूषणं कर्तुं शक्यं तथापि ज्ञानेन सत्यं निवर्तमानमित्यादिविवरणग्रन्थदूषणमप्येतद्बाधकनिराकरणव्याजेन भवत्वित्याशयेन तद्ग्रन्थेऽपि स्वोक्तदूषणसूचितदिशा तर्कपरतां शिष्या एव ज्ञास्यन्ति । विपक्षे बाधकतर्कप्रकरणाच्च तथात्वज्ञानं तेषां भविष्यतीति च सिद्धवत्कृत्योक्ततर्कप्रतिपादनं हृदि कृत्वैव विवरणग्रन्थानुकरणं कृतमिति न कश्चिद्दोषः । तथाच विपक्षे बाधकप्रकरणादेव तर्कपरतेति नोत्तरग्रन्थस्य तत्परतायामपेक्षा । टीकाकृता तु तथाविधतर्कपरतयैतद्ग्रन्थोदाहरण-मिति मूलकाराभिप्रेतमित्येतत्तदुत्तरग्रन्थादेवावसीयत इति प्रतिपादनेऽप्येतद्बलात्पूर्वग्रन्थस्य तर्कपरतेति नोक्तम् । अतो नान्योन्याश्रय इति । विपक्षे बाधकान्तरकथनेऽपि तात्पर्यादित्यादि वदता टीकाकृता तर्कपरतया योजनायामपी-दमेव निमित्तं सिद्धं कृतमिति स्पष्टमेव प्रतीतेः । अन्यथा कुतो ननु ज्ञानेनेत्यत्र ग्रन्थे तर्कसंस्पर्शाप्रतीतावपि किमादि-शब्दे काकुं भिन्नक्रमतां तर्हीत्यध्याहारं चाश्रित्य योजनां तदनुसारितर्कस्य बहिरुन्नेयस्याभिमततां च वदेदित्यलम् । ननु पटादिज्ञानेनात्मगतधर्माद्यनिवृत्तेरिति वदता परेण पटादीत्युक्तिबलादात्मज्ञानातिरिक्तज्ञानसामान्यस्यैवापादन-विषयता स्वीकृतेति तद्दूषणमात्रमुचितम् । आत्मयाथात्म्यज्ञानस्यैवेत्युत्तरदूषणं त्वप्रसक्तदूषणमित्यतः पटादीति वाक्यादेवाहोस्विदित्यादिनात्मयाथात्म्यज्ञानस्यापादनविषयताया अपि प्रतीतिसंभवं वदन् प्रथमपक्षे ब्रह्मज्ञानस्या





नियम्यादिनिवर्तकत्वलाभप्रकारं च वदन्नुत्तरग्रन्थमवतारयति **यदि ज्ञानमित्यादिना** । ज्ञानसामान्यस्येति वदता पटादीत्युक्तावपि क्वचिज्ज्ञाने धर्मादिनिवर्तकतासत्त्वे तदापादनानुपपत्तिप्रसङ्गात्तदुपपत्त्यर्थम् । तत्तज्ज्ञानेनाश्रयगतं निवर्तते किमिति प्राक्प्रदर्शितयोजनानुसारेण पटादिज्ञानपदेन ज्ञानमात्रग्रहणमिति सूचितम् । आपादनविषयता-मित्यस्य ज्ञानत्वेन रूपेण ज्ञानमात्रं धर्मीकृत्य तस्यैवाश्रयगतनिवर्तकत्वसामान्यमापादकं कृत्वा धर्मादिनिवर्तकत्वस्य यदापादनं तद्विषयतामित्यर्थः । **आर्थिकीति** । यदा ज्ञानत्वावच्छिन्नस्याश्रयगतनिवर्तकत्वाभावस्तदा ब्रह्मज्ञान-स्यापि ज्ञानत्वाविशेषान्नाश्रयगतनिवर्तकत्वमिति लाभस्य तर्कीयविपर्ययपर्यवसानलब्धत्वाभावादार्थिकत्वमुक्तम् । **आत्मज्ञानरूपविशेषस्येति** । आत्मज्ञानत्वं धर्मितावच्छेदकं कृत्वा आश्रयगतनियम्यादिनिवर्तकत्वं चापादकं कृत्वा धर्मादिनिवर्तकत्वेन यदापादनं तद्विषयतामभिप्रेत्येत्यर्थः । पटादिग्रहणसत्त्वेन मुखतो ज्ञानसामान्यस्य आत्मज्ञानस्य वा आपादनविषयताया अप्राप्तेरुभयत्रापि अभिप्रेत्येत्युक्तम् । ननु पूर्वकल्पीयतर्के इष्टापत्तिशङ्कावारणाय पटादिज्ञानेनेति वाक्येन ज्ञानेन धर्मादिनिवृत्तिस्तु नास्ति तस्मान्नाश्रयगतनिवर्तकतेति विपर्ययपर्यवसानमुखेनेष्टापत्तिपरिहारः कृत इति तद्वाक्यस्य सार्थक्यम् । एतत्कल्पे तु आत्मज्ञानेन आश्रयगतनियम्यादिप्रपञ्चनिवृत्तिरस्तु तद्वदधर्मादेरपि निवृत्ति-रस्त्वितीष्टापत्तिशङ्कायां पटादिज्ञानेनेत्युक्तस्य ज्ञानसामान्येन धर्मादिनिवृत्तिस्तु नास्तीत्यादेः परिहाराभावात्कथं तद्वाक्यस्य सार्थक्यमित्यतस्तद्वाक्यस्य द्वितीयकल्पे उपयोगमाह **यज्ज्ञानमिति** । अयं भावः । यद्यप्येतत्कल्पे विशेषरूपेण विपर्यये पर्यवसानोपयोगिभूततत्तर्कीयेष्टापत्तिनिवारकं च पूर्वकल्पवत्पटादिज्ञानेनेत्यनेन नोच्यते । तथाप्यात्मज्ञानमाश्रयगतकिञ्चिन्निवर्तकं च भवतु भवतु च तद्धर्मादिनिवर्तकमितीष्टापत्तिशङ्कायां तदा ह्येवं वक्तुं शक्यम् । यदि किञ्चिज्ज्ञानमाश्रयगतं किञ्चिन्निवर्तयति । तद्धर्मादिकं च निवर्तयतीत्युपलब्धं स्यान्न चैवम् । पटादिज्ञाने स्वाश्रयगतकिञ्चिन्निवर्तकत्वविशिष्टधर्मादिनिवर्तकत्वाभावात् । तथा च पटादिज्ञानेन धर्मादिनिवृत्तिस्तु न दृष्टा । अतो नात्मज्ञानमपि तथाविधमङ्गीकर्तुं युक्तमितीष्टापत्तिपरिहारोपयोगोऽस्य वाक्यस्येति । यज्ज्ञानमित्यत्र यत् ज्ञानत्वधर्मावच्छिन्नं तत्स्वाश्रयगतं किञ्चिन्निवर्तयति । तथा तद्धर्मादिकं स्वाश्रयगतधर्मादिकं च निवर्तयतीति ज्ञानत्वधर्मावच्छिन्नं व्याप्यम् । इतरद्व्यापकमिति योजनाया अभिप्रेतत्वात्पटादिज्ञानेनेत्यनेनेत्यस्य सङ्गतिश्च । एतेन यथाश्रुतेऽसङ्गतिः आत्मज्ञानं यदीत्येतत्तर्कीयव्याप्तिर्विशेषतो निरूपयितुमशक्यत्वाद्यज्ज्ञानमाश्रयगतं निव-र्तयतीत्यादिरूपेण सामान्यतो वाच्या । सा च यज्ज्ञानमिति टीकायां व्याप्तावित्यन्तेनोक्ता । तस्यां च व्यभिचारो-द्भावनं तर्कं प्रवर्तयितुर्व्याघातकरमिति पटादीत्यस्य तथोपयोगवर्णनादित्यपि निरस्तम् । न ह्यत्र व्याप्तावित्यन्तेन तर्कीयव्याप्तिरुच्यते । तद्व्याप्तेर्यदि पीतमुदकमित्यादाविवाविशेषव्याप्तितयोक्तसामान्यव्याप्तिरूपत्वाभावात् । यज्ज्ञानं तदाश्रयगतं किञ्चिन्निवर्तयद्भूत्वा तद्धर्मादिकमपि निवर्तयतीत्यस्या व्याप्तेरेवात्रेष्टापत्तिपरिहारार्थं व्यभिचारस्य विवक्षितत्वेन तत्प्रतिपादकपदादीत्यस्य सङ्गतत्वोपपत्तेः । अस्यां दशायां पटादिज्ञानस्याश्रयगतंनिवर्तकत्वमङ्गीकृत्य व्यभिचारप्रतिपादनमित्यप्ययुक्तमेव । तर्कप्रवृत्तिकाले तत्तज्ज्ञानेन स्वस्वाश्रयगतनिवृत्तेरनङ्गीकारात् । अन्यथा पूर्वतर्कानुत्थानापातः । विपर्ययापर्यवसानप्रसङ्गात् । सूचितश्चायमर्थस्तत्र चेष्टापत्तेर्हीत्यादिना पूर्वत्र । पटादि-ज्ञानपदस्यापि पूर्वोक्तरीत्या ज्ञानमात्रपरत्वस्य सिद्धत्वाच्च । तेन ज्ञानत्वेनाभिमते कुत्राप्येवं विशिष्टं नास्तीति नेष्टापादनमिति वक्तुं व्याप्तौ व्यभिचारेत्यादेरुक्तत्वे सति कुतोऽसङ्गतिशङ्केति सूरय एवावगच्छन्तु । **पूर्वोक्तदूषणेति** ।

अनेनोक्तोत्तरत्वादित्येतदेव विविच्योक्तं यदीत्यादिनेत्यपि सूचितम् । उक्तपदव्याख्यानं **तर्के पूर्वोक्तेति** । उत्तरपदव्याख्यानं **दूषणेति** । **मयेति** । अन्यत्र तत्तज्ज्ञाने आश्रयगतनिवर्तकत्वविशिष्टतद्गतधर्मादिनिवर्तकत्वादर्शनेऽपि आत्मज्ञानस्य स्वाश्रयगतनियम्यादिप्रपञ्चधर्माधर्मादिनिवर्तकतायाः विद्वान्पुण्यपापे विधूय निरञ्जन इत्यादि श्रुत्यादिसिद्धत्वेन अङ्गीकर्तुं शक्यत्वात् द्वितीयतर्के इष्टापत्तिरपरिहार्या । अस्वरूपभूतसमस्तप्रपञ्चनिवृत्तिः एव विवक्षितेति न कश्चित्क्षुद्रोपद्रवोऽपीत्याशयः । नन्वेवं तर्हि द्वितीयकल्पीयेष्टापत्तिदूषणं पूर्वोक्ततर्केनोक्तमिति तदतिदेशप्रतिपादकोक्तोत्तरत्वादित्यस्यास्वारस्यमित्यत आह **एवं चेति** । यद्यपीष्टापत्त्युपपादनाय घटादिज्ञानं धर्माद्यविरोधीत्युक्तयुक्तेरुपयोगोऽस्ति । परोक्तपटादिज्ञाने धर्मादिनिवर्तकत्वादर्शनयुक्तिनिरासकत्वात् । तथापि श्रुत्यादिबलेनेष्टापत्तिप्रतिपादने सति श्रुतिमुपजीव्यैव प्रवृत्तात्मज्ञानस्य बन्धविरोधित्वयुक्तेः स्वातन्त्र्येणेहानाकाङ्क्षितत्वादाद्यकल्पेत्यवधारणोपपत्तिरिति द्रष्टव्यम् । ननु पूर्वत्र टीकाकृता ननु ज्ञानेनेत्यादिग्रन्थस्य विवरणरीत्या दृष्टसामर्थ्याश्रयणपक्षमवलम्बमानं प्रति तद्दूषणपरतयापि योजनायाः कृतत्वात्तत्र चाश्रयगतनिवर्तकत्वपक्षे पटादिज्ञाने व्यभिचारस्यैव ज्ञानस्याश्रयगतनिवर्तकत्वं न कुत्रापि दृष्टम् । प्रत्युत तदभाव एव दृष्ट इति पूर्वोक्तरीत्या वाच्यत्वेन प्राप्ततया तत्र तर्कप्रसक्तेरभावेन यदि ज्ञानमित्यादिमूलात्तत्पक्षदूषणालाभः । तथाच पूर्वोक्तमभ्युच्चयेन दृष्टसामर्थ्याश्रयणपक्षस्याभिप्रेतत्वमङ्गीकृत्य तत्र विवरणोक्तबाधकं निराकर्तुमाशङ्क्येयमित्यादिकं, ननु ज्ञानेनेत्यादिग्रन्थप्रवृत्तिवर्णनमयुक्तमित्यतः पक्षद्वयेऽपि दूषणत्वं विवेकेनाह **इदं च व्यभिचारपरतापक्ष इति** । व्यभिचारपरतापक्षे तर्कपुरस्कारेण प्रवृत्त्यभावेऽपि तद्व्यभिचारोपपादनाय तु तर्क आवश्यक एव । पटादिज्ञानेनाश्रयगतनिवृत्त्यभावाद्व्यभिचार इति परेणोक्ते सति तं प्रति यदि पटादिज्ञानमाश्रयगतं निवर्तयत्येवेति न व्यभिचार इति शङ्का तदा तेन यदि पटादिज्ञानमाश्रयगतं निवर्तयेत् तर्हि तद्गतधर्मादिकमपि निवर्तयेदिति विपक्षे बाधकदण्डेनैव तत्परिहारस्य कर्तव्यतया व्यभिचारोपपादकत्वेन परस्य वक्तुमिष्टे यदि ज्ञानमाश्रयगतं निवर्तयेत्तर्हि तद्गतं धर्मादिकमपि निवर्तयेदिति तर्के यदि ज्ञानमित्यादिमूलोक्तदूषणस्य प्रवृत्त्या तन्मुखेनैव व्यभिचारप्रतिपादनदूषणस्येह मूलेऽभिप्रेतत्वेन वक्तुं शक्यत्वात्तत्पक्षयोजनाऽपि प्रागुक्ता युक्तेत्याशयः । **विपक्षबाधकेति** । नन्विति वाक्यस्य ज्ञानमज्ञानस्यैव निवर्तकमित्यत्रोक्ताप्रयोजकत्वमाक्षेप्तुं विवरणोक्तं बाधकान्तरमाशङ्क्त इत्यादिरूपेण तर्कपरतया योजनापक्षे तु यथास्थिते परेणैव विपक्षे बाधकत्वेनोक्ततर्के इदं मूलोक्तं दूषणं साक्षादेव दूषणमित्यर्थः । अत्र टीकायामिदं च व्यभिचारपरतापक्षे व्यभिचारोपपादनाय विवक्षितेऽन्यथा पटादिज्ञानेनापि धर्मादिनिवृत्तिः स्यादित्यापादने दूषणं विपक्षे बाधकपरतापक्षे तु यथास्थित आपादन एवेति द्रष्टव्यमित्यन्तं वाक्यमेवमाद्यपक्षस्यानङ्गीकारेत्यतःपूर्वमुपरिशोधतया निवेशितमपि तत्रत्यहंसपदस्यास्पष्टत्वात्सर्वपुस्तकलेखकैस्तन्न लिखितम् । केनचिल्लेखकेन तु स्थलविशेषे निवेशपरिज्ञानाभावादुपर्येव शोधमात्रतया लिखितम् । अतस्तद्वाक्यं यत्रोपरिशोधतया यथाप्रत्यस्ति तत्रैवमाद्यपक्षस्येति वाक्यात्पूर्वं हंसपदप्रक्षेपः कार्यः । यत्र च न लिखितमेव तद्वाक्यं तत्पुस्तके उक्तस्थले शोधतया तल्लेख्यमित्यवगन्तव्यम् । चित्ररूपवादानुसारेण तदुपपादयितुमाह **एवं हि पदार्थविदामिति** । नानारूपवदारब्धस्येत्यनेनारम्भकगुणविरोधेन नीलं नीलमेवेत्यादिनियमेन चावयविनि रूपारम्भायोग इति परप्रक्रियामभिप्रैति । **व्यभिचारादिति** । अत्राधिकविचारः पदार्थचन्द्रिकापटवर्धनाद्यनुसारेण तद्व्याख्यानस्थटीकाकारीयविचारेण च





कर्तव्योऽस्ति । **अव्याप्यवृत्तेरिति** । अनेन सजातीयारम्भकत्वनियमात् अवयवगतव्याप्यवृत्तिरूपैरवयविगताव्याप्यवृत्तिरूपस्य सजातीयतायोगान्न रूपारम्भः संभवतीत्युक्तं भवति । **नीलादेरुपलम्भापत्तेरिति** । अत्र तत्रतत्रोक्तमाशङ्क्य निराकार्यमस्ति । **नीलादेरपीति** । केवलनीलादिस्थल इवेत्याशयः । अवयवान्तरगतस्य रूपस्य प्रतिबन्धकत्वोपयोगितया संबन्धमाह **प्रतिबन्धकतयेति** । वक्ष्यमाणरीत्या संबन्धानां अनेकत्वाद्विवेकार्थं स्पष्टप्रदर्शनमिति ज्ञेयम् । **समवाय इति** । समाहार एव चित्रमिति पक्षे अवयविनि रूपाप्रसङ्गेऽपि चित्ररूपमेकमिति पक्षे तस्यैकत्वेनावयविन्येव समवायसत्त्वात्तत्रैव नीलादावपि आपाद्य समवायस्यैव प्रतिबन्ध इति भावः । प्रतिबध्यप्रतिबन्धकभावमेवोपपादयति **कपालादाविति** । **नीलाभावेति** । नीलेतररूपस्य प्रतिबन्धकत्वादेः परेणोक्तत्वेऽपि तत्रापि प्राप्तानुपपत्तिपरिहाराय पक्षान्तरस्य परेणाभिधानात्तस्यैवात्रोक्तिरिति ज्ञेयम् । अस्तु तर्हि नीलाभावादिकमेव हेतुः । कृतं नीलादिनेत्यत आह **एवं चेति** । एवं प्राचीनरीत्या चित्ररूपं समर्थ्य नवीनास्त्वित्यादिना तत्खण्डनप्रकारं वादोक्तमाशङ्क्यात्रास्माकं प्रतिभातीत्यादिनोक्ततत्परिहारं चाह **ननु स्यादियमित्यादिना** । **तत्र च न नियामकमिति वाच्यमिति** । अव्याप्यवृत्तिजनकत्वे सर्वनीलावयवारब्धेऽपि तादृशमेवोत्पद्येत, न तु सर्वावयवावच्छेदेनेति भावः । एतच्छङ्कापरिहाराय परेण कार्यकारणभावः कल्पितः । अवच्छेदकतासंबन्धेन नीलं प्रति समवायेन नीलादेर्हेतुत्वादिति । तस्यायमर्थः । सर्वनीलावयवारब्धावयविनि अवयवगतं रूपं समवायसंबन्धेनावयविनि विद्यमानरूपमारभते । नानारूपावयवस्थले तु अवयवरूपाणि अवयविनि न समवायेन रूपमारभन्ते । अपि तु तस्यावयविनस्तत्तत्कपालरूपावयवावच्छेदेनैव रूपान्तरमारभन्ते । तानि चावयवव्यवच्छेदेनोत्पन्नानि रूपाणि अवच्छेदकताख्यस्वरूपसंबन्धेनावयविगतानि । अवयवावच्छेदेनोत्पन्नानां रूपाणामवयव्यवच्छेदककपालादेरिव तदवच्छेदकत्वात् । तथा चावयव्यवच्छेदकतासंबन्धेन यत्र रूपमुत्पद्यते न तु समवायेन तत्र नीलरूपादिकं समवायेन विद्यमानं हेतुः । तथा च किञ्चिदवयवावच्छेदेन यत्र नीलादिकं तत्र समवायेन कारणनीलस्यावयवैकदेश एव सत्त्वेन तत्रैव नीलरूपोत्पादः संभवी । नावयवान्तरेऽपि तत्र केनचित्संबन्धेन नीलसंभवेऽपि समवायेन तदभावात् । यत्र च संपूर्णावयवगतं नीलं तत्र सर्वावयवावच्छिन्नमेव रूपमुत्पद्यत इति । तत्र प्राप्तानुपपत्तिपरिहाराय प्रतिबध्यप्रतिबन्धकभावश्चापरः कल्पितः । यद्वा नानारूपवत्कपालारब्धघटादौ कपालाद्यवच्छेदेन नीलादेरुत्पत्तिवारणायेत्यादिना । तस्यायमर्थः । कपालगतेन रूपेणावयवावच्छेदेनावयव्यवच्छेदकं रूपमुत्पद्यत इत्यङ्गीकारेऽपि न सर्वकपालावच्छेदेन तदुत्पत्तिः । तद्वारणाय अवच्छेदकतासंबन्धेनोत्पद्यमाननीलं प्रति नीलेतररूपस्य प्रतिबन्धकत्वाश्रयणात् । कपालमात्रे चैकदेशे पीतादेः सत्त्वात् । अतः अवयवगतनीलेन कपालावच्छेदेन न नीलरूपमवयव्यवच्छेदकतयोत्पन्नम् । किन्तु नीलकपालावच्छेदेनेति । एवं कार्यकारणभावप्रतिबध्यप्रतिबन्धकभावावाश्रितौ । तत्राद्यमनभिधाय यद्वेत्युक्तप्रतिबध्यप्रतिबन्धकभावमेवाह **अवच्छेदकतासंबन्धेन नीलं प्रति नीलेतररूपं प्रतिबन्धकमिति** । कुत एवं प्रतिबन्धककल्पनेत्यतः पूर्वांशः प्रवृत्तः । स पूर्वांशस्तु एवं पठनीयः । नानारूपवत्कपालारब्धघटादौ कपालावच्छेदेन नीलादेरुत्पत्तिवारणायेति । तथा तदभावो लेखकानवधानात् । अवच्छेदकतासंबन्धेन नीलादिकं प्रति समवायेन नीलादेरुत्पत्तिवारणायेति पाठे मूलं तु कार्यकारणभावप्रतिपादनेनोक्तशङ्कापरिहारं कर्तुं प्रवृत्तो ग्रन्थकारः समवायेन नीलादेरित्यन्तं लिखित्वा यद्वेत्युक्तास्वरसं तत्रालोच्य तत्पक्षमेव वक्तुकामः हेतुत्वादित्यंशमनुक्त्वैव वादग्रन्थं

नीलादेरुत्पत्तिवारणायेत्यपश्यन् नीलादेरित्यन्तस्य कुण्डलिकाकारेण नाशार्थं प्रवृत्तोऽपि नीलादेरित्यंशप्रलोभादुत्पत्तिवारणायेत्युत्तरवाक्यमेव लिखितवान् । तत्र नानारूपवत्कपालारब्धघटादौ कपालाद्यवच्छेदेनेत्येतावानंश उर्वरितः । अवच्छेदकतेत्यादिसमवायेनेत्यन्तं न नाशितं च । प्रतिपुस्तकान्यपि तदनुसारेणैव प्रवृत्तानीति तथैव पाठो जातः । अत एवोक्तं **तत्रेति** । नानेत्युक्तघटादावित्यर्थः । वाक्यशेषाभावे प्रकृतपरामर्शायोगेन तत्परामर्शकतत्रेत्युक्त्या शेषप्रतीतेः अत एव चाव्याप्यवृत्तिरूपपक्ष इत्यादिनोक्तकार्यकारणभावपरित्यागेन प्रतिबध्यप्रतिबन्धकभावादिकमेवाभिहितमिति सूरयो मयि दयया पूर्वोत्तरविचारेणावगच्छन्तु । स्वामिदयासादितपाठाभिप्रायावबोधनिबन्धने पाठस्वरूपनिरूपणेऽर्वाचीनस्य मम न दोष इति गुणिन एव जानन्ति । एवमन्यत्रापि तत्र तत्रेति द्रष्टव्यम् । अन्ये तु नीलादेरित्यनन्तरं हेतुत्वादिति उत्पत्तीत्यतःपूर्वं नानारूपवदित्यादि च पतितम् । तत्सङ्ग्रहे कार्यकारणभावप्रतिबध्यप्रतिबन्धकभावाभिधानमुभयं सिद्ध्यतीति कुण्डलिकाकारेण नाशो न कार्य इत्याहुः । तेषामुत्तरग्रन्थे उपलक्षणा स्वीकार्येति ज्ञेयम् । **अवच्छेद्यत्वापत्तिरिति** । कपालाद्यवयवैरिति शेषः । तथा च तत्र स्थलेऽपि नीलं रूपं अवयवावच्छेदेनोत्पन्नमवयवव्यवच्छेदकं स्यात् । अवच्छेदकतासंबन्धेनोत्पत्तिः स्यादिति यावत् । **स्वाश्रयवृत्तिद्रव्यसमवाय इति** । नीलरूपाभावाश्रयपीतावयववृत्तिद्रव्यस्य नीलकपालरूपावयव्येकदेशस्य नीलावयवे समवायसंबन्धेन सत्त्वादित्यर्थः । उक्तैकदेशस्य अवयवभेदविवक्षाकाले पीतावयवे केनचित्संबन्धेन वृत्त्युपपत्तावपि न समवायः संभवतीत्याशयेन स्वाश्रयवृत्तीत्येवोक्तम् । तस्माच्चित्ररूपमेकमेवेति । अत्र बहु वक्तव्यम् । तत्तत्पुरुषोत्प्रेक्षितं परस्परविरोधेनैव दूषितप्रायमिति न तन्निरासायासेन कृत्यमिति भावेनोपसंहारः कृतः । हरीच्छानुसारेण तस्य सर्वस्य विचारः कर्तव्योऽस्ति ॥ छ ॥

**स०व्र०**— प्रकारान्तरेणापि वस्तुनो ज्ञाननिवर्त्यत्वं नास्तीति चोदयति **ननु ज्ञानेनेति** । ब्रह्मज्ञानेन जीवगतेन सत्यं निवर्तमानं किं विषयभूतब्रह्मगतं नियन्तृत्वादिकमेव तन्निवृत्तौ जीवगतनियम्यत्वादिरूपप्रपञ्चस्यापि तत्सापेक्षस्य निवृत्तिरर्थाल्लब्धैवेत्यभिप्रायः । यद्वा स्वाश्रयजीवगतनियम्यत्वादिकमेव ब्रह्मज्ञाननिवर्त्यं तन्निवृत्तौ तत्सापेक्षस्यापि ब्रह्मगतनियन्तृत्वादिकस्य निवृत्तिरार्थिकीति अथवाऽऽश्रयविषयभूतजीवब्रह्मलक्षणोभयसंबद्धकर्तृत्वादिकमिति विकल्पत्रयार्थः । आद्यपक्षे नियन्तृत्वादिविशिष्टब्रह्मविषयं ज्ञानं स्वविषयभूतं नियन्तृत्वादिविशिष्टं निवर्तयति उत केवलब्रह्मविषयमेव ब्रह्मगतनियन्तृत्वादिकमिति विकल्प्याद्यं दूषयति **नीलविशिष्टद्रव्यज्ञानमिति** । द्वितीयं दूषयति **स्वविषयसमवेतमिति** । नीलज्ञानस्य न रसादिनिवर्तकत्वमविरोधात् । शुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्यत उक्तं **विरोधिनं वेति** । केचित्तु विषयगतं सत्यं निवर्तमानं किं स्वविषयीभूतं किं वा स्वाविषयीभूतम् । द्वितीयेऽपि स्वविषयगतं अविरोधि वा तद्विरोधि वेति विकल्प्याद्यं दूषयति **यतश्चित्रावयविनीति** । नीलवानयमिति ज्ञानविषयीभूतनीलस्य नीलवानयमिति ज्ञानेन निवृत्त्यापातादित्यर्थः । न द्वितीय इत्याह **स्वविषयेति** । नान्त्य इत्याह **विरोधिनं वेति** । इति व्याचक्षते । ननु चित्राख्यरूपस्यैकत्वात्तत्र नीलरूपाभावात् कथं चित्रावयविनि नीलज्ञानस्य नीलाद्यनिवर्तकत्वमुदाह्रियते इति चेन्न । चित्रावयव्यारम्भकनीलविशिष्टवस्तुज्ञानस्य विवक्षितत्वात् । न चैवं चित्रावयविनीतिपदवैयर्थ्यम् । नीलज्ञानस्य





स्वविषयनिवर्तकत्वे चित्रावयविन एवानुपपत्तिरिति प्रदर्शनार्थत्वेन सार्थक्यात् । यद्वा नानारूपसमाहार एव चित्रं रूपं तथैव प्रतीतेः । कारणे चित्राभावे कार्ये तदयोगाच्च । शुक्लादिरूपस्य समानजातीयरूपारम्भकत्वनियमात् । नानारूपवदवयवारब्धद्रव्यरूपस्याव्याप्यवृत्तित्वमनुभवबलात् स्वीकर्तव्यम् । अभावान्तरे गुणान्तरे चादृष्टस्यापि तस्य संयोगे तदभावे च दर्शनबलेनाभ्युपगमात् । एकस्यैव संयोगात्यन्ताभावस्य व्याप्याव्याप्यवृत्तित्वाभ्युपगमे किमपराद्धं रूपेणेति तत्त्वम् । द्वितीयं पक्षमाश्रित्य विरोधिसद्भावस्य निवृत्तौ प्रयोजकत्वान्न दोष इत्याह **मैवमिति** । आश्रयगतदुःखादिबन्धनिवृत्तिरेव नियम्यत्वादिनिवृत्तिरिति बोध्यम् । **उक्तोत्तरत्वादिति** । प्रसाद एव निवर्तको न तु ज्ञानमित्युक्तोत्तरत्वादित्यर्थः । दोषान्तरमाह **यदीति** । केचित्तु सत्यस्यापि निवृत्तावात्मनोऽपि निवृत्तिः स्यादिति पक्षनिराकरणप्रकारेणास्यापि दूषितप्रायत्वादित्यर्थः । तत्प्रकारमाह यदीतीत्यप्याहुः । किं ज्ञानमात्रे सत्याश्रयगतधर्मादिनिवृत्तिरापाद्यते किं वा आत्मयाथात्म्यज्ञाने सति । आद्यं दूषयति **घटादीति** । द्वितीय-मङ्गीकरोति **आत्मेति** । धर्मादीनामेव बन्धत्वादिति भावः । **चित्रावयविनीति** । चित्रावयविनि नीलरूपा-भावादित्यर्थः । यदत्रोक्तं चित्रावयव्यारम्भके नीलविशिष्टज्ञानं विवक्षितमिति, तन्न । नीलावयविनि पीतिमादेरभावेन तद्गतपीतिमादेरित्यस्यासाङ्गत्यापत्तेः । यदपि नानारूपसमाहार इति तदपि न । नानारूपसमाहारस्य चित्रत्वे नीलधवलारुणरूपेषु पटेषु कर्बुरार्थकचित्रप्रत्ययापत्तेः । नीलपीतादिषु मिथः संसृष्टेष्वनारब्धद्रव्येष्वपि कर्बुरप्रत्ययस्तु द्रव्यान्तरोत्पादाभिमानात् । तस्मान्नीलादिवच्चित्रमपि रूपान्तरमेवाभ्युपेयम् । न चैकरूपवदवयवसहितस्यावयविन उपलम्भेऽपि चित्रप्रत्ययः स्यादिति चेदस्त्येव तत्र चित्ररूपप्रत्ययः । चित्रत्वजातिस्तु न अवयववृत्तिविजातीय-समाहाराभिव्यङ्ग्यत्वात्तस्याः । अत एव त्र्यणुके चित्रे कदापि न चित्रप्रत्ययः । तथाप्यचित्रे पार्श्वे चित्रप्रत्ययो मा भूत् धवलप्रत्ययस्तु कुत इति चेत् अवयवरूपसञ्चारेणावयविनोऽपि तथा प्रत्ययात् । तस्माच्चित्रावयविनि नीलाभावात्तत्र नीलविशिष्टज्ञानमित्येतदनुपपन्नमिति भावः । परस्यासंबद्धप्रलापित्वप्रकटनायैतदुक्तम् । न त्वेत-त्पक्षकक्षीकरणार्थम् ।

**विठ्ठ०**— तथापि बन्धस्य सत्यत्वेन न ज्ञानेन निवृत्तिरिति शङ्कते **ननु ज्ञानेनेति** । ज्ञानेन सत्यं निवर्तत इत्यत्र प्रकृतो निवर्त्यः सत्यबन्ध एव तन्निवृत्तिः त्रेधा ज्ञानविषयीभूते ब्रह्मणि बन्धनियामकत्वापगमो वा ज्ञानाश्रयजीवगततन्नियम्यबन्धापगमो वा विषयाश्रयोभयानुगतबध्यबन्धकभावरूपयत्किञ्चिद्धर्मापगमो वा इत्यभिप्रेत्य आह **किं विषयगतमिति** । ज्ञानस्य स्वविषयगतनिवर्तकत्वं इत्याद्यपक्षेऽपि किं विषय-निवृत्त्याधिष्ठानाभावेन विषयगतनिवर्तकत्वं अथवा स्वविरोधिधर्मान्तरनिवर्तकत्वमिति विकल्पान् मनसि निधाय क्रमेण दूषयति **यतश्चित्रावयविनीति** । पटादावित्यर्थः । 'नानारूपसमाहारश्चित्र इत्यभिधीयत' इत्युक्तेस्तत्र नैल्यस्य विद्यमानत्वेन नीलविशिष्टत्वप्रकारकद्रव्यज्ञानं स्वविषयविशिष्टं वा तद्गतं नीलवैशिष्ट्याविरोधिनं रसादिकं धर्मविशेषं वा पीतिम्नोऽपि तत्र भावेन स्वविषयगतं सत्यं निवर्तते इत्येतन्न युक्तमिति भावः । **उक्तोत्तरत्वादिति** । परमेश्वरज्ञानेन प्रसादद्वारा जीवगतो बन्धो निवर्तते इत्यनेनाश्रयगतं निवर्तयतीत्यस्य लब्धत्वादित्यर्थः । तर्हि तत्पक्षोक्तदोषः स्यादित्यत आह **यदीति** । अविशेषो व्याप्तिरित्यत आह **विपक्ष इति** । अविशेषोऽपि नास्तीत्याह **घटादीति** ।

ननु नास्माभिः यदि ज्ञानं स्वाश्रयगतं निवर्तयेत् तदा घटादिज्ञानमपि स्वाश्रयगतधर्मादिकं निवर्तयेदिति घटादिज्ञानविषयता नापाद्यते येन वैषम्यं किन्तु ब्रह्मज्ञानं यदि स्वाश्रयविरोधिगतं उत्तरबन्धं निवर्तयतीत्युच्यते तर्हि तदेव मद्गतं विरोधिनं धर्माधर्मार्थादिकं च निवर्तयेदविशेषादिति आत्मयाथात्म्यज्ञानस्यैवापादनविषयताङ्गीकारात् नोक्तवैषम्यमित्यत आह **आत्मयाथात्म्येति** । तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशाविति ब्रह्मज्ञानस्य बन्धक-कर्मादिनिवर्तकत्वाङ्गीकारादिति भावः । **मिथ्याज्ञानमेवेति** । अतो न याथात्म्यज्ञानस्य विषयगतनिवर्तकत्वे व्यभिचारोदाहरणमलमिति भावः । परमेश्वरतत्त्वज्ञानं स्वाश्रयगतं स्वविरोधिनं बन्धं निवर्तयतीत्ययुक्तं ज्ञानस्य स्वाश्रयगतविरोधिनिवर्तकत्वाभावस्य चित्रावयविनि नीलविशिष्टद्रव्यज्ञानस्य स्वाश्रयगतविरोधिपीतिमत्वरूप-धर्मान्तरनिवर्तकत्वाभावेन तत्र व्यभिचारादित्यत आह **चित्रावयविनीति** । **एकमेव हीति** । नानावर्ण-समाहारात्मकचित्ररूपस्य पृथगेकरूपत्वेन तत्र नैल्यस्य वा पीतिम्नो वा पृथगभावेन नीलविशिष्टज्ञानं मिथ्याज्ञानमेव पीतिमाभावोऽपीति भावः । **पदार्थेति** । तत्तत्पदार्थयाथार्थ्यज्ञानिनो महान्त इत्यर्थः ।

**चषकः**— सत्यस्य ज्ञानेन निवृत्तौ विवरणोक्तानुपपत्तिं परिजिहीर्षुराशङ्कते **ननु ज्ञानेन सत्यमिति** । अत्रात्मज्ञानविषयीकृतात्मनिष्ठनियन्तृत्वादेरात्मज्ञानेन निवृत्तौ तन्निरूपितजीवगतनियम्यत्वादेरप्यर्थान्निवृत्तिः सेधिष्यतीत्याशयेनाद्यकल्पस्य तादृशज्ञानाश्रयीभूतजीवगतनियम्यत्वादेस्तेन निवृत्तौ तन्निरूपितात्मवृत्तिनियन्तृ-त्वादेरप्यर्थान्निवृत्तिरिति द्वितीयस्योभयगतकर्तृत्वादिनिवृत्तिरिति तृतीयस्यावतार इत्यवधेयम् । आद्यकल्पेऽपि नियन्तृत्वादिप्रकारकब्रह्मविशेष्यकज्ञानं नियन्तृत्वादिविशेषितं ब्रह्म निवर्तयतीति विशेषणतया नियन्तृत्वा-द्यविषयकमेव ब्रह्मविषयकज्ञानं स्वविषयीभूतब्रह्मवृत्तिनियन्तृत्वादिकमिति द्वितीयाभावादिरूपशुद्धत्वोपरागेण ब्रह्म-ज्ञानं स्वनिरूपितप्रकारतापन्नं यद्दर्शितशुद्धत्वं तद्विरुद्धनियन्तृत्वादिकमिति कल्पत्रयीमभिप्रेत्य क्रमेण प्रतिविधत्ते **यत इत्यादि** । विरोधिनं वा पीतिमादिगुणमिति समनन्तराभिधास्यमाने पीतिमगुणे स्वनिरूपितप्रकारतापन्न-नीलिमनिरूपितविरोधस्फोरणाय चित्रावयविनीतिपदम् । नानारूपसमाहारश्चित्रमिति कतिपयमततात्पर्यक-मुपात्तम् । द्वितीयकल्पमाश्रित्य समाधित्सते **मैवमित्यादि** । **उक्तोत्तरत्वादिति** । सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेति प्रसञ्जनस्य व्याप्त्यभावादिति समाहितिरभिहिता । सैवात्राप्यवसेयेत्यर्थः । तदेव विशदयति **यदीत्यादि** । **ब्रह्मगोचरज्ञानस्याश्रयगतनियम्यत्वादिनिवर्तकतोपगमे** घटादिज्ञानस्याप्याश्रयगतधर्मादिनिवर्तकता स्यादित्यत्र **व्याप्त्यभावादित्यर्थः** । विषयिताप्रत्यासत्त्या ब्रह्मविशेषितज्ञानत्वावच्छिन्नस्यैवाश्रयगतनिवृत्तिप्रयोजकत्वोपगमेन **तदन्यविषयविशेषितज्ञानत्वावच्छिन्नस्याश्रयगतनिवृत्तिव्याप्त्यङ्गीकारस्तत्राप्रयोजकतानिवर्तकबाधकतर्कानवतारेण** न **संभवतीत्याह विपक्ष इति** । दर्शितज्ञानद्वयस्य विषयवैलक्षण्यनिबन्धनवैलक्षण्यस्य सत्त्वेन अवैशेष्यमसिद्धमित्याह **घटादीति** । **बन्धविरोधीति** । नियम्यत्वादेरेव बन्धरूपत्वादिति भावः । प्रमात्वस्य ज्ञानवृत्तिनिवर्तकतावच्छेदक-**त्वोपगमे न** क्षतिरित्याह **चित्रावयविनीति** । न्यायनये संयोगादिवद्रूपस्याव्याप्यवृत्तिताविरहेण नानारूपवदव-**यवारब्धपटादिवृत्तिचित्ररूपस्य** व्याप्यवृत्तितया नीलपीतादिसामानाधिकरण्याभावेन चित्ररूपवति नीलादिज्ञानस्य **भ्रमत्वादिति** भावः । **पदार्थविदः** नैयायिकाः ।

**गूढ०**— सत्यस्यापि निवृत्तौ बाधकाभावादित्युक्तं तत्र बाधकं शङ्कते **नन्विति**। आद्येऽपि किं स्वविषयमेव वा स्वविषयसमवेतं तदन्यद्वा विरोधिगुणं वा त्रितयमपि नेत्याह **यत इति**। द्वितीयविकल्पं हृदि निधायाह **उक्तोत्तरत्वादिति**। ज्ञानमाश्रयगतं विरोधिनं निवर्तयतीत्युक्तोत्तरत्वादित्यर्थः। ननु ज्ञानस्याश्रयगतनिवर्तकत्वे तेनाश्रयगतधर्मादेरपि निवृत्तिः स्यादित्यत आह **यदीति**। यस्य यद्वति तत्तदविशिष्टस्यापि भवतीति सामान्यव्याप्तिरस्तीत्यत आह **विपक्ष इति**। ननु बन्धधर्मयोरात्मगतत्वाविशेषात्तेन बन्धनिवृत्तौ घटादिज्ञानेन धर्मादिनिवृत्तिः किं न स्यादित्यत आह **घटादिज्ञानमिति**। ननु घटादिज्ञानेन धर्मादिनिवृत्तिः नापाद्यते। किन्त्वात्मयाथात्म्यज्ञानेनैवेति न वैषम्यमित्यत आह **आत्मेति**। धर्मादेरेव बन्धत्वादिति भावः। विषयगतं निवर्तयति इत्यत्रोक्तं दोषं पराकौशलख्यापनायोद्धरति **चित्रेति**। अवयवानामेव नीलत्वेनावयविनि नैल्याभावात् प्रमाया एव निवर्तकत्वादिति भावः। ननु तत्र नीलपीतादिकमुपलभ्यत इत्यत आह **एकमिति**।

**प्रदीपः**— प्रकारान्तरेणापि वस्तुसतो ज्ञाननिवर्त्यत्वं नास्तीति चोदयति **ननु ज्ञानेति**। विषयगत-नियन्तृत्वादिनिवृत्तावर्थसापेक्षनियम्यादिनिवृत्तिरित्याद्यो विकल्पस्तत्रापि विशिष्टविषयं ज्ञानं निवर्तकं केवलविषयं चेति विकल्पद्वयमाश्रयगतनियम्यादीति प्रवृत्तावर्थसापेक्षनियन्तृत्वादिनिवृत्तिरिति द्वितीयः उभयगतनियन्तृत्वाद-निवृत्तिरिति तृतीयः सर्वत्रापि क्रमेण व्यभिचारमाह **यत इत्यादिना**। नीलज्ञानस्य न रसादिनिवर्तकत्वं अविरोधाच्छुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्यतस्तत्रापि व्यभिचारोऽभिहितोऽविरोधिनं वेति द्वितीयं पक्षमाश्रित्य विरोधिसद्भावस्य निवृत्तौ प्रयोजकत्वान्न दोष इत्याह **मैवमिति**। आश्रयगतबन्धादिनिवृत्तिरेव नियम्यत्वादिनिवृत्तिरिति बोद्धव्यम्। किं ज्ञानमात्रे सत्याश्रयगतधर्मादिनिवृत्तिरापाद्यते किं वात्मयाथात्म्यज्ञाने सति। आद्यं दूषयति **घटादीति**। द्वितीयमङ्गीकरोति **आत्मेति**। धर्मादीनामेव बन्धत्वादिति भावः। **चित्रावयविनीति**। नीलादीनामेवावयवाश्रितानां भिन्नाश्रयत्वान्न विरोधः। अवयविनि तु नीलादय एव न सन्ति रूपादीनामाश्रय-व्याप्यवृत्तित्त्वात् विरोधिनां समावेशायोगादित्यर्थः। परस्यासंबद्धप्रलापित्वप्रकटनायैतदुक्तं न तु एतत्पक्षकक्षी-कारार्थम्।

**२०८ सु०— अस्तु वा ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिस्तथाऽपि बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते। किन्तु बन्धस्याज्ञानतत्कार्ययोरन्यतरत्वमेवेति तदेव वर्णनीयम्। अध्यास-वर्णनस्य का सङ्गतिः। अज्ञानस्य मिथ्यात्वं तु कपोणिगुडायितम्। निराकरिष्यमाणत्वात्।**

**बिन्दुः**— **कपोणिगुडायितमिति**। कपोणिः कूर्परस्याग्रम्। यथा आकूर्परच्छिन्नकरः कश्चित्कुणिः गुडलड्डुकामः कराग्रेण लड्डुमादाय जिघत्सति परन्तु मुखे प्रवेशयितुमलं न भवति केवलं दुराशामात्रं तस्यावशिष्यते एवं तवापि प्रपञ्चमिथ्यात्वं मनोरथमात्रमेव। उक्तवक्ष्यमाणदूषणगण-ग्रासादिति भावः।





**परि०**— नन्वज्ञानकार्यत्वे बन्धस्य मिथ्यात्वं सिद्धमेव। अज्ञानस्यैव मिथ्यात्वादित्यत आह **अज्ञानस्येति**। यद्वा बन्धस्याज्ञानरूपत्वात्तस्य च मिथ्यात्वात्तद्वर्णनं युक्तमित्यत आह **अज्ञानस्येति**। **कपोणिगुडायितमिति**। कपोणिगुडवदाचरितमित्यर्थः। कपोणिर्नाम बाहुमध्यसन्धिः। 'भुजबाहूप्रवेष्टो दोः स्यात्कपोणिस्तु कूर्परः। अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यध' इत्यमरोक्तेः। अत्र कपोणीतिपवर्गाद्याक्षरपाठः साधुः। न तु कफोणीति पवर्गद्वितीयवर्णपाठः। कं कर्म प्रसारणादिकं पुणति करोतीत्यमरव्याख्याने पुणधातुजत्वस्यैवोक्तेः। मध्यसन्धिबाह्यप्रदेशान्तर्भागे विद्यमानस्य गुडस्य रसनेन्द्रियस्पर्शो यथा न शक्यते तथाऽज्ञाने मिथ्यात्वसंबन्धोऽपि न शक्यत इत्यर्थः। **निराकरिष्यमाणत्वादिति**। 'अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पन' इत्यत्रेति भावः।

**गुं०दी०**— **बन्धस्याज्ञानतत्कार्ययोरन्यतरत्वम्** इत्यङ्गीकारवादोऽयम्। वस्तुतस्तु "बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते" इत्युत्तरोक्तप्रमेये हेतुसूचनाय देहलीदीपन्यायेन "इत्युक्तेः" इत्यस्योत्तरत्र योगे "इत्युक्तेः ज्ञानिनां मोक्षदश्च स" इत्युक्तेः ज्ञानोत्पन्नभक्त्या प्रसन्नः भगवान् परमात्मैव बन्धं निवर्तयतीति सिद्धा बन्धनिवृत्तिरूपा मुक्तिः बन्धमिथ्यात्वं नैवापेक्षते। ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्त्या हि बन्धमिथ्यात्वं पर आशास्ते। व्याप्तिश्च परम्परया ज्ञाननिवर्त्यत्वरूपमिथ्यात्वमज्ञानातिरिक्तजगत्यङ्गीकुर्वता परेणैव साक्षाज्ज्ञानमज्ञानस्यैव निवर्तकमिति वाच्या। एवं चोक्तरीत्या भक्तिभगवत्प्रसादद्वारा परम्परया ज्ञानेनाज्ञाननिवृत्तौ व्याप्तेः कथमुपयोगः। ज्ञानमज्ञाननिवृत्तिद्वारैवान्यनिवर्तकमिति दुराग्रहे अस्माकमपि ज्ञानेन भगवज्ज्ञानाभावरूपमज्ञानं प्राक् निवर्तताम्। तेन च भगवति भक्तिरुत्पद्यताम्। भक्त्या च प्रसन्नो भगवान् बन्धं निवर्तयतु। एवमप्यज्ञानोपादानकत्वमन्यद्वा मिथ्यात्वं नैव मुक्तिरपेक्षत इति मूलरीत्या सर्वमवदातमिति ज्ञेयम्। **अध्यासवर्णनस्य का सङ्गतिः** इत्यस्य विरोधेनैव ज्ञानादज्ञाननिवृत्तिसंभवे पुनस्तस्य मिथ्यात्वकथने न किञ्चित्कारणमिति भावः। श्रुत्यादिना अज्ञानमिथ्यात्वशङ्कामपनुदति **अज्ञानस्येति**।

**यादु०**— **का सङ्गतिरिति**। अज्ञानस्य सत्यत्वे तत्कार्यस्यापि बन्धस्यानध्यस्तस्यैव निवृत्तिर्भविष्यतीति भावः। नन्वत एवाज्ञानस्य मिथ्यात्वं मिथ्याज्ञाननिमित्तमित्यनेनोक्तमित्यत आह **अज्ञानस्येति**। कफोणिः कूर्पराभिधं हस्तमूलम्। स्यात्कफोणिस्तु कूर्पर इत्यभिधानात्। तस्य जिह्वासन्निकर्षायोग्यत्वात्तदालिप्तगुडलेहनं यथाऽशक्यसाधनं तथाऽज्ञानस्यैवासंभवात्तन्मिथ्यात्वव्युत्पादनमप्यत्यन्तासङ्गतमित्यर्थः। निराकरिष्यमाणत्वादित्यत्र अज्ञानस्येत्यनुवर्तते। 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि'त्यादिनाऽज्ञानस्य निराकरिष्यमाणत्वादित्यर्थः। तन्मिथ्यात्वस्याप्यज्ञानस्य च मिथ्यात्वमित्यादिना निराकरिष्यमाणत्वादित्यर्थः।

**वं०प०**— **ज्ञानं** घटादिकम्।

**कं०रा०**— नन्वज्ञानस्य मिथ्यात्वाद्बन्धस्याध्यस्तत्वाभावे तत्कार्यत्वमेव न संभवतीति तदर्थमध्यासवर्णनं सङ्गतमेवेत्यत आह **अज्ञानस्येति**। अज्ञानस्य मिथ्यात्वं कपोणिगुडायितं कूर्परस्थगुडवदाचारवत्कृतम्।





कूर्परस्थगुडस्य यथा जिह्वयोपादातुमशक्यत्वं तथाऽज्ञानमिथ्यात्वस्यापि त्वया वक्तुमशक्यत्वरूपं तदस्ति, मानविदूरत्वात् । अतस्तयोः साम्यमिति भावः । स्यात्कपोणिस्तु कूर्पर इत्यमरः । सुबन्तादुपमानार्थात्कपोणिगुडशब्दात्कर्तुः क्यङ् सलोपश्चेत्याचारार्थे क्यङ्प्रत्ययेऽकृत्सार्वधातुकयोर्दीर्घ इति दीर्घे क्यङन्तस्य सनाद्यन्ता धातव इति धातुसंज्ञायां ततस्तत्करोतीत्यर्थे ण्यन्तात् क्तप्रत्यये तस्येडागमे निष्ठायां च सेटीति णिलोपे च रूपमिदम् ।

**श्रीनिधि०**— अज्ञानतत्कार्यान्यतरत्वं मिथ्यात्वव्याप्तमित्यत आह **अज्ञानस्येति** । **कफोणिः** कूर्परः । दोस्सन्धिप्रदेशः । **निराकरिष्यमाणत्वादिति** । अज्ञानस्य च मिथ्यात्वमित्यादिना इति शेषः ।

**वा०चं०**— एवं यत्खलु प्रमितमप्यनुपपद्यमानं स्वोपपत्तये यदपेक्षते तत्तदाक्षिपति नान्यदित्यंत्रत्यस्य प्रमितत्वांशस्य प्रथमं निरासः । साक्षाज्ज्ञानाद्बन्धनिवृत्तेरसूत्रितत्वात् । अप्रामाणिकत्वाच्च । सामान्योक्तेश्च विशेषप्रमाणानुरोधेनान्यथैवोपपन्नत्वादिति । अत एव तत्र प्रमाणान्युदाहृत्य तत्सावकाशत्ववर्णनम् । तदनन्तरं च ज्ञानमज्ञानस्यैव निवर्तकमिति नियमाभावेन अनुपपत्तेरभावात्साक्षाज्ज्ञानाद्बन्धनिवृत्त्यभ्युपगमेऽपि न क्षतिरित्यनुपपद्यमानत्वांशस्यास्तु वेत्यादिना निरासः । अधुना ज्ञानमज्ञानस्यैव निवर्तकमिति नियमाभ्युपगमेऽपि साक्षाज्ज्ञानाद्बन्धनिवृत्तेरन्यथैवोपपन्नतया न काचिदपि क्षतिरित्यभिप्रेत्य स्वोपपत्तये यद्यदपेक्षते तत्तदाक्षिपतीतीममंशं निरस्यति **अस्तु वेति** । साक्षाज्ज्ञानाद्बन्धनिवृत्तिः श्रूयमाणा ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलाद्बन्धस्याज्ञानात्मकत्वं विनाऽनुपपन्ना सती बन्धस्य साक्षादज्ञानत्वं वा उपादानोपादेययोरभेदादज्ञानोपादानकत्वमेव वाऽऽक्षिपेदित्यन्यथैवोपपत्तिरिति भावः । नन्वज्ञानोपादानत्वाक्षेपेऽप्युपादेयस्योपादानस्वभावतयाऽज्ञानस्य च मिथ्यात्वात्तत्कार्यबन्धस्यापि मिथ्यात्वमेवेति तदध्यासवर्णनं सङ्गतमेवेत्यत्राह **अज्ञानस्येति** । अज्ञानस्य मिथ्यात्वं बन्धस्याध्यस्ततया कार्यकारणयोरेकस्वभावत्वात्साध्यं वा प्रकारान्तरेण वा । नाद्यः । बन्धाध्यासस्यैवाभावेन तत्प्रयुक्ताज्ञानमिथ्यात्वस्यासंभवात्कपोणिलेहनप्रयुक्तकपोणिस्थगुडलेहनतुल्ययोगक्षेमत्वादित्याह **कपोणीति** । न द्वितीयः । साधकाभावबाधकसद्भावाभ्यामज्ञानस्य च मिथ्यात्वमित्यादिना निराकरिष्यमाणत्वादित्याह **निराकरिष्यमाणत्वादिति** । केचित्तु निराकरिष्यमाणत्वादित्यत्राज्ञानस्य तन्मिथ्यात्वस्य चेत्यन्वयमभिप्रेत्य अज्ञानस्वरूपस्यैव त्वन्मते निराकरिष्यमाणत्वेन तन्मिथ्यात्वं कपोणिगुडायितमित्यर्थ इत्याहुः ।

**वा०र०**— अस्तु वा ज्ञानमज्ञानस्यैवेति पक्षस्य परकीयान्यथानुपपत्तिशरीरान्तर्गतांशविशेषनिरासार्थत्वं दर्शयितुं सिंहावलोकनन्यायेनोक्तमेतद्यज्ज्ञानादित्युक्तनिराकरणस्यास्तु वा ज्ञानाद्बन्धनिवृत्तिरित्येतन्निराकरणस्य च तच्छरीरान्तर्गतनिराकर्तव्यांशविशेषं तावद्दर्शयति **एवं यत्खल्विति** । निरासप्रकारमेव दर्शयति **साक्षाज्ज्ञानादिति** । इति निरास इति पूर्वेणान्वयः । **प्रमाणानीति** । तरतीत्यादीनीत्यर्थः । **अज्ञानोपादानकत्वाक्षेपेऽपीति** । तन्मात्राक्षेपेऽपीत्यर्थः । ततश्च साक्षाद्बन्धमिथ्यात्वालाभेऽपि पर्यवसानगत्या तल्लाभ इति भावः । कफोणिगुडेत्यत्राशङ्क्य द्वयप्रतीत्यनुसारेण प्रकृते द्वयमानेयम् । तत्र च केचित्त्विति वक्ष्यमाणानुसारेणाज्ञानस्य





परमतेऽसंभवस्यान्तर्भावः प्रतीयते। स चायुक्तः। परमते अज्ञानसद्भावमाश्रित्य ज्ञानेन तन्निवृत्तिः साक्षात्परम्परया वेति प्रक्रमविरोधेनाज्ञानासंभवप्रतिपादनस्यासङ्गतत्वात्। कथमन्यथा बन्धस्याज्ञानतत्कार्ययोरन्यतरत्वमेवापेक्षत इति तदेव वर्णनीयम्। तच्च सत्यत्वेऽप्युपपन्नमित्याद्युक्तिर्युक्ता स्यात्। तदनुसारेणाज्ञानसंभवासंभवविचारमनादृत्य परीत्यैव तत्संभवपक्षं चाङ्गीकृत्य ग्रन्थप्रवृत्तिरिति सिद्धत्वात्। एतेन निराकरिष्यमाणत्वादित्यस्य निर्विशेषे स्वयं भात इत्यादिनाऽज्ञानस्वरूपस्य निराकरिष्यमाणत्वादित्यर्थकथनं चाज्ञानाधीनमित्युपेक्ष्यमित्याशयेन प्रकारान्तरेणाशङ्कच द्वयं दर्शयति **अज्ञानस्य मिथ्यात्वमिति**। नाद्यः **बन्धेति**। यद्यप्यज्ञानस्य मिथ्यात्वात् तदुपादानकत्वादध्य-स्तत्वमित्युक्त्यनन्तरमध्यस्तोपादानत्वादज्ञानस्य मिथ्यात्वसिद्धिरिति वचनेऽन्योन्याश्रयत्वं वाच्यम्। तथापि कफोणीत्यादिना तदेव मूलीकृतम्। अत एवाध्यासस्यैवाभावेनेति टीकायामन्योन्याश्रयापत्तेरिति हेतुरभिप्रेत इति पूर्वोत्तरवाक्यपर्यालोचनया स्पष्टमिति न दोष इति ज्ञेयम्। मूले कफोणीति पाठः। स्यात्कपोणिस्तु कूर्पर इति कपोणीति पाठस्याभिधाने सत्त्वेऽपि शब्दभेदप्रकाशादौ कफोणिः कफणिस्तथेत्याद्युक्तेः यथाश्रुतपाठपरित्यागे च कारणाभावात्। **केचित्त्विति**। अस्वरसस्तूक्त एव। अन्यथाख्यातिरप्युक्ता स्वरसेनैव दुष्टेति ज्ञातव्यम्।

**स०व्र०— अस्तु वेत्यादि**। अज्ञानस्य स्वाभाविकत्वे तदात्मकस्यापि बन्धस्यानध्यस्तस्यैव निवृत्तिर्भविष्यतीत्यर्थः। नन्वत एव ज्ञानस्य मिथ्यात्वमित्युक्तं तत्राह **अज्ञानस्येति**। निराकरिष्यमाणत्वादित्येत-दज्ञानस्येत्यनेनाभिसंबद्धचते। तथा च कफोणिकूर्पराभिधेयहस्तमूलस्यैव जिह्वासंबन्धायोग्यत्वात् तदालिप्तगुड-लेहनमसङ्गतम्। तथा अज्ञानस्यैवासंभवात् तन्मिथ्यात्वव्युत्पादनमत्यन्तासङ्गतमित्यर्थः। **निराकरिष्यमाणत्वात्** 'निर्विशेषें स्वयं भाते' 'अज्ञानस्य च मिथ्यात्वं' इत्यनेन निराकरिष्यमाणत्वादित्यर्थः।

**विठ्ठ०—** अज्ञानस्य मिथ्यात्वात् तत्कार्यस्य बन्धस्य सुतरां मिथ्यात्वमित्यत आह **अज्ञानस्येति**। स्यात्कपोणिस्तु कूर्पर इत्यभिधानात् कपोणिर्बाहुमध्यान्तस्य सर्वथा जिह्वया सन्निकर्षासंभवात् तत्र लिप्तं गुडं यथा नावलेढुं शक्यते तथा परमतेऽज्ञानस्यैवासंभवेन तन्मिथ्यात्वव्युत्पादनमत्यन्ताशक्यमिति निर्विशेषे स्वयं भाते इत्यत्राज्ञानस्य तन्मिथ्यात्वस्य च अज्ञानस्य मिथ्यात्वमित्यत्र निराकरिष्यमाणत्वादित्यर्थः।

**चषकः— का सङ्गतिरिति**। पटस्य सत्यत्वेऽपि तदुपादानभूततन्तुनिवृत्त्या पटनिवृत्तिवत् बन्धस्य सत्यत्वेऽपि तदुपादानभूताज्ञाननिवृत्त्यैव तन्निवृत्तेः संभवेन तस्याध्यासवर्णनमसङ्गतमिति भावः। अत्र कफोणिः कूर्पराभिधहस्तमूलमिति व्याकर्तॄणामेकः पन्थाः। अन्यस्तु कपोणिरिति पवर्गीयाद्याक्षरपाठ एव साधुः। कं कर्म प्रसारणादिकं पुणति करोतीत्यमरव्याख्याने पुणधातुजत्वस्यैवोक्तेरिति। **निराकरिष्यमाणत्वादिति**। अज्ञान-स्येत्यनुषञ्जनीयेनान्वेति। निर्विशेषे स्वयं भात इत्यादिना प्रत्याख्यास्यमानत्वादित्यर्थः।

**गूढ०—** प्रकारान्तरेण बन्धेति वाक्यं योजयति **अस्तु वेति**। ननु तर्हि ज्ञानेनाज्ञानस्यैव निवृत्तिः स्यान्न बन्धस्येत्याशङ्कच ज्ञानेनाज्ञाननिवृत्तावज्ञानोपादानकस्य बन्धस्यापि निवृत्तिर्भवति। बन्धस्याज्ञानतत्कार्ययोरन्य-





तरत्वात् । तथाच न तन्निवृत्त्यर्थमध्यासवर्णनमित्याह **बन्धस्येति** । न चेदमेव मिथ्यात्वमिति नाध्यासवर्णन-मसङ्गतमिति वाच्यम् । अज्ञानकार्यत्वं हि तज्जन्यत्वं वा तेनाविद्यमानप्रदर्शनं वा । नाद्यः । अनादित्वेन तज्जन्य-त्वायोगात् । नान्त्यः । तस्य सत्यत्वेनाविद्यमानत्वाभावात् । न चाज्ञानोपादानकत्वेन मिथ्यात्वमिति वाच्यम् । तथा सति मृदुपादानेन घटस्यापि मिथ्यात्वापत्तेः । नन्वज्ञानस्य मिथ्यात्वान्मिथ्याभूताज्ञानोपादानकस्य प्रपञ्चस्य मिथ्यात्वमित्यत आह **अज्ञानस्येति** । **निराकरिष्यमाणत्वादिति** । अज्ञानस्य च मिथ्यात्वमित्यत्रेति शेषः ।

**प्रदीपः**— **अस्तु वेत्यादि** । अज्ञानस्य स्वाभाविकत्वे तदात्मकस्यापि बन्धस्याध्यस्तस्यैव निवृत्ति-र्भविष्यतीत्यर्थः । ननु अत एवात्राज्ञानस्य मिथ्यात्वं मिथ्याज्ञाननिमित्तमित्युक्तं तत्राह **अज्ञानस्येति** । निराकरिष्य-माणत्वादित्यत्रापि संबद्ध्यते तथाच यथा कफोणिः कूर्पराभिधेयः तन्मूलस्यैव जिह्वासंबन्धायोग्यत्वात्तदालिप्तगुड-लेहनमसङ्गतम् ।

**२०९ सु०— अपि च सत्यस्यापि विषस्य गरुडध्यानेन निवृत्तिदर्शनात् बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । विषं न सत्यमिति चेन्न । तथा सति नीलविशिष्टद्रव्यादेरपि तवासत्य-त्वेन तन्निवृत्त्यापादनस्यानुपपत्तिप्रसङ्गात् । सत्यम् । तदपि मम मिथ्या । पराङ्गीकारेण त्वापादनमिति चेत् । तर्हि तदेव न ज्ञानान्निवृत्तमिति न मिथ्याभूतस्यापि ज्ञानान्निवृत्तिः । मिथ्याभूतं विरोधि ज्ञाननिवर्त्यमिति चेन्न । विशेषणवैयर्थ्यात् । अविरोधादेव आत्मनो-ऽनिवृत्तिसंभवात् । मिथ्यात्वमङ्गीकृत्यापि विरोधोऽङ्गीकार्यः । ततो वरं स एव प्रयोजक इत्यङ्गीकारो लाघवात् । ज्ञानविरोधित्वं मिथ्याभूतस्यैवेति चेन्न । प्रमाणाभावात् । दर्शनादिति चेत् । तर्ह्यागमेन सत्यस्यापि भवत्केन वार्यते । न च दर्शनमात्रं व्याप्तेर्नियामकम् ।**

**परि०**— ज्ञाननिवर्त्यत्वस्य मिथ्यात्वरूपसाध्येन व्यभिचारं चाह **अपि चेति** । मिथ्याभूत-जगदन्तःपातित्वाभिप्रायेण शङ्कते **विषं न सत्यमिति चेदिति** । **तवेति** । सर्वमिथ्यात्ववादिन इत्यर्थः । **तन्निवृत्तीति** । स्वविषयनीलादेः सत्यस्य निवृत्तिः स्यादिति पूर्वोक्तापादनमसङ्गतं स्यादित्यर्थः । **दर्शनादिति चेदिति** । स्वाप्नपदार्थेषु शुक्तिरूप्यादौ चेति भावः । **आगमेन सत्यस्यापि भवदिति** । विश्वमायानिवृत्तिरित्याद्यागमेन सत्यस्याप्यज्ञानादिबन्धस्य निवर्तनमावेद्यमानं केन वार्यते । तदप्युपेय-मेवेत्यर्थः । यद्वा सेतुदर्शनगरुडध्यानादिना ब्रह्महत्यादेः सत्यस्य 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्याद्यागमेन सत्यस्यापि भवन्निवर्तनमवगम्यमानं केन वार्यत इत्यर्थः । तत्र सत्त्वं नोभय-संमतम् । शुक्तिरूप्यादौ मिथ्यात्वमुभयसंमतमित्यतो दोषान्तरमाह **न चेति** । किञ्चेति चार्थः । तथात्वे वह्नेरपि धूमव्याप्यतापत्तेः । क्वचित्सहदर्शनस्य सत्त्वादिति भावः ।

**गु०दी०— तथा सति नीलविशिष्टद्रव्यादेः** इत्यत्र, एवं सति नीलविशिष्टद्रव्यस्य मिथ्यात्वेन ज्ञानेन सत्यं निवर्तमानमित्यस्य नेदमापादनस्थलमिति भावः ।

**यादु०—** व्यभिचारमप्याह **अपि चेति** । सत्यस्य ज्ञाननिवर्त्यत्वाभावो द्वेधा वक्तव्यः । विषस्यासत्यत्वाद्वा ध्यानस्य ज्ञानत्वाभावाद्वेति विकल्पं मनसि निधायाद्यमाशङ्क्य निराकरोति **न चेत्यादिना** । सत्यस्यापि निवृत्तौ नीलविशिष्टेत्याद्युदाहृतं तत्तत्सत्यत्वानङ्गीकारे न सङ्गच्छते । तस्य सत्यत्वे विषस्यापि सत्यत्वं स्यात् । तुल्यन्यायत्वादित्यर्थः । **मिथ्याभूतस्यैवेति** । तथाच स्वरूपकथनाय मिथ्याभूतमिति विशेषणमिति भावः ।

**वं०प०— तदेवेति** । मिथ्याभूतं नीलविशिष्टं द्रव्यं तद्गतं रसादिकं च त्वन्मते न ज्ञानान्निवृत्तमित्यर्थः । **विरोधीति** । नीलविशिष्टद्रव्यस्य रसादेश्च तज्ज्ञानविरोधित्वाभावादिति भावः । तर्ह्यात्मनोऽपि ज्ञानेन निवृत्तिः स्यादतो मिथ्याभूतमिति विशेषणं सार्थकमिति चेत्तत्राह **अविरोधादेवेति** । आत्मज्ञानस्यात्मनश्च विरोधाभावादिति भावः । **अङ्गीकार्य इति** । अन्यथा नीलविशिष्टद्रव्यज्ञानेन मिथ्याभूतस्य तद्विषयादेर्निवृत्तिप्रसङ्ग इत्यर्थः ।

**कं०रा०— विशेषणेति** । यज्ज्ञानं यद्विरोधि तेन तन्निवर्तत इत्येव नियमे संभवति मिथ्यात्वविशेषणस्य वैयर्थ्यादित्यर्थः ।

**श्रीनिधि०— अनुपपत्तिप्रसङ्गादिति** । सत्यं निवर्तयतीत्युक्ते मिथ्याभूतनिवर्तकत्वापादनस्य असङ्गतत्वादिति भावः । **विशेषणवैयर्थ्यादिति** । मिथ्याभूतमिति विशेषणवैयर्थ्यादित्यर्थः । यत् यज्ज्ञानविरोधि तत् तज्ज्ञाननिवर्त्यमित्येवास्तु इति भावः ।

**वा०चं०—** एवं सत्यस्यापि ज्ञानान्निवृत्तौ बाधकाभावेन ज्ञानमज्ञानस्यैव निवर्तकमिति नियमो नास्त्येव । तन्नियमाङ्गीकारेऽपि वा बन्धस्याज्ञानतत्कार्यान्यतरत्वमात्रप्राप्त्या तस्य च सत्यत्वेऽप्युपपत्त्या न बन्धमिथ्यात्वाक्षेप इत्यन्यथैवोपपत्तिं प्रतिपाद्याधुना सत्यस्य ज्ञानान्निवृत्तेः स्पष्टदृष्टतया व्यतिरेकव्यभिचारेण बन्धमिथ्यात्वस्य तदुपपादकत्वानुपपत्तौ ज्ञानाद्बन्धनिवृत्तेरन्यथैवोपपत्तेर्न तया बन्धमिथ्यात्वाक्षेप इत्याह **अपि चेति** । न च तत्रापि विप्रतिपत्तिः । सा किं विषनिवृत्तिगरुडध्यानयोः साध्यसाधनभावे प्रमाणाभावाद्वा विषयस्यासत्यत्वाद्वा ध्यानस्य ज्ञानत्वाभावाद्वा । नाद्यः । दर्शनादित्यन्वयव्यतिरेकसध्रीचीनप्रत्यक्षस्योपन्यस्तत्वात् । द्वितीयं शङ्कते **विषमिति** । मन्मते विषस्य सत्यत्वात्तदुदाहरणं युक्तमेव त्वां प्रत्यपि तत्सत्यमेव । तस्य नीलविशिष्टद्रव्यसमानयोगक्षेमत्वात् । तस्याप्यसत्यत्वे सत्यस्य निवृत्तौ नीलविशिष्टद्रव्यज्ञानेन तन्निवृत्त्यापादनमयुक्तं स्यादित्याह **तथा सतीति** । ननु विषं नीलविशिष्टद्रव्यं चेत्युभयमपि मां प्रत्यसत्यमेव । अतो विषस्यानुदाहार्यत्वमुच्यते । आपादनं तु पराङ्गीकारेणेत्याशङ्कते **सत्यमिति** । मन्मते नीलविशिष्टद्रव्यस्य सत्यत्वात्सत्यस्य ज्ञानेन निवृत्तौ नीलद्रव्यस्यापि तज्ज्ञानेन निवृत्तिं मदङ्गीकारेण मां प्रत्यापाद्य सत्यस्य ज्ञानेन निवृत्तिं त्याजयसि चेत् । त्वन्मते तस्य मिथ्यात्वान्मिथ्याभूतस्य ज्ञानेन





निवृत्तौ नीलद्रव्यस्य तज्ज्ञानेन निवृत्तिं त्वदङ्गीकारेणैवापाद्य मिथ्याभूतस्यापि ज्ञानेन निवृत्तेस्त्याजयितुं शक्यत्वेन प्रत्यापादनपराहतत्वान्मां प्रत्यपि तदापादनमनुपपन्नमेवेत्याह **तर्हीति** । ननु न मिथ्यात्वमात्रं निवृत्तिप्रयोजकमपि तु विरोधित्वमपि । एवं चाविरोधादेव नीलद्रव्यस्य तज्ज्ञानेन न निवृत्तिरिति मां प्रति प्रत्यापादनं न युक्तमित्याशङ्क्ते **मिथ्याभूतमिति** । विरोधिज्ञाननिवर्त्यमित्येतावन्मात्रेऽनुपपत्त्यभावेन मिथ्याभूतमिति विशेषणवैयर्थ्यान्नीलद्रव्यस्य सत्यत्वेऽप्यविरोधादेव न निवृत्तिरिति न मां प्रत्यपीदमापादनं युक्तमित्याशयेनाह **विशेषणेति** । ननु न तावन्मात्रेऽनुपपत्त्यभावः । आत्मनो निवृत्तिप्रसङ्गस्य अनिष्टत्वादित्यत्राह **विरोधादिति** । ननु विरोधिपदेनेव मिथ्याभूतेति विशेषणेनाप्यात्मनो निवृत्तिप्रसङ्गस्य परिहर्तुं शक्यत्वात्को निर्बन्धो विरोधित्वेनैव तत्परिहार इत्यत्र येन त्वां प्रत्यापादनमनुपपन्नं स्यादित्यत आह **मिथ्यात्वमिति** । ननु मिथ्याभूतस्यैव ज्ञानविरोधित्वेन सत्यस्य ज्ञानविरोधस्यैवाभावेन सत्यत्वेन ज्ञानविरोधतदभावाभ्यां निवृत्त्यनिवृत्ती त्वया प्रतिपादयितुं शक्ये । मिथ्याभूतमिति विशेषणं च तस्यैव ज्ञानविरोधित्वमिति प्रतिपादयितुमुपादीयते न त्वात्मादिव्यावृत्त्यर्थम् । एवं च त्वां प्रत्यापादनं युक्तमेव मां प्रति प्रत्यापादनं चानुपपन्नमित्याशङ्क्ते **ज्ञानेति** । **प्रमाणेति** । यज्ज्ञानविरोधि तन्मिथ्येति व्याप्तौ प्रमाणाभावादित्यर्थः । ननु मिथ्याभूते शुक्तिरजतादौ ज्ञानविरोधित्वदर्शनमेव तत्र प्रमाणमित्याशङ्क्ते **दर्शनादिति चेदिति** । अस्तु शुक्तिरजतादौ दर्शनान्मिथ्याभूतस्यापि ज्ञानविरोधित्वम् । ज्ञानध्यानादिना बन्धविषादेर्निवृत्तिप्रतिपादकागमवशेन सत्यस्यापि ज्ञानविरोधित्वाङ्गीकारे न किञ्चिद्बाधकमित्याह **तर्हीति** । ननु दर्शनवशेन ज्ञानविरोधित्वमिथ्यात्वयोर्व्याप्तौ सिद्धायामागमो ज्ञाननिवर्त्यत्वं बन्धादेः प्रतिपादयितुं प्रवृत्तो मिथ्यात्वं विनाऽनुपपद्यमानस्तत्रैव पर्यवस्यतीत्यत आह **न चेति** । एवं च विरोधित्वस्य ज्ञाननिवर्त्यत्वप्रयोजकत्वे मां प्रत्यप्यापादनानुपपत्तेस्तत्परित्यागेन मिथ्यात्वस्यैवोपपादकत्वाभ्युपगमे त्वां प्रत्यपि नीलनिवृत्त्यापादनस्य कर्तुं शक्यत्वान्नीलादेः सत्यत्वेऽभ्युपगन्तव्ये तत्तुल्ययोगक्षेमत्वेन विषस्यापि सत्यत्वात्तत्र व्यतिरेकव्यभिचारस्तदवस्थ इति भावः । यद्वा माऽस्तु तर्हि विषे व्यतिरेकव्यभिचाराद्बन्धमिथ्यात्वस्यानुपपादकत्वम् । मिथ्याभूते नीलद्रव्ये ज्ञाननिवर्त्यत्वाभावेनान्वयव्यभिचारादनुपपादकत्वमेवेत्याह **तर्हीति** । एवं च विषस्यासत्यत्वात्तत्र व्यतिरेकव्यभिचारे परेण परिहृते तस्य ज्ञानान्निवृत्तिमत्त्वेन तत्रान्वयव्यभिचारोक्त्यसंभवान्नीलद्रव्येऽन्वयव्यभिचारोद्भावनाय तत्र मिथ्यात्वं परसिद्धं कर्तुं तथा सतीत्यादिना विषस्य नीलद्रव्यतुल्ययोगक्षेमत्वोपपादनमिति द्रष्टव्यम् । अन्वयव्यभिचारपरिहारायोपपादके विरोधित्वान्तर्भावमाशङ्क्ते **मिथ्याभूतमिति** । माऽस्तु तर्ह्यन्वयव्यभिचारः । तथाऽपि मिथ्याभूतमिति विशेषणेन व्यावर्तनीयस्यात्मनो विरोधित्वेनैव व्यावृत्तेरुपपादके तद्विशेषणवैयर्थ्यं स्यादेवेत्याह **विशेषणेति** । उभयथाऽप्यात्मव्यावृत्तिसंभवे किं विरोधित्वेनैव तद्व्यावृत्तिरित्यत्राग्रहेणेत्यभिप्रायमजानानस्य शङ्कां परिहरति **मिथ्यात्वमिति** । एवं चान्वयव्यतिरेकव्यभिचारपरिहारेऽपि नास्मत्प्रसञ्जितस्य बन्धमिथ्यात्वेऽनुपपादकत्वस्य हानिः । मिथ्यात्वस्यानुपपादकतया विरोधित्वस्यैवोपपादकत्वेन ज्ञानात्सत्यस्यापि बन्धस्य विरोधादेव निवृत्त्युपपत्तेर्ज्ञानाद्बन्धनिवृत्तेरन्यथैवोपपन्नत्वादिति भावः । ननु मिथ्याभूतस्यैव ज्ञानविरोधं सूचयितुं तद्विशेषणम् । एवं च ज्ञानविरोधित्वस्योपपादकत्वोक्तावपि तस्य मिथ्यात्वेन विनाऽनुपपद्यमानतया बन्धमिथ्यात्वस्याप्युपपादकत्वसिद्धेर्नान्यथोपपत्तिरित्याशयेन शङ्क्ते **ज्ञानेति** । **तर्ह्यागमेनेति** । ज्ञानाद्बन्धनिवृत्ति-

प्रतिपादकागमेनेत्यर्थः । ननु दर्शनसिद्धव्याप्तिबलात्सामान्यस्याप्यागमस्य मिथ्यात्वरूपविशेष एव पर्यवसानमित्यत आह **न चेति** ।

**वा०र०**— अपि च सत्यस्याप्यत्राप्यन्यथैवोपपत्तिप्रतिपादनात् पौनरुक्त्यमित्यतः पूर्वपक्षिया प्रकारान्तरेण अन्यथैवोपपत्तिप्रतिपादकत्वान्न दोष इत्याह **एवं सत्यस्यापीति** । **मन्मत इति** । प्रपञ्चसत्यतावादिमत इत्यर्थः । **आपाद्येति** । तर्हि नीलविशिष्टमपि सत्यं निवर्तेतेति आपाद्येत्यर्थः । **त्वदङ्गीकारेणैवेति** । तर्हि मिथ्याभूतं नीलविशिष्टमपि निवर्तेतेति प्रत्यापाद्येत्यर्थः । **प्रत्यापादनेति** । यदि सत्यं निवर्तेत तर्हि सत्यं नीलविशिष्टद्रव्यमपि निवर्तेतेति त्वदीयमापादनं यदि मिथ्याभूतं निवर्तेत तर्हि मिथ्याभूतं नीलविशिष्टद्रव्यमपि निवर्तेतेति प्रत्यापादनेत्यर्थः । अत्र प्रतिकूलमापादनं प्रत्यापादनमिति व्युत्पत्त्या प्रतितर्क एव प्रत्यापादनपदेन गृह्यते । तथा च तर्कस्य प्रतितर्कपराहतिरूपं दूषणमुक्तं भवति । न तु न चैवमेवापादकं प्रत्यापादयितुं शक्यत इति परस्याननुकूलत्वोपपादकपद्धतिरीत्या प्राप्तं प्रत्यापादनमिह विवक्षितम् । तत्र प्रकरणसमदृश्यत्वहेतुवत्स्वपरपक्षसिद्ध्योरनुकूलापादकस्यैव यदापादनाय परेण प्रयोगस्तदभावापादनायापि तं प्रत्येव प्रयोगोपपत्त्या प्रत्यापादनसंभव इति विवक्षितत्वेन प्रकृते च तथात्वाभावादिति ज्ञेयम् । पद्धतिवाक्यार्थस्त्वस्माभिर्निपुणतरमुपपादितोऽस्ति । **सत्यत्वेन ज्ञानविरोधेति** । सत्यत्वाङ्गीकार इति सप्तमी । सत्यत्वपक्ष इति यावत् । **ज्ञानेति** । विरोधे सति ज्ञानं निवर्तकं तदभावे निवर्तकं नेति व्यवस्था वक्तुं न शक्येत्यर्थः । मिथ्याभूतस्यैव ज्ञानविरोधनियमात् यन्मिथ्याभूतं ज्ञानविरोधि तस्यैव ज्ञानं निवर्तकमिति लाभेन तया व्याप्तेश्च सत्यत्वपक्षे असंभवादित्याशयः । **मां प्रतीति** । विरोधपुरस्कारादिति भावः । **न किंचिद्बाधकमिति** । अविशेषादिति भावः । अत आह **न चेतीति** । दर्शनमात्रस्य व्याप्तिनिश्चायकत्वाभावस्य वक्ष्यमाणत्वान्न तथा वक्तुं शक्यमित्याहेत्यर्थः । सहदर्शनमात्रेण न व्याप्तिरिति निराकरणस्य वक्ष्यमाणतायाः प्रागभिधानेनास्य व्याख्यातप्रायत्वात्तथा न व्याख्यातम् । प्रागुक्तविषे व्यभिचारोपपादनाय प्रसक्तानुप्रसक्तं वर्णनमेतावत्पर्यन्तं जातमिति तावतः प्रकृतोपयोगमाह **एवं चेति** । एवं अपि चेत्युक्तविषे व्यतिरेकव्यभिचारोपपादकत्वेनैतद्ग्रन्थप्रवृत्तिमभ्युपेत्य तद्व्याख्यानात्तदनुसारेण तत्पर्यवसानमभिहितम् । इदानीं सत्यं ममेति शङ्कापरिहाराय प्रवृत्तं तर्हि तदेव न ज्ञानेत्यादिग्रन्थं प्रकारान्तरेण योजयति **यद्वा माऽस्त्विति** । **विषे व्यतिरेकेति** । यत्र मिथ्यात्वं न तत्र ज्ञाननिवर्त्यत्वाभाव इति व्यतिरेके विषे यो व्यभिचारस्तत्प्रयुक्तं बन्धमिथ्यात्वस्य यदनुपपादकत्वं प्रागुक्तं तन्मास्त्वित्यर्थः । **अनुपपादकत्वमेवेति** । बन्धमिथ्यात्वस्येति वर्तते । विषस्य मिथ्यात्वे परेणोक्ते सति तत्र व्यभिचारपरित्यागश्चेत् विषस्य नीलविशिष्टद्रव्यतुल्यत्वोपपादनेन सत्यत्वपर्यवसानवर्णनासङ्गतिरित्यतस्तस्यान्यार्थत्वमाह **एवं च विषस्येति** । **अन्वयव्यभिचारोक्तीति** । यन्मिथ्याभूतं तत् ज्ञाननिवर्त्यमिति व्याप्ताविति शेषः । **उपपादनमिति द्रष्टव्यमिति** । अतः सत्यत्वमेव तस्येति पर्यवसानाभावेनासत्यत्वाङ्गीकारेऽपि नासङ्गतिस्तस्येति भावः । **आग्रहेणेत्यभिप्रायमिति** । आग्रहेणेति शङ्कामिति संबन्धः । आगमपदस्य प्राग्विषादिसत्यताप्रतिपादकागमपरत्वेन व्याख्यानादत्रोपयोगानुसारेण व्याचष्टे **ज्ञानाद्बन्धनिवृत्तिप्रतिपादकागमेनेत्यर्थ इति** । अत आह **न चेतीति** । अतो दर्शनमेवाप्रयोजकमिति मूले निहितः कुठार इत्यस्य वक्ष्यमाणत्वादित्याहेत्यर्थः ।

**स०व्र०**— अत्र निवृत्तिः किं विनाश उत बाध इति विकल्प्य द्वितीये वक्ष्याम इत्याशयेन आद्यं दूषयति **अपि चेत्यादिना** । तथाच विषादेर्विनाशेऽपि बाधाभावात् कथं व्यभिचारप्रदर्शनमिति चोद्यानवसर इति ध्येयम् । उपलक्षणमेतत् । सत्यस्यैव रागस्य विषयदोषदर्शनेन सत्यस्यैव दुःखस्य सुहृद्दर्शनेन सत्यस्यैव पापस्य सेतुदर्शनेन निवर्त्यत्वं च द्रष्टव्यम् ।

**विठ्ठ०**— ज्ञाननिवर्त्यत्वस्य च मिथ्यात्वरूपसाध्येन व्यभिचारमप्याह **अपि चेति** । **तदेव न ज्ञानान्निवृत्तमिति** । मिथ्याभूतमेव नीलविशिष्टद्रव्यादिकं भवन्मते न ज्ञानान्निवृत्तमिति मिथ्याभूतस्यापि बन्धस्य आत्मतत्त्वज्ञानात् निवृत्तिर्न स्यादित्यर्थः । न मिथ्याभूतत्वमात्रं ज्ञाननिवर्त्यत्वे प्रयोजकं किन्तु मिथ्यात्वे सति विरोधित्वं प्रयोजकं नीलविशिष्टद्रव्यादेरविरोधित्वान्न निवृत्तिः बन्धस्य तु ज्ञानविरोधित्वाद्भविष्यति निवृत्तिरिति शङ्कते **मिथ्याभूतमिति** । **विशेषणेति** । विरोधितामात्रस्य निवृत्तिप्रयोजकत्वे बाधकाभावेन मिथ्याभूतेति विशेषणवैयर्थ्यादिति भावः । उक्तविशेषणाभावे आत्मनो निवृत्तिः प्रसज्येत अतो विशेषणं सार्थकमित्यत आह **अविरोधादेवेति** । शुक्तिरजतादौ मिथ्यात्वस्यापि दृष्टत्वात् तदपि प्रयोजकमङ्गीक्रियते इत्यतो न मिथ्यात्वमात्रं न ज्ञाननिवर्त्यत्वे प्रयोजकम् इत्युक्तत्वेन विरोधस्याप्यङ्गीकार्यत्वात् तेनैवोपपत्तौ उभयाङ्गीकारोऽयुक्त इति भावेनाह **मिथ्यात्वमङ्गीकृत्यापीति** । मिथ्याभूतत्वस्य ज्ञानविरोधित्वव्यापकत्वेन ज्ञानविरोधोपपादकतया मिथ्याभूतत्वं स्वीकार्यमिति शङ्कते **ज्ञानेति** । **प्रमाणाभावादिति** । यन्मिथ्या तज्ज्ञानविरोधीत्यत्र प्रमाणाभावादित्यर्थः । शुक्तिरजतादौ दृष्टत्वादिति शङ्कते **दर्शनादिति** । तर्हि यत्प्रमाणेन प्रमितं तदङ्गीकार्यमित्यापन्नं ओमिति चेत्तर्हि ज्ञानिनां मोक्षदश्च स इत्यागमसिद्धः सत्यस्यापि बन्धस्य विनाशो न वारयितुं शक्यत इत्याह **तर्हि इति** । किञ्चित्सहचारदर्शनस्य व्याप्त्यप्रयोजकत्वात् अप्रयोजकं च दर्शनमित्याह **न चेति** ।

**चषकः**— अज्ञानं न निवर्त्यं सत्यत्वादित्यस्यानैकान्त्यमप्याह **अपि चेति** । विषस्य सत्यत्वाभाव-निबन्धनस्य सत्यस्य ज्ञाननिवर्त्यत्वाभावस्य ध्यानस्य ज्ञानरूपत्वाभावनिबन्धनस्य च तादृशाभावस्य भेदभिन्न-कल्पद्वयीमभिसन्दधान आद्यं प्रत्याख्याति **विषं नेत्यादिना** ।

**गूढ०**— ननु ज्ञानेन सत्यस्य निवृत्तिः क्वाप्यदर्शनान्मिथ्यात्वमवश्यं वक्तव्यमित्यतस्तत्परिहारत्वेनापि बन्धेति वाक्यं योजयति **अपि चेति** । **तर्हीति** । तथाच मिथ्याभूतस्यापि नीलद्रव्यस्य ज्ञानेन न निवृत्तिरिति न मिथ्यात्वं निवृत्तिप्रयोजकमिति भावः । **विशेषणेति** । विरोधित्वमात्रस्यैव निवृत्तिप्रयोजकत्वसंभवेऽपि मिथ्याभूतमिति विशेषणमनर्थकमित्यर्थः । न चात्मनो निवृत्तिप्रसङ्गवारणाय मिथ्याभूतमिति विशेषणमित्यत आह **विरोधादिति** । ननु मिथ्यात्वमेव निवृत्तिप्रयोजकत्वेन मया स्वीक्रियत इत्यत आह **मिथ्यात्वमिति** । अन्यथा नीलद्रव्यस्यापि ज्ञानेन निवृत्तिः स्यादिति भावः । ननु मिथ्याभूतस्य लोके ज्ञानविरोधित्वदर्शनाद्दर्शनमेव मानमिति शङ्कते **दर्शनादिति चेदिति** । भवतु ज्ञानविरोधित्वमिति शेषः । नन्वेतल्लोके न दृष्टमित्यत आह **न चेति** । तन्मात्रस्य व्यभिचारादिति भावः ।





**२१० सु०— ध्यानं मानसी क्रिया न ज्ञानमिति चेन्न । यदि क्रिया परिस्पन्दः स तर्हि अतीन्द्रियाश्रितः अतीन्द्रिय इत्यपरोक्षावभासविरोधो रूपरहितत्वेन तदवभासविरोधश्च । यदि च मानसी सृष्टिरिति मतम् । अनुमतमेतत् । श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमित्यङ्गीकारात् । अतीन्द्रियोपादानकस्यापि द्रव्यस्य ऐन्द्रियकत्वं त्र्यणुकादेरिवोपपद्यते । नीरूपाद्वायो रूपवतस्तेजसो जन्म वेदान्तिनां प्रसिद्धमेव । तार्किकादींस्तु आरम्भवादनिराकरणेन तोषयिष्यामः । एवं च ध्यायतेश्चिन्तार्थताऽपि स्मृतिसिद्धा सिद्धा । अत एव क्रियामानसवदिति सूत्रविरोधोऽपि परिहृतः ।**

**बिन्दुः**— ननु मनसो मध्यमपरिमाणं स्वीक्रियते न तु तार्किकादिवदणुत्वं तत्कथं तत्क्रियाया अपरोक्षावभासविरोध इत्यत आह **रूपरहितत्वेनेति** । महत्त्ववादिभिरपि मनसो नीरूपत्वाङ्गीकारादिति भावः । ननु तर्ह्यस्तु रूपवत्त्वमपि मनसि इत्यत आह **रूपरहितत्वेनेति** । मनः यदि रूपवत्स्यात् घटादिवद्बहिरिन्द्रियप्रत्यक्षं स्यादिति तर्कितप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिसत्त्वोपलब्धिरूपायाः योग्यानुपलब्धेः सत्त्वेन यथा वायू रूपरहितत्वेनैव प्रत्यक्षेण गृह्यत इति न तत्र रूपं एवमिहापि रूपरहितत्वेनैव मनसोऽवभासात् तद्विरोधेन न रूपाङ्गीकारः संभवतीति भावः । ननु रूपवत्त्वं बहिरिन्द्रियप्रत्यक्षतायां प्रयोजकं न त्वन्तरिन्द्रियप्रत्यक्षत्वेऽपि, तथात्वे आत्मप्रत्यक्षमपि न स्यात् । तत्कथमेवमुच्यत इति चेत् । न । भावानवबोधात् । तथाहि । मानसः परिस्पन्द एव ध्यानमिति वदतापि सुवर्णपक्षत्वाद्याकारविशेषसंपन्नो गरुडः किं तद्विषय इति उच्यते । आहोस्वित्तदात्मको वा । नाद्य इत्याह **रूपरहितत्वेनेति** । मानसपरिस्पन्दरूपस्य ध्यानस्य कर्मविशेषत्वात् सविषयताप्रयोजकज्ञानत्वादिरूपधर्मशून्यत्वेन गरुडमूर्त्यवभासो विरुद्धश्चेतेति भावः । द्वितीयेऽप्याह **रूपरहितत्वेनेति** । परिस्पन्दस्य संस्थानविशेषरूपधर्मरहितत्वेन संस्थानविशेषावभासो न स्यात् । न च तत्र वास्तवसंस्थानाभावेऽपि कल्पितस्य तादृशरूपस्यावभासोऽयमस्त्विति वाच्यम् । तथात्वे ध्यानं मानसक्रियेत्याग्रहो व्यर्थः । हस्तक्रिया वा वायुक्रिया वा हृदयस्थनाडीविशेषो वा आकाशो वेत्यत्र नियामकाभावेन विनिगन्तुमशक्यत्वात् । कल्पितसंस्थानस्य तत्रापि सुवचत्वादिति भावः । किं चैवं सति ध्येयस्य गरुडसंस्थानरूपस्य मानसक्रियारूपत्वेऽपि ध्यानस्य किमायातम् । ध्यानं तु तदतिरिक्तं ज्ञानादिकमेव स्वीकर्तव्यमिति घट्टकुट्यां प्रभातः । न च तदपि तन्मात्रमेवेति वाच्यम् । कर्मणः सविषयताप्रयोजकरूपरहितत्वेन तदवभासायोगस्योक्तत्वात् । किमुत सविषयत्वाभावेनेत्याशयवानाह **रूपरहितत्वेनेति** । सविषयतायां प्रयोजकं यद्रूपं साक्षित्वादि तद्रहितत्वेन मानसक्रियायाः संस्थानविशेषरूपस्य गरुडमूर्तिविशेषस्य





जायमानो योऽवभासस्तद्विरोधः स्यादित्यर्थः । स्यादेतत् । यदि तादृशरूपोपेत एव मूर्तिविशेषो ध्याने भासेत । न चैवम् । किन्तु निराकारमेव किञ्चिदवभासत इत्यतश्चाह **रूपरहितत्वेनेति** । आकारशून्यत्वेन यस्तदवभासः तत्र अनुभवविरोध इत्यर्थः । सिद्धान्तपक्षे तु आकारविशेषोपेत एव ध्येयः पदार्थः तदवभासश्च गत्यन्तरप्रत्यक्षरूप इत्यादि सर्वमुपपन्नमित्याह **यदि चेत्यादिना** । **क्रियामानसवदिति** । धात्वर्थः क्रियेत्युच्यते मानसज्ञानं च तादृशमेवेति भावः ।

**परि०**— नन्वस्तु नाम परीत्या विषं सत्यम् । न तस्य ज्ञाननिवर्त्यत्वम् । ध्यानस्य ज्ञानरूपत्वाभावादिति शङ्कते **ध्यानमिति** । मानसक्रियेति कोऽर्थः । क्रियापदेन मनोनिष्ठः परिस्पन्द एव भाति नातोऽन्यत्किञ्चिदस्तीत्यभिप्रायः । उत मनःपरिणामविशेषस्य मानसावभासो **ध्यानमिति** । आद्ये आह **यदीति** । स्वमते साक्षिवेद्यत्वेऽपि न्यायमतावष्टम्भेनाह **स तर्ह्यतीन्द्रियेति** । साक्षिवेद्यत्वपक्षेऽप्याह **रूपेति** । रूपमाकृतिः । परिस्पन्दस्यामूर्तत्वेन करचरणाद्यवयवोपेतगरुडाकृत्यवभासविरोध इत्यर्थः । द्वितीयपक्षे त्वाह **यदि चेति** । नन्वेवं संस्कारोपादानकत्वे गरुडाकृतेरतीन्द्रियत्वापत्तिरित्यत आह **अतीन्द्रियेति** । **वेदान्तिनामिति** । 'आकाशाद्वायुर्वायोरग्निरग्नेराप' इत्याद्युपनिषद्वाक्यं विचारयतामित्यर्थः । **आरम्भवादेति** । वैशेषिकाधिकरणे आरम्भवादनिरासे सति तैरप्येवमेवोपेयं भविष्यतीति भावः । **स्मृतीति** । ध्यै चिन्तायामिति व्याकरणस्मृतिसिद्धा चिन्तार्थता सिद्धेत्यर्थः । चिती संज्ञान इति धातोरिति भावः । **क्रियेति** । 'पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवदि'त्युपासनापादीयब्रह्मसूत्रविरोधोऽपि प्रत्युक्तः । तत्रापि मानसक्रियापदेनोक्तदिशा मानससृष्टेरेवाभिमतत्वादित्यर्थः । नन्वेवं ध्यानस्य ज्ञानरूपत्वे ध्यायीतेति ध्यानविध्ययोग इति शङ्कते **विधिजन्येति** । लिङादिज्ञानजन्येत्यर्थः । **विधेरिति** । ध्यायीतेत्यादिलिङादिप्रत्ययस्येत्यर्थः । **इच्छाप्रयत्नयोरिति** । ध्यायीतेत्यादिलिङादिप्रत्ययादिना ध्यानस्य पुमर्थसाधनत्वावगतौ सत्यां तदनन्तरं ध्यानं मेऽस्त्वितीच्छया तत्साधनगोचरप्रयत्नेन च प्रागनुभूतवस्तुगोचरसंस्कारोद्बोधे सति तत्परिणामरूपस्य वस्तुनो मनसावलोकनस्य ध्यानत्वेन विधेर्वा विधिजन्यप्रयत्नेच्छयोर्वा ध्यानेऽनुपयोगेन ध्यानस्य ज्ञानत्वेऽपि ध्यानविध्यनुपपत्तिर्नेति भावः । एतच्चाभ्युपेत्योक्तमिति ज्ञेयम् । न्यायामृते तृतीयपरिच्छेदे ज्ञानविधेरपि समर्थनात् । **मानसेति** । वस्तुनोऽवलोकनस्य च द्वयोरपि विशेषणम् । मानसं संस्कारद्वारा मनःपरिणामरूपं यद्वस्तु तस्य मानसं मनोजन्यं यदवलोकनं तत्रेत्यर्थः । एतेन ध्यानं स्मृतिरूपमेवेति वदन्तो निरस्ताः । स्मृतिचिह्नतत्तोल्लेखाभावात् । मानसवासनापरिणततया सन्निकृष्टवस्तुविषयकत्वात् । संस्कारस्य वस्तुपरिणाम एवोपक्षीणत्वेन मानसावलोकनस्य संस्काराजन्यत्वाच्चेति । **तदुपयोग इति** । प्रयत्नस्योपयोग इत्यर्थः ।

**गु०दी०**— ध्यानं ज्ञानमेव न भवतीति वदन्तं प्रत्यपरोक्षावभासाभावाद्यापादनस्येष्टापादनत्वमिति चेत्, सत्यम् । अयमभिसन्धिः टीकाकारस्य । अस्ति तावद्ध्याने काचिद्ध्येयप्रतिमा । ''मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता'' इति वचनात् । अस्ति च तस्याः रूपं ''हरिन्मणिनिभं'' ''हरितोपलाभं'' इत्यादिवचनात् । अस्ति च तदुभयावलोकनरूपं ज्ञानम् । ''ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठत'' इति स्मृतेः । अन्यथा साक्ष्यनुभवविरोधः । हस्तपरिस्पन्दमात्रेणेव मनःपरिस्पन्दमात्रेण गरुडप्रसादानुपपत्तिश्च । एवं च मानसपरिस्पन्दक्रियैव ध्यानमिति वदताऽपि क्रियैव नानारूपवती प्रतिमा तदवलोकनं च क्रियायाः अनिन्द्रियात्मकत्वान्मनसैवेति वक्तव्यम् । तच्च अनुपपन्नमिति भावेनाह **स तर्ह्यतीन्द्रियाश्रित** इत्यादिना ।

**यादु०**— द्वितीयमाशङ्क्य निषेधति **ध्यानं मानसीति** । **अपरोक्षज्ञानत्वावभासेति** । ध्यानेऽपरोक्षत्वावगाह्यनुभवविरोध इत्यर्थः । **रूपरहितत्वेनेति** । रूपशब्दोऽत्र स्वं रूपं शब्दस्येत्यत्रेव विषयवचनः । तथाच परिस्पन्दस्य विषयशून्यत्वेन ध्याने सविषयकत्वावभासविरोध इत्यर्थः । वस्तुतस्तु ध्येयगरुडादेरपि परिस्पन्दात्मकताया अत्राभिप्रेतत्वात्तस्यापरोक्षत्वावभासविरोधः । ध्येयस्य हि मानसापरोक्षत्वमनुभवसिद्धम् । न चातीन्द्रियपरिस्पन्दात्मकस्य तस्य तत्संभवति । तथा तत्र स्वर्णादिरूपविशेषावभासविरोधः । परिस्पन्दस्यारूपत्वादित्यर्थः । अत एवानुपदं सिद्धान्ते ध्येयस्यैवैन्द्रियकत्वं रूपवत्त्वं च समर्थ्यते । ननु वासनाया अतीन्द्रियत्वात्तदुपादानकध्येयवस्तुनोऽप्यतीन्द्रियत्वापत्त्याऽपरोक्षावभासविरोधो भवत्पक्षेऽपि समान इत्यत आह **अतीन्द्रियेति** । ननु वासनाया नीरूपत्वेन ततो रूपजन्मासंभवे ध्येये रूपावभासविरोधोऽविशिष्ट इत्यत आह **नीरूपादिति** । **एवं चेति** । ध्यानस्य ज्ञानरूपत्व इत्यर्थः । **स्मृतिसिद्धेति** । ध्यै चिन्तायामिति पाणिनिवचनसिद्धेत्यर्थः । नन्वेवं ध्यानस्य क्रियामानसवदिति मानसक्रियात्वोक्तिविरोध इत्यत आह **अत एवेति** । धात्वर्थत्वादेवेत्यर्थः । सूत्रे क्रियाशब्देन धात्वर्थक्रियैव विवक्षिता न परिस्पन्द इति भावः । यद्वा ध्यानस्योक्तरीत्या मानससृष्टिरूपत्वादेवेत्यर्थः । तथाच सूत्रे क्रियापदं कार्यपरमिति भावः । ननु ध्यानमात्मानमुपासीतेत्यादिविधिजन्यपुरुषेच्छाप्रयत्नजन्यमुपलब्धम् ।

**वं०प०**— **अतीन्द्रियाश्रित इति** । मनसोऽतीन्द्रियत्वेन तन्निष्ठपरिस्पन्दस्याप्यतीन्द्रियत्वादित्यर्थः । ननु वायोस्तेजसो जन्म तार्किकासंमतं तत्परमाणुभ्य एव तज्जन्माङ्गीकारादित्यत आह **तार्किकादीस्त्विति** ।

**कं०रा०**— गरुडध्यानेन सत्यस्य विषस्य निवृत्तावपि ध्यानस्य मानसक्रियात्वेन ज्ञानत्वाभावान्मिथ्याभूतमेव ज्ञाननिवर्त्यं न सत्यमिति व्याप्तौ न व्यभिचार इत्याशयेन शङ्कते **ध्यानमिति** । **रूपेति** । रूप्यते निरूप्यतेऽनेनेति रूपं विषयस्तद्रहितत्वान्मानसपरिस्पन्दस्य तस्य ध्यानत्वे गरुडं ध्यायामीति विषयावभासविरोधश्चेत्यर्थः । ननु वासनामयस्य वस्तुनो मनसावलोकनं ध्यानमित्येतन्न युक्तम् । वासनाया अतीन्द्रियतया तदुपादानकवस्तुनोऽप्यतीन्द्रियत्वावश्यंभावेन मनसावलोकनस्यैवानुपपत्तेरित्यत आह **अतीन्द्रियेति** । ननु प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तमित्यधिकरणे अविच्छिन्नपरोक्षज्ञानसन्ततिर्हि ध्यानमिति तत्त्वप्रकाशिकायां ध्यानस्य परोक्षज्ञानत्वमुक्तम् । अत्र च मनसावलोकनं ध्यानमिति मानसप्रत्यक्षत्वमुच्यते । अतोऽन्योन्यविरोध इति चेन्नैवम् ।





ईश्वरप्रतिमास्थानीये वासनामयवस्तुनि यदीश्वरानुसन्धानं तस्य परोक्षतया तदभिप्रायेण प्रवृत्तस्य तत्त्वप्रकाशिकावाक्यस्येश्वराधिष्ठानभूतवासनामयवस्त्ववलोकनस्य मानसप्रत्यक्षत्वाभिप्रायेण प्रवृत्तस्यात्रत्यवाक्यस्य च विरोधाभावादिति । ननु वासनामयवस्तुनो रूपावभासबलेन सरूपत्वान्नीरूपवासनातो जनिर्न संभवतीत्यत आह **नीरूपादिति** । **प्रसिद्धमिति** । वायोरग्निरिति श्रुतेरिति भावः । कारणगुणा हि कार्यगुणानारम्भत इति न्यायेन कारणनिष्ठगुणानामेव कार्यगतगुणारम्भकत्वान्नीरूपवासनोपादानके वासनामयवस्तुनि रूपं न संभवतीति तार्किकाद्याशङ्कायामाह **तार्किकादीनिति** । **एवं चेति** । **एवं सति** मानसावलोकनस्य ध्यानरूपत्वे सति ध्यै चिन्तायामिति स्मृतिसिद्धा ध्यायतेश्चिन्तार्थताऽपि सिद्धा । चिन्ताया मानसावलोकनात्मकत्वात् । ध्यानस्य मानसपरिस्पन्दत्वे तु सा न स्यादिति भावः । **अत एव** ध्यानस्य मानसावलोकनरूपक्रियात्वाङ्गीकारादेव तस्य मानसक्रियात्वप्रतिपादकेन क्रियामानसवदिति सूत्रखण्डेन विरोधः परिहृतः । न हि क्रियामानसवदित्यत्र ध्यानस्य मानसपरिस्पन्दरूपत्वमुच्यते । येन ध्यानस्य ज्ञानरूपत्वाङ्गीकारे तद्विरोधः स्यात् । किं नाम मानसक्रियात्वसामान्यम् । तच्च ध्यानस्य मानसावलोकनरूपत्वेऽप्युपपन्नमिति भावः ।

**श्रीनिधि०— रूपरहितत्वेनेति** । मनसो रूपरहितत्वेन चापरोक्षावभासविरोधः । उद्भूतरूपसमानाधिकरणपरिस्पन्दस्यैव अपरोक्षत्वनियमादिति भावः । न चेष्टापत्तिः । ध्यायामीति तस्यापरोक्षेणावभासात् । अथवा रूप्यत इति रूप्यमाकारः तद्रहितत्वेन विषयाकाररहितत्वेन तस्य विषयाकारस्यावभासविरोधश्चेत्यर्थः । संस्कारस्यातीन्द्रियत्वात् नीरूपत्वाच्च तज्जन्यस्य वस्तुनो न प्रत्यक्षत्वम् । रूपवज्जनकत्वाभावश्चेति शङ्कां क्रमेण निराह **अतीन्द्रियोपादानस्येत्यादिना** । **स्मृतिसिद्धेति** । चिन्तायामिति धातुपाठरूपस्मृतिसिद्धेत्यर्थः । **अत एवेति** । क्रियामानसवदित्यत्र व्याख्यानेन ध्यानस्य ज्ञानरूपत्वंसिद्धेर्मानसी दृष्टिरिति अर्थसंभवादेव ध्यानमेव तत्रापि विवक्षितमिति भावः । ननु ध्यानं न ज्ञानं तस्य निदिध्यासितव्य इत्यादौ विहितत्वात् । न च ज्ञानस्य विधिः संभवति ।

**वा०चं०—** तृतीयं शङ्कते **ध्यानमिति** । चेतोवृत्त्यन्तरं ध्यानमिति वदतः परस्य मते ध्यानस्य परिस्पन्दत्वाभावेऽपि क्रियाशब्दार्थतया प्रसिद्धिमात्रेण प्रथमः कल्पः । अत एव पूर्वं परिस्पन्द इत्युक्त्वा सृष्टिरित्यतःपरं मतमित्युक्तमिति भावः । ध्यानदशायां रूपवद्वस्तुविषयकापरोक्षावभासोऽस्तीत्येतत्तु सर्वानुभवसिद्धम् । तस्य च विषयान्तरशून्यत्वाद्ध्यानविषयत्वमेव वाच्यम् । एवं च क्रियायाः परिस्पन्दरूपत्वेऽतीन्द्रियाश्रितक्रियाया अतीन्द्रियत्वनियमान्मनसश्च नैयायिकादिमतेऽतीन्द्रियत्वात् तदाश्रितपरिस्पन्दस्य चातीन्द्रियत्वेन रूपरहितत्वेन च तद्विषयकापरोक्षावभासानुपपत्ती रूपावभासानुपपत्तिश्चेत्याह **तर्हीति** । यद्वा गरुडं ध्यायामीति ध्यानविषयकापरोक्षावभाससत्त्वेन ध्यानस्य परिस्पन्दत्वे तस्योक्तदिशाऽतीन्द्रियत्वात्तद्विषयकापरोक्षावभासानुपपत्तिः परिस्पन्दस्य निर्विषयत्वेन ध्याने विषयावभासानुपपत्तिर्ध्यानविषये प्रसिद्धरूपावभासानुपपत्तिश्चेत्याह **तर्हीति** । श्रवणदर्शनादीत्यनुमितिभ्रमादीनां सङ्ग्रहः । नन्वत्र मनसाऽवलोकनस्य ध्यानत्वोक्त्या तस्यापरोक्षज्ञानत्वमुक्तं स्यात् । तथा च

परोक्षज्ञानसन्ततिर्ध्यानमिति तत्त्वप्रकाशिकाविरोध इति चेन्न । तत्रेश्वरस्यैव प्रकृतत्वेन तस्य च परोक्षत्वाच्छ्रवणरूपतत्परोक्षानुभवजन्यत्वाद्वासनायास्तन्मयविषयकतन्मानसानुभवेऽपरोक्षेऽपि परोक्षत्वोक्तेरुपचरितत्वात् । न चाखण्डस्मृतेर्ध्यानत्वोक्तिविरोधस्तथाऽपि स्यादिति वाच्यम् । अनुभवजन्यवासनामयविषयत्वेन तदुक्तेरप्युपचरितत्वादिति भावः । नन्वतीन्द्रियाश्रितपरिस्पन्दस्येवातीन्द्रियोपादानकद्रव्यस्याप्यतीन्द्रियत्वनियमात् । वासनाया अतीन्द्रियत्वेन तन्मयत्वाङ्गीकारेऽप्यपरोक्षावभासविरोधस्तदवस्थ एवेत्यत आह **अतीन्द्रियेति** । नन्वेवमपि वासनाया नीरूपत्वेन तदुपादानकवस्तुनो नीरूपत्वाद्रूपावभासविरोधस्तदवस्थ एवेत्यतो नैतद्वेदान्तिभिश्चोदनीयमित्याह **नीरूपादिति** । ननु न वायोस्तेजसो जन्म किन्तु नित्यतैजसपरमाणुभ्यो द्व्यणुकादीनाम् । ततश्च कारणरूपात्कार्यरूपमिति वदद्भिर्नैय्यायिकै रूपावभासविरोधश्चोदयितुं शक्यत एवेत्यत आह **तार्किकादीस्त्विति** । एवं च ध्यै चिन्तायामिति धातुसूत्रं न परमत इव स्वस्य प्रतिकूलमित्याह **एवं चेति** । ननु तथाऽपि क्रियामानसवदिति सूत्रं प्रतिकूलमेवेत्यतः क्रियाशब्दस्य कार्यपरत्वान्न तद्विरोधोऽपीत्याह **अत एवेति** ।

**वा०र०— तृतीयमिति** । ध्यानस्य ज्ञानत्वाभावात् ध्याननिवर्त्यविषादेर्ज्ञाननिवर्त्यत्वाप्राप्तेः सत्यस्यापि ज्ञानान्निवृत्तिरित्यत्र विप्रतिपत्तिरित्येतत्तृतीयमित्यर्थः । मूले **मानसी क्रियेति** । कथं तर्हि नामादिषु ब्रह्माध्यास इत्याद्याशङ्क्य सत्यमत एव नोदनावशादिच्छातोऽनुष्ठेयत्वान्मानसीक्रियैषा । न ज्ञानमिति पञ्चपादिकानुसारेण ध्यानेऽपीयं शङ्का विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव सर्वत्र ज्ञानस्य पुष्कलकारणमनिच्छतोऽप्यनिष्टज्ञानदर्शनात् अतो विधानान् मानसी क्रियेति भावो विवरणे । ध्यानमिति प्रतीकोपादानानन्तरं यदीतीति प्रतीकोपादानपाठः । तदनन्तरं चेतोवृत्त्यन्तरमित्यादिग्रन्थः । **इति वदतः परस्येति** । पूर्वोक्तरीत्या समानन्यायेनोक्तिस्तु स्पष्टैव । ध्यानासाधारण्योक्तिर्लेख्यास्ति । **पूर्वमिति** । पूर्वविकल्प इत्यर्थः । **इत्युक्त्वेति** । इत्येवोक्त्वेत्यर्थः । न तु मतमित्यधिकमुक्तमिति भावः । **अतःपरमिति** । उत्तरकल्प इति शेषः । अपरोक्षावभासेत्यादेर्दुर्घटत्वाद्योजयति **ध्यानदशायामिति** । तस्य च विषयान्तरेत्येतदुपपादयितुं ध्यानदशायामित्युक्तम् । अपरोक्षावभाससत्त्वेऽनुभवं प्रमाणीकुर्वता स एव नास्तीति वक्तुमशक्यमिति सूचितम् । **तस्य चेति** । अपरोक्षावभासस्येत्यर्थः । ध्यानकाले जायमानापरोक्षावभासस्य विषयान्तरं न वक्तुं शक्यम् । क्लृप्तत्यागेनान्यकल्पनायोगात् । ततो ध्यानविषयक एवायमवभास इति वाच्यमित्यर्थः । **अतीन्द्रियत्वनियमादिति** । परमाण्वादिक्रियायां तथा दर्शनादिति भावः । **तद्विषयकापरोक्षेति** । ध्यानत्वेनाभिमतं यत्तद्विषयकसाक्षात्कारस्य परिस्पन्द एव ध्यानमित्यङ्गीकारेऽनुपपत्तिरेका तत्साक्षात्कारे रूपावभासानुपपत्तिश्चापरेति मिलित्वा रूपवद्वस्तुविषयकापरोक्षावभासानुपपत्त्याख्यमेकं दूषणत्वेन फलितं भवतीत्याशयः । ध्यानकालीनरूपवद्वस्तुविषयकापरोक्षावभासस्यानुभवसिद्धत्वादनुभवसिद्धोक्तावभासविषयतया ध्यानमेव वाच्यमित्येतत्सिद्धं कृत्वा दूषणमुपपादनीयमित्यपरितोषादुपपादननिरपेक्षस्पष्टध्यानविषयकसाक्षात्कारं प्रदर्श्य तदनुपपत्त्यादिप्रतिपादनपरतया योजयति **यद्वेति** । **अवभाससत्त्वेनेति** । ध्यानविषयकापरोक्षावभासस्यानुभवसिद्धत्वादित्यर्थः । **तस्येति** । ध्यानस्येत्यर्थः । **उक्तदिशेति** । अतीन्द्रियाश्रितोऽतीन्द्रिय इत्युक्तरीत्येत्यर्थः । **तद्विषयकेति** । परिस्पन्दस्यातीन्द्रियत्वेनापरोक्षावभासविषयत्वायोग्यत्वात् तद्विषयकापरो-





क्षावभासायोग इत्यर्थः । रूपरहितत्वेनेत्येतत्प्रागुक्तप्रकारं परित्यज्य प्रकारान्तरेण योजयति **परिस्पन्दस्येति** । न च गत्यादिक्रियाया अपि सविषयत्वात्कथं निर्विषयत्वमिति वाच्यम् । ग्रामादेर्गम्यत्वेऽपि ज्ञेयत्वाभावेनात्र च ज्ञेयत्वस्य विवक्षणादिति ज्ञेयम् । सर्वव्यावृत्तये यस्मात्स्वशब्दोऽयं प्रयुज्यत इत्येतद्व्याख्यावसरे रूपशब्दो हि वस्तुपर्याय इति तत्त्वनिर्णयटीकोक्तेरवगाह्यानवगाह्यरूपामिति गीताभाष्यटीकायां रूपशब्दोऽभिधेयार्थः । स्वं रूपं शब्दस्येत्यत्र रूपशब्देनेत्याद्युक्तेरानन्दमयाधिकरणीयमूलेऽपि तथैव प्रतिपादनाद्रूपशब्दस्य वस्तुमात्रपरत्वपक्षेऽवभासपद-समभिव्याहारेणावभासत्वनिर्वाहकविषय एव पर्यवसानाद्विषयपर्यायत्वाद्वस्तुशब्दस्य साक्षादेव वस्त्वभिधायिना रूपशब्देन विषयाभिधानाद्वाऽभिधेयार्थत्वेऽप्यर्थपर्यायाभिधेयस्य ज्ञानार्थयोः सन्निकर्ष इत्यादिव्यवहारानुसारेण अर्थरूपविषये पर्यवसानादत्रत्यरूपशब्दस्य विषयार्थकतामाश्रित्य विषयरहितत्वलाभ इत्याशयेन रूपरहितत्वेने-त्येतन्निर्विषयत्वेनेति योजितमिति ज्ञेयम् । **ध्याने** ध्यानत्वेन प्रतीतिसिद्धे । रूपरहितत्वेनेति वाक्यं प्रकारान्तरेण योजयति **ध्यानविषय इति** । ध्याने रूपावभासाभावात्तद्विषय इति शेषः पूरितः । **प्रसिद्धरूपेति** । नील-पीतादिरूपेत्यर्थः । अत्र ध्यानदशाकालीनगरुडं ध्यायामीत्यनुभवेन ध्यानविषयकापरोक्षावभासस्तावत्सिद्धः । तस्मिंश्चावभासेऽवभास्यमानतया वाच्यं ध्यानं यदि परिस्पन्दस्तर्हि तस्यातीन्द्रियत्वेनापरोक्षानुभवायोग्यतया तद्विषयकापरोक्षानुभवानुपपत्तिरिति प्रथमवाक्यार्थः सम एव । द्वितीयवाक्य एवोक्तानुभवेन ध्याने विषयावभास-विषयीकरणात् परिस्पन्दे च विषयाभावात् सविषयकत्वावभासायोगः । ध्यानविषयरूपावभासस्याप्यनुभवसिद्धत्वात् परिस्पन्दत्वे तस्य निर्विषयतया तत्र रूपावभासानुपपत्तिरिति पूर्वयोजनातो भेदेन योजनमिति ज्ञेयम् । **दर्शनादीति** । दर्शनादीत्यादिपदेनेत्यर्थः । ननु यदि मानसी सृष्टिरिति मतम् । अनुमतमेतदित्युक्ताश्रवणदर्शनादीत्यादिना स्वाभिमतं ध्यानस्वरूपं निरूपितम् । तदसङ्गतम् । मानसी क्रियेत्यस्य मानसी सृष्टिरित्यर्थे उक्ते मानसवासनामयपदार्थानां मनसावलोकनं ध्यानमित्यङ्गीकारादित्यनेन कथमनुमतिप्रतिपादनम् । न हि परेणावलोकनं क्रियात्वेनाङ्गीकृतम् । न वा मनोजन्या सृष्टिः पदार्थानां मनसा सर्जनं तावन्मात्रं सिद्धान्तिनाऽङ्गीकृतमिति चेत्सत्यम् । अत्रेदं तात्पर्यं मूलकारस्य । स्वाप्नमनोरथवदर्थज्ञानात्मकं हि ध्यानं सिद्धान्ते । तत्र मानसपदार्थसर्जनमात्रे परेणोक्ते मानस-वासनाजन्यपदार्थानां मनसावलोकनमङ्गीकुर्वद्भिर्मनसा सृष्टपदार्थाङ्गीकारेण मनसा पदार्थसर्जनस्य परोक्तस्य अस्मदभिप्रेतध्यानैकदेशत्वेन तदनुमतत्वोक्तिः सङ्गतेति । **तत्त्वप्रकाशिकेति** । प्रज्ञान्तरपृथक्त्ववदिति सूत्रीया-विच्छिन्नपरोक्षज्ञानसन्ततिर्हीत्यस्योपयुक्तानुवादोऽयम् । **तत्रेति** । तत्त्वप्रकाशिकायामित्यर्थः । तत्र मानसा-नुभवेऽपरोक्षेऽपि परोक्षत्वोक्तेरुपचरितत्वादिति संबन्धः । उपचारनिमित्तमुक्तम् **ईश्वरस्यैवेत्यादि** । एतच्च श्रवणा-दीति मूलोक्तमानसानुभवविशेषेणोपपादनम् । ज्ञातः परमाणुरित्यत्रेवोपनीतभानतयोपनायकज्ञानस्य परोक्षतया परोक्षत्वव्यवहारः । न तु परोक्षत्वमेव ध्यानस्येति भावः । **ध्यानत्वोक्तीति** । अखण्डा ध्यानमुच्यत इति तन्त्रसारसंग्रहोक्तीत्यर्थः । मनसावलोकनस्यानुभवतया स्मृतित्वायोगादिति भावः । **तदुक्तेरपीति** । स्मृतिर्हि संस्कारजन्या ध्यानत्वेनोक्ता । ध्यानमप्यनुभवरूपं यद्यपि तथापि तत्र स्मरणत्वोक्तिः स्मरणासाधारण-संस्कारप्रभववस्तुविषयतया संस्कारसापेक्षत्वेनोपचरितेति भावः । **तन्मयत्वाङ्गीकारेऽपीति** । चिन्मयमित्यादाविव मयडुपपत्तिर्ज्ञेया । वासनामयत्वाङ्गीकारेऽपीत्यर्थः । तदुपपादनं **वासनाया इति** । **तदवस्थ इति** । ध्यानस्य





परिस्पन्दत्वेऽतीन्द्रियतयाऽपरोक्षावभासानुपपत्तिरूपं दूषणं यत्प्रागुक्तं तद्ध्यानस्य मानसावलोकनरूपत्वेऽपि समानम्। ध्यानविषयस्य मानसत्वेनातीन्द्रियतया तद्विषयकापरोक्षावभासरूपध्यानानुपपत्तेः। ध्यानस्य चापरोक्षावभासतयाऽनुभवसिद्धत्वादित्येवं प्रागुक्तदूषणस्यात्रापि प्राप्तिरस्तीत्येवाभिप्रेतं तादवस्थ्यम्। न तु प्रागुपपादितरीत्यैवापरोक्षावभासानुपपत्तिरायातीत्यभिप्रेतमिति न दोषः। अत्र पक्षे निर्विषयतया विषयावभासानुपपत्तिरिति दूषणस्याप्रसक्तेस्तद्विषये रूपावभासानुपपत्तिरेव दूषणत्वेनायातीति तत्तादवस्थ्यशङ्कैव मूले निराकृतेत्याशयेन तदनुपपत्तिमाशङ्क्य तन्निरासपरत्वेनोत्तरवाक्यमवतारयति **नन्वेवमपीति**। पूर्वत्र विषयाभावादेव तत्र रूपावभासानुपपत्तिरित्यभिप्रेतम्। इह तु विषये विद्यमानेऽपि नीरूपोपादानकतया रूपायोगात् तदवभासानुपपत्तिरिति। तथा चोक्तानुपपत्तिसाम्यमात्रेण तादवस्थ्यमुक्तम्। उपपादनं तु भिन्नमेवेति न दोषः। **आरम्भवादनिराकरणेनेति** मूलम्। वैशेषिकपरीक्षायां कारणस्य गुणास्तेनेत्यनुव्याख्यानव्याख्यानावसर इत्यर्थः। तोषश्च तद्युक्तिनिराकरणेन समाधानम्। **प्रतिकूलमेवेति**। पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवदिति सूत्रीयभाष्ये ध्यानस्य मानसक्रियात्वाभिधानादिति भावः। **क्रियाशब्दस्येति**। अनेनात एवेत्यस्य क्रियाशब्दस्य कार्यपरत्वादेवेति व्याख्येयमिति सूचयति।

सं०व्र०— **अतीन्द्रियाश्रित इति**। यद्यपि वाय्वादिगतस्पर्शादेरैन्द्रियकत्वेनातीन्द्रियाश्रितस्यातीन्द्रियत्वनियमो नास्ति। तथापि तदाश्रितपरिस्पन्दस्य तन्नियम एवेति न व्यभिचारः। ननु तत्त्ववादिमते मनसः साक्षिविषयत्वेनैन्द्रियकत्वात् मायिमते च मनसोऽहमर्थत्वेन तस्य चापरोक्षत्वादुभयरीत्यापि हेतोरसिद्धिरिति चेन्न। तार्किकस्याप्यत्र प्रतिवादित्वेन तन्मतानुसारेणैवमुक्तेर्युक्तत्वात्। अयं भावः। ध्यानस्यापरोक्षत्वमवभासत्वं चानुभवसिद्धम्। तच्चातीन्द्रियाश्रितपरिस्पन्दस्यैव ध्यानशब्दार्थत्वे न संभवति। अतीन्द्रियत्वेनापरोक्षत्वासंभवात्। परिस्पन्दत्वेनावभासत्वस्य चासंभवादिति। **रूपरहितत्वेनेति**। परिस्पन्दस्य शुक्लादिरूपरहितत्वात् ध्याने तदवभासविरोधश्चेत्यर्थः। यद्वा गरुडं ध्यायामीति ध्यानविषयत्वापरोक्षावभास इति पूर्ववाक्यार्थः। रूपरहितत्वेनेत्यस्य तु ध्यानस्य परिस्पंदत्वेन तस्य च निर्विषयत्वेन ध्याने विषयावभासो न स्यात् इत्यर्थः। न च रूपशब्दस्य विषयपरत्वाभावः। स्वं रूपमित्यत्र विषयपरत्वस्य परैरभ्युपगतत्वात्। रूप्यत इति रूपमिति योगसंभवाच्च। न च क्रियाया अपि न निर्विषयत्वं गमनादिक्रियाया ग्रामादिविषयत्वदर्शनादिति वाच्यम्। विषयशब्देन प्रकाश्यस्य विवक्षितत्वेन गमनेन ग्रामस्याप्रकाश्यत्वेन वैवक्षिकविषयकत्वस्य तत्र अभावादिति भावः। ननु यथा मनोगतायाः क्रियाया अतीन्द्रियत्वादपरोक्षावभासविरोधस्तथातीन्द्रियवासनामयस्य वस्तुनोऽपीत्यत आह **अतीन्द्रियेति**। आदिपदेनातीन्द्रियवायूपादानकस्य वह्नेर्ग्रहणम्। त्र्यणुकचतुष्टयेनेव परमाणुचतुष्टयेनापि चतुरणुकोत्पत्तेरेव देशिभिरङ्गीकृतत्वात् तदनुसारेण चतुरणुकमादिपदेन ग्राह्यमित्यपि आहुः। ननु नीरूपस्य वस्तुनः कथमपरोक्षावभासः। न च नीरूपत्वासिद्धिः। नीरूपोपादानकत्वेन तत्सिद्धेरिति चेत्। किमेतदौपनिषदानां चोद्यमुत तार्किकादीनाम्। नाद्य इत्याह **नीरूपादिति**। वायोरग्निरिति श्रुतेः। नान्त्य इत्याह **तार्किकादींस्त्विति**। **स्मृतिसिद्धेति**। ध्यै चिन्तायामिति धातुवृत्तिसूत्रसिद्धेत्यर्थः। ननु तर्हि ध्यानस्य मानसक्रियात्वाभिधायकसूत्रविरोध इत्यत आह **अत एवेति**। वासनोपादानकवस्त्ववलोकनविशेषस्य ध्यानशब्दार्थत्वादित्यर्थः। अस्यापि धात्वर्थरूपक्रियात्वादिति भावः।





**विठ्ठ०**— यदुक्तं सत्यस्यापि विषयस्य ध्यानेन निवृत्तिदर्शनात् यज्ज्ञाननिवर्त्यं तन्मिथ्येति व्याप्तेर्व्यभिचार इति तन्न ध्यानस्य मानसक्रियात्वेन ज्ञानत्वाभावादिति । शङ्कते **ध्यानमिति** । **अपरोक्षावभासेति** । ध्यानस्य मानसापरोक्षत्वप्रकारेणानुभूयमानत्वात् तद्विरोध इत्यर्थः । **रूपरहितत्वेनेति** । रूपशब्दोऽत्र स्वं रूपं शब्दस्येत्यत्रेव विषयवचनः तथाच परिस्पन्दस्यार्थविषयीकारित्वाभावेन ध्यानेन च विषयप्रतिभासात् तद्विरोध इत्यर्थः । एतेन चाक्षुषावभासत्वाभावात् रूपरहितत्वेनेत्यनुपपन्नमिति निरस्तम् । यद्वा हरिन्मणिनिभं हरितोपलाभं इत्यादिवचनेन ध्याने वासनामयरूपावभासोऽस्ति तस्य च क्रियात्वे तदवभासविरोध इत्यर्थः । **अनुमतमिति** । ध्यानस्य ज्ञानत्वलाभादिति भावः । तदेव दर्शयति **श्रवणेति** । ननु वासनायाः अतीन्द्रियत्वात् तदुपादानकवस्तुनो न मानससाक्षात्कार इत्यत आह **अतीन्द्रियेति** । वासनायाः नीरूपत्वात् ततो रूपजन्मासंभवात् रूपावभासा-नुपपत्तिर्भवत्पक्षेऽपि समान इत्यत आह **नीरूपादिति** । **वेदान्तिनामिति** । वायोरग्निरित्युक्तेरिति भावः । कारणगुणा हि कार्यगुणानारभन्त इति वदतः तार्किकादीन् प्रति कथमित्यत आह **तार्किकादींस्त्विति** । **एवमिति** । मानसीसृष्टिर्ध्यानमित्येवं सतीत्यर्थः । ध्यै चिन्तायामिति पाणिनिसूत्रसिद्धेरित्यर्थः । चिती संज्ञाने इति चिन्तायाः ज्ञानात्मकता इति द्रष्टव्यम् । **अत एवेति** । धात्वर्थादिवेत्यर्थः । सूत्रे क्रियाशब्देन धात्वर्थक्रियैव विवक्षिता न तु परिस्पन्द इति भावः । यद्वा ध्यानस्योक्तरीत्या मानससृष्टिरूपत्वादेवेत्यर्थः ।

**चषकः**— कल्पान्तरमपहस्तयते **ध्यानमिति** । मानसक्रियापदेन मनोनिष्ठपरिस्पन्दस्तत्परिणामविशेषो मानसावभासो वेति कल्पद्वयीमभिप्रेत्याद्यं प्रत्याह **स तर्हीति** । न्यायमतानुरोधेनेदम् । सिद्धान्ते साक्षिवेद्यत्वात् । सिद्धान्तदिशाऽप्याह **रूपेति** । स्वं रूपं शब्दस्येतिवत् स्वरूपज्ञानसंततिमितिवच्चात्र रूपशब्देन वस्तुस्वरूपमुपादीयते न गुणविशेषः । **अपरोक्षेति** । ध्यानधर्मिकापरोक्षत्वप्रकारकावभासविरोध इत्यर्थः । तथाच परिस्पन्दस्यामूर्तत्वेन करचरणादिसंस्थानविशेषरूपाकृतिरहितत्वेन तद्विशेषविशेषितगरुडाद्यवभासविरोध इत्यर्थः । द्वितीयं प्रतिविधत्ते **यदि चेति** । **अतीन्द्रियोपादानकस्यापि** तादृशसंस्कारोपादानकस्यापि । तार्किकादीन् वायोस्तेजोजन्मानुपगच्छत-स्तोषयिष्यामः समर्थयिष्यामः । **स्मृतिसिद्धा** ध्यै चिन्तायामिति पाणिनिवचनसिद्धा । **अत एव** धातूपस्थाप्य-त्वादेव । सूत्रघटकक्रियापदेन धातूपस्थितैव विवक्षिता न परिस्पन्दरूपेति भावः । तत्रापि मानसक्रियापदेनोक्तदिशा मानससृष्टेरेवाभिमतत्वादित्यर्थः इत्यप्यार्थीथपन् । एतन्मते सूत्रघटकक्रियापदं कार्यतात्पर्यकमवसेयम् ।

**गूढ०**— ननु ध्यानस्य ज्ञानत्वाभावात् ध्यानेन सत्यनिवृत्तावपि न ज्ञानेन तन्निवृत्तिरिति शङ्कते क्रिया किं परिस्पन्द उत मानसी दृष्टिः । नाद्य इत्याह **यदि क्रियेति** । मनसोऽतीन्द्रियत्वेन तद्गततत्क्रियाया अपि अतीन्द्रियत्वात् ध्याने साक्षात्करोमीत्यपरोक्षावभासो न स्यादित्यर्थः । न च मनसः साक्षिसिद्धत्वात् कथमतीन्द्रियत्वमिति वाच्यम् । मतान्तरेणोक्तत्वादिति भावः । ननु मनसोऽप्यैन्द्रियकत्वात्तद्गतक्रियाया अपि प्रत्यक्षत्वमित्यत आह **रूपरहितत्वेनेति** । ऐन्द्रियकत्वं किमतीन्द्रियविषयत्वेन वा चक्षुरादीन्द्रियविषयत्वेन वा । नाद्यः । असिद्धेः । न द्वितीयः । रूपवत्येव चक्षुषः प्रवृत्तेः मनसश्च रूपाभावेन प्रत्यक्षतदवभासानुपपत्तौ





तत्क्रियाया अपि प्रत्यक्षावभासो न युज्यते। अस्ति च सः, अतस्तद्विरोध इत्यर्थः। चशब्दो ध्यानस्य परिस्पन्दरूपत्वे सविषयत्वं न स्यात्। परिस्पन्दरूपक्रियायाः सविषयत्वस्यादर्शनादित्यनुक्तदूषणसमुच्चयार्थः। द्वितीयं प्रत्याह **यदीति**। अवलोकनं ज्ञानम्। नन्वतीन्द्रियवासनोपादानकस्य कथमैन्द्रियकत्वमित्यत आह **अतीन्द्रियेति**। ननु ध्यानविषयस्य वस्तुनो रूपित्वात्कथं नीरूपवासनोपादानकत्वमिति चेत् किमेतद्वेदान्तिनां चोद्यम् उतान्येषाम्। नाद्य इत्याह **नीरूपादिति**। वायोरग्निरिति श्रुतेरिति भावः। द्वितीयं प्रत्याह **तार्किकादीनिति**। ज्ञानस्य ध्यानत्वं वा व्याकरणस्मृत्या सिद्धमित्याह **एवं चेति**। चिन्तनस्य ज्ञानरूपत्वं सुप्रसिद्धमिति भावः। ननु क्रियामानसवदिति सूत्रे मानसक्रिया ध्यानमित्युक्तत्वादत्र ध्यानस्य ज्ञानरूपध्यानस्यैवाङ्गीकारान्न तद्विरोध इति भावः।

**२११ सु०— विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव सर्वत्र ज्ञानस्य पुष्कलकारणम्। अनिच्छतोऽप्यनिष्टज्ञानदर्शनात्। तत्कथमिदं ज्ञानमिति चेन्न। विधेः साध्यसाधन-भावमात्रज्ञापनेन चरितार्थत्वात्। इच्छाप्रयत्नयोश्च संस्कारोद्बोधे कृतार्थत्वान्मानस-वस्त्ववलोकने व्यापाराभावात्। चक्षुश्चलननिरासवत् मनोविक्षेपनिरासे वा तदुपयोगः।**

**बिन्दुः**— ननु आत्मा निदिध्यासितव्यः। तथा विषहरणकामेन गरुडो ध्यातव्य इत्यादौ ध्यानस्य विधेयत्वात्क्रियारूपमेव तद्वक्तव्यमित्याशयेन शङ्कते **विधिजन्येति**। इदं चेच्छाप्रयत्नयोः विशेषणम्। न तु विधिजन्येष्टसाधनताबोधनानन्तरं तज्जन्येच्छाप्रयत्नविषयत्वस्येव ध्यानस्येत्यत आह **इच्छाप्रयत्नयोरिति**।

**यादु०**— ज्ञानं तु विध्यादिनिरपेक्षस्वकारणाधीनमतस्तयोः कथमभेद इत्याशङ्कते **विधिजन्येत्यादिना**। **तत्कथमिदमिति**। विध्यादिसापेक्षोत्पत्तिकमिदं ध्यानं न ज्ञानमित्यर्थः। **साध्यसाधनभावमात्रेति**। विधेरिष्ट-साधनतावबोधकत्वेन ब्रह्मज्ञानसाधनत्वं ध्याने विधिर्बोधयति न तु ध्यानमुत्पादयतीत्यर्थः। **संस्कारोद्बोध इति**। ध्येयवस्तूपादानभूतमानसवासनोद्बोध इत्यर्थः। विक्षेपो विषयान्तरसञ्चारः। **तदुपयोग इति**। इच्छाप्रयत्नयोरुपयोग इत्यर्थः। मनोविक्षेपनिरासस्यापि ध्यानार्थमपेक्षितत्वादिति भावः।

**कं०रा०**— **तत्कथमिति**। निदिध्यासितव्य उपासीतेत्यादिविधि(लिङादिज्ञान)जन्यपुरुषेच्छा-प्रयत्नसापेक्षकारणजन्यमिदं ध्यानं ज्ञानं कथं स्यात्। तत् तस्मात्। ज्ञानसामग्रीविलक्षणजन्यत्वादित्यर्थः। विधेरिष्टोपायत्वज्ञानजननेनैव चरितार्थस्येच्छाप्रयत्नौ प्रति जनकत्वाभावाद्विधिजन्यपुरुषेच्छाप्रयत्नेत्युक्तिरेवानुप-पन्नेत्याह **विधेरिति**। ननु विधिजन्येत्यत्र विधिजन्यत्वं प्रयोज्यत्वम्। तथा च विधिप्रयोज्येच्छाप्रयत्ननिरपेक्षमेव सर्वत्र ज्ञानकारणम्। ध्यानं तु तत्सापेक्षकारणजन्यमिति कथं ज्ञानं स्यादिति ब्रूमः। अतो नोक्तखण्डनावकाश इत्याशङ्क्याह **इच्छेति**। इच्छाप्रयत्नयोर्वासनामयवस्तूपादानसंस्कारोद्बोध एव चरितार्थत्वेन मानसवस्त्वव-





लोकनरूपध्याने व्यापाराभावाद्ध्यानस्य तत्सापेक्षकारणजन्यत्वमेवासिद्धमिति भावः । **चक्षुरिति** । इच्छाप्रयत्नयोर्यथा चक्षुश्चलननिरास उपयोगो न चाक्षुषज्ञाने व्यापारस्तथा प्रकृतेऽपीच्छाप्रयत्नयोर्मनोविक्षेपनिरास एवोपयोगो न ध्याने व्यापारः । अतोऽस्मिन्नपि पक्षे ध्यानस्येच्छाप्रयत्नसापेक्षकारणजन्यत्वाभावात् न ज्ञानबहिर्भावशङ्कावकाश इति भावः । यद्वा विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव सर्वत्र ज्ञानकारणम् । ध्यानं तु विधिजन्यपुरुषेच्छाप्रयत्नसापेक्षकारणजन्यमिति कथं ज्ञानं स्यादिति वदता ध्यानस्य ज्ञानत्वाभावे विधितज्जन्यपुरुषेच्छाप्रयत्नरूपत्रितयसापेक्षकारणजन्यत्वं हेतूक्रियत उत विधिप्रयोज्यौ याविच्छाप्रयत्नौ तदुभयसापेक्षकारणजन्यत्वं वा । नाद्य इत्याह **विधेरिति** । विधेः साध्यसाधनभावमात्रज्ञापनेन चरितार्थत्वात् मानसवस्त्ववलोकने व्यापाराभावादिति वक्ष्यमाणेन संबन्धः । तथा च विधितज्जन्यपुरुषेच्छाप्रयत्नरूपत्रितयसापेक्षकारणजन्यत्वं पक्षेऽसिद्धमिति भावः । नापि द्वितीयः, असिद्धेरेवेत्यभिप्रेत्यासिद्धिं द्वेधोपपादयति **इच्छाप्रयत्नयोरित्यादिना** ।

**श्रीनिधि०**— तस्येच्छाप्रयत्ननिरपेक्षसामग्रीसाध्यत्वादित्यभिप्रेत्य शङ्कते **विधिजन्येति** । विधिज्ञानजन्येत्यर्थः । किं ज्ञानस्य इष्टसाधनत्वाभावाद्विध्यर्थत्वं नेत्युच्यते । उत कृतिसाध्यत्वाभावात् । नाद्य इत्याह **विधेरिति** । ध्यानविधेरित्यर्थः । साध्यसाधनभावः ज्ञानेच्छयोः चरितार्थत्वादिति, न तु कृतिसाध्यत्वमपि तदर्थः । येन कृतिसाध्यत्वाभावेन विध्यर्थत्वं नेति ब्रूया इति भावः । अनेन द्वितीयोऽपि निरस्तः । ननु ज्ञानस्य कृत्यसाध्यत्वेऽपि विध्यर्थत्वं न संभवति विधिविषयस्य कृतिसाध्यतानियमादित्यतः यथाकथञ्चित् कृत्यादिसाध्यत्वं श्रवणादिसाध्यज्ञानेच्छयोरस्ति । साक्षात् तत्साध्यत्वं तु ध्यानेऽपि नास्तीत्याह **इच्छाप्रयत्नयोरिति** । **संस्कारेति** । ध्येयाकारोपादानसंस्कारेत्यर्थः । अथवा पत्न्यवेक्षितमाज्यं भवतीत्यत्र सन्निकर्षप्रतिबन्धकचक्षुश्चलननिरासाय यथा ईक्षणं विधीयते तथा प्रकृतेऽपीत्याह **चक्षुश्चलननिरासवदिति** । **तदुपयोगः** इच्छाप्रयत्नयोरुपयोगः ।

**वा०चं०**— ध्यानस्य क्रियात्वाङ्गीकारेऽनुपपत्तिवज्ज्ञानत्वेऽप्यनुपपत्तिं शङ्कते **विधीति** । **इदमिति** । विधिजन्यपुरुषेच्छाप्रयत्नसाध्यत्वेन सिद्धं ध्यानमित्यर्थः । सदृशादृष्टचिन्तादीनामिव विध्यादीनां संस्कारोद्बोधरूपसाधकोपयोगेनान्यथासिद्धिमभिधाय प्रतिबन्धकनिरासोपयोगेनापि तामाह **चक्षुरिति** । षष्ठ्यर्थे वतिः । तथा च चक्षुश्चलननिरासस्य दिशश्चानवलोकयन्निति ध्यानाङ्गतया बोधितस्याप्यचलं चेच्छरीरं स्यादित्युक्तन्यायेन मनोविक्षेपनिरासे यथोपयोगस्तथा विधिना साध्यसाधनभावे बोधिते फलेच्छायां सत्यां प्रयत्नेन मनोविक्षेपे निरस्ते ध्यानं सुलभमिति विध्यादीनां तदुपयोग इत्यर्थः । केचित्तु सप्तम्यर्थे वतिः, तथा च चक्षुश्चलननिरासे पत्न्यवेक्षितमाज्यं भवतीत्यादि विध्यादीनामुपयोग इव मनोविक्षेपनिरासेऽपि स इत्यर्थ इत्याहुः ।

**वा०र०**— **अनुपपत्तिमिति** । कथं तर्हि नामादिषु ब्रह्माध्यास इत्याशङ्क्य सत्यमत एव इत्यादि प्रागुदाहृतपञ्चपादिकाव्याख्यानावसरे मानसी क्रियेत्येतदुपपादयितुं प्रवृत्तविवरणकारेणोक्तामिति पूरणीयम् । मूले **विधीति** । विधिना जन्या येच्छा तत्साध्यो यः प्रयत्न इत्यर्थः । **विधिजन्येति** । स्थलान्तरविवरणे ज्ञानसामग्र्यामिच्छाप्रयत्नयोर्व्यापाराभावाद्यागादिक्रियायामेव तद्व्यापारात्तस्या एव विधेयत्वं न ज्ञानस्येति प्रतिपादनादिति भावः । ध्यानं न ज्ञानं तत्सामग्रीविलक्षणसामग्रीजन्यत्वादित्यनुमानं सूचयन् व्याचष्टे **विधिजन्येत्यादि** । **अनिष्टेति** मूलम् ।

दुर्गन्धादिकमनिष्टं ज्ञेयम् । सदृशेत्यारभ्याभिधायेत्यन्तेन विधेरित्यादेः पूर्वग्रन्थस्य तात्पर्यमुक्तम् । **षष्ठ्यर्थ इति** । तत्र तस्येवेति स्मरणादिति भावः । **इत्युक्तन्यायेनेति** । मनसंश्चाप्यचालनम् । 'चलने तु शरीरस्य चञ्चलं च मनो भवेदि'ति 'अचलत्वं चापेक्ष्ये'त्येतत्सूत्रीयभाष्योदाहृतब्रह्माण्डवचनानुसारेणेत्यर्थः । प्राक् विध्यादीनां प्रतिबन्धकेति सामान्येनोपयोगे उक्तेऽपि विवेको न कृतः । **साध्यसाधनभावेति** पूर्वमूलानुसारेण विधिव्यापारस्य पृथक् प्रत्येतुं शक्यत्वेऽपि चेच्छाप्रयत्नयोर्विवेकस्य ततः प्रत्येतुमशक्यत्वात् त्रयाणामपि विवेकं दर्शयति **तथा विधिनेति** । आत्मानमुपासीतेत्यादिविधिनेत्यर्थः । सप्तम्यर्थे वतिपक्षे मनोविक्षेपनिरासोपयोगिविध्यादीनामेवोपयोगस्य वक्तुमशक्यतया विध्याद्यन्तरमाह **पत्न्यवेक्षितमिति** । आज्यं पत्न्यवेक्षितमिति विध्यादीनां यथा पत्न्या आज्यावेक्षणप्रतिपादनमुखेन चक्षुश्चलननिरासे उपयोग इत्यर्थः । एतच्च स्पष्टम् । **स इति** । आत्मानमुपासीते-त्यादिविध्यादीनामुपयोग इत्यर्थः । आहुरित्यनेनाचलत्वं चापेक्षेति सूत्रीयप्रमाणानुसारेण चक्षुश्चलननिरासस्य मनोविक्षेपनिरासार्थतायाः सिद्धत्वात्प्रकृतमनोविक्षेपनिरासे दृष्टान्तपरतया योजनापरित्यागेन विध्यादीनां स्थलान्तरे उपयोगे दृष्टान्तीकरणस्यास्वरसत्वादिति सूचयति । यत्सत्यं तज्ज्ञाननिवर्त्यं नेति व्यतिरेकव्याप्तेर्विषे व्यभिचारेण दूषणसिद्धेस्तद्व्याप्तेः ।

**स०व्र०**— इच्छाद्यन्वयव्यतिरेकानुविधायिनो ध्यानस्य कथं तद्विपरीतज्ञानत्वमिति शङ्कते **विधिजन्येति** । **निरासवदिति** । पत्न्यवेक्षितमाज्यं भवतीत्यत्र विधिजन्येच्छादीनां चक्षुश्चलननिरासे उपयोगवन्मनोविक्षेपनिरासे इच्छादीनामुपयोग इत्यर्थः ।

**विठ्ठ०**— ननु निदिध्यासितव्यः ध्यायेदित्यादिश्रुतिस्मृतिषु ध्यानविधिदर्शनात् ज्ञानस्य विध्यविषयत्वान्न तत्पुरुषेच्छाप्रयत्नविषयस्य ध्यानस्य ज्ञानत्वमिति शङ्कते **विधिजन्येति** । विध्यादेरन्यत्रोपक्षीणत्वात् ध्यानस्य ज्ञानत्वेऽपि न स्वकारणमात्रजन्यत्वविरोधः इति समाधत्ते **विधेरिति** । विधेर्ध्यानस्य इष्टसाधनताज्ञापनमात्रे पर्यवसितत्वात् इच्छाप्रयत्नयोश्च ध्यानदृश्यवस्तूपादानभूतवासनोद्बोधे च चरितार्थत्वादित्यर्थः । तथाच दूरस्थ-पदार्थदर्शनेन फलविशेषभावे तद्दर्शने चक्षुष एकाग्रतासिद्ध्यर्थं चक्षुश्चलननिरासकत्वं यथा तथा ब्रह्मध्यानादेरिष्ट-साधनतावबोधसिद्ध्ये विध्युपयोगः । ध्याने मनस एकाग्रतासिद्ध्ये वासनोद्बोधे च इच्छाप्रयत्नयोरुपयोगः । ध्यानं तु उद्बुद्धसंस्कारसहकृतेन मनसा जायत इति न ज्ञानत्वं तस्य विरुद्धमिति भावः ।

**चषकः**— **तत्कथमिदमिति** । आत्मानमुपासीतेत्यादिविधिजन्यपुरुषेच्छाप्रयत्नघटितसामग्रीजन्यत्वात् तादृशसामग्रीजन्यत्वरूपविरुद्धधर्माधिकरणत्वलिङ्गकभेदाध्यवसायादिति भावः । **विधेरिति** । ध्यानधर्मिकब्रह्मज्ञान-लक्षणसमीहितसाधनत्वप्रकारकज्ञानजनन एव व्यापृततया विधेर्न ध्यानोत्पादकतेत्यर्थः । **कृतार्थत्वादिति** । ध्येयस्वरूपोपादानभूतमानसवासनाजनन एवोपक्षीणतया ध्येयवस्तुस्वरूपनिर्वृत्तावन्यथासिद्धत्वादित्यर्थः ।

**गूढ०**— ननु न ध्यानस्य ज्ञानत्वम् । ध्यानस्य विधिवाक्यजन्येष्टसाधनताज्ञानजन्यपुरुषेच्छाजन्य-प्रयत्नसापेक्षत्वात्तस्य च तन्निरपेक्षत्वादिति शङ्कते **विधिजन्येति** । ध्यानेऽपि विधीच्छाप्रयत्नानां जनकत्वमित्याह **विधेरिति** ।

**२१२ सु०— किञ्च सेतुदर्शनादिना पापादिनिवृत्तिः सुप्रसिद्धा । मध्येऽदृष्टकल्पनायां तु न प्रमाणमस्ति । अन्यथा प्रकृतेऽप्यदृष्टकल्पनाप्रसङ्गात् । अदृष्टसाध्यत्वे मोक्षस्यानित्यताप्रसक्तिरिति चेत् । ज्ञानजन्यत्वेऽपि साम्यात् । ज्ञानजन्यत्वेऽपि प्रध्वंसत्वान्न अनित्यत्वमिति चेत् । समानमेतददृष्टसाध्यत्वेऽपीति ।**

**परि०—** अपि च । सत्यस्यापीत्यादिना गरुडध्याननिवर्त्यत्वं सत्यस्याप्युक्तम् । ध्यानस्य ज्ञानत्वं च व्युत्पादितम् । तथापि चेद्ध्यानस्य ज्ञानत्वमुपेत्य ज्ञाननिवर्त्यत्वं सत्यस्य न मन्यते तं प्रति सत्यस्य ज्ञाननिवर्त्यत्वे स्थलान्तरमाह **किञ्चेति** । **सुप्रसिद्धेति** । 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्यादिपुराणेषु प्रसिद्धेत्यर्थः । ननु साक्षाज्ज्ञाननिवर्त्यत्वं मिथ्याभूतस्यैव न सत्यस्य । पापादि तु सेतुदर्शनेनादृष्टे जाते सति तद्द्वारा निवर्तते न साक्षात् । अज्ञानं तु 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति साक्षादेव निवर्तते । अतोऽज्ञानादिबन्धस्य मिथ्यात्वमेव न पापादेरित्यत आह **मध्य इति** । प्रकृतेऽपि ज्ञानेन बन्धो निवर्तत इत्यत्रापीत्यर्थः ।

**वं०प०—** सुप्रसिद्धा 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्यादिपुराणेषु । **पापादीति** । सत्यभूतपापादीत्यर्थः । ननु सेतुदर्शनेन पापं न निवर्तते । किं नाम सेतुदर्शनजनितादृष्टेनैवेति चेत् तत्राह **मध्य इति** । सेतुदर्शनपापनिवृत्त्योर्मध्य इत्यर्थः । **प्रकृतेऽपीति** । ज्ञानजन्यादृष्टेनैव बन्धनिवृत्तिरस्त्वित्यर्थः । तथा च ज्ञाननिवर्त्यत्वाप्रास्त्या न मिथ्यात्वसिद्धिरिति भावः । **अनित्यतेति** । स्वर्गवदिति भावः । **प्रध्वंसरूपत्वादिति** । बन्धनिवृत्तिरूपमोक्षस्य प्रध्वंसरूपत्वादित्यर्थः । **समानमिति** । तस्मात्सेतुदर्शनेनैव सत्यभूतपापादिनिवृत्तिरिति भावः ।

**कं०रा०— सुप्रसिद्धेति** । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहतीत्यागमादिति भावः । न चानेन सेतुप्राप्तेरेव पापनिवर्तकत्वमुच्यते न तद्दर्शनस्येति वाच्यम् । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । **अनित्येति** । स्वर्गादिवदिति भावः । **साम्यादिति** । ज्ञानजन्येच्छादिवदिति भावः ।

**श्रीनिधि०— मध्येऽदृष्टकल्पनायामिति** । पापस्य सेतुदर्शनादिकाले सत्त्वेन साक्षान्निवर्तकत्वोपपत्तौ यागापूर्ववत् प्रकृतेऽदृष्टकल्पनायां नियामकं नास्तीति भावः । अन्यथाऽनुपपत्त्यादिरूपनियामकाभावेऽपि अदृष्टकल्पन इत्यर्थः ।

**वा०चं०—** एवं ज्ञानत्वोपपादनसापेक्षे ध्याने स्पष्टदृष्टता सत्यनिवर्तकतया उपपादितां । अधुना तन्निरपेक्षे पापादिनिवर्तकतया श्रुतिस्मृतिप्रसिद्धे सेत्वग्निचित्कपिलादर्शनादौ तामुपपादयति **किञ्चेति** । ननु स्वर्गादिसाधनत्वेन

श्रुतस्यापि यागादेरदृष्टद्वारकत्ववत्पापादिनिवृत्तिसाधनत्वेन श्रुतस्यापि सेतुदर्शनादेरदृष्टद्वारकत्वमेवेति न साक्षाज्ज्ञाननिवर्त्यत्वं पापादीनाम् । बन्धे च साक्षाज्ज्ञाननिवर्त्यत्वं तन्मिथ्यात्वं विना नोपपन्नमिति न व्यभिचार इत्यतो यागादेः कालान्तरभाविस्वर्गसाधनतानुपपत्तेरदृष्टकल्पकत्वेऽपि पापादिनिवृत्तेस्तदैव संभवेन न प्रकृतेऽदृष्टकल्पकं किञ्चिदस्तीत्याह **मध्य इति** । ननु कथं नास्ति सेतुसाक्षात्कारमात्रस्य दुरितनिवर्तकत्वे तत्र स्थितानामपि दुरितनिवृत्तिप्राप्त्या दूरदेशागमनछत्रपादुकादिविधुरत्वस्वकृतदोषोद्घोषणादिनियमादियुतस्यैव तस्य पापादिनिवर्तकत्वे वक्तव्ये नियमादृष्टस्यावश्यकल्प्यत्वादित्यतो **मध्य** इत्युक्तम् । एवं च नियमादृष्टसहकृतसेतुदर्शनादेः पापादिनिवर्तकत्वसिद्धावपि सेतुदर्शनादिजन्यादृष्टस्य पापादिनिवृत्त्यर्थमनपेक्षणान्न व्यभिचारपरिहार इति भावः । ननु विशिष्टज्ञाननिवर्त्यस्य मिथ्यात्वव्यभिचारेऽपि न मदभिमतस्य ज्ञानमात्रनिवर्त्यस्य मिथ्यात्वव्यभिचार इत्याशय इति चेत् । तर्हि भाषाप्रबन्धजन्येनानधीतवेदान्तजन्येनाधीतवेदान्तजन्येनाप्यसंभावनाविपरीतभावनाप्रारब्धकर्मादिप्रतिबद्धेन ब्रह्मज्ञानेन बन्धानिवृत्तेर्नियमाधीनवेदान्तश्रवणादिनियमादृष्टसहकृतब्रह्मज्ञानमेव तन्निवर्तकं त्वयाऽपि वाच्यम् । अन्यथा वेदान्ताध्ययनस्य श्रवणनियमस्यासंभावनादिनिवर्तकमननादेश्च वैयर्थ्यं स्यात् । प्रारब्धवशाज्जीवन्मुक्तस्य संसारानुवृत्तिश्च न स्यात् । तथा च विशिष्टस्य व्यभिचारोद्भावनं कथं न प्रकृतसङ्गतमित्याशयेनाह **अन्यथेति** । सहकारित्वेनादृष्टसापेक्षत्वे कल्पकसद्भाव इत्यर्थः । नन्वदृष्टसाध्यस्यानित्यतानियमान्मोक्षस्यानित्यतापत्त्या नादृष्टं मोक्षसाधनब्रह्मज्ञानसहकारि प्रत्युत मोक्षसाधनब्रह्मज्ञानजनकमेवेति प्रकृतेऽदृष्टकल्पनाया असंभवेऽपि बाधकाभावात्सेतुदर्शनादावदृष्टकल्पनोपपद्यत इत्याशयेन शङ्कते **अदृष्टेति** । मोक्षस्यानित्यतायामदृष्टजन्यत्वं प्रयोजकं जन्यत्वमेव वा । नाद्यः । कारणान्तरजन्यत्वेऽनित्यत्वाभाववददृष्टजन्यत्वेऽपि तदभावोपपत्त्या अप्रयोजकत्वात् । न द्वितीय इत्याह **ज्ञानेति** । ननु ज्ञानफलस्य नित्यत्वबोधकश्रुतिबलाज्जन्यभावत्वस्य विनाशिताप्रयोजकत्वकल्पनान्मोक्षस्य ध्वंसत्वान्न विनाशितेति ज्ञानजन्यत्वपक्षे समाधातुं शक्यत्वेऽपि अदृष्टजन्यत्वपक्षे कल्पकाभावान्नानित्यता समाधातुं शक्येत्यत उक्तरीत्या ज्ञानमात्रस्य मोक्षसाधनत्वाभावाज्ज्ञानस्य नित्यफलकताबोधकमेवादृष्टस्यापि तद्बोधकमित्यदृष्टजन्यत्वेऽपि नानित्यतापत्तिरित्याह **ज्ञानजन्यत्वेऽपीति** । यद्वाऽदृष्टजन्यत्वेऽभ्युदयत्वापत्त्याऽनित्यताप्रसङ्गेऽपि ज्ञानजन्यत्वे ध्वंसरूपत्वान्नानित्यतापत्तिरिति न साम्यमित्यतः अदृष्टजन्यस्याभ्युदयत्वनियमस्याप्रयोजकतया ध्वंसत्वेन समाधानं तत्रापि सुशकमेवेत्याशयेनाह **ज्ञानजन्यत्वेऽपीति** । प्रध्वंसत्वादित्युपलक्षणम् । श्रुत्यादिबलाच्चेत्यपि द्रष्टव्यम् ।

**वा०र०**— स्थलान्तरे व्यभिचारप्रदर्शनपरोत्तरग्रन्थवैयर्थ्यमित्यतो विषे व्यभिचारस्य प्रागुक्तरीत्या गरुडध्यानस्य ज्ञानत्वोपपादनसापेक्षत्वात् तत्सापेक्षगरुडध्यानस्य सत्यविषनिवर्तकताया स्पष्टदृष्टतामाश्रित्य विषे व्यभिचारप्रदर्शनेन व्याप्तिदूषणमात्रेण किं ज्ञानत्वोपपादननिरपेक्षसेतुदर्शनादिनिवर्त्यपापादौ व्यतिरेकव्यभिचारेणापि तद्व्याप्तिं दूषयामि इत्याशयेनोत्तरमूलप्रवृत्तेर्न दोष इत्यभिप्रायस्फोरणेनोत्तरमूलं पूर्वगतार्थतया अवतारयति **एवं ज्ञानत्वेति** । सत्यनिवर्तकतायाः स्पष्टदृष्टतेति संबन्धः । **श्रुतिस्मृतीति** । मूलस्थप्रसिद्धपदमनेन व्याख्यातं भवति । **सेतुदर्शनादिनेति** मूले आदिपदेनाग्निचिद्दर्शनं कपिलादर्शनं श्रोत्रियदर्शनं चेत्यादीनि





ग्राह्याणीत्याशयेन सेत्वग्निचित्कपिलादर्शनादावित्युक्तम् । श्रोत्रियं सुभगां....ष्वग्निमग्निचितमित्यादिस्मृत्यादिकं यथासंभवं ज्ञेयम् । आदिपदेन विषये दोषदर्शनेन निवर्त्यरागस्य सुहृद्दर्शनादिनिवर्त्यदुःखादेश्चेत्यादीनां परिग्रहः । ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गीयन्यायामृतानुसारात् । **तामिति** । सत्यनिवर्तकतायाः स्पष्टदृष्टतामित्यर्थः । **मध्येऽदृष्टकल्पनायामिति** मूले कल्पकसद्भावेन कल्पनामुपपादयंस्तावतापि किमित्यतोऽस्मद्व्याप्तौ साक्षाज्ज्ञाननिवर्त्यं नेति विवक्षणात्पापादेश्च साक्षात्तदभावान्न तत्र व्यभिचारः । प्रकृतबन्धे च साक्षात्तन्निवर्त्यत्वसत्त्वात् तदन्यथानुपपत्तिश्च युज्यत इत्याशयं दर्शयन्नवतारयति **ननु स्वर्गादीति** । न साक्षाज्ज्ञाननिवर्त्यत्वमिति न व्यभिचार इति संबन्धः । तर्हि पापादिवद्बन्धस्यापि तदभावादर्थापत्तिप्रवृत्तिरनुपपन्नेत्यत उक्तं **बन्धे चेति** । साक्षाज्ज्ञाननिवर्त्यत्वं हि तन्मिथ्यात्वं विना नोपपन्नम् । तच्च बन्धेऽस्ति । अतोऽर्थापत्तिश्च युक्तेत्याशयः । मध्येऽदृष्टं हि त्वया यागादिस्थले दर्शनेन कल्पनीयम् । न चात्र तत्कल्पना युक्ता । तत्र तत्कल्पनानियामकसद्भावेऽप्यत्र तदभावेन वैषम्यादिति परिहाराभिप्रायमाह **यागादेः कालान्तरेति** । **कथं नास्तीति** । सेतुदर्शनादिना पापादिनिवृत्त्यर्थमदृष्टापेक्षा नास्तीति कथमित्यर्थः । मध्येऽदृष्टापेक्षाया अभावेऽप्यदृष्टान्तरापेक्षाया अनिवार्यत्वादित्याशयः । **दूरदेशेति** । दूरदेशादागमनेत्यर्थः । दूरत्वं चापेक्षिकं यथासंभवम् । अत एव च्छत्रपादुकादिविधुरत्वकीर्तनम् । तेन यद्देशादागमने च्छत्राद्यपेक्षा तस्यैव दूरत्वम् । राजादेः सदा तदपेक्षायाः सत्त्वेन समीपस्यापि दूरत्वापत्तिरिति चेन्न । तदतिरिक्तपुरुषागमनस्येह विवक्षिततया दरिद्रस्य यद्देशादागमने च्छत्राद्यपेक्षा भवति तद्देशो दूरदेश इत्यादि विवक्षणात् । **अनपेक्षणादिति** । अनपेक्षायामपि तत्कल्पने निर्निमित्तं मध्येऽदृष्टकल्पनाज्ज्ञानाद्बन्धनिवृत्तिस्थलेऽपि स्यात्ततश्च साक्षाज्ज्ञाननिवर्त्यत्वं च बन्धेऽस्तीत्याद्युक्तमयुक्तमिति भावः । अनेनैव अन्यथा प्रकृतेऽप्यदृष्टकल्पनाप्रसङ्गादिति मूलमपि व्याख्यातप्रायम् । अत एव मध्ये दृष्टनिरासपरत्वेन तद्वाक्ययोजनायाः सिद्धत्वं शिष्यैरेव तदूह्यत्वं च मनसि कृत्वैव नियमादृष्टस्य सहकारित्वेनापेक्षा तत्रस्थितानामपि दुरितनिवृत्तीत्यादिपूर्वोक्तरीत्या कल्पकबलेनाङ्गीकृत्य विशिष्टज्ञाननिवर्त्यत्वस्य मिथ्यात्वव्यभिचारेऽपि ज्ञानमात्रनिवर्त्यत्वस्य तद्व्यभिचारो नेत्याशङ्कानिरासपरत्वेनाप्युत्तरत्रैतद्वाक्ययोजनां करिष्यतीति न कश्चिद्दोषः । **विशिष्टज्ञानेति** । नियमादृष्टसहकृतज्ञानेत्यर्थः । यत्सत्यं पापादितन्नियमादृष्टसहकृतज्ञाननिवर्त्यम् । न तु ज्ञानमात्रनिवर्त्यम् । एवं च यत्सत्यं तद् ज्ञाननिवर्त्यं नेति व्याप्तिशरीरे मात्रपदप्रक्षेपेण यत्सत्यं तद् ज्ञानमात्रनिवर्त्यं नेति लाभे पापादेरपि व्यापकत्वेन व्यभिचारो नास्त्येव । यदि पुनरज्ञाननिवर्त्येनेत्येव व्यापकं विवक्षितं स्यात्तदा मिथ्यात्वस्य विशिष्टज्ञाननिवर्त्यत्वमादाय व्यतिरेकव्यभिचारः स्यात् । न चैवमित्यर्थः । उक्तस्थलीयन्यायामृतानुसारेण नियमादृष्टं बन्धनिवर्तकज्ञाने सहकारितयाऽऽह **तर्हि भाषाप्रबन्धेत्यादि** । यादृशतादृशब्रह्मज्ञानेनैव बन्धनिवृत्तिस्वीकारान्न नियमादृष्टं सहकारितया प्रकृते स्वीक्रियत इत्यत आह **अथवा वेदान्तेति** । अध्ययनस्येत्यादेर्वैयर्थ्यं स्यादित्यनेन संबन्धः । भाषाप्रबन्धजन्यज्ञानेन बन्धनिवृत्त्यङ्गीकारे प्रथमवैयर्थ्यं बाधकम् । अनधीतेत्यादि द्वितीये द्वितीयम् । अधीतवेदान्तेत्यादि तृतीये तृतीयं बाधकम् । तत्र प्रारब्धकर्मप्रतिबद्धज्ञानेन बन्धानिवृत्तिरिति चतुर्थपक्षोऽपि बुद्ध्या विवेकेन प्राप्तोऽतस्तं पृथक्कृत्य तत्र दूषणं भिन्नमेवाह **प्रारब्धवशादिति** । तथा च नियमादृष्टसहकृतब्रह्मज्ञानस्यैव बन्धनिवर्तकतायास्त्वयापि वाच्यत्वाद्यत्सत्यं तद्विशिष्टज्ञाननिवर्त्यं नेत्येव व्याप्तिशरीरस्याङ्गीकर्तव्यत्वे मिथ्यात्वशून्यपापादावुक्तव्यापकाभावेन मिथ्यात्वज्ञान-

निवर्त्यत्वयोर्व्यतिरेकव्यभिचारः स्यादेवेत्युपपन्नं व्यभिचाराभिधानमिति फलितमाह **तथाच विशिष्टस्येति** । मध्ये अदृष्टसापेक्षत्वे कल्पकसद्भावपक्षस्य प्रागर्थतो दूषणात्तं व्यावर्तयितुमन्यथेत्येतत्प्रकारान्तरेण व्याचष्टे **सहकारित्वेनेति** । **अदृष्टकल्पनाप्रसङ्गादिति** मूले अदृष्टकल्पनायाः संभवादित्यर्थः । कल्पकसद्भाव इत्यनेन कल्पनासंभवस्यैव प्राप्तेष्टीकायां प्रसङ्गपदं संभवार्थतया न व्याख्यातम् । यद्वा ननु सहकारित्वेनादृष्टसापेक्षत्वे कल्पकसद्भाव इत्यन्यथेत्यस्य व्याख्यानमयुक्तम् । पूर्ववाक्ये मध्ये दृष्टकल्पकाभावे उक्ते यदि तदभावेऽपि कल्पना तर्हीत्येवान्यथेत्यस्यार्थप्राप्त्योक्तार्थाप्राप्तेः । न च मध्येऽदृष्टेत्याद्यर्थपरत्वेनैतद्वाक्यमर्थतो व्याख्यातमिति तदर्थपरत्वेन पुनर्न व्याख्यायते । अपि तु सेतुदर्शनादिस्थले नियमादृष्टसहकृतज्ञाननिवर्त्यत्वपक्षमवलम्ब्य विशिष्टज्ञाननिवर्त्यत्वस्य मिथ्यात्वव्यभिचारेऽपीत्यादिशङ्कानिवृत्त्यर्थं प्रवृत्तान्यथेति वाक्ये अन्यथेत्यस्य सहकारित्वेनेत्याद्यर्थपरतया व्याख्यानं युक्तमिति वाच्यम् । तथात्वेऽपि पापादेर्विशिष्टज्ञाननिवर्त्यत्वेन मिथ्यात्वव्यभिचारस्वीकार इत्येवार्थप्राप्त्या सहकारित्वेनेत्युक्तार्थप्राप्तेरिति चेन्न । सहकारित्वेनादृष्टसापेक्षत्वे कल्पकसद्भाव इत्यस्य हि यदि सेतुदर्शनादिस्थले सेतुस्थानां पापनिवृत्तिर्नेति कल्पकबलेन सेतुदर्शनसहकारितया नियमादृष्टापेक्षायाः कल्पना स्वीक्रियत इत्यर्थः पर्यवसितः । ततश्च कल्पकसद्भाव इत्यन्तेनादृष्टापेक्षा कल्पनान्तप्रमेयप्रतिपादने सति एकदेशोत्कीर्तनस्य तत्स्थलीयव्यभिचारादोषत्वकथनपर्यन्तत्वे तात्पर्यात्कल्पकसद्भावेन सहकारित्वेनादृष्टसापेक्षतां स्वीकृत्य पापादेर्विशिष्टादृष्टसापेक्षसेतुदर्शनाजन्यत्वं चाङ्गीकृत्य तत्र तथाविधदर्शननिवर्त्यत्वे विद्यमानेऽपि ज्ञानमात्रनिवर्त्यत्वाभावात्तस्यैव च मिथ्यात्वव्याप्ततयाऽङ्गीकारादुक्तव्यभिचारो न दोषायेत्यङ्गीकार इति फलितोऽर्थः । तथाच कुतोऽसङ्गतिः । प्रकृतेऽपि **साम्यादिति** मूलस्यापि भाषाप्रबन्धेत्यादि टीकोक्तरीत्या प्रकृतेऽपि विशिष्टादृष्टजन्यत्वेऽपि ज्ञानमात्रनिवर्त्यत्वाभावान्न मिथ्यात्वप्रसक्तिरिति साम्यादित्यर्थान्वयोपपत्तेरिति ज्ञेयम् । यदि सेतुदर्शनादावदृष्टं कल्प्यते तर्हि ब्रह्मज्ञानस्यापि सहकारित्वेनादृष्टं कल्पयितुं शक्यमित्युक्तं न च तत्संभवति । सेतुदर्शनादावदृष्टकल्पनायां बाधकाभावेन सहकारित्वेन तत्कल्पनोपपत्तावपि पुण्यचितो लोकः क्षीयत इति श्रुतेर्ब्रह्मज्ञाने अदृष्टकल्पनायां तत्साध्यपुरुषार्थस्य यागादिजन्यपुरुषार्थस्येवानित्यत्वापत्तिरूपबाधकसत्त्वेन ब्रह्मज्ञानसहकारित्वेनादृष्टकल्पनानुपपत्त्या वैषम्यादित्याशयं स्पष्टयन्नुत्तरमूलमवतारयति **नन्वदृष्टसाध्यस्येति** । तर्हि ब्रह्मज्ञानस्थले कथञ्चिदप्यदृष्टापेक्षा नास्तीति प्राप्तमित्यतः सहकारीत्येतद्व्यावर्त्यमाह **प्रस्तुतेति** । ततश्च ब्रह्मज्ञानजनकमन्यथासिद्धत्वान्न मोक्षसाधनतया आयातीति भावः । **अदृष्टजन्यत्वं प्रयोजकमिति** । अदृष्टसाध्यत्वे इत्यत्रादृष्टसाध्यत्वं विशिष्टं प्रयोजकतयाऽभिप्रेतमुत साध्यत्वमात्रमनित्यत्वप्रयोजकतयाऽभिप्रेतम् । तच्च साध्यत्वमदृष्टेनेति विवक्षया अदृष्टपदोपादानमिति भावेन विकल्पप्रवृत्तिः । यद्यदृष्टजन्यत्वं मोक्षस्य स्यात्तर्हि अनित्यत्वं स्यादित्यापादनीयम् । तत्र चाप्रयोजकत्वम् । कारणान्तरेण जन्यतायामिवादृष्टजन्यत्वेऽपि अनित्यत्वाप्राप्त्युपपत्तेः । न च कारणान्तरजन्यत्वेऽप्यनित्यत्वमेवेति वाच्यम् । तर्हि जन्यत्वमात्रस्यैव निराकर्तव्यतयाऽदृष्टजन्यत्वनिराकरणायोगात् । जन्यत्वमेवेति द्वितीयपक्षान्तर्भावापाताच्चेति भावेनाद्यं निराकरोति **कारणान्तरेति** । **अनेन ज्ञानजन्यत्वेऽपीति** मूलमेव ज्ञानरूपकारणान्तरजन्यत्वेऽप्यनित्यत्वाभाववददृष्टजन्यत्वेऽपि तदभावोपपत्तेर्ज्ञानादृष्टजन्यत्वपक्षयोः साम्यादिति योजितं भवति । साम्यं चादृष्टजन्यत्वपरित्यागे ज्ञानजन्यत्वमपि त्याज्यं स्यात्तत्स्वीकारे त्वदृष्ट-





जन्यत्वमपि स्वीकार्यमित्येवंरूपेण ज्ञेयम् । द्वितीयनिरासेऽप्येतदेव मूलं योजयति **न द्वितीय इत्याहेति** । उपपादितप्रायत्वात्पृथगनुपपादनम् । ज्ञानजन्यत्वपक्षे जन्यत्वप्रयुक्तानित्यत्वस्यापि प्राप्तिरिति यथा नाभ्युपगम्यते एवमदृष्टजन्यत्वेऽपि जन्यत्वप्रयुक्तमनित्यत्वं न प्राप्नोतीत्यभ्युपेयमिति साम्यमेवेत्याहेत्यर्थः । तथा च मोक्षस्य नित्यत्वप्रसङ्गवारणायादृष्टजन्यतानिराकरणे ब्रह्मज्ञानजन्यत्वमपि त्याज्यं स्यादिति मूलभावोऽपि दर्शितो भवति । एवं मोक्षस्य ज्ञानादृष्टजन्यत्वपक्षयोः साम्याभिधानमसत् जन्यत्वमात्रस्यानित्यत्वप्रयोजकत्वमङ्गीकृत्यादृष्ट-जन्यत्वमेव च प्रयोजकतयाऽङ्गीकृत्य अनित्यत्वापादने ज्ञानप्रतिबन्ध्यवकाशो हि साम्यम् । न च ज्ञानजन्यत्वे-ऽनित्यत्वप्रसङ्ग आयाति । नास्त्यकृतः कृतेनेत्यादि श्रुत्या ज्ञानफलस्य नित्यत्वात् तच्छ्रुतिबलादेव ज्ञानजन्यत्वे विनाशप्रसञ्जकजन्यं विनाशीति व्याप्तेर्जन्यो भावो विनाशीति सङ्कोचकल्पनेन मोक्षस्य च ध्वंसरूपत्वेन जन्यभावत्वाभावादविनाशोपपत्तिरित्यनित्यतायाः परिहर्तुं शक्यत्वात् । अदृष्टजन्यत्वपक्षे तु नानित्यता-परिहारोपायोऽस्ति । तत्फलस्य नित्यताबोधकप्रमाणाभावेनोक्तरीत्या व्याप्तिसङ्कोचकल्पनाद्यनवकाशादिति वैषम्यशङ्कापरतया ज्ञानजन्यत्वेऽपि प्रध्वंसत्वादित्येतद्वाक्यं योजयति **ननु ज्ञानफलस्येत्यादिनेत्यत इत्यन्तेन** । जन्यत्व इत्यस्य जन्यत्वपक्ष इति व्याख्यानं अपीत्यस्य समाधातुं शक्यत्वेऽपीति । अत्र चाशङ्कासमाधानयो-र्मेलनेनावतारकरणाभिप्रायादित्यत इत्यन्तेनाशङ्कावाक्याशयमभिधायोक्तरीत्येत्यादिना समानमेतदिति परिहार-वाक्याशयो वर्ण्यत इति विवेक्तुं शक्यत एवेति ज्ञानजन्यत्वेऽपीतीत्येव प्रतीकोपादानं न दोषाय यद्यपि तथापीत्यादिस्थले इत्याशङ्क्य परिहरतीति इत्याशङ्क्ते **यद्यपीति** । परिहरति तथाऽपीतीत्यादिरूपेणोभयथा-ऽप्यवतारदर्शनात् । ज्ञानजन्यत्वेऽपीतीत्यत्रत्येतिशब्दस्यावृत्तत्वमाश्रित्य द्वितीयस्याद्यर्थकत्वाद्वाक्यद्वयोपादान-लाभसंभवाच्चेत्यवधेयम् । **उक्तरीत्येति** । नियमादृष्टसहकृतब्रह्मज्ञानमेव तन्निवर्तकं त्वयापि वाच्यमित्युक्तरीत्येत्यर्थः । **अदृष्टस्यापीति** । सहकारिणः पृथक् फलाभावेन यत्सहकारिता तत्फलेनैव फलवत्तया तत्फलस्य नित्यताबोधकमेव सहकारिभूतादृष्टफलस्यापि नित्यताबोधकमित्यर्थः । एवमदृष्टसाध्यत्वे मोक्षस्य अनित्यत्वप्रसङ्गान्न तत्साध्यत्वमिति परेणोक्ते तर्हि ज्ञानसाध्यत्वेऽपि जन्यत्वप्रयुक्तमनित्यत्वमायात्येवेति साम्यमिति समाहिते सति तेन प्राप्तनित्यतायाः परिहारोपायभावाभावाभ्यां ज्ञानादृष्टजन्यत्वपक्षयोर्विशेषेण साम्ये आक्षिप्तेऽनित्यतापरिहारोपायस्यादृष्टपक्षेऽपि संभवप्रतिपादनेन विशेषासिद्ध्या साम्यमेवेति समाहितमित्येवं ज्ञानजन्यत्वेऽपि प्रध्वंसत्वादित्यादिवाक्यद्वयस्य जन्यत्वप्रयुक्तानित्यत्वशङ्का ज्ञानपक्षे नोदेति । अदृष्टपक्षे तूदेतीति शङ्का तत्परिहारार्थत्वाभ्यां योजना कृता । इदानीं किं जन्यत्वप्रयुक्तानित्यतापरिहारोपायकल्पनायासेन शङ्काप्रवृत्तिवर्णनेन तत्परिहारवर्णनेन च । अनेनादृष्टज्ञानयो-र्जन्यतावच्छेदकतयाऽभ्युदयत्वध्वंसत्वयोर्नियमादभ्युदयध्वंसयोश्चानित्यत्वनित्यत्वनियमाददृष्टजन्यत्वपक्षेऽभ्युदय-रूपतयाऽनित्यताप्रसङ्गप्राप्तावपि ज्ञानजन्यतापक्षे मोक्षस्य ध्वंसरूपतया नानित्यत्वमायातीत्येवं ज्ञानादृष्टजन्य-त्वपक्षयोरभ्युदयत्वध्वंसत्वाभ्यामेव साक्षाद्वैषम्याशङ्कातत्समाधानयोरुपपत्तेरिति भावेन तथा वैषम्याभिधानेन पूर्ववाक्योक्तसाम्याक्षेपपरत्वेन ज्ञानजन्यत्वेऽपीति शङ्कावाक्यप्रवृत्त्युपवर्णनपूर्वकं ज्ञानजन्यतापक्षवददृष्टजन्यत्व-पक्षेऽपि ध्वंसरूपतासंभवेनाभ्युदयत्वप्रयुक्तानित्यत्वाप्राप्त्या साम्यमेवेत्यर्थकतया समानमेतदित्युत्तरवाक्यपवृत्ति-मुपवर्णयन् पक्षान्तरमाह **यद्वा अदृष्टजन्यत्व इति** । ज्ञानजन्यत्वेऽपीत्यपिपदसमुच्चितार्थोऽयम् । एतद्योजनायामपि

वाक्यद्वयोपादानाभिप्रायेणैव मिलित्वा शङ्कासमाधाने ज्ञानजन्यत्वेऽपीति प्रतीकोपादानम् । आदिपदार्थकतया वृत्तेतिशब्दाश्रयणं वेति न दोषः । **श्रुत्यादीति** । मोक्षनित्यताबोधक'नास्त्यकृतः कृतेने'त्यादिश्रुत्यादीत्यर्थः । तथा च मोक्षस्य ज्ञानजन्यत्वप्रयुक्तध्वंसरूपत्वात् नित्यत्वं श्रुत्यादिबलाच्च ज्ञानफलत्वे नित्यत्वमिति योजितं भवति । अनेनैव ज्ञानसहकारित्वेन वाच्यादृष्टजन्यत्वेऽपि मोक्षस्याभ्युदयत्वाभावध्वंसत्वयोः सत्त्वासत्त्वेनानित्यतापरिहारवन्मोक्ष-नित्यताबोधकश्रुत्यादिबलादेवानित्यतापरिहार इति परिहारवाक्यमपि योज्यमिति सूचितं भवति । प्राक्ज्ञानस्य नित्यफलकताबोधकश्रुत्यादित्वं पुरस्कृत्य मोक्षस्यानित्यतापरिहारोऽभिप्रेतः । एतद्योजनायां तु साक्षादेव मोक्षस्य श्रुतिस्मृतिभ्यां नित्यत्वावगमात् ज्ञानेन जन्यत्वेऽपि नानित्यत्वमायातीति विवक्षितमिति भेदः । न चैवं ध्वंसरूपत्वमपि श्रुत्यादिबलेनैवास्तु किं ज्ञानफलत्वप्रयुक्ततया तदाश्रयणेनेति वाच्यम् । तरतीत्यादि श्रुत्या ज्ञानफलत्वेनैव ध्वंसत्वप्रतिपादनेन ज्ञानफलत्वपुरस्कारेणैव ध्वंसत्वाश्रयणादित्यलं प्रसक्तानुप्रसक्त्या ।

**स०व्र०**— **अनित्यताप्रसक्तिरिति** । अनित्यत्वापत्तिरित्यर्थः । अदृष्टसाध्यस्वर्गादिस्तद्दर्शनादिति भावः । **साम्यादिति** । विशेषणादिज्ञानजन्यविशिष्टज्ञानस्यापि तद्दर्शनादिति भावः ।

**विठ्ठ०**— यज्ज्ञाननिवर्त्यं तन्मिथ्येत्यस्यान्यत्रापि व्यभिचारमाह **किञ्चेति** । **सुप्रसिद्धेति** । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहतीत्यादिपुराणेष्वित्यर्थः । **न प्रमाणमस्तीति** । सेतुदर्शनोत्तरक्षण एव ब्रह्महत्या-व्यपनोदोपपत्त्या यागादिवत् कालान्तरभाविफलत्वाभावेनात्रादृष्टकल्पकत्वाभावादित्यर्थः । प्रकृतेऽपि ज्ञानेन बन्धनिवृत्तिरित्यत्रापि । नात्रादृष्टकल्पनमुचितमिति शङ्कते **अदृष्टसाध्यत्व इति** । **प्रध्वंसत्वादिति** । मोक्षस्य बन्धध्वंसरूपत्वादित्यर्थः ।

**गूढ०**— ज्ञानेन सत्यस्य निवृत्तौ उदाहरणान्तरमाह **किञ्चेति** । ननु तत्रादृष्टद्वारैव सेतुदर्शनस्य पापनिवर्तकत्वं साक्षाज्ज्ञानेन निवृत्तिस्तु मिथ्याभूतस्यैवेत्यत आह **मध्येति** ।

**२१३ सु०— अपि च बन्धविध्वंसलक्षणत्वाद् बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । किं नाम सत्यत्वमेव । न हि मिथ्याभूतस्य शशविषाणादेर्ध्वंसोऽस्ति ।**

**बिन्दुः**— मूले नैव मुक्तिरित्यत्र नञा एवं उक्तिः, इति पदच्छेदमभिप्रेत्यापि व्याचष्टे **अपि चेति** ।

**परि०**— शेषोक्त्या व्याचष्टे **बन्धविध्वंसलक्षणत्वादिति** । मुक्तेरिति योज्यम् ।

**कं०रा०**— ननु बन्धध्वंसो न मुक्तिः । किन्तु तद्बाध एव । स च बन्धस्याध्यस्तत्वं विना नोपपद्यत इत्यध्यासवर्णनं सङ्गतमेवेत्याशयेन शङ्कते **बन्धेति** । **नैवमिति** । एवं बन्धबाधो मुक्तिरिति श्रुतिसूत्रे न वदतः । तरति





शोकमात्मविदिति श्रुत्यादौ बन्धबाधविपरीतस्य शोकतरणशब्दितस्य बन्धध्वंसस्य मुक्तित्वेनाभिध्यानात् । तथा च बन्धबाधो मुक्तिरित्यत्र प्रमाणाभाव इति भावः । ननु विमुक्तश्च विमुच्यत इति प्रागपि मुक्तत्वं श्रुतम् । तच्च पतिपन्नोपाधौ त्रैकालिकनिषेधरूपस्य बन्धबाधस्यैव मुक्तित्व उपपद्यते । तादृशस्य बाधस्य प्रागपि सत्त्वात् । न तु बन्धध्वंसस्य मुक्तित्वे, तस्य प्रागसत्त्वादिति श्रुतार्थापत्तिरेव बन्धबाधो मुक्तिरित्यत्र प्रमाणमस्तीत्यत आह **विमुक्तश्चेति** । **अन्यथैवेति** । बन्धबाधस्य मुक्तित्वाभावेऽपि स्वतश्चिदानन्दात्मके जीवे बन्धस्यास्वाभाविकत्वात्, एतदभिप्रायेण विमुक्तश्च विमुच्यत इति प्रागप्युच्यमानविमुक्तत्वमुपपद्यत इति प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यत इति भाष्यकृता श्रुतार्थापत्तिरन्यथैवोपपादितेत्यर्थः ।

**श्रीनिधि०— बन्धविध्वंसलक्षणत्वादिति** । मुक्तेरिति शेषः ।

**वा०चं०—** एवं संमुग्धतया ज्ञानाद्बन्धनिवृत्तिं मूलस्थमुक्तिपदाभिप्रेततया विवक्षित्वा तस्या अन्यथैवोपपत्तिरभिहिता । अधुना मूलस्थमुक्तिपदस्वारस्यानुरोधेन मुक्तिपदार्थस्य बन्धध्वंसस्य प्रतियोगिसत्यताव्याप्ततयां न तद्विरुद्धबन्धमिथ्यात्वसापेक्षतेति विरुद्धताप्रतिपादनमुखेनान्यथैवोपपत्तिं दर्शयति **अपि चेति** । अत्र मुक्तिशब्दार्थतया बन्धध्वंसस्य प्रसिद्धत्वान्मूलोक्तान्यथाऽनुपपत्तेश्च तत्पक्ष एव संभवात्तमेव पक्षं सिद्धवत्कृत्य विरुद्धतामभिधाय तद्दूषणनिरासाय परेण शङ्कितस्य स्वाभिमतमुक्तिशब्दार्थस्य निरासोऽभिहितो न तु प्रथममेव मुक्तिशब्दार्थं विकल्प्येति द्रष्टव्यम् । ननु पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्ववतोऽपि बन्धस्य स्वरूपेण ध्वंससंभवान्न प्रतियोगिसत्यतानियमो ध्वंसस्य येन मिथ्यात्वसापेक्षता विरुद्धचेतेत्यतः सप्रतियोगिकस्य असत्प्रतियोगिकत्वाभावे सत्यप्रतियोगिकत्वमेव सिद्ध्यतीत्यभिप्रेत्य लोकप्रसिद्धमिथ्याशब्दार्थतयोभयसंप्रतिपन्नासद्वृत्त्यावृत्तिं ध्वंसस्य पतियोगिसत्यत्वनियमे हेतुत्वेनाह **न हीति** । यद्वा बन्धध्वंसरूपत्वान्मुक्तिर्बन्धमिथ्यात्वं नैवापेक्षत इत्युक्तेऽप्रयोजकत्वे प्राप्ते तत्परिहारायं प्रतियोगिमिथ्यात्वस्य ध्वंसविरोधित्वे सिद्धान्तिना वक्तव्ये कथं विरोधित्वमित्याशङ्क्ते **किन्नामेति** । मिथ्यात्वविरोधिसत्यत्वव्याप्तत्वाद्विरोधित्वमिति समाधत्ते **सत्यत्वमेवेति** । तां व्याप्तिमेवोपपादयति **न हीति** ।

**वा०र०— संमुग्धतयेति** । अविवक्षितध्वंसत्वरूपविशेषनिवृत्तित्वसामान्येनेत्यर्थः । **स्वारस्यानुरोधेनेति** । स्वारस्यानुरोधेन मुक्तिपदस्यार्थतया प्राप्तो यो बन्धध्वंसस्तस्येति योजना । तं विवक्षित्वा तस्येति फलति । तस्येत्यस्यान्यथैवोपपत्तिमिति वक्ष्यमाणेन संबन्धः । अन्यथैवोपपत्तिप्रदर्शनप्रकारनिरूपणं बन्धध्वंसस्य प्रतियोगीत्यादि । **तद्विरुद्धेति** । ध्वंसव्यापकसत्यताविरुद्धेत्यर्थः । **विरुद्धतेति** । ध्वंसस्य मिथ्यात्वरूपव्यापकस्याभावरूपसत्यतया व्याप्तत्वे व्यापकत्वाभिमताभावव्याप्तत्वेन विरुद्धतेत्यर्थः । ननु मूले अपि च मुक्तिर्नाम बन्धध्वंसो वा तद्बाधो वा । नाद्यः । तर्हि बन्धमिथ्यात्वं नैवेत्यादिकमुक्त्वा अस्तु तर्हि बन्धबाध एव मुक्तिरिति द्वितीय इति चेत् नैवं श्रुतीत्येवं मुक्तिपदार्थं विकल्प्य प्रथमतः प्रवर्त्यक्रमेण कुतो न कृतम् । बन्धध्वंसरूपतापक्षं सिद्धवत्कृत्य तत्रान्यथैवोपपत्त्यादिकमभिधाय बन्धबाध एवेति पक्षान्तरशङ्कामुत्थाप्य निराकरणमिति प्रकारश्च कुत आश्रित इत्याशङ्कां मनसि कृत्वा परिहरति **अत्र मुक्तिशब्दार्थतयेति** । प्रसिद्धत्वादितिवचनेन विकल्पकोट्योः साम्ये किल

तदवकाशः । न च प्रकृते तथास्तीति प्रथमत एव विकल्पप्रवृत्त्यनुदय इति सूचितं भवति । **निरासोऽभिहित इति** । नैवं श्रुतिसूत्रे इत्यादिनाऽभिधास्यत इत्यर्थः । अथवा पूर्वोत्तरग्रन्थं बुद्ध्या सङ्गृह्य विवेककथनमिति यथाश्रुतमेवाभिहितपदम् । **प्रतियोगिसत्यतानियम इति** । किन्तु सत्यत्वमेवेत्यनेनोक्तस्तन्नियम इत्यर्थः । **असत्प्रतियोगिकत्वाभाव इति** । तदभावेऽपि सत्यप्रतियोगिकत्वं नायाति । निष्प्रतियोगिकत्वेनाप्युपपत्तेरित्यत उक्तं **सत्यप्रतियोगिकस्येति** । उभयप्रतियोगिकत्वयोरन्यतरनिषेधस्यान्यतरविधिव्याप्तत्वादिति भावः । **लोकप्रसिद्धेति** । अत्यन्ताभावप्रतियोगित्वस्य मिथ्याशब्दप्रवृत्तिनिमित्ततया लोकप्रसिद्धत्वात्तेन निमित्तेन मिथ्याशब्दार्थशुक्तिरजतादिवत्तच्छब्दार्थतयोभयसंप्रतिपन्नं यदसत्तस्माद्व्यावृत्तिमिति योजना । असत्प्रतियोगिकत्वाभावमिति यावत् । अनेन सदसद्विलक्षणत्वादिरूपमिथ्यात्वस्यासत्युभयसम्मत्यसंभव इति शङ्काऽपि निराकृता । **यद्वा बन्धध्वंसरूपत्वादिति** । यद्यप्येतद्योजनायामपि विरुद्धताप्रतिपादनमुखेनान्यथैवोपपत्तिप्रतिपादने तात्पर्यमविशिष्टमिति सिद्धमेव । प्रागप्यत्रेवाक्षरयोजना किं नामेत्यादेरभिप्रेत्यैव बन्धध्वंसस्य प्रतियोगिसत्यताव्याप्ततया न तद्विरुद्धमिथ्यात्वमपेक्षतेत्यनुवादश्च कृत इति च सिद्धमेव । न हीत्येतद्योजनायामपि व्याप्त्युपपादनस्य ननु पारमार्थिकत्वाकारेणेत्यादि प्रकारेणैवाश्रयणीयत्वस्य सिद्धेश्च । तदेवं न हि शशविषाणादेरित्येतद्वाक्यान्तमक्षरयोजनाद्यंशेऽवान्तरविशेषेऽपि प्रमेयैक्यमेव । तथापि ननु तथापीत्यारभ्योत्तरग्रन्थस्य तु पूर्वयोजनातः प्रकारान्तरेण योजना वक्ष्यमाणरीत्या अनिर्वाच्यपदस्वारस्येन प्रमेयभेदाभिप्रायेणेत्येतावन्तं विशेषमाश्रित्य यद्वेत्युक्तमिति ज्ञातव्यम् ।

**विठ्ठ०**— बन्धमिथ्यात्वमिति वाक्यं प्रकारान्तरेण योजयति **अपि चेति** ।

**गूढ०**— प्रकारान्तरेण बन्धेति वाक्यं योजयति **अपि चेति** ।

**२१४ सु०— ननु यथा मिथ्याभूताच्छशविषाणादेर्व्यावृत्तौ ध्वंसः सत्ये पर्यवस्यतीति भवतोच्यते । तथा सत्याच्चिदात्मनोऽपि व्यावृत्तौ मिथ्याभूते पर्यवस्यतीति मयाऽपि वक्तुं शक्यत एव । सत्यमापाततस्तथा । तथाऽपि सौत्री अर्थापत्तिः सन्देहास्कन्दिता कुण्ठितैव । अनिर्वाच्यनिरासेन निश्चयमपि भवतो जनयिष्यामः ।**

**परि०**— शङ्कां निराह **सत्यमित्यादिना** । **अर्थापत्तिः** । ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिरूपार्थापत्तिः । **कुण्ठितैव** । बन्धमिथ्यात्वनिर्णयायाक्षमैवेत्यर्थः । **अनिर्वाच्यनिरासेनेति** । मिथ्यापदस्यानिर्वाच्यमर्थ इति त्वदभिमतस्य 'वैलक्षण्यं सदसतोरप्येतेन निषिध्यत' इत्यादिना वक्ष्यमाणदिशा निरासे सति ज्ञाननिवर्त्यत्वं सत्यस्यैवेति तव निश्चयो भविष्यतीत्यर्थः ।

**यादु०**— **वक्तुं शक्यत एवेति** । अनिर्वचनीयस्य मन्मते ध्वंसप्रतियोगित्वादिति भावः । **निश्चयमपीति** । ध्वंसप्रतियोगित्वं सत्यस्यैवेति निश्चयमित्यर्थः ।





**वं०प०**— अर्थापत्तिः ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिरूपार्थापत्तिः कुण्ठितैव मिथ्यात्वनिर्णयाक्षमैवेत्यर्थः । मिथ्याभूतेऽनिर्वाच्ये । **निश्चयमिति** । तथाच मिथ्याभूताच्छशविषाणादेर्व्यावृत्तो ध्वंसः सत्य एव पर्यवस्यतीति निश्चयो भवतीति भावः ।

**वा०चं०**— उभयसंप्रतिपन्नसत्याद्व्यावृत्त्या प्रतिपक्षं शङ्कते **नन्विति** । अयमप्यन्यथाऽप्युपपत्त्यार्थापत्तिराभास एवेति न त्वदिष्टसिद्धिरित्याह **सत्यमिति** । अर्थापत्तेराभासत्वसिद्धावपि सत्यत्वमेवापेक्षत इति मूलस्थैवकाराभिप्रेततयाऽन्यथैवोपपत्तिप्रतिपादनप्रकारस्य प्रतिज्ञातस्य हानिस्तवाप्यनिष्टैवेत्यत आह **अनिर्वाच्येति** । सत्याद् ध्वंसस्य व्यावृत्तिं वदतस्तवापि नोभयसिद्धमिथ्याशब्दार्थासत्प्रतियोगिकत्वं संमतमपि त्वनिर्वाच्यत्वं मिथ्याशब्दार्थत्वेन प्रकल्प्य तत्प्रतियोगित्वं वाच्यम् । तच्च वैलक्षण्यं सदसतोरित्यादिना अनिर्वचनीयत्वनिरासेन सुलभमिति न प्रतिज्ञातहानिरिति भावः । गूढाभिसन्धिः शङ्कते **नन्विति** । अभिप्रायमजानान् इवोत्तरमाह **सत्यमिति** । तावता अन्यथैवोपपत्त्यभावेऽप्यन्यथाऽप्युपपत्त्याऽर्थापत्तेराभासत्वमेवेत्याह **तथाऽपीति** । ध्वंसेऽसद्व्यावृत्तिवत्सद्व्यावृत्तेरपि सत्त्वादसद्व्यावृत्त्या सत्ये पर्यवसाने सद्व्यावृत्त्याऽसत्यपि पर्यवसानापत्त्या तस्याश्च तवाप्यनिष्टत्वादुभयसंप्रतिपन्नसदसद्व्यावृत्तिभ्यां सदसद्विलक्षणे पर्यवसानस्यावश्यवक्तव्यतया ध्वंसप्रतियोगिनः सदसद्विलक्षणत्वसिद्धौ मदिष्टसिद्धिरिति पराभिसन्धिमधुना खण्डयति **अनिर्वाच्येति** । एवं च सत्यान्तराद्व्यावृत्तस्यापि ध्वंसस्य सत्यान्तरप्रतियोगित्वसंभवान्नानुपपत्तिरित्याशयः ।

**वा०र०**— **उभयसंप्रतिपन्नेति** । सत्यप्रतियोगिकत्वसाधकोभयसंप्रतिपन्नासद्व्यावृत्तिहेतोरिति शेषः । **तत्प्रतियोगिकत्वमिति** । अनिर्वचनीयरूपमिथ्याशब्दार्थप्रतियोगिकत्वं त्वया वाच्यमित्यर्थः । **तच्चेति** । अनिर्वचनीयप्रतियोगिकत्वं चेत्यर्थः । **इत्यादिनेति** । वक्ष्यमाणानुव्याख्यानेनेत्यर्थः । **सुलभमिति** । सुलभनिरास इति पाठ इति केचित् । शोधनादिपदगतसुशब्दस्येव दुरर्थतया दुर्लभमित्यर्थ इति त्वपरे । दुर्लभमित्येव पाठ इत्यन्ये । वस्तुतः तच्चेति पाठस्थले तन्निराकरणं चेति पाठान्न दोषः । तन्निराकरणं चेति पाठस्य स्वरसतया व्याख्यानमर्यादया टीकाकृत्संमतत्वावगतेरिति मम प्रतिभाति । **गूढाभिसन्धिरिति** । ध्वंसप्रतियोगिनः सदसद्विलक्षणत्वसिद्धौ मदिष्टसिद्धिरिति मिथ्यात्ववादिनोऽभिसन्धिर्वक्ष्यमाणो द्रष्टव्यः । तथा च पूर्वयोजनायामिवोभयसंप्रतिपन्नसत्याद्व्यावृत्त्या प्रतिपक्षशङ्कने तात्पर्याभाव इति सूचितम् । ध्वंसप्रतियोगिनः सदसद्विलक्षणत्वसिद्ध्यभिप्रायेणासद्व्यावृत्तो यथा ध्वंसो भवति तथा सत्यादपीत्याशयेन सत्यव्यावृत्तौ परेणोपवर्णितायामर्थापत्तेरन्यथोपपत्तिप्रतिपादनमसङ्गतमित्यतः परेण स्वाभिप्रायानाविष्करणात्प्रतीतार्थमुपादायैवान्यथोपपत्तिप्रतिपादनकरणान्नासङ्गतिरित्याह **अभिप्रायमजानान इति** । पूर्वयोजनायामन्यथोपपत्तिप्रतिपादनं तु स्थिरदूषणत्वेन विवक्षितम् । नन्वित्येतच्छङ्काभिप्रेतप्रतिपक्षनिरासकत्वात् । इह तु शङ्कावाक्यप्रतीतार्थमुपादाय तथाविधदूषणस्य न स्थिरत्वम् । पुनराशङ्कायां तद्भङ्गात् इति पूर्वोत्तरयोजनयोर्भेदः स्पष्ट इति ज्ञेयम् । सत्यमित्येतत्परिहारप्रतिज्ञामात्रमवतार्य अन्यथाऽप्युपपत्तिप्रतिपादनरूपपरिहारमवतारयति **तावताऽन्यथैवेति** । गूढाभिसन्धिरित्युक्ताभिसन्ध्युद्घाटनपूर्वकं

तन्निरासपरतया निर्वाच्येति वाक्यमवतारयति **ध्वंसेऽसद्व्यावृत्तिवदित्यादिना** । पूर्वयोजनायामन्यथोपपत्त्या अर्थापत्तेर्दुष्टत्वेऽपि सत्यत्वेनैव ध्वंसोपपत्तिरिति सिद्धान्त्यभिप्रेतप्राप्तिर्न संभवतीति शङ्कानिरासायानिर्वाच्योति वाक्यमवतार्य असत्त्वरूपत्वेन मिथ्यात्वनिर्वचनानङ्गीकारादनिर्वचनीयत्वरूपशशविषाणादिव्यावृत्तमिथ्यात्व-माश्रित्य तथा मिथ्याभूतप्रतियोगिकत्वं ध्वंसस्य वाच्यमिति परेणाङ्गीकारयित्वा न चेदं युक्तमनिर्वाच्यस्य निराकरिष्यमाणत्वादित्यनिर्वाच्येति वाक्याभिप्रायो वर्णितः । परन्तु तत्र ध्वंसप्रतियोगिनोऽसद्भेदमात्रे तात्पर्येऽपि सद्भेदे तात्पर्याभावात्सदसद्विलक्षणत्वरूपमिथ्यात्वे पर्यवसानं परस्य नावश्यकमिति सामान्यतो मिथ्यात्वविवक्षयैव अनिर्वाच्यत्वव्यवहारो मूल इति चाश्रितम् । तद्योजनायां तु नार्थापत्तेरन्यथोपपत्त्या दुष्टत्वमायाति । अर्थापत्तिर्हि ध्वंसप्रतियोगिनः सदसद्भ्यां ध्वंसव्यावृत्त्या सदसद्विलक्षणत्वं गमयति । तथा च कथं सत्यत्वेनाप्युप-पत्त्याऽर्थापत्तेर्दुष्टत्वं वक्तुं शक्यमित्यन्यथोपपत्तिखण्डनेन मिथ्याभूतस्यैव ध्वंस इति स्वाभिप्रेतसिद्धिः संभवत्येवेति वदतः परस्य शङ्कापरिहारायानिर्वाच्येति वाक्यमवतार्य नार्थापत्त्या त्वदभिप्रेतसिद्धिः । ध्वंसप्रतियोगिनो-ऽसद्विलक्षणत्वसिद्धावपि ध्वंसस्य सत्यादात्मनो व्यावृत्त्या न सद्विलक्षणत्वसिद्धिः संभवति । आत्मवत्प्रपञ्चस्यापि सत्यत्वेन सत्यान्तराद्व्यावृत्तिमात्रेण सद्विलक्षणत्वासिद्धेः । ध्वंसो हि यत्सत्याद्व्यावर्तमानस्तत्सत्यविशेष-विलक्षणत्वमेव ध्वंसप्रतियोगिनो गमयेत् । न तु यावत्सत्यविलक्षणत्वम् । अत एव मिथ्यात्वशब्दार्थः सदसद्विलक्षणत्वमपि सतोऽपि सदन्तरविलक्षणत्वोपपत्त्या वैलक्षण्यं सदसतोरित्यनेन निराकरिष्यते । तथा च कथं यावत्सत्यविलक्षणत्वरूपं त्वदीयं सदसद्विलक्षणत्वरूपमर्थापत्तिप्रमेयं सिद्ध्यति । कुतश्चान्यथोपपत्त्याऽर्थापत्ते-र्दुष्टत्वं परिहृतं स्यात् इत्यभिप्रायो वर्ण्यते । तथाऽत्र सदसद्विलक्षणत्वरूपानिर्वाच्यत्वस्यैवार्थापत्तिप्रमेयतया परेणाशङ्कनादनिर्वाच्येत्यनुवादोऽपि मुख्यार्थः । न तु पूर्वत्रेव मिथ्यात्वमात्रविवक्षयेति विशेष इति योजनयोर्भेदः स्पष्ट इति सूरयो विदांकुर्वन्तु । सत्यान्तरप्रतियोगिकत्वसंभवादित्यनेनैव मूलस्थनिश्चयपदं ध्वंसस्य सत्य एव पर्यवसाननिश्चयार्थकतया व्याख्यातं भवति ।

**स०व्र०— अनिर्वचनीयनिरासेनेति** । वैलक्षण्यं सदसतोरित्यनेनेति शेषः ।

**विट्ठ०— सत्यमापातत इति** । सत्याच्चिदात्मनो व्यावृत्तो ध्वंसो मिथ्याभूते पर्यवस्यतीति तावदापाततः प्रतीयते इति सत्यम्, तथापि नानयार्थापत्त्या बन्धस्य मिथ्यात्वनिश्चयः मिथ्याभूतात् शशविषाणादेः ध्वंसस्य व्यावृत्तत्वान्यथानुपपत्त्या प्रतिबद्धत्वेन सन्देहावस्कन्दितत्वादित्यर्थः । तर्हि मुक्तेर्बन्धध्वंसरूपत्वात् ध्वंसस्य च मिथ्याभूतात् व्यावृत्तत्वात् बन्धस्य सत्यत्वनिश्चय इति भवताऽपि वक्तुं न शक्यते मदीयार्थापत्त्या प्रतिरुद्धत्वात् इत्यत आह **अनिर्वाच्येति** । बन्धस्य मिथ्यात्वं नामानिर्वचनीयत्वमेवेति खलु त्वदभिमतं अनिर्वाच्यस्य वैलक्षण्यं सदसतोरित्यत्र निरासे बन्धसत्यतानिश्चयो भविष्यतीति भावः ।

**चषकः— वक्तुं शक्यत एवेति** । अनिर्वचनीयस्यैव ध्वंसप्रतियोगितोरीकृतेरिति भावः । **निश्चयमिति** । ध्वंसप्रतियोगित्वधर्मिकमिथ्यात्वासामानाधिकरण्यप्रकारकनिश्चयमित्यर्थः । **बन्धबाधः** बन्धात्यन्ताभावः । तथाच





तस्य नित्यतया बन्धध्वंसवत्प्रतियोगितासंसर्गावच्छिन्नध्वंसत्वावच्छिन्नजन्यतानिरूपिततादात्म्यसंसर्गावच्छिन्न-जन्यभावत्वावच्छिन्नजनकतापन्नानपेक्षणादिति भावः ।

**गूढ०**— **अर्थापत्तिः** बन्धनिवृत्त्यन्यथानुपपत्तिः । तर्ह्यन्यथैवोपपन्नतामित्युक्तम् । अत आह **अनिर्वाच्येति**।

**२१५ सु०— बन्धबाध एव मुक्तिरिति चेत्। नैवं श्रुतिसूत्रे वदतः। तरति शोकमित्यादौ विपरीताभिधानात्। विमुक्तश्च विमुच्यत इति श्रुतार्थापत्तिस्तु भाष्यकृतैवान्यथोपपादिता।**

**परि०**— मुक्तिर्न बन्धध्वंसः येनोक्तदोषः स्यादिति शङ्कते **बन्धबाध इति। श्रुतिसूत्रे इति।** तरतीत्यादिश्रुतिरग्रे व्यक्ता। जिज्ञासासूत्रं चेत्यर्थः। तत्र बन्धरूपानर्थनिबर्हणहेतुब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्येव प्रतीत्या बन्धबाधस्याप्रतीतेरिति भावः । ननु मास्तु ज्ञाननिवर्त्यत्वबोधकश्रुत्यन्यथा-नुपपत्त्या बन्धमिथ्यात्वसिद्धिः। 'विमुक्तश्च विमुच्यत' इति संसारिणोऽपि, विमुक्तत्वश्रवणान्यथानुपपत्त्या बन्धमिथ्यात्वसिद्धिरस्तु । बन्धस्य सत्यत्वे तदयोगादित्यत आह **विमुक्तश्चेति** । 'प्रमादात्मकत्वा-द्बन्धस्येत्यानन्दमयाधिकरणे भाष्यकृतैव जीवगतबन्धस्य अज्ञानमूलत्वेनास्वाभाविकत्वादस्वाभाविके च अविद्यमानपदप्रयोगदर्शनात् तदभिप्रायेण विमुक्तश्चेत्युक्तिः न तु मिथ्यात्वाभिप्रायेणेत्युपपादितेत्यर्थः।

**यादु०**— **विपरीताभिधानादिति**। अविद्यमानस्य तरणानुपपत्तेस्तरणोक्त्या बाधाभावस्यैवाभिधानादिति भावः। 'विमुक्तश्च विमुच्यत' इति श्रुत्या संसारिणोऽपि मुक्तत्वावगतेस्तदन्यथाऽनुपपत्त्याऽध्यस्तबन्धबाध एव मुक्तिरिति सिद्ध्यतीत्यत आह **विमुक्तश्च विमुच्यत इति** । बन्धस्याध्यस्तत्वाभावेऽपि मुक्तित्वोक्तिर्युज्यते । तस्याज्ञानमूलकत्वेन जीवस्वभावत्वाभावात् । अस्वाभाविके चाविद्यमानपदप्रयोगादिति 'प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यत' इत्यनेन भाष्येणान्यथोपपादितेत्यर्थः।

**वं०प०**— **बन्धबाध एवेति**। तथा च बन्धमिथ्यात्वं प्राप्नोति।

**श्रीनिधि०**— **बन्धबाध एवेति** । तथा च न मुक्तेर्बन्धसत्यत्वापेक्षेति भावः । **श्रुतार्थापत्तिरिति** । बन्धस्य सत्यत्वेऽपि मुक्तित्वोक्तिः न घटते बन्धत्वादेव। मिथ्यात्वे तु घटते। अविद्यमानत्वादेव। अतः प्रतीय-मानेऽपि बन्धे विमुक्तत्वोक्तिरन्यथोपपन्नेत्यर्थः । **अन्यथैवोपपादिता** । प्रमादात्मकत्वात् बन्धस्य विमुक्तत्वं च युज्यत इति सूत्रभाष्येण उपनिषद्भाष्येण चेत्यर्थः।

**वा०चं०**— निवृत्तिर्बाध इति स्वमतानुसारेणाविरोधं शङ्कते **बन्धेति** । आदिपदेन ततो ह्यस्य बन्धविपर्ययावित्यादिसूत्रोपादानम् । **विपरीतेति** । नदीं तरतीत्यादौ सत्यप्रतियोगकसंबन्धध्वंस इव शुक्तिरजतं तरतीत्यप्रयोगाच्छ्रुतौ तरतीत्यबाधस्यैवाभिधानादिति भावः ।

**वा०र०**— तरति शोकमित्यादावित्यव्यवहितोत्तरवाक्यगतादिपदसङ्ग्राह्यमाह **आदिपदेनेति** । इत्यादा-**वितीति** प्रतीकोपादानानन्तरमादिपदेनेति पाठस्तु स्वरस एव । इत्यादिसूत्रेत्यत्रादिपदेन **तरति शोकमात्मविदित्यादौ विपरीतेति** मूले विपरीताभिधानं नाम बाधाभावस्यैवाभिधानमित्यर्थं द्योतयन्नभिधायकांशाप्रतीतेस्तं च वदन् कथमस्याबाधपर्यवसानमित्यतस्तत्र नियामकं चाह **नदीं तरतीत्यादाविति** । निवृत्तिप्रतिपादकं हि तरतीति पदं बाधरूपां निवृत्तिं प्रतिपादयतीति वाच्यम् । न च तत्संभवति । तत्संभवो हि तदा स्याद्यदि बाधितं यच्छुक्तिरजतादि तन्निवृत्तिप्रतिपादनस्थले तरतीति प्रयोगः स्यान्न चैवम् । किन्तु यत्र ध्वंसरूपा निवृत्तिः प्रतिपाद्यते तत्रैव सत्यनदीसंबन्धप्रतियोगिकध्वंसेऽर्थे नदीं तरतीति तरतिपदप्रयोगो दृश्यते । तथा च तरतीत्यनेन ध्वंसाभिधान-मुखेन प्रतियोगिसत्यतावगमस्यानुभवप्राप्तत्वात्तरतीति पदं बाधविपरीतबाधाभावपर्यवसायि जातमित्यर्थः । अत्र च ध्वंस इवेत्यत्र तरतिपदस्येति शेषः । बाधेऽपीति ततःपरं शेषः । तरतिपदस्येत्यस्य पूर्वोत्तरयोः संबन्धः । रजतं तरतीत्यप्रयोगादित्यत्र तरतीत्येवंरूपेण प्रयोगाभावादित्यर्थकत्वाद्बुध्या विवेकेन प्रयोगपदस्याकर्षणं नदीं तरतीत्यादौ सत्यप्रतियोगिकसंबन्धध्वंसे तरतीतिपदस्य प्रयोगवदित्यर्थो लभ्यते । तत्र सत्यस्य ध्वंसाभावादुक्तं **सत्यप्रतियोगिकसंबन्धेति** । संबन्धस्य सत्यत्वमपि सिद्धमिति नोक्तम् । तथोत्तरवाक्यस्य तरतिपदस्य बाधेऽपि शुक्तिरजतं तरतीत्येवंरूपेण प्रयोगाभावादित्यर्थः । तथा चान्वयव्यतिरेकाभ्यां तरतीतिपदस्य ध्वंसाभिधानमुखेन प्रतियोगिबाधाभाव एव पर्यवसन्नत्वान्न तस्य बाधरूपनिवृत्तिप्रतिपादकत्वं युक्तमिति वाक्ययोजनाया अभिप्रेत-त्वादुक्तार्थलाभ इति ज्ञेयम् ।

**स०व्र०**— ननु विमुक्तश्चेति श्रुत्या संसारिणो मुक्तत्वाधिगतेस्तदन्यथानुपपत्त्याऽध्यस्तबन्धबाधो मुक्तिरिति सिद्ध्यतीत्यत आह **विमुक्तश्चेति** । जीवस्य परब्रह्मत्वाभावेऽपि मुक्तत्वोक्तिर्युज्यते । तद्गतबन्धस्य अज्ञानमूलत्वेन अस्वाभाविकत्वात् । अस्वाभाविके त्वविद्यमानत्वव्यपदेशदर्शनादिति प्रमादात्मकत्वादित्यादिना भाष्ये अन्यथोपपादितेत्यर्थः ।

**वि०ठ०**— बन्धध्वंसस्य मुक्तित्वाङ्गीकारे खलु बन्धस्य सत्यतापत्तिः । बन्धबाधं मुक्तिं वदाम इति शङ्कते **बन्धबाध इति । श्रुतिसूत्रे इति** । तमेवं विद्वानित्यादिश्रुतावत्र सूत्रे बन्धबाध इत्यनभिधानेऽपि अन्यथाऽनुप-पत्त्या एवं कल्प्यते इति चेन्न अन्यथोपपत्तेरुक्तत्वात् प्रत्युत तरति शोकमात्मविदिति निगडबन्धं तरतीत्यादि बन्धध्वंसस्यैवाभिधानात् तद्बलात् श्रुतिसूत्रयोरुक्तार्थतैव इति भावः । विमुक्तश्च विमुच्यते इति श्रुत्या संसारिणो विमुक्तत्वावगतेस्तदन्यथानुपपत्त्याध्यस्तबन्धबाधो मुक्तिरित्यत आह **विमुक्तश्चेति** । प्रागपि मुक्तत्वश्रवणान्यथा-नुपपत्त्या बन्धमिथ्यात्वमपि कल्पनीयमिति चेन्न प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते इति बन्ध-मिथ्यात्वं विना मुक्तत्वस्यान्यथोपपादितत्वात् इत्याह **विमुक्तश्चेति** । बन्धस्याध्यस्तत्वाभावेऽपि विमुक्तत्वो-क्तिर्युज्यते तस्याज्ञानमूलकत्वेन जीवास्वभावत्वात् अस्वाभाविके चाविद्यमानपदप्रयोगादिति प्रमादात्मकत्वात् बन्धस्य विमुक्तत्वं च युज्यते इति भाष्ये व्युत्पादितमिति भावः ।





**चषकः**— विमुक्तश्च विमुच्यत इति श्रुतौ बन्धापादानकमोचनक्रियाकर्तृत्वविशेषितस्यैव संसारिणस्तिङन्तशक्तिविषयक्रियाकर्तृत्वावगतेर्बन्धविपर्यस्ततामन्तरेणानुपपद्यमानतया तादृशाध्यस्तबाधाभाव एव मुक्तिरिति सेत्स्यतीत्यत आह **विमुक्तश्चेति** । बन्धस्य विपर्यस्तत्वानुपगमेऽपि तस्याज्ञाननिबन्धनत्वोरीकारेण जीवनिसर्गत्वाभावेनानैसर्गिके चाविद्यमानपदप्रयोगदर्शनेन प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यत इति भाष्यकृतैव भङ्ग्यन्तरेणोपपादिततया विमुक्तत्वोक्तिः सङ्गच्छत एवेत्यर्थः ।

**गूढ०**— ननु विमुक्तश्चेत्यत्र संसारदशायां मुक्तत्वोक्तिस्तन्मिथ्यात्वं विनानुपपद्यमानत्वादाक्षिपतीत्यत आह **विमुक्तश्चेति** । संसारस्यास्वाभाविकत्वानुरोधेन तथोक्तिरिति भावः । एतावत्पर्यन्तम् अन्यथैवोपपत्तिसूचनार्थं एवमुक्तिरिति पदच्छेदेन योजनाः प्रदर्शिताः ।

**२१६ सु०— अपि च एवमुक्तिः ब्रह्मज्ञानं जीवगतं बन्धं निवर्तयतीति सौत्री प्रयोजनोक्तिः बन्धमिथ्यात्वं नापेक्षते । यदि जीवज्ञानं जीवगतस्य बन्धस्य निवर्तकमिति प्रयोजनोक्तिः सूत्रे स्यात्तदा कथञ्चिदपेक्षेताऽपि बन्धमिथ्यात्वम् । न चैवं सूत्रकृदाह । न हि शुक्तिकायामारोपितं रजतं घटज्ञानान्निवर्तते । ब्रह्मज्ञानं नाम त्वंपदार्थस्य जीवस्य तत्पदार्थेन ब्रह्मणैक्यानुभव इति तु स्वगोष्ठीनिष्ठं प्रलापमात्रम् । निराकरिष्यमाणत्वात् ।**

**परि०— इति प्रयोजनोक्तिरिति** । अथातो जीवजिज्ञासेति यदि स्यादित्यर्थः । **कथञ्चिदिति** । गरुडध्यानसेतुदर्शनरूपज्ञानस्य स्वसमानाधिकरणसत्यविषादिनिवर्तकत्वं दृष्टमिति तदाऽपि न मिथ्यात्वसिद्धिर्बन्धस्य । तथापि स्वात्मन्यारोपितदेहादितादात्म्यं स्वात्मयाथात्म्यज्ञाननिवर्त्यं दृष्टमिति तद्वच्छङ्कास्पदं भवतीति कथञ्चिदित्युक्तम् । जीवेऽध्यस्तो बन्धो ब्रह्मज्ञानान्निवर्ततामित्यत आह **न हीति** । किन्त्वधिष्ठानभूतशुक्तितत्त्वज्ञानादेवेति वाक्यशेषः । **निराकरिष्यमाणत्वादिति** । 'सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चने'त्यादिना अत्रैवाधिकरणे किञ्चिदुपरिभाग इति भावः ।

**वं०प०**— एवं जीवस्वरूपे आरोपितकर्तृत्वभोक्तृत्वादिरूपबन्धोऽधिष्ठानभूतजीवज्ञानान्निवर्तत इत्युक्तिर्यदि स्यात्तदा बन्धमिथ्यात्वमपेक्षेतेत्यर्थः । सत्यस्यापि निवृतौ बाधकाभावस्योक्तत्वात्कथञ्चिदित्युक्तम् । ब्रह्मज्ञानं जीवगतं बन्धं निवर्तयतीति सौत्री प्रयोजनोक्तिः कुतो बन्धमिथ्यात्वं नापेक्षते । ब्रह्मज्ञाननिवर्त्यत्वे बाधप्राप्त्या बन्धस्य मिथ्यात्वं प्राप्तमेवेत्यतो बन्धस्य ब्रह्मज्ञानं निवर्तकमेव न भवतीत्याशयेनाह **न हीति** । तथा जीवगतो बन्धो न ब्रह्मज्ञानान्निवर्तत इति भावः । ननु न ब्रह्मज्ञानं घटज्ञानतुल्यमित्याशङ्क्ते **ब्रह्मज्ञानं नामेति** ।

**श्रीनिधि०— कथञ्चिदपेक्षेतापीति** । सत्यस्य निवृत्तौ बाधकाभावात् कथञ्चिदित्युक्तम् । अधिष्ठान-याथात्म्यज्ञाननिवर्त्यस्य तत्र कल्पितत्वं दृष्टं रजतादाविति भावः । **न चैवमिति** । ब्रह्म च न बन्धाधिष्ठानं ब्रह्मज्ञानं च न जीवज्ञानमिति हृदयम् । अन्यत्रारोपितस्यान्यज्ञानान्निवृत्तिः किं न स्यादित्यत आह **न हीति** । शुक्तिकाया-मारोपितं रजतादि अधिष्ठानयाथात्म्यज्ञानान्निवर्तते न तु अधिष्ठानभिन्नघटादिज्ञानात् । तथा च यदि जीवगतबन्धस्य आरोपितत्वमभिप्रेतं स्यात् तदा ब्रह्मज्ञानान्निवृत्तिं न ब्रूयादिति भावः । ननु साक्षात्कृतब्रह्मणां न सद्यःशरीरपातापत्तिः प्रारब्धकर्मणां प्रतिबन्धकानां सत्त्वात् । अन्यथा भवत्पक्षेऽपि तत्प्रसङ्गः इत्यत आह **एतच्चेति** । तृतीयेऽध्याये 'परप्रसादनेच्छोस्तु विलम्बो नाम युज्यत' इत्यादिनेति शेषः । प्रारब्धकर्मणामज्ञानकार्यत्वेन सविलासाविद्या-निवर्तकज्ञाननिवर्त्यत्वात् तत्प्रतिबन्धकत्वं न संभवति, न हि निवर्त्यमेव प्रतिबन्धकं भवतीति भावः ।

**वा०चं०**— एवं मुक्तिरिति पदच्छेदेनान्यथोपपत्तिमुपपाद्यैवम् उक्तिरिति पदच्छेदमुपेत्य तामुपपादयति **अपि चेति** । अधिष्ठानज्ञानस्य तदारोपितनिवर्तकत्वदर्शनाज्जीवज्ञानं तद्गतबन्धनिवर्तकमित्युक्ते बन्धस्यारो-पितत्वलाभेऽप्यधिष्ठानेतरज्ञानस्यान्यगतनिवर्तकत्वादर्शनान्न तदुक्त्या तस्यारोपितत्वसिद्धिरित्याह **ब्रह्मेति** । एवमित्युक्तिलब्धमाह **यदीति** । जीवज्ञानेन सत्यस्यापि जीवगतबन्धस्य निवृत्तौ बाधकाभावान्न तथोक्त्याऽपि नियमेन बन्धमिथ्यात्वसिद्धिरित्याशयेनोक्तं **कथञ्चिदिति** । विवक्षितब्रह्मज्ञानस्य जीवज्ञान एव पर्यवसाना-न्नानुपपत्तिरिति शङ्कते **ब्रह्मेति** । **निराकरिष्यमाणत्वादिति** । सत्यत्वात्तेनेत्यादिनैक्यस्य न चाप्येकत्वविज्ञाना-दित्युक्तन्यायेन मुच्यत इत्यैक्यज्ञानस्य बन्धनिवृत्तिहेतुतायाश्च निराकरिष्यमाणत्वादित्याशयः ।

**वा०र०**— न हि शुक्तिकायामारोपितमित्युत्तरवाक्यार्थं वक्तुमाह **अधिष्ठानेतरेति** । **तदुक्त्येति** । अधिष्ठानभूतजीवेतरब्रह्मज्ञाननिवर्त्यत्वोक्त्येत्यर्थः । **एवमितीति** । एवमुक्तिनपिक्षत इति । विशेषोक्तेस्तदितरोक्तौ तदपेक्षालाभादिति भावः । **विवक्षितेति** । तथा च जीवज्ञानं तद्गतबन्धनिवर्तकमित्यनुक्तावपि ब्रह्मज्ञानमित्येवोक्तावपि जीवज्ञानमेव पर्यवसानेन लब्धमिति भावः । ब्रह्मज्ञानं नामेत्यनेन जीवब्रह्मणोरैक्यं तज्ज्ञानस्य मोक्षहेतुता चेति प्रमेयद्वयप्रतिपादनात्तदनुसारेण व्याख्याति **सत्यत्वात्तेनेत्यैक्यस्येत्यादिना** ।

**गूढ०**— इदानीं तु एवं उक्तिरिति पदच्छेदेन प्रयोजनान्तरमाह **अपि चेति** । कुतो नेत्यत आह **यदीति** । ननु ब्रह्मज्ञानस्य जीवगतत्वाभावेऽपि तेन तन्निवर्त्यमिथ्यात्वापेक्षा कुतो नेत्याशङ्क्य अन्यज्ञानेनान्यत्रारोपितनिवृत्तिर्न दृष्टा । अन्यथा घटज्ञानेन शुक्तावारोपितरजतनिवृत्त्यापत्तेरित्याह **न हीति** । ननु ब्रह्मज्ञानमपि जीवज्ञानमेव त्वंपदार्थस्य जीवस्य तत्पदार्थेन ब्रह्मणैक्यानुभवस्यैव ब्रह्मज्ञानशब्दार्थत्वात्तथाच मिथ्यात्वापेक्षा आवश्यकीत्यत आह **ब्रह्मज्ञानमिति** । बृहवृद्धाविति धातोः पूर्णत्वप्रकारकपरमात्मज्ञानस्यैव तच्छब्दार्थत्वेनान्योक्तेः प्रलापमात्रत्व-मिति भावः । **निराकरिष्यमाणत्वात्** । पृथगधिकरणादाविति शेषः ।

**२१७ सु०—** अपि च यदि **बन्धमिथ्यात्वं** यदि च ज्ञानमात्राद्बन्धबाधः तदा ज्ञाने सति किमपि **मुक्तिर्नैवापेक्षत** इति सद्य एव साक्षात्कृतब्रह्मणां शरीरादिनिवृत्तिः प्रसज्येतेति अर्थापत्तेस्तर्कविरोधः। एतच्च तृतीये प्रपञ्चयिष्यामः।

एवं सूत्रितप्रयोजनाक्षिप्तं बन्धमिथ्यात्वमिह वर्णितमित्येतन्निराकृतम्।

**परि०—** यदि तदेत्यध्याहृत्य वाक्यं योजयति **यदि बन्धमिथ्यात्वमिति**। तस्यैवार्थः यदि च ज्ञानमात्राद्बन्धबाध इति। **अर्थापत्तेरिति**। मिथ्यात्वसाधकज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तेरित्यर्थः। **तृतीय इति**। अध्याये 'परप्रसादनेच्छोस्तु विलम्बो नाम युज्यते। पुमिच्छाधीनता नोचेद्विलम्बः किं कृतो भवेदि'त्यादिनोपासनापादे अन्त्यभागे प्रपञ्चयिष्याम इत्यर्थः।

**वं०प०—** **सद्य एवेति**। तथा च वातपुत्रीया ब्रह्मोपदेशाः प्रसज्येरन्नित्याशयः।

**वा०चं०—** एवमर्थापत्तेरन्यथोपपत्तिप्रतिपादकतया मूलं व्याख्यायाधुना बन्धमिथ्यात्वमित्यस्योद्देश्यकोटिनिवेशं ज्ञानस्वभावत इत्यनुवृत्तस्य ज्ञानमात्रादित्यर्थं मुक्तिशब्दस्यावृत्तिं तस्य बन्धबाधार्थकत्वं योग्यतया ज्ञाने सति किमपीत्यस्योपपादके एवकारेण सद्य एवेत्यस्य ज्ञानमात्रादित्युक्तिसामर्थ्येन साक्षात्कृतब्रह्मणामित्यस्य च लाभं मुक्तिशब्दस्य शरीरादिनिवृत्तिपरत्वमुद्देश्यस्य विधेयकोटिप्रवेशं प्रसङ्गतात्पर्यं चाभिप्रेत्य तर्कबाधपरतयाऽपि योजयति **अपि चेति**। ननु ज्ञानमात्राद्बन्धबाधेऽपि प्रारब्धकर्मवशाद्वां दग्धपटायमानाविद्यावशाद्वाऽविद्यासंस्कारवशाद्वाऽविद्यालेशवशाद्वाऽविद्याकारद्वयनिवृत्तावपि तृतीयाकारानुवृत्तेर्वा न सद्यःशरीरादिनिवृत्तिरित्यत आह **एतच्चेति**। न चाप्येकत्वविज्ञानादिति वाक्यव्याख्यावसरे एतत्परिहारेण प्रपञ्चयिष्याम इत्यर्थः।

**वा०र०—** पूर्वयोजनासु मुक्तिर्बन्धमिथ्यात्वं नापेक्षत इत्यादिरूपेण मिथ्यात्वस्य विधेयकोटिनिवेशेनैव अर्थापत्तिदूषणपरत्ववर्णनं यथा तथोत्तरयोजनायां नेति दर्शयन् यदि बन्धमिथ्यात्वमित्येवं प्रागुक्तप्रकारातिरिक्तप्रकारेण योजनयोद्देश्यकोटिनिवेशलाभेऽपि तर्कविरोधप्रतिपादनोपयोगि यदि च ज्ञानमात्रादित्यादेर्लभः कथमित्यतो मूलकाराभिमतानुवृत्त्या वृत्त्यर्थान्तरस्वीकारादिबलादिति दर्शयन्नुत्तरयोजनां सङ्गमयति **एवमर्थापत्तेरिति**। मुक्तिपदस्योद्देश्यकोटिनिवेशं मिथ्यात्वमित्यस्य विधेयकोटिनिवेशं चाश्रित्येति वक्ष्यमाणविवेकाल्लभ्यते। **उद्देश्यकोटिनिवेशमिति**। यदि बन्धमिथ्यात्वं स्यादित्येवमित्यर्थः। द्वितीयान्तानां सप्तानामभिप्रेत्येति वक्ष्यमाणेनान्वयः। इत्यस्येत्येतद्द्वयस्य लाभमित्युत्तरेण संबन्धः। यदि च ज्ञानमात्रादित्यर्थलाभायोक्तं ज्ञानमात्रादित्यर्थमित्यन्तम्। बन्धबाध इत्यर्थलाभायाह **मुक्तिशब्दस्येत्यादि**। आवृत्तिश्च द्वेधेति ज्ञातव्यम्। **तस्य बन्धेति** द्वेधा वृत्तस्य त्रित्वे पर्यवसानाच्छ्रुतातिरिक्तद्वयोर्मध्ये आद्यस्येत्यर्थः। एवं सति यदि बन्धमिथ्यात्वं

स्याद्यदि च ज्ञानमात्रादेव बन्धबाधः स्यात्तर्हि स बाध एवेत्येव तर्कप्रवृत्तावप्रयोजकत्वशङ्कावारणाय मध्ये आपादकस्योक्तापाद्यं प्रति प्रयोजकत्वोपपादनमावश्यकमिति भांवेन तदुपपादकाभिधानं मूल इत्याशयेन तल्लाभप्रकार उक्तो **योग्यतयेति**। **इत्यस्योपपादक इति**। मुक्तिपदस्य द्वितीयस्य सामान्यतो मुक्तिपदार्थत्वेनोभयसम्मतमात्रार्थत्वं नैवापेक्षत इत्यंशसंबन्धं चाश्रित्य मुक्तिर्नैवापेक्षत इत्येतदुपपादकम्। तत्र ज्ञाने सति किमपीत्येतयोर्योग्यतया लाभ इत्याशयो वर्णितोऽनेन भवति। **एवकारेणेति**। नैवेत्युपपादकगतैवकारेणेत्यर्थः। यद्वोपपादक इत्यस्योत्तरत्रापि संबन्धः। **मुक्तिशब्दस्येति**। श्रुतमुक्तिशब्दस्येत्यर्थः। यद्वोपपादके श्रुतस्यैव यथास्थितस्य ग्रहणमिह त्वावृत्तस्येति ज्ञेयम्। **उद्देशेति**। मुक्तिशब्दस्येति वर्तते। यदि च ज्ञानमात्राद्बन्धबाध इति पूर्वत्रोद्देश्यकोटिनिवेश उक्तः। इह तु शरीरादिनिवृत्तिः स्यादिति विधेयकोटिनिवेश इति पूर्वमेतदर्थद्वयं मिलित्वोभयप्रवेशोऽभिमतः। न तु सन्निधानाच्छरीरादिनिवृत्त्यर्थकस्योभयप्रवेश इति भ्रमितव्यमित्यदोषः। तात्पर्यं तर्कविरोधरूपम्। फलं तर्कस्वरूपनिर्माणस्येति भाव इति सुधीभिष्टीकाभिप्रायो बोध्यः। विद्यैव तु निर्धारणादित्येतदधिकरणीय-मोक्षसाधनविचारावसरे एकत्वविज्ञानं मोक्षसाधनमित्येतन्मतनिराकरणाय प्रवृत्तं 'न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत' इत्येतदनुभाष्यव्याख्यानावसरे एतेन प्रारब्धकर्मवशादिति दग्धपटेति तत्संस्कारेण द्वैतेति। एतेनाविद्या-लेशेति अथ मतं संसारमूलकारणेत्यादिकं च ग्रन्थं मनसि कृत्वाह **ननु ज्ञानमात्रादित्यादिना**। **आकारद्वयेति**। बन्धस्य परमार्थसत्यत्वविभ्रमहेतुरेकोऽपरोऽर्थक्रियासमर्थवस्तुकल्पक इत्याकारद्वयेत्यर्थः। **तृतीयाकारेति**। अपरोक्षप्रतिभासविषयाकारकल्पको योऽविद्याकारः स तृतीयो ज्ञेयः।

**स०व्र०— अपि च यदीति**। ऐक्यसाक्षात्कारो हि सविलासाविद्यां विच्छिन्द्यात्। ततश्च भेददर्शन-रहितस्य शरीरपालनाद्यर्था भिक्षाटनादिप्रवृत्तिर्न स्यात्। न चाविद्यांशवती येनाविद्यालेशावस्थाननिमित्ता प्रवृत्तिः स्यात्। तथात्वे तस्य लेशस्यैक्यसाक्षात्कारेऽप्यनिवृत्तस्य कदाप्यनिवृत्तिप्रसङ्गः। प्रारब्धकर्मादिवशादनिवृत्तिरिति चेत्। कमदिरप्यविद्याकार्यस्यैक्यसाक्षात्कारेण समूलघातं हतत्वात्। प्रक्रियामात्रस्य चाप्रामाणिकत्वादिति भावः।

**विठ्ठ०—** अविद्यासंस्कारवशाद्वा प्रारब्धकर्मवशाद्वा शरीराद्यवस्थानमित्यत आह **एतच्चेति**।

**चषकः— प्रपञ्चयिष्याम इति**। साधनलक्षणे उपासनाचरणान्त्यभागे परप्रसादनेच्छोस्त्वित्या-द्यानुपूर्वीकानुव्याख्याप्रतीकव्याख्यावसरे संस्कारकमदिरप्यज्ञानोपादानकत्वेन तन्निवृत्तावव्स्थानासंभवात्। नहि भावकार्यमुपादानातिरेकेणावतिष्ठते। न चाविद्यांशवती येनाविद्यालेशावस्थाननिमित्तमिदं सर्वमुपपद्यत इति ग्रन्थेन अविद्यासंस्काराद्वा प्रारब्धकर्मवशाद्वा शरीरावस्थानं नेति व्यक्तीकरिष्याम इत्यर्थः।

**गूढ०—** अनुपपत्त्यभावोऽन्यथोपपत्त्यन्यथैवोपपत्तिरूपार्थापत्तिदूषणत्रयपरत्वेन बन्धेति वाक्ययोजन-मभिधाय प्रमाणविरुद्धत्वरूपदूषणपरत्वेनापि योजनामाह **अपि चेति**।





**२१८ सु०— अथवा विषयोक्त्याक्षिप्तम् इत्येतदनेन निराचष्टे । एवमुक्तिः सौत्री ब्रह्मणो विषयत्वोक्तिः बन्धमिथ्यात्वं नैवापेक्षते । यदि हि सूत्रे जीवात्मनो विषयतयोक्तिः स्यात्तदा सा तस्य सन्दिग्धतासिद्धये कर्तृत्वादिबन्धमिथ्यात्वं कथञ्चिदपेक्षेतापि । ब्रह्मैव ह्यत्र विषयतयोच्यते । न ह्यन्यस्य सन्दिग्धतयाऽन्यस्य विचारविषयतोपपद्यते । अतिप्रसङ्गात् । आत्मैव ब्रह्मेत्येतां तु दुराशामपाकरिष्यामः ।**

परि०— **कथञ्चिदपेक्षेतापीति** । बन्धस्य सत्यत्वेऽपि देहादिविविक्तत्वाविविक्तत्वाणुत्व-महत्त्वनित्यत्वानित्यत्वादिनापि सन्देहसंभवात्कथञ्चिदित्युक्तम् । **न ह्यन्यस्येति** । जीवस्येत्यर्थः । **अन्यस्येति** । ब्रह्मण इत्यर्थः । **अपाकरिष्याम इति** । 'न ब्रह्मतां वदेद्वेद' इत्यादिनेति भावः ।

**वं०प०— सन्दिग्धतेति** । आत्मा च ब्रह्म तस्य चाहं कर्तेत्याद्युक्तरीत्येत्यर्थः । **अन्यस्य** जीवात्मनः **अन्यस्य** ब्रह्मणः । नन्वात्मन एव ब्रह्मत्वाज्जीवस्य सन्दिग्धत्वेऽपि ब्रह्मणो विषयत्वं युक्तमित्यत आह **आत्मा चेति** ।

**श्रीनिधि०— कथञ्चिदपेक्षेतापीति** । बन्धस्य सत्यत्वेऽपि कर्तृत्वाद्याकारेण सन्दिग्धत्वेऽपि परमेश्वरा-धीनत्वाद्याकारान्तरेण सन्दिग्धत्वेन विषयत्वसंभवादिति भावः । **अपाकरिष्याम इति** । 'यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेदि'त्यादिनेति भावः ।

वा०चं०— मुक्तिपदोपेततया प्रयोजनान्यथानुपपत्तिमात्रनिराकरणार्थं भाष्यमिति भ्रान्तिं निरस्यति **एवमिति** । कर्तृत्वादेर्मिथ्यात्वाभावेऽपि देहव्यतिरिक्तत्वाणुत्वादिना सन्दिग्धतायाः संभवाभिप्रायेण कथञ्चि-दित्युक्तम् ।

वा०र०— **मुक्तिपदोपेततयेति** । यद्यपि प्रयोजनान्यथानुपपत्तिनिराकरणपरतया योजनापक्षेऽपि चैव-मुक्तिर्ब्रह्मज्ञानमित्येतद्योजनायां मुक्तिपदं परित्यज्योक्तिपदमेव विषयाक्षिप्तं बन्धमिथ्यात्वमिति पक्ष इव स्वीकृतम् । तथापि मुक्तिपदघटितयोजनाबाहुल्यविवक्षया मुक्तिपदोपेततयेत्युक्तम् । मूले एव मुक्तिरित्येतल्लब्धमाह **यदि हि सूत्र इति** । एवमुत्तरयोजनायामपि । नन्वेतच्छङ्कानिरासायैवात्मा ब्रह्मेति प्रागुक्तमित्यत आह मूले **आत्मैव ब्रह्मेत्येतामिति** । **अपाकरिष्याम इति** । सत्यत्वात्तेन दुःखादेरित्यादिनैतदधिकरण एवेति शेषः ।

**स०व्र०— अपाकरिष्यामः** । यजमानप्रस्तरत्वमित्यनेन ।

**विठ्ठ०**— संस्कारकर्मादिरपि आविद्यकत्वेन तन्निवृत्तावस्थानासंभवान्नोक्तमुपपन्नमित्युपासनापादे 'पुमि-च्छाधीनता नो चेद्विलम्बः किंकृतो भवेदि'त्यत्र प्रपञ्चयिष्याम इत्यर्थः । **कथञ्चिदपेक्षेतेति** । बन्धस्य सत्यत्वेऽपि देहादिविविक्तत्वादिना सन्देहसंभवात् कथञ्चिदित्युक्तम् । **अपाकरिष्याम इति** । न ब्रह्मतां वदेद्वेद इत्यत्रेत्यर्थः ।

**गूढ०**— एवं योजनाषट्केन प्रयोजनान्यथानुपपत्त्या बन्धमिथ्यात्वमाक्षिप्यत इति निराकृत्य विषयोत्त्यन्यथाऽनुपपत्त्या तदाक्षिप्तमित्येतन्निरासाय योजनान्तरमाह **अथवेति** । **कथञ्चिदिति** । बन्धस्य सत्यत्वेऽपि देहाद्विविक्तत्वादिना जीवस्य सन्दिग्धताया उपपादयितुं शक्यत्वादिति कथञ्चिदित्युक्तम् । ननु जीवसन्दिग्धता ब्रह्मणो विषयत्वोपयोगिनीत्यत आह **न हीति** । **अन्यस्य** जीवस्य । **अन्यस्य** ब्रह्मणः । नन्वात्मब्रह्मणोरेकत्वात् तस्य सन्दिग्धत्वोपपादनं ब्रह्मणो विषयत्वोपयोगि स्यादित्यत्राह **आत्मैवेति** । **अपाकरिष्यामः** । न ब्रह्मतां वदेद्वेद इत्यत्रेति शेषः ।

**२१९ सु०— यद्वा सकलतन्त्रार्थोपोद्घातः प्रयोजनं युष्मदस्मदित्यादिग्रन्थस्य इत्येतदनेनापाकरोति । तथा हि । एवमुक्तिः सकलजगज्जन्मादिनिमित्तत्वलक्षणं समस्तजीवजडात्मकात्प्रपञ्चादत्यन्तव्यावृत्तं ब्रह्मैवाशेषवेदप्रतिपाद्यमित्येवं "तत्तु समन्वयात्" इत्यादिकोक्तिः जीवगतबन्धमिथ्यात्वं नैवापेक्षते । एषा हि ब्रह्मण्येव प्रमाणाभासप्रतिपन्नस्य जीवाभेदादेरेव मिथ्यात्वमपेक्षते । यदि हि जीवस्य ब्रह्मतायां सकलवेदान्तपर्यवसानं प्रतिपादयितुमिदं शास्त्रं प्रवृत्तं स्यात्तदा विरोधशान्त्यै बन्धमिथ्यात्वापेक्षा । न चैवम् । यथा चैतत्तथा वक्ष्यामः ।**

**परि०**— एवमध्यासभाष्यस्य परोक्तसङ्गतिद्वयं निरस्य तृतीयामपि सङ्गतिं निराकर्तुमिदमेव वाक्यं प्रकारान्तरेण व्याख्याति **यद्वा सकलेति** । **इत्यादिग्रन्थस्येति** । परकीयाध्यासभाष्यस्येत्यर्थः । **यथा चैतत्तथा वक्ष्याम इति** । 'निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयमि'ति 'कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानत' इत्यादि च जन्माधिकरणे । 'तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम् । वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तममि'तीक्षत्यधिकरणे तत्रतत्रेति भावः ।

**यादु०**— **विरोधशान्त्या इति** । विरुद्धधर्माधिकरणत्वेन ब्रह्मात्मताया अयोगादिति भावः । **बन्धेति** । जीवगतदुःखादीत्यर्थः । **वक्ष्याम इति** । अस्मिन्नेवाधिकरणे 'सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चने'त्यादिनेति शेषः ।

**श्रीनिधि०**— **यथा चैतत्तथा वक्ष्याम इति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धय' इत्यनुव्याख्यानव्याख्यावसर इति भावः । ननु मूले बन्धमिथ्यात्वं नार्थापत्तिप्रमेयं प्रमाणबाधितत्वादित्युच्यते । असिद्धत्वेनैवार्थापत्तिप्रमेयत्वाभावः ।

**वा०चं०**— ननु न प्रतिज्ञामात्रेण सूत्रार्थनिश्चयः । तत्तु समन्वयादित्यादिकं न सर्वव्यावृत्तसगुणब्रह्मणोऽशेषवेदप्रतिपाद्यत्वपरम् अपि तु अद्वितीयनिर्गुणब्रह्मणोऽशेषोपनिषत्प्रतिपाद्यत्वपरमिति विपरीतस्यापि प्रतिज्ञातुं





शक्यत्वादित्यतो युक्तिपूर्वं समन्वयसूत्रादेर्भवदुक्तार्थपरतानिराकरणेन अस्मदुक्तार्थपरताया ईक्षत्यधिकरणादौ साधयिष्यमाणत्वान्न प्रतिज्ञामात्रमेतदित्याह **यथा चेति** ।

**स०व्र०— यथा चैतत्तथा वक्ष्यामः ।**

**वि्ठ०— वक्ष्याम इति** । न ब्रह्मतामित्यस्मिन् अधिकरणे 'कथं नित्यगुणस्यास्य स्यादैक्यमि'ति जन्माधिकरणे 'तस्मात् शास्त्रेण जिज्ञास्यमिती'क्षत्यधिकरणादौ तत्रतत्रेत्यर्थः । मुक्तिरपेक्षते इति योजना ।

**चषकः— वक्ष्याम इति** । प्रकृतनय एव 'सत्यत्वात्तेन दुःखादेरि'त्यादिना जन्मादिनये 'निर्गुणत्वं च तेनैवे'त्यादिनेक्षतिनये च 'वासुदेवाख्यमि'त्यादिनाभिधास्याम इत्यर्थः ।

**गूढ०—** अत्यन्तव्यावृत्तिः केन पदेनोक्तेत्यत उक्तं **ब्रह्मैवेति** । तस्य पूर्णत्वाभिधायित्वेन तेन अत्यन्तभेदस्योक्तत्वादिति भावः । नन्वयममुख्यवृत्त्यङ्गीकारो न युक्त इत्यत आह **यद्वेति**।

**२२० सु०— नन्वपेक्षायाः पुरुषधर्मत्वात्कथमेतत् । इत्थम् । प्रतीयमानोऽर्थोऽर्थान्तरविषयां पुरुषस्यापेक्षामुपजनयन् सापेक्ष इत्युपचर्यते । यद्वा प्रमितस्यानुपपद्यमानस्यार्थस्यैवोपपादकाक्षेपशक्तिरपेक्षाऽत्रोच्यत इति ।**

**एवञ्च ज्ञानाद्बन्धनिवृत्तेर्बन्धमिथ्यात्वेन विनाऽनुपपद्यमानत्वाभावान्न तदाक्षेपकत्वमित्युक्तम् ॥**

**परि०—** मुक्तिरपेक्षते उक्तिरपेक्षत इति योजनाद्वयेऽप्यनुपपत्तिमाशङ्क्य निराह **नन्वपेक्षाया इति** ।

**कं०रा०— अपेक्षाया इति** । अपेक्षायाश्चेतनधर्मत्वादचेतने तत्प्रसक्तेरेवाभावान्नैव मुक्तिरपेक्षत इति यत्तद्वचनं कथमित्यर्थः ।

**वा०चं०—** अपेक्षत इत्यस्य मुख्यार्थत्वाय विवक्षाविशेषं दर्शयति **यद्वेति** । ननु मिथ्यात्वमपीत्युत्तरवाक्ये क्रियापदाभावेन पूर्ववाक्यात्क्रियापदस्य मुक्तिरित्यस्य चानुवृत्तेर्वक्तव्यत्वान्मुक्तिर्बन्धस्य मिथ्यात्वमपि नापेक्षते प्रत्यक्षविरोधादित्यर्थनिष्पत्त्योक्तस्यैव पुनरुक्त्यैकस्मिन्नेव समुच्चयार्थापिपदानुपपत्त्याऽपेक्षाभावे प्रत्यक्षविरोधस्य हेतुत्वानुपपत्त्या च नोत्तरवाक्यं पूर्वसङ्गतम् । न चास्तिभवत्योः सर्वत्र संबन्धादस्तीति क्रियासंबन्धे बन्धमिथ्यात्वं नास्तीत्येतदर्थप्रतिपादकमिदं वाक्यमिति वाच्यम् । तथात्वेऽर्थापत्तौ पूर्ववाक्योक्तदूषणानुपपादकत्वादर्थान्तरोक्तेश्च प्रकृतानुपयोगादसङ्गतिरित्यतः पूर्वोक्तानुपपादकत्वेऽप्यर्थापत्तौ दूषणान्तरकथनपरत्वात्

नासङ्गतिरित्याशयेन प्रकरणशुद्धये पूर्ववाक्याभिप्रायानुवादपूर्वमुत्तरवाक्यतात्पर्यमाह **एवमिति** । अत्र बुद्ध्या विवेकेन ज्ञानाद्बन्धनिवृत्तेरेवाभावादित्यप्यन्वयः । तेन च ज्ञानाद्बन्धनिवृत्तेः प्रथमोक्तप्रमितत्वाभावोक्तिः । अनुपपद्यमानत्वाभावादित्यनेनास्तु वेत्युक्तानुपपत्त्यभावोक्तिः । बन्धमिथ्यात्वेन विनेत्यनेन बन्धमिथ्यात्वस्य अनुपपादकत्वस्योक्तिः ।

वा०र०— **क्रियाया इति** । कर्मणा तस्या अपेक्ष्यमाणत्वादिति भावः । **मुक्तिरित्यस्य चेति** । कर्मणा सक्रियेणापि कर्तुरपेक्ष्यमाणत्वादिति भावः । **उक्तस्यैवेति** । इति वाक्य इत्यनुवर्तते । पुनरुक्त्यानुपपत्त्येत्येतत् तृतीयान्तयोर्नोत्तरेत्युत्तरेण संबन्धः । **एकस्मिन्नेवेति** । मिथ्यात्वमपीत्यपिपदेन पूर्ववाक्योक्तमिथ्यात्वमेव समुच्चेयम् । तत्समुच्चयश्च भेदादयुक्त इत्यर्थः । **अस्ति भवत्योः सर्वत्रेति** । अयमाशयः अनभिहित इत्येतत्सूत्रीयानभिहितग्रहण-प्रत्याख्यानपरमहाभाष्ये ह्यस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति । वृक्षः प्लक्षः अस्तीति गम्यत इत्युक्तम् । तत्र भवन्तीशब्दो लट आख्या पूर्वाचार्याणाम् । क्षिप्रवचने लृडित्येतत्सूत्रीयास्त्यर्थानां भवन्त्यर्थे सर्वाऽपि विभक्तय इत्येतद्भाष्यव्याख्यानावसरे भवन्तीशब्दो लटः पूर्वाचार्याणां संज्ञेति कैयटे उक्तेः । एतद्वाक्यप्रवृत्त्यादि-प्रतिपादनं तु गुरुराजकृततत्त्वोद्योतटीकाविवरणस्य व्याख्याने देवतास्तुतिमात्रपरत्वादित्येतद्वाक्यव्याख्यानान्तर-निराकरणोपपादनावसरेऽस्माभिरपि दर्शितं तत एव प्रतिपत्तव्यम् । प्रकृतोपयोगि किञ्चिदुच्यते । ज्ञातं हि वस्तु प्रतिपादयितुं शब्दस्य प्रयोगात्सत एव च ज्ञानसंभवेन क्रियापदान्तरप्रयोगाभावस्थले चोत्सर्गतः सता प्रतीति-नियमेनास्तीति क्रियापदानुषङ्गादस्ति क्रियां प्रति कर्तृत्वेन तृतीयाप्रसक्त्या प्रथमाया अवकाशाभाव इत्याशयेन सावकाशं प्रथमेति पूर्वशङ्काभाष्योक्तसावकाशत्वं निराकर्तुमिदं भाष्यवाक्यं प्रवृत्तम् । तेनास्तीत्यस्य क्रियान्तरप्रयोगाभावस्थले सत्त्वावगमस्तावत्सिद्धः । उक्तं च मञ्जर्याम् । यत्र ह्यन्यक्रियापदं न श्रूयते तत्रान्तरङ्गत्वादस्तीति गम्यते । लब्धसत्ताकस्य विशेषणान्तरयोगो भवतीति । तथास्तीत्यस्य स्थाने भवतीत्यपि योग्यम् । भवतीत्यस्य तत्समानार्थकतया भू सत्तायामिति व्याकरणस्मृतिसिद्धत्वात् । अत एव कर्तव्यपदाध्याहारे निमित्ततयाऽनुवादकत्वापादकोऽध्याहारो भवतीत्यादिरूपो न संभवतीत्युच्यते । तथा चास्ति भवतीत्येतयोः समानार्थतया क्रियापदान्तराभावस्थलेऽन्यतरसंबन्ध आवश्यक इति प्रकृतेऽप्यस्तीति पदं प्राप्तं भवतीति । एतदभिप्रायेणास्ति भवत्योरित्युक्तमित्यपि ज्ञेयम् । दूषणानुपपादकत्वेन प्रकृतानुपयोगादसङ्गतिरिति संबन्धः । **अर्थान्तरोक्तेश्चेति** । बन्धमिथ्यात्वं नास्तीत्यर्थान्तरेत्यर्थः । मुक्तेर्बन्धमिथ्यात्वानपेक्षत्वस्य प्रकृततया तदेवोपपाद्य मिथ्यात्वं नास्तीति प्रमेयान्तरप्रतिपादनस्य तु प्रकृतानुपयोगेनानर्थक्यादिति भावः । **पूर्वोक्तानुपपादकत्वेऽपीति** । तदुपपादकत्वाभ्युपगमे हि मिथ्यात्वं नास्तीति प्रतिपादनस्यासङ्गतिः स्यात् । न चैवमित्यर्थः । **दूषणान्तरेति** । प्रागुक्तदूषणातिरिक्तदूषणस्य प्रतिपादनायार्थान्तरोक्तीत्यर्थः । **प्रकरणशुद्धय इति** । पूर्वोत्तरग्रन्थयोरेकमहाप्रमेय-प्रतिपादकतयैकप्रकरणत्वमिति ज्ञानसापेक्षपूर्वसङ्गतत्वज्ञानायेत्यर्थः । संपूर्णपूर्ववाक्याभिप्रायस्य मूलवाक्यादप्रतीति-शङ्कावारणायाह **अत्र बुद्ध्येत्यादि** । अभावपदस्यानुपपद्यमानपदेन समासादुक्तं **बुद्ध्या विवेकेनेति** । प्रकरणशुद्धय इत्यनेनोक्तं महाप्रमेयप्रतिपादकत्वं चानेन दर्शितं ज्ञेयम् । **प्रथमोक्तेति** । ज्ञानाद्बन्धनिवृत्तिरेव नास्तीत्यादि-





प्रथमयोजनायामुक्तो यः प्रमितत्वाभावस्तथेत्यर्थः । अत एवास्तु वेत्युक्तेति वक्ष्यति । **अनुपपादकत्वस्येति** । बन्धध्वंसलक्षणत्वादित्युक्तरीत्येति योज्यम् । मूले **पुरुषधर्मत्वादिति** । एतच्च न्यायादिमतमालम्ब्य व्यवहृतम् । स्वमते तस्या अन्तःकरणधर्मत्वात् । कथमपि तस्या नार्थगतेति भावेनाशङ्काप्रवृत्तेः परीत्यापि व्यवहारे न दोष इति ज्ञेयम् । **विवक्षाविशेषमिति** । तद्रूपं पक्षान्तरमाहेत्यर्थः ।

**स०व्र०**— 'जन्माद्यस्येतिसूत्रेण गुणसर्वस्वसिद्ध्य' इत्यादिना प्रमेयदोषस्य प्राधान्येनाभिधानं ग्रन्थदोषस्याप्राधान्येनाभिधानं मत्वाऽऽह **एवं च ज्ञानादिति** ।

**चषकः**— **उपचर्यत इति** । 'जानाति मन्थाचल' इत्यादिवदिति भावः ।

**गूढ०**— नन्वेतावतैव परभाष्यस्य दूषितत्वात् मिथ्यात्वमपि बन्धस्येत्यादिग्रन्थवैयर्थ्यमित्यतस्तत्प्रयोजनमाह **एवं चेति** । ननु मिथ्यात्वमपीत्यत्रापिशब्दस्य समुच्चयार्थत्वं प्रतीयते । तदयुक्तम् । समुच्चेयाभावादित्यत आह **न केवलमिति** । **नास्त्यपीति** । असिद्धमित्यर्थः । एवं च नन्वित्याशङ्का सङ्गच्छते । अन्यथाभावमात्रे उक्ते असिद्धेर्भूषणत्वव्युत्पादनमसङ्गतं स्यादिति भावः ।

बन्धमिथ्यात्वस्य प्रत्यक्षविरुद्धत्वम्—

**२२१ सु०— दूषणान्तरं चार्थापत्तेराह मिथ्यात्वमपीति ।**

## अनु०— मिथ्यात्वमपि बन्धस्य न

**न केवलं बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते किं नाम बन्धस्य मिथ्यात्वं न अस्तीति अपिसंबन्धः ।**

**परि०**— **दूषणान्तरं चेति** । बाधितविषयत्वं चेत्यर्थः । **इति संबन्ध इति** । अपिपदस्य नञश्चाध्याहृतास्तीतिपदेनान्वय इत्यर्थः ।

**वं०प०**— **नास्त्यपीति** । बन्धमिथ्यात्वमसिद्धमित्यर्थः । प्रत्यक्षविरोधत इति मूलमवतारयितुं शङ्कते **नन्विति** । **तथात्व इति** । प्रमाणमूलभूताया अर्थसिद्धेः प्रागेवोक्तत्वादिति भावः । **तथात्वेनेति** । प्रमाणस्य प्रागर्थसिद्धिसापेक्षत्वेन प्रागर्थसिद्धिरपि प्रमाणाधीना तत्प्रमाणमपि प्रागर्थसिद्धिसापेक्षं साऽपि पुनः प्रमाणाधीनेत्यनवस्था स्यादित्यर्थः ।

**वा०चं०—** दूषणान्तरमित्यनेन प्रमाणविरोधोक्तिः । एवं च अर्थापत्तिसामग्र्यभावः सकलतद्दोषवत्त्वं चेति सूचितं भवति । अत एवोत्तरत्रैषा खल्वित्यादिना तत्सामग्र्यादिवर्णनमिति ध्येयम् । ननु नास्य दूषणान्तरपरत्वं प्रतीयते प्रत्युतोक्तरीत्या वैयर्थ्यमेवेत्यतोऽपिशब्दार्थप्रदर्शनपूर्वं योग्यक्रियासंबन्धं प्रदर्शयति **न केवलमिति** ।

**वा०र०—** **प्रमाणविरोधस्येति** । वक्ष्यमाणरीत्येति योज्यम् । केचित्तु यत्खलु प्रमितमप्यनुपपद्य-मानमिति पूर्वग्रन्थे प्रथमोक्तस्य प्रमितत्वस्याभावो यस्तस्येति व्याचक्षते । **सामग्र्यादीति** । आदिना दोषपरिग्रहः । **उक्तरीत्येति** । पूर्ववाक्योक्तदूषणानुपपादकत्वादित्याद्युक्तरीत्येत्यर्थः । **योग्यक्रियेति** । उक्तरीत्या अस्तीत्यस्य प्राप्तत्वाद्योग्यत्वाच्चेत्यर्थः । योग्येत्यनेनेदं सूचितम् । उक्तमहाभाष्येऽस्तिर्भवन्तीपर इत्यनेनास्तीत्यस्य सर्वत्र प्राप्त्युक्तावपि न तन्नियमोऽभ्युपगन्तुं शक्यः । यत्र विशेषणान्तरव्यावृत्तौ तात्पर्येण क्रियासंबन्धे तात्पर्याभावः । नीलमुत्पलम्, राज्ञः पुरुष इत्यादौ तत्र तत्संबन्धाभावात् । न हि तत्र नीलमुत्पलमस्तीत्यादिर्बोधः । किन्तु न रक्तम् । नान्यदित्यादिरेव । तथाच विशेषणान्तरव्यावृत्तौ तात्पर्यस्थलेऽस्तीत्यस्य संबन्धायोग्यत्वेऽपि यत्र क्रियासंबन्ध एव तात्पर्यं तत्र तत्संबन्धस्यावश्यकत्वाङ्गीकारात्प्रकृते च मिथ्यात्वे सत्तासंबन्धनिषेधाय मिथ्यात्वाभावोऽस्तीति प्रतिपादनमुखेन क्रियासंबन्धतात्पर्यात् तत्संबन्धो योग्य इति ।

**२२२ सु०— नन्वेतदनुपपन्नम् । प्रमाणं हि स्वमहिम्नैवार्थं व्यवस्थापयति । न पुनः प्रागर्थसिद्धिमपेक्षते । तथात्वे वा प्रमाणवैयर्थ्यं पूर्वप्रमाणस्यापि तथात्वेनानवस्था च स्यात् । अतः प्रागाक्षेप्यासिद्धिरर्थापत्तेर्भूषणमेव । प्रवृत्तायां त्वर्थापत्तौ नाक्षेप्यासिद्धिः प्रमितत्वादेव । एवं तर्हि परिचितचरपुरुषस्य दिवाऽभुञ्जानस्य पीनत्वमनुपपद्यमानं रसायनसिद्धिं योगर्द्धिं वा कस्मान्नाक्षिपेत् । तदसिद्धिरपि प्रागर्थापत्तिप्रवृत्तेरलङ्कार एव । उत्तरकालं तु नास्त्येवेति चेत् । न । वैषम्यात् । न हि रसायनसिद्ध्याद्यसिद्धतया नार्था-पत्तिप्रमेयम् । अपि तर्हि परिचितचरे पुरुषे प्रमाणबाधिततया । असिद्धं साधयति प्रमाणं न तु प्रमाणविरुद्धमिति हि प्रसिद्धम् । एषा खल्वर्थापत्तिसामग्री । यदाक्षेपकस्य प्रमितत्व-मनुपपद्यमानत्वं च । आक्षेप्यस्य अपि उपपादकत्वं प्रमाणाविरुद्धत्वं च । अत एवाप्रमि-तत्वमनुपपत्त्यभावः अन्यथाऽप्युपपत्तिः अन्यथैवोपपत्तिः प्रमाणविरुद्धार्थत्वं चेत्यर्थापत्ति-दूषणानीति ॥ सत्यम् । वयमपि हि बन्धमिथ्यात्वं 'अहं कर्ता भोक्ता सुखी दुःखी'त्यादि-प्रत्यक्षविरुद्धत्वादेव नार्थापत्तिप्रमेयमिति ब्रूमः । तदिदमुक्तं प्रत्यक्षविरोधत इति ।**

**अनु०—** **प्रत्यक्षविरोधतः ॥**

**प्रत्यक्षविरोधतोऽपीति** वा योजना। तेन प्रमाणान्तरविरोधं समुच्चिनोति। चेष्टादिलिङ्गैः 'अहमित्येव यो वेद्य' इत्याद्यागमैश्च आत्मनः कर्तृत्वाद्युपेतस्यैव प्रमितत्वात्।

बिन्दुः— **परिचितचरपुरुषस्य दिवाऽभुञ्जानस्येति**। अयोगित्वेन रसायनास्वादशून्यत्वेन अपरिचितस्येत्यर्थः। तादृशस्य तद्वत्तायां सिद्ध्यभावोऽप्यक्षत एवेति भावः। **अत एवेति**। अबाधितासत्प्रतिपक्षितस्य अव्यभिचरितसहचारसंपन्नस्य पक्षे विद्यमानत्वं अनुमापकताप्रयोजकं रूपमपि तादृशपञ्चविशेषणीव्यतिरेकाः हेत्वाभासाः पञ्चानुमानदोषाः प्रमितिविरुद्धत्वादेवमत्रापि तुल्य-वित्तिवेद्यतया दूषणव्यतिरेकस्य भूषणत्वसिद्धिरिति भावः।

परि०— परमुखेनैव समाधिं वाचयितुं प्रतिबन्दीमाशङ्कते **एवं तर्हि परिचितचरपुरुषस्येति**। रसायनमौषधविशेषः। योगस्य ऋद्धिर्योगर्धिः। योगसमृद्धिं वेत्यर्थः। **नास्त्येवेति**। असिद्धि-र्नास्त्येवेत्यर्थः। परेणैव समाधिं वाचयति **वैषम्यादित्यादिना**। तत्सममस्माकमित्याह **सत्यं वयमपीत्यादिना**। अनुक्तसमुच्चयेऽपिपदमित्युपेत्याह **प्रत्यक्षविरोधतोऽपीति वेति**। तत्किं प्रमाणान्तरमित्यतो अनुमानागमावित्याह **चेष्टादीति**। हिताहितप्राप्तिपरिहारानुकूलपरिस्पन्दविशेषश्चेष्टा। चक्षुरादीन्द्रियाणि श्वासवायवश्चादिपदार्थाः। 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः। स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' इत्यादितत्त्वनिर्णयोक्तागमैरित्यर्थः।

यादु०— **परिचितपुरुषस्येति**। रसायनशून्यत्वेनायोगित्वेन च निश्चितपुरुषस्येत्यर्थः। न पुनः प्रमाणविरुद्धमित्येतदुपपादयितुमाह **एषा खल्वित्यादिना**। उक्तानां सामग्रीत्वमुपपादयति **अत एवेति**। अन्यथैतेषां दूषणता न स्यादिति भावः। **चेष्टादिलिङ्गैरिति**। चेष्टादिलिङ्गैस्तदनुकूलयत्नवानात्माऽनुमीयते। यत्नवत्त्वमेव च कर्तृत्वमिति भावः। 'अहमित्येव यो वेद्य' इत्यत्र जीवस्य बन्धमोक्षपात्रत्वोक्त्या प्राणधारणार्थकजीवशब्दवाच्यत्वोक्त्या वा कर्तृत्वं लभ्यत इत्यवगन्तव्यम्। आदिपदेन 'यत्कर्म कुरुते तदभिसंपद्यत' इत्याद्यागमसंग्रहः।

वं०प०— **प्रागिति**। अर्थापत्तिरूपप्रमाणप्रवृत्तेः प्रागित्यर्थः। अत्र सिद्धान्ती प्रतिबन्दीमुत्तरमाशङ्कते **तदसिद्धिरपीति**। तयोराक्षेप्ययोर्योगर्द्धिरसायनयोरसिद्धिरित्यर्थः। **नास्तीति**। असिद्धिर्नास्त्येवेति संबन्धः। पूर्वपक्षी वैषम्यमुत्तरमाह **वैषम्यादिति**। **परिचितचर इति**। भूतपूर्वे चरडिति सूत्रात् रसायनादिशून्यत्वेन पूर्वं परिचित इत्यर्थः। ननु प्रमाणबाधितस्याप्यर्थापत्तिरूपप्रमाणसाध्यत्वं किं न स्यादित्यत आह **असिद्धमिति**। **प्रमाणान्तरेति**। अनुमानागमरूपप्रमाणान्तरेत्यर्थः।

**कं०रा०**— मिथ्यात्वमपि बन्धस्येत्यनया वाचोभङ्ग्या मिथ्यात्वं प्रागसिद्धमतोऽर्थापत्तिप्रमेयं नेति सिद्धान्तिनोक्तमिति विपरीताभिप्रायं मत्वा शङ्कते **नन्वेतदिति** । प्रमाणविरुद्धमप्यर्थापत्तिसामग्रीकोटि-निविष्टमिति पूर्वपक्षिणा वाचयित्वा तदभावादेव बन्धमिथ्यात्वं नार्थापत्तिप्रमेयमिति ब्रूम इति स्वाभिप्रायमुद्घाटयितुं सिद्धान्ती प्रतिबन्दीं शङ्कते **एवं तर्हीति** । **तदिदमुक्तमिति** । प्राङ्मानासिद्धत्वान्नार्थापत्तिप्रमेयं बन्धमिथ्यात्व-मित्याशयश्चेदाचार्यस्य तर्हि 'मिथ्यात्वमपि बन्धस्य न मानाविदितत्वत' इत्येवावक्ष्यत् । न तु प्रत्यक्षविरोधत इतीतिं भावः । **अहमित्येवेति** । 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः ।' 'यत्कर्म कुरुते तदभिसंपद्यत' इत्याद्यागमैरित्यर्थः ।

**श्रीनिधि०**— साध्यतां किं प्रमाणबाधपर्यन्तधावनेनेत्यतस्तदाशयं वदन् प्रत्यक्षविरोधत इत्येतदव-तारयति **नन्वेतदनुपपन्नमित्यादिना** । **चेष्टादिलिङ्गैरिति** । अयं कृतिमान् चेष्टादिमत्त्वादित्यनुमान इति शेषः । 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' इत्याद्यागमाः । अत्र अनुमानेन कर्तृत्वम् आगमेनादिपदगृहीतभोक्तृत्वं च प्रमितमिति भावः ।

**वा०चं०**— ननु अर्थासिद्धिमात्रेणार्थापत्तिनिरासात् प्रत्यक्षविरोधकथनमधिकमसङ्गतं चेत्यतो नात्र भाष्यकारस्यासिद्धिमात्रे तात्पर्यम् । वक्ष्यमाणानुपपत्तेः । प्रमाणाविरोधस्य चोपपत्तेस्तत्रैव तात्पर्यं युक्तमि-त्यभिप्रेत्य परमुखेनैव तदुभयं साधयितुं शङ्कासमाधानपूर्वं प्रत्यक्षविरोधादिति हेतुं सङ्गमयति **नन्वित्यादिना** । ननु सहकारिसामर्थ्यादप्यर्थव्यवस्थापकत्वात्कथमेतदित्यत एवकारव्यावर्त्यमाह **न पुनरिति** । सामान्यन्यायं प्रकृते सङ्गमयितुमाह **अत इति** । गूढाभिसन्धिरसिद्धेर्भूषणत्वेऽतिप्रसङ्गं शङ्कते **एवं तर्हीति** । प्रत्यक्षस्यैव विशिष्यग्रहणे प्रयोजनमनुपलभमानोऽपिशब्दस्य प्रयोजनान्तरं दर्शयति **प्रत्यक्षेति** ।

**वा०र०**— **वक्ष्यमाणेति** । असिद्धिर्भूषणमिति वक्ष्यमाणरीत्या तस्यादोषत्वानुपपत्तेरित्यर्थः । **प्रमाणविरोधस्य चेति** । प्रमाणविरोधस्य त्वसिद्धिवद्भूषणत्वाभावेन वक्ष्यमाणरीत्या दोषतापत्तेरित्यर्थः । अत्र चशब्दस्य तुशब्दार्थकस्य किन्त्वित्यर्थकत्वात्किन्तु प्रमाणविरोधस्यैवेति लभ्यत इति ज्ञेयम् । **तदुभयमिति** । असिद्धिप्रमाणविरोधयोरनुपपत्त्युपपत्तिशब्दोक्ते भूषणत्वदूषणत्वे साधयितुमित्यर्थः । **कथमेतदिति** । स्वमहिम्नै-वेत्येवकारेण प्रमाणान्तरसहकारव्यावर्तनं कथमित्यर्थः । **एवकारेति** । अनभिमतव्यावृत्त्यभिप्रायेणेति शेषः । मूले **वैयर्थ्यमिति** । प्रयोजनस्याभावादिति भावः । **सामान्यन्यायमिति** । असिद्धेरदूषणत्वेनान्यत्रोपलम्भरूपमित्यर्थः । **गूढाभिसन्धिरिति** । सत्यं वयमपि हीत्यादिना प्रकृतेऽपि प्रमाणबाधादेवार्थापत्त्यनुपपत्तिरिति वक्ष्यमाणः सिद्धान्तिन एव गूढोऽभिसन्धिः । एतेन सिद्धान्तिनैव स्वाभिमतं वक्तुमेतच्छङ्कामुत्थाप्य तत्समाधानं परमुखेन वाचितमिति सूचितम् । मूले **परिचितचरेति** । रसायनसिद्धियोगर्धिशून्यत्वेनानिश्चितेत्यर्थः । **नास्त्येवेति** मूलम् । प्रमितत्वादेवेति पूर्वोक्ताद्धेतोरिति भावः । अभिप्रायमजानानः परिहरति **न वैषम्यादिति** मूलम् । रसायनसिद्ध्यादीति प्रथमान्तम् ।

अिसिद्धिवत्प्रमाणबाधो नानुकूल इत्याह **असिद्धमिति** । प्रमाणमसिद्धं साधयतीति संबन्धः । प्रमाणविरुद्धं कुतो न साधयतीत्यतस्तत्र हेतुमाह **एषा खल्विति** । उक्तानां सामग्रीत्वमुपपादयति **अत एवेति** । अप्रमितत्वादीनां कारणीभूतप्रमितत्वाद्यभावत्वेनैव दूषणताया निर्वाह्यत्वादिति भावः । अभिसन्धिमुद्घाटयति **सत्यमिति** मूलम् । **प्रत्यक्षस्यैव विशिष्येति** टीका । आक्षेप्यस्य प्रमाणविरोधोपपादनाय प्रत्यक्षविरोधस्यैव प्रमाणान्तरविरोधस्यापि वाच्यतया प्रमाणविरोधत इति वक्तव्ये प्रत्यक्षविरोधत इति विशिष्य प्रत्यक्षग्रहणे प्रयोजनाभाव इत्यर्थः । **प्रयोजनान्तरमिति** । न केवलमित्युक्तरीत्या नास्त्यपीति प्रागुक्ता या योजना तदपेक्षया योजनान्तरमित्यर्थः । अत्र च योजनान्तरपदेन प्रागुक्तयोजनां स्वीकृत्यैवान्यापि योजनोच्यत इत्यभिप्रेतमिति ज्ञेयम् । **चेष्टादीति** मूलम् । चेष्टादेस्तदनुकूलयत्नादिमदात्मानुमानाद्यत्नादेरेव कर्तृत्वादिति भावः । **अहमित्येवेति मूलम्** । 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' इति सुखदुःखभोक्तृत्वबन्धादिपात्रत्वाभ्यां कर्तृत्वसिद्धिरिति ज्ञातव्यम् ।

**स०व्र०**— मिथ्यात्वसिद्धिः किमर्थापत्तिप्रवृत्तेः प्राङ्नास्तीत्युच्यते पश्चाद्वा । नाद्य इत्याह **प्रमाणं हीति** । प्रमाणसंप्लवेऽपि निरपेक्षप्रवृत्तिरिति दर्शयितुमपेक्षत इत्युक्तम् । **तथात्वे** प्रागर्थसिद्ध्यपेक्षत्वे । प्रमाणाकाङ्क्षाया एवानुदयादिति भावः । किमर्थापत्तेरेवायं नियमः प्रमाणमात्रस्य वा । नाद्यः । विनिगमकाभावात् । द्वितीयेऽतिप्रसङ्गमाह **पूर्वेति** । न केवलं प्रागर्थसिद्धिर्दूषणं किं तर्हीत्यत आह **अत इति** । द्वितीयं प्रत्याह **प्रवृत्तायां त्विति** । प्रागर्थासिद्धेरदूषणत्वेऽतिप्रसङ्गं शङ्कते **एवं तर्हीति** । नार्थासिद्धिमात्रं प्रमाणप्रवृत्तौ कारणं किन्तु प्रमाणान्तराविरोधादि च । न चेह तदस्तीत्याह **न वैषम्यादिति** ।

**विठ्ठ०**— द्वयेऽप्यनुपपत्तिमाशङ्क्याह **नन्विति** । **परिचितपुरुषस्येति** । रसायनशून्यत्वेनायोगित्वेन च निश्चितपुरुषस्येत्यर्थः । पूर्वपक्षी प्रतिबन्दीमाशङ्क्य परिहरति **एवं तर्हीति** । **उत्तरकालमिति** । अर्थापत्तिप्रवृत्तिकालं तदसिद्धिर्नास्त्येवेत्यर्थः । असिद्धवत् प्रमाणबाधितस्यापि अर्थापत्तिप्रमेयत्वं किं न स्यादित्यत आह **असिद्धं साधयति प्रमाणमिति** । तदुपपादयितुमाह **एषा खल्विति** । उक्तानां चतुर्णाम् अर्थापत्तिसामग्रीत्वं क्रमेणोपपादयति **अत एवेति** । आक्षेप्यस्योपपादकत्वाभावो द्वेधा । आक्षेपकस्यान्यथोपपत्तिनिश्चयो न वेत्यभिप्रेत्योक्तम् **अन्यथाप्युपपत्तिरन्यथैवोपपत्तिरिति** । अन्यथा एतेषां दूषणता न स्यादिति भावः । अर्थापत्तावाक्षेप्यासिद्धिर्भूषणमेवाक्षेप्यस्य प्रमाणबाधितत्वमात्रं दूषणमित्येतदङ्गीक्रियते तथाप्यर्थापत्तिप्रमेयस्य प्रमाणबाधितत्वात् अनुपपन्ना अर्थापत्तिरिति परिहरति **सत्यमिति** । प्रमाणान्तरमेव दर्शयति **चेष्टेति** । चेष्टादिलिङ्गैस्तदनुकूलयत्नवानात्मानुमीयते । यत्नवत्त्वमेव कर्तृत्वमिति भावः । चेष्टादिना कर्तृत्वेन अनुमीयमानत्वादिति भावः । **अहमित्येवेति** । अत्रापि बन्धादिपात्रत्वोक्त्यार्थात् कर्तृत्वादेः सत्यत्वं लभ्यते । आदिपदेन यत्कर्म कुरुते तदभिसंपद्यते इत्यादेः सङ्ग्रहः ।





**चषकः— परिचितेति** । पर्युपसृष्टस्य चिनोतेः कर्मसाधननिष्ठायां निष्पन्नः योगित्वरसायनराहित्योपरक्तनिश्चयकर्मतामाचष्ट इति तादृङ् निश्चयविषयस्येत्यर्थः । **योगर्धिं** तपःसमृद्धिम् । न तु प्रमाणविरुद्धमित्यंशं प्रतिपिपादयिषति **एषा खल्विति** ।

**गूढ०—** असिद्धेरर्थापत्तौ भूषणत्वे बाधकं शङ्कते **एवं तर्हीति** । ननु रसायनसिद्ध्यादिकमसिद्धमिति न तस्य पीनत्वेनाक्षेप इत्यतस्तदसिद्धिरर्थापत्तिः । प्रवृत्तिपूर्वकालं वा तदुत्तरकालं वा । नाद्य इत्याह **प्रागिति** । न द्वितीय इत्याह **उत्तरकालमिति** । प्रमाणबाधितत्वेऽपि कुतो नार्थापत्तिप्रमेयत्वमित्यत आह **असिद्धमिति** । ननु प्रमाणविरुद्धमप्यर्थापत्तिः कुतो न साधयतीत्यत आह **एषेति** । **अत एवेति** । यत एषा सामग्र्यत एवेत्यर्थः । पूर्वं नास्त्यपीत्यपिशब्दं भिन्नक्रमेण व्याख्याय इदानीं तु प्रकारान्तरेण व्याख्याति **प्रत्यक्षेति** ।

**२२३ सु०— अथवाऽर्थापत्तेराभासत्वेनानाक्षिप्तबन्धमिथ्यात्वं वर्णयत्परेषां भाष्यमनुपयुक्तमित्युक्तम् । अयुक्तमपि प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्वादित्यनेनोच्यते ।**

**परि०— अनेनेति** । मिथ्यात्वमपीत्यादिनेत्यर्थः ।

**वा०चं०—** अस्याप्यर्थापत्तिदूषणत्वेऽर्थापत्तेराभासत्वात् सूत्रानाक्षिप्तबन्धमिथ्यात्वप्रतिपादकत्वात्परभाष्येऽनुपयुक्ततामात्रप्रतिपादकत्वं ततो वरं परभाष्यायुक्तताप्रतिपादकत्वमित्यभिप्रेत्य तत्परतया भाष्यं योजयति **अथवेति** । यद्यप्यर्थापत्तिप्रमेयस्य बन्धमिथ्यात्वस्य प्रमाणविरोधे प्रतिपादिते बन्धमिथ्यात्वप्रतिपादकपरभाष्यस्यायुक्तता सिद्ध्यति तथाऽपि साक्षात्तल्लाभायेदमिति द्रष्टव्यम् ।

**वा०र०— अस्याप्यर्थापत्तीति** । एतन्मूलस्याप्यर्थापत्तिदूषणपरत्वे परभाष्येऽनुपयुक्ततामात्रप्रतिपादकत्वमाश्रितं भवति । कुतः । अर्थापत्तेः प्रमाणविरोधे तस्या आभासत्वमायाति । तथात्वे च बन्धमिथ्यात्वं न सेत्स्यतीति बन्धमिथ्यात्वस्य सूत्राभिप्रेतत्वं नायातीत्येवं तथाविधबन्धमिथ्यात्वप्रतिपादकत्वकथनेनोक्ताश्रयणलाभात् । ततो वरमेतद्भाष्यस्य परभाष्यायुक्तताप्रतिपादकत्वाश्रयणमित्यभिप्रेत्येत्यर्थः । एतेनैवानुपयोगस्यैव प्रतिपादनेऽप्यर्थापत्तेर्दुष्टत्वलाभात्प्रकृतोपयोगे सति किमयुक्तत्वपर्यन्तं तात्पर्यकल्पनया योजनान्तराश्रयणेनेत्यपि शङ्का नेति सूचितम् । उक्तस्यैव प्रकारान्तरेण वचनापेक्षयाऽनुक्तदूषणपरत्वस्य स्वरसत्वेन वरत्वादिति वरत्वोक्त्या प्रतिपादनात् । नन्वर्थापत्तिदूषणेनैव परभाष्यायुक्तापि लब्धैव । अर्थापत्तिविषयस्य प्रमाणविरोधेनायुक्तत्वे तद्विषयकभाष्यस्याप्ययुक्तताया अर्थतोलाभादिति शङ्कते **यद्यप्यर्थापत्तीति** ।

**स०व्र०— अथवेति** । ग्रन्थदोषस्यैव प्राधान्येनाभिधानम् । प्रमेयदोषस्तदुपयोगीत्यर्थः ।

**गूढ०—** प्रकारान्तरेणापिशब्दं योजयति **अथवेति** ।





**२२४ सु०— ननु प्रत्यक्षं बन्धस्वरूपमात्रं गोचरयति न तु तस्मिन् मिथ्यात्वाभावम् । अतोऽर्थापत्तेः भाष्यकारीयस्य वा तन्मिथ्यात्वव्युत्पादनस्य कथं प्रत्यक्षविरोधः । मैवम् । प्रत्यक्षं खलु बन्धं गोचरयदस्तीति नास्तीति वा गोचरयेत् । उभयोदासीनस्य ज्ञानस्यादर्शनात् । आद्येऽस्तित्वं मिथ्यात्वाभावश्चेत्यनर्थान्तरमिति कथं न प्रत्यक्षविरोधः । द्वितीयेऽनुभवविरोधः तद्व्युत्पादनवैयर्थ्यप्रसङ्गश्च ।**

**बिन्दुः— अस्तित्वं मिथ्यात्वाभावश्चेत्यनर्थान्तरमिति** । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वाभावस्यैव सिद्धान्ते सत्यत्वात् वर्तमानकालसंबद्धतया प्रमितेऽपि वस्तुनि तादृशविशिष्टानुभवोऽक्षत एवेति भावः । **वैयर्थ्यप्रसङ्ग इति** । व्युत्पादनेनापि शिष्यादीन् प्रति नास्तितैव बोधनीया सा च स्वत एवेतरेषां सिद्धेति भावः । चैतन्यैकरसं ज्ञानस्वरूपमित्यर्थः । प्रादेशिकं देहादिरूपप्रदेशमात्रावस्थायीत्यर्थः ।

**परि०— भाष्यकारीयस्येति** । परभाष्यकारीयस्येत्यर्थः । **तद्व्युत्पादनेति** । बन्धमिथ्यात्वव्युत्पादनवैयर्थ्यमित्यर्थः । प्रत्यक्षेणैव बन्धगतनास्तित्वग्रहणादिति भावः ।

**यादु०— अनुभवविरोध इति** । सुखादिकमस्तीति जानामीति साक्ष्यनुभवविरोध इत्यर्थः । **तद्व्युत्पादनेति** । नास्तितायाः प्रत्यक्षसिद्धत्वे तदपरपर्यायमिथ्यात्वस्य व्युत्पादनं भाष्ये महता प्रबन्धेन क्रियमाणं व्यर्थं स्यात् । न हि प्रत्यक्षसिद्धोऽर्थो व्युत्पादनमपेक्षत इति भावः ।

**वं०प०— उभयोदासीनस्येति** । विधिनिषेधाववधूयेत्यर्थः ।

**कं०रा०— तद्व्युत्पादनेति** । यदि बन्धं गोचरयत्प्रत्यक्षं नास्तीति गोचरयेत्तर्हि प्रत्यक्षत एव बन्धमिथ्यात्वस्य करतलामलकवत्सिद्धतया युष्मदस्मदित्यादिभाष्ये तद्व्युत्पादनं व्यर्थं स्यादिति भावः ।

**श्रीनिधि०— तद्व्युत्पादनेति** । प्रमाणान्तरसिद्धत्वादिति भावः ।

**वा०चं०—** भाष्ये विरोधपदसूचितपरस्पराभावविषयकत्वमुपपादयितुं शङ्कते **नन्विति** ।

**वा०र०— विरोधपदसूचितेति** । अत्र सहानवस्थानादिर्विरोधपदार्थो न विवक्षितः । किन्तु परस्पराभावरूपसत्यत्वमिथ्यात्वविषयकतालक्षणः । तथाच प्रत्यक्षेण विरोधादित्यस्य प्रत्यक्षेण शास्त्रार्थापत्तिविषयीभूतमिथ्यात्वप्रतियोगिकाभावस्य ग्रहणादिति लब्धं भवति । तेन चार्थापत्तिशास्त्रयोः प्रत्यक्षस्य परस्पराभावरूपौ यौ अर्थौ

तद्विषयकत्वं लब्धं भवतीत्याशयः । **कथं न प्रत्यक्षेति** मूलम् । अस्तित्वावगाहिप्रत्यक्षेणार्थापत्त्यादिविषयीकृत-मिथ्यात्वापरपर्यायनास्तिताया अभावस्यैव ग्रहणादिति भावः । **अनुभवविरोध इति** मूलम् । स्तम्भादिप्रत्यक्षस्येव दुःखादिप्रत्यक्षस्य विषयसत्त्वावगाहित्वेन साक्षिसिद्धत्वात्सत्त्वाभावविषयकत्वाङ्गीकारे साक्ष्यनुभवविरोध इत्यर्थः । **तद्व्युत्पादनेति** मूलम् । नास्तित्वरूपमिथ्यात्वस्य प्रत्यक्षसिद्धत्वापत्त्या शास्त्रे श्रुत्यादिबलेन तद्व्युत्पादन-वैयर्थ्यमित्यर्थः ।

**स०व्र०**— ग्रन्थार्थप्राधान्यरूपपक्षद्वयेऽपि नायं दोष इति शङ्कते **नन्विति** । **तद्व्युत्पादनमिति** । असत्त्वलक्षणमिथ्यात्वस्य प्रत्यक्षसिद्धत्वाभ्युपगमे तादृशमिथ्यात्वव्युत्पादनं शास्त्रे न स्यादित्यर्थः ।

**विठ्ठ०**— प्रत्यक्षस्य बन्धसत्यत्वस्याग्राहकत्वात् अर्थापत्त्या तन्मिथ्यात्वग्रहणे विरोध एव नास्तीति शङ्कते **ननु प्रत्यक्षमिति** । **अनुभवेति** । सुखदुःखादिबन्धस्यास्तित्वग्राहकसाक्ष्यनुभवविरोधः । प्रत्यक्षस्य नास्तितागोचरत्वे बन्धमिथ्यात्वस्य तेनैव सिद्धेरर्थापत्त्या तद्व्युत्पादनवैयर्थ्यमित्यर्थः ।

**चषकः**— **तद्व्युत्पादनवैयर्थ्येति** । प्रत्यक्षेणैव बन्धनास्तित्वात्मकमिथ्यात्वस्यावगाढतया तादृशार्थे शास्त्रीयव्युत्पादनानवश्यंभावेनादिभाष्ये तदध्यस्ततताव्युत्पादनं यत्तदनर्थकमापद्येतेति भावः ।

**गूढ०**— नन्वस्तित्वनास्तित्वरूपोभयप्रकारेणापि न गोचरयतीति को दोष इत्यत आह **उभयेति** । किञ्च प्रत्यक्षेण नास्तित्वविषयीकरणे मिथ्यात्वस्य सिद्धत्वात् तद्व्युत्पादनं व्यर्थं चेत्यत आह **तद्व्युत्पादनेति** ।

॥ विश्वसत्यत्वपक्षे वेदविरोधाभावः ॥

विश्वस्य मिथ्यात्वे वेदस्यापि मिथ्यात्वापत्तिः—

**२२९ सु०— स्यादेतदेवम् । यदीदं प्रत्यक्षं तत्त्वावेदकं भवेत् । न चैतदस्ति । समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमेवाद्वितीयं खल्वात्मतत्त्वं 'नेह-नानाऽस्ति किञ्चने'त्यादिश्रुतिस्मृतीतिहासपुराणेषु गीयते । न चैतान्युपक्रमादिवशादीदृगात्म-तत्त्वमभिदधति तत्पराणि सन्ति वाक्यानि शक्यानि केनाप्युपचरितार्थानि कर्तुम् । तद्विरुद्धं च प्रादेशिकमनेकविधदुःखादिप्रपञ्चोपप्लुतं आत्मानमादर्शयत्प्रत्यक्षं कथमुपप्लवो न भवेत् । येयं चैतन्यस्य स्वत एव स्थितलक्षणब्रह्मरूपतावभासं प्रतिबध्य जीवत्वापादिका अविद्याकर्म-पूर्वप्रज्ञासंस्कारचित्रभित्तिरनादिरनिर्वाच्या अविद्या । तस्याः परमेश्वराधिष्ठितत्वलब्ध-परिणामविशेषो विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलन-सञ्जातज्योतिरपरोक्षोऽहङ्कारः । स च चिदात्मनो बुद्ध्या निष्कृष्य वेदान्तवादिभिरन्तःकरणं**

**मनो बुद्धिरहंप्रत्ययीति च विज्ञानशक्तिविशेषमाश्रित्य गीयते । परिस्पन्दशक्त्या च प्राण इति । तदुपरागनिमित्तं मिथ्यैवात्मनः कर्तृत्वादिकं प्रतिभाति । स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा । तदेवं 'अहं कर्ता भोक्ता सुखी दुःखी'त्यादिप्रत्यक्षे श्रुत्यादिविरोधेन पूति-कूष्माण्डीकृते** बन्धमिथ्यात्वव्युत्पादनमुपपन्नतरमित्यत आह **मिथ्यात्वं यदीति ।**

## अनु०— मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत् ॥

**बिन्दुः—** ननु वस्तु यद्येतादृशं तदा विपरीतभाने किं बीजमित्यतो दोषादिकमुपपादयति **येयमित्यादिना ।** कर्म धर्माधर्मौ पूर्वप्रज्ञा पूर्वानुभवतः तज्जन्यः संस्कारः अनादिसंसारे पूर्वपूर्वजन्मानुभूत-पदार्थसंस्कार इत्यर्थः । धर्माधर्मसंस्काराणां चैतन्मते आत्मनिष्ठत्वं नास्तीति हृदयम् । **कूटस्थेति ।** चिदचिद्ग्रन्थिसंवलनरूपत्वात्तस्येति भावः । **बुध्या निष्कृष्येति ।** तदन्तःप्रविष्टोऽचिदंश इत्यर्थः ।

**परि०— अभिदधतीति ।** शत्रन्तम् । अभिदधानानीत्यर्थः । सन्तीत्यपि शत्रन्तम् । तात्पर्य-वत्त्वेन विद्यमानानीत्यर्थः । प्रादेशिकं प्रदेशस्थं अल्पपरिमाणमिति यावत् । अहमिहैवास्मि सदने जानान इति प्रतीतेरुदयात् । उपप्लवोऽप्रमाणम् । न केवलं श्रुत्यादिविरोधेन कर्तृत्वादिविषयं प्रत्यक्षमतत्वावेदकं अपि तु वस्तुस्थितिपर्यालोचनयाऽपीत्याह **येयंचैतन्यस्येत्यादिना ।** येयमित्यादिकं वक्ष्यमाणाहङ्कार-रूपकार्यस्योपादानसङ्कीर्तनम् । स्वत एव स्वभावत एव स्थितं यल्लक्षणमानन्दादि । या च स्वत एव स्थिता ब्रह्मरूपतां तदुभयावभासं प्रतिरुध्येत्यर्थः । जीवेभ्यो ब्रह्मान्यदिति मतमपाकर्तुमेतदुक्तम् । जीवत्वापादिकेत्यस्यानादिरनिर्वाच्याविद्येत्यनेनान्वयः । अविद्या भ्रान्तिः । तां विशिनष्टि **विद्येति ।** विद्या वृत्तिरूपं ज्ञानम् । कर्म पुण्यपापलक्षणम् । पूर्वप्रज्ञा स्मृतिः । संस्कारो वासनापरपर्यायः । एतेषां विद्यादीनां चित्रभित्तिर्मूलभूतेत्यर्थः । विद्याकर्मादिरूपचित्रस्य भित्तिरिव भित्तिः । कारणमिति वार्थः । **पूतिकूष्मांडी-कृते ।** पूतिकूष्माण्डवत्प्रकृतेऽप्रमाणीकृत इति यावत् ।

**यादु०— स्यादेतदिति ।** प्रत्यक्षस्य दोषशङ्काकलङ्कितस्य न निर्दोषश्रुतिसिद्धमिथ्यात्वप्रतिरोधकत्वमिति शङ्काग्रन्थार्थः । न केवलं श्रुत्यादिविरोधेन कर्तृत्वादिविषयकं प्रत्यक्षमतत्त्वावेदकमपि तु वस्तुस्थिति-पर्यालोचनयाऽपीत्याह **येयं चैतन्यस्येत्यादिना ।** येयमित्यादिकं वक्ष्यमाणाहङ्काररूपकार्यस्योपादानसङ्कीर्तनम् । **स्वत एव** स्वभावत एव स्थितम् । यल्लक्षणमानन्दादि या च स्वत एव स्थिता ब्रह्मरूपता तदुभयावभासं प्रतिबद्ध्येत्यर्थः । जीवेभ्यो ब्रह्मान्यदिति मतमपाकर्तुमेतदुक्तमिति ज्ञातव्यम् । अविद्या भ्रान्तिः । पूर्वप्रज्ञा पूर्वानुभवः । भ्रान्तिश्च कर्म च पूर्वानुभवश्चेति तथोक्तास्तेषां संस्कार एव चित्रं तस्य भित्तिरिति विग्रहः । तत्र च





भ्रान्तिसम्यगनुभवभेदमङ्गीकृत्य पृथङ्निर्देश इति ज्ञातव्यम् । अविद्याया एकरूपत्वान्न विचित्रकार्योत्पादकत्वमिति शङ्कां निराकर्तुमेतदुक्तम् । **परमेश्वरेति** निमित्तप्रदर्शनम् । **विज्ञानेति** स्वरूपप्रदर्शनार्थम् । **कर्तृत्वभोक्तृत्वेति** कार्यप्रदर्शनम् । **कूटस्थचैतन्येति** प्रमाणोपन्यासः । यद्यपि चैतन्यमविकारं तथाऽपि तस्मिन्नैक्याध्यासलक्षणेन संवलनेन परिनिष्पन्नप्रकाश इत्यर्थः । नित्यानुमेयत्वं व्यावर्तयति **अपरोक्षेति** । शक्तिद्वयोपेतमहङ्कारस्वरूप-मित्युक्तम् । तत्प्रपञ्चयति **स चेति** । **तदुपरागेति** फलप्रदर्शनम् । **तदेवमिति** प्रकृतोपयोगोक्तिः । **पूति**शब्देन दुर्गन्ध्यभिधीयते 'पूतिगन्धस्तु दुर्गन्ध' इत्यभिधानात् ।

**वं०प०**— समस्तोपाध्यनवच्छिन्नमित्युक्तापरिच्छिन्नत्वविरोधित्वेन प्रादेशिकमित्युक्तम् । परिच्छिन्न-मित्यर्थः । उपप्लुतं उपद्रुतम् । उपप्लवो भ्रमरूपः । अहङ्कारगतमेव कर्तृत्वं भोक्तृत्वं च तदुपरागाज्जीवे मिथ्याभूतमेव प्रतीयत इत्याह **येयमित्यादिना** । परिस्पन्दशक्त्या ।

**कं०रा०**— **स्यादेतदिति** । यदि बन्धसत्त्वग्राहकं प्रत्यक्षं तत्त्वावेदकं स्यात्तदाऽर्थापत्तेः प्रत्यक्षविरुद्धत्व-मित्येतत्स्यात् । न चैतदस्ति । अद्वैतश्रुत्यादिविरोधादिति भावः । **समस्तेति** । समस्तोपाधिविनिर्मुक्तमत एवानन्तमपरिच्छिन्नमानन्दज्ञानैकरसमुदासीनं कर्तृत्वभोक्तृत्वादिरहितमद्वितीयमात्मतत्त्वं नेह नानेत्यादिश्रुतिस्मृत्या-दिषु प्रतिपाद्यत इत्यर्थः । नन्वद्वितीयात्मतत्त्वप्रतिपादकश्रुतिस्मृत्यादीनां प्रत्यक्षविरोधादुपचरितार्थत्वं किं न स्यादित्यत आह **न चेति** । उपक्रमादिषड्विधतात्पर्यलिङ्गवशादद्वितीयात्मतत्त्वपरत्वेन विद्यमानानीदृगात्मतत्त्वं प्रतिपादयन्ति श्रुतिस्मृतिपुराणादीनि केनचिदुपचरितार्थानि कर्तुं न शक्यानीत्यर्थः । **तद्विरुद्धं** श्रुत्यादिविरुद्धम् । **प्रादेशिकं** परिच्छिन्नम् । **आदर्शयत्** गोचरयत् । **कथमिति** । कथं बाधितं भवेदित्यर्थः । नन्वद्वितीयात्मतत्त्व-विपरीताकारः प्रत्यक्षे कस्मान्निमित्ताद्भातीत्याशंक्याविद्यापरिणामरूपान्तःकरणोपाधिवशादयं विपरीताकारः प्रत्यक्षे भातीति वक्तुमविद्यास्वरूपमन्तःकरणस्वरूपं चाह **येयमित्यादिना** । येयमनादिरनिर्वाच्याऽविद्येति संबन्धः । स्थितं व्यवस्थितं ज्ञानानन्दादिलक्षणं यस्य परब्रह्मस्वरूपस्य तत्त्वावभासं प्रतिबध्य जीवत्वापादिकेत्यर्थः । **अविद्येति** । अविद्या च कर्म च पूर्वप्रज्ञा च । तत्प्रयुक्ताः संस्काराः । अविद्यासंस्कारः कर्मसंस्कारः पूर्वानुभवजसंस्कारश्चेति यावत् । तेषां संस्काराणां चित्रभित्तिरिव । चित्रभित्तिर्यथा नानापदार्थानामाश्रयस्तथाऽविद्याऽपि पूर्वोक्तानां संस्कारशब्दितनानाविधवासनारूपपदार्थानामाश्रय इत्यर्थः । **तस्या इति** । **तस्या** अविद्यायाः । परमेश्वराधिष्ठानेन लब्ध इत्यर्थः । **विज्ञानेति** । विज्ञानशक्तिः क्रियाशक्तिश्चेति यद् द्रव्यं तदाश्रयः । अत एव कर्तृत्वभोक्तृत्वयोर्मुख्याधारः क्रियाशक्तिवशात्कर्तृत्वाधारो ज्ञानशक्तिवशाद्भोक्तृत्वाधार इति योज्यम् । अहङ्कारस्यापरोक्ष्यं च चैतन्यवत्स्वतो-ऽपरोक्षत्वाभावाच्चैतन्यसंवलनप्रयुक्तमित्याह **कूटस्थेति** । कूटस्थं निर्विकारं यच्चैतन्यं तत्संबन्धात्संजातो ज्योतिःशब्दितप्रकाशो यस्येत्यर्थः । **परिस्पन्दशक्त्येति** । चेष्टाशक्त्या प्राण इति गीयत इत्यर्थः । **लोहितिमा** लौहित्यम् । **पूतिकूष्मांडीकृते** (पूतिगन्धस्तु दुर्गन्ध इत्यभिधानात्) पूतिकूष्माण्डवत्स्वविषयबन्धसत्यत्व-व्यवस्थापनरूपकार्याक्षमीकृते ।

**श्रीनिधि०— समस्तोपाध्यनवच्छिन्नेति** । देहान्तःकरणादि सकलोपाधिरहितेत्यर्थः । आनन्दश्च चैतन्यं चानन्दचैतन्ये । एकं मुख्यं रसरूपं यस्य तदानन्दचैतन्यैकरसम् । अनन्तं च तत् अनवच्छिन्नं च तत् तच्चेति द्रष्टव्यम् । केवलं तद्रूपमित्यर्थः । **उदासीनमिति** । कर्तृत्वभोक्तृत्वादुदासीनमित्यर्थः । उपप्लूयते इति उपप्लवः । बाधितमित्यर्थः । ननु नोक्तरूपमात्मतत्त्वं श्रुतिस्मृतीतिहासतात्पर्यविषयं अहं कर्तेत्यादि प्रत्यक्षविरोधादित्यतः कर्तृत्वादेरारोपितत्वं वक्तुमुपोद्घातमाह **येयमित्यादिना** । **स्वत एव स्थितेति** । स्वाभाविकेत्यर्थः । **तल्लक्षणेति** । समस्तोपाध्यनवच्छिन्नेत्यादि पूर्वोक्तलक्षणेत्यर्थः । जीवत्वापादिकेत्यस्यानादिरनिर्वाच्याविद्या इत्यन्वयः । अत्र प्रथमाविद्यापदेन सन्तानरूपविद्योच्यते । **पूर्वप्रज्ञासंस्कारेति** । पूर्वानुभवजन्यसंस्कारेत्यर्थः । एवंरूपचित्राणां भित्तिः । **अधिष्ठितत्वम्** अवस्थानम् । **ज्ञानक्रियाशक्तीति** । शक्तिशब्दः प्रत्येकं संबध्यते । **एकाधारः** मुख्यस्थानम् । **कूटस्थं** निर्विकारम् । **संवलनं** परस्परमैक्याध्यासः । **ज्योतिः** प्रकाशः । चैतन्याध्यासेऽपि धर्मादिवन्न परोक्षमित्याह **अपरोक्ष इति** । संवलितोऽहङ्कारः । अन्तःकरणत्वं तु न संवलितस्य किन्तु निष्कृष्टस्य जडस्यैव । ननु कथं संवलितस्य निष्कर्षः । क्षीरनीरयोः संवलितयोः निष्कर्षादर्शनादित्यत आह **स च चिदात्मन इत्यादिना** । **अहमिति प्रत्ययो** यस्मिन् स अहं प्रत्ययीत्यर्थः । विज्ञानशक्तिविशेषं विज्ञानशक्तिप्रभेदं तदुपरागनिमित्तं तत्संबन्धनिमित्तम् । **उपधानम्** सन्निधानम् । **पूतीकूष्माण्डीकृते** दुर्गन्धयुक्तकूष्माण्डवदप्रयोजकीकृते स्वकार्याक्षमे कृत इत्यर्थः ।

**वा०चं०—** नन्वनेन वाक्येन प्रत्यक्षविरोधेन मिथ्यात्वे निरस्ते मिथ्यात्वं यदीत्युत्तरवाक्ये तत्प्रसज्योपपत्तिविरोधेन तन्निराकरणमयुक्तं बलाभावेन मिथ्यात्वोज्जीवनायोगात् । न च श्रुत्यादिकमेव तदुज्जीवकमिति वाच्यम् । श्रुत्यादेः प्रत्यक्षोपमर्दकत्वासंभवात् । न ह्यागमाः सहस्रं घटं पटयितुमीशते । प्रत्युत ज्येष्ठप्रमाणप्रत्यक्षविरोधेन श्रुत्यादेरुपचरितार्थत्वमेव युक्तमिति नोत्तरवाक्यं सङ्गतमित्यतो भामतीमतेन प्राप्तशङ्कापरिहारकतया तत्सङ्गमयति **स्यादेतदिति** । अत्र शक्रेणापीति परेण व्यवहृतेऽपि देवताद्रोहजनितं पापं तस्यैवास्त्विति भावेन तत्तात्पर्यानुवादोऽयं **केनापीति** । ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे । रजतज्ञानस्य ज्यायसः कनीयसा शुक्तिज्ञानेन बाधदर्शनादिति भावः । अत्र समस्तेत्यादेः प्रादेशिकमिति अनन्तानन्देत्यादेः अनेकविधदुःखेत्युदासीनमेकमद्वितीयमित्यस्यादिपदसङ्गृहीतकर्तृत्वभोक्तृत्वनानात्वसद्वितीयत्वं प्रतियेगितयोपात्तम् । **उपप्लवो** विपर्यासः । ननु नायं स्मर्यमाणारोपः । पूर्वानुभूतमात्रविषयकत्वाभावात् । नापि गृह्यमाणारोपो ग्रहणोपाधेरदर्शनादित्यतः पञ्चपादिकोक्तरीत्या ग्रहणोपाधिमुपपाद्य द्वितीयं कक्षीकरोति **येयमित्यादिना** । यद्वा न प्रत्यक्षं भ्रमः । श्रौतबाधेऽप्यनिवृत्तेरित्यतः सोपाधिकभ्रमत्वादनिवृत्तिरित्यभिप्रेत्य सोपाधिकत्वमुपपादयति **येयमित्यादिना** । अत्र बुद्ध्युपरागनिमित्तमात्मनः कर्तृत्वादिकं मिथ्यैव प्रतिभातीत्येतावत्येवानुवदितव्ये बुद्धेरहमर्थत्वानुवदनमहमर्थस्य अनात्मत्वनिरासोपक्षेपाय । अत्र च ननु चिदात्मन एवाहमर्थत्वात्कथमनात्मधर्माणामात्मन्यारोप इत्यतश्चिदात्मनो बुद्ध्या निष्कृष्येति । वेदान्तवादिभिरित्यनेन 'बुद्धेर्गुणेनात्मगुणेन चेव ह्यारोपमात्रा ह्यपरोऽपि दृष्टः ।' 'बुद्धिश्च न विचेष्टती'त्यादेः परिमाणक्रियावत्त्वादिना आत्मातिरिक्तबुद्धिरूपद्रव्यसाधकतया परोपन्यस्तप्रमाणस्य सङ्ग्रहः । नन्वात्मन्यहङ्कारस्यानादित्वेऽविद्यातत्संबन्धा-





तिरिक्तानादित्वेनानुच्छेद्यत्वापत्त्या सादित्वेऽपि निरुपादनत्वे भावकार्यत्वानुपपत्त्या सोपादानत्वेऽपि सर्वसामर्थ्य-विधुरासत्कार्यत्वानुपपत्त्या सदुपादनकत्वे च कार्यस्यापि संत्त्वापत्त्या नात्माऽन्यत्वमुपपन्नमित्यतोऽनिर्वाच्या-विद्योपादानकत्वान्नानुपपत्तिरित्याशयेन येयमित्यादि तस्या इत्यन्तमुपादानकीर्तनम् । तत्र जीवब्रह्मणोरेवान्यन्वे कर्तृत्वाद्यध्यासवर्णनमनुपपन्नमित्यविद्याकार्यप्रदर्शनम् । स्वत एवेति स्थितलक्षणा सिद्धरूपा या ब्रह्मस्वरूपता तदवभासमित्यर्थः । अविद्याया एकरूपत्वान्न विचित्रकार्योत्पादकत्वमित्यत उक्तेऽविद्याकर्मपूर्वप्रज्ञासंस्कार-चित्रभित्तिरित्यत्राविद्यायाः स्वभित्तित्वासंभवादिविद्याशब्दो भ्रान्तिपरः । पूर्वप्रज्ञा पूर्वानुभवो भ्रान्तिसम्यगनुभवभेदेन पृथङ्निर्देशः । तथा चाविद्याकर्मपूर्वप्रज्ञानां संस्कार एव चित्रं तस्य भित्तिरित्यर्थः । उपादानीभूताविद्याया अपि सादित्वे तदुपादानपरम्परयाऽनवस्थेत्यत उक्तम् **अनादिरिति** । अनिमित्तककार्यानुपपत्त्या परिच्छिन्नज्ञानतया अहङ्कारप्रेरकत्वानुपपत्त्या जीवाधिष्ठातृकत्वासंभवान्निर्धर्मकतया ब्रह्माधिष्ठातृकत्वासंभवाच्च निमित्तासंभव इत्यतो वस्तुतो निर्धर्मकत्वेऽपि काल्पनिकधर्मवत्तयेश्वरस्याधिष्ठातृत्वोपपत्तिरिति निमित्तकथनं तस्याः **परमेश्वरेति** । स्वरूपमेव तस्य न निष्कृष्टमित्यतस्तत्स्वरूपकथनं **विज्ञानेति** । कर्तृत्वादेरात्मधर्मत्वान्न तत्कार्यत्वमित्यतः तस्यैव धर्म इत्याह **कर्तृत्वेति** । अनुपलम्भेन तत्र प्रत्यक्षाभावात् । कौटस्थ्यविरोधेन साक्षिणोऽप्यसंभवान्न तत्र प्रमाणमित्यतः साक्षिचैतन्यस्य कूटस्थत्वेऽपि तस्मिन्नध्यासलक्षणसंवलनेन परिनिष्पन्नप्रकाश इति प्रमाणकथनं **कूटस्थेति** । नित्यानुमेयत्वव्यावृत्तये **अपरोक्ष इति** । यदर्थमेतावदुक्तं तदाह **तदुपरागेति** । अहङ्कारोपरागात्तन्निष्ठ-कर्तृत्वादेरात्मन्यारोपमात्रं वा रजतादिवन्मिथ्याभूतकर्तृत्वादेरात्मन्युत्पत्तिर्वास्तु । न चाद्येऽहङ्कारेऽसतः कर्तृत्वादेरारोपे व्यधिकरणप्रकारत्वाद्यन्यथाख्यात्यापत्तिः । कर्तृत्वादिविशिष्टाहङ्कारस्यात्मन्यारोपाभ्युपगमेनान्यत्र सतोऽन्यत्रारोपा-नभ्युपगमेनान्यथाख्यात्यनापत्तेः । न च द्वितीये कर्तृद्वयापत्तिः । आत्माहङ्कारयोस्तादात्म्याध्यासाभ्युपगमेन तदनापत्तेरिति विवरणाभिप्रायः । प्रकृतेन सङ्गमयति **तदेवमिति** । पूतिशब्देन दुर्गन्ध्यभिधीयते । ततश्च दुर्गन्धयुक्तकूष्माण्डफलमिव कृत इत्यर्थः । मिथ्यात्वं यदीति मूलं न साक्षात्प्रकृतसङ्गतम् ।

**वा०र०— तत्प्रसज्योपपत्तीति** । मिथ्यात्वेन प्रसज्या यदि दुःखादेरात्मातिरिक्तस्येत्यादिमूले वक्ष्यमाणोपपत्तीत्यर्थः । **मिथ्यात्वोज्जीवनेति** । यदि हि मिथ्यात्वे प्रत्यक्षेण निराकृतेऽपि केनचिद्बलवता प्रमाणेन प्रत्यक्षस्यैव स्वविरोधेनाप्रामाण्यं प्रापयता मिथ्यात्वतादवस्थ्यसमर्पणं स्यात्तदा मिथ्यात्वाङ्गीकारे प्रत्यक्ष-विरोधोपन्यासस्यायोगप्राप्त्या पराङ्गीकृतमिथ्यात्वबलेनैव श्रुतिमिथ्यात्वरूपां युक्तिं प्रसञ्जयित्वा तन्मिथ्यात्वे च तया दुःखादिमिथ्यात्वासिद्धिरित्येवंरूपं दूषणं देयं स्यात् । न च तथाविधप्रत्यक्षनिरासेन मिथ्यात्वोज्जीवकं प्रमाणमस्ती-त्यर्थः । **आगमाः सहस्रमिति** । सहस्रमपीति योज्यम् । तथैव भामतिपाठात् । सहस्रसङ्ख्याका अपीति यावत् । ज्येष्ठप्रमाणेति भामत्यनुसारेणाह **प्रत्युतेति** । **भामतीमतेनेति** । भामतीमतेन प्राप्ता या शङ्का तत्परिहारकतयेति योज्यम् । **उपक्रमादीति** मूले । आदिपदेन परामर्शोपसंहारयोः क्रियासमभिव्याहारस्य च ग्रहणम् । उपक्रम-परामर्शोपसंहारैरिति भामत्यनुसारात् । परामर्शो मध्ये निर्देशः । क्रियासमभिव्याहारः पौनःपुन्यमिति कल्पतरुः । अभिदधति सन्तीति सुबन्तम् । आत्मतत्त्वमभिदधानानि अत एव तत्र तात्पर्यवत्तया सन्ति विद्यमानानीत्यर्थ-





स्यैतदधिकरणचन्द्रिकाव्याख्याने गुरुपादैरुक्तत्वात् । **परेणेति** । भामतीकृतेत्यर्थः । **तत्तात्पर्येति** । देवोत्तमस्य अशक्यमिति प्राप्तौ केनाप्यशक्यत्वं लभ्यत इति भावः । प्रत्युत ज्येष्ठप्रमाणेत्युक्तं ज्येष्ठत्वं चेति भामत्यनुसारेण निराह **ज्येष्ठत्वं चेति** । तथा चोपजीव्यत्वप्रयुक्तप्राबल्यं यथा नास्ति तथा मुख्यत्वप्रयुक्तप्राबल्यमपि नेति भावः । स्पष्टनियमे तदस्ति । समस्तोपाध्यनवच्छिन्नेत्यादिनोक्तब्रह्मस्वरूपविरुद्धतया प्रादेशिकमित्यादिकं जीवस्वरूप-प्रदर्शनमिति सिद्धे ब्रह्मजीवस्वरूपयोः परस्परविरोधप्रकारस्यात्रास्फुटत्वात्तं दर्शयति **अत्र समस्तेत्यादेरिति** । प्रादेशिकमितीत्यस्य प्रतियोगितयोपात्तमिति वक्ष्यमाणेन संबन्धः । एवं दुःखेतीत्यत्रापि उदासीनमेकमद्वितीयमिति पाठः । स द्वितीयत्वमित्यन्ते द्वन्द्वैकवद्भावः । **विपर्यास इति** । अहमनुभवस्तु कथं चानुपप्लव इति भामती-व्याख्याने उपप्लवो विपर्यासः । सोऽस्य नास्तीत्यनुपप्लवोऽहमनुभवः कथं विपर्यासशून्य इत्यर्थकथनेऽपि विपर्यासशब्देन विपरीतानुभवमात्राभिधानात्तस्य च पूर्वानुभवविपरीततया द्वितीयानुभवरूपतेव वस्तुवृत्तापेक्षया विपरीतपूर्वानुभव-रूपताऽप्यस्त्येवेति बाधकविपरीतानुभवमविवक्षित्वा भ्रमरूपविपर्यासविवक्षया अत्र विपर्यास इत्येव व्याख्यातमित्यदोषः । तथाच विपर्यासपदोक्तभ्रमः कथं न भवेदिति प्राप्नोतीति भावः । **पूर्वानुभूतमात्रेति** । पूर्वानुभूतमात्रम् । पूर्वानुभूतमेव यदारोप्यं तद्विषयकत्वाभावात् । आरोप्यस्य प्रागनुभवाभावादिति यावत् । पुरोवर्तिनं दृष्ट्वा यत्स्मर्यते स्मृतस्य च तस्य तत्रारोपः स स्मर्यमाणारोपः । यत्र चारोप्यमधिष्ठानग्रहकाल एव समीपे गृह्यते तस्य च गृह्यमाणस्याधिष्ठानेऽपि ग्रहणसंगृह्यमाणारोप इति विवेकः । **नापीति** । प्रकृते आत्मग्रहसमानकाल एव गृह्यमाणं यत्प्रधानं तस्य ह्यारोपो वक्तव्यः । न चासौ युक्तः । अधिष्ठाने कर्तृत्वादिग्रहणे उपाधेः उपसमीपे स्थित्वा स्वधर्मासञ्जकस्यादर्शनादित्यर्थः । **ग्रहणोपाधिमिति** । अहङ्कारलक्षणमिति पूरणीयम् । **द्वितीयमिति** । गृह्यमाणा-रोपपक्षमङ्गीकरोतीत्यर्थः । अत्र च मुखं व्यादाय स्वपितीत्यादाविव पूर्वकालत्वस्याविवक्षया कक्षीकृत्योप-पादयतीत्यर्थस्याभिप्रेतत्वान्न कश्चिद्दोषः । अत्र पञ्चपादिकोक्तरीत्येत्युक्त्या भामतीमतेनेति प्रागुक्तं भामतीमतानु-सारित्वं येयं चैतन्यस्येत्येतत्पर्यन्तम् । येयमित्यारभ्य तु पञ्चपादिकाग्रन्थोऽनूदितः । तेन परभाष्यसंप्रदाय-प्रवर्तकग्रन्थद्वयाभिहितोपपादनद्वयस्य लाभे संपूर्णपरभाष्यार्थानुवादसिध्या तद्दूषणमेव मूले कृतं सिद्ध्यतीति ज्ञापयति । गृह्यमाणारोपत्वोपपादकतयोपाधिप्रदर्शनपरत्वेन योजनायां वास्तवस्थितिमात्रकथनपरत्वमाश्रयणीय-मित्यपरितोषादुक्तभ्रमोपपादकत्वेनैवैतद्ग्रन्थं योजयति **यद्वेति** । **सोपाधिकत्वमिति** । पञ्चपादिकोक्तरीत्येति वर्तते । परमते बुद्धिगतं कर्तृत्वादिकं बुद्ध्युपरागादात्मनि प्रतीयत इत्येव प्रक्रिया । तदनुसारेणैव प्रकृतेऽपि वाच्यतया बुद्धिस्थाने अहङ्कारकथनमयुक्तमित्यतोऽहङ्कारत्वेनात्र बुद्धेरेवानुवादान्न दोषः । अनुवादे प्रयोजनं त्वहङ्कारस्यानात्मबुध्यात्मकतया परोक्तस्यानात्मत्वस्याप्यनुवादलाभाय । स च तस्यापि दूषणायेत्याह **अत्र बुद्ध्युपरागेति** । **कथमनात्मेति** । आत्मन्यनात्मधर्मारोपस्यैव पराभिमतत्वादत्राहङ्कारगतकर्तृत्वाद्यारोपाश्रयणे आत्मन्यनात्मगतधर्माणामारोप एव स्वीकृतः स्यादिति भावः । **निष्कृष्येतीति** । विविच्येत्यर्थः । परिमाणगुणवत्तया द्रव्यत्वे बुद्धेर्गुणेनेत्येतत्प्रमाणम् । **बुद्धिश्च न विचेष्टतीत्यादेरिति** । इदं च वाक्यं कालविशेषे चेष्टाभावोक्त्या बुद्धिर्वस्तुतश्चेष्टाश्रयेत्यत्र प्रमाणम् । 'यदा पञ्चैव लीयन्ते ज्ञानानि मनसा सह । बुद्धिश्च नेऽङ्गते तत्र परमात्मानमश्नुत' इति वाक्यगतबुद्धिर्नेऽङ्गत इत्यस्यार्थानुवादोऽयम् । तथाविधं वाक्यान्तरमेव वा । चेष्टावत्त्वेन द्रव्यत्वमिति सिद्धे पराभिमतगुणत्वनिराकारण-

लाभः । **बुद्धिश्च न** विचेष्टतीति वाक्ये कालविशेषे क्रियानिषेधेनार्थात्क्रियाऽवगमेऽपि साक्षात्तदवगमाभाव इत्यतः साक्षादपि तदवगमोऽस्तीति प्रतिपादनाय विज्ञानं यज्ञं तनुत इति प्रमाणं क्रियावत्त्वप्रतिपादकतया आदिपदेन संगृहीतम् । आनन्दमयस्य पृथगुपदेशाद्विज्ञानं बुद्धिरित्यनर्थान्तरमित्यतो बुद्धेः क्रियाश्रयतयापि द्रव्यत्वसिद्धिरिति भावः । **आत्मन्यहङ्कारस्येति** । अनेनाहमर्थ आत्मा वा तदन्यो वेति विकल्पद्वयं मनसि निधायाद्यमनूद्य प्रसञ्जितस्य कथमनात्मधर्माणामिति दूषणस्य निराकरणपरतया पूर्वं चिदात्मनो निकृष्येत्यंशो वर्णितः । इदानीं त्वात्मान्यत्व-पक्षेऽपि प्रसञ्जितानेकतत्तद्दूषणपरिहाराय तत्तदंशप्रवृत्तिर्वर्ण्यत इति पूर्वोत्तरग्रन्थयोजना कार्येति सूचयति । अनादित्व इत्यादिनाऽपि अनादिर्वा सादिर्वेत्यादिरूपेण विकल्पनीयमिति सूचयति **अविद्यातत्संबन्धेति** । 'जीवो ब्रह्मविशुद्धा चिद्विभागस्त्वनयोर्द्वयोः । अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥' इति पराङ्गीकृतानादिषट्के जीवादिस्वरूपस्येव अनादित्वेऽप्यविद्यायास्तत्संबन्धस्य च निवृत्तिरेवेति पराङ्गीकारेण तदुभयातिरिक्तानादिनिवृत्तिर्नास्तीति च तदङ्गीकारेणाहमर्थस्यानादित्वे निवृत्त्ययोग इत्यर्थः । **भावकार्यत्वेति** । भावकार्यस्य कारणत्रितयजन्यत्वनियमादिति भावः । **सर्वसामर्थ्येति** । अनेन हेतुगर्भविशेषणेनासतो निरस्तसमस्तसामर्थ्यस्य कारणताया एवायोगेनास्य तत्कार्यत्वानुपपत्तिरित्यर्थः सूचितः । **तत्रेति** । उपादानकीर्तनाय प्रवृत्तभागेऽपीत्यर्थः । **जीवब्रह्मणोरिति** । यदि जीवब्रह्मणोरेव भेदस्तदा कर्तृत्वादेर्जीवगतत्वाङ्गीकारे बाधकाभावेन तदध्यासवर्णनं व्यर्थम् । तयोरेकत्वे हि जीवे कर्तृत्वादेर्वास्तवत्वायोगेन तदध्यासवर्णनापेक्षा स्यादित्यर्थः । **अविद्येति** । इत्यतोऽविद्येति योज्यम् । **कार्य-प्रदर्शनमिति** । तत्प्रदर्शनव्याजेन जीवब्रह्मणोरभेद एवेत्यस्य प्रतिपादनात्तद्विरोधिकर्तृत्वादेरध्यासवर्णनं युक्तमिति सूचनादिति भावः । अप्रतीतेर्व्याचष्टे **स्थितलक्षणेत्यादि** । घटादिलक्षणः पदार्थ इत्यादौ लक्षणपदस्य स्वरूपेऽपि प्रयोगात्सिद्धरूपेत्यर्थलाभ इति ज्ञेयम् । स्वत एव सिद्धत्वं प्राप्तम् । न तु स्वस्मिन् प्रमाणमपेक्षत इति सूचनाय रूपपदम् । या ब्रह्मस्वरूपता सा स्वरूपेण सिद्धेति स्पष्टं प्रतीतेः । यत्तु लक्षणं च ब्रह्मस्वरूपता चेति द्वन्द्वमाश्रित्य स्वत एव सिद्धे लक्षणब्रह्मरूपते यस्य स तथोक्तः । लक्षणं चानन्दादीति व्याचक्षते । तदप्यनेन निराकृतं भवति । लक्षणशब्दस्य जीवलक्षणपरत्वस्यैव प्राप्ततया ब्रह्मलक्षणभूतानन्दादेर्जीवलक्षणत्वस्याभावेन द्वन्द्वायोगात् । ब्रह्मस्वरूपत्वे तल्लक्षणमेव तल्लक्षणमित्यभिप्राये च ब्रह्मरूपतेत्यनेनैव गतार्थतया पृथग्लक्षणोपादानायोगः । ब्रह्मलक्षणेत्यर्थपर्यवसानस्य उत्तरपठितब्रह्मपदसमभिव्याहारबलकल्पनीयताक्लेशश्च । अभेदवादिनाऽभेदोपयोगिप्रमेयप्रतिपादनाय विद्याकार्यत्वेन जीवगतब्रह्मरूपतावभासप्रतिबन्धमात्रस्यैव वक्तव्यतया भेदकत्वेन सम्मतलक्षणस्य धर्मतया व्यवहारस्य निर्निमित्तं करणायोगाच्च । अन्यथाख्यातिरप्यत एव दुष्टा । अत एव तत्र जीवेभ्यो ब्रह्मान्यदिति मतमपाकर्तुमेतदुक्त-मित्युक्तं च पूर्वोत्तरविरोधमावेदयतीत्यलम् । भ्रान्तिकर्मपूर्वानुभवसंस्कारा इत्यादि विवरणतत्त्वदीपनानुसारेणाह **अविद्यायाः स्वभित्तित्वेति** । भित्तिराश्रयः । भ्रान्तेरपि पूर्वानुभवग्रहणेनैव गृहीतत्वोपपत्तेराह **भ्रान्तिसम्यगिति** । **अनिमित्तकेति** । अनेनास्तु वा सत्यत्वानापादकं भावकार्यत्वनिर्वाहकं चोपादानम् । तथापि निमित्ताभावे कार्यानुत्पत्तेस्तस्याप्यङ्गीकार्यत्वे तत्किं जीव उत साक्षी नाद्य इत्यादिरूपेणेदं योज्यमिति सूचितम् । स्वरूपमेव तस्य । परिणामविशेषतयोपस्थिताहङ्कारस्य । न तावद्विषयित्वमेव स्वरूपमपसिद्धान्तात् । नाप्यन्यत् । अनुपलम्भेनेत्यादि वक्ष्यमाणदूषणादिति भावः । **तत्कार्यत्वमिति** । अविद्याकार्यत्वमित्यर्थः । **तस्यैवेति** । अहङ्कारस्यैवेत्यर्थः ।





उक्ताहङ्कारप्रमाणं किं प्रत्यक्षमुत साक्षीत्यादिविकल्पं सूचयन् प्रमाणकथनमवतारयति **अनुपलम्भेनेति** । लिङ्गाद्यभावोपलक्षणं चैतत् । कूटस्थचैतन्येत्यत्र कूटस्थपदबलेनोत्थाप्यशङ्कायाः व्यावृत्तिं दर्शयन् व्याख्यानरूपेणैवावतारयति **साक्षिचैतन्यस्येति** । अनेन कूटस्थचैतन्ये साक्षिणि यत्संवलनं नामाध्यासस्तेन सञ्जातः परिनिष्पन्नज्योतिः प्रकाशो यस्येति योजितं भवति । नन्वहङ्कारधर्मस्यात्मन्यारोपमात्रं क्रियत इत्यादि विवरणं मनसि कृत्वा पक्षद्वयमपि समर्थयमानस्तावत्तदङ्गीकरोति **अहङ्कारोपरागादिति** । प्रत्येकं तत्पक्षदूषणमनूद्य परिहरति **न चाद्य इत्यादिना** । अन्यथाख्यात्यापत्तिरित्युपलक्षणम् । लौहित्यदृष्टान्तवैषम्यं स्यादित्यपि द्रष्टव्यम् । **अन्यथाख्यात्यनापत्तेरिति** । उपलक्षणं चेदम् । आत्मनि वस्तुतोऽसदेव कर्तृत्वमन्यसन्निधानाद्भातीत्यंशे दृष्टान्तत्वोपपत्तेरित्यपि ज्ञेयम् । **कर्तृद्वयेति** । अहङ्कारः सत्यकर्ता आत्मा च मिथ्याकर्तेति तर्कद्वयेत्यर्थः । **तादात्म्याध्यासेति** । विवरणे एकतापत्त्या धर्मभेदानवभास इत्युक्तेऽपि कालान्तरभाव्येकतापत्तेरिदानींतनधर्मद्वयावभासनिरोधकत्वायोगात् तस्यैव व्याख्यानं तादात्म्याध्यासाभ्युपगमेनेति कृतमिति ज्ञेयम् । **विवरणाभिप्राय इति** । तदुपरागनिमित्तं मिथ्यैवात्मन इति मूलवाक्यस्यान्तःकरणोपरागनिमित्तं मिथ्येवेति पञ्चपादिकावाक्यानुवादरूपस्य विवरणोक्तो अभिप्रायो ज्ञातव्य इत्यर्थः । **प्रकृतेनेति** । पूर्वं भामतीमतेन शङ्कामुपक्रम्य तत्र प्रत्यक्षभ्रमत्वोपपादकपञ्चपादिकानुसारेणाधिकं प्रमेयं प्रतिपाद्य भामतीमेवानुसृत्योक्तस्योपयोगमाहेत्यर्थः । अहंप्रत्यये पूतिकूष्माण्डीकृत इत्येतद्भामतीकल्पतर्वनुसारेणाह **पूतीति** । अत्र पूतिदुर्गन्धं कूष्माण्डेति कल्पतरुपाठानुसारि पाठः । तेन दुर्गन्धीत्यत्र सुगन्धीत्यत्रेवेकारान्तादेशो नायाति । गन्धस्येदुत्पूतिसुसुरभिभ्य इति सूत्रे उत्पूतिसुसुरभिभ्य एवोत्तरगन्धशब्दे इकारान्तादेशविधानात् । दुष्टो गन्धो दुर्गन्धः मत्वर्थे निप्रत्ययान्तत्वे दुर्गन्धीति भवतीत्येतत्तु कर्मधारयमत्वर्थीयाद्बहुव्रीहिरिवेष्टो लघुत्वादित्येतद्विरुद्धं कथञ्चिद्बहुव्रीहिकर्मधारययोः शब्दसाम्ये दोषाभाव इत्याश्रयणेन नेयमिति कल्पनानवकाश इति द्रष्टव्यम् । पूतिपदं दुर्गन्धे पदार्थे रूढमिति पूतिपर्युषितं च यदित्यादिप्रयोगसिद्धम् । अथ पूतीभाव इत्येतद्धातुवृत्तौ विकरणे पूतीभावो दुर्गन्ध इति व्याख्यानं च धर्मपुरस्कारप्रवृत्तं दुर्गन्धोपेतधर्मिपुरस्कारप्रवृत्तैतद्व्याख्यानाविरोधीति ज्ञेयम् । यत्वन्यथाख्यातौ पूतिपदेन दुर्गन्ध्यभिधीयत इत्युक्त्वा पूतिगन्धस्तु दुर्गन्ध इत्यभिधानादिति प्रतिपादितम् । तदसत् । पूतिगन्धस्य दुर्गन्धरूपत्वस्याभिधानप्राप्तत्वेऽपि पूतिपदेन दुर्गन्धीत्यर्थस्याभिधानादप्राप्तेः । ....... । **फलमिव कृत इति** । इदं तु तात्पर्यकथनम् । कूष्माण्डमिव कृतं पूतिकूष्माण्डीकृतम् । तस्मिन्निति तु व्युत्पत्तिः । **साक्षात्प्रकृतेति** । तन्मूलस्योपपत्तिविरोधप्रतिपादकत्वेनोपपत्तिविरोधस्य च प्रत्यक्षबोधः श्रुत्या भवतीति बन्धमिथ्यात्ववर्णनमुपपन्नमिति परोक्तमयुक्तमिति प्रतिज्ञायां हेतुतया सङ्गत्यभावात् । उपपत्तिविरोधस्य श्रुतेः सकलमिथ्यात्वपरत्वे विरोधकत्वेऽपि बन्धमिथ्यात्ववर्णनोपपत्तौ विरोधकत्वाभावादित्यर्थः ।

**स०व्र०**— ननु कर्तृत्वभोक्तृत्वशून्यत्वे तदवभासः कथमिति चेदहङ्कारोपरागादिति ब्रूमः । तर्ह्ययमहङ्कारः किमुपादानक इत्यत आह **येयमिति** । येयमित्याद्युपादानकीर्तनम् । अविद्याया एकरूपत्वान्न विचित्रकार्योत्पादकत्वमित्यत उक्तम् **अविद्याकर्मेति** । भ्रान्तिकर्मपूर्वानुभवतत्संस्कारा इत्यर्थः । त एव चित्रं तस्य





भित्तिरिवेति विग्रहः । परमेश्वराधिष्ठितेति निमित्तकारणनिर्देशः । **विज्ञानेति** । स्वरूपप्रदर्शनम् । **तदेवमिति** । प्रकृतोपयोगोक्तिः । पूतिशब्देन दुर्गन्धोऽभिधीयते ।

**विठ्ठ०**— कर्तृत्वादिमिथ्यात्वस्य अतिप्रबलश्रुत्यादिसिद्धत्वेन तदभावग्राहकप्रत्यक्षस्यानत्वावेदकतया श्रुत्यादिबाधितत्वेन न तद्विरोधो अर्थापत्तेर्भाष्यकारीयव्युत्पादनस्येति शङ्कते **स्यादेतदेवमिति** । **अभिदधति** अभिदधानानि । **सन्ति** विद्यमानानि । **प्रादेशिकं** प्रादेशस्थमल्पपरिमाणेति यावत् । **उपप्लवो** अप्रमाणम् । न केवलं श्रुत्यादिविरोधेन कर्तृत्वादिविषयप्रत्यक्षमतत्वावेदकं किन्तु वस्तुस्थितिपर्यालोचनयापीत्याह **येयं चैतन्यस्ये-त्यादिना** । **अविद्या** भ्रान्तिः । विद्येति पदच्छेदे वृत्तिरूपज्ञानम् । **कर्म** पुण्यपापरूपम् । **पूर्वप्रज्ञा** स्मृतिः । अविद्यारूपस्य चित्रस्य भित्तिरिव भित्तिः । मूलकारणभूतेत्यर्थः । अनिर्वाच्याविद्यायाः एकरूपत्वात् कथं तत्र विचित्रकार्योत्पत्तिरित्यतो विद्यादिचित्रभित्तिरित्युक्तम् । इहानिर्वाच्याविद्यास्वरूपनिरूपणं वक्ष्यमाणाहङ्कारस्य उपादानकारणप्रदर्शनार्थम् । **परमेश्वरेति** निमित्तकारणोपदर्शनम् । अहङ्कारस्यावान्तरभेदज्ञापनार्थम् **विज्ञान-क्रियाशक्तिद्वयाश्रय इति** । **कर्तृत्वेति** अहङ्कारकार्यप्रदर्शनम् । अहमिति प्रतीतिरेवाहङ्कारे प्रमाणमित्याशयेनोक्तं **कूटस्थेति** । अहङ्कारे आत्मनि च अहङ्काराध्यास इत्यन्योन्यस्मिन् अन्योन्यात्मतयाध्यासः संवलनम् । विज्ञानक्रियाशक्तीति अहङ्कारस्वरूपनिरूपणं कृतम् । तत्प्रपञ्चयति **स चेति** । तदुपरागेति फलप्रदर्शनम् । **पूतिकूष्माण्डीति** । नेहनानेत्यादिश्रुतिर्दृश्यत्वादियुक्तिविरोधेन अन्तःछेदनयुक्तकूष्माण्डवत्स्थलीकृत इत्यर्थः । इत्याद्युक्तलिङ्गेत्यत्रादिपदेन श्रुतिः लिङ्गमित्यत्रोक्तग्रहणम् ।

**चषकः**— दोषजन्यत्वसन्देहाहिताप्रामाण्यशङ्कास्कन्दितप्रत्यक्षं निर्दोषत्वायत्त तच्छङ्कानास्कन्दित-ताकश्रुतिप्रत्यापितमिथ्यात्वं प्रतिरुन्धानं कथं भवेदित्याशयेन शङ्कते **स्यादेतदिति** । स्वत एव स्थितेति लक्षणब्रह्मरूपतयोर्विशेषणम् । लक्षणं परमानन्दादिकम् । उभयावभासं प्रतिबध्येत्यर्थः । अविद्याशब्देन भ्रान्ति-रुपादीयते । पूर्वप्रज्ञापदेन पूर्वानुभवः । कृतद्वन्द्वप्रज्ञान्तेन षष्ठ्यन्तेन संस्कारपदस्य समासः । तादृशसंस्कारा एव चित्रं तस्य भित्तिरिवेति विग्रहः । एकरूपाया अप्यविद्यायाः विचित्रनानाकार्यनिर्वाहकता सङ्गच्छत इति ध्वनयितुमेतदुपात्तम् । शक्तिद्वयाश्रयः विज्ञानशक्तिक्रियाशक्त्याश्रयः पूतिशब्दो दुर्गन्धिवचनः अर्थान्तर-मभिमानिदेवतारूपम् ।

**गूढ०**— भिन्नविषयत्वात् भिन्नविरोध इति शङ्कते **स्यादेतदेवमिति** । ननु कर्तृत्वादिस्वरूप एवात्मा तत्र कर्तृत्वादेरात्मस्वरूपस्यैव मिथ्यात्वं स्यादिति शून्यवादापत्तिरित्यत आह **समस्तोपाधीति** । यद्वा कर्तृत्वादिकं मिथ्या चेदात्मस्वरूपं कीदृशमित्यत आह **समस्तेति** । तथा सति निःस्वभावत्वापत्तिरत उक्तम् **अनन्तेति** । समस्ता ये उपाधयः तदविशिष्टं सत् अनन्तोऽपरिच्छिन्नो य आनन्दः चैतन्यं ज्ञानं च तदेकरूपमित्यर्थः । ननु नेहनानेति श्रुतिविरुद्धत्वेन प्रत्यक्षस्योपप्लवत्वे कथं तद्विषयीभूतकर्तृत्वादेर्मिथ्यात्वात्तत्प्रतिभानमात्मनि किंनिमित्तमिति चेत् अहङ्कारोपरागनिमित्तमेवेति वदामः । ननु तर्हि अहङ्कारस्य किमुपादानं किं वा निमित्तं किञ्च तस्य स्वरूपं किं वा





तस्य कार्यं किञ्च तत्र प्रमाणमित्यतः प्रथमस्योत्तरमाह **येयं सा विद्येति** । तथाच विद्यैव तदुपादानमिति भावः । द्वितीयस्योत्तरमाह **विज्ञानक्रियाशक्तिद्वयाश्रय इति** । चतुर्थस्योत्तरमाह **कर्तृत्वभोक्तृत्वैकाधार इति** । पञ्चमस्योत्तरमाह **कूटस्थेति** । स्वप्रकाशचैतन्यसंबन्धादेव तत्प्रकाश इति भावः । नित्यानुमेयव्यावर्तनाय **अपरोक्ष इति** । शक्तिद्वयाश्रयत्वोक्तेः । क्रमेणोपयोगमाह **स चेत्यादिना** । ननु जीवब्रह्मणोर्भेदात्कथं मिथ्याभूतकर्तृत्वादिप्रतिभानमुपवर्ण्य तेन च तयोरभेद एवेति वाच्यम् । तथात्वे ब्रह्मरूपताया अवभासः प्रसज्येत न चानवभासे किमपि निमित्तं पश्याम इत्यतो अविद्यैव तत्र निमित्तमित्याह । चैतन्यस्य स्वत एव स्थितलक्षणब्रह्मरूपतावभासं प्रतिबध्य जीवत्वापादिकेति । ननु तस्य एकरूपत्वात्कथं विचित्रकार्यकरत्वमित्यत उक्तम् **अविद्येति** । अत्राविद्याशब्देन भ्रान्तिरुच्यते । तथाच भ्रान्तिकर्मपूर्वानुभवसंस्कारा एव चित्रं तस्य भित्तिरित्यर्थः । नन्वविद्याया अपि जन्यत्वे तदुपादानादिकं वक्तव्यमित्यत्राह **अनादिरिति** । ननु तथाप्यविद्याया वस्तुत्वात्कथं तदुपादानकस्य मिथ्यात्वमित्यत उक्तम् **अनिर्वाच्येति** । फलितं दर्शयति **तदुपरागेति** । उक्तोपपादनस्य प्रकृतोपयोगमाह **तदेवेति** । न चैषा सर्वापि कल्पना कस्मात्क्रियत इति वाच्यम् । श्रुत्यादिभिरेतादृशब्रह्मस्वरूपप्रतिपादनादेवेति भावः । **मिथ्यात्वं यदीत्यादि** । ननु बन्धमिथ्यात्वं प्रत्यक्षविरोधतो युक्तमिति प्रत्यक्षविरोधस्योपक्रमः कृतः । तत्र च श्रुत्यादिविरोधेन प्रत्यक्षं प्रति कूष्माण्डीकृतमिति परेणोक्ते उपजीव्यत्वादिना प्रत्यक्षस्य श्रुत्यपेक्षया प्राबल्यात्तद्विरोधेन श्रुतिरुक्तमर्थमुपपादयितुमेव न समर्थेति दूषणं वक्तव्यम् । उपपत्तिविरोधाभिधानं त्वयुक्तम् । प्रत्यक्षविरोधस्यैवोपक्रान्तत्वेन तस्यानुपक्रान्तत्वात् । न च प्रत्यक्षविरोधोऽप्यग्र उच्यत एवेति वाच्यम् । प्रथमप्राप्तप्रबलविरोधपरित्यागे कारणाभावात् । न ह्युपपत्तिः प्रत्यक्षाद्बलवती येन प्रत्यक्षविरोधेनानाभासीभविष्यन्ती श्रुतिरुपपत्तिविरोधेनाभासीभविष्यतीति । न चोपपत्तिविरोधे तात्पर्यज्ञानरूपसामग्रीविघटनात्तदुक्तिरिति वाच्यम् । प्रत्यक्षप्रमाणविरोधे तु प्रमाणाबाधरूपयोग्यताविघटनेनास्यापि सामग्रीविघटकत्वात् । तथाच यदा न वाक्यार्थज्ञानं तदा दूरे तात्पर्यचिन्तावसर इति कस्मादुपपत्तिविरोधाभिधानमयुक्तमिति मैवम् । अस्य दोषस्य शिष्यैर्बोहितुं शक्यत्वादित्याशयेनानुक्तत्वात् । यद्वा अत्र श्रुतेः प्रत्यक्षविरोधकथन एव तात्पर्यम् । तत्र च प्रबलप्रत्यक्षेणैव बाधसंभवात्प्राबल्यं वक्तव्यम् । तच्चोपजीव्यत्वादनेकप्रकारेणति युक्तिसहकृतत्वेन परीक्षितत्वात् प्राबल्यमुपपादयितुम् उपपत्तिविरोधाभिधानमिति न कश्चित्क्षुद्रोपद्रवः । ननु न श्रुत्याद्याभा . . . . . . . . . .

**२२६ सु०— भवेदेतन्नेहनानेत्यादिवाक्यविरोधेन प्रत्यक्षमाभासीकृत्य बन्धमिथ्यात्ववर्णनम् । बालजनमनोहरा चैषा प्रक्रिया । यदि तद्वाक्यमुक्तविधात्मतत्त्वपरं स्यात् । न चैवम् । तथाहि । किमापाततः प्रतिपन्न एव वाक्यार्थः । अथवा 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय' इत्याद्युक्तलिङ्गानुगुणस्तदविरुद्धश्च । नाद्यः । मीमांसावैयर्थ्यापत्तेः । द्वितीये तु कथमिदं वाक्यमुक्तलक्षणात्मतत्त्वपरं स्यात् ।**

**उपक्रमादिलिङ्गेषु बलवत्योपपत्त्या विरुद्धत्वात् । अत एव हि 'असतः सदजायते'त्यादि-वाक्यप्रतिपन्नोऽर्थः 'कुतस्तु खलु सोम्यैवं स्यात्कथमसतः सज्जायेते'त्युपपत्तिविरुद्धः त्यज्यते । वक्ष्यति च भगवान् सूत्रकारः अभिमान्यधिकरणे 'मृदब्रवीदि'त्यादिवाक्या-त्प्रतीतमप्यर्थमुपपत्तिविरुद्धं परित्यज्यार्थान्तरम् ।**

**परि०**— उपपत्तिविहीनस्य वाक्यस्यार्थो न गम्यत इति ज्ञानपादीयानुव्याख्यानानुरोधेन मूलवाक्यं योजयितुमुपोद्घातमाह **भवेदेतदि**त्यादिना **एवमि**तिपर्यन्तेन । **बालजनेति** अज्ञजनमनोहरा । एषा । येयं चैतन्यस्येत्यादिनोक्ता । प्रक्रिया च भवेदित्यन्वयः । **तद्वाक्यमिति** । एकवचनं समुदायाभिप्रायं मूलवाक्यानुरोधेन कृतमिति ध्येयम् । तेन श्रुतिस्मृतीतिहासपुराणेष्वित्युपक्रमाविरोधः । इत्याद्युक्ते-त्यादिपदेन 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णय' इत्युक्तदिशेति ग्राह्यम् । **मीमांसेति** । 'आकाशस्तल्लिङ्गादित्यादिना हि आकाश इति होवाचे'त्यादिवाक्ये प्रतीतार्थत्यागेन अर्थान्तरमुपादीयते । यद्यापाततः प्रतिपन्न एव श्रुत्यर्थस्तर्हि श्रुत्यर्थनिर्णायक-न्यायविचाररूपमीमांसारंभ एव न स्यादित्यर्थः । **उपपत्तिविरुद्ध इति** । निःस्वरूपस्यासतः पूर्ववृत्तित्वरूपकारणत्वानुपपत्तिरूपोपपत्तिविरुद्धः त्यज्यत इत्यर्थः । **उपपत्तिविरुद्धमिति** । मृन्न वक्त्री जडत्वादित्याद्युपपत्तिविरुद्धं मृत्पदस्य जडरूपमर्थं परित्यज्य चेतनरूपमर्थान्तरं वक्ष्यतीत्यर्थः ।

**यादु०**— **अर्थान्तरम्** अभिमानिदेवतारूपम् ।

**वं०प०**— ननु श्रुतिप्रतीतार्थस्य कथमुपपत्तिविरोधेन त्यागोऽदृष्टत्वात् सूत्रकारासंमतत्वाच्चेत्यत आह **अत एवेति** । बलवदुपपत्तिविरुद्धत्वादेवेत्यर्थः ।

**श्रीनिधि०**— **एषा प्रक्रिया** प्रक्रियाऽपि भवेदित्यन्वयः । ननु मिथ्यात्वं यदीति वाक्येन युक्तिविरुद्धत्वात् बन्धमिथ्यात्वमागमार्थो नेत्यभिप्रेयते । न च तद्युज्यते आगमसिद्धार्थं प्रति युक्तेरविरोधकत्वादित्यतः विकल्पपूर्वकं वाक्यमवतारयति **किमापातत इति** । उपक्रमाद्यनुगुणः तदविरुद्ध एव च वाक्यार्थ इत्येतच्छ्रुत्यनुमतं सूत्रकारानुमतं चेत्याह **अत एव हीत्यादिना** ।

**वा०चं०**— अतोऽभिप्रेतार्थपूरणेन तत्सङ्गमयति **भवेदेतदिति** । ननु प्रत्यक्षमप्याभासीकृत्य प्रवर्तमानश्रुत्यादेः कथमुपपत्तिविरोधमात्राद्भयमित्यत उपपत्तिविरोधकथनेन प्रबलेनाप्यागमेन तदविरुद्धार्थ एव प्रतिपादनीयोऽन्यथा मीमांसावैयर्थ्यप्रसङ्ग इत्यस्य तात्पर्यलिङ्गेष्वपि प्रबलयोपपत्त्या विरोधकथनेन च





परोक्तोपक्रमादीनां तद्विरोधस्य च भाष्यकारेण सूचनान्नानुपपत्तिरित्याशयेन भाष्याभिप्रेतप्रमेयं दर्शयति **तथा हीत्यादिना** ।

**वा०र०— अभिप्रेतार्थेति** । अनेन कथमत्रेत्येतत्पर्यन्तमभिप्रेतार्थपूरणमिति सूचितम् । उपपत्तिविरोध-कथनेनेत्यस्य मीमांसावैयर्थ्यप्रसङ्ग इत्यस्य भाष्यकारेण सूचनादित्यन्वितेन संबन्धः । **अन्यथा मीमांसेति** । कर्मब्रह्ममीमांसेत्यर्थः । आज्यैः स्तुवते आकाशादेव समुत्पद्यन्ते इत्यादेरपि चित्राज्याधिकरणाकाशाधिकरण-पूर्वपक्षोक्तरीत्या धृतगगनाद्यर्थत्वस्यान्धो मणिमविन्दत् मृदब्रवीदित्यादेरपि प्रतीतार्थत्वस्यैव च प्राप्तत्वादित्यर्थः । **प्रबलयेति** । उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरमित्युक्तेरिति भावः । **अत एव ह्यसतः सदजायतेत्यादिवाक्येति** मूलम् । यद्यपि कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सदजायेतेति छान्दोग्यवाक्यं तद्धैक आहुरस-देवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेतेतीत्येवंरूपपूर्वानूदितवादिमतनिरासपरम् । तथा च तद्वाक्योक्तो-पपत्त्या वाद्युक्तासत्कारणत्वपक्षस्य निरासेऽपि देवानां पूर्व्ये युगेऽसतः सदजायतेति वाक्येन वा । असद्वा इदमग्र आसीत्ततो वै सदजायतेति वाक्येन वा प्रतिपन्नार्थबाधककथनरूपत्वाभावान्न तद्वाक्यप्रतिपन्नासतः सत्कारणत्व-रूपार्थस्य तदुपपत्तिविरोधेन त्याग इति सिध्यति । तत्कथमुपपत्तिविरोधेन युज्यत इत्युक्तमिति चेत्सत्यम् । तथापि छान्दोग्यवाक्योक्तोपपत्त्यैव वादिमतस्येवासतः सदिति वाक्यापातप्रतिपन्नार्थस्यापि बाधः समानन्यायतया सिध्यत्येवेति भावेन कुतस्त्विति वाक्योक्तोपपत्तिविरोधस्येहाभिधानम् । अत एव नासतो दृष्टत्वादित्यत्र सूत्रकृता कुतस्त्विति वाक्योक्तोपपत्त्यैवासत्कारणता श्रुतिप्राप्ता निराकरिष्यते । नन्वेवमसन्मतनिरासस्य सूत्रकारीयत्वप्राप्त्या वक्ष्यति च भगवान् सूत्रकार इत्युत्तरं मूले मृदब्रवीदित्यादिवाक्यापातप्रतिपन्नार्थत्यागादेरेव विशिष्य सूत्रकारीयत्व-वचनायोग इति चेन्न । निमित्तविशेषेण सूत्रकारीयत्वस्य विशिष्योक्तिसंभवात् । तथाहि । असतः सदिति वाक्यप्रतिपन्नार्थे बाधकत्वेनोपन्यस्ताया युक्तेर्न केवलमसतः सदिति वाक्यमर्यादयैव प्राप्तिरपि तु तद्वाक्यार्थ-समानवादिमतनिरासायोक्तयुक्तिः श्रुतावप्यभिहितास्तीति सूत्रकारोक्तयुक्तेः श्रुतिसंवादित्वरूपविशेषं सूचयितुं कुतस्त्विति श्रुतिपर्यन्तं धावनं कृतम् । मृदब्रवीदित्यादिवाक्यार्थे तु विरोधित्वेनोपन्यस्ता युक्तिः स्थलान्तरे अर्थान्तरसाधकत्वेन नोपन्यस्तेति सूत्रकारमात्राशयेन विशिष्य सूत्रकारीयत्वोक्तिरपि युक्तैव । अत एव पूर्वत्र सज्जायेतेत्युपपत्तीत्युपपत्तेर्वाक्यसंबन्धे उक्तेऽप्युत्तरवाक्ये उपपत्तीत्यविशेषितमेवोक्तम् । यदि तु वक्ष्यति च भगवान् सूत्रकार इत्यस्य काकाक्षिन्यायेनोपादानमाश्रीयते तदेति शब्दोपस्कारेण त्यज्यत इति भगवान् सूत्रकारो नासतो दृष्टत्वादित्यत्र वक्ष्यति चेति प्राप्तेर्न वैषम्यमित्यवगन्तव्यम् ।

**वि०ठ०— अत एवेति** । उपपत्तिविरुद्धस्य वाक्यतात्पर्यगोचरत्वाभावादेवेत्यर्थः । **प्रतिपन्नोऽर्थ इति** । असत इति वाक्येन प्रतिपन्नः असतः सकलसामर्थ्यविधुरस्य जगत्कारणत्वरूपः अर्थः तुच्छस्य कारणत्वानुपपत्तिरूप उपपत्तिविरुद्धत्वात् त्याज्य इति भावः । उपपत्तिविरुद्धं मृन्न वक्ति जडत्वात् इति युक्तिविरुद्धम् । **अर्थान्तरम्** अभिमानिदेवतारूपमर्थान्तरं वक्ष्यतीत्यर्थः ।

**२२७ सु०— कथमत्रोपपत्तिविरोध इति चेत् । एवं यदि दुःखादेरात्मातिरिक्तस्य समस्तस्य मिथ्यात्वं श्रुत्यादिबलेन स्यात्तर्हि तस्य श्रुत्यादिवाक्यस्य तावन्मिथ्यात्वं भवेत् । आत्मातिरिक्तत्वात् । अन्यथा स्वस्मिन्नेवास्य प्रामाण्यं प्रतिहतमिति न कञ्चिदर्थं प्रतिपादयेत् । यदि चेदं वाक्यं मिथ्या स्यात्तथाऽपि न दुःखादेर्मिथ्यात्वं प्रतिपादयेत् । मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनात् ।**

**परि०— कथमत्रेति** । 'नेहनाने'त्यादिवाक्ये । मूलं योजयति **यदीत्यादिना** । तदिति व्यस्तं समस्तं चेत्युपेत्य वा तदिति व्यस्तमेवाव्ययमित्युपेत्यार्थद्वयमाह **तत्तर्हि तस्येति** । अस्तु वाक्यस्य मिथ्यात्वं किं नश्छिन्नमित्यतस्तदेव वाक्यं यदीत्यस्य तद्वाक्यस्येत्यत्रान्वयं पूर्वस्मादनुवृत्तनञो दुःखादेर्न मिथ्यात्वं भवेदित्यन्वयं चोपेत्य प्रकारान्तरेण व्याचष्टे **यदि चेदं वाक्यमिति** ।

**वा०चं०—** एवमुपपत्तिविरोधप्राबल्यमुपपाद्य भाष्यमुत्थापयितुं शङ्कते **कथमिति** । ननु दुःखादेर्मिथ्यात्वेऽपि कुतस्तद्वाक्यमिथ्यात्वं व्याप्त्यभावादित्यतोऽविशेषेण सामान्यव्याप्तिमभिप्रेत्य सर्वस्येति वक्तव्ये दुःखादेरिति वचनमात्मातिरिक्तग्रहणार्थेति तत्सूचितमविशेषं वक्तुमादिपदेनात्माऽन्यस्य सर्वस्य ग्राह्यतां वक्तुं च दुःखादेरित्यनुवादेनात्मातिरिक्तस्येति व्याख्यानम् । अग्रत इत्यस्यार्थकथनं **तावदिति** । अप्रयोजकत्वं परिहरति **अन्यथेति** । इष्टापत्तिपरिहाराय मिथ्यायाः साधकत्वं चेत्युत्तरवाक्यबललब्धमनिष्टं सोदाहरणमाह **यदि चेति** ।

**वा०र०—** यदि दुःखादेर्मिथ्यात्वं स्यात्तर्हि नेहनानेत्यादि मिथ्यात्वप्रतिपादकवाक्यस्यापि मिथ्यात्वं स्यादिति भाष्योक्ततर्के व्याप्त्यभावशङ्कापि भाष्यस्थदुःखादिपदप्रयोगादेव निराकृतेति भाष्याभिप्रायं प्रकटयितुं प्रवृत्तं यदि दुःखादेरात्मातिरिक्तस्येत्यादि मूलमिति मूलाभिप्रायं स्वयं दर्शयन् मूलस्य भाष्याभिप्रेतार्थकथनरूपत्वमाकाङ्क्षाक्रमेणोपपादयति **ननु दुःखादेरित्यादिना** । यदि दुःखादेरात्मातिरिक्तस्येति मूले बन्धमिथ्यात्वं श्रुत्यादिबलेन यदि स्यादिति मिथ्यात्वपुरस्कारेण तर्कप्रवृत्त्यङ्गीकारे भाष्यमूलस्वारस्यप्राप्तावप्यप्रयोजकत्वनिरासपरा, अन्यथा स्वस्मिन्नेवेति बाधकतर्ककथनपरमूलास्वारस्यम् । तदनुसारेण यदीदं नेहनानेत्यादिश्रुत्यादिकमात्मातिरिक्तसमस्तप्रपञ्चमिथ्यात्वं प्रतिपादयेत्तर्हि स्वस्यापि तत्प्रतिपादयेत् अविशेषात् । न चाप्रयोजकता । यदीदं स्वस्य मिथ्यात्वं न प्रतिपादयेत्तर्हि स्वस्मिन्नेवेत्यादिरूपेणैव प्रथमतर्कस्वरूपादिप्रतीतेः मिथ्यात्वपुरस्कारेण प्रवृत्ततर्के त्वप्रयोजकत्वनिरासकतर्कस्य यदि श्रुत्यादेर्न मिथ्यात्वं तर्हि बन्धस्यापि न मिथ्यात्वमित्यापादकासिद्धिरित्येवंरूपस्यैव प्राप्तेः । यदि त्वन्यथा स्वस्मिन्निति मूलानुसारेण नेहनानेत्यादिश्रुत्यादिकं सर्वमिथ्यात्वं प्रतिपादयेत् तर्हि श्रुत्यादिमिथ्यात्वमपि प्रतिपादयेदित्येवमेव तर्कस्वरूपमभिप्रेतमित्युच्यते तर्ह्यन्यथेत्युत्तरमूलस्वारस्यप्राप्तावपि मिथ्यात्वं यदीत्यादि भाष्यतन्मूलयोरस्वारस्यम् । यदि चेत्युत्तरमूलस्थवाक्यमिथ्यात्वपुरस्कारेणोक्तिरपि न स्वरसा स्यात् । तस्मात्पूर्वोत्तरग्रन्थानुसारेणात्र यदि श्रुत्यादिबलेन बन्धस्य सर्वस्य मिथ्यात्वं स्यात्तर्हि श्रुत्यादेरपि मिथ्यात्वं स्यादिति





तर्केऽप्रयोजकत्वशङ्कानिरासावसरे यदि श्रुत्यादेर्मिथ्यात्वं न स्यात्तर्हि प्रपञ्चेऽपीत्येवोक्ते प्रयोजकत्वं न स्फुटमित्यतो जगन्मिथ्यात्वाभावे श्रुत्यादिमिथ्यात्वाभावस्य प्रयोजकत्वं प्रदर्शयितुं यदि श्रुत्यादिबलेनेत्यापादकादिस्वरूपपर्यवसानलब्धं यदि श्रुत्यादिकं बन्धस्य सर्वस्य मिथ्यात्वं प्रतिपादयेदित्यादिरूपमेव तत्तर्कस्य स्वरूपं स्वीकृत्य तत्राप्रयोजकतापरिहाराय प्रवृत्ततर्कस्य यदि श्रुत्यादिकं स्वस्य मिथ्यात्वं न प्रतिपादयेत्तर्हि स्वस्मिन्नेवेत्युक्तरूपेण प्रवृत्तिरित्यङ्गीकार्ये न काचिदनुपपत्तिः । यदि चेत्युत्तरमूलं तु यथाश्रुततर्कानुसारेण प्रवृत्तमिति स्पष्टत्वाच्च तद्विरोधोऽपि । प्रथमतर्के प्राप्ताप्रयोजकत्वशङ्कावारणाय पर्यवसिततर्कस्वरूपादरणेऽपि प्रथमतर्कीयापाद्यस्वीकारेण प्रवृत्तासाधकत्वतर्के तदादरणस्यानावश्यकत्वात् । तथा यदि दुःखादेरित्यादितर्कीयापाद्यशरीरे सर्वान्तर्गतश्रुत्यादिवाक्यस्येति पूर्णीयम् । सामान्यव्याप्तौ गन्धर्वनगरान्तर्गतभवनवदिति दृष्टान्तो बोध्यः । तदनुसारेण पर्यवसिततर्केऽप्यापाद्यकोटौ सर्वान्तर्गतस्वस्यापीति योज्यम् । उक्तं च मिथ्यायाः साधकत्वं चेत्येतत्संबन्धिमूले सकलान्तर्गतत्वादिति । तट्टीकायां च सकलस्य यद्भवति तत्तदन्तर्गतस्येत्यादि । व्यवहारसतश्चेत्येतदवतारमूलेऽपि सर्वान्तःपातिन इत्युक्तम् । तथा चात्मातिरिक्तत्वादित्यादिमूलटीकाव्यवहारस्थलेऽप्यात्मातिरिक्तसमस्तान्तर्गतत्वादित्यादिरूपोऽर्थो विवक्षित इति ज्ञेयम् । **अविशेषेण सामान्येति** । अविशेषप्रयुक्तसामान्यव्याप्तिमित्यर्थः । ज्ञानबाध्यत्वहेतुनिराकरणस्थले टीकायां तथा वक्ष्यमाणत्वात् । **इति वक्तव्य इति** । इति वक्तव्ये दुःखादेरिति यद्वचनं तदात्मेति संबन्धः । **आत्मातिरिक्तग्रहणायेति** । सर्वस्येत्युक्ते आत्मनोऽपि ग्रहणं प्रसज्यत इति तं व्यावर्तयितुं दुःखादेरिति सङ्कोचेन कथनम् । तेन चात्मातिरिक्तत्वाख्योऽविशेषः सूचितः । तेनाविशेषणवाक्यस्यापि मिथ्यात्वापादनं प्रकृतेऽभिप्रेतमिति विशेषव्याप्त्यभावो न दोषायेत्याशयः । सर्वस्येति वक्तव्ये दुःखादेरिति यद्वचनं तदविशेषेण सामान्यव्याप्तिमभिप्रेत्यात्मातिरिक्तग्रहणायेति योजना । ग्रहणायेतीत्यत्रत्येतिशब्दस्येत्यत इत्यर्थः । अविशेषव्याप्तिमभिप्रेत्यात्मातिरिक्तग्रहणाय दुःखादेरित्यस्योक्तत्वादिति तदर्थः । तावतात्मातिरिक्तत्वरूपाविशेषसिद्धिर्भवतु आदिपदेन सङ्कोचकधर्माप्रतीतेः कस्य ग्रहणमित्यत आत्मातिरिक्तस्येत्येतदेव सङ्कोचकम् । तेनात्मातिरिक्तसर्वग्रहणमायातीत्याह **आदिपदेनेति** । तथा चात्मातिरिक्तस्येति व्याख्यानस्य प्रयोजनद्वयमुक्तं भवति ।

**विठ्ठ०**— तद्वाक्यस्येत्यत्र तदिति व्यस्तं समस्तं च पदमित्यभिप्रेत्य व्याचष्टे **तत्तर्हि श्रुत्यादिवाक्यस्येति** । **स्वस्मिन्नेवेति** । स्वविषय इत्यर्थः । अस्तु वाक्यस्य मिथ्यात्वं ततः किमित्यतस्तदेव वाक्यं पूर्वस्मान्नञनुवृत्त्या मिथ्यात्वं यदि तद्वाक्यस्य न भवेत् तर्हि दुःखादेर्न भवेत् तन्मिथ्यात्वप्रतिपादकवाक्यस्यैवाभावात् इति योजनान्तरमभिप्रेत्याह **यदीति** ।

**२२८ सु०— तदेवमस्य वाक्यस्य मिथ्यात्वामिथ्यात्वयोर्बन्धमिथ्यात्वप्रतिपादनासामर्थ्यात् प्रत्यक्षबाधकत्वानुपपत्तेर्न दुःखादिबन्धमिथ्यात्वसिद्धिरिति ।**

**परि०**— मिथ्यात्वं दुःखादेर्न भवेदित्यस्य फलितार्थः न दुःखादेर्मिथ्यात्वं प्रतिपादयेदिति । **सिद्धिरितीति**शब्दो मूलव्याख्यानेन पूर्वोक्तशङ्कोत्तरसमाप्तौ ।

**२२९ सु०— तत्त्वविदो वदन्ति । सर्वोऽपि हि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणोऽस्माभिरप्यात्मन्यारोपित एवेत्यङ्गीक्रियते । यथोक्तं भाष्यकृता । प्रमादात्मकत्वाद् बन्धस्येति । अतः किन्निबन्धनो बन्धमिथ्यात्वनिरासे निर्बन्धः ॥ सत्यम् । तथाऽप्यस्त्यत्र दर्शनभेदः । एवं खल्वध्यात्मविदां दर्शनम् । क्रियाज्ञाने प्रति कारकान्तराप्रयोज्यत्वादिलक्षणं कर्तृत्वं भोक्तृत्वं च परमेश्वरायत्तमात्मनि स्वतो विद्यत एव । क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्य वक्ष्यमाणत्वात् । तस्यापरायत्तत्वावभासः अविद्यानिमित्तको भ्रमः । अविद्यादिकं च स्वरूपेणात्मसंबन्धित्वेन च सदेव । एवं बुद्धीन्द्रियशरीरविषयाः स्वरूपसन्त एवेश्वरवशा अप्यविद्यादिवशादात्मीयतयाऽध्यस्यन्ते । परायत्तात्मीयताऽप्यस्त्येव । तांश्च आत्मनो विविक्तानपि विस्पष्टतयाऽनुपलभमानस्तद्धर्मान् दुःखादीन् सत्यानेवात्मीयत्वेन पश्यंस्तत्कृते नीचोच्चत्वलक्षणे विकृती सत्ये एव प्रतिपद्यते । ततो रागद्वेषाभ्यां प्रयुक्तस्तद्विनिवृत्तये यत्करोति तदप्येताद्दगेवातनोतीत्यनेकयोनिषु बंभ्रमीति । न क्वाप्यात्यन्तिकं तदुपशमं लभते विना परमपुरुषाराधनादिति ।**

**बिन्दुः— क्रियाज्ञाने इति** । क्रियां प्रति कारकान्तराप्रयोज्यत्वं कर्तृत्वं, कारकत्वे सतीत्यपि पूरणीयम् । तेन घटोत्थानक्रियां प्रति कुलालप्रयोज्यो दण्डादिस्तदप्रयोज्य उदासीनो रासभादिरपि व्यवच्छिन्नो भवतीति ध्येयम् । एवं ज्ञानं प्रति कारकान्तराप्रयोज्यत्वे सति कारकत्वं भोक्तृत्वं यद्यप्यत्रापि ज्ञानोत्पादक्रियां वा साक्षिरूपज्ञानाभिव्यञ्जनक्रियां च प्रति इति निर्वक्तुं शक्यत्वेन कर्तृत्वमेवेदमिति सुवचं तथापि वसिष्ठब्राह्मणन्यायेन पृथगुक्तिरित्यवधेयम् । भोगस्य सुखदुःखानुभवरूपत्वादिति भावः । यद्यप्यनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनात् अनुभवं प्रति कारकत्वं नास्ति तथापि घटमहं जानामीति कर्त्रर्थलकारोल्लेखात् तदभिमानः पुरुषस्यास्त्येव । अत एव च परमेश्वरायत्तं तदनेन स्वस्मिन्नारोपितं तदधीनकर्तृत्वादिकं तु सत्यमिति वक्तुं प्रक्रान्तमिति न कश्चिद्दोषः । नन्वात्मनो यदि कार्योत्पादनानुकूलव्यापारवत्त्वं धर्मः स्यात् तथात्वे मृत्पिण्डादिवद्विकारित्वं स्यात् । मृदादीनामपि हि घटादिरूपधर्मान्तरावेश एव विकारो नाम । तथाच विकारित्वेन तद्वदेवानित्यताप्रसङ्ग इत्यत आह **क्रियावेशादिरूपाया इति** । मृदादौ च परिणामित्वरूपविकारित्वं तथा न तु ज्ञानेच्छाकृतिरूपक्रियावेशोऽपि । वस्तुतस्तु परिणामित्वमपि न विनाशप्रयोजकं मूलप्रकृतौ तदभावात् । किन्तु विरोधिसद्भावादिकमेव तथेति वक्ष्यमाणत्वात् । अत्ताचराचरग्रहणादित्यधिकरण इति शेषः । **एवं बुद्धीन्द्रियेति** । यद्यप्यसद्ख्यातिपक्षे सतामारोपविषयता नास्ति तथापि सिद्धान्ते स्मर्यमाणारोपस्थले





असद्व्याप्तावपि दूरस्थचूतपनसयोरयमेकश्चूत इति संश्लिष्टरङ्गरजतयोरिदं रजतमिति वा गृह्यमाणारोपस्थले अन्यथाख्यातिरेवेत्याकर एव सोपपत्तिकं सिद्धान्तयिष्यते तत्रैव प्रपञ्चयिष्यामः । **नीचोच्चत्वलक्षणे इति** । कमलादेः सूर्यास्तमयोदयाभ्यां सङ्कोचविकासादिवत् । तच्चानुभवसिद्धं मुखविकासम्लानताद्यनुमेयं चेति भावः ।

**परि०**— अत्र मिथ्यात्वं यदि बन्धस्येति वा मिथ्यात्वं यदि तस्य स्यादिति वा वक्तव्ये दुःखादेरिति विविच्य कीर्तनस्य फलं वक्तुं शङ्कामाह **तत्त्वविद इति** । तत्त्वज्ञानिनः शङ्कन्त इत्यर्थः । निर्बन्ध इत्यनन्तरमितिशब्दोऽध्याहार्यः । किञ्चिबन्धनो निर्बन्ध इति तत्त्वविदो वदन्तीत्यन्वयः । **यथोक्तमिति** । आनन्दमयनये । **प्रमादात्मकत्वादिति** । यद्यपि प्रमादात्मकत्वादित्यस्यास्वाभाविकत्वादित्येवार्थो न मिथ्यात्वादिति । तथापि जीवस्वातन्त्र्यविवक्षायां मिथ्यात्वमपि तदर्थ इत्यत्र एतदुदाहरणमिति ज्ञातव्यम् । **दर्शनभेद इति** । तत्त्वज्ञानिदर्शनमायिदर्शनयोर्भेद इत्यर्थः । 'स्वतन्त्रः कर्ते'ति पाणिन्युक्तस्वातन्त्र्यं विवृण्वन्नेवाह **कारकान्तराप्रयोज्यत्वादीति** । आदिपदेन तार्किकरीत्या ज्ञानचिकीर्षाकृतिसमवायित्वलक्षणमिति गृह्यते । उच्चत्वादिरूपं भोक्तृत्वमिति वा । **स्वत इति** । न परमत इवोपाधिसंबन्धमपेक्ष्येत्यर्थः । 'कर्ता शास्त्रार्थवत्त्वादि'त्यत्र द्वितीये तथैव सूत्रकृता निर्णीतत्वादिति भावः । नन्वेवमौदासीन्यप्रच्युतिरूपक्रियावेशरूपविकारप्राप्तेरात्मनो जनिमत्त्वादनित्यत्वं स्यदित्यत आह **क्रियावेशेति** । **वक्ष्यमाणत्वादिति** । 'नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिण' इत्यादिना समयपादे 'नैकस्मिन्नसंभवादि'ति जैनमतापाकरणाधिकरणे वक्ष्यमाणत्वादित्यर्थः । **बम्भ्रमीतीति** । पुनःपुनः भ्रमति । क्रियासमभिहारे यङ् लुगन्तम् ।

**गु०दी०**— **आत्मन्यारोपित एव** इत्यादेरयमर्थः । बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणस्य बन्धस्याज्ञजनैः प्रतीयमानं यत्स्वात्मनि स्वाभाविकत्वं तदपि बध्नातीति बन्धः स चारोपित एवेत्यस्माभिरप्यङ्गीक्रियते । ''प्रमादात्मकत्वाद्बन्धस्य'' इति वदता भाष्यकारेणापि स्वाभाविकत्वप्रतीतेर्मिथ्याज्ञानत्वकथनात् स्वाभाविकत्वमारोपितमिति तस्यापि मतम् । तथा देहादौ यत्स्वातन्त्र्यं तदपि मिथ्या । एवं दुःखादेर्देहादेश्चाज्ञैः प्रतीयमानं स्वाभाविकत्वं तस्य च परनिरपेक्षत्वरूपस्वातन्त्र्यं च मिथ्येत्यस्माभिरप्यङ्गीक्रियते । नायं ज्ञानिसाधारणतया सर्वेषां बन्धको बन्धः । तैर्देहादेरस्वाभाविकत्वस्येश्वराधीनत्वस्य च सदा अनुभूयमानत्वात् । किं त्वीश्वराधीनदेहान्तःकरणादौ तज्जन्यदुःखादौ च, ईश्वरदत्तं यत्स्वामित्वं स एव मुख्यो बन्धः । भटनिष्ठजयपराजयादौ स्वामित्वमात्रेण राजा जयीत्यादिवद्राजचैतन्येऽपि उच्चत्वनीचत्वदर्शनिनान्तःकरणादौ तज्जन्यदुःखादेः स्वामित्वमात्रस्यापि जीवचैतन्ये उच्चत्वनीचत्वापादकत्वात् । स च सत्य एव । ''ज्ञानिनां मोक्षदश्च स'' इति भाष्यकारस्यायमेव बन्धोऽभिप्रेतः । तस्य च मिथ्यात्वनिरासनिर्बन्धो युक्ततर एवेति भावेन परिहरति **सत्यमित्यादिना** । **आत्मीयतया अध्यस्यन्त** इत्यत्र

**आत्मीयतया** केवलात्मीयतयेत्यर्थः । **आत्मीयता** स्वस्वामिता **तांश्चात्मनो विविक्तानपि** इत्यत्र क्षीरान्तर्गतनीरवत् तथा विविक्ततया अनुपलभमानः । **आत्मीयत्वेन** आत्मनिष्ठत्वेन । क्षीराद्विविक्तनीरत्वेनाप्रतीयमाननीरे क्षीरे नत एव क्षीरत्वस्य संसर्गमात्रारोपवत् आत्मनो विविक्ततया अप्रतीयमानान्तःकरणनिष्ठदुःखादेरेव संसर्गमात्रमारोप्यते । न तु दुःखादीनामप्यारोप इति भावेन **तद्धर्मान् दुःखादीन् सत्यानेव** इति । अत्रापि तदधिष्ठितत्वमात्रं मिथ्या । भगवद्दत्तदुःखस्वामित्वाख्यसंबन्धस्सत्य एवेति ज्ञेयम् ।

**यादु०**— मूले दुःखादेरिति निष्कृष्योक्तेः प्रयोजनं वक्तुमाह **तत्त्वविद इत्यादिना** । **प्रमादात्मकत्वादिति** । यद्यपि प्रमादात्मकत्वादित्यस्यास्वाभाविकत्वादित्येवार्थो न मिथ्यात्वादिति तथाऽपि जीवस्यानन्त्य-विवक्षायां मिथ्यात्वमपि तदर्थ इत्यभिप्रेत्यात्रैतदुदाहरणमिति ज्ञातव्यम् । **वक्ष्यमाणत्वादिति** । 'नानित्यताऽन्यपक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदि'त्यत्रेति शेषः ।

**वं०प०**— ननु करणभोजनादिरूपक्रियाया आगन्तुकत्वेन तदावेशरूपकर्तृत्वादिलक्षणविक्रियाप्राप्त्या तन्नाशेनात्मनोऽपि विनाशः स्यादित्यत आह **क्रियावेशेति** । **परवशाः** अधीनाः । **तान्** शरीरेन्द्रियादीन् । **विविक्तान्** भिन्नान् । **विस्पष्टतयेति** । स्फुटतरभेदज्ञानशून्यत्वेन इत्यर्थः । **तद्धर्मान्** शरीरादिधर्मान् । तत्प्रयुक्तानिति यावत् । **अनात्मत्वेन** आत्मभिन्नत्वेन । तदनाश्रितत्वेनेति यावत् ।

**कं०रा०**— **अस्माभिरिति** । तत्त्ववादिभिरपि बुद्धीन्द्रियशरीरविषयतत्प्रयुक्तसुखदुःखादिधर्मलक्षणो बन्ध आत्मन्यारोपित एवेत्यङ्गीक्रियते तस्यात्मीयत्वाभावादित्यर्थः । कर्तृत्वादिकं जीवे स्वरूपेण परमार्थसदेव । तस्य परायत्तत्वाभावमात्रं कल्पितम् । एवं बुद्धीन्द्रियशरीरादयोऽपि स्वरूपेण परमार्थसन्त एव । तेषु पराधीनात्मीयत्वमात्रं कल्पितमित्यध्यात्मविदां दर्शनम् । मायावादिनां दर्शनं तु कर्तृत्वभोक्तृत्वबुद्धीन्द्रियशरीरादीनां स्वरूपेणैव मिथ्यात्वमित्यतस्तन्मिथ्यात्वनिरासप्रयासो युज्यत एवेत्यभिप्रेत्य परिहरति **तथाऽपीत्यादिना** । **क्रियेति** । क्रियां प्रति कारकान्तरानधिष्ठेयत्वादिरूपं कर्तृत्वं, विषयानुभवलक्षणज्ञानं प्रति कारकान्तरानधिष्ठेय-त्वादिरूपं भोक्तृत्वं च परमेश्वराधीनं जीवे परमार्थतो विद्यत एवेत्यर्थः । ननु कर्तृत्वभोक्तृत्वयोरात्मनि पारमा-र्थिकसत्त्वाङ्गीकारे क्रियावेशभोगावेशलक्षणविकारापत्त्या तस्य विनाशादिकं प्रसज्यत इत्यत आह **क्रियेति** । क्रियावेशादिरूपविकारस्य विनाशादिकं प्रत्यप्रयोजकत्वं किन्तु यावल्लक्ष्यभाविलक्षणनिवृत्तिरूपान्यथाभावस्यैव तत्प्रयोजकत्वमित्यस्यार्थस्य 'ओतप्रोतात्मकत्वं तु पटे देहेऽङ्गसंस्थितिरि'त्यादिलक्षणस्यैव 'निवृत्तौ स्यादनित्यते'-त्यत्र वक्ष्यमाणत्वादित्यर्थः । **तस्येति** । तस्य कर्तृत्वादेः परानधीनत्वावभासोऽज्ञाननिमित्तो भ्रम इत्यर्थः । **आत्मीयतया** परानधीनात्मीयतया । **तत्कृते** दुःखादिकृते । **तद्विनिवृत्तये** दुःखादिनिवृत्तये । एतादृक् दुःखा-द्यापादकम् । **बंभ्रमीति** । पुनः पुनः भ्राम्यति । भ्रमु अनवस्थान इत्यस्मात् यङ्लुकि रूपमेतत् ।

**श्रीनिधि०**— **तद्धर्मेति** । तद्धर्मा दुःखादयः बुद्धिरन्तःकरणप्रभेदः । इन्द्रियाणि मन आदीनि षट् । **तद्धर्मेति** । बुध्यादिधर्मेत्यर्थः । तच्च बुध्यादिकार्यत्वेन । विपरीत्याध्यवसानादेः दुःखादिहेतुतादर्शनात् ।





**प्रमादात्मकत्वादिति** । यद्यपीदं वाक्यं भाष्योदाहृतेन 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरि'ति प्रमाणेन बन्धस्यास्य स्वाभाविकत्वार्थपरम् । तथाप्यत्रार्थान्तरविवक्षयोदाहारणं द्रष्टव्यम् । **प्रमादः** अनवधानता । अज्ञानं अविद्या । तदात्मकत्वात् तत् कार्यत्वादित्यर्थः । **दर्शनभेदः** सिद्धान्तभेदः । आत्मानमधिकृत्य वर्तमानं बुद्धीन्द्रियादि अध्यात्मम् । **तद्विदां** सम्यक् तत्स्वरूपविदाम् । **कारकान्तराप्रयोज्यत्वं** कारकान्तराप्रेर्यत्वम् । कारणे तु कारकेणात्मना प्रयोज्यत्वमिति । आदिपदेन एतदेव प्रतिकारकान्तरप्रयोजकत्वरूपं गृह्यते । ननु दुःखादीनां पारमार्थिकत्वाङ्गीकारे तत्प्रयुक्तनीचोच्चत्वादीनामागन्तुकानामात्माभिन्नानां नाशे आत्मनोऽपि नाशप्रसङ्ग इत्यत आह **क्रियावेशेति** । नीचोच्चत्वादिरूपक्रियेत्यर्थः । आदिपदेन क्रियादिप्रयोजक आत्मस्वरूपनिष्ठः धर्मविशेषो गृह्यते । 'नानित्यनात्मत्पक्षे तु चैतन्यादेर्विशेषिणः' इति क्षपणकमतनिरासावसर इति भावः । **तद्धर्मान्** बुद्धीन्द्रिय-शरीरविषयधर्मान् । तत्कार्यत्वेन । प्रेरितः । प्रयुक्तः । तन्निवृत्तय इत्युपलक्षणम् । उच्चताप्राप्तय इत्यपि द्रष्टव्यम् । **तन्निवृत्तये** नीचतानिवृत्तये । **एतादृगेव** दुःखादिजनितनीचताद्यापादकक्रमेव । **नानायोनिषु** नृतिर्यगादिषु ।

**वा०चं०**— ननु बन्धमिथ्यात्वमिति पूर्ववाक्ये बन्धशब्देन यदुच्यते तावतोऽप्यत्र दुःखादिशब्देन ग्रहणं तद्विशेषस्य वा । नाद्यः । बन्धशब्देन प्रस्तुतस्य शब्दान्तरेणोपादाने निमित्ताभावात् । द्वितीयेऽपि युक्तिर्बन्धविशेष-मिथ्यात्वनिरास एवेति तदुपपादनमुत दुःखादिरूपबन्धविशेषस्यैव सत्यत्वादन्यस्य च मिथ्यात्वाद्बन्धशब्दोक्तस्य निष्कर्षार्थं वा । नाद्यः । एतद्वाक्योक्तस्य श्रुतेरुपपत्तिविरोधस्य दुःखादाविवान्यत्रापि समत्वात् । न द्वितीयः । सिद्धान्ते बन्धमात्रस्य सत्यत्वाद्बन्धविशेषस्यैव सत्यत्वे वा पूर्वपक्षिणं प्रति तन्निष्कर्षप्रदर्शनस्यानुपयोगाच्च । न च स्वयूथ्यान्प्रत्येव तत्प्रदर्शनमिति वाच्यम् । स्वयूथ्यानां सर्वमिथ्यात्वप्रसक्तेरेवाभावेन तान्प्रत्यप्यस्यानुप-योगादित्यतः स्वयूथ्यान्प्रति प्रसञ्जकसद्भावान्मिथ्यात्वनिरासप्राप्तानौचित्यपरिहाराय भाष्यकारीयनिष्कर्षप्रदर्शन-मित्यभिप्रेत्य प्रसञ्जकं निष्कर्षप्रदर्शनसूचितभाष्यकारीयपरिहारप्रकारं च दर्शयति **तत्त्वविद इत्यादिना** । **प्रमादेति** । प्रमादः अज्ञानम् । तथा चाविद्यकत्वोक्त्याऽऽरोपितत्वसिद्धिरिति भावः । अत्र निर्बन्धपदेनैतत्सूचयति । स्वयं बन्धमिथ्यात्वमभ्युपगम्यापि परं प्रति तन्निराकरणं किं प्रथमभाष्ये तदुक्तेरसङ्गतत्वप्रदर्शनार्थं वा तदुक्तोपपादन-प्रकारस्यानुपपन्नत्वप्रदर्शनार्थं वा । नाद्यः । तस्य पूर्ववाक्येनैव सिद्धत्वात् । तदर्थमुपपत्तिविरोधस्यावक्तव्यत्वाच्च । अथवेत्यादिनाऽस्यायुक्तताप्रतिपादनपरत्वेनावतारितत्वाच्च । नापि द्वितीयः । प्रमेये विवादाभावे उपपादन-प्रकारनिरासायैतावतः प्रयासस्यानुचितत्वादिति । अत्र कर्तृत्वभोक्तृत्वयोर्दुःखादिवन्मायावादिरीत्या बुद्धिधर्मत्वं शङ्कितुरभिप्रेतम् । अत एव शङ्कादशायां पृथक् तदनुपादानं तन्न तथा भ्रमितव्यम् । कर्तृत्वादेरात्मधर्मत्वेन दुःखादिवैलक्षण्यात् । अतोऽपि दर्शनभेद इत्यभिप्रेत्य । ननु कर्तृत्वादेः स्वातन्त्र्यरूपत्वे तस्य भगवद्धर्मत्वेन क्रियावेशरूपत्वे च विनाशोत्पत्तिप्रयोजकविकाररूपस्य तस्यानादिनित्ये जीवेऽसंभवेन च कथमात्मधर्मत्वं तस्योपपद्यत इत्याशङ्कां कर्तृत्वादिस्वरूपनिरूपणेन तत्र प्राप्तदोषपरिहारेण च निरस्यति । **क्रियाज्ञाने प्रतीति** । अत्र कारकान्तरेत्युक्त्या स्वस्य कारकत्वसूचनान्नातिप्रसङ्गः । क्रियावेशित्यादिकमादिपदार्थः । अत्र स्वतः स्वरूपेण विद्यत इत्युक्त्या न परमत इवाहमर्थेऽपि स्वरूपेणाध्यस्तमित्यात्मनि स्वतोऽनौपाधिकमित्युक्त्या स्फटिकलौहित्यव-





न्नान्योपरागनिमित्तमिति स्वत आत्मस्वरूपमित्युक्त्या दुःखादिवन्नागन्तुकमिति च दर्शनभेदकथनमिति द्रष्टव्यम् । **क्रियेति** । क्रियावेशोनामाहंकरोमीत्यादिरभिनिवेशः । आदिपदेनोच्चनीचत्वादेर्ग्रहणम् । यावल्लक्ष्यभाविलक्षण-निवृत्त्यादेरेव विनाशादिहेतुत्वाज्जीवे चैतन्यस्यैव च तादृशत्वात्तस्य चानिवृत्त्यादिना न विनाशोत्पत्तिप्रसङ्ग इत्यस्य जैनमतनिरासावसरे 'नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिण' इत्यादिना वक्ष्यमाणत्वादित्यर्थः । कर्तृत्वादेरनध्यासे प्रमादात्मकत्वं न तदंशे स्यादित्यत आह **तस्येति** । निमित्तग्रहणेन परमत इव नोपादानत्वमित्याह । नन्वविद्याया असत्त्वे नासतः साधकत्वमनिर्वाच्यत्वे च तत्खण्डनानुपपत्तिरित्यत आह **अविद्यादिकं चेति** । नन्वेवमपि बुद्धीन्द्रियादेरस्वरूपत्वात्स्वरूपेणैवाध्यास इति कथं दर्शनभेदस्तदंश इत्यत आह **एवमिति** । ननु बुद्ध्यादीना-मनात्मीयत्वे नात्मविकारहेतुसुखादिसाधनत्वमित्यत आह **परायत्तेति** । एवं च कर्तृत्वादीनामात्मीयत्वे[illegible]-परायत्तत्वमात्राध्यासो बुद्ध्यादीनां चापरायत्तात्मीयतयाऽध्यास इति भेदः । नन्वयमध्यासः शुक्तिरज[illegible]ध्यास-तुल्यतया न बन्ध इत्यत एतदध्यासस्य बुद्ध्यादिधर्मभूतदुःखाद्यनात्मीयतानवगमसहकृतस्योच्चनीचत्वा[illegible]-विकारापादकत्वाद्युक्तं बन्धमिथ्यात्वमित्याह **तद्धर्मानिति** । ननु बुद्ध्यादीनां विविक्ततयोपलम्भे न तद्धर्मा[illegible]-मनात्मीयतयाऽदर्शनं युक्तमित्यत आह **तांश्चेति** । ननु यद्येतावन्मात्रं बन्धस्तर्हि तन्निवृत्तिः कर्मादिना सुलभेत्यतो निवृत्तकर्मणोऽन्यादृशत्वेऽपि प्रवृत्तकर्मणो बन्धापादकत्वमेवेत्याह **तत इति** । तादृशस्यापि कर्मविशेषेण निवृत्तिः किं न स्यादित्यत आह **नेति** । आत्यन्तिकं मूलकारणाविद्योच्छेदप्रयुक्तम् । अत एवोक्तं 'कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यत' इति । नन्वेवं मोक्षशास्त्रमनुपपन्नमित्यत आह **विनेति** ।

वा०८० **बन्धशब्देन यदुच्यत इति** । अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वं भोक्तृत्वं च । कर्तृत्वादेर्मिथ्यात्वं च यावता विना नोपपद्यते तदपीति प्रयोजनाद्याक्षिप्तं बन्धमिथ्यात्वमित्येतदुपपादनावसरे कर्तृत्वभोक्तृत्वादि-सुखदुःखादिरूपो बन्धपदेन चोच्यत इत्यर्थः । **अत्रेति** । मिथ्यात्वं यदीति वाक्य इत्यर्थः । **तद्विशेषस्येति** । संपूर्णबन्धस्य प्रकृतत्वेऽपि तत्र कस्यचिदेव बन्धस्येत्यर्थः । **शब्दान्तरेणेति** । दुःखादेरिति शब्देनेत्यर्थः । **युक्तिरिति** । यदि दुःखादेरित्यनेनोक्तश्रुतेरुपपत्तिविरोधरूपा मिथ्यात्वनिरासिका युक्तिरित्यर्थः । **दुःखादिरूपबन्धविशेषस्यैवेति** । द्रव्यं कर्म चेति प्रमाणं व्याख्याय ततश्चायमर्थ इत्यत्र सत्त्वादिगुणात्मकप्रकृतिबन्धं प्रतिपाद्य परमेश्वर एव स्वाधिष्ठानलब्धपरिणाममहदहङ्कारेत्यादिना निरूपितप्रकारानुसारेण वक्ष्यमाणमूलानुसारेण च कर्तृत्वभोक्तृ-त्वादेरपराधीनत्वमारोपितं दुःखादेरात्मीयत्वमारोपितं स्वातन्त्र्यादेस्तु स्वरूपेणारोपितत्वमित्यवान्तरविशेषानुसारेण स्वातन्त्र्यादिबन्धं विहाय दुःखादिबन्धस्यैव स्वमते सत्यत्वात्तस्यैव परोपपादितं मिथ्यात्वं निराकरणार्हं नान्यस्येत्येवं पूर्वत्र बन्धत्वेनोक्तस्य निष्कर्षार्थमित्यर्थः । निष्कर्षो नामानभिमतव्यावर्तनेनाभिमतार्थे पर्यवसानप्रदर्शनम् । **अन्यत्रापीति** । अन्यमिथ्यात्वनिरासेऽपीत्यर्थः । **बन्धमात्रस्येति** । सत्यत्ववादित्वेन सर्वबन्धस्य सत्यत्वस्यैव न्यायप्राप्तत्वादित्यर्थः । कर्तृत्वादावपराधीनत्वादेरारोपितत्वादपराधीनत्वादिज्ञानात्मको बन्धो मिथ्याभूत एव सिद्धान्तेऽपीति कथं सर्वसत्यतेत्यत आह **बन्धविशेषस्यैव सत्यत्वे वेति** । **पूर्वपक्षिणं प्रतीति** । एतावता हि बन्धमिथ्यात्वं मुक्त्यर्थं नापेक्षितमिति पूर्वत्र प्रतिपादितम् । तत्र बन्धशब्देन सर्वोऽपि बन्धो न विवक्षितः । किन्तु



कश्चिदेवेति विशेषे पर्यवसानार्थं दुःखादेरिति विशेषोपादानं कृतमित्युक्तं भवति । तच्चासङ्गतम् । पूर्वपक्षिणा सर्वमिथ्यात्वस्य भवताऽप्यङ्गीकारादिति युक्त्या तन्निराकरणासङ्गतौ शङ्कितायां हि नास्माभिः सर्वमिथ्यात्वमुच्यते किन्तु कस्यचिदेवेति विवेकः प्रदर्शनमर्हति । न चैषा शङ्का तस्य भवितुमर्हति । अस्मत्सिद्धान्तमर्यादायाः तेनाज्ञानादिति भावः । **स्वयूथ्यान्प्रतीति** । तेषां च सिद्धान्तमर्यादाज्ञानं युक्तमिति भावः । **प्रसक्तेरेवाभावेनेति** । सिद्धान्ते भाष्यकाराद्युक्तिरूपं हि प्रसञ्जकं दृष्ट्वा तेषां सिद्धान्तेऽपि सर्वमिथ्यात्वसत्त्वादिति मिथ्यात्वप्रसक्तिर्वक्तव्या न वा तादृशप्रसञ्जकमस्तीति प्रमादात्मकत्वादिति भाष्योदाहरणव्यावर्त्यशङ्केयम् । **प्रसञ्जकसद्भावादिति** । प्रसञ्जकसद्भावात्प्राप्तं यन्मिथ्यात्वं तन्निरासप्राप्ताया स्वयूथ्यैरुद्भाविता अनौचितीति प्राज्य(?)भाष्यकारेणैव स च बन्धमिथ्यात्वे उक्ते सति तन्निराकरणमात्रानुचितमिति निरासप्रयुक्तानौचित्येत्यर्थः । औचितीशब्दस्तु प्रागेव टीकायामुपपादितः । **भाष्यकारीयेति** । भाष्यकारीयनिष्कर्षस्य प्रदर्शनमित्यर्थः । प्रसञ्जकमित्यत्र भाष्यकारीयेति बुध्या विवेकेनानुवर्तते । तच्च प्रमादात्मकत्वादित्येवं रूपम् । परिहारप्रकारं च । एवं खल्वध्यात्मेत्यादिपरिहारप्रकारं चेत्यर्थः । प्रमादेतीति प्रतीकोपादानपाठः । प्रमादात्मकत्वादितीत्यपि क्वचित् । **आविद्यकत्वोक्त्येति** । अनेन अविद्याकार्यत्वं हि पराभिप्रेतं मिथ्यात्वम् । तच्च प्रमादेति भाष्यकारेणोक्तम् । अविद्याकार्यत्वं ह्यारोपितस्यैवेति तेनारोपितत्वज्ञानसंभवादिति साम्मुग्ध्येनेयं शङ्का प्रदत्तेति वर्णितम् । तेन तत्त्वप्रकाशिकोक्तरीत्यैतद्वाक्यार्थतया अस्वाभाविकत्वस्य प्राप्त्यै तदुदाहरणासङ्गतिरित्याशङ्क्य जीवस्वातन्त्र्यविवक्षायां मिथ्यात्वमपि तदर्थ इत्यभिप्रेत्य तदुदाहरणमिति केषाञ्चिद्व्युत्पादनमपाकृतं भवति । तथा सति शङ्कितैव भाष्यवाक्यं स्वातन्त्र्यरूपबन्धस्य मिथ्यात्वपरमित्यभ्युपेतं स्यात् । ततश्च बुद्धीन्द्रियादिसमस्तबन्धस्यात्मन्यारोपितत्वाङ्गीकारं प्रतिज्ञाय स्वातन्त्र्याख्यबन्धस्य मिथ्यात्वाङ्गीकारसूचकवाक्योदाहरणं प्रसङ्गतः स्यात् । वक्ष्यमाणविवेकस्य पूर्वमेव शङ्कितैव चाङ्गीकृतत्वे शङ्कासमाधानयोर्बधिरकलहत्वं च स्यादिति भावः । अन्यथाख्यातिरूपमिव निराकृतप्राया । जीवस्वातन्त्र्यविवक्षायामपि न तन्मिथ्यात्वं तदर्थः । विमुक्तश्च विमुच्यत इत्यत्र विमुक्तत्वश्रवणान्यथानुपपपत्त्या जीवस्यापि ब्रह्मस्वरूपतासिद्धेस्तयोर्भेदाभिधानं विरुद्धमिति शङ्कापरिहाराय प्रवृत्तेन प्रमादात्मकत्वादिति भाष्येण अवगतबन्धस्याज्ञानमूलकत्वेनास्वाभाविकत्वाज्जीवस्य ब्रह्मत्वाभावेऽपि विमुक्तत्वं युज्यत इत्यर्थो हि प्रतिपाद्यते तत्र च स्वाभाविकत्वमात्रेण विमुक्तत्वोक्तिर्दुःखाद्यंश इव स्वातन्त्र्यांशेऽपि समानैव । मुक्तिर्हित्वान्यथारूपमित्युक्तप्रमाणेऽप्यन्यथारूपत्वेन सर्वसङ्ग्रहवदत्रापि सर्वसङ्ग्रहोपपत्तेः तथाच स्वातन्त्र्यांशे मिथ्यात्वस्यार्थतया वर्णनमनावश्यकमिति तस्यावक्तव्यत्वमित्यलम् । **अभ्युपगम्यापीति** । भाष्ये तथा प्रतिपाद्यापीत्यर्थः । **तन्निराकरणमिति** । अनुभाष्ये विरोधादिना तन्निराकरणमित्यर्थः । अत्र स्वयमभ्युपगम्येत्यादिवदतेयं तत्त्वविदां शङ्का भाष्यकारं प्रत्येव प्राप्ता भवति इति भाष्ये प्रमादात्मकत्वमभिधायात्र **तन्निराकरणायोग इति** । न तु मूलकारः स्वयं विरोधमाशंक्य परिहारं करोतीति मन्तव्यम् । अत एवोत्तरमूले इत्येतत्परिभावयितुं बन्धमिथ्यात्वमितीत्यादि वक्ष्यत इति सूचितम् । भाष्यकारीयं परिहारप्रकारं चेत्यवतारावसरे उक्तमप्येतज्ज्ञाप्यतीति ज्ञेयम् । **प्रथमभाष्ये** । परकीयप्रथमेति योज्यम् । किं वेति संबन्धः । अयं समुदायः किमित्यर्थक इति नैकस्य व्यर्थता शङ्क्या । वाशब्दरहितपाठस्तु स्वरस एव । **तदुक्तोपपादनेति** । मिथ्यात्वनिराकरणमस्माकमसंमतमेव । किन्तु मिथ्यात्वोपपादनं परेण





यत्कृतं स प्रकारोऽनुपपन्नः । प्रकारान्तरेणैव तु मिथ्यात्वमुपपादनीयमिति । तत्प्रकारस्यानुपपन्नत्वप्रदर्शनार्थं चेति द्वितीयविकल्पकोट्यर्थः । **पूर्ववाक्येनैवेति** । बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इति पूर्वेन्यर्थः । **तदर्थमिति** । प्रथमभाष्ये प्रत्यक्षादिविरोधेनार्थापत्तेर्दुष्टत्वेनासङ्गतत्वस्य वचनमेवावश्यकम् । मिथ्यात्वं यदीत्यादिना मिथ्यात्वस्योपपत्तिविरुद्धत्वकथनं त्वसङ्गतत्वोपपादकत्वाभावाद्व्यर्थमेवापद्येतेति भावः । पूर्वयोजनायामसङ्गतार्थताप्रतिपादनप्रतीतेस्तदनुसारेण मिथ्यात्वाभ्युपगमविरोधाभावेऽप्यथवेति योजनायां मिथ्यात्वायुक्ततायाः प्रतिपादनात्तस्य तदभ्युपगमविरोधः स्यादेवेत्याह **अथवेत्यादिनेति** । अत्रादिपदेनार्थापत्तेरित्यादिकमनेनोच्यत इत्यन्तं पूर्वमूलोक्तं ग्राह्यम् । अवतारितत्वं चावतारिकया प्रवर्तितत्वम् । यद्यप्ययमवतारो मूलकारस्य न तु भाष्यकारस्येति तदवष्टम्भेन भवद्वाक्यस्यायुक्तताप्रतिपादने तात्पर्यमिति भाष्यकारं प्रति वक्तुमयुक्तमिति प्रतिभाति । तथापि भाष्यकारीयव्याख्यानपरम्परागतत्वादेतदवतारकारा एव तदानींतनोऽवतार इत्याश्रित्य भाष्यकारं प्रत्येव भवदीयावतारानुसारेण तद्वाक्यस्यायुक्तताप्रतिपादकत्वमस्तीत्युक्तमिति न दोष इति ज्ञेयम् । अथवा टीकाकारं प्रत्येवेयमाशङ्का । तदा च भवता भाष्य इत्यादिना योजनीयम् । स्वयमित्यादिकमपि यथास्थितम् । अथवेत्यादिनेत्यत्र भवतेति योज्यम् । युक्त एवेतीत्यन्तमूले शङ्कापरिहारः । अत एवैतदितीत्येवोत्तरत्र प्रतीकोपादानं न त्वित्येतदितीति ज्ञेयम् । **एतावतः प्रयासस्येति** । प्रमेये विवादाभावेऽप्युपपादनप्रकारवैषम्यस्थले स्वोक्तपरोक्तयोः साधुत्वासाधुत्वव्युत्पादनमात्रं दृश्यते न त्वेतावान्प्रयासोऽपीत्यतो महाप्रयासवैयर्थ्यापत्त्या तावन्मात्रपर्यवसानस्यावाच्यत्वादिति भावः । महाप्रयासस्तु परभाष्यस्य त्रेधा सङ्गतिशङ्कोत्थापनतत्प्रकारत्रयनिराकरणतद्भाष्यायुक्तताप्रतिपादनादिरूपः । अनुचितत्वादितीत्यत्रत्येतिशब्दस्येत्येतत्सूचयतीति पूर्वेण संबन्धः । तत्त्वविन्मतेः । शङ्कायां बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणबन्धस्यात्मन्यारोपितत्ववचनस्य एवं बुद्धीन्द्रियशरीरविषया इत्यादि वक्ष्यमाणेनैव दर्शनभेदकथनेन निराकरणसिध्या क्रियाज्ञाने प्रतीत्यादिना कर्तृत्वभोक्तृत्वयोरात्मधर्मत्वमिति प्रतिपादनं व्यर्थम् । कर्तृत्वादेरन्यधर्मतया तत्रानाशङ्कनेन तयोरात्मधर्मत्वकथनेन वैषम्यप्रदर्शनस्यानावश्यकत्वादित्यतः शङ्कायां तदभिप्रेतत्वस्य सत्त्वात्तदंशेऽपि वैषम्यकथनं सार्थकमित्याह **अत्र कर्तृत्वभोक्तृत्वयोरिति** । **अभिप्रेतमिति** । तद्धर्मग्रहणेनेति शेषः । दुःखादीनामेव तद्धर्मग्रहणगृहीतत्वोपपत्तेः । कर्तृत्वभोक्तृत्वयोरपि ग्रहणं कस्मादित्यतस्तयोरपि बन्धत्वस्य सुप्रसिद्धत्वात्पृथगुपादानस्य चाभावात्सर्वोऽपि बन्ध इत्येतत्स्वारस्यायावश्यं तद्धर्मग्रहणेन ग्रहणमभिप्रेतमित्याह **अत एव शङ्कादशायामिति** । **तन्न तथेति** । कर्तृत्वं भोक्तृत्वं चेत्येतत् द्वयं तद्रीत्या बुद्धेर्धर्म इति न भ्रमितव्यमित्यर्थः । यद्यपि बुद्धिधर्मतया पराभिमतदुःखाद्यंशे विशेषप्रतिपादनावसर एव तद्धर्मतया पराभिमतकर्तृत्वाद्यंशेऽपि वैषम्यं कार्यम् । तथापि दुःखादिकं बुद्धिधर्म एव न भवतीति परमतनिरासो नाभिमतः किन्तु मिथ्याकृतं तन्नेत्येवं निरास एव । कर्तृत्वभोक्तृत्वयोस्तु बुद्धिधर्मत्वमेव न । प्रत्युतात्मधर्मत्वमेवेति दुःखादितो महान्तं विशेषं प्रतिपादयितुं शङ्कित्रा दुःखादिसमतयोपात्तस्यापि कर्तृत्वादेः पृथक्करणेन प्रथमत एव तदंशे वैषम्यप्रतिपादनमिति न दोष इति भावः । **अतोऽपि दर्शनभेद इति** । दुःखाद्यंशे सत्यताप्रतिपादनेन कृतार्थतेवात्र तावता कृतार्थत्वाभावेन दुःखादिसमकक्षतया कर्तृत्वादेः सत्यत्वप्रयुक्तदर्शनभेद इवात्मधर्मताप्रयुक्तोऽपि तथा न भेद इत्यर्थः । **स्वातन्त्र्यादीति** । क्रियास्वातन्त्र्यं ......... इत्यनुव्याख्यानोक्तं क्रयाफलभोजकत्वं ........ श्चेत्येतद्रूपत्व इत्यर्थः । भगवद्धर्मत्वेनेत्यस्य





जीवेऽसंभवेनेत्यनेन संबन्धः । यद्वा कथमात्मेत्यनेन संबन्धः । **विकाररूपस्य तस्येति** । क्रियावेशस्येत्यर्थः । **अनादिनित्य इति** । क्रियावेशरूपविकारे उत्पत्तिविनाशयोः प्रसङ्गात्तदुभयाभावप्रतिपादनायानादित्वनित्यत्वयोः कीर्तनम् । वक्ष्यति च **विनाशोत्पत्तिप्रसङ्ग इत्यस्येति** । **जीव इति** । भगवतीव जीवेऽपीत्यर्थः । क्रियाज्ञाने प्रति कारकान्तराप्रयोज्यत्वस्य तत्क्रियाज्ञानयोः संबन्धमात्रशून्येऽलीकेऽपि सत्त्वेन तत्रापि कर्तृत्वापत्तिरित्यत आह **अत्र कारकान्तरेति** । कारकापेक्षयाऽन्यत्कारकं हि कारकान्तरम् । तथाच कारकत्वे सति स्वान्यकारकाप्रयोज्यत्वलाभान्नालीकेऽतिप्रसङ्ग इत्यर्थः । क्रियावेशित्यादिकमित्यत्रादिपदेन वक्ष्यमाणजैनमतनिरासस्थले उक्तस्योच्चनीचत्वादिकस्य सङ्ग्रहः । वक्ष्यति चादिपदेनेत्यादि । आत्मनि स्वतो विद्यत इत्यस्यात्मनीत्येतत्परित्यागेन स्वतो विद्यत इत्येकं दर्शनभेदप्रदर्शनम् । आत्मनि स्वत इत्येतदपरम् । स्वत इत्येव चान्यदिति विवक्षात्रयमर्थ इति द्योतयन्नेकैकयोजनानुवादपूर्वकं दर्शनभेदप्रापकतया व्याचष्टे **अत्र स्वतः स्वरूपेणेति** । अध्यस्तमिति निमित्तमितीत्येतयोः दर्शनभेदेत्युत्तरेण संबन्धः । **क्रियावेशोनामाहंकरोमीत्यादिरभिनिवेश इति** । अत्र क्रियावेशो नामाभिनिवेशः । अभिनिवेशश्चाहं करोमीत्यादिः । इत्यादिरूपः कर्तृत्वाभिमान इति योज्यम् । अत एवाभिनिवेशो नामाहंकरोमीति कर्तृत्वाभिमान इत्युक्तम् । अनेन शास्त्रेऽभिनिवेशवानित्यादाविवाभिनिवेशपदार्थः पूर्वोत्तरपरामर्शपूर्वकशास्त्रार्थज्ञानादिरूपोऽत्र न भवति । न वा न मे कर्मफले स्पृहेति गीताभाष्यगतं न तु तत्राभिनिवेश इत्येतदभिनिवेशपदार्थो येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः सोऽभिनिवेश इति तट्टीकायामुक्तो यस्तद्रूपोऽत्र विवक्षितः । येन प्रकृताननुगुणता स्यादिति सूचितम् । **तादृशत्वादिति** । यावल्लक्ष्यभाविलक्षणत्वादित्यर्थः । **अनिवृत्त्यादिनेति** । उत्पत्तिरादिपदार्थः । निवृत्त्युत्पत्तिशून्यत्वेनेत्यर्थः । **अत आहेति** । कर्तृत्वादिस्वरूपांशे प्रमादकार्यत्वाभाव एवेति । तदंशे इष्टापत्तिः । तद्धर्मभूता परायत्तत्वांशे तु प्रमादकार्यत्वमस्त्येवेत्याहेत्यर्थः । **नोपादानत्वमिति** । अविद्याया इति शेषः । अतोऽपि दर्शनभेद इत्याहेत्यर्थः । अविद्या किमसती उतानिर्वचनीया । नाद्यः । असतः साधकत्वायोगात् । नान्त्यः । अनिर्वचनीयत्वेनाविद्याङ्गीकारेऽनिर्वचनीयत्वखण्डनायोगादिति शङ्कते **नन्वविद्याया इति** । खण्डनानुपपत्तिरित्यनेनैव दर्शनभेदायोग इति शङ्कनादविद्यादिकं चेत्येतन्मूलेऽपि दर्शनभेदप्रतिपादनमिति सूचितम् । **अविद्यादिकं चेति** मूले आदिपदेन ......... ग्रहः । **नन्वेवमपीति** । बुद्धीन्द्रियादेरेव परोपन्यासेन प्रधानतया प्राप्तावपि महाविशेषप्रतिपादनाय प्रथमं कर्तृत्वाद्यंशे दर्शनवैलक्षण्ये प्रतिपादिते प्रतिपादयिष्यमाणदर्शनभेदबुद्धीन्द्रियादिष्वतिदेशो मूलकारीयो युक्त इति मनसि कृत्वा मूलानुसारेण मुखत उपात्तेऽपि स्थले पूर्वोक्तस्थलवैषम्यशङ्कामुत्थाप्य तन्निरासकतयोत्तरवाक्यमवतारितमिति ज्ञेयम् । अस्वरूपत्वादित्यस्य कर्तृत्वादिवदात्मस्वरूपत्वरहितत्वादित्यर्थः । पारमार्थिकस्वरूपशून्यत्वादिति वा । **स्वरूपेणैवेति** । परमार्थमतो हि स्वरूपेणाध्यासायोगः । बुध्यादीनां तु परमार्थसत्त्वाभावात्स्वरूपेणैवाध्यासो वाच्य इत्यर्थः । **अनात्मीयत्व इति** । आत्मीयत्वशून्यत्व इत्यर्थः । **नात्मेति** । आत्मविकारहेतुसुखादिसाधनत्वं न संभवतीत्यर्थः । नन्वपराधीनत्वाध्यासस्य कर्तृत्वादाविव बुद्धीन्द्रियादिष्वप्याश्रयणेऽध्यासे प्रकारभेदाभावात्कथं कर्तृत्वादेर्बुद्धीन्द्रियादेश्च विशेष इत्यत आह **एवं च कर्तृत्वादीनामिति** । कर्तृत्वादिकं ह्यात्ममात्रम् । अतस्तत्राध्यासोऽपराधीनत्वस्य । न त्वपरायत्तात्मीयत्वस्य । बुध्यादिकं त्वात्मस्वामिकम् । तत्र चात्मीयत्वेऽपराधीनत्वाध्यास इत्यपराधीनात्मीयत्वेनाध्यासो न त्वपराधीनत्वमात्रेणेति





**वैषम्यमित्यर्थः** । इममेव विशेषं द्योतयितुमात्मीयतया अध्यस्यन्त इत्यनेनापराधीनात्मीयतयाऽध्यासो विशिष्टाध्यासरूपी वर्णितः । कर्तृत्वादौ तु स्वतो विद्यत इत्यनेनात्मस्वरूपेण विद्यमानत्वमुक्तमिति भावः । **परवशा इति** मूले ईश्वराख्यो यः परस्तद्वशा इति योज्यम् । **शुक्तिरजताध्यासतुल्यतयेति** । तदध्यासस्यानर्थानापादकतया बन्धत्वेन व्यवहाराभावः । न हि शुक्तिकां रजतत्वेन भ्राम्यतो बन्धोऽस्तीति व्यवहारः । तथा चास्याप्यात्मीयत्वाध्यासस्यानर्थापादकत्वाभावान्न बन्धत्वमित्यर्थः । बुध्यादावात्मीयताध्यासेऽपि तद्धर्मदुःखादावनात्मीयतावगमे विकारो नायातीत्यत उक्तं **बुध्यादिधर्मभूतेत्यादि** । **न तद्धर्माणामिति** । तद्धर्माणामनात्मीयतया यददर्शनं तद्युक्तमिति संबन्धः । **कर्मादिनापीति** । ततश्च भगवदाराधनस्यानावश्यकतया जिज्ञासायां वैयर्थ्यमिति भावः । आदिपदेन 'तपसा ब्रह्मचर्येण शमेन च दमेन च । त्यागेन सत्यशौचाभ्यां नियमेन यमेन च । देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः । क्षिण्वत्यघं महदपि वेणुगुल्ममिवानिल' इत्युक्त तप आदि परिग्रहः । **अन्यादृशत्वेऽपीति** । बन्धानापादकत्वेऽपीत्यर्थः । **प्रवृत्तकर्मणो बन्धापादकत्वमेवेति** । प्रकृतकमदिरित्येवमादिपदं योज्यम् । अनेन यत्करोति पुण्यपापादिप्रवृत्तं कर्म तदप्येतादृगेव बन्धापादकमेवातनोति करोतीति योजना सूचिता ज्ञेया । **विशेषेणेति** । निवृत्तेनेत्यर्थः । **अत एवोक्तमिति** । षष्ठस्कन्धस्य प्रथमेऽध्याय इति शेषः । दृष्टश्रुताभ्यां यत्पापं जानन्नपीत्यादिश्लोकद्वयेन प्रायश्चित्तलक्षणं कर्मापार्थमिति राज्ञा शुकं प्रति शङ्किते तेन कर्मणेति वाक्येनोत्तरं दत्तम् । प्रायश्चित्तलक्षणकर्मणा कर्मनिर्हारः पापकर्मविनाशः आत्यन्तिकच्छिन्नमूलत्वेन नेष्यते । उभयोरप्यज्ञानमूलकत्वेन अनधिकृतत्वादिति तदर्थः । यद्यपि शुकेनाज्ञानपूर्वकप्रायश्चित्तं व्यर्थमिति शङ्काभिप्राये संमतिरेवानेनोक्ता । अविद्वदधिकारित्वादित्यादिना तु विद्वद्भिर्विमृश्य विहितं ज्ञानपूर्वकं वा यत्प्रायश्चित्तं तत्तु न व्यर्थमित्युक्तम् । न तु तत्र परमपुरुषाराधनावश्यकत्वं प्रतीयते । तथापि तपसा ब्रह्मचर्येणेत्युत्तरत्र तप आदि प्रायश्चित्तं प्रतिपाद्य ततोऽप्युत्तमप्रायश्चित्तप्रतिपादनाय प्रवृत्ते 'केचित्परमया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कात्स्न्र्येने'त्यादौ परमपुरुषाराधनस्योक्तत्वात्तदभिप्रायेण संमतिरियमुक्तेति ज्ञेयम् । **तद्विनिवृत्तये यत्करोतीत्यत्र** मूले तच्छब्दनिर्दिष्टो बन्धः कथमायाति । रागद्वेषाभ्यां प्रयुक्त इत्यस्य च कथमन्वय इति शोध्यमस्ति । ......... **बंभ्रमीतीति** मूलप्रयोगे किञ्चिद्व्युत्पादनं कार्यमस्ति । **अनुपपन्नमिति** । आत्यन्तिककर्मनिवृत्त्युपायाभावात्तदनिवृत्तौ च मोक्षायोगादिति भावः । **आराधनादिती**त्येतन्मूलस्थेतिशब्दस्येत्यध्यात्मविदां दर्शनमिति पूर्वेणान्वयः ।

**स०व्र०— वक्ष्यमाणत्वादिति** । 'नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदि'त्यादिना वक्ष्यमाणत्वादित्यर्थः ।

**वि०ठ०**— बन्धस्य मिथ्यात्वमिति संमुग्धतया प्रस्तुतत्वेऽपि दुःखादेरिति तद्विवेचनस्य प्रयोजनं वक्तुमाह **तत्त्वविद इत्यादिना** । यद्यपि प्रमादात्मकादित्यस्येश्वराधीनस्य दुःखादेः स्वायत्ततविभ्रमरूपप्रमादात्मकत्वादित्येवार्थो न तु स्वरूपतो मिथ्यात्वादित्यर्थः । तथापि भाष्यवाक्यानभिज्ञेनाशङ्किते तत्तात्पर्यविवेचनेनोक्तशङ्कापरिहारः क्रियते इति ध्येयम् । **क्रियाज्ञाने प्रतीति** । घटादिसर्जनक्रियां प्रति मृत्पिण्डचक्रचीवरादिकारकान्तरा-





प्रयोज्यत्वं ज्ञानं प्रति इन्द्रियसन्निकर्षादिना कारणेन पुरुषस्याप्रयोजकत्वम् । आदिपदेनेच्छाप्रयत्नपूर्वककृतिमत्वादिलक्षणमिति । कर्तृत्वस्वरूपनिरूपणं क्रियास्वातन्त्र्यं कर्तृत्वमिति भ्रमवारणाय । ननु कर्तृत्वं च जीवे अस्ति चेत् तर्हि कर्तृत्वादिप्रयोजकीभूतक्रियावेशो वाच्यः स्थाण्वादि उदासीनस्य कर्तृत्वाद्ययोगात् एवं सुखादिभोगप्रयुक्तोच्चतादिरूपक्रियावेशोऽप्यङ्गीकार्यः । तथाच चैतन्यस्याप्युत्पत्तिविनाशौ स्यातामित्यतस्तदभावस्य ''नानित्यतास्मत्पक्षे तु चैतन्यादेर्विशेषिण'' इत्यत्र वक्ष्यमाणत्वादित्याह **क्रियावेशादीति** । अविद्या भावरूपाज्ञानम् । आदिशब्देन कामकर्मपूर्ववासनालिङ्गदेहादिग्रहणम् । अन्तःकरणोपादानकत्वादिना बुध्यादिधर्मानित्यर्थः । **तत इति** । दुःखाद्यनुभवादेव दुःखादिनिवृत्तये रागद्वेषाभ्यां प्रवृत्तो यत्करोति तदपि दुःखादिसाधनमेव करोतीति तेन च कर्मणानेकयोनिप्राप्तिरिति भावः ।

**चषकः**— दुःखादेरिति विशिष्यमूलकारीयनिर्देशस्य फलमभिधित्सते **तत्वविद इत्यादि** । **क्रियावेशादीति** । अहंकरोमीत्यभियोगादीत्यर्थः । **वक्ष्यमाणत्वादिति** । समयपादे जैनमतनिरासावसरे 'नानित्यतास्मत्पक्षे तु चैतन्यादेरित्यादिनाभिधास्यमानत्वादि'त्यर्थः ।

**२३० सु०— मायावादिनस्तु दुःखादिकं स्वरूपेणापि मिथ्येति मन्यन्ते । यदवोचत् 'सत्यानृते मिथुनीकृत्ये'ति ।**

**परि०— यदवोचदिति** । तद्भाष्यकार इति शेषः । **सत्यानृते इति** । सत्यं चैतन्यं अनृतमन्तःकरणादिकम् । मिथुनीकृत्य तादात्म्येन भ्रान्त्वा अहं ममेत्यादि नैसर्गिकव्यवहारं करोतीत्यादि । परिभावयितुं प्रकटयितुमित्यर्थः । अपरायत्तत्वावभासो भ्रम इत्युक्तम् ।

**श्रीनिधि०— सत्यानृते इति** । अनृतपदेन दुःखादेः स्वरूपेण मिथ्यात्वमभिप्रेतमिति ज्ञातव्यम् ।

**वा०चं०— सत्येति** । स्वरूपेण सत्यं संसृष्टतयाऽनृतं मिथुनीकृत्याध्यस्य क्त्वाप्रत्ययो गौणः । एतदध्यासरूपोऽहंममेति लोकव्यवहारो नैसर्गिक इत्यन्वयः ।

**वा०र०—** परभाष्यवाक्यं व्याख्याति **सत्यमित्यादि** । गौणत्वेन तद्विवक्षां विहायार्थकथनपूर्वकं तद्भाष्यस्थशेषेण संबन्धं च दर्शयति **एतदध्यासेति** । मूले **मिथुनीकृत्ये**तीत्यत्रेतिशब्द आवर्तते । तत्र द्वितीयस्येति दर्शनभेद इति पूर्वेणान्वयः । अत इत्यस्यैवं दर्शनभेदेन स्वोक्तप्रमादात्मकत्वप्रयुक्तमिथ्यात्वाभ्युपगमेन विरोधाभावादित्यर्थः । युक्त एवेतीति शब्दः शङ्कापरिहारसमाप्तौ । स्वकृतचर्चायाः भाष्यकारीयविलक्षणोक्तिमूलकत्वान्न निर्मूलत्वेनाश्रद्धेयत्वमित्याशयेनैतदित्याद्युक्तम् ।

**विठ्ठ०— सत्यानृते इति** । सत्यं चैतन्यं अनृतं अहङ्कारादिकं अन्योन्यस्मिन् अध्यस्येत्यर्थः ।





**२३१ सु०— अतस्तन्निराकरणनिर्बन्धो युक्त एवेत्येतत्परिभावयितुं बन्धमिथ्यात्वमिति संमुग्धे प्रस्तुतेऽपि दुःखादेरिति निष्कृष्योक्तम् । स्वातन्त्र्यादेः 'नान्योऽतोऽस्ति कर्ता' इत्यादिश्रुतिबाधितत्वात् । न हि सर्वमिथ्यात्वश्रुतेरिवास्याः कश्चिद्विरोधोऽस्ति । वक्ष्यति चैतत्तत्र तत्र सूत्रकारः ।**

**बिन्दुः— निष्कृष्योक्तमिति** । कर्तृत्वभोक्तृत्वाद्यभिमानो हि पुरुषस्य भ्रमः । तद्विषय एव हि बन्धः तत्र यद्यप्युक्तविधकर्तृत्वभोक्तृत्वादेः परमात्मनि सत्त्वेऽपि स्वस्मिन् भासमानस्य स्वातन्त्र्यरूप-तत्संसर्गस्य मिथ्यात्वं सिद्धान्ते वर्तत एव । तथापि परमत एव स्वमते पदार्थस्वरूपस्य न मिथ्यात्वमिति ज्ञापयितुमिति भावः । यद्यपि स्वातन्त्र्यमपि परमात्मनि सदेव तथापि स्वस्मिंस्तत्संसर्गो मिथ्याभूत एव वा त्वंपदार्थोऽस्तु । वस्तुतस्तु स्वातन्त्र्याद्यभिमान एव बन्धः । अभिमानश्च अनाद्यविद्याकामकर्मनिबन्धनो-ऽनादिर्ज्ञानप्रवाहः । तस्य च मिथ्यात्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगसंसर्गाविगाहित्वं न तु परमत इव अभिमानस्वरूपस्य वा भासमानसंसर्गप्रतियोगिरूपस्वातन्त्र्यादेवेति दर्शयितुं दुःखादेरित्यादिशब्देन निकृष्योक्तमित्याह **दुःखादेरिति** । तदेवोपपादयति **स्वातन्त्र्यादेर्नान्योऽतोऽस्तीति** ।

**परि०—** तत्कुत इत्यत आह **स्वातन्त्र्यादेरिति** । **एतत्तत्रतत्रेति** । जीवस्य स्वतः कर्तृत्वादिमत्त्वेऽपि तस्य स्वातन्त्र्यबुद्धिर्भ्रम इत्येतत्पूर्वोक्तं प्रमेयं सर्वं 'कर्ता शास्त्रार्थवत्वादि'त्यादिसूत्रेषु 'इतरव्यपदेशादि'त्यधिकरणसूत्रेषु 'अन्यथानुमितौ च ज्ञशक्तिवियोगादि'त्यादौ च वक्ष्यतीत्यर्थः ।

**यादु०—** ननु दुःखादिवज्जीवगतस्वातन्त्र्यादेरपि सत्यत्वमेव किं न स्यादित्यत आह **स्वातन्त्र्यादेरिति** । ननु सर्वमिथ्यात्वश्रुतेरिवास्या अपि श्रुतेरुपपत्तिविरोधान्न जीवस्वातन्त्र्यनिषेधकतेत्यत आह **न हीति** । अतो ब्रह्मणोऽन्यः कर्ता चेतनो नास्तीति जीवस्य ब्रह्मान्यत्वमेव निषिध्यते न तु ब्रह्मणोऽन्यः स्वतन्त्रकर्ता, अतोऽन्यो नास्तीति श्रुत्यर्थ इत्यत आह **वक्ष्यते चैतदिति** । जीवस्य ब्रह्मान्यत्वं जन्माधिकरणादिषु वक्ष्यतीत्यर्थः । यद्वा यदध्यात्मदर्शनविषयतयोक्तं कर्तृत्वादेः सत्यत्वादिकं तत्कर्ता शास्त्रार्थवत्त्वादित्यादौ सूत्रकारो वक्ष्यतीत्यर्थः । यद्वा जीवकर्तृत्वस्यापि श्रुत्यनुमानादिसिद्धत्वेन तद्विरोधात्कथं नास्याः कश्चिद्विरोध इत्यत आह **वक्ष्यतीति** । तत्र तत्र 'एतेन शिष्टा अपरिग्रहा' इत्यत्र 'इतरव्यपदेशादि'त्यत्र 'अन्यथाऽनुमितावि'त्यत्र 'उपलब्धिवदनियम' इत्यत्र चेत्यर्थः ।

**वं०प०—** ननु जीवगतकर्तृत्वादेरपरायत्तत्वावभासोऽविद्यानिमित्तको भ्रमः । कुतोऽपरायत्तत्वरूपं स्वातन्त्र्यं सत्यमेव किं न स्यादित्यत आह **स्वातन्त्र्यादेरिति** ।





**कं०रा०— एतदिति** । दुःखादिप्रपञ्चस्य स्वरूपेणैव परमते मिथ्यात्वं स्वमते तु तन्नेत्येतत्प्रदर्शयितुं मिथ्यात्वमपि बन्धस्येति पूर्ववाक्ये दुःखादितत्संसर्गसाधारणस्य बन्धशब्दस्य प्रस्तुतत्वेऽपि तं शब्दमप्रयुज्य दुःखादेरिति विशिष्योक्तमित्यर्थः । ननु दुःखादेरिव तत्प्रति स्वातन्त्र्यादेरपि जीवगतस्य सत्यत्वं कुतो नाङ्गीक्रियत इत्यत आह **स्वातन्त्र्यादेरिति** । आदिशब्देन स्वामित्वादिपरिग्रहः । ननु सर्वमिथ्यात्वश्रुतेः स्वार्थपरत्वाभाव इव नान्योऽतोऽस्ति कर्तेत्यादिश्रुतेः स्वार्थपरत्वाभावः किं न स्यादित्यत आह **न हीति** । सर्वमिथ्यात्वश्रुतेः स्वार्थपरत्वत्यागोपायः प्रागुक्तोपपत्तिविरोध इव नान्योऽतोऽस्ति कर्तेत्यादिश्रुतेः स्वार्थपरत्वत्यागोपायः कश्चिद्विरोधो न ह्यत्रास्तीत्यर्थः । **एतत्** जीवस्वातन्त्र्यादेर्बाधितत्वम् ।

**श्रीनिधि०— परिभावयितुं** ज्ञापयितुम् । **अस्याः** नान्योतोऽस्ति द्रष्टेत्यादिश्रुतेः । **वक्ष्यति चैतदिति** । इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरित्यादिनेति शेषः ।

**वा०चं०— एतदिति** । न तु दुःखादेरेव बन्धत्वाद्वाऽन्यमिथ्यात्वनिरासेऽस्या युक्तित्वासंभवाद्वेति भावः । ननु भाष्यकारीयमर्धजरतीयमनुपपन्नं नियामकाभावादित्यत्राह **स्वातन्त्र्यादेरिति** । ननु माऽस्तु भाष्यकाराभिप्रेतेऽनुपपत्तिर्मूलं तु न किमपि पश्याम इत्यत आह **वक्ष्यति चेति** । तदनन्यत्वमितरव्यपदेशादित्यादौ जीवे स्वतन्त्रकर्तृत्वादिनिरासेन कर्ता शास्त्रार्थवत्त्वादित्यादौ कर्तृत्वाभ्युपगमेन वैधर्म्याच्चेत्यादौ जगत्सत्यत्वप्रतिपादनेन भाक्तं वा विद्वैव त्वित्यादौ कर्मादेर्मोक्षसाधनत्वादिप्रतिपादनेन चैतदेव वक्ष्यतीत्यर्थः ।

**वा०र०—** तत्रैतदेवेत्युपस्कारं कृत्वाऽवधारणार्थमाह **नन्विति** । अनेन तत्त्वविद इत्येतदवतारोक्तविकल्पद्वयनिराकरणं चापहस्तितं ज्ञेयम् । तथा च भाष्यकारेण प्रमादात्मकत्वोक्तिविरोधपरिहारसूचनात् तदनुसारेण अस्माभिस्त्वच्छङ्कां तत्त्वविन्मतत्वेनोत्थाप्य निरासः कृत इति भावः । **अस्या इति** । मिथ्यात्वं यदीत्येतद्वाक्योक्ताया इत्यर्थः । वाशब्दद्वयस्य निष्कृष्योक्तमिति मूलेनान्वयः । **अर्धजरतीयमिति** । स्वातन्त्र्यादिर्बन्धो मिथ्याभूतः कर्तृत्वादिस्तु सत्यभूत इति वैषम्याश्रयणेऽर्धजरत्यानयनाय दूतप्रेषणप्रवादशब्दितार्धजरतीतुल्यप्रवादः प्राप्तः । स चानुपपन्न इत्यर्थः । मायावाद्युक्तं सर्वबन्धमिथ्यात्वं वा स्वीकार्यम् । यद्वा सर्वस्यापि मिथ्यात्वं परित्याज्यमेवेति भावः । **अत्राहेति** । स्वातन्त्र्यादेर्बाधितत्वेन तत्सत्यताङ्गीकारायोगादर्धजरतीयमुपपन्नमित्याहेत्यर्थः । ननु सर्वमिथ्यात्वप्रतिपादकश्रुतिप्राप्तमपि सर्वमिथ्यात्वं यथा नाङ्गीक्रियते तथा स्वातन्त्र्यादेर्मिथ्यात्वमपि श्रुतिप्राप्तं त्यज्यतामित्यतः सर्वसत्यतावेदकप्रमाणैर्विरोधात्सर्वमिथ्यात्वश्रुत्यप्रामाण्यात् तद्विषयस्याङ्गीकारानर्हत्वेऽपि स्वातन्त्र्यादिनिषेधकश्रुतीनां प्रमाणान्तरबाधाभावेन प्रमाणतया तदर्थाङ्गीकारस्य युक्तत्वादित्याशयेनाह मूले **न हि सर्वमिथ्यात्वेति** । **स्वातन्त्र्यकर्तृत्वादीति** । स्वातन्त्र्यनिरासात्तत्प्रतीतेर्भ्रमत्वमिति प्राप्तम् । कर्तृत्वनिरासतदभ्युपगमान्यथानुपपत्त्या कर्तृत्वेऽपरायत्तताप्रतीतिर्भ्रम इति प्राप्तम् । तत्सत्यत्वप्रतिपादनात्तत्रापराधीनात्मीयत्वादिप्रतीतिर्भ्रान्तिरिति प्राप्तमित्यादि ज्ञेयम् ।





**विठ्ठ०**— **परिभावयितुं** प्रकटयितुम् । अपरायत्ततावभासो भ्रम इत्युक्तं तत्कुत इत्यत आह **स्वातन्त्र्यादेरिति**। नन्वस्यां श्रुतौ अतो ब्रह्मणोऽन्यः स्वतन्त्रो नास्तीत्यत्र निषिध्यते इत्यत आह **वक्ष्यतीति**। एतज्जीवस्य ब्रह्मान्यत्वं भेदव्यपदेशादित्यादौ वक्ष्यतीत्यर्थः । यद्वा जीवस्य स्वशरीरेन्द्रियादावस्वातन्त्र्यमित्येत-दितरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरन्यथानुमितौ च ज्ञशक्तिवियोगादित्यादौ तत्रतत्र वक्ष्यतीत्यर्थः।

**चषकः**— **वक्ष्यतीति**। एतेन, इतर, अन्यथानुमितावित्यादिनाभिधास्यतीत्यर्थः।

**२३२ सु०— यदपि परेणात्मानात्मनोरितरेतराध्याससमर्थनाय 'तमेतमविद्याख्य-मात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिकाः प्रवृत्ताः। सर्वाणि च शास्त्राणि' इत्यादिना प्रमाणान्तरमादर्शितम्। तदनेनैव निरस्तम्। अत्र हि प्रमातृप्रमाण-प्रमेयकर्तृकर्मकार्यभोक्तृभोग्यभोगलक्षणव्यवहारत्रयस्य शरीरेन्द्रियादिष्वहंममाध्यासपुरःसर-त्वप्रदर्शनेन व्यवहारकार्यलिङ्गकमनुमानं व्यवहारान्यथाऽनुपपत्तिर्वाऽध्यासे प्रमाणमुक्तम् । न चानेन अन्तःकरणशरीरेन्द्रियविषयाणां तद्धर्माणां दुःखादीनां च मिथ्यात्वं सिद्ध्यति । स्वरूपसतामपि तादात्म्यतत्संबन्धित्वाभ्यामारोपेणैव व्यवहारोपपत्तेः । न चारोपितत्व-मात्रेण मिथ्यात्वम्। आत्मनोऽप्यन्तःकरणादिष्वारोपितत्वेन मिथ्यात्वप्रसङ्गात्। अङ्गीकृतश्च अन्तःकरणादिषु परेणात्माध्यासः । यथोक्तम् । तं प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण अन्तःकरणादिष्वध्यस्यतीति । चेतनस्याचेतने स्वरूपाध्यासाभावात्संसृष्टतयैवाध्यासात् तन्मात्रेणैव सकललौकिकवैदिकव्यवहारोपपत्तेर्न मिथ्यात्वमिति चेत् सममचेतनस्यापि ।**

**बिन्दुः**— **व्यवहारकार्यलिङ्गकमिति** । विमतश्चैत्रादिर्देहेन्द्रियाद्यहंममताध्यासवान् । स्थूलोऽहमित्यादिव्यवहर्तृत्वात् सामान्यव्याप्त्या इदं रजतमिति व्यवहर्तृपुरुषादिर्दृष्टान्तः विपक्षे च अकरणे कार्योत्पत्तिर्बाधिका। एवमर्थापत्तिरपि द्रष्टव्येति।

**परि०**— मूले वाक्यस्येत्युपलक्षणम् । परोक्तमन्यदपि बन्धमिथ्यात्वप्रमाणं निरसनीयमिति भावेन तदप्यनूद्य निराह **यदपीति**। प्रमाणान्तरमादर्शितमित्यन्वयः। **तमेतमिति**। अध्यासमित्यन्वयः। **अविद्याख्यं** अविद्यानिमित्तम्। **शास्त्राणि** 'ब्राह्मणो वाजपेयेन यजेते'त्यादिशास्त्राणीत्यर्थः। प्रमाणा-न्तरमनुमानमर्थापत्तिर्वेत्यग्रे व्यक्तम् । ननु तदात्मतया तत्संसृष्टतया वाऽऽरोपितत्वाद्देहादेर्मिथ्यात्व-मस्त्वित्यत आह **न चेति** । परमुखेन समाधिं वाचयित्वा समं ममेत्याह **चेतनस्येति** । **समम् अचेतनस्यापीति** । नन्वेवमिदंरजतमित्यादिभ्रमस्थलेऽपि रजतस्यासत्त्वं न सिद्ध्येत् । चिरन्तन-





तार्किकरीत्या तादात्म्यतत्संसर्गयोरेवासत्त्वापत्त्याऽभिनवान्यथाख्यातिर्वक्ष्यमाणा न युक्ता स्यादिति चेत् । मैवम् । स्मर्यमाणारोपस्थले आरोप्यस्य सर्वस्यासत्त्वेऽपि गृह्यमाणारोपस्थले सिद्धान्तेऽपि तादात्म्यादिरूपधर्ममात्रस्यासत्त्वेन धर्मिणस्सत्त्वस्यान्यथाख्यातिवादे वक्ष्यमाणत्वात् । अस्यापि गृह्यमाणारोपत्वान्नान्तःकरणादेरचेतनस्य मिथ्यात्वसिद्धिरित्युक्तमिति ध्येयम् ।

**यादु०**— एवं श्रुत्या बन्धमिथ्यात्वं सिध्यतीत्येतन्निरस्तम् । इदानीं मिथ्यात्वसाधकं परोपन्यस्तं प्रमाणान्तरमप्यनूद्य निराकरोति **यदपि परेणेति शरीरेन्द्रियादिष्विति** । 'देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरि'त्यादिना तथा 'ब्राह्मणो यजेतेत्यादीनि शास्त्राण्यात्मनिर्वाणाश्रमवयो-ऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्त' इत्यादिना ग्रन्थेनाहंममताध्यासपुरःसरत्वस्य प्रदर्शितत्वदिति भावः । एतद्ग्रन्थसङ्ग्रहायैव पूर्वमित्यादिनेत्युक्तमिति ध्येयम् । स्वरूपाध्यास एव मिथ्यात्वे प्रयोजको नाध्यासमात्रमित्या-शङ्कते **चेतनस्येति** । प्रपञ्चस्यापि नास्ति स्वरूपाध्यास इति न मिथ्यात्वमित्याह **सममिति** । आत्मानात्मनोर्न स्वरूपेणेतरेतराध्यासः किन्तु संसृष्टत्वादिरूपेणेत्यस्य साम्येऽपि देहादेरनात्मनः स्वरूपेणैव मिथ्यात्वमङ्गीकार्यम् ।

**वं०प०**— **प्रमाणान्तरमिति** । अध्याससद्भाव इति शेषः । अनेनानुमानार्थापत्तिरूपप्रमाणेन । स्वरूपसतां स्वरूपेण सत्यानामित्यर्थः । **तादात्म्येत्यादि** । तादात्म्यारोपसंसर्गारोपाभ्यामित्यर्थः । ननु यथाकथञ्चिदारोपित-त्वप्राप्त्या तन्मात्रेणैव मिथ्यात्वं प्राप्तमिति चेत्तत्राह **न चेति** । शङ्कते **चेतनस्येति** । **स्वरूपेति** । स्वरूपेणैवाध्यास एव मिथ्यात्वे प्रयोजक इत्यर्थः । **सममिति** । अनात्मनोऽचेतनस्याप्यात्मनि संसृष्टत्वेनैवाध्यासोऽस्तु न स्वरूपेणातो न मिथ्यात्वमिति भावः ।

**कं०रा०**— **आत्मानात्मनोरितरेतराध्यासं पुरस्कृत्येति** । सर्वेषां प्रमाणादिव्यवहाराणां ब्राह्मणो यजेतेत्यादि शास्त्राणां च प्रवृत्तिः । आत्मानात्मनोरितरेतराध्यासपुरस्कारेणेत्येतच्च 'कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । उच्यते । देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते'रित्यादिनोत्तरवाक्यसन्दर्भेण शाङ्करभाष्य एवोपपादितं द्रष्टव्यम् ।

**श्रीनिधि०**— **अविद्याख्यं** अविद्याया आख्या यस्य सः । **आख्या** अभिधानम् । अभिधाननिमित्त-स्वरूपम् । अविद्याधीनमिति यावत् । **लौकिकाः** नीलोऽहं, गौरोऽहं, अयं पिता, इयं मातेत्यादयः । **शास्त्राणि** ब्राह्मणो न हन्तव्य इत्यादीनि । **प्रमाणान्तरं** प्रागुक्तार्थापत्त्यपेक्षया । **शरीरेन्द्रियादिष्विति** । शरीरे अहमध्यासेन नीलोऽहं गौरोऽहमित्यादि व्यवहारः । इन्द्रियेषु ममताध्यासेन ममेन्द्रियाणीति व्यवहारः । अहन्ताध्यासेनाहं कर्ता भोक्तेति व्यवहारः इति द्रष्टव्यम् । अत्रात्मानात्मनोरितरेतराभ्यासः कथमिति चेदहङ्कारस्य चिदचित्संव-लितत्वेनाहङ्काराध्यासे परस्पराध्यासात् । अत्र प्रमातृकर्तृभोक्त्रपेक्षत्वात् प्रमाणादीनां व्यवहारत्रयस्येत्युक्तम् । **व्यवहारकार्यलिङ्गकमनुमानमिति** । नीलोऽहं गौरोऽहं चक्षुरादिमानहं सुखीदुःखीत्यादि व्यवहाराः । आत्मानात्मनोः इतरेतराभ्यासनिमित्तकाः ।

**वा०चं०**— अत्र दुःखादेरिति निष्कृष्योक्त्या न केवलं स्वपक्षानुसारिशङ्कापरिहारोऽपि तु परपक्षीय-साधकान्तरनिरासोऽपीति भावेनाह **यदपीति** । किं तत्प्रमाणमित्यतो विवरणरीत्या तत्प्रकारं दर्शयति **अत्र हीति** । अत्र प्रमाणप्रमेयग्रहणं स्वैकदेशभूतप्रमातुर्व्यवहारान्तरस्य चोपलक्षणमिति भावेनाह **प्रमात्रिति** । देहेन्द्रियादिष्वित्यादिना तदीयभाष्ये वक्ष्यमाणोपपादनप्रकारसूचनम् । विवादाध्यासितो व्यवहारोऽध्यासनिबन्धनो व्यवहारत्वात्स्वप्नादिव्यवहारवदित्यनुमानमत्राभिप्रेतम् । अथवा देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव देहेन्द्रियादि-ष्वहंममाध्यासपुरःसरप्रमातृत्वादिव्यवहारवन्तौ देवदत्तसुषुप्तिकालान्यत्वे सति तत्कालत्वात् यन्नैवं तन्नैवं यथा तस्यैव सुषुप्तिकाल इति व्यतिरेक्यनुमानम् । प्रमातृत्वादिव्यवहारो देहादितादात्म्याध्यासं विना नोपपद्यते सुषुप्तावध्यासाभावेन व्यवहाराभावादित्यर्थापत्तिः । ननु यः कर्तृकरणभावः स संबन्धपुरःसर इति व्याप्तेर्देहादीनां प्रमातुश्च संबन्धमात्रेण व्यवहारोपपत्त्या सति संबन्धमात्रे तादात्म्याभावापराधेन कार्याभावादर्शनादर्थापत्तेरन्यथोप-पत्तिरनुमानस्य चाप्रयोजकतेति चेन्न । संबन्धान्तरस्य दुर्निरूपत्वेन तादात्म्यस्यैव संबन्धत्वपर्यवसानात् । तथा हि । संबन्धान्तरं किं स्वस्वामिता वा स्वेच्छामात्रानुविधायित्वं वा संयोगो वा समवायो वा भोक्तृभोग्यत्वं वा स्वकर्मारभ्यत्वं वा स्वेन्द्रियाधिष्ठेयत्वं वा । नाद्यः । भृत्यादिशरीरेणापि प्रमातृत्वादिव्यवहारापातात् । सुषुप्ते तदापाताच्च । न च सहकार्यन्तराभावस्तदेति वाच्यम् । आत्मनः स्वतः कर्तृत्वशक्तौ हि तत्कल्पना न च तत्संभवः । कारकान्तराप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वरूपप्रमातृत्वस्य व्यापारवद्देहेन्द्रियतादात्म्याध्यासं विना स्वतो व्यापारशून्ये कूटस्थे चिन्मात्रेऽनुपपत्तेः । अस्तु तर्हि स्वेच्छानुविधायित्वं संबन्ध इति द्वितीयो भृत्यादिशरीरं तु स्ववचनानुविधायीति नातिप्रसङ्ग इति चेन्न । तत्किमिच्छानुविधानयोग्यतामात्रमुतेच्छयाऽनुविधीयमानत्वं वा । नाद्यः । सुषुप्तेऽपि तत्सत्त्वेन व्यवहारस्य दुर्वारत्वात् । न द्वितीयः । आतुरे तदभावेन व्यवहारानापत्तेः । इच्छानु-विधानस्य व्यवहारमूलत्वमनुभवसिद्धमिति चेत् । तत्किं सार्वत्रिकमुत काचित्कम् । नाद्यः । इच्छानुविधानमन्तरेण दुर्गन्धादिप्रमातृत्वदर्शनात् । न द्वितीयः । इच्छाया अन्तःकरणपरिणामरूपतयाऽन्तःकरणतादात्म्याध्यासमंतरेण निर्विकारचिदात्मनि तदसंभवेनेच्छाया अप्यध्यासमूलत्वेनाध्यासस्यैव व्यवहारहेतुत्वात् । नापि संयोगसमवायौ व्यवहारनिमित्तम् । सुषुप्तेऽपि तयोः सत्त्वात् । भोक्तृभोग्यत्वस्वकर्मारभ्यत्वस्वेन्द्रियाधिष्ठेयत्वादीनां भोगाद्य-ध्यासमूलत्वाद् भृत्यादिशरीरे सद्भावाच्च न व्यवहारहेतुत्वम् । अथ भृत्यादिव्यावृत्तयेऽव्यवधानेन भोग्यसंबन्ध इत्युच्यते तर्हि भोगयोग्यतामात्रस्य सुषुप्तेऽपि सत्त्वाद् भुज्यमानत्वस्य चात्मनः सर्वशरीरदेशकालेष्वव्यवधानस्य समत्वात्कस्यचिदेव शरीरस्य कयोश्चिदेव देशकालयोर्भोग्यत्वे नियामकमूलसंबन्धसापेक्षत्वान्न स्वयमेव व्यवहारनिर्वाहकत्वम् । एवं च संबन्धान्तरासंभवात्कल्पिततादात्म्यमेव संबन्ध इति नार्थापत्त्यादेरन्यथोपपत्त्या-दिकमिति भावः । अनुमानार्थापत्ती मिथ्यात्वसाधकतयोपन्यस्ते आरोपितत्वमात्रसाधकतया वा । नाद्य इत्याह **न चेति** । ननु व्यवहारो मिथ्यात्वेन विनाऽनुपपद्यमानः कथं न तत्साधयेदित्यत आह **स्वरूपेति** । अत्र स्वरूपसतामिति विशेषणं प्रति विशेष्यतयाऽन्वितानामन्तःकरणादीनां धर्मिणामहं मनुष्य इत्यादितादात्म्येन दुःखादिधर्माणां च मम दुःखमित्यादितत्संबन्धित्वेनेति संबन्धः । अत एव पूर्वं द्वन्द्वेन निर्देष्टव्ये पृथङ्निर्देशः । अत्र स्वरूपसतामप्यारोपोक्त्या द्वितीयोऽपि परास्तः । आरोपितत्वस्य स्वरूपसत्त्वाविरोधित्वेन तत्साधनस्य निष्फलत्वात् ।





ननु यथाकथञ्चिदारोपितत्वाङ्गीकारे सिद्धमेव मिथ्यात्वमित्यत आह **न चेति** । तद्विपर्ययेणेत्यत्र तदचेतन-मन्तःकरणादिकं तद्विपर्ययश्चेतनमित्थंभूतलक्षणे तृतीया । एवं च चेतनमात्मानमचेतनेष्वध्यस्यतीत्यर्थः । कथमन्यथाऽन्तःकरणादिषु चिदात्मतादात्म्यानध्यासे प्रमेयप्रवणकर्तृस्थचित्स्वभावरूपप्रमायाः केवलजडान्तः-करणपरिणामत्वमुपपद्येतेति तदाशय इति भावः । यदत्रेत्यादिना वाचस्पतिमतेन वैषम्यमाशङ्क्य निराकर्तुं साम्योपक्षेपाय तन्निवर्त्यं शङ्कते **चेतनस्येति** । यद्वा गूढाभिसन्धेरेवात्मवैषम्यशङ्कासाम्यपरिहारौ यदत्रेत्यादिना च तदुद्घाटनमिति द्रष्टव्यम् । अत्र बन्धस्य प्रकृतत्वेऽपि दुःखादेरिति निष्कृष्योक्त्या प्रतीयमानतादात्म्य-स्वातन्त्र्यादिरूपसंबन्धस्य मिथ्यात्वेऽपि दुःखादेस्तन्न सिध्यतीति सूचनेनैतन्मानान्तरनिरासः सिध्यति तदनेनेत्थं मूलयोजनामभिप्रैति । पूर्ववाक्यान्नेत्यनुवर्तते । सावधारणं चैतत् । दुःखादेर्मिथ्यात्वं नैव मानान्तरेण न सिध्यतीति यावत् । आरोपमात्रेण व्यवहारोपपत्त्या तन्मात्रस्य चात्मन्यपि सत्त्वेन न मिथ्यात्वप्रयोजकतेति हेतुरवधारणलब्धः । तत्र च नेहनानेत्यादिवाक्यबलादात्मवैषम्ये यदत्रेत्यादिना शङ्किते मिथ्यात्वं यदि दुःखादेरिति मूलेन तद्वाक्ये उपपत्तिविरोधोद्भावनमिति । यद्वाऽऽत्मन्यपि सत्त्वेनारोपमात्रस्य मिथ्यात्वाप्रयोजकत्वादारोपमात्रेण च व्यवहारोप-पत्त्या न मानान्तरं मिथ्यात्वसाधकमित्येतावदर्थे बहिरेव सिद्धे नेहनानेतिवाक्यबलादात्मवैषम्ये शङ्किते तत्रोपपत्तिविरोधप्रतिपादकेनानेन मूलेन परंपरया मानान्तरनिरासः सिध्यतीति भावः । श्रुतियुक्तिभिरित्यत्र श्रुतिशब्दः स्मृत्यादीनामुपलक्षकः ।

वा०२०— **किं तत्प्रमाणमित्यत इति** । उपलक्षणं चैतत् । कथं च तन्निरासोऽनेनेत्यपि ज्ञेयम् । इत्यत इत्यनन्तरं न चानेनेत्यादिना तन्निरासं वक्तुं तावदिति शेषः । तेनास्य निराकरणग्रन्थत्वोपपत्तिः । **तत्प्रकारमिति** । प्रमाणस्वरूपं दर्शयतीत्यर्थः । विवरणे प्रमाणप्रमेयेत्येवोक्तेः प्रमातृत्रित्यस्य कर्तृत्वादेश्च कथं विवरणाल्लाभ इत्यत आह **अत्र प्रमाणेति** । विवरणवाक्य इत्यर्थः । **स्वैकदेशेति** । अत्र प्रमातृप्रमाणप्रमेयत्रिकं प्रमानिष्पत्त्यनुकूल-व्यवहारत्रयस्येत्यनेन बुद्धिसन्निधापितं स्वशब्देन गृह्यते । व्यवहारान्तरं तु कर्तृकर्मकार्येत्यादिरूपम् । **देहेन्द्रियादिष्वित्यादिनेति** । देहेन्द्रियादिष्वहं ममाभिमानहीनस्येत्यादिना परकीयभाष्ये वक्ष्यमाणं यदुपपादनं तत्प्रकारसूचनमित्यर्थः । अत्र सूचनमित्यनन्तरं शरीरेन्द्रियादिष्वित्यादिनेति शेषः । यद्वा देहेन्द्रियादिष्वित्यादिने-त्येतन्मूलप्रतीकोपादानम् । तदीयभाष्ये वक्ष्यमाणेत्यत्रापि देहेन्द्रियादिष्वित्यादिनेत्यस्यावृत्तिः कार्या । अत्र पक्षे शरीरेन्द्रियादिष्विति विवरणानुसारेण मूले शरीरपदोपादानेऽपि देहेन्द्रियादिष्विति भाष्यादिरीत्या देहपदं टीकायामिति न दोषः । अनुमानाप्रतीतेस्तद्दर्शयति **विवादाध्यासित इति** । एवं व्यवहारत्रयस्येत्यादिमूलमर्यादया प्राप्तमन्वय्यनुमानं मूलस्थानुमानपदार्थतया व्याख्यायात्र प्रयोगो देवदत्तस्येत्यादिविवरणानुसारेण व्यतिरेक्यनुमानं मूलस्थानुमानपदार्थ इति प्रकारान्तरमाह **अथवेति** । एवं च विवरणरीत्येति प्रागुक्तमपि स्वरसं भवति । वस्तुतस्तु अनुमानपदेनैतदेवाभिप्रेतम् । विवरणग्रन्थीयानुमानार्थापत्तिप्रदर्शनस्य मूले क्रियमाणतया अनुमानस्याप्यत्र प्रयोग इत्यादिना तेन परिष्कृतस्यैव ग्राह्यत्वात् । विवादाध्यासित इत्यनुमानप्रदर्शनं त्वथवेति सूचिता स्वरसेन निरासात्केषाञ्चिदेतद्व्याख्यानतयैतदनुमानप्रदर्शनमयुक्तमिति ज्ञापनाय । अत एव मूलकोशेऽनुमानमभिमत-

मित्यनन्तरमित्याहुरिति पाठ इति बोध्यम् । **जाग्रत्स्वप्नकालाविति** । अत्र चैकैकस्य पक्षत्वे तदितरत्र व्यभिचारस्तस्मिन्नद्यापि साध्यस्यानिश्चितत्वादिति तदुभयोपादानम् । एतच्च प्रतिज्ञाविषयत्वं पक्षत्वमिति मतेनोक्त म् । वस्तुतस्तु साधकमानाभाववत्वं पक्षत्वमिति पक्षीकृतकालोऽन्यकालस्यापि पक्षत्वान्न तत्र व्यभिचार इत्यवधेयम् । वक्ष्यति च मूलकारो वस्तुतोऽनुमितिविषय एव पक्ष इतीति स्वप्नाधिकरणे जाग्रत्स्वप्नयोः बाधपरिहाराय देवदत्तस्येत्यादिप्रकारेण नृसिंहाश्रमोक्तरीत्या पदकृत्यानि ज्ञेयानि । व्यतिरेक्यनुमानमित्यनन्तरमभिमतमिति वर्तते । व्यवहारत्रयं चादर्शिताध्यासोपादानमन्तरेणानुपपन्नमित्येतद्विवरणानुसारेणार्थापत्तिस्वरूपं दर्शयति **प्रमातृत्वादीति** । अर्थापत्तिरित्यत्राभिमतेति लिङ्गविपरिणामेनानुवृत्तिरिति ज्ञातव्यम् । न स्वत्वेन संबन्धिना मनुष्यावयविना तदनुस्यूतेन वा चक्षुरादिना प्रमात्रादिव्यवहारः सिध्यति । भृत्यादिमनुष्यावयविनाऽपीत्यादि पञ्चपादिकाव्याख्यानपरननुकर्तृ-करणयोः संबन्धमात्रं व्यवहारोऽपेक्षत इत्यादिविवरणानुसारेणानुमानार्थापत्ती समर्थयते । ननु यः कर्तृकरणभाव इत्यादिना । **तादात्म्याभावापराधेनेति** । तादात्म्यभावलक्षणो योऽपराध इति योज्यम् । **किं स्वस्वामिता वेति** । अत्राद्यः पक्षः न स्वप्नेनेत्येतत्तात्पर्यरूप न तावत्स्वस्वामिसंबन्ध इत्याहेति विवरणानुसारेण । द्वितीयस्त्वपर आह । आत्मेच्छानुविधायित्वमिति पञ्चपादिकानुसारेण । न चात्मानात्मनोः संयोगसमवायौ व्यवहारनिमित्तम् । भोक्तृभोग्यान्वयस्वकर्मारभ्य स्वेन्द्रियाधिष्ठितत्वादीनामिति विवरणानुसारेण संयोगादिपक्षपञ्चकमिति ज्ञेयम् । **भृत्यादीति** । देहादीनां प्रमातुश्च स्वस्वामिताख्यसंबन्धाङ्गीकारे तत्संबन्धं निमित्तीकृत्य स्वीयत्वेनाभिमत-शरीरेणेव भृत्यादिशरीरेणापि स्वस्वामिकेन प्रमातृत्वादिव्यवहारापातादित्यर्थः । **सुषुप्त इति** । सुषुप्तावपि हि शरीरेन्द्रियादिकमेतत्स्वाप्निकमेव नान्यस्वाप्निकमिति तत्संबन्धेनोक्तव्यवहारापातादित्यर्थः । **तदेति** । सुषुप्तावित्यर्थः । **तत्कल्पनेति** । सुषुप्तौ व्यवहाराभावे निमित्तत्वेन सहकार्यान्तराभावकल्पनेत्यर्थः । तत्संभवः । स्वतः कर्तृत्वशक्ति-संभवः । कूटस्थचैतन्ये प्रमातृत्वस्य स्वतोऽसंभवे हेतुव्यापारशून्य इति । देहेन्द्रियतादात्म्याध्यासेऽपि कथमुपपत्तिरित्यत उक्तं **व्यापारवदिति** । **भुज्यमानत्वस्य चेति** । सापेक्षत्वादित्युत्तरेण संबन्धः । कस्यचिदेवे-त्युक्तहेतुकथनमात्मनः **सर्वशरीरेति** । अव्यवधानमात्रस्याप्रयोजकत्वाद्भोग्यत्वविशेषार्थं संबन्धातरमेव वाच्य-मित्यर्थः । निगमयति **एवं च संबन्धान्तरेति** । कथं न तन्निरासोऽनेन भाष्येणेत्यत इत्येतावत्स्पष्टत्वाद्वा प्रागुपदर्शितोपलक्षणयोक्तप्रायत्वाद्वाऽनुक्त्वाऽभिप्रेतविकल्पनिरासकतयैव योजयति **अनुमानार्थापत्ति इति** । **अत एवेति** । संबन्धद्वयस्य व्यवस्थितत्वादेवेत्यर्थः । **अहं मनुष्य इत्यादितादात्म्येनेति** । अहं मूक इत्यादिप्रत्ययानामादिपदेनोपादानम् । **पूर्वमिति** । अन्तःकरणेन्द्रियशरीरविषयतद्धर्माणामिति द्वन्द्वेन निर्देशे कर्तव्य इत्यर्थः । **द्वितीयोऽपीति** । आरोपितत्वमात्रसाधकतयेति द्वितीयोऽपीत्यर्थः । पराकरणप्रकारं दर्शयति **आरोपितत्वस्येति** । ननु स्वरूपसतामपि तादात्म्यतत्संबधित्वाभ्यामारोपेणैव व्यवहारोपपत्तेरित्यादिमूले आरो-पितत्वस्य स्वरूपसत्त्वाविरोधित्वेनेत्यादिटीकायां च स्वरूपसतामपि संबन्धान्तरेणारोपोऽङ्गीकृतः । स कथं संभवति । सिद्धान्ते हि प्रामाणिकस्यारोपो नाङ्गीक्रियते । असदेव रजतं प्रत्यभादित्याद्युत्तरपरामर्शानुसारेणासत्त्वमेव शुक्त्याद्यात्मनारोपितानां रजतादीनाम् । अन्यत्र सतोऽन्यत्रारोप इति तु नैयायिकानां पन्थाः । नन्वत एव तादात्म्यादिसंबन्धावच्छिन्नस्यारोपः स्वीकृतः । तथा च संबन्धस्य स्वरूपसत्याभावमात्रेणाप्रामाणिकप्रतियोगित्व -





त्वाद्युपपत्तिरिति चेन्न । संबन्धस्यापि संबन्धितुल्यतया आरोपायोगेन न्यायप्राप्त्या अप्रामाणिकधर्मिण एवात्यन्ताभावप्रतियोगिन आरोपस्याङ्गीकार्यत्वात् । उपपादयिष्यते चेदमदृश्यत्वाधिकरणादावस्माभिः । तत्कथमेतदिति चेत्सत्यम् । तत्किं सर्वत्रारोप्यमत्यन्तासदेव । उच्यते । यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् इत्यादिनैय्यायिकाभिमतान्यथाख्यातिनिराकरणमूले वक्ष्यमाणरीत्या स्वमतेऽपि संबन्धावच्छिन्नस्य क्वचिदारोपाङ्गीकारात् । सर्वत्र तदभावेऽपि वा परकीयाध्यासनिमित्तकमिथ्यात्वप्रतिपादननिरासाय प्रवृत्तेनान्यरीत्यैवारोपेऽपि न मिथ्यात्वमिति प्रतिपादनात् । परेणापि मिथ्यात्वसाधकत्वेन तादात्म्याध्यासस्य न्यायरीत्यैवोपन्यासात् । स्वरीत्यैवोपन्यासेऽपि वा अनिर्वचनीयत्ववादितयाऽसत एवारोपस्तु नाङ्गीकृतः । ततः स्वरूपसत्त्वस्य न्यायरीत्या प्राप्तत्वात् तदनुवादोऽयमित्यदोषः । वस्तुतस्तु यदि नाम कूर्मरोमादिकमनारोपितमित्यादि तत्त्वविवेकटीकोक्तरीत्या अत्यन्तासतः आरोप एव नास्ति । तत्पदजन्यप्रतीतिविषयस्य क्वचित्सत्त्व एव सत्यप्रधानज्ञानसंभवेनारोपसंभवः । अत्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वेऽपि प्रामाणिकस्य च तत्प्रतियोगित्वाभावेऽपि पारिभाषिकं तद्विरोधित्वरूपं प्रतियोगित्वमस्त्येवेत्यादिको बहुविचारो अदृश्यत्वाधिकरणमूलटीकाव्याख्याने चतुर्थस्य प्रथममूलटीकाव्याख्याने तत्त्वसंख्यानटीकाव्याख्यानप्रकाशे चास्मदीये द्रष्टव्यः । तद्विपर्ययेणान्तःकरणादिविपर्ययेणान्तःकरणाद्यचेतनं तस्य विपर्ययश्चैतन्यं तेनेत्थंभूतलक्षणे तृतीयेति भामतीमनुसृत्य व्याख्याति **तद्विपर्ययेणेत्यत्रेति** । **प्रमेयप्रवणेति** । प्रमेयविषयीकरणस्वभावेत्यर्थः । **तदाशय इति** । तद्भाष्यवाक्यव्याख्यानभामतीग्रन्थस्य ..............त्रोक्तआशय इत्यर्थः । **साम्योपक्षेपायेति** । साम्यप्रसक्तय इत्यर्थः । ननु कार्यलिङ्गकानुमानार्थापत्तिरूपप्रमाणस्य सत्यत्वेऽपि प्रमातृप्रमाणादिव्यवहारोपपत्तेरन्यथासिद्धत्वान्न मिथ्यात्वसाधकत्वमिति प्रमेयप्रतिपादनमुद्भाष्यतया वर्णनानर्हम् । न च नेत्यनुवृत्त्यादिना दुःखादेर्मिथ्यात्वं नैवेत्यादिभाष्ययोजनया तदर्थलाभान्नोद्भाष्यत्वमिति वाच्यम् । एतन्निरासस्य भाष्यकारसूचितत्वे कथञ्चिद्योजनायाः कर्तव्यत्वेऽपि तत्सूचितत्वाप्रतीत्या तन्निरासकतासिध्यर्थं भाष्ययोजनाया अप्यकर्तव्यत्वादित्यतो भाष्यसूचितत्वमेतत्प्रमाणनिरासस्य दर्शयंस्तन्निरासपरतया मिथ्यात्वं यदीत्येतदेव भाष्यं योजयति **अत्र बन्धस्य प्रकृतत्वेऽपीति** । **सिध्यतीति** । ततश्च तन्निरासस्य दुःखादेरिति निष्कृष्योक्त्या सूचितत्वात्तद्वर्णनं नोद्भाष्यमिति भावः । अस्तु नाम सूचितं तथाऽप्येतद्भाष्यार्थः । कथमित्यत आह **तदनेनेति** । तेनानेन मिथ्यात्वेऽनुमानादिप्रमाणनिरासवर्णनेनेत्यर्थः । **व्यवहारोपपत्त्येति** । प्रमात्रादिव्यवहारोपपत्त्येत्यर्थः । आरोपमात्रं च न मिथ्यात्वसाधकमित्याह **तन्मात्रस्य चेति** । एवं मूलेऽभिप्रेतयोजनानुसारि दुःखादेरिति निष्कृष्योक्त्या सूचितं यत्परोपन्यस्तप्रमाणनिराकरणं तत्सङ्गततयोत्तरग्रन्थप्रवृत्तिप्रकारं दर्शयति **तत्र च नेहनानेत्यादीति** । पूर्वत्रेवाप्रतीतयोजनोत्तरत्र नेति भावेन प्रागुक्तोपवर्णितरीत्यैव यथाश्रुतभाष्यमेव व्याख्याति **मिथ्यात्वं यदीति** । कार्यलिङ्गकानुमानादिनिराकरणं भाष्यारूढमिति दर्शयितुं योजनान्तरमभिप्रेतमिति पूर्वं वर्णितम् । अधुना किं योजनान्तरकल्पनया । न चैतत्प्रमेयनिरासस्य भाष्यारूढतालाभायोगः । तस्य भाष्यानारूढत्वेऽपि तत्प्रमाणनिरासे बहिरेव कृते तदुपरि प्राप्तशङ्कानिरासाय भाष्यस्य यथाश्रुतस्यैव प्रवृत्त्योत्तरशङ्कानिरासोपयुक्ततया परम्परया भाष्यारूढत्वोपपत्तेः । न हि वक्तव्यं सर्वं साक्षादेव भाष्यारूढमिति वक्तुं कोऽप्युत्सहत इति भावेन यदपि परेणात्र यत्केनचिदिति पूर्वोत्तरग्रन्थयोस्तात्पर्यमाह **यद्वा आत्मन्यपीति** । **परम्परयेति** । मिथ्यात्वं यदीति भाष्येण





नेहनानेत्यादिवाक्यबलशङ्कितात्मवैषम्ये निराकृते साम्यस्यैव प्राप्त्या चेतनस्यापि मिथ्यात्वाभावोपपत्तेः कार्यलिङ्गकानुमानादेर्व्यर्थत्वनिरास इत्यर्थः । **स्मृत्यादीनामिति** । आदिपदेनेतिहासपुराणे गृह्येते ।

**स०व्र०**— एवं श्रुत्या तावन्मिथ्यात्वं सिद्ध्यतीत्येतन्निराकृतम् । प्रमाणान्तरं च परोक्तमनूद्य निराकरोति **यदपीति** । **व्यवहारकार्यलिङ्गकमनुमानमिति** । प्रमातृत्वादिव्यवहारत्रितयं देहेन्द्रियादिष्वहंममाध्यासपुरःसरं प्रमातृत्वादिव्यवहारत्वात् यदाध्यासाभावस्तदा व्यवहाराभावो यथा सुषुप्ताविति कार्यलिङ्गकमनुमानमित्यर्थः । उपलक्षणं चैतत् । देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपुरःसर-प्रमातृत्वादिव्यवहारवन्तौ तस्यैव सुषुप्तिकालादन्यकालत्वात् यः कालस्तथाविधव्यवहारवान्न भवति स न तस्यैव सुषुप्तिकालादन्यकालः, यथा तस्यैव सुषुप्तिकाल इति प्रयोगान्तरमपि द्रष्टव्यम् । केवलव्यतिरेकिणमनङ्गीकुर्वाणं प्रत्याह **व्यवहारान्यथानुपपत्तिर्वेति** । व्यवहारत्रितयमध्यासमन्तरेणानुपपद्यमानमध्यासं कल्पयतीत्यर्थः ।

**विठ्ठ०**— बन्धमिथ्यात्वं श्रुतिसिद्धमित्येतत् निराकृत्येदानीम् अनुमानार्थापत्तिसिद्धमित्यपि परमत-मनूद्यापाकरोति **यदपि परेणेत्यादिना** । **अविद्याख्यम्** अविद्यानिमित्तकम् । **लौकिकम्** अहं कर्ता भोक्तेत्यादिकम् । **शास्त्राणि** ब्राह्मणो वाजपेयेन यजेतेत्यादीनि । **न चानेनेति** । अनेनानुमानेनार्थापत्तिलक्षणप्रमाणेन चेत्यर्थः । कुतो न सिध्यतीत्यतो शरीरादिकं मिथ्या स्वतः शरीरादिरहिते व्यवह्रियमाणत्वादित्याद्यनुमानपक्षे शरीरादि-स्वरूपमिथ्यात्वं विना सत्यानामपि शरीरादीनां संसृष्टरूपतयारोपमात्रेण अहमादिस्वरूपाध्यासं विना तादात्म्यादि-प्रकारकाध्यासमात्रेण अन्यथैवोपपन्नत्वात् अयुक्तमित्याशयेनाह **स्वरूपसतामपीति** ।

**चषकः**— इयता ग्रन्थसन्दर्भेण बन्धमिथ्यात्वस्य श्रुतिप्रमाणकतां प्रत्याख्याय संप्रति तदभिहित-प्रमाणान्तरकतामपि प्रतिविधित्सुरनुवदति **यदपीत्यादिना दर्शितमित्यन्तेन** । अविद्याख्यमविद्यानिमित्तम् । **इत्यादिनेति** । ब्राह्मणो वाजपेयेन यजेतेत्यादीनि शास्त्राणि आत्मनि वयोवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्त इत्यादिना ग्रन्थेनाहंममाध्यासपुरःसरत्वस्य प्रदर्शितत्वादित्यर्थः । मिथ्यात्वप्रयोजकाभिमतस्वरूपाध्यासस्या-त्मन्यनङ्गीकारान्न क्षतिरित्याशङ्कते **चेतनस्येति** ।

**प्रदीपः**— उत्तरं तु श्रुतिर्मिथ्या न चेदेकदेशो प्रामाण्यं अद्वैतहानिश्च मिथ्या चेद्वन्ध्यासुतवचस इव **श्रुतेरसाधकत्वमिति** । अत्रायमर्थः । सूत्रव्याख्यानतयाध्यात्मकत्वाद्विचार्यते प्रकृत्यधिकरणे त्वपव्याख्याननिरास-परत्वाद्बाह्यो विचारः । अत्राप्यपव्याख्याननिरासदार्ढ्यार्थत्वान्न पुनरुक्तिरिति द्रष्टव्यम् । श्रुत्या तावन्मिथ्यात्वलक्षणो-ऽध्यासः सिद्ध्यतीत्येतन्निरस्तं प्रमाणान्तरं तथा परोक्तमनूद्य निरस्यति **यदपीति** । किमनेन प्रमाणमादर्शितमित्यत आह **अत्र हीति** । कथं तर्हि तन्निरास इत्यत आह **न चेति** । नन्वारोपश्चेदाश्रितः सिद्धमिष्टमित्यत आह **न चेति** । आत्मनोऽनध्यस्तत्वादेव न मिथ्यात्वमित्याशङ्क्याह **अङ्गीकृतश्चेति** । स्वरूपाध्यास एव मिथ्यात्वे प्रयोजको नाध्यासमात्रमिति शङ्कते **चेतनस्येति** । प्रपञ्चस्यापि नास्ति स्वरूपाध्यास इति न मिथ्यात्वमित्याह **सममिति** ।

**२३३ सु०— यदत्र केनचित्प्रलपितम् । इतरेतराध्यासेऽपि देहेन्द्रियादिप्रपञ्चस्य बाधनं श्रुतियुक्तिभिरुपपादयिष्यते । चिदात्मा तु श्रुतिस्मृतीतिहासपुराणतदविरुद्धन्यायनिर्णीतोऽबाधित इति । तदसत् । प्रपञ्चबाधकश्रुत्यादेः निराक्रियमाणत्वात् । युक्तीनां च निराकरिष्यमाणत्वात् । श्रुत्यादिसिद्धत्वे च मिथ्यात्वस्य तमेतमविद्याख्यमित्यादि व्यर्थमापद्येत । न खलु कोऽपि वादी वदति केनापि रूपेण शरीरादिकमात्मनि नाध्यस्तमिति । येनाध्यासमात्रमुपपाद्येत । तादात्म्याध्यासं च निराकरिष्यत्याचार्यः । विना च तेन व्यवहारमुपपादयिष्यति ।**

**बिन्दुः— कोऽपि वादीति** । नैयायिकादिभिः आत्मनि इतरभेदज्ञानस्य मोक्षहेतुत्वं वदद्भिरध्यासः स्वीकृत एवेति भावः ।

**परि०— युक्तीनां च निराकरिष्यमाणत्वादिति** । विश्वं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरूप्यवदित्यादियुक्तीनां समयपादे शून्यवाद्यपाकरणप्रस्तावे भेदो मिथ्या भेदत्वादित्यादेः पृथगुपदेशादित्येतद्व्याख्यावसरे विवादपदं सदसद्विलक्षणं ज्ञाननिवर्त्यत्वादित्यादेर्वैलक्षण्यं सदसतोरप्येतेन निषिध्यत इत्यादिनाऽत्रैवाग्रे निराकरिष्यमाणत्वादित्यर्थः । **इत्यादीति** । अनुमानादिप्रमाणोपन्यासपराध्यासभाष्यमित्यर्थः । **कोपि वादीति** । अस्माभिरप्यपरायत्तत्वेनारोपाङ्गीकारादिति भावः । स्वरूपसतामपि तादात्म्यतत्संबन्धित्वाभ्यामारोपेणैव व्यवहारोपपत्तेरिति पूर्वमुक्तम् । तच्च तादात्म्याध्यासमङ्गीकृत्य । वस्तुतस्त्वयुक्तं चैतद्वर्णनमिति भावेनाह **तादात्म्येति** । तृतीयाध्याये भक्तिपादे 'देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचित् । मम देह इति ह्येव न देहोऽहमिति प्रमे'त्यादिनेति भावः । कथं तर्हि कृष्णोऽहं कृशोऽहमित्यादि व्यवहारः । 'नैषां ममाहमिति धीः श्वसृगालभक्ष्ये' इत्यादि पौराणिकव्यवहारश्चेत्यत आह **विना च तेनेति** । तादात्म्यारोपेण विनैव । उपचारश्च कृष्णोऽहमित्यादिना । 'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् । भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वाविविक्तवत् । भवन्ति व्यवहाराश्चे'त्यादिना चेति भावः । विवृतमेतत्सम्यग्देहात्मैक्याध्यासभङ्गे न्यायामृते ।

**यादु०—** श्रुत्यादिबलान्नात्मस्वरूपस्येति यत्केनचिदुक्तं तदनूद्य दूषयति **यदत्रेति** । अभ्युपेत्याह **श्रुत्यादिसिद्धत्वे चेति** । स्वरूपसतामपि तादात्म्यतत्संबन्धित्वाभ्यामारोपेणैव व्यवहारोपपत्तेरिति यत्पूर्वमुक्तं तत्तादात्म्याध्यासमङ्गीकृत्यैव न वस्तुत इत्याह **तादात्म्याध्यासमिति** । देहादीनां तत्संबन्धित्वेनाध्यासस्यास्माभिरङ्गीकृतत्वात्तादात्म्याध्यासमित्येवोक्तम् । 'मम देह इति ह्येव न देहोऽहमिति प्रमे'त्यादिनेति शेषः ।

देहात्मनोरैक्याध्यासाभावे देहानुकूलप्रतिकूलयो रागद्वेषासंभवेनं प्रवृत्तिनिवृत्त्यनुपपत्त्या कर्तृत्वादिव्यवहारानुपपत्तिरित्यत आह **विना च तेनेति** । 'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् । भेदज्ञानेऽपि चाङ्गार वह्निवत्स्वाविविक्तवत् । भवन्ति व्यवहाराश्चे'त्यादिना तादात्म्याध्यासंविनाऽप्यात्मनोऽत्यन्तं प्रेमास्पदतया तत्संबन्धिनो देहादेरपि प्रेमास्पदत्त्वात्तदनुकूलप्रतिकूलयो रागद्वेषादिसंभवेन प्रवृत्ताद्युपपत्तौ कर्तृत्वादिव्यवहारो युज्यत एवेति तमुपपादयिष्यतीत्यर्थः ।

**वं०प०**— आत्मानात्मनोः स्वरूपेणैवेतरेतराध्याससाम्येऽप्यनात्मन एव मिथ्यात्वं नात्मन इत्याह **यदत्रेति** । सममित्यस्माभिरुक्ते सतीत्यर्थः । ननु श्रुत्यादिसिद्धमप्यध्यासं कोऽपि वादी नाङ्गीकरोतीत्यतोऽस्माभिः स उपपाद्यतेऽतस्तमेतमित्यादिभाष्यं न व्यर्थमित्यत आह **न खल्विति** ।

**कं०रा०**— **तादात्म्याध्यासमिति** । आत्मानात्मनोरिति शेषः ।

**श्रीनिधि०**— आत्मानात्मनोरविद्यमानानात्मात्मनोर्विद्यमाननैल्यादिविषयकविशिष्टव्यवहारत्वात् यत्र परस्परव्यावृत्तधर्मविषयकविशिष्टव्यवहारत्वं तत्र परस्पराध्यासनिमित्तकत्वम् । यथा शुक्तिकायामिदं रजतमित्यादि व्यवहारे । अत्र हि रजते इदंत्वमध्यस्यते । इदमिति पुना रजतत्वमिति तद्धर्माणामन्तःकरणादिधर्माणाम् । अनेनैवेत्युक्तं दर्शयति **स्वरूपसतामेवेति** । उक्तो व्यवहार इतरेतराध्यासम् तदागमयेद्यदि तं विना नोपपद्येत । न चैवं स्वरूप सत एव भेदस्य तादात्म्येन तथाविधस्य चक्षुरादेरात्मसंबन्धित्वेनारोपेणैव व्यवहारोपपत्तेरित्यर्थः । **तद्विपर्ययेण** सर्वसाक्षित्वविपर्ययेण । **युक्तीनां च निराकरिष्यमाणत्वादिति** । वैलक्षण्यं स्वतश्चापीत्यादिनेति शेषः । मिथ्यात्वस्य श्रुत्यादिसिद्धत्वेऽपि शरीरादेरध्यासे वादिविप्रतिपत्तेस्तमेतमित्यादिना तदुपपादनं युक्तमित्याह **न खल्विति** । **केनापि रूपेण** अनन्यायत्तस्वतन्त्रत्वादिना । नाध्यासमात्रमुपपाद्यते येन वैयर्थ्यं स्यात् । किं नाम तादात्म्याध्यासः । तत्र च वादिनो विप्रतिपद्यन्त इत्यत आह **तादात्म्याध्यासमिति** । जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः इत्यादिनेति भावः । **विना च तेनेति** । उपचारश्च कृष्णोऽहमिति कर्दमलेपन इत्यादिनेति भावः । **व्यवहारं** नीलोऽहं गौरोऽहमित्यादिकम् ।

**वा०चं०**— अत एवोत्तरत्र श्रुत्यादेरित्याह **निराकरिष्यमाणत्वादिति** । 'दृश्यत्वाद्भिमतं मिथ्या स्वप्नवच्चे'त्यादिनेत्यर्थः । प्रमेयं निराकृत्य भाष्यानुपपत्तिमाह **श्रुत्यादीति** । इतरेतराध्यासेऽपि प्रपञ्चबाधनं श्रुत्यादिभिरिति वदता श्रुत्यादेरेव मिथ्यात्वसाधकत्वं न तु अध्यासस्येत्युक्तं स्यात् । तथा च तत्प्रतिपादकं भाष्यं व्यर्थमिति भावः । ननु मिथ्यात्वेऽविवदमानंप्रत्यध्यासस्यानुपपादनीयत्वेऽप्यध्यासे विप्रतिपन्नं प्रति तदुपपादनं सङ्गतमेवेति चेन्न । विषयप्रयोजनाक्षिप्तबन्धमिथ्यात्वव्युत्पादनावसरेऽध्यासमात्रस्याव्युत्पादनीयत्वात् अध्यासमात्रविप्रतिपन्नो वादी नास्त्यपि चेत्याह **न खल्विति** । अङ्गीकृत्यैव तादात्म्येनारोपमिदमुक्तम् । वस्तुतस्तु सोऽपि नास्ति । देहात्मत्वं यदि न तत्प्राप्तमित्यादिना भाष्यकारेण निराकरिष्यमाणत्वादित्याह **तादात्म्येति** । ननु कथं स नास्ति व्यवहारा-





न्यथाऽनुपपत्त्यादेरुक्तत्वादित्यत आह **विना च तेनेति** । 'उपचारश्च कृष्णोऽहमि'ति 'व्याप्तत्वादात्मनो देह' इत्यादिनेति भावः । उपलक्षणं चैतत् । क्रियावेशादिलक्षणविक्रियाया विनाशाद्यहेतुत्वात्प्रमातृत्वादेर्जीवे स्वाभाविकत्वान्नाध्याससापेक्षत्वमिति पूर्वोक्तरीत्या समाधानमपि द्रष्टव्यम् । अत्र तादात्म्यतत्संबन्धित्वाभ्यामारोपे प्रस्तुते तादात्म्यारोपस्य विशिष्यनिरासेन तत्संबन्धित्वेनारोपोऽनुमत इति ज्ञायते । अत एव स्वातन्त्र्यरूपतत्संबन्धारोपः पूर्वमुपपादित इति द्रष्टव्यम् ।

**वा०र०**— **प्रमेयमिति** । श्रुत्यादिभिर्मिथ्यात्वसिद्धिरिति प्रमेयमित्यर्थः । **अध्यासेऽपीति** । यदा अध्यासमात्रे विद्यमानेऽपि मिथ्यात्वाय श्रुत्यादिविरोधोपादानं कृतं तदाध्यासस्याप्रयोजकत्वं भवतैव स्वीकृतमिति तद्वर्णनभाष्यं व्यर्थमित्यर्थः । **अध्यासे विप्रतिपन्नं प्रतीति** । तथा च मिथ्यात्वसिध्यर्थताया अनङ्गीकारान्न वैयर्थ्योपवर्णनं युक्तमिति भावः । **अव्युत्पादनीयत्वादिति** । अतःपरं तद्वर्णनमसङ्गतमिति शेषः । अध्यासमात्रमित्यनेन सूचितमेतत् । इत्याहेत्युत्तरेण संबन्धः । **स नास्तीति** । तादात्म्याध्यास इत्यर्थः । **व्यवहारेति** । कृष्णोऽहमित्यादि व्यवहारेत्यर्थः । इत्यत आह विना च तेनेतीति पाठः । इत्याहेति पाठे इति शङ्कायां परिहारमाहेति योज्यम् । अत एव 'नासत' इत्येतत् द्वितीयाध्यायगीताभाष्यगतेत्याहेत्यस्य मूलकृता तथा व्याख्यानं कृतम् । **इत्यादिनेतीति** । इत्यादिनौपचारिकत्वेनेति शेषः । अत्र व्याप्तत्वादात्मनो देह इत्यनुव्याख्यानमुदाहरता शङ्कान्तरं तत्परिहारश्च सूचितः । तथाहि देहात्मनोरैक्याध्यासाभावे देहानुकूलप्रतिकूलयोः रागद्वेषायोगेन प्रवृत्तिनिवृत्त्यनुपपत्त्या कर्तृत्वादिव्यवहारायोग इति चेन्न । 'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् । भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वाविविक्तवत् । भवन्ति व्यवहाराश्चे'त्यादिना देहतादात्म्याध्यासं विनापि आत्मनोऽत्यन्तं परमप्रेमास्पदतया देहादेरपि तत्संबन्धित्वेन परमप्रेमास्पदत्वेन तदनुकूलप्रतिकूलयो रागद्वेषासंभवात्प्रवृत्त्याद्युपपत्तौ कर्तृत्वादिव्यवहारो युज्यत इत्युपपादयिष्यमाणत्वादिति । आदिपदेन 'ईशतज्ज्ञानवेदाक्षजानुमायात पूर्विणः । मानमातृप्रमेयाणां तदुच्छित्तिर्न हि क्वचित्' इत्यन्तस्यापि ग्रन्थसन्दर्भस्योपादानात् सत्यभूतानामेव प्रमातृप्रमाणप्रमेयादिपदार्थानां व्यवहारमुपपादयिष्यतीति वा तत्र सत्यत्वोपपादनाय व्यवहारार्थत्वस्याभिप्रेतत्वादिति ज्ञेयमिति गुरवः । उपपादयिष्यतीत्युक्त्या दर्शनभेदकथनावसरे प्रागुक्तं जैनाधिकरणीयप्रमेयानुसारेण स्वोक्तोपपादनेऽरुचिरिति भ्रान्तिः स्यादत आह **उपलक्षणमिति** ।

**स०व्र०**— **युक्तीनां चेति** । वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिन इत्यादिना वादिविप्रतिपत्तिनिरासार्थं तद्व्युत्पादनमर्थवदिति चेत् किमध्यासमात्रव्युत्पादनं क्रियते तादात्म्याध्यासो वा । नाद्य इत्याह **न खल्विति** । नान्त्य इत्याह **तादात्म्येति** । जातमात्रा मृगा गाव इत्यादिना तृतीयस्य द्वितीये । ननु स्वरूपाध्यासाभावे कृशोऽहमित्यादिव्यवहारः कथमित्यत आह **विना च तेनेति**। व्याप्तत्वादात्मनो देहे इत्यादिना।

**विठ्ठ०**— यथाकथञ्चिदारोपितत्वेऽपि न मिथ्यात्वं स्वरूपाध्यासाभावादिति चेत्तर्हि दुःखादेरपि स्वरूपाध्यास इत्याह **युक्तीनामिति** । दृश्यत्वादियुक्तीनां वैलक्षण्यं सदसतोरित्यादिना निराकरिष्यमाणत्वादित्यर्थः । अभ्युपेत्य **श्रुत्यादीति** । श्रुत्यादिनैव मिथ्यात्वसिद्धावुपपादनवैयर्थ्यादिति भावः । वादिविवादात्तत्सार्थक्यमित्यत आह





**केनापीति** । ईशाधीनशरीरादेः स्वाधीनत्वादिप्रकारकाध्यासस्य सर्वैर्वादिभिरङ्गीकारादित्यर्थः । प्रागङ्गीकारवादेनैव स्वरूपसतामपि तादात्म्यतत्संबन्धाभ्यामारोपेणेत्युक्तम् । वस्तुतस्तु तादात्म्यारोपोऽपि नास्तीत्याह **तादात्म्याध्यासं चेति** । मम देह इति ह्येव न देहोहमिति प्रमा इत्यादिना इति शेषः । तर्हि कृष्णोऽहं कृशोऽहमिति व्यवहारस्य का गतिरित्यत आह **विना चेति** । उपचारश्च कृष्णोऽहमित्यादिनेत्यर्थः ।

**चषकः**— **युक्तीनामिति** । समयपादे शून्यवादापाकृतिप्रस्तावे पृथगुपदेशादिति नये प्रत्याख्यास्य-मानत्वादित्यर्थः । **आपाद्येतेति** । श्रुतिनिर्धारितेऽर्थेऽनुमानादिप्रमाणोपन्यासस्यानर्थक्यादिति भावः । **न खल्विति** । अनन्याधीनत्वाद्युपरक्ताध्यासस्योत्तरवादिनाऽप्यूरीकृततया तं प्रति शरीराध्याससमर्थनमनर्थकमिति भावः । **निराकरिष्यतीति** । भक्तिचरणे देहात्मत्वं यदीत्यादिना न देहोऽहमिति प्रमेत्यन्तेनेति भावः । विना च तेन तादात्म्यारोपेण विना । व्यवहारं कृष्णोहमित्यादिः । **उपपादयिष्यतीति** । व्याप्तत्वादात्मन इत्यादिनेति भावः । न्यायामृते देहात्मैक्याध्यासभङ्गे प्रपञ्चितमेतत् ।

**प्रदीपः**— श्रुतियुक्तिबाधितत्वात्प्रपञ्चस्वरूपाध्यास एव न संसर्गाध्यास इति परोक्तमनुवदति **यदत्रेति** । दूषयति **तदसदिति** । किं च यदि श्रुत्यादिसिद्धोऽध्यासः तर्हि सिद्धं न व्युत्पादनीयं प्रयोजनाभावादित्याह **श्रुत्यादीति** । वादिविप्रतिपत्तिनिरासार्थं तद्व्युत्पादनमर्थवदिति । अत आह **न खल्विति** । न चाध्यासनिवृत्त्यर्थं तज्ज्ञानमावश्यकमिति वाच्यं तावतापि प्रपञ्चमिथ्यात्वासिद्धेः स्वरूपाध्यासे हि तत्स्यात् नैतदस्ति । अभ्यासाना-मनेकविधत्वादिति भावः । ननु प्रत्यगात्मन्यनात्माध्यास एवानर्थहेतुः स एवाविद्या तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुमिति । तदेव व्युत्पाद्यं नाध्यासमित्याशङ्क्याह **तादात्म्येति** । नन्वेवं कृशोऽहं काणोऽहं इत्यादि-व्यवहारः स्वरूपाध्यासाभावे कथमित्यत आह **विनेति** ।

**२३४ सु०— यदप्यहङ्कारस्थं कर्तृत्वादिकं तदुपरागादात्मनि चकास्तीति । तदयुक्तम् । अहंप्रत्ययस्यात्मविषयत्वात् । ननु तथा सति सुप्तावप्यहमुल्लेखः स्यात् । तदाऽऽत्मनः स्वप्रकाशतया प्रकाशमानत्वात् । न चाविद्याकार्यस्यापि तदानीं प्रतीतिप्रसङ्गः । सुप्तावविद्यायाः समुत्खातितनिखिलपरिणामत्वेन तदभावादिति । मैवम् । सुप्तावप्यह-मवभासस्येष्टत्वात् । तथा सति स्मर्येत ह्यस्तन इवाहङ्कारः । अनुभूते स्मृतिनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादिति चेन्न । सुखमहमस्वाप्समिति सुप्तोत्थितस्य स्वापसुखानुभव-परामर्शदर्शनात् । तदा विशेषतः स्मर्येतेति चेत् । किं स्पष्टं स्मरणमापाद्यते । उत विषय-विशेषोपरक्तम् । आद्ये त्विष्टापादनम् । न द्वितीयः । अविषयजन्यत्वात्सौषुप्तिकसुखस्य । न चायमस्ति नियमो यत्स्मर्यमाणमशेषसंबन्धिविशेषसहितं स्मर्यत इति । अत एव मुख्यसुखतदनुभवे बाधकाभावाद् दुःखाभावविषयकत्वकल्पनं परामर्शस्यापास्तम् ।**





**बिन्दुः**— ननु सौषुप्तिकसुखस्याविषयजत्वेऽपि वैषयिकसुखवैलक्षण्यरूपविषयविशेषः कस्मान्न स्मर्यत इत्यत आह **न चायमस्तीति**। तथाच साधकाभाव इति भावः। **अन्यथैव व्याख्यातं** परमात्ममूर्तिपरतयेत्यर्थः।

**परि०**— सुप्तावात्मनः प्रकाशमानत्वे सत्यविद्याकार्यान्तःकरणतद्धर्माणां दुःखादीनामप्युपलब्धिप्रसङ्ग इत्याशङ्क्य निराह **न चेति**। **तदभावादिति**। अविद्याकार्यस्याभावादित्यर्थः। ह्यस्तन इव पूर्वदिवस इव। नन्वनुभूतं स्मर्तव्यमेवेति न नियम इत्यत आह **अनुभूत इति**। आत्ममात्रत्वात्स्मर्येतेत्यन्वयः। अहङ्कारस्मरणाभावोऽसिद्ध इति परिहरति **सुखमहमित्यादिना**। **सुखानुभवेति**। सुखानुभवजन्यपरामर्शदर्शनादित्यर्थः।

**यादु०**— न चाविद्याकार्यस्यापीत्यनन्तरमहङ्कारस्येति शेषः। सुप्तेऽप्यहमवभासाङ्गीकारे पूर्वस्मिन्दिने अहमिति मन्यमान एवासमितिवत्सुप्तिकालेऽनुभूतस्याप्यहङ्कारस्य जागरणे स्मृतिः स्यादिति शङ्कते **तथा सतीति**। अनुभूतस्य सर्वस्य स्मरणनियमाभावान्न जागरेऽहङ्कारस्मरणमित्यत आह **अनुभूत इति**। अन्यथा तत्स्वरूपभूतस्यात्मनोऽप्यस्मरणं स्यादित्यर्थः। अहङ्कारस्य स्मरणाभावोऽसिद्ध इति परिहरति **सुखमहमित्यादिना**। **सुखानुभवेति**। सुखानुभवजन्यपरामर्शदर्शनादित्यर्थः। दुःखाभावविषयोऽयं परामर्श इति परोक्तं प्रसङ्गादपाकरोति **अत एवेति**।

**वं०प०**— **तदात्मन इति**। आत्माभिन्नत्वाचाहमर्थस्येत्यर्थः। सिद्धान्ती प्रतिबन्दीमाशङ्कते **न चेति**। अविद्याकार्यस्येत्यनन्तरं अहङ्कारस्येति शेषः। तदानीं सुप्तौ। प्रसङ्गस्त्वन्मतेऽपीति शेषः। **तदभावादिति**। अविद्यापरिणामाहङ्कारस्य सुप्तावभावादित्यर्थः। **अनुभवपरामर्श इति**। अनुभवजन्यः परामर्शः स्मृतिरित्यर्थः। एवं सुखस्मरणकालेऽहमुल्लेखोऽप्यस्त्येवेति भावः। **स्पष्टेति**। सुखं यथा स्यात्तथा स्वापकर्तृतयाऽहंत्वप्रकारेण स्पष्टं सुखस्मरणमित्यर्थः। **विषयविशेषेति**। सुखसाधनीभूतकदलीफलादिरूपविषयविशेषसंबन्धितया सुखस्मरणमित्यर्थः। दूषणान्तरमाह **न चायमिति**। तथा च विषयविशेषरूपसंबन्धिसहितं न स्मर्यत इति भावः। अत्र यत्केनचिदुक्तं सुखमहमस्वाप्समिति न सुखपरामर्शः सुखस्य विषयजन्यत्वेन विषयविशेषोपरक्ततया स्मर्यमाणत्वाभावाद्दुःखाभावविषयक एवेति तदप्यत एवापास्तम्। सौषुप्तिकसुखस्य विषयजन्यत्वाभावादेवेत्याह **अत एवेति**।

**कं०रा०**— **अहंप्रत्ययस्येति**। अहमितिप्रतीतेः केवलात्मविषयतया तत्राचिदंशभानाभावेन तद्गतकर्तृत्वाद्यारोप आत्मनीति वक्तुमशक्यमिति भावः। नन्वहंप्रत्ययस्य केवलात्मालम्बनत्वे सुषुप्तावप्यहमित्युल्लेखः स्यात्तदाऽऽत्मनः प्रकाशमानत्वात्। न चाविद्यापरिणामस्यान्तःकरणस्याहंप्रत्ययविषयत्वेऽयं दोषोऽस्ति। सुषुप्तौ

निखिलस्यापि परिणामस्य विलीनत्वादिति शङ्कते **नन्विति** । **ह्यस्तन इति** । 'ह्यो गतेऽनागतेऽह्नि' इत्यभिधानाद्ध्यस्तनशब्दोऽतीतस्याह्नो वाचकः । तस्माच्छब्दात् सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च इति सूत्रेणान्यतरप्रत्यये तुगागमे च रूपमेतत् । इष्टापत्त्या परिहरति **सुखमिति** । यद्यपि नायं सुखानुभवपरामर्शस्तथाऽपि स्वापकालीनो यः सुखानुभवस्तज्जन्यस्य सुखमहमस्वाप्समित्यहङ्कारसंबन्धितया सुखस्मरणस्य दर्शनादिति योज्यम् । स्मर्येत सुखमिति शेषः । विशेषतः सुखं स्मर्येतेत्यापादयता किं सुखस्य स्पष्टस्मरणमापाद्यते उताहं चन्दनजन्यसुखवानभूवमित्यादिवद्विषयविशेषोपरक्तत्वेन स्मरणमापाद्यत इति विकल्प्याद्ये इष्टापत्तिः । स्मरणस्येतरव्यावर्तकसुखत्वप्रकारकत्वेन स्पष्टत्वात् । द्वितीये तु सुषुप्तिसंबन्धिसुखस्य विषयजन्यत्वाभावात्तादृशस्मरणापादनप्रसक्तिरेव नेत्याह **किं स्पष्टमि**त्यादिना **सौषुप्तस्य सुखस्ये**त्यन्तेन । अस्तु वा तस्य विषयजन्यत्वं तथाऽपि विषयविशेषोपरक्तत्वेन स्मृतिः स्यादित्यापादनमयुक्तमेव व्याप्तिविरहादित्याह **न चेति** । अतःशब्दपरामृष्टं हेतुमाह **मुख्येति** । स्वापकाले मुख्यसुखसद्भावेन तदनुभवे च बाधकाभावात्सुखमहमस्वाप्समिति परामर्शस्य दुःखाभावविषयकत्वकल्पनमपास्तम् । मुख्यस्य स्वरूपसुखस्य स्वरूपेन्द्रियेण तदनुभवस्य च वक्ष्यमाणरीत्या संभवादिति भावः । मुख्यसुखं च तदनुभवश्चेति द्वन्द्वैकवद्भावो वा मुख्यसुखसहितस्तदनुभव इति शाकपार्थिवादित्वादुत्तरपदलोपितत्पुरुषो वा द्रष्टव्यः । ननु सुखमहमस्वाप्समिति स्वापविषयकपरामर्शो न घटते । स्वापशब्दार्थस्य सर्वेन्द्रियोपरमस्य साक्ष्ययोग्यत्वेन साक्षिणा तदनुभवायोगादिति चेन्मैवम् । सर्वान्तःकरणवृत्तिरूपज्ञानविपरिलोपस्य स्वापशब्दार्थत्वात्तस्य च साक्षियोग्यप्रतियोगिकत्वेन साक्षियोग्यतया साक्षिणाऽनुभवसंभवात् । ननु सर्वान्तःकरणवृत्तिलोपस्य स्वापत्वं न घटते । आगामिस्वीयवृत्तिध्वंसस्येदानीमयोगात्सर्वशब्दस्य च सङ्कोचे जाग्रदादावतिव्याप्तिरिति चेन्न । अन्तःकरणवृत्तिध्वंसस्य यत्कालावच्छेदेन वृत्त्यन्तरसामानाधिकरण्यराहित्यं तत्कालावच्छिन्नतद्ध्वंसस्य स्वापत्वेन विवक्षितत्वात् । न चोक्तज्ञानध्वंसस्य सुप्तिशब्दार्थत्वे एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति व्यवहारानुपपत्तिरिति वाच्यम् । अन्धकारस्यालोकाभावरूपत्वपक्षे नात्रालोकः किं पुनरन्धकार इतिवदुपपत्तेः । एवंविधस्येच्छाध्वंसस्य स्वापशब्दार्थत्वाङ्गीकारे तु न कश्चित्क्षुद्रोपद्रवः । न चैवं सुप्तिशब्दो नानार्थः स्यादिति वाच्यम् । प्रमाणप्राप्तस्य नानार्थस्य सोढव्यत्वात् । वस्तुतस्तु कालविशेषावच्छिन्नान्तःकरणपरिणामध्वंसत्वस्य ज्ञानध्वंसादावनुगतस्य सुप्तिशब्दप्रवृत्तिनिमित्तस्य सत्त्वान्न नानार्थत्वमिति ध्येयम् । स्वसमानाधिकरणान्तःकरणसंबन्धसमानकालीनत्वेनोक्तध्वंसो विशेषणीयः । तेन मुक्ते न प्रसङ्गः । परमार्थतस्तु कालविशेषविशिष्टभावरूपाज्ञानस्य सुप्तिशब्दार्थत्वम् । एवं च तत्कारणाज्ञानरूपसुप्तिसंबद्ध इति तत्त्वप्रकाशिकावाक्यमविरुद्धं भवति । अन्यथा तत्कारणाज्ञानरूपसुप्तिबद्ध इत्यत्राप्यज्ञानशब्देनोक्तज्ञानध्वंसस्यैव ग्रहणापत्त्या तस्य च तच्छब्दनिर्दिष्टजाग्रत्स्वप्नभ्रमकारणत्वाभावेन तद्वाक्यस्य विरुद्धत्वापत्तेः । न च वाच्यं तत्कारणाज्ञानरूपसुप्तिबद्ध इत्यज्ञानस्योक्तं सुप्तित्वं न घटते । भावरूपाज्ञानस्य जाग्रदादावपि सत्त्वेनातिप्रसङ्गादिति । वृत्तिध्वंसनिष्ठवृत्त्यन्तरासामानाधिकरण्यावच्छेदककालविशेषविशिष्टत्वस्य अज्ञानविशेषणस्य तत्राभिप्रेतत्वेनातिप्रसङ्गाभावात् । न चोक्तकाले विशिष्टस्याज्ञानस्य जाग्रत्स्वप्नभ्रमकारणत्वाभावेन तत्कारणेत्यस्यानन्वय इति वाच्यम् । एकविशेषणविशिष्टेऽपरस्यानन्वयेऽपि दण्डी कुण्डली देवदत्त इत्यादाविवैकस्मिन्विशेषणद्वयान्वयसंभवात् । केचित्तु 'तत्कारणाज्ञानरूपसुप्तिबद्ध' इति वाक्यं तयोर्जाग्रत्स्वप्नभ्रमयोः





कारणं यदज्ञानं तन्मात्ररूपसुप्तिबद्ध इत्यर्थपरतया व्याचक्षाणा जाग्रदादावतिप्रसङ्गनिरासाय मात्रपदं प्रयोक्तव्यमित्याहुः । तच्चिन्त्यम् । मात्रपदेन ज्ञानसामान्यव्यवच्छेदेऽसंभवः । सुप्तावप्यात्मादिविषयकज्ञानस्य सत्त्वात्तदतिरिक्तज्ञानव्यवच्छेदेऽपि व्यवच्छेदस्य तदतिरिक्तकतिपयज्ञानप्रतियोगिकप्रागभावप्रध्वंसरूपत्वे जाग्रदादावतिप्रसङ्गः । तदतिरिक्तसकलज्ञानप्रागभावप्रध्वंसरूपत्वे त्वसंभव इति तदीयमनोवृत्त्यनधिकरणकालविशेषविशिष्टं तदीयं भावरूपाज्ञानं तस्य सुप्तिरित्युच्यते । अतो न कश्चिद्दोष इति तु रहस्यमिति सङ्क्षेपः ।

**श्रीनिधि०— ह्यस्तन इवेति** । पूर्वेद्युरनुभूतोऽहङ्कारः । यथा पूर्वेद्युः क्षीरपानजन्यसुखवानहमिति स्मर्यते तथेत्यर्थः । स्मर्यमाणात्ममात्रत्वादिति । सुप्तौ अनुभूतस्य यः स्मर्यमाण आत्मा तन्मात्रत्वादित्यर्थः । सत्यं अनुभूते स्मृतिनियमो नास्तीति । तथापि सुप्तावनुभूतत्वेऽहङ्कारस्य स्मृतिः स्यादेव । तथा हि । पूर्वदिनेऽनुभूतोऽहङ्कारः सुप्तोत्थितेन स्मर्यत इति तावत्सिद्धम् । स एव च सुप्तावनुभूतोऽहङ्कारः । तथा च स्मृतिप्रसक्त्यनन्तरं पूर्वकालसंबन्धिन एव सुप्तिकालीनतया विस्मृत्या भवितव्यमेवेति तात्पर्यम् । **स्वापसुखानुभवपरामर्शनादिति** । स्वापसुखानुभवविशिष्टतयाहङ्कारस्य परामर्शदर्शनादित्यर्थः । किं स्पष्टं स्मरणमापाद्यते किं वा विषयविशेषोपरक्तसुखानुभवविशिष्टतया स्मरणमापाद्यत इति विकल्प्य यथाक्रममुत्तरमाह **आद्ये त्वित्यादिना** । **मुख्यसुखतदनुभवे इति** । द्वन्द्वैकवद्भावः ।

**वा०चं०— अहंप्रत्ययस्येति** । तथा च प्रमाणाभावेनात्मातिरिक्ताहमर्थस्यैवाभावान्न तन्निष्ठकर्तृत्वारोपः किन्त्वात्मनि स्वनिष्ठकर्तृत्वादेरेव भानमिति भावः । सुषुप्तावहमर्थावभासे पूर्वस्मिन्दिनेऽहमित्यभिमन्यमान आसमिति ह्यस्तनपरामर्शवत्सुषुप्तावहमित्यभिमन्यमान आसमित्यप्युत्थितस्य परामर्शः स्यादिति शङ्कते **तथा सतीति** । तर्कस्याभासतां निरस्यति **अनुभूत इति** । अहंशब्दोल्लेखी परामर्शः स्यादित्यापाद्यतेऽहमित्यर्थाभिमानविषयक इतिवोताहमर्थविषयक इत्येव वा । नाद्यः । सुषुप्तावहंशब्दोल्लेख्यनुभवाभावेन तदभावोपपत्तेः । न द्वितीयः । अहमर्थप्रकाशेन तदभिमानापादनस्य व्यधिकरणत्वात् । अन्यथा तवाप्यात्मेत्यभिमन्यमान आसमिति परामर्शापत्तेः । तृतीये त्विष्टापत्तिः । न च तत्र विवादः । अहमस्वाप्समिति परामर्शस्य सर्वानुभवसिद्धत्वात् । न चाहङ्कारे परामृश्यमानात्मैक्यारोपादहङ्कारतज्ज्ञाने परामर्शत्वाभिमान इति वाच्यम् । अपरामर्शे परामर्शत्वारोपादर्शनात् । अस्याः कल्पनाया अहमर्थस्यात्माऽन्यत्वसिद्ध्यधीनतयाऽन्योन्याश्रयाच्चाहमित्यतोऽन्यस्यात्मपरामर्शस्याभावाच्च । न च नायमहमंशे परामर्शः । किन्तु परामृश्यमान आत्मेदानींजातेनान्तःकरणेनावच्छेदादहंत्वं प्राप्तस्तथाऽनुभूयत इति वाच्यम् । उक्तोत्तरत्वात् । तथा सति सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यादेरपि सुखाज्ञानाद्यंशे परामर्शत्वाभावापत्तेश्च । सुखादेरन्याश्रयस्य निराश्रयस्य वाऽपरामर्शेनाहमर्थाश्रयत्वस्यैव वक्तव्यत्वात् । अन्यथा यः पूर्वं सुखी सोऽधुना दुःखी जातः इतिवत् यः पूर्वं मदन्यः सोधुनाऽहं जात इति धीः स्यादित्याशयेनाह **सुखमिति** । अत्र सर्वत्र विवरणोक्तरीत्या परामर्शः स्मृतिरूपं ज्ञानमिति ज्ञायते । न च स्मृतेः संस्कारजन्यत्वनियमात्साक्षिरूपस्य सौषुप्तिकसुखाद्यनुभवस्य संस्काराजनकतया साक्षात्साक्षिजन्यत्वेन न परामर्शस्य स्मृतित्वं युक्तमिति वाच्यम् । तस्यैव जागरावस्थायां तत्कालोत्पन्नाहंवृत्त्यवच्छिन्नत्वेनानित्यतया संस्कारजनकत्वसंभवेन तज्जन्यपरामर्शस्य स्मृतित्वोपपत्तेः । अस्माकं तु परामर्शस्य

साक्ष्यनुभवत्वं वा मानसानुभवत्वं वा नोभयत्रापि क्षतिरिति द्रष्टव्यम् । सुखानुभवपरामर्शे बाधकं शङ्कते **तदेति** । विषयविशेषः स्रक्चन्दनादिः । **अविषयेति** । सुषुप्तौ स्वरूपसुखानुभवाङ्गीकारादिति भावः । अस्त्वयं सुखस्वरूपाणां सुखानुभवपरामर्शो नान्येषाम् । तथा च तेषां सुखाश्रयतया नाहमर्थपरामर्शसिद्धिरिति चेत् । तेषामप्यज्ञानाश्रयतया तत्परामर्शसिद्धेः । सुखपरामर्शेऽपि न दोषः । तेषामपि तदा वैषयिकसुखाङ्गीकारात् । न च तदाविषयसंबन्धाभावदोषः । प्राज्ञसंबन्धस्यैव तत्त्वात् । न च तर्हि स्रक्चन्दनादिजन्यमेतदिति जाग्रदादाविव प्राज्ञसंबन्धजन्यमेतत्सुखमिति परामर्शापत्तिरिति वाच्यम् । सुखस्मरणदशायां तज्जनकविषयसंबन्धस्मरणस्यावश्यकत्वे नियामकाभावादित्याह **न चायमिति** । ननु नायं सौषुप्तिकसुखानुभवपरामर्शः किन्तु सौषुप्तिकदुःखाभावविषयकानुमितिर्वा सौषुप्तिकदुःखाभावविषयकस्मृतिर्वा तथाचोक्तमयुक्तमिति चेन्न । सुषुप्तौ स्वरूपभृतस्य प्राज्ञसंबन्धजन्यस्य वा सुखस्य संभवेन स्मर्यमाणस्य स्वाशेषसंबन्धिसहितस्मरणनियमाभावेन च मुख्यसुखतदनुभवे बाधकाभावेन सुखानुभवपरामर्शत्वेनानुभवसिद्धस्य तत्परित्यागेन दुःखाभावविषयकानुमितित्वत्स्मृतित्वकल्पनाया अयुक्तत्वात्सौषुप्तिकदुःखाभावविषयकस्मृतित्वेऽपि दुःखाभावाश्रयतयैवाहमर्थप्रकाशस्य स्वीकार्यत्वाच्च नोक्तमयुक्तमित्याह **अत एवेति** । अत्र परामर्शस्येत्यस्यानुमितेरिति स्मृतेरिति वाऽर्थः ।

**वा०र०**— गूढाभिसन्धिरहमर्थस्यात्मत्वे बाधकमाशङ्कते **ननु तथा सतीति** मूलम् । आत्मप्रकाशाभावादेवाहमर्थस्यापि न प्रकाशापत्तिरित्यत आह **तदात्मन इति** । सुषुप्तावात्मप्रकाशाङ्गीकारे बाधकमतिप्रसङ्गमाशङ्कते **न चेति** मूलम् । आत्मन इवाविद्याकार्यप्रपञ्चस्यापि तदानीम्भावात्तस्यापि प्रकाशः प्रसज्येत । ततस्तदानीं विद्यमानत्वमात्रं न प्रकाशप्रयोजकमित्याशयः । यद्यपि स्वप्रकाशतयेत्यात्मप्रकाशे साधकवत् नाविद्याकार्यप्रकाशे साधकमभिहितम् । तथाऽप्यात्मनः प्रकाशाङ्गीकारे साक्षिप्रकाश्यप्रपञ्चस्यापि प्रकाशः स्यादित्यत्र तात्पर्याददोषः । यद्वा अहङ्कारस्यात्मानतिरिक्तत्वे सुषुप्तौ प्रकाशापादनमयुक्तम् । तदतिरिक्तत्वपक्षेऽप्यात्मवत्तदानीं प्रकाशापत्तिसाम्येनास्य दोषस्योभयसमाधेयत्वादित्यतो नेदं दूषणमस्मत्पक्षे । अस्माभिरहङ्कारस्याविद्याकार्यत्वाभ्युपगमेन तदानीं प्रतीतिप्रसङ्गाभावादित्याह **न चाविद्येति** । **अविद्याकार्यस्यापि** अविद्याकार्यत्वाक्षेपेऽपीत्यर्थः । यद्वा अपि आत्मातिरिक्तत्वपक्षेऽपि अविद्याकार्यत्वादिति हेतुगर्भम् । उभयत्राप्यहङ्कारस्येति शेषः । न चेति चस्त्वर्थः । आत्मातिरिक्तत्वपक्षेऽप्यविद्याकार्यस्याहङ्कारस्य तदानीं प्रतीतिप्रसङ्गस्तु नेति योजना मूले द्रष्टव्या । अविद्याकार्यत्वेऽपि कुतस्तदानीं प्रतीतिप्रसङ्गो नायातीत्यत आह **सुषुप्तेऽविद्याया इति** । तदानीमविद्यायाः स्वरूपेणावस्थानेऽपि तत्परिणामस्य निखिलस्यापि निवृत्तत्वेनाहङ्कारस्यापि स्वरूपेणैवाभावेन तत्प्रतीतिप्रसङ्गानवकाशादित्यर्थः । **सुषुप्तावहमर्थावभास इति** । तदङ्गीकार इत्यर्थः । मूलेऽहङ्कारः स्मर्येतेत्यापादनमयुक्तम् । सुप्तोत्थितस्याहमिति यत् ज्ञानं तस्य स्मरणरूपतयेष्टापादनत्वादित्यत उक्तस्य ह्यस्तन इवेत्यस्य ह्यस्तनेऽहङ्कार इवेति योजने ह्यस्तनविशिष्टाहङ्कार इवेत्यर्थो लभ्यते इवेत्येतद्बलाद्दार्ष्टान्तिकेऽपि सुषुप्तिविशिष्टेति लभ्यत इत्याशयेन आपाद्यस्वरूपं दृष्टान्तविवरणपूर्वकं दार्ष्टान्तिकेऽपि विवृतमनेनेति ज्ञेयम् । **तर्कस्याभासतामिति** । अनुभूतमात्रस्य स्मर्यमाणत्वनियमाभावान्नोत्थितस्योक्तविधस्मरणापत्तिरित्यप्रयोजकतया प्राप्ताभासतामित्यर्थः । सुखमह-





मस्वाप्समिति मूलेऽहमर्थविषयकपरामर्शमात्रापादनमिष्टापत्त्या निराक्रियते । तत्कथम् । परेण पूर्वस्मिन् दिन इत्युक्तप्रकारेणाहमर्थाभिमानविषयकपरामर्शस्योक्तरीत्या आपादितत्वोपपत्तेः । अथवाऽहंशब्दोल्लेखी परामर्श आपादित इति वक्तुं शक्यम् । तथा चैतत्पक्षद्वयनिराकरणं मूलेन लभ्यमिति न्यूनतेत्यतस्तत्पक्षद्वयनिरासस्य स्पष्टत्वाद्बहिरवगन्तव्यत्वं मूलेऽभिप्रेतमिति मनसि कृत्वा पक्षत्रयमपि विकल्प्याद्यद्वयं बहिरेव निराकृत्य तृतीयपक्षनिरासकतया मूलं योजयति **अहंशब्दोल्लेखीति** । **अहमर्थप्रकाशेनेति** । सुषुप्तावहमर्थप्रकाश-रूपापादकेनेत्यर्थः । तदभिमानापादनस्येत्यस्याभिमानपरामर्शापादनस्येति न्यायामृतोक्तेस्तदभिमानपरामर्शापादन-स्येत्यर्थः । सुप्तावहमर्थप्रकाशो हि सुप्त्युत्थितस्याहमर्थविषयकपरामर्श एवापादनार्हः । समानविषयकत्वात् । तदभिमानपरामर्शस्तु कथमापादनार्हः । भिन्नविषयकत्वेनान्यानुभवेनान्यपरामर्शापादनतुल्यत्वादित्यर्थः । उक्तं च न्यायामृते कर्णे स्पृष्टे कटिं चालयसि । **अहमर्थप्रकाशेनेति** । यद्वा सुप्त्युत्थितस्याहमित्यभिमन्यमान आसमिति परामर्शमापादयता सुप्तावहमित्यभिमन्यमानोऽहमित्यनुभव एवापादितो भवति । तथाऽनुभवाभावेऽहंशब्दो-ल्लेख्यनुभवाभावेनेति प्रथमदूषणेनैव दुष्टत्वप्रसङ्गात् । न च तथाऽनुभव आपादयितुं शक्यः । अहमर्थप्रकाशमात्रेण तदभिमानानुभवापादनस्य व्यधिकरणत्वान्नियतसामानाधिकरण्यरूपव्याप्तिशून्यत्वादित्यर्थः । न हि यो यदनुभववान् स तदभिमानानुभववानिति व्याप्तिरस्तीति भावः । अत्र पक्षेऽभिमानापादनं नामाभिमानविषयकोक्तानुभवापादनमिति ज्ञेयम् । **अन्यथा तवापीति** । प्रथमयोजनायां सुप्तोत्थितस्याहमर्थाभिमानपरामर्शापादने आत्मविषयकानुभवस्य सुप्तावङ्गीकारे सुप्तोत्थितस्यात्मेत्यभिमन्यमान आसमिति परामर्शः स्यादिति यथाश्रुत एवार्थः । सुप्तिकालीनाह-मर्थाभिमानानुभवापादनपर्यवसानपक्षे तु सुप्तावात्मप्रकाशाङ्गीकारे आत्मेत्यभिमन्यमानोऽस्मीत्यप्यनुभवापत्त्या सुप्त्युत्थितस्यात्मेत्यभिमन्यमान आसमिति परामर्शापत्तिरित्यर्थो ज्ञातव्यः । **परामर्शस्येति** । तथा चेष्टापादनतेति भावः । ननु परामर्शानुभवेन परामर्शसिद्धिमङ्गीकृत्येष्टापादनत्वं न वक्तुं शक्यम् । अनुभवविषयीकृतपरामर्श-त्वेनाभिमते परामर्शत्वस्यैवाभावात् । किन्त्वहमर्थज्ञानमेव तत् । परामर्शाकारस्तु परामृश्यमानात्मतादात्मस्याहमर्थे आरोपात् । तथा च तत्प्रयुक्तोऽहमर्थपरामर्शोऽयमित्यभिमान एवेत्याशङ्कते **न चेति** । नन्वरजतेऽपि रजतारोप इव कस्यचिदपरामर्शेऽपि परामर्शारोपः स्यादित्यत आह **अस्याः कल्पनाया इति** । परामर्शान्यदहमर्थज्ञानं चेत्स्यात्तर्हि तज्ज्ञाने परामर्शत्वारोपो वाच्यः । न च तदस्तीत्यप्याह **अहमित्यतोऽन्यस्येति** । तथा च य एवात्मांशे परामर्शस्य एवाहमर्थविषयेऽपि परामर्शो भवत्येवाविशेषादित्यप्यनेन सूचितम् । अत एवाशङ्कते **न च नायमिति** । भवत्वात्मांशे परामर्शः । तथापि नाहमर्थांशे । अहमर्थांशे तु आत्मनोऽहंत्वेनानुभव एवेत्यर्थः । **उक्तेति** । अस्याः कल्पनाया अहमर्थस्यानात्मत्वसिध्यधीनत्वेनान्योन्याश्रयत्वादित्युत्तरोक्तत्वादित्यर्थः । **तथा सतीति** । उक्तरीत्याहमर्थांशे-ऽनुभवत्वमाश्रित्य परामर्शत्वाभावाङ्गीकार इत्यर्थः । **सुखाज्ञानादीति** । अन्तःकरणावच्छेदेनैव सुखित्वाज्ञत्वे प्राप्तस्यात्मनोऽनुभव इत्यापत्त्या तदंशेऽपि परामर्शत्वाभावापातादित्यर्थः । यद्वा सुखादिकं ह्यहमर्थाश्रयतयैव परामृश्यतेऽहमस्वाप्समित्यादिरूपेण । यदि नामाहमर्थपरामर्श एव नास्ति तर्हि तदाश्रिततया सुखादिपरामर्शोऽयं न भवेदिति सुखमस्वाप्समित्यादेः । सुखाद्यंशे परामर्शत्वं न स्यादित्यर्थः । अहमर्थाश्रयी मयैव च परामर्शः । कुत इत्यतो न ह्यज्ञानादिकं निराश्रयमन्याश्रयं वेत्यादि न्यायामृतानुसारेणाह **सुखादेरिति** । अत्र सुप्तिकाले सुखाज्ञान-





सद्भावतदनुभवावङ्गीकृत्य सुप्तोत्थितस्य सुखादिपरामर्शोऽपीति परेणाप्यङ्गीकृतम् । एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदहमवेदिषमिति परामर्शबलादेव सुप्तौ सुखाज्ञानादेः सद्भावस्य वाच्यत्वात् । तथाच यद्ययं परामर्शो आत्ममात्रांशे अहमर्थांशे तूक्तरीत्याऽनुभव एवेत्यङ्गीक्रियते तर्हि सुप्तिकालीनसुखादेरपि निराश्रयस्यान्याश्रयस्य वा परामर्शाभावेनाहमस्वाप्समित्यादिरूपेणाहमर्थाश्रयतयैव च परामृश्यमानत्वेनाश्रयाहमर्थस्य चान्तःकरणावच्छेद-प्रयुक्तेदानींतनोत्पत्तिमतः सुप्तिकालेऽसत्त्वेन सुप्तिकालीनसुखादेरहमर्थाश्रयतया परामर्शायोगादनुभवत्वमेवेति सुखमहमित्यादेः सुखाद्यंशे परामर्शत्वमिति त्वदभ्युपगतं कथं स्यात् । ततोऽवश्यं सुखाद्यंशे परामर्शत्वोपपत्तये तदंश इवाहमर्थांशेऽपि परामर्शत्वं स्वीकार्यमिति निष्कर्षः । अवश्यं चेदमात्मांश इवाहमर्थांशेऽपि परामर्शत्वम् । न त्वन्तःकरणावच्छेदेनाहंत्वंप्राप्तस्यानुभवोऽयमित्येतत्प्रमेयं समर्थयितुं सुखाज्ञानाद्यंशेऽपि परामर्शत्वमन्यथा न स्यादित्येकं दूषणमभिधाय तदुपपादितम् । इदानीं तत्समर्थनायैव दूषणान्तरमाह **अन्यथा यः पूर्वमिति** । अन्तः-करणावच्छेदेनात्माहंत्वंप्राप्तो अनुभूयते । न तु सुप्तिकालानुभूतोऽहमर्थोऽप्यात्मवत्परामृश्य तद्वत्यङ्गीकारा इत्यर्थः । **यः पूर्वं मदन्य इति** । ननु दुःखित्वस्य प्रागनुभववन्मदन्यत्वस्यानुभवाभावात्कथं यः पूर्वं मदन्य इति । आपादनीय-परामर्शे उक्तिः । अहमर्थस्य प्रागप्रकाशमात्रं न तु प्रागसत्त्वग्रहणमपि । तेन जात इति च तत्रोक्तिः कथमित्यद्वैत-सिध्युक्तदूषणादिति चेन्न । अत्र न्यायामृतानुसारेण सुप्तपदस्यापि योजनीयतया यः पूर्वं मदन्यः सुप्त इत्यस्य स्वापकर्तृत्वेन यः प्रागासीत् सोऽधुनाऽहंत्वं प्राप्त इत्युक्तेऽहंत्वं प्राप्तात्स्वापकर्त्ता प्राक्कालीनो भिन्न इति तस्यैव परामर्शापत्त्याहमर्थस्य तत्कर्तृत्वेन परामर्शो न स्यादित्येतमर्थं ज्ञापयितुं मदन्य इत्यस्योपादानेनापादनकोटौ निवेशानङ्गीकारात् । जात इत्युक्तिरपि प्रागसत्त्वग्रहणप्रयुक्ता न भवति । किन्तु प्राक् सत्त्वाग्रहणप्रयुक्तेति न दोषः । शेषं कण्टकोद्धारे । अन्यत्रापि कण्टकोद्धारो बोध्यः । मूले परामर्शदर्शनादित्युक्तम् । तत्र परामर्शपदार्थाप्रतीतेस्तं वक्ति । **अत्र सर्वत्रेति** । एतत्प्रकरण इत्यर्थः । उपक्रमपरामर्शोपसंहारैरित्यादिस्थलीयमीमांसकाभिमतपरामर्शस्य मध्ये निर्देशरूपत्वान्नैयायिकाद्यभिमतपरामर्शस्य वह्निव्याप्यधूमवानयमित्यनुसन्धानरूपत्वादुक्तमत्र सर्वत्रेतीति ज्ञेयम् । **विवरणोक्तरीत्येति** । अहमिति द्रष्टृपरामर्शादित्यादौ परामर्शपदं प्रयुज्याप्यनुभूते स्मृतीत्यादौ स्मृतिपदप्रयोगेण तस्य तदर्थत्वावगमादिति भावः । ननु सिद्धान्ते कथमहङ्काराकारा स्मृतिस्तदवभासिसाक्षिचैतन्यस्य नित्यत्वात् । उच्यते । अहंवृत्त्यवच्छिन्नमेव अन्तःकरणचैतन्यस्य विषयभावमापद्यत इत्यादिशङ्कासमाधानरूपं विवरणं मनसि कृत्वा सुखानुभवांशेऽपि पराभिप्रेतनिर्णयप्रकारं स्वयं वक्तुमाह **न च स्मृतेरिति** । **साक्षिरूपस्येति** । अनेन तस्य नित्यतया विनाशाभावान्न संस्कारजनकत्वमिति सूचितम् । **साक्षात्साक्षीति** । परामर्शस्य साक्षादित्यादिः संबन्धः । संस्कारजन्यत्वाभावात्स्मृतित्वं न स्यादित्यर्थः । **तस्यैवेति** । साक्षिरूपसौषुप्तिकसुखानुभवस्येत्यर्थः । **अहंवृत्त्य-वच्छिन्नत्वेनेति** । तथाच तेन रूपेणोत्पत्तिसत्त्वेनानित्यत्वमित्यर्थः । न च तावताऽवच्छिन्नस्यानित्यतयाऽस्तु संस्कारजनकत्वम् । सौषुप्तिकानुभवस्य त्वनवच्छिन्नतया संस्काराजनकत्वमेवेति वाच्यम् । शुद्धावस्थापगमेनाव-च्छिन्नावस्थाप्राप्तिरेवानित्यत्वमिति युक्तं संस्कारजनकत्वमिति भावात् । यद्यपि ह्यस्तन इवाहङ्कारः स्मर्यतेत्युक्ते अहङ्कारो हि चैतन्यप्रतिभासः । तथा चाहङ्कारावभासिचैतन्यं यद्यनित्यं स्यात्स्यात्तर्हि तस्य विनाशेन संस्कारजनकतेति संस्कारद्वारा स्मृतिजनकतापि । न चैवम् । किन्तु तच्चैतन्यं नित्यम् । तथा च न स्मरणापत्तिरिति शङ्कायां तत्परिहाराय





ह्यस्तनोऽपि न स्मर्येतेति पञ्चपादिकायामुक्तम्। चैतन्यप्रकाश्यत्वाविशेषात् ह्यस्तनोऽपि न स्मर्येतेति प्रकरणमर्यादया तदर्थो ज्ञेयः। तत्रैवमाशङ्का। अहङ्कारबोधिचैतन्यस्य नित्यत्वेऽपि यथा त्वन्मते स्मरणं तद्वन्ममापीति। एतच्छङ्कापरतया च यथा तद्वन्ममेति योजनया ननु सिद्धान्त इति विवरणग्रन्थो योजितस्तत्त्वदीपने। उच्यते। अहंवृत्तीत्यादिस्तु एवं योजितः। चिन्मात्रस्य नित्यत्वेऽपि विशिष्टाकारस्यानित्यत्वात्स्मरणं युक्तमित्याह **उच्यत इति**। अहङ्काराकारा काचिदन्तःकरणवृत्तिरुत्पद्यते। तस्यां वृत्तावभिव्यक्तचैतन्यं वृत्तिविशिष्टान्तःकरणसाधकम्। तस्याश्च वृत्तेर्नाशे तत्संस्कारादन्तःकरणाकारं स्मरणमुपजायते। ततः कथं स्मृत्यसंभवः। न च त्वया तथा श्रीयत इति वैषम्यमिति। तथा चान्तःकरणवृत्तेरेव नाशप्रयुक्तः संस्कारोऽन्तःकरणाकारस्मरणहेतुरित्यागतम्। न त्वहंवृत्त्यवच्छिन्नास्यात्मनो विनाशितया संस्कारजनकत्वमितीति न तन्न्यायेन प्रकृतेऽप्यहं वृत्त्यवच्छिन्नत्वेन सुखानुभवस्यानित्यत्वं शक्यते वक्तुमित्याभाति। तथापि तत्र प्रकाशभूतचैतन्यस्यापि विशिष्टत्वमभिप्रेतमेव। अहङ्काराकारान्तःकरण-वृत्त्यभिव्यक्तस्य तद्वृत्त्यवच्छिन्नत्वेनानित्यत्वस्यैव फलतः प्राप्तेः। अत एव चिन्मात्रस्य नित्यत्वेऽपि विशिष्टाकारस्य नित्यत्वादित्यवतारे उक्तम्। अत एव च चैतन्यस्याहङ्काराकारान्तःकरणविषयकत्वे कर्तृकर्मविरोधमाशङ्क्यान्तः-करणस्य तदवच्छिन्नचैतन्यस्य वा वृत्तिजन्यफलाश्रयत्वाभावादित्यादिकमभिधाय घटादिज्ञानधाराकालीनात्मनः कथमेवं सति स्मरणमित्यादिग्रन्थे तदाकारवृत्तिविशिष्टचैतन्यनाशस्यैव तत्संस्कारहेतुत्व इति व्यवहृतम्। तदेवं तत्त्वदीपनाद्यनुसारेणैवाहङ्काराकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्यैव परमतेऽहमर्थावभासितया तस्य चानित्यत्वेन संस्कारसंभवादहं वृत्त्यवच्छिन्नत्वेनानित्यतायाः सुखानुभवांशेऽपि साम्याट्टीका यथाश्रुतैव साध्वीति ज्ञेयम्। **अस्माकं त्विति**। एतच्च ................ प्रतिपादितं ज्ञेयम्। विषयविशेषोपरक्तमित्यत्रत्यविषयविशेषपदार्थमाह **विषयविशेष इति**। सौषुप्तिकसुखस्याविषयजन्यत्वोक्त्यनन्तरं विषयजन्यतापक्षे प्राप्तदूषणोद्धारपरमूलासङ्गति-रित्यतो विषयजन्यत्वाभावपक्ष एव तत्परिहारः। किन्तु येषां तमोयोग्यानां स्वरूपसुखासंभवेन वैषयिकसुखानुभव एव सुप्तावङ्गीकार्यतया आप्तस्तेषां विषयविशेषोपरक्तसुखानुभवप्राप्तेस्तादवस्थ्ये प्राप्ते तत्परिहार आवश्यक एवेति नोत्तरमूलवैयर्थ्यमिति भावेन सुप्तौ स्वरूपसुखानुभवासंभवं क्वचिद्व्युत्पाद्य तत्र विषयजन्यत्वं चाभ्युपगम्य विशेषोपरक्ततया तत्र परामर्शापत्तिशङ्कां प्रवर्त्य तन्निवर्तकतयोत्तरमूलमवतारयति **अस्त्वयं सुखस्वरूपाणा-मित्यादिना**। **तत्त्वादिति**। विषयसंबन्धरूपत्वादित्यर्थः। स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यति अथ यदेतस्मिंश्छरीरे सुखं भवतीति षट्प्रश्नचतुर्थप्रश्नोपनिषदुक्तेरिति भावः। अत एव तद्भाष्यटीकायां स जीवो यदा तेजसा भगवदधीनेनाभिभूतः आवृत्तो भवति भगवन्तं प्रविशतीति यावत् इत्यादिरूपेण स यदेत्यादिकं व्याख्यायाथ यदेतस्मिंश्छरीरे सुखं भवतीत्येतदेवं व्याख्यातम्। यस्मादेवं परमेश्वरतेजसाभिभूतो भवति। अथ तस्मात् तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तदेतस्मिंश्छरीरे भवतीति। तथोत्तरत्र परमेश्वरसन्निधानसामर्थ्योद्भूतसुखमात्मा स्वरूपज्ञानेनानुभवतीत्यनुवादः कृतः। तदभावो नाडीष्वित्येतदधिकरणीयकिमपराद्धं सुखेनेत्येतत्तत्त्वप्रकाशिका-भावबोधे संजीवानां किञ्चिदभिव्यक्तस्वरूपसुखस्यान्येषां परमात्मसंबन्धलक्षणनिमित्तोत्पन्नसुखस्य चानुभव-संभवादिति भावः। इत्युक्त्वा यथोक्तमित्यादिना उदाहृतषट्प्रश्नभाष्यटीकासंमतिमभिधाय अत्रोद्भूतमित्यनेन योग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मसंबन्धनिमित्तजन्यं सुखमुच्यत इति संप्रदायविद इत्युक्तमिति

सद्भावतदनुभवावङ्गीकृत्य सुप्तोत्थितस्य सुख[illegible]र्थोऽपीति परेणाप्यङ्गीकृतम् । एतावन्तं [illegible]वाप्सं न किञ्चिदहमवेदिषमिति परामर्शबलादेव [illegible]नादेः सद्भावस्य वाच्यत्वात् । [illegible] आत्ममात्रांशो अहमर्थांशे तूष्णीत्याऽनुभ[illegible]ति तर्हि सुप्तिकालीनसुखादेरपि[illegible] परामर्शाभावेनाहमस्वाप्समित्यादिरूपेणा[illegible] च परामृश्यमानत्वेनाश्रय[illegible] प्रयुक्तेदानींतनोत्पत्तिमतः सुप्तिकाले[illegible]कालीनसुखादेरहमर्थाश्रय[illegible] सुखमहमित्यादेः सुखाद्यंशे परामर्शत्व[illegible]ातं कथं स्यात् । [illegible] तदंश इवाहमर्थांशेऽपि परामर्शत्वं स्य[illegible]र्षः । अवश्यं [illegible] न त्वन्तःकरणावच्छेदेनाहंत्वंप्राप्तस्य[illegible]मियं समर्थ[illegible] स्यादित्येकं दूषणमभिधाय तदुपपादि[illegible] करणावच्छेदेनात्माहंत्वंप्राप्तो अनुभूय[illegible] **यः पूर्वं मदन्य इति** । ननु दुःखित्व[illegible] परामर्शे उक्तिः । अहमर्थस्य प्राग[illegible] सिध्युक्तदूषणादिति चेन्न । अ[illegible] स्वापकर्तृत्वेन यः प्रागासी[illegible] परामर्शापत्त्याहमर्थस्य [illegible]कोटौ निवेशानङ्गीकारात् ।[illegible] दोषः । शेषं कण्टकोद्धारे[illegible]तिस्तं वक्ति । **अत्र सर्वत्रेति**[illegible]मर्शस्य मध्ये निर्देशरूपत्वात्[illegible]तीति ज्ञेयम् । **विवरणोक्त**[illegible]पदप्रयोगेण तस्य तदर्थ[illegible] अ[illegible] **अहवृत्त्य-**[illegible]च्छिन्नस्यानित्यतयाऽस्तु [illegible]जनकत्वमेवेति वाच्यम् । शुद्धावस्थापगमेनाव-[illegible]मिति भावात् । यद्यपि ह्यस्तन इवाहङ्कारः स्मर्येतेत्युक्ते [illegible]तन्यं यद्यनित्यं स्यात्स्यात्तर्हि तस्य विनाशेन संस्कारजनकतेति [illegible]चैतन्यं नित्यम् । तथा च न स्मरणापत्तिरिति शङ्कायां तत्परिहाराय

ह्यस्तनोऽपि न स्मर्येतेति पञ्चपादिकायामुक्तम् । चैतन्य[illegible]न स्मर्येतेति प्रकरणमर्यादया तदर्थो ज्ञेयः । तत्रैवमाशङ्का । अहङ्कारबोधिचैतन्य[illegible] च यथा तद्वन्ममेति योजनया ननु सिद्धान्त इति विवरणग्रन्थो [illegible] एवं योजितः । चिन्मात्रस्य नित्यत्वेऽपि विशिष्टाकारस्यानित्यत्वात्स्मरणं युक्तमित्याह उच्यत[illegible] काचिदन्तःकरणवृत्तिरुत्पद्यते । तस्यां वृत्तावभिव्यक्तचैतन्यं वृत्तिविशिष्टान्तःकर[illegible] वृत्तेनाशे तत्संस्कारादन्तःकरणाकारं स्मरणमुपजायते । ततः कथं स्मृत्यसंभवः । न च त्वया तथा श्रीयत[illegible] तथा चान्तःकरणवृत्तेरेव नाशप्रयुक्तः संस्कारोऽन्तःकरणाकारस्मरणहेतुरित्यागतम् । न त्वहंवृत्त्यवच्छि[illegible] विनाशितया संस्कारजनकत्वमितीति न तन्न्यायेन प्रकृतेऽप्यहं वृत्त्यवच्छिन्नत्वेन सुखानुभवस्यानित्यत्वं[illegible] वक्तुमित्याभाति । तथापि तत्र प्रकाशभूतचैतन्यस्यापि विशिष्टत्वमभिप्रेतमेव । अहङ्काराकारान्तः[illegible] वृत्त्यभिव्यक्तस्य तद्वृत्त्यवच्छिन्नत्वेनानित्यत्वस्यैव फलतः प्राप्तेः । अत एव चिन्मात्रस्य नित्यत्वेऽपि विशिष्टाका[illegible] नित्यत्वादित्यवतारे उक्तम् । अत एव च चैतन्यस्याहङ्काराकारान्तःकरणविषयकत्वे कर्तृकर्मविरोधमाशङ्क्यान्तः[illegible] करणस्य तदवच्छिन्नचैतन्यस्य वा वृत्तिजन्यफलाश्रयत्वाभावादित्यादिकमभिधाय घटादिज्ञानधाराकालीनात्मनः कथमेवं सति स्मरणमित्यादिग्रन्थे तदाकारवृत्तिविशिष्टचैतन्यनाशस्यैव तत्संस्कारहेतुत्व इति व्यवहृतम् । तदेवं तत्त्वदीपनाद्यनुसारेणैवाहङ्काराकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्यैव परमतेऽहमर्थावभासितया तस्य चानित्यत्वेन संस्कारसंभवादहं वृत्त्यवच्छिन्नत्वेनानित्यतयाः सुखानुभवांशेऽपि साम्याद्टीका यथाश्रुतैव साध्वीति ज्ञेयम् । **अस्माकं त्विति** । एतच ................ प्रतिपादितं ज्ञेयम् । विषयविशेषोपरक्तमित्यत्रत्यविषयविशेषपदार्थमाह **विषयविशेष इति** । सौषुप्तिकसुखस्याविषयजन्यत्वोक्त्यनन्तरं विषयजन्यतापक्षे प्राप्तदूषणोद्धारपरमूलासङ्गति-रित्यतो विषयजन्यत्वाभावपक्ष एव तत्परिहारः । किन्तु येषां तमोयोग्यानां स्वरूपसुखासंभवेन वैषयिकसुखानुभव एव सुप्तावङ्गीकार्यतया आप्तस्तेषां विषयविशेषोपरक्तसुखानुभवप्राप्तेस्तादवस्थ्ये प्राप्ते तत्परिहार आवश्यक एवेति नोत्तरमूलवैयर्थ्यमिति भावेन सुप्तौ स्वरूपसुखानुभवासंभवं क्वचिद्व्युत्पाद्य तत्र विषयजन्यत्वं चाभ्युपगम्य विशेषोपरक्ततया तत्र परामर्शापत्तिशङ्कां प्रवर्त्य तन्निवर्तकतयोत्तरमूलमवतारयति **अस्त्वयं सुखस्वरूपाणा-मित्यादिना । तत्त्वादिति** । विषयसंबन्धरूपत्वादित्यर्थः । स यदा तेजसाऽभिभूतो भवति । अत्रैष देवः स्वप्नान्न पश्यति अथ यदेतस्मिंश्छरीरे सुखं भवतीति षट्प्रश्नचतुर्थप्रश्नोपनिषद्युक्तेरिति भावः । अत एव तद्भाष्यटीकायां स जीवो यदा तेजसा भगवदधीनेनाभिभूतः आवृत्तो भवति भगवन्तं प्रविशतीति यावत् इत्यादिरूपेण स यदेत्यादिकं व्याख्यायाथ यदेतस्मिंश्छरीरे सुखं भवतीत्येतदेवं व्याख्यातम् । यस्मादेवं परमेश्वरतेजसाभिभूतो भवति । अथ तस्मात् तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तदेतस्मिंश्छरीरे भवतीति । तथोत्तरत्र परमेश्वरसन्निधानसामर्थ्योद्भूतसुखमात्मा स्वरूपज्ञानेनानुभवतीत्यनुवादः कृतः । तदभावो नाडीष्वित्येतदधिकरणीयकिमपराद्धं सुखेनेत्येतत्तत्त्वप्रकाशिका-भावबोधे संजीवानां किञ्चिदभिव्यक्तस्वरूपसुखस्यान्येषां परमात्मसंबन्धलक्षणनिमित्तोत्पन्नसुखस्य चानुभव-संभवादिति भावः । इत्युक्त्वा यथोक्तमित्यादिना उदाहृतषट्प्रश्नभाष्यटीकासंमतिमभिधाय अत्रोद्भूतमित्यनेन योग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मसंबन्धनिमित्तजन्यं सुखमुच्यत इति संप्रदायविद इत्युक्तमिति





ज्ञेयम् । मूले बाधकाभावेनेत्येतदुपलक्षणमिति हृदि निधाय सुखस्य सुप्तौ संभवं सुप्तोत्थितस्य जायमानो यः परामर्शस्तस्य सुखानुभवपरामर्शत्वं चाधिकमाह **सुषुप्तौ स्वरूपभूतस्येति** । शाब्दे हि ज्ञाने लक्षणा स्यात्प्रत्यक्षस्तु सुखावमर्शो न लक्षणामर्हतीति विवरणव्याख्यावसरे सुखावमर्शस्य प्रत्यक्षत्वोपपादनाय तत्त्वदीपने उक्तम् । यद्यपि केषाञ्चिन्मते परामर्शोऽनुमानमन्येषां स्मृतिस्तथाऽप्यशाब्दत्वाभिप्रायेण प्रत्यक्ष इत्युक्तम् । विगीताविगीतयो-रविगीतोपादानं लघीय इति न्यायादित्यादि । तदेतन्मनसि कृत्वाह **अत्र परामर्शस्येति** ।

**स०व्र०**— सुषुप्तौ सुखाभावात् दुःखाभावविषयोऽयं परामर्श इति परोक्तं प्रसङ्गादपाकरोति **अत एवेति** ।

**वि॰ट॰**— **अहंप्रत्ययस्येति** । अहमितिप्रतीतेरात्मविषयकत्वेनैवानुभवात् अविद्याकार्याहङ्कारविषयत्वा-नुपपत्तेः अहं कर्तेत्यादिप्रतीयमानं कर्तृत्वादिकं नाहङ्कारस्थमित्यर्थः । **तथा सतीति** । **अहंप्रत्ययस्य** केवलात्म-विषयत्वे । अविद्याकार्यस्यापीत्यतःपरं अहङ्कारस्येति शेषः । तस्य अनादितोऽप्यात्मसत्तानुबन्धितया सत्त्वादिति भावः । अहङ्कारस्य सुषुप्तौ सत्त्वेऽपि अकिञ्चित्करत्वेन तदप्रतीतिरुपपद्यते इत्याह **सुषुप्तावपीति** । ननु सुप्तावहमवभासाङ्गीकारे पूर्वदिने स्थित एवाहमिदानीमस्मीति यथा विशिष्टस्मृतिरस्ति तथा सुषुप्तौ स्थित एवाहमिदानीमस्मीत्येवंप्रकारका स्मृतिः स्यात् । न च वाच्यं नायं नियमो यदनुभूतं सर्वमपि स्मर्तव्यमिति अतः सुप्तिकाले स्थित एवाहमिति स्मृत्यभावो न दोषायेति तस्य सौषुप्तिकाहमवभासस्य स्मर्यमाणात्मतन्मात्रत्वात् । अन्यथाऽहमवभासस्वरूपभूतात्मस्मरणमपि न स्यादिति शङ्कते **तथा सतीति** । अस्त्येव सुप्तोत्थितस्य विशेष-स्मृतिः अतोऽहमवभासस्मरणाभावोऽसिद्ध इति परिहरति **नेति** । **सुखानुभवेति** । सौप्तसुखानुभवविशिष्टोऽहमिति परामर्शदर्शनादित्यर्थः । **इष्टापादनमिति** । एतावन्तं कालं सुखमहमस्वाप्समिति स्पष्टपरामर्शस्य सद्भावादिति भावः । अभ्युपगमवादेनाह **न चायमिति** । 'भूमा नारायणः साक्षात् स एवाहङ्कृतिः स्मृत' इत्याद्युक्त'आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचिदि'ति छन्दोगभाष्ये अन्यथाव्याख्यातमित्यर्थः ।

**प्रदीपः**— **यदपीति** । घटमहं जानामीत्यादिप्रत्यये दृष्टत्वेन प्रतीयमानोऽहङ्कारो आत्मैवेत्यर्थः । यद्यहमनु-भवामीत्यनुभवाहङ्कार एवात्मा तर्हि सुषुप्तेऽपि अहमित्येवात्मा प्रकाश्येत । न चैवमात्मन्यवभासमानेऽप्यहङ्कार-स्यानवभासमानत्वादिति शङ्कते **नन्विति** । नन्वात्मातिरिक्ताहन्ताभ्युपगमेऽपि सुषुप्तेरहमुल्लेखः किं स्यादित्यत आह **न चेति** । अविद्याकार्यस्याहङ्कारस्य सुषुप्त उपादानरूपतयानवस्थानं न कार्यतयेति नाहं प्रत्ययः सुषुप्तावित्यर्थः । सुषुप्तेरहमुल्लेखः स्यादित्येतदिष्टापादनमिति परिहरति **मैवमिति** । सुषुप्तावहमवभासाङ्गीकारे पूर्वस्मिन्दिनेऽह-मित्यभिमन्यमान एव स्मृतिवत्सुषुप्तिकालेऽनुभूतस्याहङ्कारस्य जागरणे स्मृतिः स्यादिति शङ्कते **तथा सतीति** । अनुभूतमात्रस्य स्मर्यमाणत्वनियमाभावात् न जागरेऽहङ्कारस्मरणमित्यत आह **अनुभूत इति** । अन्यथा तत्स्वरूपभूतस्याप्यात्मनोऽप्यस्मरणं स्यादित्यर्थः । स्मरणाभावोऽसिद्ध इति परिहरति **न सुखमिति** । ननु स्मरणमात्रमापद्यते किन्तु ह्यस्तनाहङ्कारवद्विशेषतः स्मरणमिति शङ्कते **तदेति** । विशेषशब्दार्थं विकल्प्य दूषयति **किमिति** । किञ्चानुभूतमात्रे स्मृतिनियमाभावात्सविशेषत्वादात्मनः स्मरणेऽप्यहङ्कारास्मरणमुपपद्यत इत्याह **न चेति** । सुषुप्तौ सुखाभावात् दुःखाभावविषयोऽयं परामर्श इति परोक्तं प्रसङ्गादपास्यते **अत एवेति** ।





**२३५ सु०— यत्तु 'अथातोऽहङ्कारादेशोऽथात आत्मादेश' इत्यात्माऽहङ्कारयोर्भेदवचनं तद्भाष्यकृतैव अन्यथा व्याख्यातम् । वक्ष्यति च सूत्रकारः 'सैव हि सत्यादय' इति । कथमन्यथाऽहङ्कारस्य सर्वगतत्वमुपपद्येत । 'महाभूतान्यहङ्कार' इत्यादिस्मृतिसिद्धस्त्वहङ्कारो यद्यप्यात्मनो भिन्नः । तथाऽपि नासौ 'अहं कर्ते'त्युल्लेखविषयः । तथा सति 'अहं ब्रह्मास्मि' इत्यादावपि तथात्वप्रसङ्गात् । अत्रापि 'यः स्थाणुः स पुरुष' इतिवद् व्याख्यानमिति चेन्न । तदा 'आत्मानमेवावेदहंब्रह्मास्मी'ति निरवद्यस्य ब्रह्मणोऽप्यहमुल्लेखदर्शनात् । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त' इति स्वप्रपन्नमायानिरसनसमर्थस्येश्वरस्यापि 'अहं सर्वस्य प्रभव' इत्याद्युल्लेखोपलम्भाच्च । स्पष्ट एव शब्दतोऽप्यनयोर्भेदः । यत्प्रकृतिपरिणामवाचि मकारान्तमव्ययमहंपदं न जातु तदात्मनि प्रयुज्यते । यच्चात्मवाचि दकारान्तास्मच्छब्दजं तन्न कदाचिदपि मायापरिणामे प्रयुज्यत इति । तदेवं सर्वमिथ्यात्वपरत्वे श्रुतेरेव मिथ्यात्वप्रसङ्गेनासाधकत्वापत्तौ दुःखादिबन्धमिथ्यात्वासिद्ध्या न प्रत्यक्षमतत्त्वावेदकमिति ।**

**बिन्दुः— मामेव ये प्रपद्यन्त इति** । यद्यपि लक्षान्तऋणग्रस्तेनापि पुनर्ऋणं कृत्वा स्वप्रपन्नानां शतावधिकऋणपरिहारः सुकरस्तथापि तेन यत्र लक्षं तत्र शताधिकमित्युक्त्यैव तथा क्रियते प्रकृते तु न मां कर्माणि लिम्पन्तीत्यादिना भगवतैव स्वकीयनिर्लेपताया उक्तत्वादिति भावः । **दकारान्तेति** । यद्यपि अनादौ अहमित्यादिपदे दकारान्तत्वादिव्युत्पादनं वैय्याकरणानां रेखागवयन्यायेन कल्पनामात्रतयापि शक्तिग्रहाद्यर्थव्याकरणप्रामाण्यं सर्ववादिप्रतिपन्नमेव । अन्यथा युष्मदस्मत्प्रत्ययगोचरयोरित्यनुपपन्नं स्यादिति भावः ।

**परि०**— नन्वहमर्थस्यात्मत्वे छान्दोग्ये सप्तमे 'यो वै भूमा तत्सुखमि'ति भूमशब्दितब्रह्मण आदेशोक्त्यनन्तरमथातोऽहङ्कारादेश इत्युक्त्वा अनन्तरं अथात आत्मादेश इत्यात्मनः पृथगुक्त्यनुपपत्तिरित्यत आह **यत्त्विति** । **भाष्यकृतेति** । 'सैव ही'त्येतत्सूत्रभाष्यकृता । 'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिता' इति । तथा छान्दोग्यभाष्ये च 'भूमा नारायणाख्यः स्यात्स एवाहङ्कृतिः स्मृतः । आकार्योऽहमिति ह्येष ततोऽहङ्कार उच्यते । जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः । अणुरूपोऽपि भगवान्वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचिदि'त्यादिना भगवद्गुणपरत्वेन रूपविशेषपरत्वेन च व्याख्यातमित्यर्थः । आत्माहङ्कारयोर्भेदे सूत्रविरोधमप्याह **वक्ष्यति चेति** । सैव परदेवता सत्यादय इति सत्याद्यहङ्कारात्मान्तानां परदेवतात्वं च वक्ष्यतीत्यर्थः । श्रुतिगताहङ्कारपदस्येश्वर-





परत्वाभावेऽहमेवाधस्तादिति वाक्यशेषे तस्य सर्वगतत्वप्रतिपादनं न घटत इत्याह **कथमन्यथेति** । स उपरिष्टादित्यादिना पूर्णत्वं भगवतोऽन्यस्याहङ्कारस्योपदिशतीति न युज्यत इत्यादि छान्दोग्यभाष्योक्तं किञ्चिदाह **कथमन्यथेति** ॥ ननु 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचरा' इति त्रयोदशे गीतायां अन्यत्राप्यहङ्कारपदप्रयोगो दृष्ट इत्यत आह **महाभूतानीति** । श्रुतिसिद्धाहङ्कारतत्त्वस्याहमित्युल्लेखविषयत्वे बाधकमाह **तथा सतीति** । ब्रह्माहङ्कारयोरैक्यमनभिमत-मापतेत् । न जीवब्रह्मैक्यमभिमतमित्याशयः । नन्वहं ब्रह्मेत्यादावपि यदहन्त्वेन प्रतीतं तद्ब्रह्मेति व्याख्यानमस्तु । यः स्थाणुत्वेन प्रतीतः स पुरुष इतिवत् । एवं चाहं ब्रह्मेत्यादावप्यहमर्थस्यानात्मत्वेऽपि न दोष इत्याशङ्क्य निराह **अत्रापीति** । **तदात्मानमिति** । तत् ब्रह्म अवेत् व्यजानादित्यर्थः । तत्र जडरूपाहमर्थलेशस्याप्यभावादिति भावेनोक्तं **निरवद्यस्येति** । अहमित्युल्लिख्यमानस्य जडाहङ्कार-भूतत्वाभावं प्रकारान्तरेण व्यनक्ति **मामेवेति** । गीतायां कृष्णवाक्यमेतत् । शब्दतोऽपि भेद इत्युक्तं व्यनक्ति **यदिति** । **अस्मच्छब्दजमिति** । अस्मच्छब्दस्य त्वाहौसाविति मपर्यन्तस्याहादेशे अतो गुण इति पररूपे शेषे लोपे ङेप्रथमयोरमिति सुपोऽमादेशे अमि पूर्वरूपे अहमिति जातत्वात् । अत एव पञ्चमस्य तृतीयपादान्ते 'अहंशुभमोर्युसि'त्यत्र सूत्रे वृत्तौ अहमितिशब्दान्तरं मकारान्तमव्ययमहङ्कारे वर्तत इत्युक्तम् । मञ्जर्यामपि त्वाहौसावित्यहादेशे योऽहंशब्दः तदपेक्षया शब्दान्तरमस्तीत्युक्तमिति भावः । सम्यग्विवृत-मेतत् यदप्यहङ्कारस्येत्यादिनोक्तं प्रमेयं सर्वं न्यायामृते अहमर्थस्यानात्मत्वभङ्गे । न प्रत्यक्षमतत्वा-वेदकमितीतिशब्दो मूलतात्पर्योक्तिसमाप्तौ ।

**गु०दी०**— **अत्रापि यः स्थाणुः स पुरुषः इतिवत्** इत्यत्र व्याख्येये सति हि व्याख्यानम् । यद्रजतमिति प्रतीतं सा शुक्तिः यः सर्पः इति प्रतीतः सा रज्जुरिति शिष्टानां प्रयोगसद्भावेऽपि यद्रजतं सा शुक्तिः यः सर्पः सा रज्जुरित्यादिविरुद्धप्रयोगस्य क्वाप्यदर्शनेन यः स्थाणुरिति प्रतीत उर्ध्वतालक्षणो धर्मी स पुरुष इति व्याख्यानरूप-प्रयोगस्य संभवेऽपि त्वदभिलषितविरुद्धव्याख्येयप्रयोगस्यासंभावितया दृष्टान्ताभावात् । योऽहमध्यासधर्मी ब्रह्मचैतन्यं तद्ब्रह्मेति हि परस्याऽशा । एवं सति अहमज्ञ इत्यनाद्यज्ञानाध्यासे प्रतीयमानाहंपदार्थः शुद्धचैतन्यमेव भवेत् । अज्ञानाध्यासोत्तरकालसाध्याहमध्यासस्य सृष्टेरुत्तरत्र संभवेऽपि प्रलयकालेऽभावादज्ञानाध्यासाप्राप्तज्ञानपदे चैतन्ये उत्तरकालीनाहंपदमात्रप्राप्तौ कारणाभावाच्च । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इति स्मृतौ सकलजगदुत्पत्तेः प्राक्सकलजगत्प्रलयादुत्तरत्र च कीर्त्यमानाहंपदवाच्यस्य ब्रह्मचैतन्यस्य निरवधिकत्वादवाच्यत्वाच्च । अतो यत्किञ्चिदेतत् ।

**यादु०**— आत्माऽहङ्कारयोर्भेदः श्रुतिसिद्ध इत्याशङ्क्याह **यत्त्विति** । **अन्यथा व्याख्यातमिति** । 'भूमा नारायणाख्यः स्यात्स एवाहंकृतिः स्मृत' इत्यादिना आत्माऽहङ्कारशब्दवाच्यो भगवानेवेति छान्दोग्यभाष्ये





व्याख्यातमित्यर्थः । आत्माऽहङ्कारयोर्भेदे सूत्रविरोधमप्याह **वक्ष्यति चेति** । सैव परदेवता सत्यादय इति सत्याद्यहङ्कारात्मान्तानां परदेवतात्वं वक्ष्यतीत्यर्थः । श्रुतिगतस्याहङ्कारस्येश्वरत्वाभावेऽहमेवाधस्तादित्यादिवाक्यशेषे तस्य सर्वगतत्वप्रतिपादनं नोपपद्यत इत्याह **कथमन्यथेति** । स्मृतिसिद्धाहङ्कारतत्त्वस्याहमित्युल्लेखविषयत्वे बाधकमाह **तथा सतीति** । ब्रह्माहङ्कारयोरैक्यमनभिमतमापतेत् । अभिमतं च जीवब्रह्मैक्यं न सिध्येदित्याशयः । **अत्रापि यः स्थाणुरिति** । यः स्थाणुत्वेन प्रतीतः स विवेके सति पुरुष इतिवद्योऽहङ्काराध्यासमुपगतः स आत्मज्ञाने सति ब्रह्मेति व्याख्यानमित्यर्थः । **निरवद्यस्येति** । अहङ्काराध्यासशून्यस्येत्यर्थः । यदा स्वप्रपन्नानां मायानिरसनसमर्थस्तदा स्वस्याहङ्काराध्यासो नास्तीति किं वक्तव्यमित्यभिप्रेत्य स्वप्रपन्नमायेत्याद्युक्तम् । प्रथमतो जाताया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्ध्य इत्याद्युक्तम् ।

**वं०प०— तथात्वेति** । प्रकृतिकार्याहङ्कारतत्त्वस्यैवाहंब्रह्मास्मीति श्रुतावहमुल्लेखविषयत्वप्रसङ्गेनाहङ्कारतत्त्वब्रह्मणोरैक्यापत्त्या जीवब्रह्मैक्यं त्वदभिमतमनया श्रुत्या न सिध्येदित्यर्थः । अत्रापि अहंब्रह्मास्मीति श्रुतौ । **मकारान्तमव्ययमिति** । प्रकृतिपरिणामाहङ्कारतत्त्ववाचिनोऽहंपदस्याव्ययत्वे द्वितीयस्त्वहमः सर्ग इत्यत्राहम इति षष्ठीप्रयोगो न स्यात् । न चाव्ययत्वेऽपि तु नायमर्थः सूचितः । तस्यायमर्थ इत्यादिप्रयोगानुपपत्तिरिति । तत्र स्वरूपं शब्दस्येति परिभाषया तु नेत्यादेः शब्दपदार्थकत्वेनार्थपदार्थकत्वाभावात् । अहम इत्यत्र स्वार्थस्यैव विवक्षितत्वेन शब्दस्याविवक्षितत्वात्कथमेतदिति चोद्यस्य समाधानं विचार्यम् । वैदिकत्वाद्वा विभक्तिप्रतिरूपकाव्ययत्वसमाधिरित्यप्याहुः ।

**कं०रा०—** ननु यद्यात्मैवाहंपदार्थो न त्वविद्याप्रथमकार्याहङ्कारस्तर्ह्यथातोऽहङ्कारादेशोऽथात आत्मादेश इति छन्दोगश्रुतावात्माहङ्कारयोर्भेदवचनं न स्यादित्यत आह **यत्त्विति** । **भाष्यकृतेति** । "जीवान्तस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः । सोऽप्यणुत्वेऽपि स्वव्यापी परमैश्वर्ययोगतः । यथा बालतनौ विष्णौ मार्कण्डेयेन धीमता । प्रविश्य नान्तोऽधिगत एवं व्याप्तो हरिः परः । अणुरूपोऽपि भगवान्वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचित्" इत्यादिना आत्माहङ्कारशब्दयोर्भगवद्रूपविशेषपरत्वेन आत्माहङ्कारयोर्भेदवचनं युक्तमिति भाष्यकृतैव छन्दोगोपनिषद्भाष्ये व्याख्यातमित्यर्थः । 'जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरित' इति क्वचित्पाठः । **वक्ष्यति चेति** । सैव हि सत्यादय इत्यत्र सत्यादीनामहमात्मान्तानां भगवद्रूपत्वं सूत्रकारोऽपि वक्ष्यतीत्यर्थः । **कथमन्यथेति** । अथातोऽहङ्कारादेश इति श्रुतिनिर्दिष्टस्याहङ्कारस्य त्वदभिमताविद्याप्रथमकार्याहङ्काररूपत्वेऽहमेवाधस्तादित्यादिनोक्तं सर्वगतत्वं कथमुपपद्येत । न कथञ्चित् । तस्य परिच्छिन्नत्वादिति भावः । **आत्मन इति** । महत्तत्त्वपरिणामस्य तस्य जडत्वादिति भावः । **तथा सतीति** । महत्कार्याहङ्कारस्याहं कर्तेत्युल्लेखविषयत्वेऽहं ब्रह्मास्मीत्यादावपि तस्यैवाहमुल्लेखविषयत्वं स्यात् । तथा च सामानाधिकरण्यानुपपत्तिरिति भावः । नन्वहं ब्रह्मास्मीत्यादावहंशब्दस्य महाभूतान्यहङ्कार इति स्मृतिसिद्धाहङ्कारविषयत्वेऽपि न दोषः । सामानाधिकरण्यस्य यः स्थाणुः स पुरुष इत्यादाविव योऽहमिति प्रतीतः स ब्रह्मण्यध्यस्त इत्येतदर्थपरतया व्याख्यातुं शक्यत्वादिति शङ्कते **अत्रापीति** । निरवद्यस्य





महत्तत्त्वपरिणामाहङ्कारसंबन्धशून्यस्य । **मायेति** । मायानिरसनसमर्थस्य मायाकार्याहङ्कारसंबन्धो नेति भावः । अनयोः अहङ्कर्तेति प्रतीतिविषयस्य महाभूतान्यहङ्कार इति स्मृतिसिद्धाहङ्कारस्य च ।

**श्रीनिधि०**— ननु यदि अहङ्कारो नात्मातिरिक्तः तर्हि छान्दोग्ये तयोर्भेदवचनं विरुध्येतेत्यत आह **यत्त्विति** । **अन्यथा व्याख्यातम्** छान्दोग्योपनिषद्भाष्ये भगवद्रूपविशेषपरत्वेनेति शेषः । **सत्यादय इति** । सत्याद्या अहमात्मान्ताः, सैव परदैवतेवेत्यर्थः । अन्यथा श्रुतिगताहङ्कारपदस्य भगवत्परत्वाभावे । अहमर्थपरत्वे चेत्यर्थः । एवमपि अहङ्कार आत्मनोऽभिन्नोऽङ्गीकार्यः प्रमाणसिद्धत्वादित्याशङ्कामर्धाङ्गीकारेण परिहरति **महाभूतानीत्यादिना** । अहं कर्तेत्युक्ते स्वविषय इति तस्यैवास्माभिरात्माभिन्नतोच्यत इति भावः । **तथात्वप्रसङ्गादिति** । अत्रापि अहमिति महाभूतानीत्युक्ताहङ्कार एवोल्लिख्येत । तथा चाभेदसिद्धिर्न स्यादिति भावः । **अत्रापीति** । यः स्थानत्वेन प्रतीतः सः पुरुषः व्यतिरेकेण स्थाणोरसत्वमिति यथा तथा प्रकृतेऽपि यदहंत्वेन प्रतीतं तद्ब्रह्म ब्रह्मव्यतिरेकेणाहं-पदार्थो नास्तीति व्याख्यानमित्यर्थः । बाधायां सामानाधिकरण्यं तदितरासत्त्वे पर्यवस्यतीति न्यायादिति भावः । **निरवद्यस्येति** । अविद्यते कार्यान्तःकरणादिरूपावद्यरहितस्येत्यर्थः । अत्रापि यः स्थाणुरिति तद्व्याख्याने आत्मानमिति व्यर्थमापद्येतेति द्रष्टव्यम् । एवं चाविद्यादिरहितस्यापि अहमुल्लेखदर्शनेनाहंप्रत्ययः आत्मातिरिक्त विषय इति भावः । **मायानिरसनसमर्थस्येति** । न हि स्वयं मायावान्परमायानिरसनसमर्थ इति तत्समर्थः स्वयं तद्रहितः । तथा चेत्तस्मिन्नहमुल्लेखः तन्मात्रविषयः न तु तत्र तत्राध्यस्तता अविद्याकार्यजड इति भावः । अहं कर्तेत्यत्र महाभूतानीत्याद्युक्ताहङ्कारो नोल्लिख्यते तथात्वे अहं ब्रह्मास्मीत्यादावपि तथात्वप्रसङ्गादिति दूषणमुक्तम् । तत्र स्थाणुः पुरुष इतिवद् व्याख्यानमिति परोक्तेरवकाश उदाहरणद्वयमुक्तम् । वस्तुतस्तु । तत्र न मायापरिणामस्योल्लेखो युज्यते तत्प्रतिपादकशब्दाभावात् न चाहंपदेनैव तदुल्लेखः तस्य नास्तीत्युत्तमपुरुषलिङ्गेन दकारान्तत्वावगमात् अस्मद्युत्तम इति हि सूत्रम् । दकारान्तस्य चात्मवाचित्वमेव न मायापरिणामवाचित्वम् । मायापरिणामवाचिनश्च मकारान्तस्याहंपदस्य नात्मवाचित्वम् । एवं च शब्दत एव तयोर्भेदे सिद्धे न त्वद्व्याख्यानावसर इत्याह **स्पष्ट एवेति** । न जात्विति मया कृतं मह्यं देहि मम भृत्य इत्यादिप्रयोगे मयेत्यादिस्थाने अहमिति न प्रयुज्यत इत्यर्थः । **न कदाचिदपीति** । अहङ्कारान्मन उत्पन्नमित्यादिप्रयोगे अहङ्कारादित्यादि स्थाने मदित्यादि न प्रयुज्यत इत्यर्थः ।

**वा०चं०**— 'भूमा नारायणाख्यः स्यात्स एवाहंकृतिः स्मृतः । जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः । अणुरूपोऽपि भगवान् वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी'त्यादिस्मृत्युदाहरणपूर्वं छान्दोग्यभाष्य-कृदन्यथाव्याख्यानेन परोदाहृतश्रुतेः सावकाशतामाह **यत्त्विति** । भाष्योदाहृतस्मृतौ विप्रतिपन्नं प्रति सूत्रीयज्ञापकमाह **वक्ष्यतीति** । सूत्रार्थे विमतं प्रति भाष्योक्तश्रुत्यर्थानभ्युपगमे बाधकमाह **कथमिति** । यः स्थाणुत्वेन भ्रमविषयः स पुरुष इतिवद्योऽहमिति भ्रमविषयस्तद्ब्रह्मेति श्रुतिर्व्याख्यायते इति शङ्कते **अत्रापीति** । **निरवद्यस्येति** । शुद्धस्य भ्रमासंभवे हेतुकथनम् ।

**वा०र०**— **भाष्यकृदन्यथेति** । भाष्यकृतो यदन्यथाऽहमर्थातिरिक्तनारायणरूपपरत्वेनाहङ्कारादेश इत्यत्र-त्याहङ्कारपदस्य व्याख्यानं तेनेत्यर्थः । **परोदाहृतेति** । अहङ्कारात्मनोरभेदो न युक्तः । स एवाधस्तात् स





उपरिष्टादित्यादिना भूमाख्यब्रह्मणः सार्वात्म्याभिधानानन्तरमथात अहङ्कारादेश इत्यहङ्कारस्यापि सार्वज्ञ्यमभिधाय अथात आत्मादेश इत्यात्मनोऽहङ्कारात्पृथगुपदेशात् । अभेदे च तस्यासंभवादित्याद्याशयेन परोदाहृतश्रुतेरित्यर्थः । **सावकाशतामिति** । भवेदेवमात्माहङ्कारयोर्भेदवचनविरोधो यदि तत्राहङ्कारशब्देनाहमर्थः प्रतिपाद्यः स्यात् । न चैवं किन्तु तच्छब्देन भगवतोऽहङ्काराख्यं रूपमेवोच्यते । भूमशब्देन तदाख्यरूपवत् । तथात्मशब्देनापि न जीवात्मोच्यते । किन्तु तच्छब्दवाच्यं भगवद्रूपमेव । तथा च अथातोऽहङ्कारेत्यादिश्रुतेर्भगवद्रूपविशेषपरत्वेन सावकाशत्वान्न प्रसिद्धाहङ्कारजीवात्मपरत्वमिति न तयोः पृथगुपदेशेन भिन्नत्वसिद्धिरित्याहेत्यर्थः । न्यायामृते तु नायमुपदेशो भेदसाधकः । तथा सति भूमशब्दोक्तब्रह्मणः सकाशादपि पृथगुपदेशेन भेदापत्तेः । सति चैवं तयोरैक्येऽपि पृथगुपदेशस्तु द्वयोः सर्वान्ययोगाद्भूमात्मांशे ऐक्यसिध्यर्थ इवाहङ्कारात्मांशेऽप्यैक्यसिध्यर्थ इत्यादिरूपेण प्रतिबन्धादिना परोक्तं पृथगुपदेशं निराकृत्य श्रुत्यर्थस्त्वित्यादिना छान्दोग्यभाष्योदाहरणादिकं कृतमिति ज्ञातव्यम् । **सूत्रीयज्ञापकमिति** । सत्यादिपदोक्ता सैव प्रकृता परदेवतैवेति सूत्रे प्रतिपादनादिति भावः । **इत्यादिस्मृतीति मूलम्** । अत्र स्मृतिपदं श्रुतेरप्युपलक्षणम् । अहङ्कारश्चाहं कर्तव्यं चेति श्रुतेरपि सत्त्वात् । **आत्मभिन्न इति** । महत्तत्वकार्यं मन आदि कारणं वैकारिकादिभेदेन त्रिविधं यत्तत्त्वं तस्यैवाहङ्कारपदार्थत्वेनातथाविधात्मभिन्नत्वादिति भावः । अहं कर्तेत्युल्लेखे इति अहङ्कारशब्दस्य दम्भाहङ्कारसंयुक्ता इत्यादौ देहेऽहं बुद्धौ गर्वेऽभिमते च प्रयोगेणाहमर्थवाचितानियमाभावेनोक्तस्मृत्यादिगताहङ्कारशब्दस्याहङ्कारतत्त्ववाचित्वस्यैवान्याय्यतया कर्तृत्वविशिष्टतयाऽहमर्थोल्लेखविषयस्य तत्राभावादहं कर्तेत्युल्लेखविषय आत्मैवेति भावः । अहंतत्त्वस्यान्यत्राहमितिप्रयोगविषयत्वमात्रेण सर्वत्राहमिति प्रयोगविषयत्वे बाधकं चाह **तथा सतीति** । ततश्चाहं तत्त्वब्रह्माभेदप्रतिपादकत्वापत्त्या तस्य च बाधितत्वेन जीवब्रह्मैक्यपरत्वं वदता त्वयाऽनङ्गीकारेण च तद्वाक्याप्रामाण्यं स्यात् तेन जीवब्रह्मणोरैक्यं च न सिध्येदित्याशयः । **स्थाणुत्वेन भ्रमेति** । सविपरीतदर्शने सति पुरुष इत्यर्थः । **तद्ब्रह्मेतीति** । आत्मज्ञाने सतीति पूरणीयम् । **भ्रमासंभव इति** । योऽहमिति भ्रमविषय इत्यस्य हि स्वविषयकाहमिति भ्रमवानित्यर्थादहमित्यस्याहमिति भ्रमविषय इति व्याख्याने ब्रह्मण्येव भ्रमाङ्गीकारः प्राप्नोति । स च निरवद्यस्य न संभवतीत्येवं हेतुकथनमित्यर्थः । मूले **मामेवेत्यादि** । यद्यपि मामेवेत्युल्लेखोऽपि अहमुल्लेख एवेत्यहं कृत्स्नस्य जगत इत्येतदिव मामेवेत्येतदपीश्वरेऽहमुल्लेखे प्रमाणतया वक्तव्यमिति स्वप्रपन्नमायानिरसनसामर्थ्यमात्रे तदुपयोगवर्णनायोगः । अत एव न्यायामृते अस्मच्छब्दोपेतमामेवेत्यस्यामुल्लेखे प्रामाण्यमुक्तम् । न चैव न भविष्याम इत्यादावस्मच्छब्दोपेते निवृत्त्यभावादिकमुक्तमित्यपि प्रतिपादितम् । तथापि तुष्यत्विति न्यायेनाहंत्वप्रकारकोल्लेखे आग्रहिणमभिप्रेत्य तथाविधवाक्यमेवोपात्तम् । तद्वाक्योक्तस्य मायाबहुत्वाभावप्रतिपादनाय सप्रपन्नमायानिरसनसमर्थस्य तद्वाक्ये प्रत्यभिज्ञायमानत्ववचनमित्यदोषः । प्रसक्तानुप्रसक्त्या वर्णितप्रमेयस्य प्रकृतोपयोगं दर्शयन्नुत्तरग्रन्थोपक्षेपाय च प्रकृतमुपसंहरति **तदेवमिति** मूलम् ।

**स०व्र०— अन्यथा व्याख्यातमिति** । 'जीवस्थस्त्वनिरुद्धाख्यः सोऽहङ्कार इतीरितः । अणुरूपोऽपि भगवान् वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचिदि'त्यादिना परमेश्वररूपविषयतया छान्दोग्यभाष्ये व्याख्यातमित्यर्थः । **वक्ष्यति चेति** । सैव परदेवता सत्यादय इति सत्याद्यहमात्मान्तानां





परदेवतात्वमित्यर्थः । यदि सत्यादीनां परमात्मत्वं न स्यात्तर्हि स एवाधस्तादित्यादिनोच्यमानव्याप्तत्वं अयुक्तं स्यादित्याह **कथमिति** । यथा यः स्थाणुत्वेनावगतः स विवेके सति पुरुष इति व्याख्यायते तथा योऽहङ्काराध्यासमुपगतः स आत्मतत्त्वज्ञाने सति ब्रह्मैवेत्यहंब्रह्मास्मीत्येतद्व्याक्रियते । **अत्रापीति** । तर्ह्यत्राहङ्काराध्यासो नास्ति तत्र श्रुतिस्मृतिसिद्धोऽहंप्रत्ययो न स्यादित्याह **नेति** ।

**विठ्ठ०**— किञ्चाहङ्कारात्मनोः परदेवतात्वं सूत्रकारोऽपि वक्ष्यतीत्याह **वक्ष्यतीति** । अपि चाहमेवाधस्तात् इत्यादिवाक्यशेषे अहङ्कारस्य सर्वगतत्वोक्त्यन्यथानुपपत्त्या चायमर्थः । सिद्ध इत्याह **कथमन्यथेति** । महत्तत्व-कार्यस्य अहङ्कारस्यात्मनो भिन्नत्वे नाङ्गीकारात् कथमात्माहङ्कारयोर्भेदाभाव इत्यत आह **महाभूतानीति** । ननु यथा पुरुषव्यतिरेकेण स्थाणुत्वेन भ्रमविषयत्वे सत्त्वमभिप्रेत्य पुरोवर्तिनमुद्दिश्य अयं स्थाणुः स पुरुष इत्युच्यते तथाऽहं ब्रह्मास्मीत्यत्रापि योऽहङ्काराध्यासमुपगतः स ब्रह्मेति व्याख्यानसंभवेन तत्राप्यहङ्काराख्यकार्यस्यैव अहंशब्दवाच्यतेत्याशङ्क्य निराकरोति **अत्रापीति** । **तदात्मानमिति** । बृहदारण्यके किमिति ब्रह्मावेदीदित्युपक्रम-पर्यालोचनयाऽहङ्काराध्यासशून्यस्य शुद्धस्य ब्रह्मण एवाहं ब्रह्मास्मीत्यहमुल्लेखोक्तेरिति भावः ।

**चषकः**— **व्याख्यातमिति** । छान्दोग्यभाष्ये भूमा नारायणः साक्षादित्यादिनेति भावः । **वक्ष्यतीति** । सत्याद्यात्मान्तानां परमात्मरूपतामभिधास्यतीत्यर्थः । **अत्रापि** अहंब्रह्मास्मीत्यादावपि । **यः स्थाणुरिति** । यः विशेषादर्शनदशायां स्थाणुत्वप्रकारकप्रतीतिविषयः सः तद्दर्शनदशायां पुरुष इति यथा तद्वदात्मज्ञानाभाव-दशायामहंत्वप्रकारकप्रतीतिगोचरस्तत्समवधानदशायां ब्रह्मेति व्याख्यानमित्यर्थः । **अवेत्** व्यजानात् । **निरवद्यस्य** अहङ्काराध्यासविनिर्मुक्तस्य । **मकारान्तमव्ययमिति** । अहंशुभमोर्युसितिसूत्रे अहमिति शब्दान्तरं मकारान्त-मव्ययमहङ्कारे वर्तत इति वामनः काशिकायामभ्यधात् । त्वाहौसावित्यस्मदादेशो योऽहंशब्दस्तदपेक्षया शब्दान्तरमस्तीति रुद्रदत्तोऽपि मञ्जर्यामिति भावः ।

**प्रदीपः**— आत्माहङ्कारयोर्भेदः श्रुतिसिद्ध इत्याशङ्क्याह **यत्त्विति** । आत्माहङ्कारभेदवादिनां सूत्रविरोध-श्चेत्याह **वक्ष्यतीति** । सैव परदेवता सत्यादय इति । सत्याद्यहङ्कारान्तानां परदेवतात्वं कथ्यत इति । यदि सत्यादीनां परमात्मनश्च भेदः स्यात्तदा स एवाधस्तादित्यादिना सर्वगतोक्तिर्न स्यादित्याह **कथमिति** । एतेन श्रुतिविरोधश्चोक्तो भवति स्मृत्यात्माहङ्कारयोर्भेदः सिद्ध्यतीति शङ्कते महति सिद्ध्यतु नाम तथापि नाहङ्कर्तुरात्मत्वं विहन्यत इत्याह **तथापीति** । स्मृतिसिद्धस्याहङ्कारस्याहमुल्लेखविषयत्वे दोषमाह **तथा सतीति** । ब्रह्माहङ्कारयोरैक्यमनभिमत-मापतेदभिमतं च जीवब्रह्मैक्यं न सिद्ध्येदित्याशयः । योऽहङ्काराध्यासमुपगतः स आत्मज्ञाने सति ब्रह्मेत्यर्थः । यथा स्थाणुत्वेन प्रतीतः स विवेके सति पुरुष इति वस्तुतः स्थाणोः पुरुषत्वायोगादिति शङ्कते **यत्रापीति** । यत्राहङ्काराध्यासो नास्ति । तत्र श्रुतिस्मृतिसिद्धोऽहङ्कारो न स्यादित्याह **नेति** । शाब्दव्यवहारादप्यहङ्कारद्वैविध्याव-गमात् नात्मनः अहङ्कर्तृत्वमित्याह **स्पष्ट एवेति** । प्रकृतमुपसंहरति **तदेवमिति** ।

**२३६ सु०— नन्वग्रत इति कथम् । नेहनानेतिवाक्येनात्मातिरिक्तं सकलमपि मिथ्ये-त्येकैव बुद्धिरुत्पद्यते । न च बुद्धेर्विरम्यव्यापारोऽस्ति । यावत्स्वविषयगोचराया एव तस्याः समुत्पादात्तदतिरिक्तव्यापाराभावादिति । सत्यम् । वाक्येन सकृदेव जातायाः सकलमिथ्यात्वविषयायाः बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय एव तद्विषयं बुद्ध्या विभज्य क्रमेणावगाहन्त इत्यदोषः । समानमेतत् 'यावज्जीवमहं मौनी'त्यादिवाक्यप्रामाण्य-चिन्तायामिति ।**

**बिन्दुः— यावज्जीवमिति** । यदीदं वाक्यं प्रमाणं स्यात्तर्हि एतत्स्वरूपलाभः न स्यादित्या-पादनसौलभ्यादिति भावः ।

**परि०— अग्रत इति** । कथमित्याक्षेपं व्यनक्ति **नेहनानेत्यादिना सत्यमित्यन्तेन** । नन्वग्रत इत्युक्तिः परीक्षकबुद्धिक्रमापेक्षया चेत्तर्हि वाक्यं युगपदेव स्वस्य स्वव्यतिरिक्तसर्वस्य मिथ्यात्वं प्रतिपादयतीत्यभ्युपगतम् । तथाच कुतो वाक्यस्योपपत्तिविरोधः । येन प्रतीतार्थे प्रमाणं न स्यादित्यत आह **समानमेतदिति** । यथा यावज्जीवमहं मौनीतिवाक्यं स्वक्रियाविरुद्धत्वादप्रमाणम् । एवं नेहनानेत्याद्यपि वाक्यमहमन्यच्चासदितिवत्स्वक्रियाविरुद्धत्वात् अमानमेव । स्वस्यासत्त्वे स्वयमन्यच्चासदिति बोध-जनकत्वायोगात् । बोधजनकत्वेऽसत्त्वायोगात् । नाहं कदापि क्वापि अस्मीति व्याहतत्वादप्रमाणमेव भवति । अन्यथा यावज्जीववाक्यमपि मानं स्यादिति भावः । इतिशब्दो वाक्यव्याख्यासमाप्तौ ।

**यादु०—** क्वाप्यनुपलब्धं कथमत्र कल्पनीयमित्याशङ्कायामाह **समानमेतदिति** । अयमर्थः । यद्येत-द्वचनबलेन स्वकर्तृकसर्ववचनाभावः स्यात् । तर्ह्येतद्वचनस्य प्रथमं तावन्मिथ्यात्वं भवेत् । अन्यथा स्वस्मिन्नेव अस्य प्रामाण्यं प्रतिहतमिति न वचनान्तराभावं प्रतिपादयेत् । यदि चेदं वाक्यं मिथ्या स्यात्तथाऽपि नानेन स्वकर्तृकसर्ववचनाभावसिद्धिः । मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनादित्युपपत्तिविरोधेऽभिहिते एतद्वाक्येन सकलवचनाभावविषयाया बुद्धेरेकस्या एवोत्पत्तेस्तावदेव तद्वाक्यस्य प्रथमं मिथ्यात्वं भवेदिति कथमुक्तमित्याशङ्कायां वाक्येन सकृदेव जाताया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय एव तद्विषयं बुद्ध्या विभज्य क्रमेणावगाहन्त इत्येव वक्तव्यमिति नादृष्टकल्पनेति ।

**कं०रा०—** ननु 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेदि'त्यत्र नेह नानेत्यादिवाक्येन आत्मातिरिक्तसर्वमिथ्यात्वं यदि बोध्येत तर्हि सर्वान्तःपातिनो वाक्यस्यापि तन्मिथ्यात्वं भवेदिति वक्तुमुचितम् । न तु वाक्यस्याग्रतो मिथ्यात्वमिति । तथा हि । किं नेह नानेत्यादिवाक्येन प्रथममेतद्वाक्यमिथ्यात्वधीर्जायते, पश्चात्तदतिरिक्तस्य मिथ्यात्वधीरिति बुद्धिव्यक्तिभेदमाश्रित्याग्रत इत्युच्यते । उतैकस्या एव बुद्धेर्वाक्यमिथ्यात्व-





विषयीकरणं प्रथमतस्तदतिरिक्तमिथ्यात्वविषयीकरणं तु पश्चादिति व्यापारक्रममाश्रित्य । नाद्यः । तेन वाक्येन आत्मातिरिक्तसकलमिथ्यात्वविषयाया एकस्या एव बुद्धेरुत्पाद्यमानत्वात् । न द्वितीयः । युगपद्यावत्स्वविषय-गोचरतया बुद्ध्युत्पादनस्यानुभवसिद्धत्वेन बुद्धेर्विरम्यव्यापारायोगात् । न च वाच्यं व्यापारान्तरक्रममाश्रित्याग्रत इत्युक्तिरिति ।

**श्रीनिधि०**— ननु नेहनानेति वाक्यं ब्रह्मातिरिक्तस्य स्वसहितस्य सर्वस्य मिथ्यात्वं प्रतिपादयतु प्रामाण्यं चास्तु को दोष इत्यत आह **समानमेतदिति** । यद्वा वेणुसङ्घर्षजाग्निर्यथा सर्वं शमयित्वा अनन्तरं स्वयं शान्तो भवति तद्वन्नेह नानेति श्रुतिः सर्वमिथ्यात्वं बोधयित्वा नन्तरं स्वस्यापि तद्बोधयति । एवं च न साधकाभावदोषो नापि स्वस्मिन्प्रामाण्यप्रतिहतिदोषश्चेत्यत आह **समानमिति** । यद्वा श्रुतिः स्वातिरिक्तस्यैव मिथ्यात्वं बोधयतु अथापि सर्वमिथ्यात्वं सिद्धतीत्यत आह **समानमिति** ।

**वा०चं०**— ननु नेहनानेतिवाक्यस्य दुःखादिसमस्तविश्वमिथ्यात्वसाधकत्वाभावस्यैतद्वाक्यमिथ्यात्व-सिद्ध्यधीनतया तत्सिद्धेश्च प्रमाणान्तराभावेनैतद्वाक्येनैव वक्तव्यतयैतेन चैतद्वाक्यस्य मिथ्यात्वसिद्धिदशाया-मर्धजरतीयायोगेन समस्तस्यापि मिथ्यात्वसिद्धेस्तत्साधकत्वाभावापादनासंभवात् । अनेनैतद्वाक्यमिथ्यात्वासिद्धौ च तदधीनसिद्धिकसमस्तमिथ्यात्वासाधकत्वस्य सुतरामसंभवान्नोपपत्तिविरोधकथनं युक्तम् । न च अत एवैत-द्वाक्यमिथ्यात्वमेतद्वाक्येन प्रथमं बोद्ध्यते समस्तमिथ्यात्वं तु पश्चादिति ज्ञापयितुमग्रत इति भाष्यकारेणोक्तमिति वाच्यम् । तस्यैवानुपपत्तेरिति शङ्कते **नन्विति** । वाक्यजन्यसकलविषयकबुद्धिविषयं विविच्य क्रमेणावगाहमानाः प्रामाण्यावधारणाय प्रवृत्ताः परीक्षकबुद्धीरननुसृत्योपपत्तिविरोधखण्डने 'यावज्जीवमहं मौनी'त्येतद्वाक्यस्य समस्तवाक्याभावसाधकत्वाभावसिद्धेरेतद्वाक्याभावसिद्धिनिबन्धनतयैतद्वाक्याच्चैतदभावसिद्धिदशायां समस्ताभाव-स्यापि सिद्धेरेतद्वाक्याभावसिद्धेः प्राथमिकत्वाभावान्न तत्रापि तत्सिद्धिनिबन्धनसमस्ताभावसाधकत्वाभाव-सिद्धिरिति स्वक्रियाविरोधवार्तैवोच्छिद्येतेत्यस्मदुक्तप्रकारस्यैवानुसर्तव्यत्वे युक्तमुपपत्तिविरोधोद्भावनमित्याशयेनाह **समानमेतदिति** ।

**वा०र०**— **नेहनानेति वाक्यस्येत्यादि** । वाक्यस्य यत् दुःखादिसमस्तविश्वमिथ्यात्वसाधकत्वं तदभावस्येति व्यधिकरणे षष्ठ्यौ । **प्रमाणान्तराभावेनेति** । प्रमाणान्तरेण तदनापादनात्सर्वमिथ्यात्वापरैतद्बलेनैव तस्यापि मिथ्यात्वस्य प्रागापादनाच्चेति भावः । **अर्धजरतीयेति** । अनेन वाक्येन स्वस्य मिथ्यात्वप्रतिपादनमात्रं कृतम् । प्रपञ्चमिथ्यात्वं तु न प्रतिपादितमिति चेत्स्यात्तर्हि स्वमिथ्यात्वप्रयुक्तासाधकत्वेन प्रपञ्चमिथ्यात्वसाधकं न स्यादिति वक्तव्यम् । न चैतदस्ति । स्वस्य प्रपञ्चस्य च मिथ्यात्वेन प्रतिपादनीयतया प्रसक्त्यविशेषे सकृदेव सर्वमिथ्यात्वप्रतिपादनं परित्यज्य प्रथमतः स्वस्यैव तत्प्रतिपादनमित्यस्यार्धजरत्यानयनाय दूतप्रेषणप्रवाद-तुल्यतयाऽयोगादित्यर्थः । तथा च सर्वमिथ्यात्वस्य प्रमिततया तत्र विरोधस्याकिञ्चित्करत्वमिति भावः । भाष्य-गताग्रत इत्यनेनोक्तशङ्कापरिहारमाशङ्कते **न च अत एवेति** । अनेन विरम्यव्यापारो व्याख्यातः । प्रथमं पश्चादिति पदाभ्यां सूचनात् । **तस्यैवानुपपत्तेरिति** । अर्धजरतीयायोगवदस्य विरम्यव्यापारस्यापि चेतनधर्मस्यानुप-

पत्तेरित्यर्थः । तथा चैतद्भाष्यमुक्तशङ्कानिरासाक्षममिति भावः । पुरुषस्येच्छाक्रमेण कार्यक्रमसंबन्धेऽपि बुद्धेरचेतनत्वेनेच्छाभावात्तत्क्रिमेण कार्यक्रमानुपपत्तेरित्यादिना स्वप्नाधिकरणीयमयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरमित्यनुभाष्यमूलटीकायां विरम्यव्यापारो व्याख्यास्यत इति ज्ञेयम् । बाध्यबाधकबुध्योर्बाधकबुद्धेश्च स्वविषयैरभेदबोधनद्वारा सर्वाद्वैतबोधने श्रुत्या युगपदङ्गीक्रियमाणांशतः प्रत्यक्षविरोधापत्त्या क्रमस्य चासंभव इत्याशयेन बुद्धेर्विरम्यव्यापाराभावात्कथमित्थमिति चेदिति खण्डनशङ्कामुत्थाप्य श्रुतितो द्रागेव जाताया सर्वविषयाया अद्वैतधियोऽस्मद्बुद्धय एवंविधविचारसोपानपरंपरामारोहन्त्या नानाविषयेषु तत्प्रामाण्यविषयाः ब तेन परितिष्ठन्तीत्युच्यमानत्वादिति समाहितम् । तद्विद्यासागर्यां तु जन्मैव बुद्धेर्व्यापारस्तदतिरिक्तो नास्तीत्युक्तं यत्तदेव मूले उक्तमिति ज्ञेयम् । मूले **तदतिरिक्तेति** । स्वविषयविषयीकारितया जन्मातिरिक्तव्यापाराभावादित्यर्थः । **बुद्धीरननुसृत्येति** । अनेन पूर्ववाक्यार्थानुवादः सिद्धः । प्रामाण्यावधारणाय प्रवृत्तपरीक्षकबुद्धिविवक्षया विरम्य-व्यापारोस्त्येव । परीक्षकैः स्वबुध्या विषयत्वाभिमतेषु विभागकरणादिति । उक्तरीत्या समाधानं दृष्टचरमिति नादृष्टकल्पनेति मनसि कृत्वा तत्समाधानानङ्गीकारे बाधककथनपरतया योजनामाह **अनुसृत्योपपत्तिविरोधखण्डन इति** । स्वमिथ्यात्वस्योपस्थितौ सर्वमिथ्यात्वस्यापि तदैवोपस्थित्या प्रमिते उपपत्तिविरोधोऽकिञ्चित्करः स्वमिथ्यात्वाबोधने च प्रथमतस्तत्स्फूर्तेरेवाभावेन तत्प्रयुक्तासाधकत्वापादनायोग इत्युभयथोपपत्तिर्न प्रसरतीति तद्विरोधो नेति खण्डन इत्यर्थः । **समस्तवाक्याभावेति** । अनेनेदं तावत्स्वक्रियाविरुद्धम् । ततश्च स्वाभाव-प्रतिपादकतया स्वस्याभावे च न वाक्यान्तराभावसिद्धिरनेनेति वक्तव्यम् । एवं चास्य समस्तवाक्याभाव-साधकत्वाभावसिद्धिरेतद्वाक्याभावसिद्धिनिबन्धनेत्यर्थः । **एतद्वाक्यादिति** । अर्धजरतीयायोगेन विरम्यव्यापारस्य च चेतनधर्मस्य बुद्धिपूर्वकप्रवृत्तिशून्यायां बुद्धावयोगेन च स्वाभावसिद्धिदशायामेव समस्तवाक्याभावसिद्धेः प्रथमतः एतद्वाक्याभावबुद्धिः पश्चाद्वाक्यान्तराभावबुद्धिरिति क्रमाभावादित्यर्थः । **तत्सिद्धीति** । एतद्वाक्याभावसिद्धीत्यर्थः । इत्यादीत्यादिपदेन यावज्जीवमित्येतत्समानजातीयमूकोऽहमित्यादिवाक्यान्तरग्रहणं व्याख्येयमित्याशयेनोक्तं **स्वक्रियाविरोधवार्तैवेति** । यावज्जीवमित्यत्र स्वक्रियाविरोधस्तावन्नास्ति तथैवान्यत्रापीति तद्वार्तोच्छेद इत्यर्थः । तर्कस्य विपर्ययपर्यवसानं प्रदर्शयन् प्रकृतोपपत्तिविरोधोद्भावनं साङ्गत्यपर्यवसानं च दर्शयति **इत्यस्मदुक्तेति** । स्वक्रियाविरोधवातोच्छेदस्त्वनिष्ट इति तत्परिहाराय तद्विरोधोदाहरणत्वोपपत्तये परीक्षकबुद्धिभिरेव प्रथम-मतस्तद्वाक्याभावविषयीकरणं ततः समस्तवाक्याभावविषयीकरणमित्यस्तीति तं क्रममनुसृत्य यावज्जीवमिति वाक्येन प्रथमतः स्वाभावस्य विषयीकृतत्वात्तेन पश्चात्सर्ववाक्याभावः प्रतिपादयितुं न शक्य इत्येवं-प्रकारस्यानुसर्तव्यत्व इत्यर्थः । अनुसर्तव्यत्व इत्यनन्तरं प्रकृतेऽपि क्रमोपपत्तेरिति पूरणीयम् । यद्वाऽस्मदुक्त-प्रकारस्येत्यनेनात्रोपपत्तिविरोधखण्डने स्वक्रियाविरोधवार्तोच्छेद आयातीत्यत उपपत्तिविरोधोपपादनाय प्रागुक्ता-स्मदीयप्रकारस्यैवानुसर्तव्यत्वे उपपत्तिविरोधप्रसरात्तदुद्भावनं युक्तमिति योज्यम् ।

**स०व्र०— तदतिरिक्तव्यापाराभावादिति** । तथा च प्रथमत एवैतद्वाक्यमिथ्यात्वस्फूर्तेरभावेन सकलमिथ्यात्वबोधानन्तरं च प्रमिते विरोधस्याकिञ्चित्करत्वान्नोपपत्तिविरोधेन तद्वाक्याप्रामाण्यमिति भावः । सकलमिथ्यात्वविषयाया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धीनामेव सकलमिथ्यात्वविषयकबुद्धिविषयं





विभज्यावगाहकत्वादेतद्वाक्यमिथ्यात्वस्य प्रथमं स्फूर्तिसंभवादुपपत्तिविरोधप्रसक्तिः संभवतीत्यत आह **सत्यमिति** । अथैतदनङ्गीकृत्य सकलमिथ्यात्वबोधस्यैव जननान्नोपपत्तिविरोध इति ब्रूयात्तदा विरुद्धत्वेनाप्रामाण्येन च संप्रतिपन्ने यावज्जीवमहं मौनीत्यादावपि यावज्जीवं सकलवचनाभावविषयकबुद्धेरेकस्या एवोत्पादात् प्रमिते च विरोधस्य अकिञ्चित्करत्वादप्रामाण्यं न स्यादित्याह **समानमेतदिति** । अथ तत्र सकलवचनाभावविषयकबुद्धि-प्रामाण्यावधारकपरीक्षकबुद्धीनामेव पूर्वं तद्बुद्धिविषयस्य विभागेनावगाहकत्वादेतद्वाक्याभावस्य प्रथमोपस्थितेस्तत्र विरोधस्फूर्तिर्भविष्यतीत्यत्राप्रामाण्यमेवेति मतं तर्हि प्रकृतेऽपि तथा स्यादिति भावः।

**विठ्ठ०**— बुद्धेर्विरम्यव्यापाराभावे हेतुमाह **यावदिति** । एकेन वाक्येन या बुद्धिरुत्पद्यते तस्याः स्वविषयभूतयावद्वाक्यार्थविषयकायाः युगपदेवोत्पत्तेः व्यापारान्तरस्याप्यदर्शनात् न विरम्यव्यापारो युज्यत इति भावः । वाक्येन युगपदेव जातायाः बुद्धेः विरम्यव्यापाराभावेऽपि तत्प्रामाण्यनिर्धारणाय प्रवृत्तानां परीक्षकबुद्धीनां वाक्यजनितबुद्धिजनितविषयमर्थं दृष्टान्तेनाह **समानमेतदिति** । अयमर्थः । यदि यावज्जीवमहं मौनीत्येतद्वचनबलेन स्वकर्तृकवचनमात्राभावः स्यात् तर्हि एतद्वचनस्याग्रतो भावो भवेत् अन्यथा स्वस्मिन्नेव स्वप्रामाण्यभङ्गेन स्वकर्तृकवचनान्तराभावसाधकत्वानुपपत्तेः तथाच स्वस्यैवाभावे सिद्धे कथमनेनोक्तार्थसिद्धिः अविद्यमानस्य वन्ध्यासुतवचनस्य साधकत्वादर्शनात् इति उपपत्तिविरोधः परीक्षकैर्वक्तव्य एव तत्रैतद्वाक्यबलेन सकल-वचनाभावविषयकबुद्धेरेकस्या एवोत्पत्तेरेतद्वाक्यस्यैवाग्रतो भाव इति कथमुच्यते बुद्धेर्विरम्यव्यापाराभावादिति केनचित् शङ्क्यते । तत्प्रमाणावधारणाय प्रवृत्तपरीक्षकबुद्धय एव तद्विषयं बुध्या विभज्य क्रमेणावगाहन्त इत्या-शयेन तद्वाक्यस्याग्रतो भवेदित्युक्तमित्येवमेव परिहारो वक्तव्य इति । **समानमिति** । यद्वा नेहनानेति श्रुत्या ब्रह्मातिरिक्तेऽपि स्वातिरिक्तस्यैव मिथ्यात्वं प्रतिपाद्यते न तु स्वस्यापि तथाच नाप्रामाण्यमित्यत आह **समान-मेतदिति** । यावज्जीवमिति वाक्येऽपि स्वातिरिक्तवचनकर्तृकत्वाभावः प्रतिपाद्यते इति वक्तुं शक्यत्वादिति ।

**चषकः**— **विरम्य व्यापारः** । कतिपयार्थविषयीकरणोत्तरार्थान्तरविषयीकरणाख्यः । **समुत्पादादिति** । ज्ञानं गुणः शब्दो गुण इत्यादिवाक्यजन्यशाब्दधीवदिति भावः । **तदतिरिक्तेति** । विषयीकरणातिरिक्तेत्यर्थः । **बुद्धेः प्रामाण्यावधारणायेति** । बुद्धिनिष्ठविशेष्यतानिरूपितमिथ्यात्ववद्विशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वरूप-मिथ्यात्वघटितप्रामाण्यनिष्ठप्रकारताकेत्यर्थः । **तद्विषयमिति** । मिथ्यात्वबुद्धिं तदिति परामृशति । तस्याः विषयं विषयान् । मिथ्यात्वधर्मिभूताः व्यक्तीस्तत्तद्व्यक्तित्वादिना तद्व्यक्तिविशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारक-त्वैतद्व्यक्तिविशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वादिरूपतद्व्यक्तिघटितप्रामाण्यघटकतया क्रमेणावगाहन्त इति भावः । उक्तसकलमिथ्यात्वबुद्धौ तत्तद्व्यक्तिघटितप्रामाण्यावगाहिनीनां नानात्वं परीक्षकबुद्धय इति बहुवचन-निर्देशेन ध्वन्यते । तेन विरम्य व्यापारायोगादिति दोषानवकाशः । इयांस्तु विशेषः यद्व्यक्तिविशेष्यक-त्वादिघटितप्रामाण्यज्ञानजनिकादृष्टादिघटितसामग्री प्राथमिकी तद्व्यक्तिघटितप्रामाण्यज्ञानस्य प्राथम्यं यस्य त्वानन्तरिकी तस्य आनन्तर्यमिति । उक्तमर्थं निदर्शनेन द्रढयति **समानमेतदिति** । अयमभिसन्धिः । निखिल-वचनान्तर्गते स्वस्मिन् यदि न मिथ्यात्वं प्रतिपादयेत् तदा वचनान्तराणां मिथ्याभावं कथं तत्र तत्प्रतिपादकतायां





च वन्ध्यासुतवचःकल्पतया तस्य निखिलवचनान्तरधर्मिकमिथ्यात्वप्रकारकप्रतीतिजनकता कथं सङ्गच्छेतेत्युपपत्तिविरोधोद्भावने प्रकृतवाक्यजनितान्वयबुद्धेर्निखिलवचनाभावविषयिण्या एकस्या एव समुत्पादेन प्रकृतवाक्यस्य मिथ्यात्वप्रतिपत्तेः । निर्वाहाय तादृशवाक्यजनितजीवनाधिकरणकालत्वव्यापकतत्कर्तृकवचनावच्छिन्नाभावबुद्धेः प्रामाण्यमवगाहमानाः परीक्षकबुद्धय एव दर्शितदिशा तत्तद्वचनव्यक्तीरुक्तविधप्रामाण्यघटकतया तत्तद्व्यक्तित्वेन क्रमेणावगाहन्त इति समाधातव्यमिति नादृष्टपरिकल्पनावकाश इति ।

**प्रदीपः**— यावन्तः स्वस्या बुद्धेः तावन्तो गोचरा यस्या बुद्धेः सा तथोक्ता मिथ्याभूतस्यार्थस्य साधकत्वे स्वक्रियाविरोधश्चेत्याह **समानमिति** ।

मिथ्याभूतश्रुतिवचसां साधकत्वाभावः—

**२३७ सु०— ननु श्रुत्यादेर्मिथ्यात्वेऽपि साधकत्वं संभवति । मया मिथ्याभूतस्यैव साधकत्वाभ्युपगमादित्यत आह मिथ्याया इति ।**

## अनु०— मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ॥

**याः श्रुत्यादिवाचो मिथ्या तासामिति योजना । विभक्तिप्रतिरूपकं वा मिथ्याया इत्यव्ययम् ।**

**बिन्दुः**— **विभक्तिप्रतिरूपकमिति** । यद्यपि स्वरादिगणे मिथ्याया इति न पठ्यते तथापि तत्र गणसमाप्तिद्योतकवृत्करणाभावादपर्यवसित एवायमाकृतिगणः पठितः । तेन च अतिरिक्तान्यप्यव्ययानि शिष्टप्रयोगानुरोधादत्र बोद्धव्यानीति गणवृत्तौ स्थितम् । अत एव च धातुपाठे भ्वादिगणसमाप्तौ श्रूयमाणं वृत्करणं न महागणसमाप्त्यर्थं किन्तु तदन्तर्गतयजादिगणस्यैव समाप्त्यर्थं भ्वादिस्त्वपरिसमाप्त एव तेन चुलुंप प्रेंखोलयति आन्दोलयतीत्यादीनां संग्रह इति वैयाकरणसिद्धान्त इति भावः ।

**परि०**— मिथ्यापदस्याकारान्ताव्ययत्वान्मिथ्याया इत्यस्यासाधुत्वमाशङ्क्य द्वेधा गतिमाह **या इत्यादिना** । **विभक्तीति** । यत्किञ्चित्स्त्रीव्यक्त्यादौ सङ्केतितषष्ठ्यन्तमिथ्याशब्दस्य संभवेन तत्प्रतिरूपकमित्युक्तम् । चिरायेत्यादिवदिति भावः ।

**यादु०**— **विभक्तिप्रतिरूपकमिति** । न च मिथ्याया इति विभक्तिरेव नास्तीति वाच्यम् । दुःशीलायाः पूर्वं मृषेति नामवन्मिथ्येति यदि कस्याश्चिन्नाम तदैतादृशविभक्तिसंभवात् । यद्वा चिरायेत्यव्ययस्य विभक्त्यन्त-





सादृश्योपपत्त्यर्थं परैरचिरायेति विभक्त्यन्तसादृश्यस्य कथितत्वात्प्रकृतेऽपि मिथ्याया इति विभक्त्यन्तसादृश्यं द्रष्टव्यम्।

**कं०रा०**— बुद्धेः स्वविषयगोचरीकरणातिरिक्तव्यापाराभावादित्याशयेन शङ्कते **नन्विति** । **मिथ्याभूतस्येति** । मिथ्याभूतस्य साधकत्वमिति विशिष्टोऽर्थः केन सिद्धः । न केनापि । पूर्वोक्तयोः प्रमाणयोर्विशकलिततया साधकत्वमिथ्यात्वग्राहकत्वादिति मा वोच इत्यर्थः।

**श्रीनिधि०**— एवं तर्हि व्याहतिमात्रोच्छेदप्रसङ्ग इति भावः । **विभक्तिप्रतिरूपकं वेति** । मिथ्या अतिक्रान्ताया अतिमिथ्याया इति प्रयोगे मिथ्याशब्दस्य विभक्त्यन्तत्वं द्रष्टव्यम्।

**वा०चं०**— तर्कस्य विरुद्धतां शङ्कते **नन्विति** । मिथ्यात्वेऽपीत्यपिशब्दो न सत्यत्वसमुच्चयार्थोऽपि तु मिथ्यात्वेऽङ्गीकृतेऽपि न साधकत्वानुपपत्तिः प्रत्युत तत्रैव तत्संभव इत्यर्थः । अत एव तथैव हेतुमाह **मयेति** । मिथ्याशब्दस्याव्ययत्वात् या इति विभज्य योग्यविशेष्याध्याहारेण योजनां दर्शयति **या इति** । अत्र तद्वाक्यस्येति प्रकृतान्वयसंभवे बहुवचनान्तस्त्रीलिङ्गविशेष्याध्याहारेऽस्वारस्यमभिप्रेत्य पक्षान्तरमाह **विभक्तीति** । विभक्त्यन्ततुल्यमित्यर्थः । मिथ्याशब्दस्य मृषेत्यादिवत्कस्याश्चिन्नामतया मिथ्याया इत्यस्य विभक्त्यन्ततया तत्प्रतिरूपकत्वाद्वा अतिचिरायेत्यादिविभक्त्यन्तप्रतिरूपकस्य चिरायेत्यादेरिवातिमिथ्याया इत्येतत्प्रतिरूपकत्वाद्वा इदमुक्तमिति द्रष्टव्यम् । ननु मया मिथ्याभूतस्यैव साधकत्वाभ्युपगमेन तर्कस्य विरुद्धत्वेनोपपत्तिविरोधाभावाद्वाक्येन मिथ्यात्वप्रतिपादनं युक्तमिति शङ्किते मिथ्यायाः साधकत्वं चेत्याद्यसङ्गतम् । न च प्रतिवादिनं प्रति तर्कस्य विरुद्धता नेत प्रदर्शयितुं तदिति वाच्यम् । वादिनं प्रति विरुद्धतयोपपत्तिविरोधाभावेन वाक्यस्य तं प्रति मिथ्यात्वबोधकत्वोपपत्तेः । मिथ्याभूतसाधकत्वस्य वादिनाऽभ्युपगतत्वादेव प्रतिवादिनं प्रति विरुद्धत्वाच्च बीजाभावेन प्रतिवादिनं प्रति तर्कस्याप्रसराच्चायुक्तश्चायं तर्कः । आत्मातिरिक्तस्य समस्तस्य मिथ्यात्वं श्रुत्यादिबलेन यदि तर्ह्येतच्छ्रुत्यादेर्मिथ्यात्वं स्यादित्यत्र दृष्टान्तानुक्तेर्व्याप्त्यभावात् । यदि चेदं वाक्यं मिथ्या स्यात्तर्हि दुःखादेर्मिथ्यात्वं न प्रतिपादयेदित्यत्र विशेषनिषेधेऽपि सामान्यतोऽर्थप्रतिपादकत्वस्याक्षतेश्चेत्यतो वादिनं प्रति तर्कस्य विरुद्धत्वाभावेऽपि तदीयमिथ्याभूतसाधकत्वाभ्युपगमस्य मिथ्यात्वनिश्चयाधीनतया तन्निश्चयस्य च वक्ष्यमाणरीत्याऽन्योन्याश्रयेण एतद्वाक्यसाध्यत्वासंभवात्प्रमाणान्तरेण मिथ्यात्वं निश्चित्य मिथ्याभूतस्य साधकत्वमभ्युपगच्छन्तं प्रति तर्कस्य विरुद्धतयोपपत्तिविरोधाभावेऽपि ज्ञातज्ञापकतया तं प्रति मिथ्यात्वबोधकत्वेन न परार्थवाक्यस्य प्रामाण्यम् । तद्बोध्यं निश्चितद्वैतं प्रति च पराभ्युपगममात्रस्याप्रयोजकत्वात्तर्कस्याविरुद्धत्वेनोपपत्तिविरोधान्न मिथ्यात्वबोधकत्वम् ।

**वा०र०**— तर्कस्य विरुद्धतामित्युत्तरमूलानुसारेण ननु तथापि मिथ्याभूतोऽपि स्वाप्नोऽर्थ इति वक्ष्यमाणव्यभिचाराशङ्कनपरमूलानुसारेण च शङ्काभावमाह **तर्कस्य विरुद्धतामिति** । आपादकस्यापाद्याभावव्याप्तत्वरूपं विरुद्धत्वमत्र विवक्षितमिति ज्ञेयम् । यद्यस्य विरुद्धतापरत्वं तर्हि न केवलं सत्यत्वे संभवति । किन्तु





मिथ्यात्वेऽपीत्येवं सत्यत्वसमुच्चयार्थापिशब्दायोगः। तेनापादकस्यापाद्य तदभावसंबन्धप्रतिपादनलाभेन व्यभिचार-पर्यवसानप्रतीतेरित्यतोऽपिशब्दस्यार्थान्तरं वक्तुं समुच्चयार्थत्वं तावन्निषेधति **मिथ्यात्वेऽपीत्यपिशब्द इति**। मिथ्यात्वेऽङ्गीकृतेऽपीत्यपिशब्दो योज्य इत्युक्त्या मिथ्यात्वसाधकत्वविघटकं न भवतीति मूलाभिप्रायः सूचितो भवति। अत एवाह **प्रत्युत तत्रैवेति**। **इत्यर्थः** इत्यर्थकः। **तथैवेति**। प्रत्युतेत्युक्तार्थ एवेत्यर्थः। **अव्ययत्वादिति**। अव्ययात्परस्य सुपो लोपविधानात्तल्लोपे षष्ठीश्रवणायोग इत्याशयः। **योग्येति**। विवक्षितार्थप्रतिपत्तय इति शेषः। या इति विभज्य योजनायां तद्वाक्यस्येति प्रकृतनपुंसकैकवचनान्तेन संबन्धासंभवाद्विवक्षितार्थाप्राप्तिरिति ज्ञेयम्। **प्रकृतान्वयेति**। यद्यपि या इति विभागे तद्वाक्यस्येत्यस्य नान्वयसंभवस्तथापि पूर्वत्र साधकत्वं चेत्यत्र श्रुतिवाचामन्वयः स्वीकृतः सोऽत्र नास्ति किन्तु प्रकृतस्येति भावेनेदम्। **पक्षान्तरमिति**। तद्वाक्यस्येति प्रकृतस्यैव मिथ्याया इत्येतद्विशेषणमिति यथा स्यात्तथा पक्षान्तरमित्यर्थः। मूले **विभक्तिप्रतिरूपकमिति**। विभक्ति-प्रतिरूपकाणां निपातत्वस्योपसर्गविभक्तिस्वरप्रतिरूपकाश्चेत्यनेनोक्तत्वात्स्वरादिनिपातमव्ययमित्यनेनाव्ययत्वमिति भावं सिद्धवत्कृत्य व्याचष्टे **विभक्त्यन्तेति**। मिथ्याशब्दस्याव्ययतया ततो विभक्तेर्दुलभत्वात्कथं तदन्त-सदृशत्वमित्यत आह **मिथ्याशब्दस्येति**। मृषेत्यादिवत् मृषानाग्नीत्याद्युक्तेरिति भावः। **नामतयेति**। ततश्च नाव्ययत्वमिति तत्प्रयुक्तसुब्लोपो न प्रसज्यत इति भावः। विभक्त्यन्ततया स्त्रीवाचिपदे विभक्त्यन्ततयेत्यर्थः। प्रकारान्तरेणापि विभक्त्यन्ततुल्यत्वं वैयाकरणरीत्याह **अतिचिरायेत्यादीति**। अतिचिरायेति समासपदेऽव्ययत्वा-भावेन समासत्वप्रयुक्तप्रातिपदिकसंज्ञायां सुपो लाभस्य सत्त्वादिति भावः। मूले निश्चिताद्वैतो बोध्यते इत्याद्य-धिकप्रतिपादनानर्थक्यमित्यतो यथाश्रुतभाष्योपरि प्राप्तानुपपत्तिपरिहारायाधिकाभिधानमित्याशयं स्पष्टयितुं भाष्योपरि प्राप्तानुपपत्तीर्दर्शयंस्तद्व्यावर्तकतयाऽभिसन्धिमूलं योजयति **ननु मयेत्यादिना**। ननु श्रुत्यादेरित्याद्येतद्भाष्याव-तारानुवादो मयेत्यादिशङ्कित इत्यन्तम्। मयाऽभ्युपगमेनेति संबन्धः स्पष्टः। तेन मया शङ्कितभाष्य-मसङ्गतमित्येतस्यासङ्गतत्वमिति भ्रान्तेरनवकाशः। **वाक्येन** नेहनानेति वाक्येन। **न च प्रतिवादिनं प्रतीति**। मिथ्यात्वे साधकत्वं न स्यादिति तर्कप्रयोक्तृरीत्येत्यर्थः। वादिना स्वरीत्या तर्कविरुद्धत्वे चोदिते प्रतिवादिना मद्रीत्या विरुद्धत्वं नायातीति प्रतिपादनस्योत्तरतया प्रवृत्तेर्भाष्यं नासङ्गतमिति भावः। विरुद्धता च प्रागेव व्याख्याता। वादिनं प्रतीत्यादौ तत्तद्रीत्येत्यर्थः। **बोधकत्वोपपत्तेरिति**। तथा च भाष्ये वादिरीत्या विरुद्धता नास्तीत्य-प्रतिपादनान्न्यूनता स्यादेवेति भावः। निश्चिताद्वैत इत्याद्यकल्पोत्थानव्यावर्त्यशङ्केयम्। प्रतिवादिरीत्यापि विरुद्धत्वं स्यादेवेत्याह **मिथ्याभूतेति**। मिथ्याभूतनिरूपितसाधकत्वस्येत्यर्थः। परेणाङ्गीकृतत्वादेव भवताऽप्यङ्गीकार्यमेव। एकाङ्गीकारे सत्यपरेणानङ्गीकारे निमित्ताभावादिति भावः। पराभ्युपगममात्रेणेत्यतद्व्यावर्त्यशङ्केयं **बीजाभावेनेति**। नेहनानेत्यादिश्रुत्या सर्वमिथ्यात्वं सिध्यतीत्युक्ते सति श्रुतेरपि मिथ्यात्वादित्यादितर्कप्रवृत्तौ बीजाभावेनेत्यर्थः। सत्यस्यैव साधकत्वमित्यादिव्यावर्त्यशङ्केयम्। दृष्टान्ताभिधानव्यावर्त्यशङ्कामाह **अयुक्तश्चायमिति**। अत्रेत्यत्र दृष्टान्तानुक्तेर्व्याप्त्यभावादिति पाठः। इत्यत्र व्याप्त्यभावादिति पूर्वलिखितपाठोपरि दृष्टान्तानुक्तेरित्यस्य मूलकोशे लिखिततयाऽत्रापि तथैव लिखनात्। तथा च दृष्टान्तमवगत्य विशेषव्याप्तिर्वा सामान्यव्याप्तिर्वावगन्तव्या। न चात्र तदुक्तिरस्तीति व्याप्तिविशेषो न ज्ञातुं शक्यत इति तदभाव एवेत्यर्थः। वक्ष्यति च सामान्यव्याप्तिसूचनम्।

यथेति तत्रैव दृष्टान्तोक्तिरिति । यद्यप्यत्रोपपत्तिविरोधपरिहाराय प्रवृत्तेन द्वितीयतर्क एव विरुद्धतया दूषित इति तत्स्वरूपादिनिरूपणमेव कार्यम् । तथापि पूर्वतर्कसापेक्षैतत्तर्कप्रवृत्तिरिति तर्कद्वयं मिलित्वा दर्शितम् । पूर्वत्र दृष्टान्तमुक्त्वा व्याप्तिलाभायोगात्तल्लाभवर्णनाय च न तर्कस्वरूपोपवर्णनपूर्वकमेतत्तर्कशरीरप्रदर्शनमित्यदोषः । न कस्याप्यर्थस्येति आपाद्यपरिष्कारे निमित्तमाह **यदि चेदं वाक्यमिति** । विशेषनिषेधेऽप्रयोजकत्वापत्तेश्चेति पाठः । सर्वथाऽर्थसाधकत्वाभावो ह्यनिष्टम् । दुःखादिमिथ्यात्वरूपार्थविशेषसाधकत्वाभावस्तु नोक्तरूपः । अर्थान्तरसाधकत्वोपपत्त्या तदप्राप्तेरित्यप्रयोजकतेत्यर्थः । **प्रमाणान्तरेणेति** । सर्वमिथ्यात्वप्रतिपादकप्रमाणान्तरेणेत्यर्थः । **उपपत्तिविरोधाभावेऽपीति** । अनेन भाष्यस्थोपपत्तिविरोधप्रतिपादनमुपलक्षणमिति सूचयति । वैयर्थ्योपपादनं **ज्ञातज्ञापकतयेति** । प्रत्यक्षप्रामाण्ये फलवत्त्वस्यानावश्यकत्वेऽपि वाक्यप्रामाण्यस्य फलवत्त्वघटिततया यथार्थज्ञानसाधनत्वमात्ररूपत्वाभावाद्वैयर्थ्येऽप्रामाण्यम् । न च वाक्येन परं प्रत्यर्थाप्रत्यायनान्न ज्ञातज्ञापकत्वादिप्रसङ्ग इत्यत उक्तम् **परार्थेति** । वाक्यप्रयोगस्य परार्थतया । परस्यैव वाक्यबोध्यत्वेनाङ्गीकार्यत्वात्तं प्रत्यपि वाक्येन बोधाजननेऽबोधकत्वमेव स्यादिति भावः । **तद्बोध्यमिति** । नेहनानेति वाक्यजन्यबोधवन्तं प्रतीत्यर्थः ।

**स०व्र०— विभक्तिप्रतिरूपकमिति** । विभक्त्यन्तप्रतिरूपकं तत्सदृशमित्यर्थः । न चात्र मिथ्याया इति विभक्त्यन्तस्यैवाभावात्तत्सादृश्यकथनायोग इति वाच्यम् । मृषेत्यादिवन्मिथ्येत्यपि कस्याश्चिन्नाम संभवतीति मिथ्याया इत्यस्येति द्रष्टव्यम् ।

**विङ्०—** मिथ्येतिपदस्याकारान्ताव्ययत्वात् मिथ्याया इत्यनुपपन्नमित्यतो द्वेधा समाधानमाह **या इत्यादिना** । **विभक्तीति** । न च मिथ्याया इति विभक्तेरेवाभावात् कथं तत्प्रतिरूपकत्वमिति वाच्यं मिथ्येति काचन स्त्री तस्येति मिथ्यायाः इति तत्प्रतिरूपकत्वसंभवात् । यद्वा परैश्चिरायेत्यव्ययस्य विभक्तिप्रतिरूपतोपपत्त्यर्थं चिरायेतिविभक्त्यन्तपदसादृश्यस्य कथितत्वात् इहापि मिथ्याया इति विभक्त्यन्तसादृश्यं युज्यते इति।

**चषकः— विभक्तिप्रतिरूपकमिति** । विभक्त्यन्तसदृशमित्यर्थः । चिरमतिक्रान्तोऽतिचिरस्तस्मा अतिचिरायेतिविभक्त्यन्तसदृशचिरायेत्यादिवदतिमिथ्याया इति षष्ठ्यन्तप्रतिरूपकत्वान्मिथ्याया इत्यस्यापि साधुता सेत्स्यतीति भावः ।

**२३८ सु०— अयमभिसन्धिः । 'नेहनाने'त्यादिवाक्यैः किं पुमान् निश्चिताद्वैतो बोध्यते । उत तद्विपरीतः । नाद्यः । वैय्यर्थ्यात् । द्वितीयस्तु 'सत्यस्यैव साधकत्वमि'ति मन्यमानो ''यदीदं वाक्यं सकलमिथ्यात्वं प्रतिपादयेत्तदा सकलान्तर्गतत्वात्स्वयमपि मिथ्या स्यात् यथा 'शब्दोऽनित्य' इतिशब्दोऽनित्यः । यदि चैतद्वाक्यं मिथ्या स्यान्न कस्याप्यर्थस्य साधकं स्यादि''त्यनिष्टप्रसङ्गं पश्यन् कथं त्वदभ्युपगममात्रेण स्वतर्कस्य विरुद्धतां प्रतिपद्येतेति ।**

**परि०— स्वतर्कस्येति** । यदीदं वाक्यं मिथ्या स्यान्न कस्याप्यर्थस्य साधकं स्यादिति तर्कस्य विरुद्धत्वम् । आपाद्याभावेनापादकस्य व्याप्तत्वलक्षणविरुद्धहेत्वाभासत्त्वमित्यर्थः ।

**वं०प०— अनिष्टप्रसङ्गम्** अनिष्टापादनरूपं तर्कम् । **पश्यन्** निश्चिताद्वैतभिन्नः प्रतिवादी । **विरुद्धतामिति** ।

**श्रीनिधि०— द्वितीयस्त्विति** । तद्विपरीतः निश्चितद्वैत इत्यर्थः । न तु द्वितीयः । कल्प इत्यर्थः । **कथं त्वदभ्युपगमेति** । कथमित्यस्य प्रतिपद्येतेत्यनेन संबन्धः ।

**वा०चं०—** एवं च यो वाक्यबोध्यो न तं प्रति तर्कस्य विरुद्धता यं प्रति विरुद्धता न स वाक्यबोध्य इत्युभयथापि वाक्यस्याबोधकत्वमेवेत्यभिप्रेत्य सत्यस्यैव साधकत्वाभिमानरूपं तर्कबीजं दर्शयन्नेव वाक्यबोध्यं प्रति तर्कस्वरूपतत्प्रवृत्तिप्रकारौ दर्शयति **अयमिति** । अत्र सकलान्तर्गतत्वादित्यनेन सकलस्य यद्धवति तदन्तर्गतस्यापि तद्भवतीति सामान्यव्याप्तिसूचनम् । यथेति तत्रैव दृष्टान्तोक्तिः । न कस्यापीत्यनेन पूर्वं प्रकृतोपयुक्ततया विशेषोपादानेऽपि सामान्य एव तात्पर्यमिति सूचयति । ननु साधकत्वपदार्थपर्यालोचनायां पददोषादीनामेव साधकत्वाभावोपपादकत्वप्रतीत्या साधकत्वाभावमापादयतस्तेषामेवोपादेयत्वेऽपि मिथ्यात्वस्याप्रयोजकत्वे-नोपपादकत्वाभावादनुपादेयत्वेन सत्यस्यैव साधकत्वं न मिथ्याभूतस्येत्यभिमानासंभवेन तर्कबीजाभावात्तं प्रत्यपि तर्कस्याप्रसर एवेत्याशयेन शङ्कते **नन्विति पददोषेणेति** । स्वरवर्णादिहीनतादिरूपेणेत्यर्थः । मिथ्यात्वस्य पददोषादे-श्चासाधकताप्रयोजकत्वेऽपि मिथ्यात्वाभाव एव दोषादेर्विषणीयत्वेन प्रथमभावित्वान्मिथ्यात्वमेव मुख्यमसाध-कताप्रयोजकमित्येतत्परमुखेनैव दृढीकर्तुं मिथ्यात्वमप्रयोजकीकृत्य पददोषादेरेवासाधकत्वे प्रयोजकत्वं वदता प्रकृतवाक्यस्य मिथ्यात्वेऽपि पददोषाद्यभावात्साधकत्वमित्युक्तं स्यादित्याह **तत्किमिति** । निर्दोषाः पदरूपा अवयवा अस्य तत्त्वमित्यत्र निर्दोषपदत्वमिति वक्तव्येऽवयवग्रहणमविद्यमानस्यावयवाः सन्तीत्येतद्व्याहतमिति सूचयितु-मिति ध्येयम् । अस्तु तथा तथाऽपि को दोष इत्यत आह **एवं चेति** । ननु मिथ्यात्वमप्रयोजकीकुर्वतोऽपि मम नासत्त्वमप्रयोजकमित्यभिमतम् । एवं च वन्ध्यासुतवचसोऽसत्त्वेनासाधकत्वेऽपि न प्रकृतवाक्यस्य तथा । तस्य मिथ्यात्वेऽप्यनिर्वचनीयत्वेनासत्त्वाभावादिति गूढाभिसन्धिर्वैषम्यं शङ्कते **स्वरूपस्यैवेति** । अनिर्वचनीयत्वस्य वक्ष्यमाणरीत्याऽनुपपन्नत्वेनासत्त्वस्यैव वक्तव्यतया साम्यमेवेति गूढाभिसन्धिरेव परिहरति **सममिति** । अनेन तर्केऽप्रयोजकत्वादिकमपि निरस्तम् । न च ननु वाक्यस्येत्यादिग्रन्थस्तर्केऽप्रयोजकत्वान्यथासिद्धिशङ्का-तत्परिहारपरत्वेनैव किं न व्याख्यायत इति वाच्यम् । विरुद्धतापरिहारकपूर्वोत्तरग्रन्थमध्यस्थस्य तत्सङ्गतस्यास्यार्था-दप्रयोजकत्वादिनिरासकत्वस्यैव युक्तत्वात् । इमे च शङ्कासमाधाने मिथ्यायाः साधकत्वं चेति मूले मिथ्यात्वस्यैव साधकत्वाभावे प्रयोजकत्वोक्त्या सूचिते इति द्रष्टव्यम् । ननु मां प्रति तर्कस्य विरुद्धतायास्त्वयाप्यभ्युपगमान्मयैव मदपेक्षया तर्कस्य विरुद्धताऽन्यतरासिद्ध्यादेरेव परं प्रत्युद्भावयिष्यत इत्याशङ्क्य प्रमाणान्तरेण तवाद्वैतनिश्चय-मभ्युपगम्य त्वां प्रति तर्कस्य विरुद्धता स्वीकृता ।

**वा०२०— मूले तद्विपरीत इति** । अत्र च तद्विपरीतपदेन निश्चितद्वैत इवाज्ञाताद्वैतोपि ग्राह्यः । तथा च तद्विपरीत इत्यत्रापि निश्चितद्वैतो वाऽज्ञाताद्वैतो वा द्वितीये वक्ष्याम इत्याशयेनाद्यनिराकरणं **द्वितीयस्त्वित्यादिना** । ननु मा भूत्प्रतिवाद्यपेक्षयेत्यनेन द्वितीयपक्षनिराकरणं ज्ञेयमित्यपि वदन्ति । परं तु ननु मां प्रतीत्युत्तरटीकायां तद्वाक्यावतारावलोकनेऽङ्गीकारानङ्गीकाराव्युत्पादनावलोकने च टीकानभिप्रेतोऽयं द्वितीयपक्षः इति ज्ञेयम् । निश्चिताद्वैतो बोध्यत इत्येतद्विकल्पेऽपि विकल्पनीयम् । यो वादी मद्रीत्या विरुद्धत्वमिति ब्रूयात् तेन हि केनचित्प्रमाणेन मिथ्यात्वं ज्ञात्वैव तथा वक्तव्यम् । तच्च मिथ्यात्वज्ञानं तस्य केन प्रमाणेन । किं नेहनानेति वाक्येनैवोत प्रमाणान्तरेणेति । तत्र द्वितीयपक्षदूषणस्य वैयर्थ्यादित्यनेन प्राप्तावपि प्रथमदूषणालाभात्तद्दूषणलाभाय वक्ष्यमाणप्रकारेणान्योन्याश्रयोऽनुसर्तव्यः । निश्चिताद्वैत इत्येतत्पक्षीयप्रमाणान्तरेणेति द्वितीयपक्षे तु मूलोक्तं वैयर्थ्यम् । तथा च वादिरीत्या तर्कस्य विरुद्धतयोपपत्तिविरोधाभावेऽपि तं प्रति नेहनानेति वाक्यस्य वैयर्थ्यं तु स्यादेवेति प्रथमपक्षदूषणाभिप्रायकथनं वादिनं प्रति तर्कस्येत्यारभ्य प्रामाण्यमित्यन्तेन । अत्र च वादिनं प्रति तर्कस्य विरुद्धत्वेऽपीति पाठः । विरुद्धत्वाभावेऽपीत्यभावपदं लेखकप्रयुक्तम् । अनुपयुक्तं चेति ज्ञेयम् । बोधार्हमिति वा बुध्यारोहाय प्रागुक्तविकल्पद्वयतात्पर्यं निष्कृष्याह **एवं च यो वाक्येति । सकलान्तर्गतत्वात्स्वयमपीति** मूलम् । मिथ्यात्वं यदीत्येतन्मूले प्रागनभिधानादियं व्याप्तिस्तत्रापि ज्ञेया । व्यवहारसतश्चेत्येतदवतारे सर्वान्तःपातिन इत्येतन्मूलेऽपीयमेव व्याप्तिरभिप्रेतेति ज्ञेयम् । **सामान्य एव तात्पर्यमितीति** । तथा च यदि नेह नानेति श्रुतिवाक्यं मिथ्या स्यात्तर्हि न कस्यापि साधकं स्यादित्येव तर्कशरीरं प्रागपि सम्मतमित्याशयः । अत्र यदि मिथ्या स्यात्तर्हि कस्यापि साधकं न भवतीति प्रकृतदुःखादिमिथ्यात्वसाधकमपि न भवेदित्येवमापादनोपयोगितया कस्यापीत्येतन्मध्ये प्रवर्त्तितमिति वा । यदि च कस्यापि साधकं न स्यात्तर्हि दुःखादिमिथ्यात्वसाधकं न स्यादिति मध्ये तर्कान्तरप्रवृत्त्यभिप्रायेण वा कस्यापीत्युक्तमिति वक्तुं शक्यत्वात्प्रकृतोपयुक्ततयेत्यस्य चोपलक्षणत्वाभिप्रायात्प्रकारान्तरमपि द्रष्टव्यम् । आपादयत इति षष्ठी तृतीयार्थे । आपादयतेत्यर्थः । मिथ्यात्वस्यानुपादेयत्वेनेति संबधः । **मिथ्यात्वाभाव एवेति** । यत्र मिथ्यात्वाभावान्मिथ्यात्वप्रयुक्तमसाधकत्वं नायाति तत्रैव पददोषादेः सत्त्वादसाधकत्वमिति वक्तुमुचितम् । न तु यत्रासाधकताप्रयोजकमिथ्यात्वमेवास्ति तत्र तस्मिन् विद्यमानेऽप्यसाधकत्वोपपादनाय पददोषादिगवेषणीयम् । वैयर्थ्यात् । एवं च मिथ्यात्वं प्रथमोपस्थितत्वान्मुख्यमित्यर्थः । **प्रकृतवाक्यस्येति** । अनेन मूलस्थवाक्यस्येत्यस्य व्याख्यानं कृतं भवति । निर्दोषपदावयवत्वादिकं वक्तुमुद्यतोऽसीत्येतदपरिपूर्णत्वादाह **अभावात्साधकत्वमित्युक्तमिति** । पदरूपा अवयवा यस्येति पाठः । अस्येति पाठेऽपि यस्येत्येवार्थः । अनयोरन्यपदार्थाभिधायकतासाम्यात् । **तत्त्वमित्यत्रेति** । अत्र च निर्दोषपदावयवत्वमिति बुध्या विभज्यानूदितमिति न दोषः । इति ध्येयमित्यन्तानन्तरमादिपदेन सङ्गतिग्रहणादेर्ग्रहणमिति पाठः । **अस्तु तथेति** । प्रकृतवाक्यस्य निर्दोषपदावयवत्वादिकं स्वीक्रियत इत्यर्थः । **अत आहेति** । तथा सति यत्राविद्यमानत्वाविशिष्टं वन्ध्यासुतवचनं प्रमाणीकृतं तत्र तद्दूषणाय प्रकृतवाक्यवैलक्षण्यरूपं पददोषादिकमेव व्युत्पाद्यं स्यात्तच्च लौकिकपरीक्षकानुभवविरुद्धमित्याहेत्यर्थः । स्वरूपस्यैवाभावेनेति शङ्का न युक्ता । मिथ्यात्वं वदतापि सत्त्वानङ्गीकारेणासत्त्वस्यैव प्राप्त्या चाक्षुषत्वतुल्यत्वादित्यतः शङ्काभिप्रायमाह **ननु मिथ्यात्वमिति** । तथापि समं





प्रकृतेऽपीत्ययुक्तम् । वन्ध्यासुतवचोव्यावृत्तानिर्वचनीयत्वसत्त्वेन साधकत्वोपपत्तेरित्यतः सममित्येतदपि गूढाभिप्रायप्रदर्शनपूर्वकं तदभिप्रायेण प्रवृत्तमित्याह **अनिर्वचनीयत्वस्येति** । वैलक्षण्यं सदसतोरित्यादिका वक्ष्यमाणा रीतिः । **एतेनेति** । असत्त्वरूपमिथ्यात्वस्यासाधकत्वप्रयोजकत्ववर्णनेन प्रयोजकान्तरनिराकरणेन च तर्कबीजप्रवृत्त्युपपादनेनेत्यर्थः । **अप्रयोजकत्वादिकमपीति** । न केवलं प्रयोजकान्तरं निरस्तमित्येव । अपि तर्हि प्रकृतासत्त्वरूपमिथ्यात्वस्याप्रयोजकत्वमादिपदेनान्यथासिद्धिश्च निरस्तेत्यर्थः । **शङ्कातत्परिहारेति** । साक्षादिति शेषः । अर्थतो निरासस्वीकारेण शङ्कानुत्थानापत्तेः । अत एव अर्थादिति परिहारे वक्ष्यति **पूर्वोत्तरेति** । मिथ्याया इति भाष्यमूले तावत्तर्कस्य वादिरीत्या विरुद्धतामाशङ्क्य परिहारः कृतः । उत्तरत्रापि सैव प्रकारान्तरेणाशङ्किता परिह्रियतेऽतस्तर्कस्य विरुद्धताशङ्कानिरासपरपूर्वोत्तरग्रन्थमध्यस्थो ननु वाक्यस्येत्यादिग्रन्थस्तर्कस्य विरुद्धत्वपर्यवसाननिरासकतयैव योज्यः । प्रतिवादिनं प्रत्यपि तर्कबीजाभावेन तर्कस्याप्रसरात्पूर्वोक्तमनिष्टप्रसङ्गदर्शनप्रयुक्तविरुद्धताप्रतिपत्त्यभाववर्णनमयुक्तमिति । न त्वप्रयोजकत्वादिदूषणान्तरशङ्का तत्परिहारपरतया । पूर्वोत्तरासङ्गतिप्रसङ्गात् । अत एव तन्निरासस्याप्यावश्यकत्वादर्थतो लाभोऽपि व्याख्यायत इत्याशयः । साधकत्वाभावे पददोषादेः प्रयोजकत्वशङ्कासमाधानयोरुद्भाव्यत्वपरिहारायाह **इमे चेति** । अन्यतरासिध्यादिरिवेति प्रथमान्तः पाठः । यथाऽन्यतरासिध्यादिरन्यतररीत्यैवोद्भाव्यते । तथा विरुद्धताप्युद्भावयिष्यत इति योज्यम् ।

**विठ्ठ०**— मिथ्याभूतस्य साधकत्वं मयाऽभ्युपगम्यते इत्याशङ्किते प्रतिवादिनः साधकत्वमसिद्धमित्यसङ्गतमित्यतस्त्वदभ्युपगमस्य परप्रतिपत्त्यङ्गत्वाभावात् परं प्रति नैतदुक्तिरुपपद्यते इत्याशयेनाह **अयमभिसन्धिरिति** । निश्चितम् अद्वैतं यस्य पुरुषस्य तस्येत्यर्थः ।

**२३९ सु०— ननु 'वाक्यस्य साधकत्वं' नाम पदार्थसंसर्गप्रमितिजनकत्वम् । तत्क्वचित्पददोषेण विहन्यते क्वचित्सङ्गत्यग्रहणात्क्वापि तद्विस्मरणात्कदाचिदाकाङ्क्षादिविरहात् कुत्रचिद्विपरीतप्रतिपादनेन । तदत्रापि 'नेहनाने'त्यादिवाक्ये साधकत्वाभावमापादयता पददोषाद्यन्यतममेवापादकमुपादेयम् । किं मिथ्यात्वेन ॥ तत्किमविद्यमानस्यापि वाक्यस्य निर्दोषपदावयवत्वादिकं विद्यत इति वक्तुमुद्यतो भवान् । एवं च वदता भवता कस्मिंश्चन विप्रतिपन्नेऽर्थे वन्ध्यासुतवचनं प्रमाणयन्तं प्रतिवादिनं प्रति नूनं पददोषादिकमेवोपपाद्य साधकत्वं दूषयिष्यते । स्वरूपस्यैवाभावेनासाधकत्वे सिद्धे किं तत्र चरमभाविन्या पददोषादिचिन्तया । न हि शब्देऽविद्यमानत्वेनैव चाक्षुषत्वस्यानित्यत्वसाधकत्वाभावे सिद्धे व्याप्तिचिन्ता क्रियत इति चेत् । समं प्रकृतेऽपि ।**

**परि०**— मिथ्यायास्साधकत्वं च नेत्युक्तमयुक्तमिति शङ्कते **नन्विति**। ननु वाक्यस्येत्यादिना कृतशङ्कया उत्तरमाह **तत्किमिति**। उद्यतः उद्युक्त इत्यर्थः। बाढमिति वदन्तं प्रत्याह **एवं च वदतेति**। पददोषाद्यन्यतममेवोपादेयमिति वदतेत्यर्थः। नूनमिति काकुस्वरः। तत्र तथा वक्तुमशक्यत्वात्। तत्र तव प्रत्युत्तरमेव न स्यादिति भावः। परमुखेन समाधिं वाचयति **स्वरूपस्यैवेति**। **प्रतिपद्य** विज्ञायेत्यर्थः।

**वं०प०**— मिथ्यात्वरूपापादकस्यार्थसाधकत्वाभावरूपापाद्याभावेन व्याप्ततां साधकत्वमिति यावत्। वाक्यस्यासाधकत्वे पददोषादेरेव प्रयोजकत्वेन मिथ्यात्वस्याप्रयोजकत्वाद्यदीदं वाक्यं मिथ्या स्यादिति मिथ्यात्वं नापादकत्वेनोपादेयमित्याशङ्कते **नन्विति**। **पददोषेण** अबोधकत्वरूपेण। कुत्रचिदग्निना सिञ्चेदित्यादौ। **विपरीतप्रतिपादनेन** अर्थाबाधरूपयोग्यताविरहेण। **उद्यतोऽसीति**। वाक्यस्यासाधकत्वे मिथ्यात्वं न प्रयोजकम्। किं नाम पददोषादिकमेवेति शङ्कमानो भवान् अविद्यमानस्य मिथ्याभूतस्यापि वाक्यस्य निर्दोषपदाद्युपेततया साधकत्वमस्ति। मिथ्यात्वस्यासाधकत्वाप्रयोजकत्वादिति वक्तुमुद्यत इत्यर्थः। ओमिति तत्राह **एवं चेति**। मिथ्यात्वमसाधकत्वेऽप्रयोजकमिति वदतेत्यर्थः। तत्र वन्ध्यासुतवचसि। **सममिति**। अत्रापि मिथ्यात्वेन नेहनानेतिवाक्यस्वरूपस्यैवाभावेनासाधकत्वे सिद्धे किं चरमभाविन्या पददोषादिचिन्तयेत्यर्थः।

**श्रीनिधि०**— **पददोषेण** असाधुत्वादिना। तत्किमिति सिद्धान्तग्रन्थः। **निर्दोषपदावयवत्वादिकमिति**। आदिपदेन गृहीतसङ्गतिकत्वाद्युच्यते। स्वरूपस्यैवाभावेनेति शङ्काग्रन्थः। तर्कस्य विरुद्धतेति आह असत इत्यर्थः।

**वा०चं०**— वस्तुतस्तु सकलमिथ्यात्वबोधकप्रमाणान्तरस्याप्येतत्तुल्यतया अनुपपत्तेः साम्यादनेनैव मिथ्यात्वनिश्चये वक्तव्ये तस्य चानुपपत्त्या तवापि न विरुद्धताप्रतिपत्तिरित्याशयेनाह **नन्वित्यादिना**। इदं च मूलस्थप्रतिवादिशब्दस्य भूतपूर्वप्रतिवादिपरत्वमप्यभिप्रेत्येति द्रष्टव्यम्। अत्र निश्चिताद्वैतो बोध्यत इति प्रथमपक्षस्यैतद्वाक्येन विनाऽद्वैतनिश्चयासंभवेनैतद्वाक्यस्य च अन्योन्याश्रयतापत्त्या न तन्निश्चायकत्वमिति परिहारे वक्तव्ये तमनुक्त्वा यद्वैयर्थ्यादिति परिहारवचनं वाचपेक्षया विरुद्धता भविष्यतीत्याशङ्कायाश्च वादिनोऽप्येतद्वाक्येनैव तन्निश्चयस्यान्योन्याश्रयेणासंभवलक्षणपरिहारवचनं तेन ज्ञायते प्रतिवादिन इत्येतत्स्वारस्यानुरोधेन पूर्वं प्रमाणान्तरेण वादिनो मिथ्यात्वनिश्चयमुपेत्य तं प्रति विरुद्धताऽङ्गीकृता। संप्रति प्रतिवादिशब्दस्य तत्तुल्यार्थत्वमभिप्रेत्य प्रमाणान्तरेऽप्येतदनुपपत्तेः साम्यादस्यैव तन्निश्चायकत्वस्य चासंभवेन तं प्रत्यपि विरुद्धता नेत्युक्तमिति। अन्यथा पूर्वोत्तरविरोधापत्तेरिति द्रष्टव्यम्।

**वा०र०**— **एतत्तुल्यतयेति**। विचार्यतयोपक्रान्तनेहनानेतिवाक्यतुल्यतयेत्यर्थः। **अनेनैवेति**। नेहनानेति वाक्येनैवेत्यर्थः। **तस्य चानुपपत्त्येति**। अन्योन्याश्रयेणेति शेषः। **तवापि** न केवलं मम किन्तु तवापीत्यर्थः। वादिपरत्वेनैतदनुव्याख्यानयोजनापक्षे तत्स्थप्रतिवादिपदास्वारस्यमित्यत उक्तं मूले **प्रतिवादितुल्य एवेति**। तावता पदप्रयोगोपपादनं कथमित्यत आह **इदं च मूलस्थेति**। **भूतपूर्वेति**। वादिनोऽपि सकलमिथ्यात्वबोधात्प्राक्





प्रतिवादितया कादाचित्कप्रतिवादित्वाभिप्रायेण तस्मिन्प्रतिवादिशब्दप्रयोगो भाष्ये प्रतिवादी यथा मिथ्यात्वानिश्चया-भावाद्विरुद्धतां वक्तुं न समर्थस्तथा तत एव वाद्यपीति गौणीवृत्तिरिति फलितोऽर्थः प्रतिवादितुल्यपदेन सूचित इति भावः । ननु निश्चिताद्वैतो बोध्यत इत्येतत्पक्षदूषणावसरे प्रमाणान्तरेणाद्वैतनिश्चयं तस्याभ्युपगम्य तत एवाभिप्रेतेति तर्कस्य विरुद्धतासंभवं चाङ्गीकृत्योपपत्तिविरोधरूपदूषणाभावेऽपि नेहनानेति वाक्यस्य ज्ञातज्ञापकतया वैयर्थ्यमिति प्रागभावादिरीत्येति शङ्कायां तु प्रमाणान्तरेण तस्याद्वैतनिश्चयानुपपत्तिमभिधाय नेहनानेत्यनेनैव तन्निश्चयस्य वाच्यतया तत्र चान्योन्याश्रयापत्तेस्तर्कस्य विरुद्धतैव नास्तीति प्रतिपाद्यत इति पूर्वोत्तरग्रन्थविरोध इत्यत आह **अत्र निश्चिताद्वैत इति** । प्रथमपक्षस्य परिहारे वक्तव्य इति संबन्धः । **न तन्निश्चायकत्वमितीति** । तथा च तेन मिथ्यात्वनिश्चयाभावान्न तं प्रति तर्कस्य विरुद्धतावकाश इति युक्त एवोपपत्तिविरोध इति पूर्वोक्तरीत्या स्पष्टत्वान्नोक्तम् । **परिहारवचनमिति** । तद्रीत्योपपत्तिविरोधमभ्युपगम्य वैयर्थ्यरूपदूषणान्तरेण तत्पक्षस्य निराकरणवचनमित्यर्थः । इत्याशङ्कायाश्चेति वैयर्थ्योक्तेः तत्पक्षदूषणानन्तरं प्राप्ताया आशङ्काया इत्यर्थः । **एतद्वाक्येनैव तन्निश्चयस्येति** । प्रमाणान्तरेण मिथ्यात्वनिश्चयायोगेनागत्या प्राप्तस्येति शेषः । असंभवलक्षण-परिहारवचनमित्यत्रापि यदिति वर्तते । तथा च शङ्कायाश्च यत्परिहारवचनम् । चशब्दबलाद्वचनयोः समुच्चयोऽप्यर्थत एव लब्धः । आवृत्तयदित्यस्य च शब्दसंबन्धे यश्च शङ्कायाः परिहारवचनमिति वा योज्यम् । **तेनेति** । तदुभयेनेत्यर्थः । **प्रतिवादिन इत्येतत्स्वारस्येति** । अन्यथा न सिद्धमित्येव वक्तव्यत्वापत्त्या प्रतिवादिन इति विशेषोक्तेर्वैयर्थ्या-पातादिति भावः । तथा च प्रतिवादिन इति विशेषनिषेधप्रयुक्तवादिनः सिद्धताप्रतीत्यनुसारेण तदुपपत्तये प्रमाणान्तरेण द्वैतनिश्चयस्तस्य संभवतीत्यङ्गीकृत्य तन्मूलकविरुद्धतापि तद्रीत्या आयातीत्यतः साङ्गीकृता । वादिरीत्या त्वित्येतच्छङ्कापरिहाराय तु भाष्यायोजनावसरे प्रतिवादिशब्दस्य तत्परताया एवासंभवेन गौण्या वृत्त्या वादिपरत्वोऽङ्गीकार्ये तं प्रति सिद्धता नेति प्रतिपादनोपपत्तये नेहनानेति वाक्येनेव प्रमाणान्तरेणाप्यद्वैतस्यासिद्धताया एव वाच्यतया पूर्वत्रेव प्रमाणान्तरेण तत्सिध्यङ्गीकारस्यानावश्यकतया प्रमाणान्तरेण तन्निश्चयपक्षेऽपि सर्वमिथ्यात्वबोधकत्वे स्वमिथ्यात्वबोधकत्वस्याप्यापत्त्या तस्यासाधकत्वप्रसङ्ग इति दूषणस्य नेहनानेति वाक्यपक्ष इवावर्जनीयतया नेहनानेति वाक्येनैव सर्वमिथ्यात्वमवगम्य तर्कस्य विरुद्धतामुद्भाव्योपपत्तिविरोधा-भावात्सर्वमिथ्यात्वप्रतिपादनं तेनैव युक्तमित्येव परेण वाच्यतया तत्र चान्योन्याश्रयापातेन तस्याप्यनुपपत्त्या मिथ्यात्वापगमस्यैवाभावान्न तन्मूलिका मया मिथ्याभूतस्यैव साधकत्वमङ्गीक्रियत इत्यादिरूपेण विरुद्धताशङ्को-देतीत्युच्यत इत्यर्थः । तेनेत्युक्तमिति ज्ञायत इति संबन्धः । नेहनानेति वाक्येनैव मिथ्यात्वनिश्चयपक्षनिरासः पूर्वत्रेवात्राप्यविशिष्ट एव । प्रमाणान्तरेण तन्निश्चयं प्रागभ्युपेत्य विरुद्धताभावं चाङ्गीकृत्य वैयर्थ्याभिधानमित्येव-मङ्गीकारवादेन पूर्वयोजना । इदानीं तु वस्तुस्थितिकथनाय प्रमाणान्तरेण तन्निश्चयादिकमनभ्युपगम्य विरुद्धत्वा-भावाय तेन तन्निश्चयनिराकरणमेव कृतमिति मूलाभिप्रायकल्पन एव न पूर्वोत्तरग्रन्थयोर्विरोध आयाति । अङ्गीकारानङ्गीकारपुरस्कारस्य मूलाभिप्रेतत्वानाश्रयणे तयोर्विरोधः स्यादित्याह **अन्यथेति** ।

**विठ्ठ०**— नन्वित्यादिशङ्कायाः समाधानमाह **तत्किमिति** । **एवमिति** । मिथ्यात्वमप्रयोजकीकृत्य पददोषादिमद्वाक्यस्यैव प्रमित्यजनकत्वमिति वदता वन्ध्यासुतवचनस्यापि पददोषादिमत्त्वादेवासाधकत्वमित्युक्तं





स्यादिति भावः । वन्ध्यासुतवचनस्य स्वरूपत एवाभावात् असाधकत्वं तत एव तत्र पददोषादिचिन्ताऽवकाशो नास्तीति यद्युच्यते तर्हि नेह नानेति वाक्येनैव तन्मिथ्यात्वस्य सिद्धत्वेन तत एवासाधकत्वसिद्धेः नाविद्यमानवाक्ये पददोषादिचिन्तावकाश इति समः समाधिरित्याशयेनाह **स्वरूपस्येति** ।

**प्रदीपः**— वाक्यस्यासाधकत्वे न मिथ्यात्वं प्रयोजकमिति शङ्कते **ननु वाक्यस्येति** । अपहासेन परिहरति **तत्किमिति** । प्रमाणानामसाधकत्वे स्वरूपासिद्धिसंभवेनाव्याप्त्यादिदोष इति विचार इति शङ्कते **स्वरूपस्येति** ।

**२४० सु०— ननु मा भूत्प्रतिवाद्यपेक्षया तर्कस्य विरुद्धता । वाद्यपेक्षया तु भविष्यति । मैवम् । वादिनाऽपि हि श्रुतिवाक्येनात्मातिरिक्तस्याखिलस्य मिथ्यात्वं प्रतिपद्य मिथ्याभूतस्यापि साधकत्वमिति प्रतिपत्तव्यम् । सोऽपि हि प्राक् सकलमिथ्यात्वबोधात्प्रतिवादितुल्य एव । तथाच श्रुतेः सर्वमिथ्यात्वप्रतिपादकत्वे मिथ्याभूतस्यैव साधकत्वं प्रतीत्य तद्विरोधेन तर्को निरसनीयः । तन्निरासे च श्रुतेः सर्वमिथ्यात्वप्रतिपादकत्वमित्यन्योन्याश्रयमनुत्तीर्णः कथमसावपि तर्कस्य विरुद्धतां प्रतिपद्येत ।**

**वं०प०**— **तर्कस्येति** । यदीदं वाक्यं मिथ्या स्यान्न तर्हि कस्याप्यर्थस्य साधकं स्यादिति तर्कस्येत्यर्थः । **तन्निरासे चेति** । तर्कविरोधाभावादिति भावः । **असौ** वादी ।

**श्रीनिधि०**— वाद्यपेक्षया तर्कस्य विरुद्धत्वं किं वाद्यभ्युपगममात्रेणोत मिथ्याभूतस्य साधकत्वमित्यस्य प्रमितत्वेनेति विकल्पं हृदि निधायाद्ये दूषणमाह **वादिनापि हीत्यादिना** । **विरोधेन** श्रुतिविरोधेन । द्वितीयकल्पनिरासाय मूलं प्रवृत्तं इति भावेन तदवतारयति । अथ मतमित्यादिना अथवेति दर्शनेन चक्षुषा रूपादिज्ञाने स्पर्शनेन त्वगिन्द्रियेण स्पर्शज्ञाने च सति तदुभयप्रतिसन्धातुरात्मनो मनसा परामृश्य रूपस्पर्शविशिष्टो घट इति विशिष्टं ज्ञान उत्पद्यते तथेत्यर्थः । उपपत्तिविरोध इति द्वैतसिद्धिः स्यादित्युच्यमान उपपत्तिविरोध इत्यर्थः ।

**विठ्ठ०**— **वाद्यपेक्षयेति** । वादिनो मिथ्याभूतस्य साधकत्वसंमतेरिति भावः । **प्रतिवादितुल्य इति** । सत्यस्यैव साधकत्वमित्यवबोधवानेवेत्यर्थः ।

**चषकः**— **प्रतिवाद्यपेक्षया** तत्त्ववाद्यपेक्षया । **वाद्यपेक्षया** अद्वैतवाद्यपेक्षया ।

**प्रदीपः**— ननु न स्यात्तर्कस्य विरुद्धता यदि न मिथ्याभूतस्य साधकत्वं प्रमाणसिद्धं न स्यात्तदेव नास्तीति शङ्कते **तथा चेति** । विलक्षणप्रमाणोपनीतयोरप्येकज्ञानगोचरत्वं न युज्यत इत्याह **एकेति** । विलक्षणप्रमाणोपनीतसौरभ्यचन्दनविषयस्य मनसः सत्त्वाद्युक्तं विशिष्टप्रत्ययजननं तत्र नेह तथास्तीत्यत आह **अथवेति** । परिहरति **इत्येतदिति** ।





॥ तत्साधकप्रमास्वरूपस्य निर्णेतुमशक्यत्वम् ॥

तस्य सत्त्वमिथ्यात्वविकल्पः—

**२४१ सु०— अथ मतम् । प्रत्यक्षादिकस्य साधकत्वं तावदनुभवसिद्धम् । तन्मिथ्यात्वं च श्रुतिभिर्युक्तिभिश्चावगम्यते । मिथ्याभूतस्य साधकत्वमित्येषोऽर्थः कुतः सिद्ध इति मा वोचः । एकज्ञानजनितसंस्कारसहकृतस्येतरप्रमाणस्यैव 'सुरभिचन्दनमि'तिवद्विशिष्ट-प्रत्ययजनकत्वोपपत्तेः । अथवोभयप्रतिसन्धातुरात्मनो विद्यमानत्वाद्दर्शनस्पर्शनाभ्यां एकार्थग्रहणवद्विशिष्टप्रतिपत्तिर्भविष्यति । एवञ्च प्रमाणेनैव मिथ्याभूतस्यैव साधकत्वे सिद्धे विरुद्धस्तर्को न मदभ्युपगममात्रेणेत्येतद् दूषयितुं विकल्पेन पृच्छति तच्चेति ।**

## अनु०— तच्च मिथ्या प्रमाणेन सता वा साध्यते त्वया ।

**तदिति** मिथ्याभूतस्यैव साधकत्वम् । आत्मातिरिक्तस्य मिथ्यात्वमिवेति **च**शब्दः । **सता वा प्रमाणेनेति** संबन्धः । यदिदं मिथ्याभूतस्यैव साधकत्वं साधयितुं त्वया प्रमाणद्वयसमाहारात्मकं प्रमाणमुपन्यस्यते तत् **मिथ्या सद्वेति** प्रश्नार्थः ।

**बिन्दुः— सुरभिचन्दनमितिवदिति** । ननु प्रत्यक्षेण उपनीतभानं न संभवति । चन्दनांशे लौकिकसन्निकर्षेऽपि सौरभांशे ज्ञानलक्षणस्य संस्कारलक्षणालौकिकस्य सन्निकर्षस्य वा सत्त्वात् । परोक्षेण तु कथमुपनीतभानेन अनुमितेः पक्षतावच्छेदेन सामानाधिकरण्यव्यापकतावच्छेदकप्रकारक-व्यापकभाननैयत्यात् । अन्यथा प्रत्यक्षोपस्थितवृक्षादिभानप्रसङ्गात् । शब्दस्य तु पदजन्यपदार्थता-वच्छेदकप्रकारकोपस्थितिविषयपदार्थसंसर्गमात्रविषयत्वात् अन्यथाऽतिप्रसङ्गादिति चेत् । न । लाघवात् पदार्थोपस्थितित्वेन हेतुत्वाभिमानात् । यद्वा एतदस्वरसादेवाह **अथवेति** । 'नालम्बत' इत्यादिवत् मानसबोधे बाधकादिति भावः ।

**परि०— अनुभवसिद्धमिति** । प्रमितिरूपकार्यलिङ्गजन्यानुमितिसिद्धमिति वा अनुमिति-प्रामाण्यग्राहकसाक्षिसिद्धमिति वाऽर्थः । **श्रुतिभिर्युक्तिभिरिति** । नेहनानेत्यादिश्रुतिभिर्दृश्यत्वादि-युक्तिभिरित्यर्थः । **इतरप्रमाकरणस्यैवेति** । मिथ्यात्वप्रमाकरणस्य वा साधकत्वप्रमाकरणस्य वेत्यर्थः । क्वचित्प्रमाणस्यैवेति पाठः । **सुरभीति** । यथा घ्राणजन्यगन्धज्ञानजनितसंस्कारसहकृतचक्षुष एव

चन्दनकाष्ठे सुरभि चन्दनमिति विशिष्टज्ञानजनकत्वं तथेत्यर्थः । **दर्शनस्पर्शनाभ्यामिति** । यथा चक्षुरिन्द्रियत्वगिन्द्रिययोरेकत्र घटादौ समावेशे रूपवान्स्पर्शवांश्चेति रूपस्पर्शरूपविशेषणद्वयविशिष्ट-वस्तुविषयकं ज्ञानं जायते तथा मिथ्यात्वप्रमाणसाधकत्वप्रमाणयोः समावेशे मिथ्यात्वसाधकत्वोभय-विशिष्टैकवस्तुविषयकं ज्ञानं भविष्यतीत्यर्थः । **इवेतीति** । तद्यथा मिथ्याभूतवाक्येन साध्यते तथा मिथ्याभूतस्य साधकत्वमपि मिथ्याभूतप्रमाणेन साध्यते किमित्यर्थः । **वक्ष्याम इति** । अविशेषस्य साध्या साधकतेत्यत्रेति भावः ।

**यादु०— अथवोभयप्रतिसन्धातुरिति** । पूर्वं प्रत्यक्षादिविशेष्यकसाधकत्वप्रकारकज्ञाने तन्मिथ्यात्वं मानान्तरोपनीतं भासते तथाच मिथ्याभूतं प्रत्यक्षादिकं साधकमिति विशिष्टज्ञानं विशिष्टसाधकमित्युक्तम् । अत्र तु प्रत्यक्षादिकं मिथ्येत्येकं ज्ञानम् । साधकमित्यपरम् । ततश्च क्रमेण तज्ज्ञानयोरुपत्त्यनन्तरं श्रुत्यादिभिर्यत्प्रत्यक्षादिकं मिथ्येत्यमनिषि तदेवानुभवेन साधकमिति जानामीत्यात्मैवोभयमेकत्र प्रतिसन्धत्ते तेन साक्षित एवोभयविशिष्टप्रतिपत्तिरित्युच्यत इति भेदः । **दर्शनस्पर्शनाभ्यामिति** । दर्शनं चक्षुः । स्पर्शनं त्वगिन्द्रियम् । — ताभ्यामेकार्थग्रहणमिवेत्यर्थः । अयमाशयः । यथा दर्शनस्पर्शनाभ्यामेकस्यार्थस्य घटादे रूपवत्तया स्पर्शवत्तया च क्रमेण ग्रहणे जाते यमहं रूपिणं चक्षुषाऽद्राक्षं तमेव स्पर्शवन्तं त्वचा प्रत्यभिजानामीति एकत्रोभयप्रतिसन्धातुरात्मनो विद्यमानत्वाद्रूपस्पर्शविशिष्टप्रतिपत्तिः साक्षिणा भवति तथेत्यर्थः ।

**वं०प०— सुरभिचन्दनमितीति** । आदौ चन्दनखण्डे सौरभ्यं घ्राणेन गृहीतमभूत् । पश्चाच्चन्दन-खण्डे प्रत्यक्षेण दृष्टे सति चन्दनमिदं सुरभीति चाक्षुषं ज्ञानमुत्पद्यते । इदं चोपनीतभानम् । घ्राणजन्य-सौरभ्यानुभवजनितसंस्कारसहकृतस्य प्रत्यक्षादिकं साधकमित्यनुभवरूपप्रमाणस्यैव मिथ्याभूतं साधकमिति विशिष्टप्रत्ययजनकत्वमुपपद्यते । तथाच प्रत्यक्षादिकं साधकमित्यनुभवे मिथ्यात्वं मानान्तरोपनीतं भासते । तथाच मिथ्याभूतं प्रत्यक्षादिकं साधकमित्युपनीतभानरूपं विशिष्टज्ञानमेव मिथ्याभूतस्य साधकत्वरूपविशिष्टार्थसाधक-मित्यर्थः । **अथवेति** । चक्षुषा त्वगिन्द्रियेण चैकस्यैवार्थस्य घटादेः रूपवत्त्वेन स्पर्शवत्त्वेन च क्रमेण ज्ञानद्वयोत्पत्त्य-नन्तरं योऽहं घटं चक्षुषा रूपवन्तमद्राक्षं तमेव त्वचास्पर्शवन्तं प्रत्यभिजानामीत्येवंरूपस्पर्शविशिष्टार्थप्रतिपत्तिरेकैव साक्षिणैव भवति । एकत्रैव घटे उभयप्रतिसन्धातुरात्मनो विद्यमानत्वात् । एवमत्रापि प्रत्यक्षादिकं मिथ्येत्येकं ज्ञानं प्रत्यक्षादिकं साधकमित्यपरं ज्ञानम् । तथाच क्रमेण ज्ञानद्वयोत्पत्त्यनन्तरं श्रुत्यादिभिर्यत्प्रत्यक्षादिकं मिथ्येत्यमनिषि तदेवानुभवेन साधकमिति जानामीत्यात्मैव मिथ्यात्वं साधकत्वं चेत्युभयमेकत्र प्रत्यक्षादिप्रमाणे-ऽनुसन्धत्ते । तथाच मिथ्यात्वसाधकत्वरूपोभयविशिष्टं यत्प्रत्यक्षादिप्रमाणं तत्प्रतिपत्तिर्मिथ्याभूतं प्रत्यक्षादिकं साधकमिति विशिष्टार्थप्रतिपत्तिरिति यावत् साक्षिणैव भवतीत्यर्थः । पूर्वमुपनीतभानं साक्षिभिन्नं विवक्षितमत्र तु प्रत्यभिज्ञारूपं साक्षिरूपं प्रमाणं विवक्षितमिति भेदः । उभयत्रापि प्रमाणद्वयसमाहारात्मकमेव प्रमाणं विवक्षितमिति ध्येयम् । अत एवोत्तरत्र तथैव व्यवहारः ।





**वा०चं०**— ननु तच्च मिथ्याप्रमाणेनेत्युत्तरग्रन्थेन मिथ्याभूतस्य साधकत्वसाधकप्रमाणे मिथ्यात्वसत्त्वादि विकल्प्य दूषणाभिधानमनुपपन्नम् । तादृशप्रमाणस्वरूपस्यैवासंभावितया न सिद्धमित्येतावतैव तद्दूषणे सिद्धे धर्मदूषणमुखेन तद्दूषणस्यानुचितत्वात्तद्दूषणस्य प्रकृतासङ्गतेश्चेत्यतस्तादृशप्रमाणसंभावनां दर्शयन्नेव तद्दूषणं प्रकृतेन सङ्गमयति **अथ मतमिति** । **एकेति** । प्रत्यक्षादिसाधकत्वानुभवनाशेऽपि तत्संस्कारसहकृतश्रुतियुक्त्यादेर्वा तन्मिथ्यात्वसाधकश्रुत्यादिज्ञाननाशेऽपि तत्संस्कारसहकृतप्रत्यक्षादिसाधकत्वानुभवजनकस्य वा विशिष्टज्ञान-जनकत्वं तथाऽन्यत्र दृष्टेरुपपद्यत इत्यर्थः। यद्वाऽनुभवेन प्रत्यक्षादेः साधकत्वे सिद्धे तत्स्मृतौ सत्यां श्रुतियुक्त्यादिना तन्मिथ्यात्वज्ञानानन्तरमेव यदिदं साधकत्वेनान्वभवं तदेव श्रुत्यादिना मिथ्यात्वेन प्रत्येमीति वा श्रुत्यादिना प्रत्यक्षादेर्मिथ्यात्वे सिद्धे तत्स्मृतौ सत्यां तत्साधकत्वानुभवानन्तरमेव यच्छ्रुत्यादिना मिथ्यात्वेन व्यज्ञासिषं तत्साधकत्वेनानुभवामीति वा प्रतिसन्धानेन विशिष्टार्थसिद्धिरुपपद्यते । न च पौर्वापर्येण प्रवृत्तप्रमाणद्वयजन्य-ज्ञानप्रतिसन्धानं कथमात्मन इति वाच्यम् । आत्मक्षणिकतावादे चक्षुरादिचैतन्यवादे वैतदनुपपत्तावप्युभय-प्रतिसन्धातुरात्मनः स्थिरतावादे प्रतिसन्धानानुपपत्तेः शङ्कितुमशक्यत्वात् । न च प्रतिसन्धातुरात्मनः स्थिरत्वमात्रेण विजातीयकरणजन्यज्ञानद्वयप्रतिसन्धानं न दृष्टचरमिति वाच्यम् । चक्षुषा घटे गृहीते त्वचा ज्ञानान्तरमेव । त्वचा घटे गृहीते चाक्षुषज्ञानान्तरमेव । यं चक्षुषा अद्राक्षं तमेव घटं त्वचा स्पृशामीति वा । यमस्पृशं तमेव घटं चक्षुषा पश्यामीति वा विजातीयकरणजन्यज्ञानद्वयप्रतिसन्धानस्य दर्शनात् । न च प्रागुपस्थिततज्ज्ञानद्वयप्रतिसन्धान-सद्भावेऽपि कथं विशिष्टार्थविषयकं तदिति वाच्यम् । पूर्वानुभूतितत्कार्यस्मृतितत्कार्यानुभवानामेकेनानुव्यवसाये-नैकविषयकतयैककर्तृकतया च सङ्कलनरूपप्रतिसन्धानस्यैकविषयकस्मृतिपूर्वापरप्रत्ययानां सति सामानाधिकरण्ये सङ्कलयितुरेकत्वेनोपपत्तेः । न चैकार्थप्रतिसन्धानदृष्टान्तेन विभिन्नार्थप्रतिसन्धानोपपादनं कथमिति वाच्यम् । प्रत्यक्षादिरूपं धर्मिणमादायार्थैक्यस्य प्रकृतेऽपि सत्त्वाद्विशिष्टार्थविषयकप्रत्ययानां सति सामानाधिकरण्ये सङ्कलयितुरेकत्वेन सङ्कलनस्य सामग्रीतौल्येनोपपत्तेः । तद्वद्विशेष्यकत्वादिवज्ज्ञानद्वयनिष्ठैकार्थविषयकत्वस्य विशिष्टैकार्थविषयकत्वस्य वा ग्रहणे समानसंवित्संवेद्यतयाऽर्थैक्यस्य विशिष्टार्थैक्यस्य वा सिद्ध्युपपत्तेश्च । अत्र दृष्टान्तस्वरूपविवरणं दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति गौतमीयतृतीयाध्यायाद्यसूत्रादौ स्पष्टमतो न विशिष्टार्थ-सिद्धावनुपपत्तिरित्याशयेन पक्षान्तरमाह **अथवेति** । दर्शनस्पर्शनोभयजन्यज्ञानद्वयप्रतिसन्धानवदित्यर्थः । उक्ताक्षेपसमाधानतयोत्तरग्रन्थसङ्गमनमेवं चेति । आत्मातिरिक्तमिथ्यात्वसाधकत्वेन परोक्तं श्रुत्यादिकं मिथ्येति सिद्धवत्कृत्य मिथ्यायाः साधकत्वं च न सिद्धमित्यादिना दूषणमभिधाय संप्रति पुनस्तच्चेत्यात्मातिरिक्तमिथ्यात्वं परामृश्य तत्साधकप्रमाणस्य मिथ्यात्वादिविकल्पेन दूषणाभिधानमनुचितमित्यतः प्राधान्येन प्रकृतस्याप्यात्मा-तिरिक्तमिथ्यात्वस्य नायं परामर्शो येनोक्तदोषः स्यादपि तु तादर्थ्येन प्रकृतस्यापि मिथ्याभूतसाधकत्वस्यैवेत्याह **तदितीति** । तर्हि चशब्दो व्यर्थः । आत्मातिरिक्तमिथ्यात्वसमुच्चायकत्वे च उक्तदोषानतिवृत्तिरेवेत्यत आह **आत्मेति** । ननु सत्यस्येव मिथ्याभूतस्य साधकत्वेन लोके संप्रतिपत्तेरेवाभावान्नासंभावितकल्पना युक्ता । प्रमाणे सत्त्वासत्त्वमात्रनिषेधकोत्तरग्रन्थास्वारस्यं च । प्रमाणस्वरूपस्यापि संशयकोट्यन्तर्भाविन धर्मिभूतप्रमाण-





स्वरूपविशेषस्यानुक्तिश्चेत्यतः प्रमाणस्वरूपस्यानुवाद्यकोटिनिवेशेन प्रकृतपरामर्शकतच्छब्दबलाच्च प्रमाणविशेषस्य मूलारूढतालाभः । सत्त्वमिथ्यात्वयोरेव कोटित्वमतो नानुपपत्तिरित्याशयेन प्रश्नपर्यवसानं दर्शयति **यदिदमिति**।

**वा०र०— प्रमाणे मिथ्यात्वेति** । प्रमाणविषये मिथ्यात्वसत्त्वादीति द्वितीया । मिथ्यात्वसत्त्वादिकं विकल्प्य तत्पूर्वकमिति यावत् । सत्त्वादीत्यादिपदेनाभिप्रेतपरमात्मरूपत्वतदन्यत्वपरिग्रह इति ज्ञेयम् । **असंभाविततयेति** । ततश्च शङ्कानर्हत्वमेव कथञ्चिच्छङ्कायां वा न सिद्धमित्येतावतैवेति योजना । तेन स्वरूपस्यैवेत्येवकारः सार्थकः । **न सिद्धमित्येतावतैवेति** । न सिद्धं चान्यसाधनमित्यस्यान्यत्साधनं मिथ्याभूतस्य साधकत्वसाधकं प्रमाणं न सिद्धमसंभावितमित्येवमर्थकरणेन तावतैव शङ्कितप्रमाणनिराकरणसिद्धेरित्यर्थः । यद्वाऽन्यत्साधनं मिथ्याभूतस्य साधकत्वसाधकं प्रमाणं न सिद्धमसंभावितमित्यर्थकरणेऽपि कथं तत्प्रमाणनिराससिद्धिरित्यत उक्तं **स्वरूपस्यैवासंभाविततयेति** । स्वरूपस्यासंभाविततयैवेत्येवकारयोजना । **धर्मदूषणेति** । तत्प्रमाणं सत् मिथ्या वेति सत्त्वादिधर्मदूषणेत्यर्थः । संभावित एव धर्मदूषणस्योचितत्वादित्यर्थः । **प्रकृतासङ्गतेश्चेति** । तादृशप्रमाणोदाहरणस्य प्रकृतेऽसङ्गततया तद्दूषणस्याप्यसङ्गतेरित्यर्थः । तद्दूषणं सङ्गमयितुं प्रकृतेन सङ्गमयतीति । न हि तत्प्रमाणं संभावितमित्येतावन्मात्रेणोपन्यासार्हमपि तु प्रकृतसङ्गतौ सत्यामेवेति भावः । तत्प्रमाणस्यैवं च प्रमाणेनैव मिथ्याभूतस्य साधकत्वे सिद्धे विरुद्धत्वं तर्कस्येति मूलोक्तरीत्या प्रागुक्तविरुद्धत्वाभावाक्षेपायोदाहरणस्य सङ्गततां प्रदर्शयतीत्यर्थः । **कुतः सिद्ध** इति मूलम् । प्रत्यक्षादिसाधकत्वानुभवस्य श्रुत्यादिजन्यज्ञानस्य च साधकत्वादिरूपैकैकार्थगोचरत्वेऽपि विशिष्टविषयीकरणे सामर्थ्याभावः । न चानुभवादेरन्योन्यसहकारेण विशिष्टप्रत्ययजनकतोपपत्तिरिति वाच्यम् । साधकत्वानुभवश्रुत्यादिजन्यज्ञानयोर्भिन्नकालीनतयोत्तरकालीनश्रुत्यादिज्ञानदशायामुक्तानुभवनाशेन तत्सहकारानुपपत्तेः । अत एव पूर्वप्रवृत्तप्रमाणजन्यानुभवसहकारेणोत्तरप्रवृत्तप्रमाणस्यैव विशिष्टप्रत्ययजनकत्वमित्यपि नेत्याशयः । मास्तु पूर्वानुभवोत्तरज्ञानयोरन्योन्यसहकारेण विशिष्टार्थविषयीकरणाभावः । मा च भूत्पूर्वप्रमाणजन्यानुभवसहकारेणोत्तरप्रमाणस्य विशिष्टज्ञानजनकत्वाभावस्तथापि प्रकारान्तरेण तज्जनकत्वं संभवत्येवेत्याह **एकज्ञानजनितेति** मूलम् । तत्र पूर्वप्रमाणजन्यसाधकत्वानुभवरूपज्ञानजनितसंस्कारसहकारेणोत्तरस्य श्रुत्यादेर्विशिष्टप्रत्ययजनकत्वमित्येवार्थप्रतीतिवारणाय पूर्वादिपदं विहायैकेतरेति प्रयुक्तम् । तदभिप्रायतया परस्परसहकारो लब्ध इति तं दर्शयन्व्याचष्टे **प्रत्यक्षादीति** । **साधकत्वानुभवेति** । साधकत्वावगाहि प्रमाणजन्यानुभवनाशेऽपीत्यर्थः । **तत्संस्कारः** तदनुभवजन्यसंस्कारः । **श्रुत्यादिज्ञानेति** । श्रुत्यादिजन्यज्ञाननाशेऽपीत्यर्थः । अनेन यदा पूर्वप्रवृत्तं श्रुत्यादि तदा तज्जनितज्ञानजन्यसंस्कारसहकारः साधकत्वानुभवजनकप्रमाणस्य पश्चात्प्रवृत्तस्येति स्थलविशेषो दर्शितः । यत्किञ्चिदपि यत्र पूर्वप्रवृत्तं प्रमाणं तत्प्रमाणजन्यानुभवजनितसंस्कारसहकृतोत्तरप्रमाणस्य विशिष्टज्ञानजनकत्वं संभवति । प्रकृते च साधकत्वानुभवजनकप्रमाणस्य वा श्रुत्यादेर्वा प्रथमतो यस्य प्रवृत्तिस्तत्प्रमाणजन्यानुभवजनितसंस्कारेण पश्चात् प्रवृत्तप्रमाणं विशिष्टप्रत्ययजनकं संभवत्येवेति यत्किञ्चित्प्रमाणस्य प्रथमप्रवृत्तावपि विशिष्टप्रत्ययजननमुभयथा-





ऽप्यनिवार्यमित्याशयः । अत्र साधकत्वमनुभवेत्यत्रानुभवपदेन साक्षिग्रहणं प्रत्यक्षादिपदेन केवलप्रमाणग्रहणं अनुभवमात्रेऽपि गौण एव व्यक्तिविशेषस्य सुखादाविवाभावोपपत्तिश्चेत्यादिकमूहनीयमिति प्रतिभाति । अनुभवसिद्धमिति परोक्तानुवादमात्रमिति न तद्विशेषपर्यवसानं व्याख्येयमिति वा । **तथाऽन्यत्रेति** । घ्राणजन्य-सौरभानुभवजनितसंस्कारसहकृतचन्दनग्राहिचक्षुषो वा चक्षुर्जन्यचन्दनानुभवजनितसंस्कारसहकृतसौरभावगाहि-घ्राणस्य वा सुरभिचन्दनमिति विशिष्टप्रत्ययजनकत्वदर्शनादित्यर्थः । **यद्वाऽनुभवेनेति** । **अथवोभयेति** मूलव्याख्यानत्वाद्यद्वेत्युक्तम् । पूर्वपूर्वप्रवृत्तप्रमाणजन्यानुभवजनितसंस्कारसहितोत्तरप्रमाणस्य विशिष्टार्थ-प्रत्ययजनकत्वमित्युक्तम् । इदानीं तु प्रमाणद्वयमपि स्वस्वार्थगोचरज्ञानमेवोत्पादयति । किं नाम प्रतिसन्धातुः पुरुषस्य पूर्वज्ञानजन्यसंस्कारेण स्मृतौ सत्यामुत्तरज्ञानोत्पत्त्यनन्तरं विशिष्टविषयकमेकं प्रतिसन्धानं जायत इत्युच्यत इति भेदः स्पष्टः । **तत्स्मृतौ** साधकत्वस्मृतौ । **तन्मिथ्यात्वेति** । प्रत्यक्षादिमिथ्यात्वेत्यर्थः । प्रत्येमीति वेत्यस्य प्रतिसन्धानेनेति वक्ष्यमाणेनान्वयः । **प्रमाणद्वयजन्यज्ञानेति** । ज्ञानद्वयेत्यर्थः । तत्प्रतिसन्धानकथ-न्तोपपादनाय **पौर्वापर्येण प्रवृत्तेति** । अन्योन्यज्ञानकाले परस्परस्य सत्त्वाभावेन तदुभयविषयकप्रतिसन्धानायोगः । तथाच तत्प्रतिसन्धानबलेन विशिष्टार्थसिद्धिर्नेत्याशयः । ज्ञानद्वयस्य भिन्नकालत्वेऽप्यात्मनस्तदुभयकालीन-त्वादुभयसमानकालीनेन तदुभयप्रतिसन्धानोपपत्तिः । यदि ह्यात्मा क्षणिकः स्यात्तदा परं ज्ञानद्वयसंबन्धस्तस्य न भवेत् । यदि वा चैतन्यं नात्मगतम् । इन्द्रियाणामेव चेतनत्वं तदतिरिक्त आत्मा नास्तीति मतं स्यात्, स्यात् तदेन्द्रियाणां वक्ष्यमाणरीत्या प्रतिसन्धानायोगादात्मनश्च तदतिरिक्तस्याभावान्न ज्ञानद्वयसंबन्धस्तस्य भवेत् । न चैवमित्याह **आत्मक्षणिकतेति** । वक्ष्यते चेदं मतं बौद्धमतनिरासपरसमुदाय उभयेत्यधिकरणे । अनेनोभय-प्रतिसन्धातुरित्येतद्व्यावर्त्यमभिहितम् । आत्मन इत्येतद्व्यावर्त्यं **चक्षुरादिचैतन्येति** । चतुर्थवर्णकपञ्चपादिका-द्युक्तरीत्या सत्यपि शरीरे चक्षुरादिमनःपर्यन्तेन्द्रियाणामेकैकस्मिन्नसत्यपि रूपादिज्ञानाभावात्तेषां ज्ञानानामिन्द्रियै-रन्वयव्यतिरेकवत्त्वात् करणतयाऽन्वयव्यतिरेकवत्त्वकल्पनापेक्षया आश्रयतयाऽन्वयव्यतिरेककल्पनस्याभ्य-र्हितत्वादिन्द्रियाण्येव विज्ञानाश्रयाणीति मत इत्यर्थः । एतच्चात्मपरीक्षायामात्मन इन्द्रियातिरिक्तत्वं प्रतिपादय-द्भिष्टीकाकृदुदाहरिष्यमाणगौतमसूत्रभाष्यकारादिभिर्नेन्द्रियेणैककर्तृकावित्यादिनाऽऽशङ्क्य निराकृतम् । नेन्द्रियेणैक-कर्तृकावित्यादिभाष्यादौ हि यमद्राक्षं तं स्पृशामि । यं चास्पार्क्षं तं पश्यामीति दर्शनस्पर्शनप्रत्यययोरेक-कर्तृकत्वमनुभूयमानमिन्द्रियमादायानुपपन्नम् । इन्द्रियस्य स्वस्वविषयग्रहणमात्रसामर्थ्येन चक्षुषा यमद्राक्षं स एवायमर्थ इत्येवंरूपेण प्रतिसन्धानसंभवेऽपि तं स्पृशामीति स्पर्शप्रतिसन्धाने सामर्थ्याभावात् । तथा सत्येकस्यैवानेकविषयग्रहणं प्रतिसन्धानापत्त्येन्द्रियान्तरोत्पादो व्यर्थ एव स्यादेवमिन्द्रियान्तरेऽपीति प्रतिपादनात् । तथोत्तरत्र न विषयव्यवस्थानादिति सूत्रेणातिरिक्तात्मनोऽपि ज्ञानं व्यवस्थितं न सर्वविषयमेकस्येति तत्प्रतिबन्द्या रूपग्रहणमात्रस्य चक्षुषा जायमानत्वात्तन्मात्रप्रतिसन्धानेऽपि नान्यविषयप्रतिसन्धानापत्तिरित्याशङ्क्य तद्व्यव-स्थानादेवात्मसद्भावादप्रतिषेध इति सूत्रेणेन्द्रियस्याव्यवस्थितविषयसर्वज्ञत्वादौ ह्यतिरिक्तात्मानुमानं न शक्नुयात् । यस्मात्तु व्यवस्थितविषयता त्वत्स्वीकृतास्ति तस्मादेव सर्वविषयग्राही सर्वज्ञो विषयव्यवस्थामतीतोऽनुमातुं शक्यत इति त्वदुक्तविषयव्यवस्थाभावोऽनुगुण एवेत्यादि प्रतिपादनात् । पञ्चपादिकाविवरणयोस्तु मनस एव

चैतन्यमित्येतत्पक्षोत्थापनव्याजेन स्वप्ने चक्षुराद्यभावेऽपि रूपादिस्मृतिसत्त्वेन तदन्यथानुपपत्त्या रूपादिज्ञानाना-माश्रयान्तरसिद्धौ करणविषयतयापि ज्ञानान्वयव्यतिरेकयोः संभवादित्यादिरूपेण तन्मतं निराकृतम् । तथा चैतन्मते उभयप्रतिसन्धानस्यासंभवेऽपि पृथगात्माऽस्तीति मतेन तदसंभव इत्याशयः । एतदधिकरणपूर्वपक्षारम्भे चात्मा च शरीरेन्द्रियादिसङ्घातव्यतिरिक्तो नास्त्येवेत्येतन्मूलव्याख्यानटीकायां शून्यवादादिरीत्या आत्माभावपक्षशरीरा-द्यात्मत्वपक्षाणां निराकरणावसरे चक्षुरादिचैतन्यमतनिराकरणादत्रापि चक्षुरादीत्यादिपदेन मनःपर्यन्तेन्द्रियाणामिव तत्सङ्घातस्यापि ग्रहणादिकं व्याख्येयमिति ज्ञेयम् । विजातीयकारणजन्येति वदन् चक्षुषैव जायमानक्रमिक-घटपटादिज्ञानप्रतिसन्धानसंभवमभिप्रैति । यद्यपि तत्समानतया विजातीयविषयेऽपि सम्मतिरनिवार्या । तथापि न सर्वथा तदभाव आक्षिप्यते । अपि तु दृष्टत्वाभाव एव दर्शनेत्युक्तदृष्टान्ताभिधानव्यावर्त्यतया आशङ्क्यत इति न दोषः । **त्वाचज्ञानेति** । त्वचाजन्यज्ञानेत्यर्थः । त्वाचज्ञानानन्तरमेव यं चक्षुषाऽद्राक्षं तमेव घटं त्वचा स्पृशामीति वेति संबन्धः । एवं त्वचा घटे गृहीते चाक्षुषज्ञानानन्तरमेव यमस्पार्क्षं तमेव घटं चक्षुषा पश्यामीति वेति संबन्धः । **विजातीयकारणेति** । चक्षुस्त्वग्रूपकारणद्वयेत्यर्थः । **प्रागुपस्थितेति** । हेतुगर्भमिदं प्रागुपस्थितत्वादिति । अहं घटं पश्यामि घटं स्पृशामि चेत्येवंरूपस्य ज्ञानद्वयविषयकप्रतिसन्धानस्य सद्भावेऽपि । प्रतिसन्धानं ज्ञानद्वयविषयकं यद्यपि संभवतीति यावत् । **कथं विशिष्टेति** । यमद्राक्षं तमेव त्वचा स्पृशामीत्यादिरूपेणैकविषयकतयैककर्तृक-तया च ज्ञानद्वयविषयकं कथमित्यर्थः । ज्ञानद्वयनिष्ठैककर्तृत्वादेः प्रागनुपस्थितेरिति भावः । प्रतिसन्धानस्वरूपं निरूपयन्नेव विशिष्टविषयकत्वं तस्योपपादयति **पूर्वानुभूतीति** । **तत्कार्यानुभवानामिति** । पूर्वानुभवस्य स्मृतिं प्रत्यनुभवत्वेन हेतुत्वं तदुत्तरानुभवं प्रति तु धर्मिज्ञानत्वेन हेतुत्वमित्युत्तरानुभवस्यापि पूर्वानुभवकार्यत्वात् तत्कार्येति युक्तम् । यद्वा पूर्वानुभवजन्यस्मृतेरपि धर्मिज्ञानतया प्रयोजकत्वात्तच्छब्देन स्मृतिमेव गृहीत्वोत्तरानुभवस्य स्मृतिकार्यत्वमेव तत्कार्यत्वमिति व्याख्येयमिति ज्ञेयम् । अनुभूत्यादीनां भिन्नविषयकत्वव्यावृत्तये तत्कार्येति स्थलद्वयेऽप्युक्तम् । अनुव्यवसायभेदे विशिष्टार्थविषयकत्वमेकस्य नायातीत्यत उक्तम् **एकेनेति** । कर्तृभेदव्यावृत्यै **एकर्तृकतयेति** । सङ्कलनं च प्रागुक्तं यं चक्षुषाऽद्राक्षमित्यादिरूपम् । स्मृत्यादित्रयस्य भिन्नविषयकत्वे अर्थगततया ज्ञानद्वयविषयीकृतार्थालाभः । सामानाधिकरण्याभावे च विशिष्टविषयकैकानुव्यवसायायोग इत्यत उभयोपादानम् । प्रतिसन्धानपदार्थान्तर्गतैकेनानुव्यवसायेनेत्येतदुपपादनाय सङ्कलयितुरेकत्वमुक्तम् । एवं विजातीयकरणजन्य-ज्ञानद्वयप्रतिसन्धानं न दृष्टमित्येतन्निराकृत्य तथापि दृष्टान्ते ज्ञानद्वयविषयस्यैकतया तद्विषयकज्ञानप्रतिसन्धान-स्यैकार्थविषयकत्वादेव विशिष्टार्थविषयकत्वमुपपन्नम् । प्रकृते तु प्रत्ययादिनिष्ठसाधकत्वतन्मिथ्यात्वरूप-विषययोर्भेदेन तज्ज्ञानद्वयस्य भिन्नविषयकतया तत्प्रतिसन्धानस्योक्तविधस्यासंभवान्न विशिष्टार्थविषयकत्वमिति वैषम्यान्न दृष्टान्तदार्ष्टान्तिकभाव इत्याशङ्कामपि निराकर्तुं तामुत्थापयति **न चेति** । नात्र प्रत्यक्षादिनिष्ठं साधकत्वं तन्मिथ्यात्वं वा पुरस्कृत्यैव ज्ञानद्वयाङ्गीकारः । अपि तु प्रत्यक्षादिकमेव पुरस्कृत्य साधकत्वादिरूपेण ज्ञानद्वयमिति स्वीक्रियते । ततो न वैषम्यमित्याह **प्रत्यक्षादीति** । सङ्कलनरूपं प्रतिसन्धानमप्युपपादयति **विशिष्टार्थेति** । अत्र विशिष्टार्थत्वं तत्तज्ज्ञानप्रकारेणार्थस्य विशिष्टत्वम् । तद्विषयकप्रत्ययानां पूर्वानुभवस्मृतितत्कार्यानुभवानामित्यर्थः । **सामग्रीति** । दृष्टान्तवद्दार्ष्टान्तिकेऽपि तत्सामग्र्यास्तुल्यत्वेनेत्यर्थः । तदुपपादनायैव विशिष्टार्थेत्यादिकमुक्तम् ।





एकविषयत्वं तु पूर्वमुक्तमेव । अनुव्यवसायेन ज्ञानगतैकार्थविषयकत्वादिग्रहणेऽपि विषयीकृतार्थस्यैकत्वं वा ज्ञानद्वयप्रकाराश्रय एक एवेति विशिष्टार्थैक्यं वा न सिध्यतीति मिथ्याभूतमेव प्रत्यक्षादिसाधकमिति विशिष्टबोधाप्राप्तिरित्यत आह **तद्वदिति** । यथा ज्ञाननिष्ठे तद्वद्विशेष्यकत्वरूपप्रामाण्ये गृहीते समानसंवित्संवेद्यतया ज्ञानविषयस्तत्प्रकारवानित्यपि गृहीतं भवति तथेत्यर्थः । दर्शनादिपदं प्रमाणपरं ग्रहणपदं तत्प्रतिसन्धानपरम् । तृतीयार्थो जन्यत्वमित्याशयेन व्याचष्टे **दर्शनस्पर्शनोभयेति** । **सिद्धवत्कृत्येति** । तद्वाक्यस्याग्रतो भवेदित्यादिनेति शेषः । मिथ्यात्वमेव परेणाङ्गीकारयित्वा तन्निश्चयपुरस्कारेणैव मिथ्याया इत्यादिना तद्दूषणं चोक्तमित्यर्थः । पुनरित्यस्य दूषणाभिधानमित्यनेन संबन्धः । तस्यैवेदं दूषणाभिधानमित्यत्र नियामकं तच्छब्दस्य प्रकृतपरामर्शकत्वात् तेनात्मातिरिक्तमिथ्यात्वं चेति परामर्श एवेति भावेनोक्तं तच्चेत्यात्मेत्यादि अनुचितत्वे हेतुरभिधायेत्यन्तः । मिथ्यात्वपक्षस्यैव पराङ्गीकारानुसारेण प्राप्तस्य दूषणे सिद्धे पुनः सत्यत्वमिथ्यात्वविकल्पस्यानवकाशेन तद्दूषणं सुतरामनुचितमित्यर्थः । **प्राधान्येनेति** । अनेनात्मातिरिक्तमिथ्यात्ववन्मिथ्याभूतस्य साधकत्वमपि प्राक्प्रकृतमेव । इयांस्तु विशेषः । तत्प्राधान्येन प्रकृतमिथ्याभूतस्य साधकत्वं तु तदर्थतयेति । तथा चोभयोः प्रकृतत्वाविशेषेऽपि प्रधानमपि परित्यज्य विचार्यत्वेनाप्रधानस्यैव परामर्शो युक्त इत्याशयः । **आत्मेतीति** । तथा च तस्य च शब्देनोपादानं दृष्टान्ततया न तु दूष्यत्वेनेत्याशयः । मिथ्याप्रमाणेनेत्यादिभाष्यस्य यदिदं मिथ्याभूतस्यैवेत्यादिरूपेण परिष्कारे निमित्ततया यथाश्रुतेऽनुपपत्तिं प्रदर्शयति **ननु सत्यस्येवेत्यादिना** । **असंभावितेति** । मिथ्याप्रमाणेनेति कोटेरसंभावितत्वेनासंभावितकोटिकविकल्पो न युक्त इत्यर्थः । **सत्त्वासत्त्वेति** । सता प्रमाणेन वेत्येवंविशिष्टविकल्पपक्षे प्रमाणे सत्त्वासत्त्वाद्ययोगप्रतिपादनेनोत्तरत्र दूषणस्यायोगः । विशिष्टाश्रितस्यैव दूषणस्य वाच्यत्वादित्यर्थः । **धर्मिभूतेति** । अत्रार्थे प्रमाणं भवत्प्रत्यक्षं वाऽनुमानं वेत्यादिरूपेण विकल्पदर्शिनि प्रकृतेऽपि मिथ्याभूतस्य साधकत्वे प्रमाणं किञ्चिन्निर्दिश्य तत्प्रमाणाश्रिततया विकल्पोत्थानस्य कर्तव्यत्वप्राप्तेः सता प्रमाणेन वा मिथ्याप्रमाणेन वाऽमुकप्रमाणेनेति वाच्यत्वादत्र च प्रमाणपदस्य संशयकोट्यन्तर्गतत्वाद्धर्मिभूतस्य तस्य पृथगनुक्तेः कथञ्चिदुक्तावपि तत्प्रमाणममुकमिति तद्विशेषस्यापि समर्पकाभावात् न्यूनता चेत्यर्थः । यत्रापि प्रत्यक्षप्रमाणेन वेत्यादिरूपेण विकल्पकरणं तत्रापीह वक्ष्यमाणरीत्या तत्रार्थे प्रमाणं भवत्प्रत्यक्षं वा अन्यद्वेत्येवार्थो यथाश्रुतेऽनुपपत्तेरित्याशयः । **अनुवाद्येति** । मिथ्याभूतस्य साधकत्वसाधकं यत्प्रमाणं तदिति प्रमाणस्वरूपस्यानुवाद्यकोटिनिवेशं स्वीकृत्येत्यर्थः । सतेत्यादिना समानाधिकरणत्वेनोक्तमपि प्रमाणेनेत्येतत् बुध्या प्रथमान्ततया पृथक्कृत्य । तदेव धर्मिभूतप्रमाणसमर्पकमिति स्वीकृत्येति फलति । तद्विशेषलाभायाह **प्रकृतेत्यादि** । सता वेत्यादि कोटिद्वयेऽपि तृतीयार्थस्य साध्यत इत्युक्तकर्मत्वस्य च तत्साधकमिति पर्यवसानमाश्रित्य तत्साधकं प्रमाणं सद्वेत्यादिरूपेण पर्यवसानलाभः । साधकप्रमाणविशेषस्य भाष्याल्लाभस्तु तच्छब्दस्य प्रकृतपरामर्शकतया पराशङ्कितस्य तेन परामर्शो प्रमाणद्वयं समाहारात्मकत्वेन रूपेणोपस्थितिसत्त्वाद्भविष्यतीति नानुपपत्तिरित्यर्थः । मिथ्यात्वयोरेव च कोटित्वमिति चशब्दयुक्तः पाठः स्वरसः ।





**स०व्र०— अथवेति** । पूर्वं प्रत्यक्षादिविशेष्यकसाधकत्वप्रकारकज्ञाने तन्मिथ्यात्वं मानान्तरोपनीतं भासते तथा च मिथ्याभूतं प्रत्यक्षादिकं साधकमिति तज्ज्ञानोल्लेख इत्युक्तम् । अत्र तु प्रत्यक्षादिकं मिथ्याभूत-मित्येकं ज्ञानं साधकमित्यपरं तज्ज्ञानद्वयविशेषणकं आत्मविशेष्यकं विशिष्टज्ञानं विवक्षितं योऽहं प्रत्यक्षादिकं मिथ्येत्यमनिषं सोहं साधकमिति जानामीति तदाकारो बोध्यः । **दर्शनस्पर्शनाभ्यामिति** । दर्शनं चक्षुः स्पर्शनं त्वक् ताभ्यां जातयोर्घटरूपैकार्थविशेष्यकयोर्भिन्नप्रकारकयोर्ग्रहणयोरिवेत्यर्थः । तथाच योऽहं घटं चक्षुषा नीलमद्राक्षं सोऽहं त्वचा स्पर्शवन्तं जानामीति यथा ज्ञानद्वयविशिष्टात्मप्रतिपत्तिस्तथा प्रकृतेऽपीति भावः । केचित्तु नेहनानेति श्रुत्या प्रत्यक्षस्य मिथ्यात्वे प्रतीते प्रमाणान्तरेण साधकत्वे च प्रतीते उभयानुसन्धानवत आत्मनो मनसैव मिथ्यात्वविशिष्टप्रत्यक्षसाधकत्ववैशिष्ट्यबोधः संभवति । यथा चक्षुषा दृष्टे घटे स्पर्शनेन च ज्ञाते योऽहं चक्षुषा घटमद्राक्षं सोऽहं त्वचा जानामीति मनसा विशिष्टानुभवस्तथेति भाव इत्याहुः ।

**विठ्ठ०— अथवोभयप्रतिसन्धातुरिति** । पूर्वं प्रत्यक्षस्य साधकत्वानुभवजनितसंस्कारसहकृतेन मिथ्यात्वप्रतिपादकागमादिना मिथ्याभूतं साधकमित्येका विशिष्टप्रतीतिः सुरभिश्चन्दनखण्ड इतिवत् उपनीत-भानत्वाद्भवतीति उक्तम् । अधुना प्रत्यक्षादिकं साधकमित्येकं साक्षिज्ञानं जातं श्रुत्यादिना तन्मिथ्येत्यपरं ज्ञानं जातं ततः साक्षिणा यस्य साधकत्वमनिष्टं तस्यैवेदानीं मिथ्यात्वज्ञानी अस्मीत्यात्मैवोभयमेकत्र प्रतिसन्धत्त इति साक्षिणोभयविशिष्टप्रतिपत्तिः य एव चक्षुषा दृष्टः तमेव त्वचा स्पृशामीति उभयानुसन्धायकविशिष्टप्रतीतिव-द्भविष्यतीत्युच्यते इतिवद्भेदोऽवगन्तव्यः ।

**चषकः— अनुभवसिद्धमिति** । प्रत्यक्षादित्वावच्छिन्नधर्मिकानुभवविषयीकृतमित्यर्थः । **कुतः सिद्ध इति** । मिथ्याभूतत्वावच्छिन्नधर्मिकसाधकत्वप्रकारकानुभवजनकसामग्रीविरहादिति भावः । **सहकृतस्येत्यादि** । प्रत्यक्षादित्वावच्छिन्नधर्मिकानुभवजनितसंस्कारसहकृतस्य मिथ्यात्वबोधकश्रुतियुक्तिरूपप्रमाणस्येत्यर्थः । **सुरभि-चन्दनमितिवदिति** । घ्राणादिजनितसौरभगोचरोपनायकज्ञानलक्षणालौकिकप्रत्यासत्तिचन्दनचक्षुःसन्निकर्षादि-घटितसामग्र्योपनीतं विशेषणतयैव भासते । 'मानसे त्वनियम' इति न्यायेन सौरभनिष्ठप्रकारतानिरूपितचन्दननिष्ठ-विशेष्यताशालिज्ञानजननादिति भावः । **विशिष्टप्रत्ययेति** । मिथ्याभूतत्वविशेषितप्रत्यक्षादित्वावच्छिन्नधर्मिक-साधकत्वप्रकारकोदीच्यमानसज्ञानजनकत्वोपपत्तेरित्यर्थः । **उभयप्रतिसन्धातुरिति** । प्रत्यक्षादित्वरूपैकधर्मावच्छिन्ने साधकत्वमिथ्यात्वोभयकर्मकप्रतिसन्धानकर्तुरित्यर्थः । दर्शनस्पर्शनाभ्यामिति करणसाधनल्युडन्तौ चक्षुस्त्वगिन्द्रिये अभिदधाते । तादृशेन्द्रियद्वयाधीनघटधर्मिकरूपस्पर्शोभयप्रकारकचाक्षुषस्पर्शनोभयगोचरयो रूपिणं यं चक्षुषाऽद्राक्षं तमेव त्वचाऽस्प्राक्षमित्यनुव्यवसाययोरेकात्मनि न्यायमते, सिद्धान्ते तादृशव्यवसायद्वयगोचरसाक्षिरूपप्रकाशस्य वा सद्भावेनैकत्र रूपस्पर्शोभयवैशिष्ट्यप्रतिपत्तिः साक्षिणा यथा तद्वत्प्रकृतेऽपीत्यर्थः ।





तत्सत्यत्वे द्वैतसिद्धिः—

**२४२ सु०— सत्त्वपक्षं दूषयति सता चेदिति ।**

## अनु०— सता चेद् द्वैतसिद्धिः स्यात्

**यद्यपि परेणाङ्गीचिकीर्षितत्वेन प्राधान्यान्मिथ्यात्वविकल्पः प्रथमं प्रश्नावसरे निर्दिष्टः । तथाऽपि मिथ्यासत्ययोः सत्यमर्थतः प्रधानमिति तत्क्रिमेण दूषणम् । सता चेत् इत्यतःपरम् 'आत्मरूपेण तदन्येन वे'ति विकल्पः । 'प्रथमपक्षे वक्ष्याम' इत्याद्यपक्षदूषणप्रतिज्ञानं चाध्याहार्यम् । 'आत्मेतरेण सते'ति द्वितीयपक्षदूषणं द्वैतसिद्धिः स्यादिति । तथा चाद्वैतप्रतिपादकश्रुतेरुपपत्तिविरोध इति हृदयम् । न पुनरपसिद्धान्तमात्रे तात्पर्यम् । प्रक्रमाननुरूपत्वात् । श्रुतेरुपपत्तिविरोधेनाद्वैतप्रतिपादकत्वाभावस्य प्रक्रान्तत्वात् ।**

**बिन्दुः— प्रथमपक्षे वक्ष्याम इति** । एतेनात्मरूपेणास्तिपक्षो निरस्त इत्यनेन न प्रथमेनेत्यर्थः ।

**परि०— अद्वैतप्रतिपादकेति** । 'नेहनानेत्यादिश्रुतेः सर्वमिथ्यात्वबोधनांशे बाधितविषयत्वरूपोपपत्तिविरोध इत्यर्थः । **अद्वैतेति** । आत्मान्यसर्वमिथ्यात्वप्रतिपादकत्वाभावस्य 'मिथ्यात्वं यदि दुःखादेः' इत्यत्र प्रक्रान्तत्वादित्यर्थः ।

**यादु०— प्रथमपक्षे वक्ष्याम इति** । 'अविशेषस्य साध्या साधकता पुनरि'त्यादाविति शेषः । **उपपत्तिविरोध इति** । यदि ब्रह्मातिरिक्तमुक्तप्रमाणं सत्यं स्यात्तर्ह्यत्रैव प्रतिहतप्रामाण्यमेकमेवेत्यादिवाक्यं कथमितरमिथ्यात्वं प्रतिपादयेदविश्वासप्रसङ्गादित्युपपत्तिविरोधः । यद्वा यदि प्रागुक्तं प्रमाणं सत्स्यात्तदा तदंशे श्रुतेर्योग्यता न स्यादित्येवोपपत्तिविरोध ऊह्यः ।

**कं०रा०— तथा चास्येति** । अस्य प्रमाणस्य । प्रमाणद्वयसमाहारात्मकस्य प्रमाणस्य साधकत्वे सिद्धे ततो मिथ्याभूतस्यैव साधकत्वमित्यर्थसिद्धिः सत्यां च तस्यां मिथ्यात्वे साधकत्वं न स्यादिति तर्कस्य विरुद्धतासिद्धिस्तर्कस्य विरुद्धतासिद्धौ सत्यामेवास्य प्रमाणद्वयसमाहारात्मकस्य मिथ्याभूतस्य साधकत्वमित्यर्थसाधकत्वसिद्धिरिति चक्रकाश्रयप्रसङ्गेन नैकस्यापि सिद्धिरित्यर्थः । ततश्च प्रत्यक्षाप्रामाण्ये च सति । प्रतिबिम्बं चेत्यादौ मिथ्याभूतमिति संबन्धः ।





**वा०चं०**— निर्देशदूषणयोर्वैषम्ये निमित्तमाह **यद्यपीति**। सता चेदित्यात्मतदितरपक्षयोः प्रास्याऽऽत्मपक्षे च द्वैतसिद्धिः स्यादित्यस्यालग्नकत्वादाह **सता चेदित्यतः परमिति इति हृदयमिति**। आत्मातिरिक्तस्यास्यैव सत्यत्वेऽत्रैव प्रतिहतप्रामाण्यतयाऽऽत्मातिरिक्तसमस्तमिथ्यात्वसाधकत्वाभिमता श्रुतिर्न किञ्चिदपि साधयेदित्युपपत्तिविरोध इत्यर्थः।

**वा०र०**— **निमित्तमाहेति**। शङ्कासमाधानमुखेनेति योज्यम्। **सता चेदित्यात्मेति**। इति सामान्योक्त्येत्यर्थः। अनेन विकल्पाध्याहारे निमित्तमुक्तम्। विकल्पान्तरस्वीकारे तत्रत्यात्मरूपेणेति प्रथमपक्षस्येह दूषणं न प्रतीयत इत्यतो मूले उक्तं **प्रथमपक्षे वक्ष्याम इति**। इत्यनवस्थितिरित्येतद्व्याख्यानावसरे एतेन प्राग्विकल्पित इत्यादिनेति शेषः। तथा च तत्पक्षदूषणस्याप्युत्तरभाष्यादेवार्थतः सिद्धेर्न भाष्ये न्यूनतेति भावः। अत्र टीकायामुपपत्तिविरोध इतीति प्रतीकोपादानपाठः। तत्स्थाने इति हृदयमितीत्येवं पाठस्तु हृदयत्वोक्तिनिमित्तं कथयिष्यामीति मत्वा तत्प्रतीकोपादानं च कृत्वा तन्निमित्तस्योत्तरमूल एव व्यक्तत्वान्न तल्लेखः कार्य इत्यनुसन्धाय चोपपत्तिपदार्थमात्रस्य कथनं कृतवांष्टीकाकारः। तदनन्तरं चोत्तरवाक्यार्थनिरूपणभारेण तत्पाठनाशमकृत्वैवोत्तरवाक्यार्थनिरूपणादि प्रवृत्तमिति तत्पाठस्तथैव स्थिता इति तत्स्थाने उपपत्तिविरोध इतीति लेख्यम्। केचित्तु विरोध इत्यर्थ इत्यत्र विरोध इत्यनन्तरमिति हृदयमिति योजयित्वा विरोध इति हृदयमित्यर्थ इति व्याख्येयमिति यथाश्रुत एव पाठ इत्याहुः। **अस्यैवेति**। मिथ्याभूतस्य साधकत्वसाधकप्रमाणस्यैवेत्यर्थः। **अपसिद्धान्तमात्र** इति मूलम्। द्वैतसिद्धिः स्यादिति भाष्याद्विषयसिद्धान्तमात्रमभिधीयत इति स्पष्टं प्रतीयते **नोपपत्तिविरोध इति**। परन्तु प्रतीयमानेऽप्यपसिद्धान्तमात्रे भाष्यकारस्य तात्पर्यं न। किं तूपपत्तिविरोध एव। तस्य स्पष्टमप्रतीतावपि तदभिधानस्य सङ्गततया तत्परताया युक्तत्वादिति योजना। एतेन मात्रपदानुसारेणोभयत्र तात्पर्यमिति प्रतीतिरपास्तेति ज्ञेयम्।

**स०व्र०**— **प्रथमपक्षे वक्ष्याम इति**। इत्यनवस्थितिरित्यस्य व्याख्यावसरे। एतेन प्राग्विकल्पितः सतात्मभूतेनेति पक्षोऽपि निरस्तो वेदितव्य इत्यादिना वक्ष्याम इत्यर्थः। **उपपत्तिविरोध इति हृदयमिति**। यदि नेहनानेतिवाक्यमात्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वप्रतिपादकं स्यात् तर्हि मिथ्याभूतस्यैव साधकत्वमित्येतदर्थसाधकप्रमाणस्यापि मिथ्यात्वप्रतिपादकं स्यात् न च तस्य मिथ्यात्वमङ्गीकर्तुं शक्यं तस्य सत्यत्वाङ्गीकारादित्युपपत्तिविरोध इति भावः।

**विठ्ठ०**— **वक्ष्याम इति**। यदि ब्रह्मातिरिक्तमपीदं प्रमाणं सत्स्यात्तर्ह्येतैरेव प्रतिहतप्रामाण्यमिदं वाक्यं कथं मिथ्यात्वं प्रतिपादयेत् इति उपपत्तिविरोध इति।

**चषकः**— **प्रथमपक्षे वक्ष्याम इति**। 'अविशेषस्य साध्या साधकता पुनरि'त्यादाविति पूरणीयम्। **उपपत्तिविरोध इति**। आत्मातिरिक्तस्य तादृशप्रमाणस्य सत्यतायां तत्रैवैकमेवेत्यादिवाक्यस्य प्रामाण्यमभांक्षीदिति कथमितरमिथ्यात्वं निश्चिन्वीतानाश्वासापत्तेरित्युपपत्तिविरोध इत्यर्थः।

तन्मिथ्यात्वस्य असिद्धिः—

२४३ **सु०— मिथ्यात्वपक्षे दोषमाह न सिद्धं चेति।**

**अनु०— न सिद्धं चान्यसाधनम्।**

**चशब्दोऽवधारणे तुशब्दार्थो वा। सतः अन्यत् मिथ्याभूतं तु साधनं न सिद्धमेव। मिथ्याभूतस्य प्रमासाधनत्वं न सिद्धमेवेति यावत्।**

**परि०—** अन्यसाधनमित्यत्र कर्मधारय इत्युपेत्याह **सतोऽन्यदिति**। चशब्दस्यार्थद्वयमपि योजयति **मिथ्याभूतं त्विति**। न सिद्धमेवेति च।

**वा०चं०—** ननु मिथ्यात्वपक्षे पूर्वं दूषणानुक्तेस्तत्समुच्चायकचशब्दानुपपत्तिरित्यतः प्रकारान्तरेण द्वेधा तदर्थमाह **चशब्द इति**। सर्वस्यापि किञ्चिदपेक्षयाऽन्यत्वाद्विवक्षितमर्थमाह **सत इति**। मिथ्याभूतसाधनस्य धर्मिणोऽसिद्धत्वोक्तेः प्रकृतानुपयोगात्प्रकृतोपयुक्तं विशेषणबललब्धं तात्पर्यमाह **मिथ्येति**।

**वा०र०— प्रकारान्तरेण द्वेधेति**। समुच्चयरूपप्रकारातिरिक्तप्रकारद्वयेनेत्यर्थः। मिथ्याभूतं त्वित्यादिना तदुभययोजना मूले वक्ष्यत इति भावः। **किञ्चिदपेक्षयेति**। तथा च सतोऽपि मिथ्याभूतादन्यत्वेनान्यशब्दात्तस्यापि प्राप्तिः स्यात्। तत्साधकत्वं तु सिद्धमेवेति तदभावोक्त्ययोग इति भावः। **साधनस्य धर्मिण इति**। साधनरूप-धर्मिण इत्यर्थः। धर्मिपुरस्कारेणासिद्धत्वोक्तेरिति यावत्। मिथ्याभूतस्य साधकताया एव निराकरणस्य प्रकृतोप-योगादिति भावः। **विशेषणेति**। सतोऽन्यस्मिन्मिथ्याभूतमिति व्याख्यातान्यपदार्थान्तर्गतमिथ्याभूतमिति विशेषणे-त्यर्थः। बाष्पाद्यारोपितधूमादेर्वह्न्यादिभ्रमजनकता दृष्टेत्यत उक्तं मूले **प्रमेति**।

**विठ्ठ०— न सिद्धमिति**।

२४४ **सु०— इदमुक्तं भवति। यो हि यन्मिथ्या न तत्साधकमिति व्याप्तिमङ्गीकृत्य श्रुतेर्मिथ्यात्वे असाधकत्वं प्रसञ्जयति स मिथ्याभूतस्यैव साधकत्वमित्यर्थसाधनायोपन्यस्त-प्रमाणस्यापि मिथ्यात्वेऽसाधकत्वमापादयिष्यत्येव। तथाच अस्य प्रमाणस्य साधकत्वे सिद्धे मिथ्याभूतस्यैव साधकत्वमित्यर्थसिद्धिः। ततश्च तर्कस्य विरुद्धतासिद्धिः। ततश्चास्य प्रमाणस्य साधकत्वसिद्धिरिति चक्रकप्रसङ्गेन नैकस्यापि सिद्धिरिति।**





**परि०— तर्कस्येति** । यदीदं वाक्यं मिथ्या स्यान्न किञ्चिद्बोधयेदिति तर्कस्य विरुद्ध-हेत्वाभासतेत्यर्थः ।

**यादु०—** नन्वेतत्प्रमाणविरोधात्तर्क एव न स्वार्थसाधक इत्यत आह **तथा चास्येति** ।

**वं०प०— तर्कस्येति** । मिथ्यात्वे साधकत्वं न स्यात् इति तर्कस्य । **ततश्चेति** । तर्कस्य विरुद्धतया दुष्टत्वेन तद्विरोधाभावादिति भावः ।

**वा०चं०—** ननु मिथ्याभूतस्यापि प्रमाणस्य साधनत्वमित्येतत्प्रमेयसाधनायोपन्यस्तप्रमाणस्य मिथ्यात्वरूपकल्पनिरासावसरे प्रमेयासिद्धिकथनं न सङ्गतम् । न चैतत्प्रमेयं न मिथ्याभूतप्रमाणेन साधयितुं शक्यं तर्कविरोधादिति प्रमाणानिराकरणमेवैतदिति वाच्यम् । श्रुतेर्मिथ्यात्वे साधकत्वं न स्यादिति तर्कविरोधस्यात्र अप्रसरादित्यतस्तदप्रसरेऽपि तत्समानन्यायलब्धतर्कविरोधः प्रसरत्येवेत्यभिप्रेत्य तत्प्रकारमुपपादयन् किमनेन दूषणमुक्तं भवतीत्यतस्तत्फलं चक्रकापत्तिरूपं चाह **इदमुक्तं भवतीति** ।

**वा०र०— न सङ्गतमिति** । तत्प्रमाणाभिश्रितदोषस्यैव वक्तव्यत्वादिति भावः । अनया वाचोभङ्ग्या प्रमाणाश्रितदोष एवोक्तप्राय इति भाष्याभिप्रेतं समाधिं शङ्कते **न चैतदिति** । तर्कशब्दविवक्षितमजानान एतद्दूषयति **श्रुतेरिति** । श्रुतेर्मिथ्यात्वसाधकत्वे एतत्तर्कविरोधस्य प्रसङ्गेऽपि मिथ्याभूतमपि प्रमासाधकमित्येतत्साधकं प्रमाणं मिथ्येत्यत्र एकतर्कीयापादकस्याप्रस्तुतत्वेन तदप्रसरादित्यर्थः । सत्यं नोक्ततर्कस्यात्रापि प्रसर इति । किन्तु उक्तप्रमेयसाधकत्वेनोपन्यस्तप्रमाणं मिथ्येति कल्पे विरोधी तर्कोऽन्य एवाङ्गीक्रियत इति भाष्येऽभिप्रेतम् । न च तथाविधतर्कलाभः । मिथ्यात्वं यदीति भाष्यमर्यादयैवोक्ततर्कविषयमिथ्यात्वमात्रपुरस्कारेण यदि मिथ्या तर्हि साधकं न स्यादित्येवं तर्कान्तरस्यापि लाभोपपत्तेरित्याद्याह **तदप्रसरेऽपीत्यादिना** ।

**विठ्ठ०—** प्रतिज्ञामात्रस्य असाधकत्वादित्यतोऽनेन लब्धमर्थं दर्शयति **इदमुक्तं भवतीति** ।

**२४५ सु०— ननु च श्रुतिः स्वव्यतिरिक्तस्य दुःखादेर्मिथ्यात्वं प्रतिपादयन्ती कथमुपपत्ति-विरुद्धेति चेत् । कुतोऽयं श्रुत्यर्थसङ्कोचः । साधकत्वानुपपत्तिप्रमाणबलादिति चेत् । तर्हि प्रमितं विहाय मिथ्यात्ववादिनी कथं दुःखादिमिथ्यात्वमपि प्रतिपादयेत् तस्यापि प्रत्यक्षसिद्धत्वात् ।**

**वं०प०— साधकत्वानुपपत्तिरिति** । नेहनानेतिश्रुतिः स्वव्यतिरिक्तस्यैव मिथ्यात्वं बोधयति न स्वात्मनः । तथात्वे स्वस्यापि मिथ्यात्वप्राप्त्या साधकत्वं न स्यात् । मिथ्याभूतस्य साधकत्वानुपपत्ति-प्रमाणबलादित्यर्थः । प्रमितं साधकत्वेन प्रमितं स्वात्मानम् । **प्रत्यक्षसिद्धत्वादिति** । तथाच श्रुतेः प्रत्यक्षविरोध इति भावः ।





**श्रीनिधि०**— मिथ्यात्वं यदि दुःखादेरित्यत्र शङ्कते **ननु श्रुतिः स्वव्यतिरिक्तस्येति** । तेनैव श्रुति-विरोधाभिधान इति प्रत्यक्षेणैव श्रुतेस्सङ्कोचलक्षणविरोधाभिधान इत्यर्थः ।

**वा०चं०**— ननु माऽस्तु तर्कस्य विरुद्धतयोपपत्तिविरोधानुपपत्तिस्तथाऽपि मिथ्याभूतस्य साधकत्वानुप-पत्तिप्रमाणबलेन श्रुतेरेतच्छ्रुतिव्यतिरिक्तमिथ्यात्वप्रतिपादकतया सङ्कोचे सति तर्कप्रसर एव नेत्युपपत्तिविरोधोद्भावनं न युक्तमेव । न च माऽस्तु तदुपपत्तिविरोधः प्रमाणबलादेतच्छ्रुतिमिथ्यात्वाप्रतिपादकत्ववत्प्रत्यक्षादिप्रमाणबलादविशेषेण दुःखादिमिथ्यात्वाप्रतिपादकत्वमपि श्रुतेः प्राप्तमिति मदिष्टसिद्धिरिति वाच्यम् । श्रुतिविरोधेन प्रत्यक्षमाभासीकर्तु-मुपक्रान्ततया प्रत्यक्षादेस्तत्प्रमाणवैलक्षण्यात् । अन्यथाऽन्योन्याश्रयापातात् । न च तर्हि तवाप्यन्योन्याश्रय इति वाच्यम् । श्रुतेः प्रबलत्वेन मां प्रति तदप्रसरादित्यभिप्रेत्य गूढाभिसन्धिः शङ्कते **नन्विति** । अपसिद्धान्ते वक्तुं शक्येऽपि विरोधकथनप्रसङ्गात्तमेव वक्तुमभिसन्धिमजानान इव पृच्छति **कुत इति** । शङ्किता स्वाभिसन्ध्येकदेशमुद्घाटयति **साधकत्वेति** । असङ्कोचे ह्युपपत्तिविरोध उद्भावितः । सङ्कोचे तु तन्न्यायेन प्रत्यक्षादिविरोधमेवोद्भावयामीत्याह **तर्हीति** ।

**वा०र०**— **तर्कस्येति** । मिथ्यात्वे साधकत्वं न स्यादिति तर्कस्य मया मिथ्याभूतस्यैव साधक-त्वाङ्गीकारादित्यादिना शङ्कितं विरुद्धत्वेन तादृशतर्करूपोपपत्तिविरोधो न वक्तव्य इत्यनुपपत्तिर्मास्त्वित्यर्थः । मिथ्याभूतस्य साधकत्वे प्रमाणनिराकरणादिति पूरणीयम् । **प्रमाणबलेनेति** । भवदुपन्यस्तप्रमाणेत्यर्थः । भवदुपन्यस्तप्रमाणं श्रुत्यर्थपर्यवसानोपयोगितयाऽनुकूलमेव जातमित्याशयः । **तर्कप्रसर एवेति** । श्रुतिर्यदि मिथ्या स्यात् तर्हि साधिका न स्यादिति भाष्योक्ततर्केत्यर्थः । **उपपत्तीति** । उक्ततर्करूपोपपत्तीत्यर्थः । **प्रमाणबलादिति** । मिथ्याभूतस्य साधकत्वानुपपत्तिरूपेति योज्यम् । विशेषव्याप्त्यभावादुक्तमविशेषेणेति । **तत्प्रमाणेति** । मिथ्याभूतस्य साधकत्वं नेत्युक्तप्रमाणेत्यर्थः । तस्य प्रबलत्वेन श्रुत्यर्थसङ्कोचनसामर्थ्येऽपि प्रत्यक्षादेः श्रुतिविरोधादेव न बाधकत्वमिति वदन्तं प्रति तद्विरोधस्य तदर्थसङ्कोचकत्वानुपपत्तेरित्याशयः । अन्योन्याश्रयादित्यादिकमुत्तरमूले स्पष्टम् । **अपसिद्धान्तेति** । आत्मातिरिक्ताया अपि श्रुतेः सत्यत्वा-भ्युपगमेऽपसिद्धान्तप्राप्तेरिति भावः । अवतारावसरे सङ्ग्रहेण मूलार्थानुवादेऽपीदानीं वाक्यानां योजनाकरणात्पुनः पृच्छति कुत इतीत्यादिरूपेण शङ्कादिप्रवृत्तिवर्णनमिति न दोषः । **एकदेशमिति** । वक्ष्यमाणप्रत्यक्ष-विरोधाशक्यत्वापेक्षयैकदेशत्वोक्तिः ।

**विठ्ठ०**— **प्रमितं विहायेति** । उक्तोपपत्तिबलेन सत्यत्वेन प्रमितस्वात्मानं विहाय अन्यस्य मिथ्यात्ववादिनी श्रुतिरित्यर्थः ।

**२४६ सु०— ननु च श्रुतिविरोधेन प्रत्यक्षमाभासीकर्तुं मयोपक्रान्तम् । तेनैव श्रुति-विरोधाभिधाने कथमितरेतराश्रयत्वं न स्यात् । श्रुतेरप्रामाण्ये बाधकाभावात्प्रत्यक्षप्रामाण्यम् । ततश्च तद्विरुद्धत्वेन श्रुतेरप्रामाण्यमिति । हन्त ! तवापि कथमितरेतराश्रयत्वं न स्यात् । श्रुतिप्रामाण्ये तद्विरोधेन प्रत्यक्षाप्रामाण्यम् । ततश्च बाधकाभावेन श्रुतिप्रामाण्यसिद्धिरिति । श्रुतेः प्रबलत्वान्नैवमिति चेन्न । तस्य दूष्यत्वात् । साधयिष्यते च प्रत्यक्षप्राबल्यम् ।**

**परि०— तवापीति** । मिथ्यात्ववादिनोऽपीत्यर्थः ॥ **दूष्यत्वादिति** । उपपत्तिविरोधादिनेति भावः ॥ **साधयिष्यते चेति** । 'ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषत' इत्यादावुपजीव्यत्वेन प्राबल्यं साधयिष्यत इत्यर्थः ॥

**यादु०— तस्य दूष्यत्वादिति** । 'क च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'त्यादाविति शेषः । साधयिष्यत इत्यत्रापि स एव शेषोऽनुवर्तते ।

**वं०प०—** सिद्धान्ती उत्तरमाह **हन्त तवापीति** । शङ्कते **श्रुतेरिति** । तथाच तद्विरुद्धत्वेन श्रुतेरप्रामाण्य-मिति प्रत्यक्षविरोधेन श्रुतेरप्रामाण्यमित्युक्तमयुक्तम् । श्रुतेः प्रबलत्वेन प्रत्यक्षस्य दुर्बलत्वेन श्रुतिप्रामाण्यस्य दुर्बलप्रत्यक्षविरोधानपेक्षत्वेन नान्योन्याश्रयः इति भावः । तस्य प्रत्यक्षापेक्षया श्रुतिप्राबल्यस्य । श्रुतेः सर्व-मिथ्यात्वप्रतिपादिकायाः ।

**श्रीनिधि०— श्रुतिप्रामाण्य इति** । श्रुतेः दुःखादिमिथ्यात्वविषये प्रामाण्य इत्यर्थः । **दूष्यत्वादिति** । क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमित्यादिनेति भावः । नत्वेवं श्रुतिप्रत्यक्षयोः साम्येन प्रत्यक्षस्य बाधकत्व-मित्यत आह **साधयिष्यते चेति** । सत्यत्वात्तेन दुःखादेरित्यादिनेति भावः ।

**वा०चं०—** स्वाभिप्रेतां तदशक्यतां शङ्कते **ननु चेति** । अजानान इव परिहरति **हन्तेति** । शङ्किता स्वनिष्कर्षमुद्घाटयति **श्रुतेरिति** । **दूष्यत्वादिति** । सङ्कोचासङ्कोचयोः प्रत्यक्षोपपत्तिविरोधाभ्यामिति शेषः । अङ्गीकृत्य च साम्यमिदमुक्तम् । वस्तुतस्तु प्रत्यक्षस्यैव प्राबल्यात्सुस्थस्तद्बाध इत्याह **साधयिष्यते चेति** । प्रत्यक्षस्याविशेषत इत्यादिनेति शेषः । अनेनान्यसाधनं मिथ्यात्वसाधकश्रुतिर्न सिद्धं प्रबलत्वेनेति शेष इति भाष्यं व्याख्यातं भवति । अनेन तर्के आपादकासिद्धिश्च परिहृता भवतीति द्रष्टव्यम् ।

**वा०र०— तदशक्यतामिति** । श्रुतिबाधकत्वेन प्रत्यक्षविरोधोद्भावनाशक्यतामित्यर्थः । **सङ्कोचा-सङ्कोचयोरिति** । आत्मातिरिक्तसर्वमिथ्यात्वप्रतिपादकत्वरूपासङ्कोचपक्षे उपपत्तिविरोधः । तद्भयादेव सङ्कोच-





स्वीकारे तु दुःखादिसत्त्वग्राहिप्रत्यक्षविरोध इत्येवं विरोधाभ्यामित्यर्थः। उक्तमूलस्योङ्घाष्यत्वं प्रतिपत्तव्यमित्याशयेनाह **अनेनेति**। प्रयोजनान्तरमाह **अनेनेति**। **आपादकेति**।

**स०व्र०— साधयिष्यते चेति**। सत्यत्वात् तेन दुःखादेरित्यादिना व्युत्पादयिष्यत इति।

**विठ्ठ०— दूष्यत्वादिति**। क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमित्यत्रेति शेषः। **साधयिष्यते**। तत्र प्रत्यक्षस्यापि विशेष इत्यत्र तं च व्युत्पादयिष्यामः पृथगधिकरणे।

**चषकः— दूष्यत्वादिति**। 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'त्यादिनेति पूरणीयम्।

**२४७ सु०— ननु चात्र श्रुतेः प्रत्यक्षविरोधमेवोपन्यस्य तत्प्राबल्यव्युत्पादनं कुतो न कृतम्। किमुपपत्तिविरोधव्युत्पादनेन। उच्यते। परेण ह्यत्राद्वैतपरत्वे तात्पर्यलिङ्गानुगुणत्वं महता प्रबन्धेनोपपादितम्। अतस्तद्विरोध एव परस्य विचाराकौशलप्रकटनाय व्युत्पादितः। उपक्रमादिविरोधस्य चैतदुपलक्षणम्। तं च व्युत्पादयिष्यामः।**

**परि०— व्युत्पादयिष्याम इति**। पृथगुपदेशादित्यादाविति भावः।

**वं०प०— तदिति**। प्रत्यक्षेत्यर्थः। **किमुपपत्तीति**। तद्वाक्यस्याग्रतो भवेदित्यनेनेत्यर्थः अनुगुणपदोपरिभागः। **तद्विरोध एवेति**। यदनुगुणत्वं त्वयोपपादितं तद्विरोध एव। प्रबलोपपत्तिविरोध इति यावदित्यर्थः। **अकौशलेति**। तात्पर्यलिङ्गानुगुणत्वं व्युत्पादयन् भवान् प्रबलोपपत्तिरूपतात्पर्यलिङ्गविरोधं न पश्यति। तथा प्रबलोपपत्तिविरुद्धार्थं महाप्रबन्धेनोपपादयतस्तवाकौशलं प्रकटितं भवतीत्यर्थः।

**श्रीनिधि०— अत्र** नेहनानेतिश्रुतौ। **प्रबन्धेन** वाक्यसन्दर्भेण। **विचारकौशलप्रकटनायेति**। एवम् उपपत्तिविरोधे जागरूके कथं तात्पर्यलिङ्गानुगुण्यमुपपादितं भ्रान्ते वेति अकौशलप्रकटनं द्रष्टव्यम्। अथापि श्रुतेः उपक्रमाद्यानुगुण्यमस्त्येवेत्यत आह **उपक्रमादीति**।

**वा०चं०—** ननु श्रुतेरर्थसङ्कोचे उपपत्तिविरोधासंभवात्प्राबल्यमुपपाद्य प्रत्यक्षविरोधेऽवश्यं वक्तव्ये स एवादितोऽपि वक्तव्यः किमन्तर्गडुनोपपत्तिविरोधेनेत्याशयेन शिष्यो भाष्यकारीयामचातुर्री शङ्कते **ननु चेति**। सप्रयोजनत्वान्नैवमुक्तिर्दोष इत्याह **उच्यत इति**।

**वा०र०— अर्थसङ्कोच इति**। श्रुतिः स्वव्यतिरिक्तात्मान्याशेषप्रपञ्चमिथ्यात्वं प्रतिपादयतीति सङ्कोचपक्ष इत्यर्थः। असंभवात्। श्रुतिमिथ्यात्वमूलकत्वात्तद्विरोधस्येति भावः। तन्न्यायेनेत्यपि पूरणीयम्। प्रत्यक्षस्य

प्राबल्यमुपपाद्येति योज्यम् । उपपत्तिविरोधोद्भावनेऽपि श्रुतेः सत्यत्वमिति सङ्कोचे कृते प्रत्यक्षविरोधस्यानु-सर्तव्यत्वादन्ततोऽनुसर्तव्यः स एव दूषणमस्तु । सङ्कोच इवासङ्कोचेऽपि तत्प्रसरादिति भावः । कथमपि स्वदूषण-प्राप्तेः प्रतिवादिशङ्का नेयमिति भावेन शिष्य इत्युक्तम् । तर्ह्युपक्रमाद्यानुगुण्यस्यापि परेण व्युत्पादितत्वात्तदीय-विचाराकौशलप्रकटनायोपपत्तिविरोधस्येवोपक्रमादिवैगुण्यस्यापि भाष्यकारेण व्युत्पादनीयत्वेन तदभावप्रयुक्त-न्यूनत्वमेवेत्यत आह **उपक्रमादीति** । **व्युत्पादयिष्याम** इति मूलम् ।

**२४८ सु०— ननु मा भूत्तर्कस्य विरुद्धता । तथाऽपि मिथ्याभूतोऽपि स्वाप्नोऽर्थः शुभाशुभयो रेखारोपितो वर्णोऽर्थस्य, प्रतिबिम्बं च बिम्बस्य, स्फटिकलौहित्यं चोपधान-सन्निधानस्य, वर्णदैर्घ्यादिकं चार्थभेदस्य, सवितृसुषिरप्रभृति चारिष्टस्य, साधकमुपलब्धमिति प्रशिथिलमूलत्वेनाभासत्वम् ।**

**परि०**— यदीदं वाक्यं मिथ्या स्यान्न किञ्चिद्बोधयेदिति तर्कस्य व्यभिचारोक्त्या व्याप्तिवैकल्य-माशङ्कते **ननु मा भूदित्यादिना** । उपधानसन्निधानस्य उपाधिसन्निधानस्येत्यर्थः । **प्रशिथिलमूलत्वेन** व्याप्तिविकलत्वेनेत्यर्थः ।

**यादु०— प्रतिबिम्बं चेति** । अयं प्रदेशो बिम्बवान् प्रतिबिम्बवत्त्वादित्यनुमानादित्यर्थः । **वर्णदैर्घ्यादिकं चेति** । नगो नाग इत्यादावित्यर्थः । सवितृसुषिरप्रभृतीत्यत्र प्रभृतिग्रहणेन 'छिद्रां छायां वा पश्येदि'त्यादि-वाक्योक्तस्य ग्रहणम् ।

**वं०प०— प्रशिथिलमूलत्वेनेति** । मिथ्यात्वे साधकत्वं न स्यादिति तर्कस्य स्वाप्नार्थेषु व्यभिचारेण व्याप्तिरूपाङ्गवैकल्येन प्रशिथिलमूलत्वादाभासत्वमित्यर्थः ।

**श्रीनिधि०— उपधानसन्निधानस्येति** । उपाधिसन्निधेरित्यर्थः । **वर्णदैर्घ्यादिकं चेति** । नगो नागः । कृष्णा एहीत्यादि वर्णदैर्घ्यादिकम् । **अर्थभेदस्य** गिरिकुञ्जराद्यर्थभेदस्य । **प्रभृतिशब्देन** नीरश्मिकादित्यमण्डलं गृह्यते । **प्रशिथिलमूलत्वेन** प्रशिथिलव्याप्तिकत्वेन ।

**वा०चं०**— एवं विरुद्धतानिरासकत्वेन मिथ्यायाः साधकत्वं चेति भाष्यं योजयित्वा यन्मिथ्यासवितृ-सुषिरादि तस्य साधकत्वं न प्रतिवादिनः सिद्धम् । यस्य च स्वाप्नार्थादेः साधकत्वं प्रतिवादिनः सिद्धं तन्मिथ्यायाः साधकं न, तत्साधकं मिथ्या नेति यावदिति भाष्ययोजनया, न सिद्धं चान्यसाधनमिति भाष्यस्य वा यत्सतोऽन्यत्तस्य साधकत्वं न सिद्धं, यच्च साधकं तस्य सतोऽन्यत्वं न सिद्धमिति योजनया; तर्कस्य प्रशिथिलमूलत्वनिराकरणपरत्वमस्येत्यभिप्रेत्य प्रशिथिलमूलतामाशङ्क्य निराकरोति **नन्विति** । ननु विरुद्धता।





मभिदधतो व्यभिचारशङ्कनं नोपपद्यते । विरुद्धे उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वलक्षणव्यभिचार-दूषकताबीजासंभवादित्यतो विरुद्धत्वाभावस्योपपादितत्वात् तदभ्युपगमेन प्रत्यवस्थानान्न दोष इत्याशयेन मा भूदित्युक्तम् । **रेखाऽपीति** । तथाच पदस्यार्थे सङ्केतितस्यार्थस्मारकत्वमिव वर्णे सङ्केतितरेखाया वर्णस्मारकत्वमेव नार्थस्मारकत्वम् । अर्थप्रतीतिस्तु वर्णात्मकपदानामर्थे गृहीतसङ्गतिकानां पुंसां वर्णबुद्धिजन्येत्यर्थः ।

**वा०र०— एवं विरुद्धतेति** । यदि मिथ्या स्यात्तर्हि साधकं न स्यादिति तर्कस्य मिथ्याभूतमेव साधकमिति मयाङ्गीकारादापादकस्यापाद्याभावव्याप्तत्वरूपं विरुद्धत्वमिति परशङ्कितविरुद्धतेत्यर्थः । मिथ्याभूतोऽपि स्वाप्नोऽर्थ इत्यादिना शङ्कितस्वाप्नार्थादिस्थलेषु व्यभिचारपरिहाराय यत्साधकं न तन्मिथ्या यच्च मिथ्या न तत्साधकमिति प्रतिज्ञापूर्वकं तदुपपादनं मूले क्रियते तदुद्भाष्यमित्याशङ्कावारणाय प्रतिज्ञामूलस्य मिथ्याया इत्यादिभाष्यद्वयाल्लाभं क्रमेणोपपादयति **यन्मिथ्या सवित्रित्यादिना** । **भाष्ययोजनयेति** । उक्तभाष्ययोजनया वेत्यर्थः । भाष्यस्य वेत्यस्य योजनयेत्युत्तरेण संबन्धः । **अस्येति** । मिथ्याया इति भाष्यस्य न सिद्धं चान्येति वा भाष्यस्येत्यर्थः । **प्रशिथिलमूलतामिति** । मूलभूतव्याप्तौ व्यभिचारेण तच्छून्यतामित्यर्थः । **विरुद्ध इति** । साध्यसंबन्धाभावे सति तदभावेनैव संबन्धवान् विरुद्ध इति हेतुगर्भं पदम् । **अवच्छेदकरूपवत्त्वेति** । साध्यतदभावोभयसंबन्धित्वमेव रूपम् । तद्वत्वलक्षणं यद्बीजमिति संबधः । व्यभिचारिदूषकतेति पाठः स्वरसः । व्यभिचारेति पाठेऽपि धर्मप्राधान्यविवक्षया तथोक्तिः । अत एव मिथ्यात्वखण्डनटीकायामनैकान्तिकस्तु सन्देहमुत्पादयतीत्युक्तमिति ज्ञेयम् । **विरुद्धत्वा-भावस्येति** । नेदं विरुद्धतामाशङ्कमानस्य तस्यामेव दशायां दूषणं अपि तर्हि तेन तर्कस्य विरुद्धताशङ्कानन्तरं सिद्धान्तिना तदभावे समर्थिते सति पुनः परस्योद्भावितां विरुद्धतां परित्यज्य यदानैकान्त्येन प्रत्यवस्थानं करोति तदेदं व्यभिचारचोदनमिति व्यभिचारदूषणताप्रयोजकरूपवत्वलाभः संभवत्येवेत्यर्थः । **तदभ्युपगमेन** । सिद्धान्तिनोपपादितविरुद्धत्वाभावाभ्युपगमेनेत्यर्थः । मूले **वर्णदैर्घ्यादिकमिति** । नगो नाग इत्यादाविति शेषः । प्रभृतिपदेन शङ्काविषादेः परिग्रहः । **वक्ष्यतीति** । भक्तिपादे सन्ध्ये सृष्टिराह हीत्यधिकरण इति शेषः । न च तद्रीत्या व्यभिचारः । तन्मतेऽपि पुरुषं कृष्णं कृष्णदन्तं पश्यतीत्यादिश्रुत्यनुसारेण ज्ञानस्यैव शुभाशुभसूचकत्वात् ज्ञानस्य च वक्ष्यमाणरीत्या सत्यत्वादिति भावः । तथा च पदस्यार्थे सङ्केतितस्येत्यनुवदतैवार्थपदमिवेति मूले संबन्धः प्रदर्शितः । अधिकं न्यायामृतानुसारेण स्पष्टनीयमस्ति । वर्णे सङ्केतितरेखाया इति नित्यसापेक्षत्वात्समासः । तथा पदानामर्थे गृहीतासङ्गतिर्यैरिति पदानामर्थगृहीतसङ्गत्या तेषां पुंसां पदानामर्थे या सङ्गतिस्तद्वहवतामिति योज्यम् । **अर्थे गृहीतसङ्गतिकानामिति** च । नित्यसापेक्षत्वादेव समासः । **पदानामिति** च तथैव ।

**स०व्र०— वक्ष्यति** स्वप्नाधिकरणे । रेखापीति । अर्थे पदमिव रेखा वर्णे सङ्केतितेति योजना ।

**विट्ठ०—** यदीदं वाक्यं मिथ्या स्यात् तर्हि न किञ्चिद्बोधयेदिति तर्कस्य व्यभिचारोक्त्या व्याप्तिवैकल्य-माशङ्कते **ननु मा भूदित्यादिना** । **उपधानसन्निधानस्य** जपाकुसुमाद्युपाधिसन्निधानस्य । **वर्णदैर्घ्यादिकमिति** । नगो नागः निशाम्य निशाम्य इत्यादाविवेत्यर्थः । **प्रशिथिलमूलत्वेन** व्याप्तिविकलत्वेन ।

**२४९ सु०— मैवम् । यतोऽत्र, यत्साधकं न तन्मिथ्या, यच्च मिथ्या न तत्साधकम् । तथा हि स्वप्नस्य तावज्ज्ञानार्थरूपस्य सत्यतां वक्ष्यति । रेखाऽपि वर्णे पदमिवार्थे सङ्केतिता तं स्मारयतीति न किञ्चिदत्र मिथ्याऽस्ति । अत एव रेखामुपलभ्य वर्णमुच्चारयन्ति । प्रतिबिम्बस्य तु सत्यता परेणाप्यङ्गीकृता । विच्छेदस्यापि सत्यतामुपपादयिष्यामः । स्फटिकलौहित्यमपि एतेनैव व्याख्यातम् । दैर्घ्यादयोऽपि ध्वनिष्विव वर्णेष्वपि स्वाभाविका एव । अन्यथा स्वरेष्विव व्यञ्जनेष्वपि ध्वानोपधानवशेन दीर्घादिप्रतिभासप्रसङ्गात् । न तथाविधध्वनिव्यङ्ग्यं व्यञ्जनमिति चेन्न । तथात्वे वर्णेष्वेव विशेषः अङ्गीकार्यः स्यात् । स एव दैर्घ्यादिपदाभिधेयो भविष्यति । सवितृसुषिरप्रभृतिज्ञानमेवारिष्टसूचकम् । वक्ष्यते चैतत् । एवमन्यदप्यूहनीयमिति ।**

**बिन्दुः— रेखामुपलभ्य वर्णमुच्चारयन्तीति** । आरोपे हि रेखायां वर्णस्य रेखोपलम्भस्यैव वर्णोपलम्भत्वेन तदुपलब्ध्योः पौर्वापर्यं न स्यात् अस्ति च तत् । तदेतदुपलभ्येति त्त्वाप्रत्ययेन सूचयति । प्रसङ्गान्तरसूचनात् उच्चारयन्तीति रेखावर्णयोरुच्चार्यत्वविरुद्धधर्मानुसन्धातुरारोपायोगादिति भावः । **दैर्घ्यादयोऽपीति** । एवं च अष्टादशभेदभिन्ना अवर्णेवर्णोवर्णऋवर्णाः पृथक् पृथक् व्यक्तयो व्यापकाः । तथा लृवर्णादयोऽपि । यत्तु लृवर्णो न दीर्घोऽस्तीति वैयाकरणैरभ्युपगतं तत्तु साधुत्वव्युत्पादने दीर्घताप्रयुक्तं कार्यं नास्तीत्यभिप्रायेण । अत एवागमशास्त्रप्रामाण्येन मातृकान्यासादौ दीर्घलृकारं न्यस्यन्ति । भगवत्पादैश्च तन्त्रसारे लृशलृजिरूपभगवन्मूर्तिविशिष्टह्रस्वदीर्घयोर्द्वयोरपि न्यासः । प्रत्ययादिओकारादि-सन्ध्यक्षराणि तु द्वादशभेदभिन्नानि । तत्र एकारओकारयोर्ह्रस्वत्वमपि क्वचित् श्रूयते । तथाच महाभाष्ये 'पतञ्जलिरुदाजहार सुजाते अश्वसूनृते । अध्वर्यो अद्रिः सुतमि'त्यत्र सात्यमुग्रीयाः राणायनीयाश्च छन्दोगा अर्द्धमेकारमर्द्धमोकारं च पठन्तीति । तथाच तत्राप्यष्टादश भेदाः सिध्यन्ति । एवं प्लुतेऽपि चतुर्मात्रोवसाने इत्यनुवाक्यामन्तेपव्यपमानस्य? प्रणवस्य चतुर्मात्रताऽप्यधिको विशेषः । श्रौतसूत्रप्रामाण्यात् इत्यादिप्रमाणल......यत्प्रामाणिकमायास्यति तावद्वर्णजातं वास्तवमेव तत्तत्त्वेन विशिष्ट..........मिति भावः । ननु तत्र........पञ्चाशद्वर्णा इत्याद्युद्घोषस्य का गतिरिति चेत् । आगमशास्त्रोक्तन्यायोपयुक्तानामेव तत्र गणनात् । अतः संयुक्ताक्षररूपक्षकारस्यापि समुदायैक्यविवक्षया गणनं तत्समयोगाद्वा आकारस्यापरिगणनं च युज्यते । न्यासोपयोगिवर्गान्तर्गतभगवन्मूर्तीनां तावतीनामेव तत्रोपादानात् । एतेन ह्रस्वत्वदीर्घत्वाद्यष्टादशधर्मोपेता एकैकवर्णव्यक्तिरस्त्वित्यपास्तम् । आगमशास्त्रे उभयोपादान-

विरोधात् । अन्यथा अलेखकत्वखत्वाद्यनेकधर्मोपेता एकैव वर्णव्यक्तिरित्यस्याप्यापातात् । **एवमन्यदप्यूहनीयमिति** । रज्वारोपितसर्पज्ञानस्यैव भयकम्पजनकत्वं नत्वारोपितसर्पस्येत्यादीत्यर्थः ।

परि०— **यतोऽत्रेति** । उदाहृतस्वाप्नादिपदार्थेषु । अतो मैवमित्यन्वयः ॥ **वक्ष्यतीति** । तृतीये भक्तिपादे 'सन्ध्ये सृष्टिराह हि' इत्यत्र ॥ **प्रतिबिम्बस्य त्विति** । अन्यथा बिम्बस्य प्रतिबिम्बेनाभेदोक्त्ययोग इति भावः । भेदविशिष्टस्यास्ति मिथ्यात्वमित्यत आह **विच्छेदस्येति** । बिम्बप्रतिबिम्बभेदस्यापीत्यर्थः ॥ **उपपादयिष्याम इति** । 'पृथगुपदेशात्' 'अत एव चोपमा सूर्यकादिवत्' इत्यादाविति भावः ॥ **एतेनैवेति** । प्रतिबिम्बतद्भेदयोः सत्त्वकथनेनेत्यर्थः । लौहित्यस्यापि प्रतिबिम्बत्वादिति भावः । **स्वरेष्विवेति** । अकारादिवर्णेष्विवेत्यर्थः । 'अचः स्वरा' इत्युक्तेः । व्यञ्जनेषु ककारादिष्वित्यर्थः ॥ **वक्ष्यते चैतदिति** । आनुमानिकपादे 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम्' इत्यादाविति भावः ॥ **एवमन्यदप्यूहनीयमिति** । शङ्काविषं च मरणस्येत्याद्यपि विषत्वशङ्काया एव मृतिहेतुत्वमित्येवंरूपेणेत्यर्थः । प्रपञ्चितमेतन्न्यायामृते 'असतः साधकत्वाभावे बाधकोद्धार'वादे ।

यादु०— **अत्र** उदाहरणसमुदाये । **यच्चेति** । सवितृसुषिरप्रभृतीत्यर्थः । **वक्ष्यतीति** । भक्तिपाद इति शेषः । **प्रतिबिम्बसत्यतेति** । बिम्बाभिन्नत्वाङ्गीकारादिति भावः । उक्तं हि पञ्चपादिकायाम् 'अहंकर्तुरनिदमंशो बिम्बादिवत्प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरं किन्तु तदेव तदि'ति । एवं च सत्यस्यैव साधकत्वमित्याशयः । नन्वथाऽपि तद्विच्छेदस्यैव मिथ्याभूतस्यैव कार्यसाधकता दृष्टेत्यत आह **विच्छेदस्यापीति** । **उपपादयिष्याम इति** । 'किञ्चित्सादृश्यमपीश्वरे नासुरानृत' इत्यत्रेति शेषः । **स्फटिकलौहित्यमपीति** । तस्यापि प्रतिबिंबरूपत्वादिति भावः । **अन्यथेति** । वर्णेषु स्वाभाविकदैर्घ्याद्यभावेन ध्वन्युपाधिकदैर्घ्याङ्गीकार इत्यर्थः । **स्वरेष्विति** । अकारादिष्वित्यर्थः । **तथात्व इति** । स्वराक्षरेष्वकारादिषु दीर्घादिध्वनिव्यङ्ग्यतावच्छेदकत्वेन कश्चन धर्मोऽङ्गीकार्यः । अन्यथा प्रागुक्तातिप्रसक्तेरिति भावः । **वक्ष्यतीति** । 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकमि'त्यत्रेति शेषः । ननु तथाऽपि मिथ्याभूते स्वाप्नकामिनीसंभोगादौ चरमधातूत्सर्गसाधकत्वं, शङ्कितविषे च मरणसाधकत्वं, दृष्टमिति व्यभिचार इत्यत आह **एवमिति** । स्वाप्नकामिनीसंभोगज्ञानस्यैव चरमधातूत्सर्गसाधकत्वं, विषशङ्काजनितधातुव्याकुलताया एव मरणसाधकत्वमित्यूहनीयमित्यर्थः ।

वं०प०— तर्के व्यतिरेकान्वयव्याप्त्योरुभयोरपि नोक्तस्थलेषु व्यभिचार इत्याशयेनाह **योऽत्रेति** । स्वाप्नादिष्वित्यर्थः । **सङ्केतितेति** । अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा सङ्केत इति उच्यते । इदं च तार्किकरीत्यैव । स्वमते पदानामर्थैः संबन्धस्य स्वाभाविकताया 'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिद्ध्यत' इति वक्ष्यमाणत्वादित्यवधेयम् । ननु प्रत्यक्पराग्भावादिना विच्छेदो भेदस्तावद्बिम्बप्रतिबिम्बयोरुपलक्ष्यते । स च





मिथ्या । तथाच मिथ्याभूतस्यापि विच्छेदस्य स्वोचितार्थक्रियासाधकत्वमुपलब्धमित्यत आह **विच्छेदस्यापीति** । बिम्बप्रतिबिम्बयोरैक्यखण्डनेन तद्विच्छेदस्य सत्यतोपपादयिष्यत इत्यर्थः । **अन्यथेति** । वर्णेषु स्वाभाविक-दैर्घ्याद्यनङ्गीकार इत्यर्थः । **स्वरेष्विति** । दीर्घध्वनिसंबन्धेनाकारादिषु यथा दैर्घ्यादिप्रतिभासस्तथा य् व् इत्यादिव्यञ्जनेष्वपि तादृशदीर्घध्वनिसन्निधानवशेन दैर्घ्यं प्रतिभासेत । स चानुभवविरुद्धः । तथाच वर्णगताः स्वाभाविका एव दैर्घ्यादयो दीर्घध्वनिभिर्व्यज्यन्त इति भावः । शङ्कते **न तथाविधेति** । यादृशदीर्घध्वनिभिः स्वराक्षराणामभिव्यञ्जनं भवति तादृशध्वनिव्यङ्ग्यं व्यञ्जनं न भवतीति न तत्र दैर्घ्यादिप्रतिभास इत्यर्थः । **वर्णेष्वेवेति** । तथाच स्वराक्षरादिष्वकारादिषु दीर्घध्वनिव्यङ्ग्यतावच्छेदकत्वेन कश्चन धर्मोऽङ्गीकार्यः । स एव दैर्घ्यादिपदवाच्यो भविष्यतीत्यर्थः ।

**कं०रा०**— ननु प्रतिबिम्बस्य स्वरूपेण सत्यत्वेऽपि भेदविशिष्टरूपेण मिथ्यात्वमस्त्येवातो भेदविशिष्टं प्रतिबिम्बं बिम्बानुमापकं सद्यन्मिथ्या न तत्साधकमिति व्याप्तेर्व्यभिचारस्थलं भविष्यतीत्यत आह **विच्छेदस्येति** । भेदस्यापि सत्यताया उपपादयिष्यमाणत्वान्न भेदविशिष्टरूपेण प्रतिबिम्बस्य मिथ्यात्वमिति न तद्व्यभिचारस्थलमिति भावः । **स्फटिकेति** । स्फटिकलौहित्यमप्येतेनैव प्रतिबिम्बस्य सत्यत्ववचनेनैव व्याख्यातम् । जपाकुसुमलौहित्यस्य स्फटिके प्रतिबिम्बितत्वादिति भावः । **अन्यथेति** । वर्णेषु स्वाभाविकदैर्घ्याद्यनङ्गीकारे ध्वन्युपधानवशादेव तत्र दैर्घ्यादिप्रतिभासाङ्गीकारे स्वरेष्विव व्यञ्जनेष्वपि ध्वन्युपधानस्य सत्त्वाद्दैर्घ्यादिप्रतिभासः स्यादित्यर्थः । **तथात्व इति** । व्यञ्जनस्य ध्वनिविशेषव्यङ्ग्यत्वाभावे तद्व्यङ्ग्येषु स्वरेषु ध्वनिविशेषव्यङ्ग्यतावच्छेदको विशेषोऽङ्गीकर्तव्यः स्यात् । एवं च स एव विशेषो दैर्घ्यादिपदार्थोऽस्त्विति न वर्णदैर्घ्यादिकं मिथ्याभूतमिति भावः ।

**श्रीनिधि०**— **ज्ञानार्थरूपस्य** ज्ञानरूपस्यार्थरूपस्येत्यर्थः । **वक्ष्यति** सन्ध्ये सृष्टिराह हीत्यधिकरणे । **अत एव रेखामुपलभ्येति** । अत एव रेखायाः वर्णेषु सङ्केतितत्वादेव । आदौ रेखां रेखात्वेन दृष्ट्वा पश्चात् वर्णमुच्चारयन्ति वर्णानां रेखास्वारोपितत्वे आदौ रेखात्वेन रेखोपलम्भो अनुपपन्नः स्यादिति भावः । **पदमिवेति** न्यायरीत्या । अस्मन्मते तु पदस्यार्थे स्वाभाविकी शक्तिरित्यङ्गीकारात् । प्रतिबिंबस्येति दर्पणादि स्वद्रव्य-सन्निकृष्टनायनरश्मयः दर्पणादिना पराहताः मुखादिसन्निकृष्टा मुखादिकमेव गृह्णन्तीत्यभ्युपगमेन बिम्बातिरिक्त-प्रतिबन्धस्य (धर्मिणस्सत्यत्वेऽपि भेदादिविशिष्टस्य मिथ्यात्वात् न मिथ्याभूतस्य साधकत्वभङ्ग इत्यत आह) अनङ्गीकृतत्वेन प्रतिबिम्बस्य सत्यतापरेणाप्यङ्गीकृतेति भावः । ननु प्रतिबिम्बस्य धर्मिणः सत्यत्वेऽपि भेदादि-विशिष्टस्य मिथ्यात्वान्न मिथ्याभूतस्य साधकत्वभङ्ग इत्यत आह **विच्छेदस्येति** । भेदस्येत्यर्थः । उपपाद-यिष्यामः । मिथ्यैव भेदो विमत इत्यादिनेति भावः । **स्फटिकलौहित्यमप्येतेनेति** । एतेन प्रतिबिम्बस्य सत्यता-प्रतिपादनेनेत्यर्थः । मुखादेर्यथा दर्पणादिषु प्रतिफलनमेवं जपाकुसुमादिरक्तिम्नोऽपि स्फटिकादौ प्रतिफलनादिति भावः । तथात्व इति व्यञ्जनानां तादृशध्वनिव्यङ्ग्यत्वाभावे । अचां तथाविधध्वनिव्यङ्ग्यत्वे च प्रयोजको धर्मविशेषोऽङ्गीकरणीयः स्यादिति भावः । **वक्ष्यते चैतदिति** । सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशमित्यादिनेति भावः । **एवमन्यदिति** । नीरश्मिसूर्यादिज्ञानमेवेत्यादीति भावः ।



**वा०चं०— न किञ्चिदत्रेति** । रेखासङ्केतवर्णबुद्धीनामेवात्र सत्त्वात्तेषु न मिथ्याभूतं किञ्चिदस्तीत्यर्थः । पूर्वत्र, जाग्रत्त्वस्य मिथ्यात्वेऽपि न साधकत्वं, साधकस्य चार्थज्ञानरूपस्य न मिथ्यात्वमिति विभागवत्प्रकृते न स इति भावः । अत एव वर्णात्मकपदानामर्थे सङ्गतिग्रहाभावे रेखादर्शनेऽपि नार्थबुद्धिः किन्तु वर्णस्मरणाधीनं वर्णोच्चारणमात्रमित्याह **अत एवेति** । रेखादर्शनस्य वर्णस्मारकत्वादेवेत्यर्थः । अत एव तत्तद्देशभेदेन लिपिभेदेऽपि वर्णस्मरणं सर्वेषामविशिष्टमिति भावः । प्रतिबिम्बस्वरूपस्य मिथ्यात्वं न तावत्परमतेन नापि स्वमतेनेति तदुपन्यास एवानुचित इत्याह **प्रतिबिम्बस्येति** । ननु नानुचितः तदुपन्यासः प्रतिबिम्बस्य स्वरूपेण सत्यत्वेऽपि तस्य बिम्बैक्येन साध्यावैशिष्ट्येन बिम्बसाधकत्वानुपपत्त्या विच्छेदोपेतस्य साधकत्वे वक्तव्ये विच्छेदस्य च मिथ्यात्वात्तदुदाहरणं युक्तमेवेत्यत आह **विच्छेदस्यापीति** । यद्वा प्रतिबिम्बशब्देन तद्विच्छेद उच्यते बिम्बशब्देन च तद्व्यवस्थाविशेषः । एवं च 'नेक्षेतोद्यन्तमादित्यमि'त्युद्यदादित्यदर्शननिषेधेऽपि तत्प्रतिबिम्बदर्शनानिषेधः, वारिस्थसूर्यदर्शननिषेधेऽपि गगनस्थतद्दर्शनानिषेधः, प्रतिबिम्बदर्शनेऽपि दृष्ट्वा स्नायादिति शास्त्रार्थानुष्ठानं, बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामत्वमित्यादिव्यवस्थाया विच्छेदसाध्यत्वात्तस्य च मिथ्यात्वात्तदुपन्यास इत्यत आह **विच्छेदस्यापीति** । बिम्बप्रतिबिम्बयोरैक्ये प्रमाणनिराकरणेन भेदे 'यथैषा पुरुषेच्छाये'त्यागमोदाहरणेन च 'अत एव चोपमे'त्यधिकरणे व्युत्पादयिष्याम इत्यर्थः । **स्फटिकेति** । स्फटिकलौहित्यस्यापि प्रतिबिम्बत्वादिति भावः । ननु ध्वानोपाधिवशेनैव दीर्घादिप्रतिभासोपपत्तेर्न वर्णेषु तत्कल्पकमित्यत आह **अन्यथेति** । **तथाविधेति** । दीर्घेत्यर्थः । **तथात्व इति** । ध्वनावेव दीर्घत्वमिति वदतः स्वरेष्विव व्यञ्जनेष्वपि दीर्घादिप्रतिभास आपाद्यत एवाविशेषादतस्तत्प्रयोजकविशेषं वर्णेष्वङ्गीकृत्य तत्परिहारेऽर्थस्याङ्गीकारान्नाममात्रे च विवादाभावेन तस्यैव विशेषस्य दीर्घादिपदाभिधेयत्वात् ध्वनावेव दीर्घत्वमिति न युक्तमिति भावः । एतच्च वस्तुगतिमनुरुद्ध्योक्तम् । दैर्घ्यादिज्ञानस्यैव नगो नाग इत्यादावर्थविशेषप्रतीतिजनकत्वाद्दैर्घ्यादिरसत्त्वेऽपि तस्य सत्यत्वात्सवितृसुषिरज्ञानस्येव वक्ष्यमाणरीत्योपपत्ति-रित्यपि द्रष्टव्यम् । **ज्ञानमेवेति** । तच्च सत्यमेवेति भावः । नन्वर्थानवच्छिन्नज्ञानस्यातिप्रसङ्गेनाहेतुत्वात्तदव-च्छिन्नज्ञानस्य हेतुत्वेऽर्थस्यापि हेतुत्वं प्राप्तमेवेत्यतो ज्ञाने विषयानुपाधिकस्वसामग्र्यासादितस्वतोवैलक्षण्यस्य 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृश'मित्यादौ वक्ष्यमाणत्वान्नार्थानवच्छिन्नस्य हेतुत्वेऽप्यतिप्रसङ्ग इत्याशयेनाह **वक्ष्यति चेति** । **एवमन्यदपीति** । शङ्काविषेऽपि शङ्कानिमित्तभयजन्यधातुव्याकुलतैव मरणहेतुर्न विषम् । भारतयुद्धे शक्तिविशेषाद्घटोत्कचादिसृष्टं गजादि च सत्यमेवार्थक्रियाकारीत्याद्यूह्यमिति भावः ।

**वा०र०—** न किञ्चिदत्रेत्यत्र नात्र किञ्चिदिति संबन्धं प्रदर्शयन्नेव किञ्चिदित्येतद्विवृणोति **नात्रेतीत्यादिना** । रेखासङ्केतेत्यादि चतुर्णामेव हि रेखारोपितेति त्वदुपन्यस्तस्थले प्रतिभासः । नत्वन्यत्किञ्चिद्भासते । तथा च प्रतिभासमानानां चतुर्णामेव सत्त्वाद्भास्यतया विद्यमानत्वात् । अत्र चत्वार्येव भासमानानि विद्यन्त इति यावत् । तेषु च नैकमपि मिथ्याभूतमस्ति विद्यत इति योज्यम् । यच्च मिथ्येत्येतद्विवृण्वन्नेव किञ्चित्पदाभिप्रायमाह **पूर्वत्रेति** । अत एव तत्तदिति रेखादर्शनानन्तरं वर्णस्मरणमेव नार्थबुद्धिरित्यत एवेत्यर्थः । तत्तद्देशलिपिभेदे अपिपदाल्लिप्यैक्ये वा तत्तल्लिपिरूपरेखादर्शनेन तेषां तेषां तत्तद्वर्णस्मरणमात्रं भवतीति वर्णस्मरणमनुगतं अर्थप्रत्ययस्त्वव्यवस्थितो न

रेखादर्शनकार्यमिति भावः । युक्तमेवेतीत्यत्रेति शब्द आवर्तते । आद्यो हेत्वर्थे । ततश्च युक्तमेवेति हेतोरिति लाभान्नानुचित इत्यनेन संबन्धोपपत्तेर्हेत्वनभिधानशङ्कानवकाशः । तदुदाहरणस्य युक्तत्वादिति पर्यवसानात् । **एतेनैव व्याख्यातमिति** मूले प्रकृतं बिम्बसाधकत्वेनोपन्यस्तं प्रतिबिम्बं हि सत्यतया व्याख्यातम् । तेन व्याख्यातेनैव स्फटिकलौहित्यमपि सत्यतया व्याख्यातमिति प्रमेयमात्रमुच्यते । न तु तत्र कश्चन हेतुस्तो मूले विवक्षितं हेतुमाह **स्फटिकलौहित्यस्यापीति** । तथा च स्फटिकलौहित्यं जपाकुसुमगतलौहित्यस्य प्रतिबिम्बरूपं स्वयं सत्यमेव दृष्टं सज्जपाकुसुमरूपोपाधिसन्निधानस्य साधकमिति न तत्र मिथ्याभूतस्य साधकतेति मूलाशयः । **ध्वानोपाधीति** । उपाधीत्यनुवादेनैवोपधानपदं विवृतम् । ध्वानं ध्वनिस्तद्रूपोपाधिवशेनेत्यर्थः । दीर्घत्वादिधर्मवद् ध्वनिरूपोपाधि-संबन्धो हि वर्णेष्वस्ति । ध्वनिव्यङ्ग्यत्वाद्वर्णानाम् । तथाच व्यञ्जकध्वनिगतादैर्घ्यादि यो धर्मस्तद्व्यङ्ग्य-भूताकारादिवर्णेषु प्रतिभासन्त इत्येवंवर्णगतदैर्घ्यादिप्रतिभासस्यान्यथासिद्धत्वान्न वर्णेषु दैर्घ्यादिकल्पकं किञ्चिदिति तेषु तदारोप एवेत्याशयः । **अन्यथेतीति** । दैर्घ्यादियुक्तध्वनिव्यङ्ग्यताप्रयुक्तमेव दैर्घ्यादिवर्णेषु प्रतिभासत इत्यङ्गीकारे तद्व्यङ्ग्यत्वाविशेषादकारादिस्वरेष्विव ककारादिव्यञ्जनेष्वपि तत्प्रतिभासः स्यादित्यर्थः । दीर्घेति भावप्रधानं मूले दीर्घत्वादिप्रतिभासः स्यादित्यर्थः । मूलानुसारेण टीकायां दीर्घादीत्येवोक्तम् । दीर्घादिपदं दैर्घ्यादिविशिष्टार्थकमिति धर्मिप्राधान्येनोक्तमिति वा । **दीर्घेत्यर्थ इति** । अत्र टीकायां दीर्घादीति पूर्ववाक्ये दीर्घादिप्रतिभास इत्युत्तरवाक्ये च प्रयोगादादिपदार्थविवक्षासिद्धे दीर्घादिरूपेत्यर्थ एव विवक्षितः । एवं दीर्घत्वमिति वदत इत्यत्रापि दीर्घत्वादिकमिति वदत इति व्याख्येयम् । आपत्तौ विशेषव्याप्त्यभावेऽपि सामान्यव्याप्तिरस्तीत्याह **अविशेषादिति** । **तत्प्रयोजकेति** । स्वरेष्वेव दीर्घादिप्रतिभासो यस्तत्प्रयोजकं व्यञ्जनव्यावृत्तमकारादिवर्णेष्वेव कञ्चनविशेषमङ्गीकृत्य तदभावादेव च व्यञ्जनेषु दीर्घादिप्रतिभासपरिहाराङ्गीकार इत्यर्थः । **अर्थस्येति** । प्रतिभासविषयसद्भावादेव स्वरेषु तत्प्रतिभास इति प्राप्तेरिति भावः । अर्थसत्त्वं प्रतिपादयता आरोप इति परोक्तं खण्डितं भवति । ननु यस्य दैर्घ्यदिरारोप उच्यते न तदेव व्यञ्जनव्यावृत्तम् । तत्प्रतिभासप्रयोजकमिति कथमर्थसत्तादीत्यत उक्तं **नाममात्रे चेति** । ध्वनिषु दैर्घ्यादिस्वाभाविकं स्वप्रतिभासनिमित्तमुपलब्धम् । स्वरेष्वपि व्यञ्जनव्यावृत्तो विशेषस्तत्प्रतिभासप्रयोजकतया योऽङ्गीक्रियते स एव दैर्घ्यादिपदाभिहितो विषय इति मयोच्यते । ततो दैर्घ्यादिरेव ध्वनिष्विव स्वरेष्वपि सत्त्वं प्राप्तम् । तस्य विशेषत्वमेव न दैर्घ्यादित्वमिति नाममात्रे विवादस्य व्यर्थत्वेनायोगात् । अन्यथा ध्वनिष्वपि विशेष-मादायैव तत्प्रतिभासोपपादनसंभवात् स्वाभाविकं दैर्घ्यादिकं न स्यात् । तथा च ध्वनिष्वेव दीर्घत्वादीति न युक्त-मित्यर्थः । वर्णेषु दैर्घ्यादिकं प्रतिभासमानमेवार्थप्रत्ययजनकमिति दैर्घ्यादिकमारोपितं नगो नाग इत्यादावर्थभेदस्य साधकं न । किन्तु तज्ज्ञानमेवेत्येव सवितृसुषिरादाविव समाधिः किं न क्रियते । तावतापि व्यभिचारपरिहारेण परमुखमुद्रणसंभवात् तत्किं वर्णेष्वेव दैर्घ्यादिव्युत्पादनायासेनेत्यत आह **एतच्च वस्तुगतिमिति** । सवितृसुषिरज्ञानेऽपि कथं तज्ज्ञानमात्रस्य हेतुतेत्यत उक्तं **वक्ष्यमाणरीत्येति** । अनुपदमेवेति शेषः । ज्ञानसाधकतास्वीकारेऽनुपपत्त्यभावं प्रतिपादयितुं पूरयति **तच्चेति** । **अर्थानवच्छिन्नस्येति** । ज्ञानत्वस्यैवारिष्टसाधकतावच्छेदकत्वे घटादिज्ञानस्यापि तत्स्यादित्यतिप्रसङ्गेनेत्यर्थः । **तस्यापीति** । यद्विशिष्टस्य भवति तद्विशेषणस्यापि भवतीति न्यायेनेति पूरणीयम् । यद्यपि घटप्रागभावादेर्घटादिकारणत्वेऽपि घटादेस्तदभावः ब्रह्माज्ञानादेः संसारादिकारणत्वेऽपि ब्रह्मादेस्तदभाव इत्यादि





प्रकारेण यद्विशिष्टस्येति न्यायस्य भङ्गोऽपि वक्तुं शक्यस्तथापि स्पष्टत्वाच्छिष्यैरेव स ऊह्यतामिति भावेन वस्तुस्थितिरेव भाष्यकारीयो वक्ष्यमाणा अभिहितेति ज्ञेयम् । **शङ्काविषेऽपीति** । विषादावपीत्यर्थः । अत्र न्यायामृतानुसारेणाधिकं तत्र तत्र ज्ञेयम् ।

**स०व्र०— अत एवेति** । रेखायाः वर्णे सङ्केतितत्वादेव रेखामुपलभ्य वर्णमुच्चारयन्ति । वर्णस्य तत्रारोपितत्वेनोपलम्भो न युक्तः रजतारोपदशायां शुक्तित्वप्रकारकज्ञानाभावदर्शनादिति भावः । **प्रतिबिम्बस्येति** । दर्पणादिसन्निकृष्टा नायनरश्मयो दर्पणेनोपहता मुखादिकमेव विषयीकुर्वन्तीति परैरङ्गीकारादिति भावः । ननु बिम्बाभिन्नत्वेन प्रतिबिम्बस्य सत्यत्वेऽपि बिम्बप्रतिबिम्बविभागो न सत्य इत्यत आह **विच्छेदस्यापीति** । 'अत एव चोपमे'त्यत्र । **व्याख्यातमिति** । **स्फटिकलौहित्यमप्येतेनेति** । एतस्यापि प्रतिबिम्बसमानयोगक्षेमत्वादिति भावः । ध्वानोपधानं ध्वनिरूप उपाधिः । **वक्ष्यति चैतदिति** । 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशमि'त्यादिना । **एवमन्यदपीति** । शङ्काविषादिकमित्यर्थः ।

**विठ्ठ०— वक्ष्यते** स्वप्नाधिकरणे । **परेणाप्यङ्गीकृतेति** । प्रतिबिम्बं तु ब्रह्मणो न वस्त्वन्तरं किन्तु तदेव तदिति विवरणकृता प्रतिबिम्बस्य बिम्बाभिन्नताङ्गीकृता इत्यर्थः । तथापि भेदस्य मिथ्यात्वात् तद्विशिष्टप्रतिबिम्बस्यापि मिथ्यात्वमित्यत आह **विच्छेदस्येति** । अत एव चोपमा सूर्यकादिवदित्यत्रेति शेषः । **एतेन** प्रतिबिम्बस्य सत्यताकथनेन । स्फटिकगतलौहित्यस्यापि जपाकुसुमगतलौहित्यप्रतिबिम्बत्वाभावः । अचः स्वराः । हल् व्यञ्जनम् । ध्वानोपधानवशेन ध्वन्याख्योपाधिवशेन । **वर्णेष्वेवेति** । स्वराभिधवर्णेष्वेव तादृशदीर्घव्यक्तधर्मविशेषोऽङ्गीकार्य इति भावः । **वक्ष्यते** 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशमि'त्यत्रेति शेषः । ननु शङ्कितविषादेरपि मरणसाधकत्वं दृष्टमिति व्यभिचार इति चेन्न विषशङ्काजनितधातुव्याकुलताया एव मरणसाधकत्वेन मिथ्याभूतस्यादर्शनात् विषस्य मिथ्यात्वेऽपि विषशङ्कारूपज्ञानस्य सत्यत्वात् । तदेतदाह **एवमन्यदपीति** ।

**चषकः— प्रतिबिम्बस्य सत्यतेति** । बिम्बप्रतिबिम्बयोरैक्योपगतेरिति भावः । **विच्छेदस्यापीति** । नेक्षेतोद्यन्तमित्यादिनोद्यदादित्यदर्शननिषेधेऽपि तत्प्रतिबिम्बदर्शनानिषेधः । वारिस्थमिति प्रतिबिम्बदर्शननिषेधेऽपि बिम्बदर्शनानिषेधः । बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामत्वादीतिव्यवस्थानिर्वाहकस्य भेदस्येत्यर्थः । **उपपादयिष्यत इति** । भक्तिपाद इति पूरणीयम् । **व्याख्यातमिति** । तस्यापि बिम्बरूपत्वादिति भावः । **स्वाभाविका एवेति** । नगो नाग इत्यादाविति भावः । स्वरेषु अज्वर्णेषु । व्यञ्जनेषु हल्वर्णेषु । **वक्ष्यतीति** । 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशमि'त्यादिनेत्युपस्कर्तव्यम् । **अन्यदिति** । स्वाप्नकामिनीज्ञानादिकमेव चरमधातूत्सर्गजनकमित्यादिकमित्यर्थः ।





**२५० सु०— तस्मात्पदवाक्यप्रमाणविदामग्रेसरेण परमास्तिकेन भगवता भाष्यकारेणोक्तो भगवति स्वरूपभेदाभाव एव श्रुत्यर्थोऽवधेयः ।**

**बिन्दुः— परमास्तिकेनेति** । सर्वमिथ्यात्वपरतया व्याचक्षाणस्य हि मायिनो मतेऽपि मिथ्यात्वापातेनाप्रामाण्यापत्या नास्तिकतायां पर्यवसानमिति भावः ।

**परि०—** नन्वेवं श्रुतेः सर्वमिथ्यात्वार्थकत्वाभावे निरर्थकत्वेनाप्रामाण्यं स्यादित्यत आह **तस्मादिति** ।

**वं०प०— परमास्तिकेनेति** । श्रुतिसिद्धार्थस्य मिथ्यात्वं वक्तुः परकीयभाष्यकारस्य नास्तिकत्वादिति भावः । **श्रुत्यर्थः** नेहनानेति श्रुत्यर्थः ।

**कं०रा०— श्रुत्यर्थः** नेहनानेति श्रुत्यर्थः ।

**वा०चं०—** ननु श्रुतेरपौरुषेयत्वेन सर्वथाऽप्रामाण्यासंभवादर्थान्तरस्य चोपपन्नस्याभावात्केनचिदुपायेनोपपत्तिविरोधं परिहृत्यैतदर्थकत्वमेवाङ्गीकार्यमित्यत आह **तस्मादिति** । परोक्तार्थवन्नात्राविश्वसनीयत्वमिति भावेनोपात्तं यद्भगवानिति भाष्यकारीयविशेषणं तदुपपादनं **पदेत्यादि** । संभावकहेतुकथनं **परमेति** ।

**वा०र०— सर्वथाऽप्रामाण्येति** । निर्विषयत्वरूपाप्रामाण्येत्यर्थः । स्वपक्ष इत्यतः प्राक् नन्वितीति प्रतीकोपादानं मूलकोशे स्थितम् । नन्वयमपि पक्षोऽनुपपन्न इत्यादिरवतारश्चासीत् । तत्र तदवतारस्य कुण्डलिकाकारेण नाशार्थं प्रवृत्तेन दैवात्प्रतीकग्रहणमपि नाशितमिति तथैव पाठो जातः । वस्तुतो नन्वितीति प्रतीकोपादानपाठः स्वरसः ।

**विठ्ठ०—** ननु तर्हि नेहनानेतिश्रुतेर्निरर्थकतयाऽप्रामाण्यं स्यादित्यत आह **तस्मादिति** ।

**प्रदीपः—** नेह नानेत्यादिवाक्यस्य मिथ्यात्वसाधकत्वं नास्तीत्युपपादितं कस्तर्हि तस्य वाक्यस्यार्थ इत्यत आह **तस्मात्पदवाक्येति** ।

**२५१ सु०— नन्वत्राप्यनुपपत्तिरेव । यतो नानेति नानाभूतः प्रपञ्चोऽभिधीयते । न तु भेदः । तथात्वे नानात्वमिति स्यात् । मैवम् । ''मुक्तोपसृप्यव्यपदेशादि''त्यादाविव भावप्रधाननिर्देशोपपत्तेः । भवितृप्राधान्येऽपि ब्रह्मणि नानाभूतावयवगुणकर्मादिनिषेधे नानात्वमेव निषिद्धं भवति । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत' इति न्यायात् । उभयनिषेधे गौरवात् । विशेषणस्य प्रथमप्राप्तत्वात् । अन्यथा तदुपादानवैयर्थ्यात् । 'न जीर्णमलवद्वासाः स्नातकः स्यादि'त्यादौ दर्शनाच्च । अत एवोक्तम् । 'विशेष्यं नाभिधा**





**गच्छेत्क्षीणशक्तिर्विशेषण' इति । यत्कचिद्विशिष्टविधिनिषेधाङ्गीकरणं तदगतिकतयैव । सविशेष(ण)त्वं च ब्रह्मणो वक्ष्यामः । नन्वेवं सत्यप्रासप्रतिषेध इति चेन्न । आभास-प्राप्तत्वात् । तथाच 'न स्थानतोऽपी'त्याद्यधिकरणपूर्वपक्षे दर्शयिष्यामः । परस्यैव स्वर्गापूर्वादिनिषेधोऽप्राप्तत्वादनुपपन्नः । 'एकमेवाद्वितीय'मित्यादौ सजातीयविजातीय-स्वगतनानात्वनिषेधं व्याकुर्वता भवताऽपि समाधातव्यमेतत् ।**

**बिन्दुः— तदुपादानवैयर्थ्यात्** । विशेष्यस्य केवलस्यातिप्रसक्तत्वात् वक्तुं किञ्चिद्विशेषणं सङ्कोचकमुपादीयते । तद्विशिष्टं च विशेष्यमात्रस्य व्याप्यमेव विशेष्यं तु व्यापकम् । यथा यत्र रक्तदण्डस्तत्र दण्ड इति व्यभिचाराभावात् । एवं च यत्र तादृशविशिष्टाभावबोधनार्थं प्रयुक्तं चैत्रो रक्तदण्डवान्नेति वाक्यं यदि रक्तविशिष्टदण्डाभावतात्पर्यकं स्यात् तर्हि चैत्रो दण्डवान्नेत्येव ब्रूयात् । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वेन तावतैव रक्तदण्डाभावावगमसौलभ्यात् । तस्मात् विशेषण-मुपाददानस्य तदीयदण्डे रक्तरूपाभावबुबोधयिषायामेव तात्पर्यमित्यवगम्यते । एवं च यथा चैत्रदण्डे रक्तं रूपं नास्तीत्येव तत्र वाक्यस्य तात्पर्यार्थः । एवं इह नानानास्तीत्यस्यापि ब्रह्म तद्गुणादौ परस्परभेदो नास्तीति तात्पर्यार्थ इति भावः ।

**परि०**— विशिष्टस्य विशेष्यस्य वा कुतो न निषेध इत्यत आह **उभयेति** । **तदुपादान-वैयर्थ्यादिति** । नानेतिपदोपादानवैयर्थ्यात् । किञ्चनेत्यनेनैव सर्वनिषेधप्राप्तेरिति भावः । **न जीर्णेति** । जीर्णत्वमलिनत्वरूपविशेषणनिषेधस्यैव तत्र दर्शनादित्यर्थः ॥ **उक्तं** प्राभाकरैरित्यर्थः । **यत्कचिदिति** । दण्डी नास्तीत्यादाविति भावः । ननु सविशेषणे हीति न्यायो विशेष्यबाधे सत्येवेति वदन्तं प्रत्याह **सविशेषत्वं हीति** । जन्माधिकरणे पराभिमताखण्डत्वनिरासपूर्वमनन्तगुणवत्त्वलक्षणं सविशेषत्वं वक्ष्याम इत्यर्थः । तथाच किञ्चनेतिपदोक्तधर्मनिषेधायोगाद्भेदस्यैव निषेध इति भावः । प्रपञ्चितश्चैतत् श्रुत्यर्थो न्यायामृते । 'न स्थानतोऽपी'ति भक्तिपादे ॥ **समाधातव्यमेतदिति** । अप्राप्तनिषेधचोद्यं श्रुतितात्पर्याभासयुक्त्याभासप्राप्तत्वात्सजातीयादिभेदस्येति समाधातव्यमित्यर्थः ।

**यादु०**— नागृहीतविशेषणन्यायेनापि विशेषणनिषेध एवार्थ इत्याह **विशेषणस्येति** । **तदुपादानेति** । विशेषणोपादानेत्यर्थः । धर्मिनिषेधे धर्मनिषेधस्यापि लाभादिति भावः । नन्वेवं भवत्पक्षेऽपि किञ्चनेतिविशेष्योपादानं व्यर्थमापन्नमित्याशङ्कां परिहरन्सविशेषणे हीति न्यायस्योदाहरणमाह **न जीर्णेति** । अत्र यथा स्नातकनिषेधाभावेऽपि विशेषणनिषेधाश्रयसमर्पकत्वेनानुवादकत्वान्न स्नातकपदवैयर्थ्यं तथा प्रकृतेऽपि किञ्चनपदावैयर्थ्यमिति भावः ।

नागृहीतविशेषणन्यायस्यापि स्वोत्प्रेक्षितत्वशङ्कापरिहाराय परीक्षकसंमतमुदाहरणं दर्शयति **अत एवेति**। नागृहीतविशेषणन्यायादेवेत्यर्थः। एवं चाभिधान्यायेनात्रापि निषेधो विशेषणेनैवान्विततया क्षीणशक्तिर्विशेष्यान्वितो न भवतीति भावः। तर्हि क्वापि विशिष्टविषयौ विधिनिषेधौ न स्यातामित्यत आह **यत्कचिद्विशिष्टेति**। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'त्यादौ विशिष्टकर्मविधानादनेकेषामपि गुणानां विधिः सिद्ध्यतीत्युक्तं भेदलक्षणे। अन्यथाऽनेकगुणविधाने वाक्यभेदप्रसङ्गेनागतेः। वैदिकं विशिष्टनिषेधोदाहरणं चिन्त्यम्। नन्वत्राप्यगतिरेव निर्विशेषत्वश्रुतेरित्यत आह **सविशेषत्वमिति**। **वक्ष्याम इति**। जन्माधिकरणादाविति शेषः। **अप्राप्तेति**। भगवदवयवगुणकर्मादिनानात्वस्याप्राप्तत्वादिति भावः। **दर्शयिष्याम इति**। तत्र हि यद्युगपद्भिन्नस्थानं तद्भिन्नं दृष्टं यथा घटादि, भिन्नस्थानश्चायमित्यतो भिन्न एवेति भवेत्। भिन्नानां च तारतम्यमनुग्राह्यानुग्राहकभावश्चोपलब्ध इति तत्प्रसङ्गोऽपीति युक्त्याभासप्राप्तिं तथा 'कार्यकारणबद्धौ ता'वित्यादिश्रुत्याऽऽपातप्रतीतभिन्नत्वादिप्राप्तिं च दर्शयिष्याम इत्यर्थः। इत्याद्यधिकरणेत्यत्रादिपदेनाहिकुण्डलाधिकरणसङ्ग्रहः। तत्रापि क्रियाणां ज्ञानादिगुणानां चास्राक्षीत् सृजति स्रक्ष्यति व्यज्ञासीत् जानाति ज्ञास्यतीत्यादिश्रौतव्यवहारैरनित्यतयाऽवगतानां भगवता नाभेदो युज्यत इत्यादिरूपां प्राप्तिं दर्शयिष्याम इत्यर्थः। **एकमेवाद्वितीयमित्यादाविति**। अत्रैकपदेन स्वगतनानात्वप्रतिषेध इत्यवगन्तव्यम्। यथाऽऽह। 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः। वृक्षान्तरात्सजातीयो विजातीयः शिलादितः। तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते। ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमादि'ति।

**वं०प०— विशेष्यं नाभिधा गच्छेदिति**। अभिधा शक्तिः। अयमर्थः। जातिविशिष्टव्यक्तौ पदानां शक्तिरिति तार्किकैरुच्यते। तत्र मीमांसको वदति। अगृहीतविशेषणा बुद्धिर्विशेष्ये न प्रवर्तत इत्यादौ गवादिपदानां वाच्यतया जातिं गृहीत्वा पश्चात्तद्विशिष्टव्यक्तौ शक्तिर्वाच्या। तथाच गोत्वादिजातावेव गवादिपदानां शक्त्या सर्वस्योपपत्त्या विशेषण एव क्षीणशक्तित्वादभिधा विशेष्यं न गच्छतीति। ननु तर्हि गामानयेत्युक्ते व्यक्तिलाभः कथमिति चेत्। आक्षेपात्, व्यक्तिं विना केवलगोत्वजातेरानेतुमशक्यत्वात्तदन्यथाऽनुपपत्त्या व्यक्तिलाभ इति द्रष्टव्यम्। ननु तत्र सति विशेष्यबाध इत्युक्तत्वान्नात्र विशेष्यबाधोऽस्ति। ब्रह्मणि गुणादेरप्रामाणिकत्वादित्यत आह **सविशेषत्वं चेति**। अवयवगुणकर्मादिविशेषसाहित्यमित्यर्थः। **एवं सतीति**। नेहनानेतिवाक्यस्य भगवति स्वगतभेदनिषेधकत्वव्याख्यान इत्यर्थः। **अप्राप्तेति**। भगवति स्वगतभेदस्याप्राप्तत्वादित्यर्थः। **स्वर्गापूर्वेति**। श्रुत्या प्राप्तस्यैव श्रुत्या प्रतिषेधे श्रुतेरुन्मत्तवाक्यत्वं स्यादिति भावः।

**कं०रा०— अन्यथेति**। नेह नानेत्यस्य विशेष्यनिषेधपरत्वे नेहास्ति किञ्चनेत्येतावता पूर्णत्वेन नानात्वविशेषणोपादानवैयर्थ्यं स्यादतस्तदुपादानबलात् किञ्चनशब्दोपात्तगुणकर्मादेर्नानात्वरूपविशेषणनिषेध एव श्रुत्यर्थोऽवगम्यत इति भावः। यत्र विशिष्टोपादानं तत्र विशेषणनिषेध एव निषेधवाक्यार्थो दृश्यते चेत्याह **न जीर्णमलवद्वासा इति**। अत्र हि वासो न निषिध्यते। किन्तु वाससो जीर्णत्वमलवत्त्वरूपविशेषणमेवेति भावः। नन्वत्र विशेषणनिषेध इति वदता जीर्णत्वे सति मलवत्त्वरूपं विशेषणं निषिध्यत इत्युच्यते। आहोस्विज्जीर्णत्वं मलवत्त्वं चैकैकं विशेषणम्। नाद्यः। एकैकविशिष्टस्य वासस उपादानप्रसङ्गात्। न द्वितीयः। वाक्यभेदप्रसङ्गात्।





तस्मान्नेदं वाक्यं निषेधपरं किन्तु पर्युदासलक्षणया अ?जीर्णमलवत्त्वविशिष्टवाससो विधिरेवेति चेन्मैवम् । स्नातको जीर्णमलवद्वासा न स्यादिति विशिष्टनिषेधे विशेषणान्वयितयाऽङ्गीक्रियमाणे नग्नस्याप्यन्वयापातेन विशेषण-मात्रान्वयितयाऽङ्गीकर्तव्येऽथदिवैकैकविशेषणनिषेध इति स्वीकारात् । **विशेष्यमिति** । अभिधा पदशक्तिर्विशेषणे जातावेव प्रथमोपस्थितायां क्षीणशक्तिः सती विशेष्यभूतां व्यक्तिं न गच्छेदित्यर्थः । तद्वत्प्रकृतेऽपि विशेषणसंक्रान्तो निषेधो न विशेष्यमुपसंक्रामतीति भावः । ननु यदि विशिष्टनिषेधे गौरवाद्विशेषणस्य प्रथमप्राप्तत्वादिना नेह नानेत्यत्र विशेषणनिषेध एवेत्युच्यते तर्ह्यनेन न्यायेन क्वचिदपि विशिष्टविधिस्तन्निषेधो वा न स्यादित्यत आह **यत्किञ्चिदिति** । कुण्डपायिनामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीत्यादौ यद्विशिष्टविध्याद्यङ्गीकरणं तद्वत्यन्तराभावेनैवा-सन्निहितं तावन्नैयमिकाग्निहोत्रं बुद्धौ न परिवर्तते । तादृशमपि तत्प्राप्तवन्निर्देशेन जुहोतीत्यनेनोपस्थाप्येत यदि यदाहवनीये जुहोतीत्यादाविव विधित्सितो गुण उपादेयः स्यात् । न चैवम् । मासस्यानुपादेयत्वात् । न हि होमानुरोधेन मासः संपादयितुं शक्यः । अत एतादृशस्थले प्राप्तकर्मानुवादेन गुणमात्रविधानादिरूपगत्यन्तराभावेन विशिष्टविध्याद्यङ्गीकरणमिति भावः । ननु सविशेषणे हि विधिनिषेधौ विशेष्यान्वये बाधके सत्येव विशेषण-मुपसंक्रामतः । न चात्र किञ्चनशब्दोपात्तस्य गुणकर्मादिर्विशेष्यस्य निषेधान्वये किञ्चिद्बाधकमस्तीत्यत आह **सविशेषत्वं चेति** । तथा च वक्ष्यमाणं ब्रह्मणः सविशेषत्वग्राहकं प्रमाणं बाधकमिति भावः । **अप्राप्तेति** । ब्रह्मणि स्वरूपभेदस्य यथाभासप्राप्तिः संभवति तथा 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही'त्यधिकरणपूर्वपक्षे दर्शयिष्याम इत्यर्थः । प्रत्युत परस्यैव नेह नानेत्यादिश्रुत्या स्वर्गापूर्वाद्यलौकिकार्थनिषेधोऽनुपपन्नस्तस्या-प्राप्तत्वादित्याह **परस्येति** । **एकमिति** । एकमेवाद्वितीयमिति श्रुतावेकशब्देन स्वगतनानात्वमेवशब्देन सजातीय-भेदोऽद्वितीयशब्देन विजातीयभेदश्च निषिध्यत इति वदता भवताऽपि स्वगतनानात्वस्याप्रसक्तत्वात्कथं निषेध्यत्वमित्येतच्चोद्यं समाधातव्यमित्यर्थः ।

**श्रीनिधि०— प्रपञ्चोऽभिधीयत इति** । नानापदं भिन्नवाचकमिति भावः । **भावप्रधानेति** । अयं भावः । शब्दा धर्मविशिष्टधर्मिणां वाचकाः । तत्र धर्मः अप्राधान्येन वाच्यः धर्मी तु प्राधान्येन । ततश्चात्र धर्मः प्राधान्येन विवक्षित इति । भावः प्रधानो यस्मिन् निर्देशे स भावप्रधान इति विग्रहः । **नानात्वमेवेति** । न तु गुणकर्मादिक-मेवार्थः । **उभयेति** । विशेषणविशेष्ययोरित्यर्थः । तर्हि विशेष्यस्यैव निषेधोऽस्त्वित्यत आह **विशेषणस्येति** । विशिष्टज्ञानापेक्षया विशेषणज्ञानस्य पूर्वभावित्वात् प्रथमातिक्रमणे कारणाभावाच्चेति भावः । अन्यथाऽनुपपत्त्यापि विशेषणनिषेध एवेत्याह **अन्यथेति** । अन्यथा उभयनिषेधानङ्गीकारे तदुपादानवैयर्थ्यात् । विशेषणोपादानवैयर्थ्यात् । विशेष्यनिषेधेनैव विशेषणनिषेधस्यापि प्राप्तेरिति भावः । अत एवोक्तमिति विशेषणविशेष्ययोरुभयत्र शब्दपवृत्तौ गौरवात् विशेषणस्य प्रथमप्राप्तत्वेन तत्रैव शब्दसामर्थ्यस्य पर्यवसानसंभवादेव । **अभिधीयत इति** । अभिधापदम् । क्षीणशक्तिः । क्षीणसामर्थ्यं यत्कचिदिति सोमेन यजेतेति विशिष्टविधिः क्रूरश्च बालो न सेव्यत इति विशिष्टनिषेधः । ननु ब्रह्मणो गुणादीनां च भेदाभावे अपर्यायशब्दवाच्यत्वादिकमनुपपन्नमित्यत आह **सविशेषणत्वं चेति** । यद्वा ननु ब्रह्मणः सविशेषणत्वे गुणकर्मादिभेदनिषेधोऽनेन क्रियत इति स्यात् । न च तदस्ति । केवलो निर्गुणश्चेत्यादिना तस्य





निर्विशेषणत्वेन प्रमितत्वादित्यत आह **सविशेषणत्वं चेति** । **वक्ष्याम इति** । मय्यनन्तगुणेऽनन्त इत्यादिनेति भावः । स्वर्गापूर्वादिनिषेधः स्वर्गापूर्वादिवैदिकपदार्थनिषेधः । नानात्वनिषेधं भेदनिषेधम् । सजातीयाः जीवाः विजातीयः प्रपञ्चः तस्य भेदनिषेधो नाम तद्व्यतिरेकेणासत्त्वं तन्मत इत्यवधेयम् । एतत् आभासप्राप्तनिषेधः भावप्रधानो निर्देश इत्यादिकम् । **मतिकर्दमे** मतिकालुष्ये।

**वा०चं०**— स्वपक्षे नेयमनुपपत्तिरित्याशयेन नानाभूतः प्रपञ्च इत्युक्तमिति ध्येयम् । अत्र नानाशब्दोपस्थापितनानात्वरूपधर्मस्य नास्तीति क्रियान्वयित्वरूपप्राधान्यमभिप्रेत्यायं प्रयोगः । न चैवं नानाशब्दाद्विशेषणतयोपस्थापितनानात्वस्याप्राधान्येन, प्राधान्येनोपस्थित्यर्थं लक्षणाया आश्रयणीयत्वात्प्रयोजनाभावेनासंभवाच्चानुपपत्तिरेवेति वाच्यम् । रूढलक्षणात्वेन प्रयोजनानपेक्षणादित्याशयेनाह **मुक्तेति** । अत एव पक्षान्तरमाह **भवित्रिति** । न चैवं नानाभूतप्रपञ्चनिषेध एव प्राप्यते । न तु भगवति स्वरूपभेदाभाव इत्युक्तमिति वाच्यम् । बृहदारण्यके काठके च 'तस्मिन् शुक्लमुत नीलमाहुर्गुहां प्रविश्य तिष्ठन्तं महान्तं विभुमात्मानमि'त्येतद्वाक्यात्पूर्ववाक्येषु भगवदवयवगुणादीनां प्रकृततया किञ्चनशब्दस्य सर्वनामतयोद्देश्यसमर्पकतया चैवंधर्मानिति विशेषशब्दसन्निहितसामान्यशब्दत्वाच्च प्रकृतवाक्यशेषस्थगुणादिपरत्वस्यैव न्याय्यत्वात् । न चैवं गुणादिनिषेधपरत्वाङ्गीकारेऽप्यपसिद्धान्त इति वाच्यम् । नानाभूतगुणादिनिषेधस्य नानात्वरूपविशेषणे पर्यवसानाङ्गीकारेणादोषादिति भावः । अत्र मूलभूतन्यायमाह **सविशेषण इति** । ननु नायं न्यायो युक्तस्तथा सति 'यदाग्नेयोऽष्टाकपालो' 'न कलञ्जं भक्षयेदि'त्यादौ विशिष्टविधिनिषेधाभावप्रसङ्गादित्यत 'एकदेशापवादेन कल्प्यमाने तु बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिता' इत्युक्तानुसारेण युक्त्यन्तरं तावदाह **उभयेति** । सर्वेषामपि वाक्यानामुत्सर्गतो लाघवानुसारेणैव प्रवृत्तिरत एव 'दध्ना जुहोती'त्यादौ गुणविधित्व एव पर्यवसानं स्वीकृतमिति भावः । तर्ह्यस्तु विशेष्यमात्रविषयकत्वेन पर्यवसानं लाघवस्यैवमपि संभवादित्यतो लाघवाविशेषेऽपि विशेषणविषयकत्वे विशेषनियामकमाह **विशेषणस्येति** । विशेष्यस्वरूपमात्रोपस्थितेर्विधिनिषेधानुपयोगादितरव्यावृत्ततया तत्स्वरूपोपस्थितेश्च स्वत एवेतरव्यावृत्तविशेषणोपस्थितिं विनाऽयोगेन निष्कृष्टविशेष्योपस्थितिपूर्वभावित्वं विशेषणोपस्थितेरिति भावः । यद्वाऽऽवश्यकत्वं प्रथमप्राप्तत्वादित्यनेनोच्यतेऽतो न बुद्धेर्विरम्यव्यापारानुपपत्तिप्रसङ्ग इति द्रष्टव्यम् । एवं विशेषणविषयत्वे साधकमुक्त्वा तदविषयत्वे विशेष्यमात्रविषयकत्वे किञ्चनेत्यादिनैव पूर्णत्वान्नानेति पृथगित्यादिविशेषणवैय्यर्थ्यं स्यादिति बाधकं चाह **अन्यथेति** । तर्हि विशेष्योपादानं तवापि न स्यादित्यतो निषेध्यधर्मिसमर्पकतया सार्थक्यसंभवान्न तुल्यतेत्याशयेन विशेषणविषयकत्वेन पर्यवसाने दृष्टान्तमाह **न जीर्णेति** । विशेषणस्य प्रथमप्राप्तावभियुक्तसंमतिमाह **अत एवोक्तमिति** । एवं युक्त्यन्तरमुपपाद्य यत्सविशेषणे हीति न्यायेन यदाग्नेय इत्यादावपि विशिष्टविषयत्वं न स्यादिति दूषणमभिहितं तन्निराकरोति **यत्क्वचिदिति** । यदाग्नेय इत्यत्र विशेषणवद्विशेष्यस्याप्यप्राप्तत्वेन तदुद्देशेन विशेषणमात्रविधानायोगान्न कलञ्जमित्यादौ च विशेष्यमङ्गीकृत्य विशेषणमात्रनिषेधासंभवेनागत्या विधिनिषेधयोर्विशिष्टविषयत्वाङ्गीकरणमिति भावः । यद्वा सविशेषणे हीति न्यायमूलभूतां युक्तिमाह **उभयनिषेध इत्यादिना** । अत्र प्रतीतितो विधिनिषेधयोर्विशिष्टविषयकत्वेऽपि परीक्षकैः प्रथमप्राप्त्यादि पर्यालोच्य विशेषणविषयकत्वमवधार्यत





इति फलतो विशेषणविषयत्वम् । यथा दध्ना जुहोतीत्यादेः प्रतीतितो विशिष्टविधित्वेऽपि फलतो गुणविधित्वं तद्वत् । एवं च पर्यवसितप्रतीतेर्विशेषणविषयकत्वेऽपि शाब्दप्रतीतेर्विशिष्टविषयकत्वान्न विशेषणस्य प्राधान्योपस्थित्यर्थं लक्षणादीति द्रष्टव्यम् । नन्वेवं निर्विशेषत्वस्य श्रुत्यादिसिद्धत्वान्न प्रकृतेऽपि गुणादिरूपविशेष्याङ्गीकारेण नानात्वरूपविशेषणमात्रविषयकत्वं निषेधस्य युक्तमित्यत आह **सविशेषत्वं चेति** । केचित्त्वस्तु युक्तः सविशेषणे हीति न्यायस्तथाऽपि सति विशेष्ये बाधे विशेषणमात्रविषयकत्वस्य तन्न्यायसिद्धतया प्रकृते च नेह नानेति निषेधस्य विशेष्यविषयकत्वेऽपि बाधकाभावान्न तन्न्यायप्रसरोऽत्रेत्याशङ्क्याह **सविशेषत्वं चेति** । जन्मादिसूत्रादाविति शेष इत्याहुः । ननु परमेश्वरस्य प्रमाणान्तरागोचरतया तद्गुणादिनानात्वस्याप्राप्तत्वात्तन्निषेधानुपपत्तिरिति शङ्कते **नन्विति** । यद्युगपद्भिन्नस्थानं, तद्भिन्नं दृष्टं, यथा घटादि, भिन्नस्थानश्चायमित्यादियुक्त्याभासेन प्रत्यक्षाभासेन च भगवद्रूपाणां तार्किकाद्युत्प्रेक्षितयुक्त्याभासेन च तद्गुणादीनां च नानात्वस्य प्राप्त्या तन्निषेधो युक्त एवेत्याशयेनाह **आभासेति** । **अप्राप्तत्वादिति** । स्वर्गादीनां प्रमाणान्तराप्राप्तत्वाच्छ्रुतिप्राप्तस्य च निषेधे श्रुतेरुन्मत्तवाक्यत्वापातादिति भावः । एकमेवेति श्रुतावेकशब्दं स्वगतभेदनिषेधकत्वेन व्याकुर्वता त्वयाऽप्यवश्यसमाधातव्यानुपपत्तिं मां प्रत्येवं प्रसञ्जयतः स्वव्याहतिरित्याह **एकमिति** ।

**वा०र०— नानाभूतः प्रपञ्च इतीति** । तथा च तन्निषेधेऽपसिद्धान्तोऽपि स्यादिति भावः । अत एव गुणादिनिषेधपरत्वाङ्गीकारेऽप्यपसिद्धान्त इत्युत्तरत्र टीकावाक्येऽपिपदेन पूर्वत्राप्यपसिद्धान्तः सूचित इति ज्ञेयम् । सिद्धान्तग्रन्थमवतारयति **अत्र नानेति** । नानात्वरूपेत्यनेन भावप्रधानेत्यत्र भावशब्दः प्रवृत्तिनिमित्तार्थकतया व्याख्यातः । प्राधान्यमेव विवृतं **नास्तीति क्रियेति** । **अयं प्रयोग इति** । भवितृवाचकस्य नानाशब्दस्य नानात्वरूपे धर्मे प्रयोग इत्यर्थः । न केवलं लक्षणाश्रयणमेव दोषोऽपि तु गङ्गायां घोष इत्यादौ प्रयोजने सत्येव तदाश्रयणात् प्रकृते च प्रयोजनाभावात्तदाश्रयणमनुपपन्नं चेत्याह **प्रयोजनाभावेनेति** । **रूढेति** । अनेन प्रयोग इति सामान्येनोक्तस्य विशेषपर्यवसानमुक्तं भवति **मुक्तेतीति** । 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र द्वित्वैकत्वयोरित्यादिव्याख्यानादादिपदेन मूले तस्य सङ्ग्रहः । उक्तं च न्यायवाचस्पतौ । गतिमदिति भावप्रधानो निर्देशः । यथा 'द्व्येकयोर्द्विवचनैकवचने' इति द्वित्वैकत्वयोरिति । संख्येयविवक्षायां द्व्येकेष्विति स्यादिति । गुहांप्रविष्टत्वाधिकरणे उत्तरमूले तट्टीकायां च स्पष्टमिदम् । **अत एवेति** । अत्र पक्षे लक्षणा आश्रयणीया भवतीत्यपरितोषादेवेत्यर्थः । पक्षान्तरमित्यनेनास्तु वा भवितृप्राधान्यमिति व्याख्यातं भवति । अत एव तत्र प्रागुदाहृतानुपपत्तिं शङ्कते **न चैवमिति** । प्राक्स्वरूपभेदाभावस्यार्थतामभिधायोत्तरत्रावयवगुणकर्मादिभेदनिषेधस्यार्थत्वोक्त्या व्यवस्थया तयोरर्थत्वमभिप्रैति मूलकार इति मूलकाराभिप्रायं सिद्धवत्कृत्य भवितृप्राधान्यपक्षेऽपि स्वरूपभेदाभावलाभानुपपत्तिमाशङ्क्य तत्परिहाराय ज्ञानभूतावयवेत्यादिमूलाभिप्रायकथनं बृहदारण्यक इत्यादिना टीकाकृत्करिष्यति । तेन च मास्तु स्वरूपभेदाभावोऽत्र पक्षे श्रुत्यर्थः । अवयवगुणकर्मादिभेदाभावस्त्वर्थः संभवत्येवेत्याशयो भवित्रित्युत्तरमूलस्य सूचित इति ज्ञेयम् । नेहनानेति श्रुतावयवगुणकर्मादेः प्रकृततामुपपादयति **बृहदारण्यक इत्यादिना** । अथवा नेहनानेत्यस्य स्वरूपभेदनिषेधार्थत्वेन व्याख्याने प्रथमं य इह नानेव पश्यतीति स्वरूपभेदनिषेधार्थम् । नेहनानास्तिकिञ्चनेति





किञ्चनशब्दादवयवानां गुणानां क्रियाणां च परस्परं तद्वता च भेदनिषेधार्थम् । भेदाभेद एव निषिध्यते न तु भेद इति शङ्कां निवर्तयितुमेवं धर्मान्पृथक्पश्यन्निति भगवद्धर्माणामवयवगुणकर्मणां भेददर्शने पृथक्दोषमाहेति वाक्यत्रय-व्यवस्थापरकाठकभाष्येण षष्ठाध्यायगतशारीरब्राह्मणस्थमनसैवेदमाप्तव्यं नेहनानास्तिकिञ्चनेत्यत्रत्य नेहेत्येतदर्थ-कथनरूपतत्सरूपगुणाद्येषु न कश्चिद्भेद इत्यत इति भाष्येणाव्याकृतब्राह्मणस्थप्रसक्तानुप्रसक्त्या नेहनानेत्युदाहृत-स्येहेति परमेश्वररूपेषु अवयवेषु धर्मेषु च किञ्चन नाना नास्तीत्यर्थः । इति व्याख्यानरूपभाष्ये हि निर्धारण-सप्तमीत्वान्नानास्वरूपादिनिषेधलाभः । भावबोधे तथोक्तेः । तेन च विरोधापातात्कथं तथा व्याख्यानं युक्तमित्यपरितोषाच्च पक्षान्तरमाहेत्यस्य पूर्वमुपलक्षणा ज्ञेया । तथा चात्र पक्षे भवितृप्राधान्येऽपि भगवत्स्वरूपाणि न नाना सन्तीत्युक्ते वक्ष्यमाणरीत्या स्वरूपगतभेदस्य निषेधप्राप्तेः पूर्वोक्तस्वरूपभेदाभावोऽप्यर्थतया लब्ध इति संपूर्णार्थता भवति । तदर्थं च कर्मादीत्यादिपदेन स्वरूपपरिग्रहो व्याख्यातव्यः । परमेश्वररूपेष्ववयवेषु धर्मेषु चेति बृहद्भाष्यानुसारात् । न च तर्हि भगवदवयवगुणादिमात्रस्य प्रकृततोपपादनेन तद्भेदमात्रनिषेधपरतया टीकोक्त-मूलयोजनानुपपत्तिरिति वाच्यम् । मूलानुसारेणावयवादिकीर्तनेनादिपदेन तत्रापि स्वरूपग्रहणस्येष्टत्वात् । अथवा अवयवपदेन मूलटीकयोः स्वरूपाणामपि सङ्ग्रहोऽभिप्रेतः । अत एव टीकाकृता बृहदारण्यकगततस्मिन् शुक्लमुत नीलमाहुरिति वाक्येन रूपाणां प्रकृतत्वमुपपादितम् । उक्तं च भावबोधे । शुक्लस्य नीलस्येत्यादिना बहुरूपत्वोक्त्या रूपाणां परस्परं मूलरूपेण च भेदः प्राप्त इति । तत्र च शारीरब्राह्मणस्थतस्मिन् शुक्लमुत नीलमिति पूर्ववाक्यस्य स्पष्टतां मनसि कृत्वा तत्पूर्वज्योतिर्ब्राह्मणस्थशुक्लस्य नीलस्येत्यादेरुदाहरणमिति स्पष्टं प्रतीतेः । अत एव न्यायामृते तस्मिन् शुक्लमित्येतदेवोदाहृतम् । अत एव च परमेश्वररूपेष्वित्युक्तार्थोपपादनावसरे स्वगतभेदाविवक्षायामिहेति विशेषणं व्यर्थं स्यादिति भाष्यगतस्वगतेति पदं परमेश्वरस्वरूपावयवधर्मप्रतियोगिकपरमेश्वरधर्मिकेति व्याख्यातम् । तस्माद्भवितृप्रधाननानाशब्दस्वीकारपक्षेऽपि स्वरूपभेदाभावोऽपि लभ्यत इति अवयवगुणक्रियादिभेदमात्रनिषेधो व्याख्यात इति न प्रतिपत्तव्यमित्यलम् । बृहदारण्यके काठके चेत्यत्र बृहदारण्यके तस्मिन् शुक्लमुत नीलमाहुरित्येवं रूपे एतद्वाक्यात् नेह नानेत्येतद्वाक्यात्पूर्ववाक्ये काठके च गुहां प्रविश्य तिष्ठन्तमित्यादिरूपयोर्नेहनानेत्यस्मा-त्पूर्वभूतवाक्ययोरिति योजना । तस्मिन् शुक्लमित्येतद्वाक्योत्तरार्धभूतैष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेत्यत्र अणुः पन्था वितत इति पूर्वोदाहृतमन्त्रोक्तमोक्षमार्गे ब्रह्मणोऽवस्थानोक्त्या तस्मिन्निति मध्यवाक्ये मार्गस्य तस्मिन्निति निर्देशेन तत्र भगवद्रूपाणि शुक्लादीनि सन्तीति प्रतिपाद्यत इति तद्वाक्यादवयव-पदोक्तभगवत्स्वरूपाणां प्रसक्तिः । उपलक्षणमेतत् । तस्मिन् शुक्लमिति शारीरब्राह्मणात्पूर्वज्योतिर्ब्राह्मणेऽपि शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा इत्येतद्वाक्ये नाडीगतत्वेन शुक्लादिभगवद्रूपाणां प्रकृतत्वात् तथैतद्ब्राह्मणगतपूर्ववाक्ये यस्यानुवित्तः प्रतिबुद्ध आत्मेत्यत्र सर्वज्ञत्वसर्वकर्तृत्वादिधर्माणां गुणपदोक्तानां क्रियाणा-मप्यादिपदोक्तानां तत एव प्रकृतत्वादित्यपि द्रष्टव्यम् । काठकगतनेहनानेत्यतः प्राक्तनतयोदाहृत'गुहां प्रविश्य तिष्ठन्तमि'त्यस्य 'यो भूतेभिर्व्यपश्यती'त्युत्तरशेषः 'यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायते'ति पूर्वशेषः । अनेनाव-यवपदोक्तावताराणां तथा तद्वाक्यादपि पूर्वतनमहान्तं विभुमात्मानमित्यस्य 'मत्वा धीरो न शोचती'त्युत्तरशेषः । 'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यती'ति पूर्वशेषः । तेन गुणपदोक्तधर्माणां क्रियाणां चादिपदोक्तानां





प्रकृतत्वम् । उपलक्षणं चैतत् । आसीनो दूरं व्रजति शयान इत्यादिना चावयवादीनां प्रकृतत्वमिति ज्ञेयम् । अस्तु प्रकृतत्वमवयवगुणादीनाम् । तथापि किञ्चन शब्देन तत्परामर्श इति कुत इत्यतस्तच्छब्दस्य तत्परामर्शकत्वे उपायत्रयमाह **सर्वनामतयेत्यादि** । अत्र सर्वनाम्नश्च सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यत्र सर्वशब्दवदिति दृष्टान्तो बोध्यः । न्यायामृतानुसारात् । एवमुत्तरत्रापि । सर्वेभ्य इत्यत्र हि सर्वकामग्रहणे यागान्तरवैयर्थ्यापत्त्या अस्य तावत्साधनत्वाभावेन च प्रकृतकामानामेव ग्रहणमिति । इदं च.......ध्याय.......पाद.........धिकरणे निर्णीतम् । उद्देश्यसमर्पकतयेत्यत्र व्रीहीनवहन्तीत्यत्र द्वितीयान्तव्रीहिशब्दवदिति दृष्टान्तो बोध्यः । व्रीहीनवहन्तीत्यत्र व्रीहिशब्दस्य व्रीहिश्रुत्यनुसारेण व्रीहिमात्रपरत्वे लौकिकव्रीहिष्वपि नखविदलनादौ प्रत्यवायापत्त्या यवेष्ववघाताम्नानाभावेन तेषु तदभावापत्त्या च तत्परत्वानुपपत्त्या उद्देश्यव्रीहिलाभाय यवादिलाभाय च जघन्यामपि लक्षणामाश्रित्य नियोगसाधनसतुषद्रव्यपरत्वमेवेति निर्णीतम् । **एवं धर्मानितीति** । अत्र च घृतशब्दसन्निहिताक्ताशब्दवदिति दृष्टान्तः । अक्ताः शर्करा उपदधाति तेजो वै घृतमिति घृतपदसन्निहिताक्तापदस्य येनकेनचिद्द्रवद्रव्येणाञ्जनोपपत्त्या तैलघृतवसाद्यन्यतमेनाञ्जनार्थत्वेऽप्यञ्जनक्रियाक्षिप्तस्नेहनसमर्थद्रव्यस्य घृतेऽपि पर्यवसानोपपत्तेर्निर्विशेषसामान्यानुष्ठानायोगेन विशेषपर्यवसानस्य विधिनैवापेक्षितत्वेन वाक्यशेषोपात्तघृतरूपविशेषं विहाय विशेषान्तरकल्पनानुपपत्त्या विधेयस्तुतिरूपवाक्यशेषोक्तघृतमेवाञ्जकद्रव्यतया स्वीकार्यमिति तेनैवाञ्जनमक्ताशब्दार्थ इति निर्णीतं प्रथमाध्याये नामधेयपादे एकोनविंशाधिकरणे सन्दिग्धे तु वाक्यशेषादित्यत्र । तदधिकरणशरीरविस्तरस्तु कण्टकोद्धारादौ ज्ञेयः । '....... रिन्द्रवायु इमे' इत्येतद्‌भाष्ये उक्त्वा धर्मान्पृथक्त्वस्य निषेधादित्यादिना विशेष उपपादितस्तट्टीकायां च काठके तं दुर्दर्शमित्यादिना परमेश्वरस्यानेकान् धर्मानुक्त्वैकमेवाद्वितीयमित्येवं पुनः पृथक्त्वस्य निषेधाद्भेदादन्यो विशेषो भगवति श्रुत्या ज्ञायत इत्युक्तम् । तत्रैकमेवाद्वितीयं नेहनानास्तिकिञ्चनेति भाष्यानुसारेणैकमेवेत्युदाहृतम् । तत्र च तदुदाहरणोपपत्तिस्तट्टीकायां गुरुराजेन कृतास्ति । किञ्चिदस्माभिरप्युपपादितमस्ति । तद्ग्रन्थानुसारेण तु तं दुर्दर्शमित्यादेरपि ग्रहणम् । धर्मप्रकृततासिध्यर्थमुपलक्षणया व्याख्येयम् । **अङ्गीकारेऽपीति** । न केवलं नानाभूतप्रपञ्चनिषेधाङ्गीकार इत्यपिशब्दार्थः । अनेन नानाभूतावयवगुणकर्मादिनिषेधेन प्रपञ्चनिषेधप्राप्त्यादेरभावात् । न चैवमप्यपसिद्धान्तः । अत्र नानात्वस्यैव निषेधादित्याकाङ्क्षाक्रमेण मूलं योज्यमिति सूचितं भवति । **अत्रेति** । सविशेषणस्य निषेधेऽपि विशेषण एव निषेधपर्यवसानमित्यत्रेत्यर्थः । **इत्यादौ विशिष्टेति** । अत्रादिपदेनाग्नेयोऽष्टाकपाल इत्येतद्विधितुल्यविध्यन्तरभूतसोमेन यजेत । अपरपक्षे श्राद्धं कुर्वीतेत्यादेः । न कलञ्जमित्येतत्तुल्यनिषेधान्तरभूतनैकः शून्यगृहे स्वपेत् । न हिंस्यात्सर्वा भूतानि न सुरां पिबेत् ब्राह्मणो न हन्तव्य इत्यादेश्च सङ्ग्रहः । विशिष्टविधिविशिष्टनिषेधेति विशिष्टपदस्योभयत्र संबन्धः । आग्नेय इत्यादौ विशिष्टविध्यभावप्रसङ्गादित्यादिरूपेण क्रमेण संबन्धः । **एकदेशापवादेनेति** । यद्यपि मूले उदाहरिष्यमाणविशेष्यं नाभिधा गच्छेदित्येतद्वाक्योदाहरणानन्तरमेकदेशेति वाक्यं न्यायामृते उदाहृतमिति तदुभयस्याप्येकार्थतया टीकायां तदप्युदाहर्तव्यतया प्राप्तम् । तथापि न्यायामृतेऽत्रत्यमूल इवोभयनिषेधे गौरवरूपयुक्त्यन्तरस्यानभिधानात्सविशेषणे विशेषणोपसंक्रामकत्वमात्र एव भावादुदाहृतवाक्यद्वयमपि विशेषणोपसंक्रान्त्यर्थतयैवोदाहृतम् । इह तु मूले सविशेषणे हीत्युक्तयुक्त्यपेक्षया युक्त्यन्तरपरत्वे-

नोभयेत्यस्य टीकायां योजनान्तरानुसारेण तादृशयुक्तिसंमतित्वेन सर्वबाधाभावादिप्रतिपादकवाक्यस्यैवोदाहरणं सङ्गतम् । अत एव न्यायविद इति तद्वाक्ये उक्तम् । न तु द्वितीयस्यापि । तस्य मूलोक्तयुक्तिसमर्पकत्वाभावादिति न दोषः । बाधके एकदेशापवादेनैकदेशनिषेधमादायैव कल्पमाने उपपन्ने सति विशेषणविशेष्यरूपसर्वबाधनं न युक्तमिति संमतिवाक्यार्थः । एतेनैतदपि सूचितम् । यत्सविशेषणे हीति न्यायवाक्ये विशिष्टविधिनिषेध-योर्विशेषणोपसंक्रामकत्वमात्रोक्तेः सति विशेष्ये बाध इति न्यायशेषः पूरणीयः । तथा यत्र गां बधान गौर्नास्तीत्यादौ विशेषणभूतगोत्वांशे विधिनिषेधयोरयोगेन तत्र विशिष्टविषयत्वानुपपत्त्या विशेष्यमात्रविषयत्व-मस्ति तत्सङ्ग्रहाय विशेषणविशेष्ययोरन्यतरदुपसंक्रामतः सति विशेषणविशेष्यान्यतरबाध इति न्यायशरीरं कल्पनीयम् । एकदेशापवादेनेत्येतत्तु सामान्येन प्रवृत्तत्वाद्विशेषणविशेष्योभयसंग्राहकमिति नान्यतरेत्यस्य पूरणीयता । बाधं मूलीकृत्य प्रवृत्त्यभावेनैकदेशान्तरे बाधे सतीत्येवंरूपेणापि पूरणं नास्ति । तथा प्रकृते नेहनानेति निषेधवाक्यस्यैव प्रसक्त्या तद्विषयकस्यैकदेशेत्युक्तन्यायस्य विधिनिषेधोभयविषयकसविशेषणे हीति न्यायादन्तरङ्गत्वं चास्ति । एतेन विशेष्यं नाभिधेति वाक्यमपि व्याख्यातम् । विशेषणस्य प्रथमप्राप्तत्वमिव विशेष्यस्यापि धर्मितया प्रथमप्राप्तत्वम् । अन्यथा विशेषणं कुत्र व्यावृत्तिं कुर्यात् प्राधान्याच्च तस्य तत्प्राप्ति-रित्यादिकल्पनं तूभयत्र समानम् । प्रकृताभिप्रायेण च विशेषणग्रहणं मूले । तस्मात्सविशेषणे हीत्युक्तन्याया-पेक्षयैकदेशापवादेनेत्युक्तयुक्तिरेव स्वरसेति तदादरः कृत इति । **तावदिति** । उभयनिषेधे गौरवेण तदनुपपत्तावपि लाघवस्य पक्षान्तरेऽपि संभवात्तर्हि विशेष्यनिषेध एव पर्यवसानं कुतो नाश्रीयत इति शङ्कापरिहारस्यापि करिष्यमाणत्वात्तदपेक्षया तावच्छब्दः । यद्वा सविशेषणे हीत्युक्तन्यायस्य यदाग्नेय इत्यादौ व्यभिचारशङ्कायां तत्परिहारेण तत्समर्थनमपि उत्तरत्र करिष्यत इत्याशयेन तावच्छब्दः । वक्ष्यति च टीकाकारः । एवं युक्त्यन्तर-मुपपाद्य यत्सविशेषणे हीत्यादीति ज्ञेयम् । युक्त्यन्तरमिति वदतैव गौरवादिति मूलं गौरवाच्चेति चशब्दान्तर्भावेन व्याख्येयमिति सूचितम् । गौरवस्य दूषणतामुपपादयितुं लाघवस्यावश्यकतां दृष्टान्तेनाह **सर्वेषामपीति** । विशिष्टविध्यादिस्थलं व्यावर्तयितुमुत्सर्गत इति । **स्वीकृतमिति** । एतच्च भेदलक्षणे आद्याग्निहोत्ररूपत्वादित्यधि-करणे स्पष्टम् । उपलक्षणं चैतत् । स्वर्गी नास्तीत्यादौ विशेषणमात्रपरत्वं सर्वसिद्धमित्यपि ज्ञेयम् । **तर्हीति** । एवं गौरवमनुरुध्यैकदेशविषयताङ्गीकारेऽपि विशेष्यरूपैकदेशमादायापि लाघवोपपत्तेर्न विशेषणीभूतनानात्वरू प-विशेषणमात्रपरत्वं निषेधस्य सिध्यतीत्याशयः । **विशेषेति** । उभयनिषेधे गौरवरूपा युक्तिस्तु विशिष्टनिषेध-खण्डनेन विशेषणविषयकत्वसंभावनार्थेत्याशयः । अनेनैव विशिष्टनिषेधाङ्गीकारे बाधकप्रतिपादनेनान्यतरनिषेधो-ऽयमित्युपपाद्येदानीं परिशेषेण विशेषणविषयत्वमुपपाद्यत इति ग्रन्थयोजना सूचिता भवति । प्रथमप्राप्तेरन्यस्य । असंभवात्प्रथमत उपस्थितिरूपैव सा वाच्या । तत्र विशेषणोपस्थितिरेव कुतः स्वीकार्या । न च विशेष्यस्वरूप-मात्रोपस्थितेर्विधिनिषेधानुपयोगादितरव्यावृत्ततया तत्स्वरूपोपस्थित्यर्थं तत्स्वीकार इति वाच्यम् । विशेष्यव-द्विशेषणस्यापि स्वरूपोपस्थित्यानर्थक्यादितरव्यावृत्ततया तदुपस्थित्यङ्गीकारे च विशेषणान्तरानुसरणापत्त्या अनवस्थापत्तेरित्याशङ्कां परिहरन्विशेषणोपस्थितेः पूर्वभावित्वमुपपादयति **विशेष्यस्वरूपमात्रेति** । प्रागुक्तानव-स्थापरिहारं प्रतिपादयितुं किञ्चिन्निर्वस्तु स्वत एव विलक्षणमित्युक्तप्रकारमनुसृत्य स्वत एवेतरव्यावृत्तेति विशेषणं





विशेषितम्। **निष्कृष्टेति**। इतरव्यावृत्तेत्यर्थः। यद्वेति पक्षान्तरकथननिमित्तं तु टीकाकार एवातो न बुद्धेरित्यादिना वक्ष्यति। आवश्यकत्वं च केवलविशेष्यबुद्धेर्विधिनिषेधानुपयोगेनेतरव्यावृत्ततया तद्बुध्यर्थमपेक्षितोपस्थितिविषयत्वमात्रम्। तदेव प्रथमप्राप्तत्वादित्यनेनोच्यते। न तु विशिष्टोपस्थितिस्थले विशेषणं बुध्या प्रथमतो विषयीकृतं पश्चाच्च निष्कृष्टविशेष्यं विषयीक्रियत इत्येवमेकस्या बुद्धेः क्रमिकविषयीकरणाभिप्रायेण प्रथमप्राप्तत्वादित्युक्तमिति भावः। प्रथमप्राप्तत्वमावश्यकत्वमिति विवक्षणात्प्रागुक्तोपस्थितिद्वयपौर्वापर्याश्रयणेन प्रवृत्तदोषो नायातीत्याह **अतो नेति**। बुद्धिर्हि न चेतना। ततश्चोभयोपस्थितिसामग्रीसद्भावेऽपि आदावावश्यकं विशेषणं विषयीकरोमि पश्चाच्च तद्विशेष्यमिति चेतनव्यापारशून्यत्वाच्चेतनस्येव प्रथमतो विशेषणमात्रं विषयीकृत्य विरता बुद्धिः पश्चाद्विशेष्यं विषयीकरोतीत्येवंरूपविरम्यव्यापारानुपपत्तिप्रसङ्ग इत्ययं दोषो नेत्यर्थः। पूर्वोत्तरग्रन्थप्रमेयभेदं दर्शयन्नेवान्यथेत्येतद्व्याकुर्वन्नुत्तरवाक्यमवतारयति **एकं विशेषणेति**। किञ्चनेत्यादिनेत्यादिपदेन धर्मानित्यस्य ग्रहणम्। अत्र च मूले नेहेति वाक्यस्यैव पुरस्कारेऽपि भवितृप्राधान्यपक्षाश्रयणेनानुपपत्तितत्परिहारावेवं धर्मानिति वाक्येऽपि द्रष्टव्याविति मूलाशयं स्पष्टयितुमिहादिपदं पृथगित्यादीत्युक्तिश्चेति ज्ञेयम्। **तर्हीति**। यदि विशेषणोपादानसामर्थ्याद्विशेषणनिषेध इत्याश्रयणीयमित्युच्यते तर्हीत्यर्थः। **तवापीति**। विशेषणमात्रनिषेधपरत्वे विशेष्योपादानं भवत्पक्षेऽपि व्यर्थमापद्यत इति तन्निषेधोऽपि स्वीकार्यः प्राप्यत इति भावः। **विशेषणविषयकत्वेनेति**। विशिष्टनिषेधस्येति शेषः। अनेनेत्यादौ दर्शनाच्चेत्यत्र विशेषणविषयकत्वेन पर्यवसानस्येति शेषः पूरणीय इति सूचयति **न जीर्णेतीति**। यद्यपि कर्मनिर्णयटीकायां विशिष्टविषयौ विधिनिषेधौ विशेषणमुपसंक्रामत इति तावल्लोहितोष्णीषा ऋत्विजः प्रचरन्ति न जीर्णमलवद्वासाः स्नातकः स्यादित्यादौ प्रसिद्धं क्वचिद्विशिष्टसंबन्धस्त्वगत्यैवेति व्याहतिप्रतिपादनावसरे उक्तेर्लोहितेत्युदाहरणं प्राथमिकम्। तथापि नात्र तदुदाहरणस्योपयोगस्तास्य सविशेषणविधिविषयत्वात् प्रकृते च तन्निषेधस्य प्रसक्त्यनुसारेणोभयनिषेध इत्यादिग्रन्थप्रवर्तनात्तदनुदाहरणं न दोषाय। नापि तस्यात्रादिपदेन ग्रहणं विवक्षितम्। अनुपयोगात्। किन्तु नानृतं वदेदित्याद्ये वा सत्यार्थप्रतिपादकत्वविशिष्टवाक्यप्रयोगनिषेधाधिकारिवाक्यं तेन पदेन विवक्षितमिति न दोषः। यद्यपि चापरे पुनरश्रावणः शब्द इति प्रत्यक्षविरोधं वर्णयन्ति। तैस्तु न प्रत्यक्षविषयो ज्ञातो नानुमानस्येत्येतत्प्रत्यक्षविरोध्यनुमानं न्यायाभास इत्येतत्तदुपपादनपरन्यायवार्तिकवाचस्पतौ तैस्त्विति सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत इत्युत्सर्गः। क्वचित्पुनर्विशिष्टविधानमपि भवति। अगतिकत्वात्। तद्यथा लोहितोष्णीषा ऋत्विजः प्रचरन्ति सति विभवे न जीर्णमलवद्वासाः स्नातकः स्यादितीत्युक्तम्। तत्तात्पर्यपरिशुद्धावपि विशिष्टविधानमपीत्युपलक्षणं विशिष्टनिषेधोऽपि द्रष्टव्य इति। अगतिः प्रमाणान्तरादलाभः। लौहित्यविशिष्टमुष्णीषं विधीयते। जीर्णतामलवत्ताविशिष्टं वासः प्रतिषिध्यत इत्युक्तम्। तथा च न जीर्णेत्यादेर्विशिष्टनिषेधतासिध्या विशेषणनिषेधत्वेनात्र तत्कथने उक्तग्रन्थविरोध इत्याभाति। तथापि लौहित्यविशिष्टेत्युदयनवाक्यमुपादाय तद्वर्धमाने सोष्णीषा ऋत्विजः प्रचरन्तीत्यनेनोष्णीषसंबन्धस्य ऋत्विक्षुप्राप्तत्वात्तत्र लौहित्यमात्रमनेन विधीयत इति दध्ना जुहोतीतिवत् गुणविधिरेवायं न विशिष्टविधिः। टीकायामपि सविशेषणे हीत्यादेरेवेदमुदाहरणमित्यादिना विशिष्टविध्युदाहरणत्वासंभवमाक्षिप्य होमदध्नोरुभयोरपि प्राप्तत्वेऽपि दध्युपरक्तहोमविधानाद्विशिष्टविधित्वमेव दध्ना जुहोतीत्यस्येति तद्वदेवोष्णीषसंबन्धस्य सोष्णीषा इत्यनेन





प्राप्तावपि लौहित्यविशिष्टोष्णीषस्य नियोगसाधनत्वेनाविधानादित्यादिना कथञ्चिद्विशिष्टविधित्वस्योपपादनं कृतम् । ततश्च वस्तुतो दध्ना जुहोतीत्यस्य गुणविधित्वात्तदप्यपोद्य लोहितेत्यस्यापि विशिष्टविधित्वोपपादनमस्वरसमिति सिद्धमेव । अत एवोपपादनावसरेऽप्येकेऽन्ये इत्येवोक्तम् । सोमेन यजेतेत्येव तदुदाहरणमिति चोत्तरत्रोक्तं वर्धमाने इति न दोषः । एवं च कर्मनिर्णयटीकापि विशिष्टविधेर्विशेषणोपसंक्रामकत्वोदाहरणांशे उपपन्ना । न जीर्णेत्यत्रापि जीर्णतामलवत्ताविशिष्टवासोनिषेधस्य विशेष्यवासोनिषेधेऽप्युपपत्तेर्नग्नस्याप्यन्वयः स्यादित्यादिना जीर्णतामलवत्ताभावविशिष्टवाससः पुरुषार्थत्वेन विधानमेवेदं न तु निषेधस्योदाहरणम् । अत एव भट्टपादैः सुवाससा भवितव्यमित्येतच्छ्रुतिमूलकत्वेन जीर्णेत्येतत्स्मृतेरुक्तम् । अतो नेदं विशिष्टनिषेधोदाहरणमपि तु विशिष्टविधेरेवेति शङ्कामुत्थाप्य विधायकनिषेधकयोर्मूलमूलिभावानुपपत्त्या भट्टोक्तस्यानाश्रयणीयत्वात्तदाश्रयणेऽपि चोभयाभावविशिष्टवासोविधानेऽर्थादुभयविशिष्टवासोनिषेधः प्रतीयत इति समाधानकरणान्न जीर्णेत्यस्य विशिष्टनिषेधता तावन्मूलोक्ता संभाविता । कर्मनिर्णयाद्युक्तरीत्यापि निषेधविषयता ज्ञेया । अथ तत्र विशिष्टनिषेधोदाहरणत्वेनोक्तत्वात् कथं विशेषणोपसंक्रामकतयाऽत्रोक्तिरित्येतावत्परमवशिष्यते । दध्नेत्यादावुभयविशिष्टविधानोपपादनादेरगत्येवेहाप्युभयविशिष्टवासोनिषेधरूपार्थकल्पनस्यानन्यगत्या आश्रयणेऽपि वस्तुतस्तस्य विशिष्टविषयकत्वाभावात् । अत एवासङ्कीर्णविशिष्टविधिनिषेधोदाहरणं तु सोमेन यजेत । नैकः शून्याटवीं गच्छेन्नैकः शून्यगृहं वसेत् इति विष्णुपुराणे तृतीयांशे द्वादशाध्याये । शून्यगृहे स्वपेदित्यनेनोत्तरत्र वर्धमाने विशिष्टनिषेधोदाहरणप्रदर्शनं कृतम् । तेनायं न जीर्णेत्यादिर्न विशिष्टनिषेधः । अतोऽत्र मूले वा कर्मनिर्णयटीकायां वा विशेषणोपसंक्रामकतोदाहरणत्वोक्तिर्युक्तैव । वस्तुतस्तु सविशेषण इत्येतन्न्यायविषयतया न जीर्णेत्येतदुदाहृतमिति मूले प्रतीतत्वेऽपि टीकाकृता तथा नाश्रितम् । उभयनिषेधे गौरवरूपयुक्तिकथनपरतया मूलप्रवृत्तिवर्णनानुसारेण जीर्णेत्यस्याप्युभयनिषेधत्वानुपपत्तिमात्रे तात्पर्यमित्यवगमात् । न्यायवाचस्पत्याद्युक्तप्रकारस्त्वनाश्रित इति स्पष्टत्वान्न तद्विरोधशङ्कावकाशः । न जीर्णेत्यस्य निषेधविषयत्वं तु प्रागुक्तरीत्यैवोपपाद्यमिति न कश्चिद्दोष इति स्पष्टत्वान्न सूरयो विदांकुर्वन्तु । **विशेषणस्येति** । प्राप्तावित्यनेन प्राप्तिमात्रे संमतिरियम् । न तु विशेषणविधिनिषेधाद्यंशेऽपीति सूचयति । अत एवोक्तमितीति प्रतीकोपादानपाठः । यत्कचिदित्यादेः सविशेषणे हीति न्यायाश्रयणेन विशेषणोपसंक्रामकत्वं यत्प्रागुक्तं तदुपपादनार्थत्वेन युक्त्यन्तरानुपपादकत्वादसङ्गतिरित्याशङ्कानिरासायोत्तरग्रन्थं सङ्गमयति **एवं युक्त्यन्तरमिति** । अत एव प्राक्तावदित्युक्तं **विशेषणवदिति** । अष्टाकपालस्य ह्याग्नेय इति विशेषणमिति सिद्धम् । उपलक्षणया विशिष्टविध्यन्तरनिषेधान्तरमपि प्रागुक्तमुक्तन्यायेनोपपाद्यमिति भावः । एवमुभयनिषेध इत्यादिग्रन्थस्य युक्त्यन्तरपरतया व्याख्याने सविशेषणे इति प्रकृतन्यायाश्रयणेनैव ग्रन्थप्रवृत्तिः प्रतीयमानापि त्याज्या भवति । चशब्दश्चाध्याहार्यो भवति । युक्त्यन्तरव्यवधानेऽपि पूर्वन्याये क्वचिद्विशिष्टेत्यनेन शङ्कापरिहारः कृत इत्याश्रयणीयं च भवतीत्यपरितोषात्सविशेषण इति न्यायोदाहरणेन यद्विशेषणोपसंक्रामकत्वं नानेत्यस्योक्तं तदुपपादनपर एवोभयनिषेध इत्यादिग्रन्थ इति योजयति **यद्वा सविशेषणे हीति न्यायेति** । इत्यादिनेत्यनेनोभयनिषेधे गौरवादित्यादेः पूर्वैव योजना । युक्त्यन्तरत्वपरित्यागेन न्यायमूल इत्युक्तित्वपुरस्कारेणैव सर्वो ग्रन्थो नेय इति यत्कचिदिति वाक्यं च यथास्थितप्रकृतन्यायाश्रयणेन प्रवृत्तशङ्कापरिहारकमतस्तत्र





व्यवधानशङ्कावकाशो नेति च सूचयति । ननु नानात्वरूपविशेषणविशिष्टावयवगुणकर्मादिनिषेधस्य विशिष्ट-विषयतया कथं विशेषणमात्रविषयकत्वेन पर्यवसानमुच्यते । न हि विशिष्टविधिनिषेधाभ्यां विशिष्टं विहाय विशेषणमात्रं विषयीक्रियत इति वक्तुं शक्यते। विशिष्टविषयकस्य प्रधानविशेषणविषयकत्वाङ्गीकारे वा तत्र लक्षणा स्यादित्यतो न वाक्येन विशिष्टं विहाय विशेषणमात्रं विषयीक्रियत इति ब्रूमः । अपि तु वाक्येन विशिष्टप्रति-पादनेऽपि विशेषणं प्रथमप्राप्तं उभयविधौ तन्निषेधे च गौरवमतस्तस्यैव विशेषणमात्रे पर्यवसानं व्याख्येयमिति व्याख्यातृप्रतिपत्त्यनुसारेण विशेषणविषयकत्वमिति वदाम इत्याशयेन तद्विषयतामुपपादयति **अत्र प्रतीत इति** । एतदेव दृष्टान्तेनोपपादयति **यथेति** । दध्ना होमं भावयेदित्यर्थाश्रयणादिति भावः । लक्षणादीत्यादिपदेन विशेषणमात्रे शक्त्यन्तरपरिग्रहः । एवं च बाधमूलत्वेन सविशेषणे हीति न्यायमङ्गीकुर्वाणैरपि विशेष्यं नाभिधा गच्छेदित्युक्त-न्यायेन एकदेशेति न्यायेन च प्रथमप्राप्तत्वस्यैव विशेषणविधौ तन्निषेधे वा नियामकतया स्वीकारप्राप्तौ सत्यामुभयविध्यादौ गौरवमेवैतन्न्यायमूलतया स्वीकार्यम् । ततश्चैकदेशेति वाक्यानुसारेण एकदेशमादायोपपन्नस्य सर्वांशे प्रवृत्त्ययोग इत्येवं लाघवादेव विशेषणोपसंक्रामकत्वमित्येवं सविशेषणे हीति न्यायस्य लाघवमूलत्व तैव पर्यवस्यतीति ज्ञेयम् । एवं चास्य बाधमूलकत्वं परोक्तमपि न स्वीकार्यमिति च मूलभूतन्यायमाहेत्यनेन सूचितम् । यत्र वस्तुतो बाध आयाति तत्र सोऽवर्जनीयसन्निधिः । न तु विशेषणोपसंक्रमणे समूलम् । एकदेशेत्यनुसारेण लाघवस्यैव क्लृप्तत्वादित्यलम् । अन्यथाख्यातिग्रन्थस्तु विनोद एव दूषितः । ..........................................

ततश्चात्राप्यगतिरेवेति शेषः । **आहुरिति** । अनेन **गौरवादिति** मूलानुसारेण सविशेषण इति न्यायस्य लाघव-मूलकताप्रास्या बाधमूलकतया वर्णनमयुक्तमिति सूचयति **अप्राप्तत्वात्तन्निषेधेति** । न च नान्तरिक्षेऽग्निश्चेतव्यो न दिवीत्यादाविवाप्रसक्तस्यापि निषेधः किं न स्यादिति वाच्यम् । हिरण्यं निधाय चेतव्यमित्येतद्विधिस्तुत्यर्थतया तत्राप्रसक्तस्यापि निषेधोपपत्तावपि प्रकृते तादृशप्रयोजनाभावेनाप्रसक्तनिषेधानुपपत्तेरित्याशयात् । **आभासेतीति** । इदं चाभासप्राप्तत्वादिति वाक्यस्येव तदुपपादकतदुत्तरतया चेति वाक्यस्यापि सङ्ग्राहकमित्यतो यद्युगपदित्यादि-विशिष्टावतारोपपत्तिः । तद्वाक्यस्थदर्शयिष्याम इत्यस्य न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुरित्येतद्भाष्य-व्याख्यावसर इत्यर्थस्य सिद्धवत्कारेणैतट्टीकाग्रन्थप्रवृत्तेरिति ज्ञेयम् । नास्माकमप्राप्तनिषेधासंभवलक्षणो दोषः । प्राप्तेर्दर्शितत्वात् । किन्तु सर्वनिषेधवादिनः परस्यैवेत्याह मूले **परस्यैवेति** । **प्रमाणान्तरेति** । तेषामागमैक-समधिगम्यत्वस्योपपादयिष्यमाणतया प्रत्यक्षादिप्रमाणान्तरेण तत्प्राप्तेर्वक्तुमशक्यत्वादिति भावः ।

**स०व्र०**— गौरवादेकविषयत्वे वक्तव्ये प्रथमातिक्रमे कारणाभावान्नागृहीतविशेषणन्यायाच्च विशेषण-निषेध इत्याह **विशेषणस्येति** । विशेष्यविषयत्वे विशेषणवैयर्थ्यं चेत्याह **अन्यथेति** । विशेषणविषयत्वेऽपि विशेष्याभिधानस्य निषेध्याधिकरणसमर्पकत्वेनानुवादत्वान्नानर्थक्यमिति भावः । अत्र दृष्टान्तमाह **न जीर्णेति** । इदं विशिष्टविषयकनिषेधस्य विशेषणे पर्यवसानोदाहरणम् । विशिष्टविषयकविधेर्विशेषणपर्यवसानोदाहरणस्य 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यादेः ग्रहणायादिपदम् । तर्हि गौरवाद्विशिष्टविधिनिषेधौ क्वापि न स्यातामित्यत आह **यत्कचिदिति** । 'सोमेन यजेत' 'अपरपक्षे श्राद्धं कुर्वीत' 'न हिंस्यात् सर्वा भूतानि' इत्यादीत्यर्थः । नन्वत्रापि

अगतिका गतिरस्ति निर्विशेषश्रुतेरित्यत आह **सविशेषत्वं चेति** । जन्माधिकरणे । **एकमेवाद्वितीयमित्यादौ सजातीयेति** । अत्रैकपदेन स्वगतनानात्वनिषेधः । अवधारणेन सजातीयभेदनिषेधः । अद्वितीयमित्यनेन विजातीय-नानात्वप्रतिषेध इति ज्ञातव्यम् । यथाऽऽह, 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात् सजातीयो विजातीयः शिलादितः । तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमादि'ति ।

**वि०—** **सविशेषण इति** । विशेषणविशिष्टे वस्तुनि प्राप्तौ विधिनिषेधौ विशेषणमात्रपर्यवसानौ भवतः इति भावः । विशेषणविशेष्योभयनिषेधः किं न स्यादित्यत आह **उभयेति** । तर्हि विनिगमनाविरहात् विशेष्यनिषेधः किं न स्यादित्यत आह **विशेषणस्येति** । दण्डी ध्वस्त इत्यादौ विशेषणस्यैव प्रथमोपस्थितेरित्यर्थः । प्राधान्यात् विशेष्यमेव प्रथमोपस्थितं ब्रूम इत्यत आह **अन्यथेति** । देवदत्तो ध्वस्त इत्येव वक्तुं शक्ये दण्डीति दण्डरूप-विशेषणोपादानवैयर्थ्यादिति भावः । विशेषणमात्रपर्यवसाने उदाहरणं च दर्शयति **न जीर्णेति** । जीर्णत्वमलवत्व-रूपविशेषणनिषेधस्यैव तत्र दर्शनादित्यर्थः । विशेषणमात्रे उपक्षीणशक्तिरभिधाशब्दशक्तिः विशेष्यं न गच्छेदि-त्यर्थः । ननु तर्हि लम्बकर्णो ध्वस्त इत्यादौ विशिष्टविषयविधिनिषेधाङ्गीकारो न स्यादित्यत आह **यत्कचिदिति** । चित्रगुरानीयतामित्यादौ विशेष्यमात्रान्वयो दृष्ट इति । तत्सत्यं चित्रविशेषणस्यानयनान्वयबोधे सति प्रथमोप-स्थितमपि विशेषणं परित्यज्य विशेष्यमात्रपर्यवसानोपपत्तेरिति द्रष्टव्यम् । ननु तथापि नेहनानेतिश्रुतौ नानात्व-विशिष्टब्रह्मनिषेध इति वक्तुं न शक्यते निर्विशेषश्रुत्या ब्रह्मणि विशेषणाभावस्य सिद्धत्वादित्यत आह **सविशेषणत्वमिति** । जन्माधिकरण इति शेषः । **परस्यैवेति** । स्वर्गापूर्वादीनामागमं विना प्राप्त्यभावादिति भावः ।

**चषकः—** **नानाभूतः** नानात्वं प्राप्तः । भूप्राप्तावात्मनेपदी । आधृषाद्वेति विभाषितो णिच् । **भाव-प्रधानेति** । प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतोपन्नो हि भावस्तन्मुख्यविशेष्यकशाब्दधीजनक इत्यर्थः । 'एकदेशापवादेन कल्प्यमाने तु बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिता' इत्यभियुक्तवचन-मनुरुन्धान आह **उभयेति** । विशेष्यमात्रविषयकत्वपर्यवसानेन लाघवसंभवेऽपि विशेषणविषयकतयैव निर्देशोप-पत्तेरित्यर्थः । **भवितृप्राधान्येऽपीति** । नानापदस्य लक्षणानुपगमेनाश्रयमुख्यविशेष्यकान्वयधीजनकत्वोप-गमेऽपीत्यर्थः । **न्यायादिति** । स्वर्गी ध्वस्त इत्यादिवदिति भावः । लाक्षणिके 'नागृहीतविशेषणाबुद्धिर्विशिष्ट-मवगाहत' इति न्यायेन पर्यवसानमुपेयमित्याह **विशेषणस्येति** । **तदुपादानेति** । विशेषणोपादानेत्यर्थः । विशेषणविषयकतयैव पर्यवसानं निदर्शनप्रदर्शनेन द्रढयति **न जीर्णेति** । विशेषणनिषेधाश्रयसमर्पकतयाऽनुवादकत्वेन स्नातकपदं सार्थकमिति भावः । उक्तार्थेऽभियुक्तवचनं प्रमाणयति **उक्तमिति** । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीत्यादौ विशिष्टकर्मविधानादनेकेषां गुणानां विधिः सिद्ध्यतीति भेदलक्षणीयसिद्धान्तो भज्येतेत्यत आह **यत्कचिदिति** । **अगतिकतया** । अनेकगुणविधाननियन्त्रितवाक्यभेदप्रसङ्गेन । दण्डदेवदत्त-रूपविशेषणविशेष्यवृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावद्वयसमवधानदशायां दण्डी नास्तीत्यादिकमेव विशिष्टनिषेधस्योदाहरणम् । ननु ब्रह्मण एव निर्विशेषतया तद्गतविशेषेषु नानात्वनिषेधन एव तात्पर्यमित्युक्ति।





कथं सङ्गच्छत इत्यत आह **सविशेषत्वमिति** । जन्मादिनय इति पूरणीयम् । **आभासेति** । भगवद्रूपविशेषाः परस्परं भिन्ना एकक्षणावच्छिन्ननानाधिकरणनिरूपिताधेयताकत्वात् घटपटादिवदिति युक्त्याभासप्रत्यक्षाभासश्रुतितात्पर्य-भ्रमादीत्यर्थः । इत्यादीत्यादिपदेनाहिकुण्डलनयः परिगृह्यते । तत्रापि भागवतगुणक्रियादीनामीशात् भेद एवोपेतव्य इति पूर्ववादिमतं दर्शयिष्याम इत्यर्थः । **स्वगतनानात्वेति** । एकमेवेत्यादावेकपदेन स्वाश्रितगुणक्रियादिप्रति-योगिकस्यैवकारेण जीवप्रतियोगिकस्याद्वितीयपदेन जडप्रतियोगिकस्य च नानात्वस्य निषेधमित्यर्थः ।

**प्रदीपः**— ननु नानाशब्दस्य धर्मिपरत्वात् धर्मिनिषेध एव न तु नानात्वलक्षणधर्मनिषेध इति शङ्कते **नन्वत्रेति** । प्रमाणान्तरवशाद्धर्मनिषेधसिद्ध्यर्थं भावप्रधाननिर्देशाभावेऽपि तदर्थलाभः सिद्ध्यतीत्याह **भवितृ इति** । नेह नानास्तीति निषेधः प्रतीयते स चैवं धर्मानित्यादिसमाख्यया नानापदाच्च नानाभूतधर्माणामिति वक्तव्यं तत्र सविशेषणे विषये निषेध्ये वोपात्ते विधिनिषेधयोर्विशिष्टविषयत्वाभावात् न विशिष्टनिषेधः । तत्र संबन्धाश्रयणे-नावृत्तिलक्षणवाक्यभेदाभावेऽपि गौरवलक्षणवाक्यभेदप्रसङ्गात् क्वचिदेकस्यैव गुणत्वप्रधानत्वलक्षणवैरूप्यापाता-च्चेत्याह **उभयेति** । तेनैव विषयत्वे वक्तव्ये प्रथमातिक्रमे कारणाभावान्नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायाच्च विशेषनिषेध इत्याह **विशेषणस्येति** । विशेष्यविषयत्वे विशेषणवैयर्थ्यं चेत्याह **अन्यथेति** । विशेषणविषयत्वे विशेष्योपादानमानर्थक्यमाशङ्क्य निषेध्याधिकरणसमग्रकत्वेनानुवादत्वात् नानर्थक्यमिति दृष्टान्तमुखेनाह **न जीर्णेति** । स्नाननिषेधाभावेऽपि निषेध्याश्रयपूर्वकत्वेन स्नातकपदस्य सार्थक्यदर्शनादित्यर्थः । विशिष्टोपादाने विधिनिषेधयोः विशिष्टविषयत्वे गौरवापातात् प्रथमातिक्रमे कारणाभावात् न्यायाच्च । **विशेष्यविषयत्वानुपपत्तेः** विशेषणविषयत्वादेवेत्युक्तं वै तदित्याह **अत एवेति** । गौरवात्तर्हि विशिष्टे विधिनिषेधौ क्वापि न स्याता-मित्यत आह **यत्किचिदिति** । अस्ति तावत् । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति विशिष्टविधिपरं वाक्यं तत्र विशिष्टविधौ प्रत्येकं विधिव्यापारेणावृत्तिलक्षणवाक्यभेदप्रसङ्गाद्द्रव्यदेवताया अत्र ह्यग्निहोत्रं जुहोतीत्यनेन कर्मणो विहितत्वात्समानपदोपात्तसन्निहितधात्वर्थपरित्यागेन भिन्नपदोपात्ते दधिलक्षणो गुणो विधीयते प्रत्ययेन विप्रकृष्टविध्यसंभवनिमित्तश्च सन्निकृष्टः विकृष्टः यथोद्भिदा यजेतेत्युद्भिदादीनां नामधेयत्वेन गुणत्वपरत्वासंभवात् समानपदोपात्त एव नामावच्छिन्नो धात्वर्थः प्रत्ययेन विधीयते तथाचोभयविधौ वैरूप्यप्रसङ्गाच्च न विशिष्टविधिः संभवति तत्र पुरुषप्रयत्न एव सर्वगुणविशिष्टो विधीयते प्रधान एव श्रुतविधिव्यापारगुणेष्वाक्षिप्ता विधयः प्रवर्तन्ते प्रमाणान्तरेणाप्राप्तेर्गौरवादिकं गत्यभावात्सोढव्यं तथैवागत्या विशिष्टनिषेधोऽवगन्तव्यः । नन्वत्राप्यगतिरस्ति निर्विशेषत्वश्रुतेरित्यत आह **सविशेषत्वं चेति** । ननु धर्मिणः प्रमाणान्तरत्वाद्धर्माणां भेदो प्राप्त इति कथं तन्निषेध इति शङ्कते **नन्विति** । अत एवाभास-प्राप्तत्वान्निषेधोपपत्तिरित्यत आह **नेति** । नोऽस्माकमप्राप्तप्रतिषेधासंभवलक्षणो दोषप्राप्तेः दर्शितत्वात् किन्तु सर्वनिषेधवादिन एवेत्याह **परस्येति** । श्रुतिप्रमितस्य निषेधासंभवादित्याशयः । अप्राप्तप्रतिषेधनिवृत्त्यर्थ-मस्मदुक्तदिशैवं वाक्यान्तरे प्राप्तिस्त्वया संपादनीयेत्याह **एकमेवेति** ।

अविशेषसतः साधकत्वसाधने अनवस्थितिः—

**२५२ सु०—** ननु यथा भवतो मिथ्याभूतस्य साधकत्वं न सम्मतम्, तथा मम सत्यस्य साधकत्वं न सम्मतम् । चैतन्यातिरिक्तस्य सत्यताऽनभ्युपगमात् । चैतन्यस्य च क्रियावेशशून्यस्य साधकत्वायोगात् । तत्र यथा मिथ्याभूतस्य साधकत्वानभ्युपगमेन श्रुतेर्मिथ्यात्वे असाधकत्वप्रसङ्गान्न बन्धमिथ्यात्वसाधकतेत्युक्तं भवता, एवं मयाऽपि सत्यस्य साधकत्वमनभ्युपगच्छता वक्तुं शक्यत एव । प्रत्यक्षस्य सत्यत्वे साधकत्वं न स्यात् । मिथ्यात्वं तु त्वयैव नोपेयते । ततश्च प्रत्यक्षस्यापि बन्धसत्यत्वसाधकत्वाभावात् 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत' इत्यनुपपन्नमिति । एवं च प्रथममेव मतिकर्दमे कथारम्भणमशक्यमापद्येत । तेनाविचार्यैव तावत्प्रमाणसदसत्त्वं विचार आरब्धव्य इति । मैवम् । दुःखादिसत्यताग्राहिणः प्रत्यक्षस्य सत्यत्वेऽप्यविरोधात् । सतः साधकत्वं मया न स्वीकृतमित्युक्तमिति चेत्तत्राह **साधकत्वमिति** ।

**अनु०—** साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता ॥
स्वीकृतं हि

**तेन मायावादिना** । भावरूपाज्ञानस्येति शेषः । **हि**शब्दो हेतौ, प्रसिद्धिद्योतको वा ।

**परि०—** **क्रियावेशेति** । औदासीन्यप्रच्युतिहीनस्येत्यर्थः ॥ **मतिकर्दम इति** । बुद्धिकालुष्य इत्यर्थः ।

**गु०दी०—** **चैतन्यस्य च क्रियावेशशून्यस्य साधकत्वायोगात्** इत्यत्र साधकत्वं हि कार्यस्य या सिद्धिरुत्पत्तिस्तां प्रत्यनुकूलत्वम् । कथमन्यथा निष्क्रियस्य कालादृष्टादेः साधकता । अतः कार्ये क्रियावेशाऽवश्यंभावेऽपि कारणे क्रियावेशस्य निष्कारणत्वेन ब्रह्मकारणतायामनुपपत्त्यभावात् । अतः परस्यैव ब्रह्मरूपक्रियावेशो न ब्रह्मणः ।

**यादु०—** **मतिकर्दमे** बुद्धिकालुष्ये ।

**वं०प०—** **साधकत्वायोगादिति** । सिद्धिकर्तृत्वरूपसाधकत्वायोगादित्यर्थः ।



**वा०चं०**— ननु 'साधकत्वं सतस्तेने'त्यादिभाष्ये मायावादिसंबन्धिसत्साधकत्वाङ्गीकारव्युत्पादनमसङ्गतं फलाभावात् । न चासतः साधकत्वाभावे सतोऽपि तन्न स्यादिति प्रतिबन्दीमोचनं तत्फलमिति वाच्यम् । मूलाभावेन परस्य सतः साधकत्वाङ्गीकारायोगात् । योगे वा प्रत्यक्षादेः साधकत्वेनास्माभिरनुपन्यस्तत्वेन मां प्रति प्रतिबन्द्या अनुत्थानात् । न च प्रत्यक्षादेः साधकत्वेनानुपन्यासेऽपि बाधकत्वेन त्वयोपन्यासात्स्वपक्षासाधकस्य च परपक्षबाधकत्वासंभवात्तत्खण्डयितुं युक्ता प्रतिबन्दीति वाच्यम् । मदुक्तविरोधोपन्यासस्य परोक्तसाधक-निरासार्थत्वेन प्रतिबन्दीग्रहणेन प्रत्यक्षादेर्बाधकत्वासंभवेऽपि प्रतिपक्षत्वसंभवेन परोक्तस्य साधकत्वानिर्वहिन व्यर्थत्वादित्यत आस्तामियं प्रमाणसदसत्त्वचिन्ता प्रमाणेनैव प्रमेयसिद्धेः । अन्यथा त्वयाऽपि मिथ्यात्वनिराकरणे सत्यतासाधने च प्रत्यक्षादिप्रमाणोपन्यासस्य, सत्साधकत्वस्य प्रतिवाद्यनङ्गीकारेणासत्साधकत्वस्य च स्वानङ्गी-कारेणाशक्यतया आवयोः साधकबाधकोपन्यासस्याशक्यतया वा कथाभावप्रसङ्गात्सत्त्वासत्त्वौदासीन्येन प्रमाणेनैव कथाप्रवृत्तेरुभाभ्यामपि स्वीकार्यतया मिथ्यात्वसाधकतया श्रुत्याद्युपन्यासो ममाप्युपपन्न एवेति परेण शङ्किते मदुपन्यस्तप्रमाणस्योभयसिद्धसाधकभावतया प्रमाणसदसत्त्वविचारपूर्वककथाप्रवृत्तावपि मम न काऽपि क्षति-रित्याशयेन भाष्यकृता स्वप्रमाणस्योभयसिद्धसाधकभावः प्रदर्श्यत इति नासङ्गतिरित्यभिप्रेत्योत्तरभाष्यं योजयति **नन्विति** । भाष्ये साध्यानुक्तेः साध्यमध्याहृत्य तत्र प्राप्तप्रतिबन्दीमोचनाय हेतुकथनपरं भाष्यमवतारयति **दुःखादीति** । प्रतिवादिन इति प्रकृतस्य परामर्शो मायावादिनः सत्साधकत्वस्वीकारानुपन्यासेन प्रकृतानुपयोगापत्तिस्त्वयेति सन्निहितप्रकृतस्यापि मायावादिन आपरोक्ष्येण निर्दिष्टस्य तेनेति पारोक्ष्येण परामर्शानुपपत्तिरित्यतः प्रकृतत्वमात्रविवक्षया मायावादिपरामर्शोऽयमित्याह **तेनेति** । दुःखादेः प्रकृतत्वात्तस्य साधकत्वमित्यनेन संबन्धे साक्षिणो दुःखादिसाधकत्वस्य स्पष्टं परेणानुपन्यासादाह **भावेति** । स्वीकार्यत्वा-भिप्रायेण स्वीकृतत्वोक्तिर्नोपचारिकीति भावेनाह **प्रसिद्धीति** । इत्याद्युत्तरवाक्येनेत्यत्रादिपदेन 'भावान्तर-स्याज्ञानस्य न निवर्तकं तस्याज्ञानविषयप्रतिभासत्वादि'त्यादेः सङ्ग्रहः ।

**वा०र०**— **तन्न स्यादिति** । इतःपरं तदीयेति शेषः । परस्येत्यस्य मायावादिन इत्यर्थः । प्रतिबन्द्या अनुत्थानादित्यनन्तरमिति सिद्धान्तिना वक्तुं शक्यत्वादिति प्रमेयमभिप्रेतम् । तद्वाक्येऽस्माभिरिति मां प्रतीति चास्मदो द्वयोश्चेति विधानाद्युक्तम् । मूले भवतो ममेति प्रयोगात्परकीयोक्तिप्रदर्शनभारेणास्माभिरिति मां प्रतीति चोक्तम् । तेन परैः परं प्रतीत्येवार्थः । त्वयेत्यस्यानुपन्यासेनापीत्यत्रापि संबन्धः । **तत्खण्डयितुम्** प्रत्यक्षस्य बाधकत्वं खण्डयितुम् । युक्तेत्यतःपरं परस्येति पूरणीयम् । अनिर्वहिनेत्यतः परं साधकनिरासससिध्येति पूरणीयम् । व्यर्थत्वादित्यनन्तरमिति मया वक्तुं शक्यत्वादिति प्रमेयमभिप्रेतम् । व्यर्थत्वादित्यत्र प्रतिबन्दीग्रहणस्येति शेषः । प्रतिबन्दीप्राप्तौ साम्यापत्त्या बाधकत्वासंभव इति भावः । अन्यथा कथाभावप्रसङ्गादिति संबन्धः । प्रमाणोपन्यासस्याशक्यतयेति तत्र हेतुः । आवयोरिति हेत्वन्तरम् । प्रसङ्गादित्यनन्तरं तस्मादिति शेषः । तेनाविचार्येत्येतन्मूलानुवादरूपत्वात् । भिन्नवाक्यत्वाच्च । **उभयसिद्धेति** । तदर्थमेव मायावादिसंबन्धि-सत्साधकत्वाङ्गीकारव्युत्पादनमिति पूरणीयम् । तेनोपक्रमानुगुण्यमिति ज्ञेयम् । एवमस्माभिर्ममेति तत्र तत्र

मूलानुसारेणोक्तिः । यद्वा शिष्यस्येयं शङ्का । तथाहि । शिष्यः सिद्धान्तिमतमाश्रित्य सतः साधकत्वानङ्गीकारायोगाद्योगे वेत्याह । तं प्रति चान्यः शिष्यः पूर्वपक्ष्युक्तप्रतिबन्दीं समर्थयते । **न च प्रत्यक्षादेरिति** । अथ पूर्वः शिष्यः पूर्वपक्ष्युक्तप्रतिबन्धावैयर्थ्येन तन्मोचनाय मायावादिनापि सतःसाधकत्वस्याङ्गीकर्तव्यत्वप्रतिपादनवैयर्थ्यमित्याह । मदुक्तविरोधेतीति योज्यम् । शिष्टं समानम् । आस्तामियमिति ग्रन्थस्यापि सत्यमेवं सिद्धान्तिना वक्तुं शक्यं तथापि परो यद्यास्तामित्यादिरूपेण शङ्केत तदा तत्परिहाराय भाष्यकारेण स्वप्रमाणस्योभयसिद्धसाधकाभावः प्रदर्शनीय इति नासङ्गतिरित्याह । आस्तामियमितीति पूर्वयोजनायां प्रवर्तनवच्छिष्यपक्षेऽपि सत्यमेवं सिद्धान्तिरीत्या त्वया वक्तुं शक्यम् । तथापि यदि पर आस्तामियमित्यादिरीत्या शङ्केत तदा तव परिहारोऽन्यो नास्ति । अतो भाष्यकारेणैव तं प्रति मदुपन्यस्तप्रमाणस्येत्याद्याशयेन स्वप्रमाणस्योभयसिद्धसाधकभावः प्रदर्शनीय इति प्रतिबन्दीमोचनाय भाष्यकारेण स प्रदर्श्यत इति नासङ्गतिरिति योजना ज्ञेया । एवमेवंजातीयके द्रष्टव्यम् । 'एतद्ग्रन्थीयभावं तु सम्यक् बुध्वा मयाऽत्र हि । योजनाऽकारि तत्प्रीतो गुरुर्भूयान्ममानिशम् ।' **मतिकर्दमः** तत्कालुष्यम् । **साध्यमध्याहृत्येति** । अतो मया सतः साधकत्वं नाङ्गीकृतमिति न शक्यते वक्तुमिति साध्यमुत्तरत्र स्पष्टम् । परेणापि दुःखादिसिद्धिः प्रमाणान्तरानङ्गीकारात्साक्षिणैव वाच्येत्यत उक्तं **स्पष्टमिति** । **अनुपन्यासादिति** । ततश्च स्वीकृतत्वोपपादनायोग इति भावः । **आहेति** । दुःखादिकमत्र न विवक्षितं किन्त्वज्ञानमित्याहेत्यर्थः । **स्वीकार्यत्वाभिप्रायेणेति** । उपचारोक्तीनां बहुलमुपलम्भादौपचारिकत्वशङ्कोदयः । वस्तुतो मुखतस्तथा स्वीकाराभावेऽप्यहमज्ञो मामन्यं च न जानामीत्यादितदीयवाक्यपर्यालोचनया तथा स्वीकारस्यार्थतः प्राप्तत्वात्स्वीकार्यत्वलाभोपपत्तेस्तदभिप्रायेण स्वीकृतत्वोक्तिर्न तूपचारमात्रमिति भावः । अत एवात्र तद्ग्रन्थ एवासाधकत्वेन मूले उक्त इति शेषेऽभिप्रेत इति ज्ञेयम् ।

**स०व्र०**— **मतिकर्दमे** मतिकालुष्ये अतिकर्दम इति वा । सिसाधयिषतेत्यस्य साक्षिप्रत्यक्षमिति वक्ष्यमाणेन संबन्धः । प्रत्यक्षं तावदित्यादिपरकीयं वाक्यमिति विवेकः ।

**वि्ठ०**— **मतिकर्दमे** बुद्धेः कालुष्ये । सत्यस्य साधकत्वमनभ्युपगच्छतो ममाविरोधो सिद्ध इत्याशङ्कावारकतयोत्तरमूलं सङ्गमयति **सतः साधकत्वमिति** । **शेष इति** ।

**प्रदीपः**— सत एव साधकत्वं नासत इत्युपपादितमाक्षिपति **ननु यथेति** । सत्त्वनियमाधीनश्चेत् विचारारम्भः सोऽपि तदधीन इतीतरेतराश्रयात्प्रथमतो कालुष्ये सति कथारम्भ एवाशक्य इत्याह **एवं चेति** । अतो बुद्धिकालुष्यपरिहाराय सत्त्वासत्त्वाभ्युपगमोदासीनैर्विचार आरभ्यतामित्याह **तेनेति** । प्रत्यक्षादिसत्त्वस्य विचाराधीनत्वान्नेतरेतराश्रय इति परिहरति **मैवमिति** ।

**२५३ सु०— मायावादिना खलु भावरूपाज्ञानं सिषाधयिषता 'प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासदर्शनादि'त्यादिना तत्साधनाय साक्षिप्रत्यक्षं प्रमाणमङ्गीकृतम् । 'आश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यमि'त्याद्युत्तरवाक्येन प्रत्यक्षस्य साक्षित्वावगमात् ।**

**एवं च साक्षिणा अज्ञानसिद्धिमिच्छता परेण सतः साधकत्वं स्वीकृतमेव । साक्षिचैतन्यस्य सत्त्वात् । अतो 'मया सतः साधकत्वं नाङ्गीकृतमि'ति न शक्यते वक्तुम् । अस्माभिरपि दुःखादिबन्धसत्यतायां साक्षिप्रत्यक्षमेवोपन्यस्तमिति हृदयम् ।**

**परि०**— प्रसिद्धिद्योतक इत्युक्तं व्यनक्ति **मायावादिना खल्विति** ॥ **आश्रयेति** । अज्ञानाश्रयप्रतियोगिनोर्ज्ञनित्यर्थः । प्रतियोगिपदेनात्राज्ञानविषयो ध्येयः । हेतावित्युक्तम् । तद्वचनक्ति **अतो मयेति** ॥ यस्मात्सतः साधकत्वं तेनापि स्वीकृतमत इत्यर्थः । अस्त्वज्ञानादिसाधकं साक्षिरूपं सत्यं दुःखादिसाधकं प्रत्यक्षं कथं सत्यमित्यत आह **अस्माभिरपीति** ।

**गु०दी०**— **तत्साधनाय साक्षिप्रत्यक्षं प्रमाणीकृतम्** इत्यत्र **तत्साधनाय** अज्ञाननास्तित्ववादिनं प्रति तस्याज्ञानस्य साधनायास्तित्वसमर्थनाय । **प्रत्यक्षावभासदर्शनात्** इति प्रत्यक्षावभासरूपसाक्षिण एव लिङ्गतया साधकत्वेन कीर्तनादिति भावः ।

**यादु०**— ननु सतः साक्षिणः साधकत्वेऽपि तदतिरिक्तस्य चाक्षुषादिप्रत्यक्षस्य न सतः साधकत्वं मया स्वीक्रियत इत्यत आह **अस्माभिरपीति** । परस्परसत्तायां परस्परापेक्षितत्वेन खल्वत्रेतरेतराश्रयत्वं परस्याभिप्रेतं न ज्ञप्तौ ।

**वं०प०**— तत्प्रत्यक्षं चक्षुरादिकं किं न स्यादित्यत आह **आश्रयेति** । ननु दुःखादिबन्धस्य सत्यतायां प्रत्यक्षविरोधत इति भवद्भिश्चक्षुरादिप्रत्यक्षस्यैव प्रमाणतया भवदभिप्रेतत्वात्तस्य च मया सत्त्वानङ्गीकारात्कथं सतः साधकत्वं तेन स्वीकृतमित्युच्यत इत्यत आह **अस्माभिरपीति** ।

**कं०रा०**— **आश्रयेति** । आश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यमित्युत्तरवाक्येऽपिशब्दमहिम्ना न केवलमज्ञानविषयकं ज्ञानं साक्षिचैतन्यं किं त्वाश्रयप्रतियोगिज्ञानमपि साक्षिचैतन्यमित्यर्थलाभेनाहमज्ञ इति प्रत्यक्षस्य साक्षित्वावगमादित्यर्थः ।

**श्रीनिधि०**— नन्वन्यमहं न जानामीति प्रत्यक्षे आश्रयस्यात्मनः प्रतियोगिनोऽन्यस्यापि ज्ञानात्कथं तत्राज्ञानमित्यत आह **आश्रयप्रतियोगिज्ञानमपीति** । साक्षीज्ञानमज्ञानसहमिति भावः । एवमपि घटस्सन्निति प्रत्यक्षस्य सत्यत्वं मया नाङ्गीक्रियते अतः पुनरपि मतिकर्दमतैवेत्यत आह **अस्माभिरपीति** । घटादिसत्यतापि साक्ष्यहीनैव तज्ज्ञानप्रामाण्यस्य साक्षिग्राह्यत्वादिति भावः । **अज्ञानसिद्धिरिति** । अज्ञानस्वरूपसिद्धिरित्यर्थः ।

**वा०चं०**— नन्वेतावताऽपि सत्साधकमित्युक्तिस्तदीया नास्तीति न तत्सिद्धिरित्यत आह **एवं चेति** । नन्वज्ञानसाधकस्य साक्षिणः सत्यत्वेऽपि दुःखादिसत्यतासाधकप्रत्यक्षादिसत्यतायां किमागतम् । न च यत्सत्यं

तन्न साधकमिति परव्याप्तिभङ्गेन प्रत्यक्षादेः सत्यत्वेऽपि साधकत्वसिद्धिरिति वाच्यम् । साक्षिव्यतिरिक्तसत्यं न साधकमिति परेण व्याप्त्यभ्युपगमात् । न चाप्रयोजकत्वम् । एवमप्युभयसिद्धप्रमाणाभावेन मतिकर्दमे कथाभावप्रसङ्गस्तदवस्थ एवेत्यतोऽज्ञानसाधकसत्यसाक्षिण एव दुःखादिसत्यतासाधकतयोपन्यासान्न क्षतिरित्याह **अस्माभिरपीति** । अज्ञानवशात्साक्षिणः साधकत्वं वदता कूटस्थचैतन्यरूपसाक्षिण एव साधकत्वमज्ञानं तु तत्र सहकारीति वा वक्तव्यम् । अविद्यावृत्तिप्रतिबिम्बितचैतन्यमेव साक्षी स एवाज्ञानसाधक इति वा वक्तव्यम् । तत्र प्रथमेऽज्ञानस्य सहकारिमात्रत्वेऽपि साधककूटस्थचैतन्यस्य सत्त्वात्सतः साधकत्वमक्षतमेवेति सतः साधकत्वं पराभ्युपगतमिति मदिष्टसिद्धिरेव ।

**वा०र०**— प्रत्यक्षं तावदित्येवोक्तावपि साक्षीत्यविशेषणात्कथं साक्षिप्रत्यक्षस्य तद्वाक्याल्लाभ इत्यत आह मूले **आश्रयप्रतियोगीति** । **इत्यादेरिति** । विवरणस्थस्येति शेषः । विवरणे हि अहमज्ञ इत्यादिप्रत्यक्षस्य भावरूपाज्ञानसद्भावे प्रामाण्योत्त्यनन्तरं तत्प्रत्यक्षस्य ज्ञानाभावविषयत्वमेवेति शङ्कावारणाय ज्ञानाभावस्याधिकरणप्रतियोगिरूपस्य निरूपकस्य ज्ञानाभावे प्रत्येतुमशक्यतया निरूपकतदुभयज्ञानाङ्गीकारे च ज्ञानरूप्रप्रतियोगिसद्भावप्राप्त्या ज्ञानाभावस्यैवाभावप्राप्तेः सुतरां तज्ज्ञानासंभव इति प्रतिपादिते तथा सत्यस्यात्राज्ञानमिति प्रतीयमानभावरूपाज्ञानस्यापि स्वनिरूपकाश्रयप्रतियोगिज्ञानाभावे प्रत्येतुमशक्यतया तदुभयस्य ज्ञानसद्भावाङ्गीकारे च विरोधिज्ञानप्राप्त्या भावरूपज्ञानस्यैवासंभवप्राप्तेस्तज्ज्ञानस्याप्ययोगः समान इत्येतच्छङ्कावारणाय आश्रयप्रतियोगीत्यादिवाक्यं प्रवृत्तम् । अस्यायमर्थः । आश्रयप्रतियोगिज्ञानस्य साक्षिरूपतया भावरूपाज्ञानस्फोरकत्वेन तद्विरोधित्वाभावात् तदुभयज्ञानसद्भावेऽपि संभवत्येव भावरूपाज्ञानमिति । आदिपदेनाज्ञानस्य साक्षिगम्यत्वप्रतिपादकतत्प्रकरणगतवाक्यपरिग्रहः । **एतावताऽपीति** । तदीयोक्तिबलेन साक्षिणोऽज्ञानसाधकत्वमित्यर्थसिद्धावपीत्यर्थः । **तदीयेति** । परकीयेत्यर्थः । **न तत्सिद्धिरिति** । सतः साधकत्वं तेनाङ्गीकृतमित्यस्य न सिद्धिरित्यर्थः । **अत आहेति** । मुखतः सत्साधकमित्यनुक्तावपि वस्तुतः सत्त्वेनाङ्गीकृतसाक्षिणाऽज्ञानसिद्धिरिति वदता सत एव साधकत्वमर्थत उक्तमेवेत्याहेत्यर्थः । **प्रत्यक्षादिसत्यतायामिति** । अत्र पूर्वोत्तरग्रन्थानुसारिप्रत्यक्षमात्रमेव वक्तव्यं तथापि साधकत्वेन संमतं विश्वं सत्यमित्यागमानुमानयोरपि स्वमते सत्त्वमस्तीति प्रदर्शयितुमादिपदप्रयोगः । अत एवार्थमतमित्यादिपूर्वमूले प्रत्यक्षादिकस्य साधकत्वमित्यादिपदप्रयोगोऽपि युक्त इति ज्ञेयम् । एवमुत्तरत्रापि । **अप्रयोजकत्वमिति** । साक्षिव्यतिरिक्तमपि सत्यं साधकमिति मयाऽभ्युपगमात् त्वदुक्तिरप्रयोजिकेत्यर्थः । तदवस्थ एवेतीत्यत्रेतिशब्दस्यावृत्तिः । आद्यो हेत्वर्थे इति हेतोरिति । प्रसङ्गस्य तदवस्थत्वादिति । एवंशब्दस्तदवस्थत्वस्यापरिहार्यत्वमाह **एवमपीति** । भवता हि मतिकर्दमपरिहारायोभयसिद्धप्रमाणभावस्योपन्यासार्थप्रवृत्तिः कृता । तादृशं च साक्षिरूपमेव प्रमाणम् । न च त्वया तदभ्युपगतं तदातिरिक्तस्यापि सत्यस्य साधकत्वं तु न ममेष्टमिति वृथा भवदीयः प्रयास इत्यर्थः ।

**स०व्र०**— परेण साक्षिप्रत्यक्षं प्रमाणीकृतमित्यत्र ज्ञापकमाह **आश्रयप्रतियोगीति** । ननु साक्षिचैतन्यस्य सत्त्वाभ्युपगमेऽपि चक्षुरादिप्रत्यक्षस्य साक्ष्यतिरिक्तस्य सत्यत्वे साधकत्वं न स्यादिति मयोच्यत इत्यत आह **अस्माभिरिति** ।





**विट्ठ०—** तथा चैवं योजना हि यस्मात् साक्षिणा भावरूपाज्ञानसिद्धिमिच्छता मायावादिना स्वीकृतमिति न तेन वक्तुं शक्यत इति प्रसिद्धिद्योतक इत्युक्तं व्यनक्ति **मायावादिना खल्विति** । आश्रयप्रतियोगी अहमज्ञ इत्यज्ञाश्रयस्वात्मज्ञानभूतं मामन्यं चेति प्रतियोगिज्ञानभूतमित्यर्थः । हेतावित्युक्तं तदन्वयं दर्शयति **अत इति** । साक्षिणः सत्यत्वेऽपि बन्धसत्यत्वग्राहिप्रत्यक्षस्य सत्यत्वं कुत इत्यत आह **अस्माभिरिति** ।

**चषकः—** साधकाभिमतानां साक्षीतरेषां सत्यता मया नोरीक्रियत इत्यत आह **अस्माभिरपीति** ।

**प्रदीपः—** ननु प्रत्यक्षं तावदित्यत्र साक्षिप्रत्यक्षमभिप्रेतमित्यत्र किं गमकमित्यत आह **आश्रयेति** । ननु साक्षी चैतन्यस्य सत्त्वाभ्युपगमे सत्यपि चक्षुरादिप्रत्यक्षस्य साक्ष्यतिरिक्तस्य सत्यत्वे साधकत्वं न स्यादिति मयोच्यत इत्यत आह **अस्माभिरपीति** ।

**२५४ सु०— अज्ञानवशादेव साक्षिणः साधकत्वं मया अङ्गीक्रियते न स्वत इति चेन्न । इतरेतराश्रयत्वप्रसङ्गात् । न खलु साक्ष्यवभासादन्याऽज्ञानसत्ता तवास्ति । ततोऽज्ञाने सति साक्षिणः साधकत्वसिद्धिस्तस्यां चाज्ञानसिद्धिरिति कथं नेतरेतराश्रयत्वम् । द्वयोरनादित्वान्नैवमिति चेत् तर्ह्यज्ञानवशादिति रिक्तं वचः । न हि सर्वथा यद्यन्नापेक्षते तत्तदधीनमिति युज्यते । अपेक्षायां तु परस्पराश्रयानुत्तारः ।**

**बिन्दुः— न खलु साक्ष्यवभासादन्येति** । तेन अज्ञानस्य प्रतिभासमात्रशरीरत्वाङ्गीकारादिति भावः । यदत्र नरसिंहाश्रमिणोक्तम् । अविद्यारजतादेः प्रतिभासमात्रशरीरत्वं वदतां मायावाद्याचार्याणां वाचामर्थो यदि ज्ञानमात्रशरीरत्वमिति स्यात् तद् भवेयुरेतानि दूषणानि न चैवम् । किन्तु प्रतिभासशब्दोऽयं न भावसाधनः किन्तु प्रतिभासत इति प्रतिभास इति व्युत्पत्त्या कर्माणि ....तः । एवं च प्रतिभासमानमात्रत्वं ज्ञातैकसत्त्वमिति यावत् । तथाच भावव्युत्पत्त्या अनभिप्रेतमर्थं कल्पयित्वा दूषयन्तश्छलवादित्वेन परास्ता इति । तदेतत्क्षीराशया धावतो बिडालस्य मुद्गरप्रपातानुसन्धानाशयमनुसरति । तथाहि । त्वदीयप्राञ्चो द्विविधा एकजीववादिनो बहुजीववादिनश्च । तत्र तत्त्वदीपनतो मुख्यं मतमाहेति अवतार्य एकजीवत्वप्रतिपादको विवरणग्रन्थो व्याख्यातः । तन्मते तु आत्मातिरिक्तं सत्त्वं प्रातिभासिकमिति सत्ताद्वैविध्यमेव । मतान्तरे तु व्यावहारिकी तृतीया । घटादिसत्ताऽस्त्येवेति पक्षद्वयेऽपि रजताविद्यादीनां प्रातिभासिकत्वव्यवहारः समस्ति । विज्ञानैकसत्त्वमात्रार्थत्वे प्रतिभासविषयीभूतरजतादिः पदार्थः किं तदतिरिक्तो वा उत तदात्मको वा । आद्ये तदीया सत्ता वाच्या । सा किं पारमार्थिकी वा व्यावहारिकी अथ प्रातिभासिकी । नाद्यद्वितीयौ अपसिद्धान्तात् । अन्त्ये पुनस्तदेवावशिष्यते । किमिदं

प्रातिभासिकमिति। ननूक्तं खलु प्रतिभासमानमात्रशरीरत्वमिति। सत्यमुक्तं किन्तु तत्रैव विकल्प्य पृष्टस्य च न विषयीभूतपदार्थसत्त्वस्योत्तरं किमपि नोक्तम्। पुनरेवमेवोक्तौ चर्वितचर्वणमात्रमवशिष्यते। द्वितीये तु किमधिकमाचरितं, भावव्युत्पत्तिमपहाय कर्तृसाधनत्वव्युत्पादनेन कथञ्चिच्छलप्रसङ्गमाचक्षाणेन जिह्रेषि। अथ रजतादेराशुतरविनाशित्वमात्रेण प्रातिभासिकत्वव्यपदेशस्तर्हि विद्युदादीनामचिरोत्पन्न-विनष्टघटादीनामपि तथात्वापत्तिः, अनाद्यविद्यायां तदसंभवश्च। न च विद्युद्घटादेरज्ञातस्याप्यवस्थानान्न तथात्वमविद्यात्वज्ञाता न तिष्ठतीति तस्याः प्रातिभासिकत्वमिति वाच्यम्। तत्किं स्वविषय-प्रकाशतुल्यकालाद्यवस्थायित्वरूपं समव्याप्तत्वं तत् आहोस्वित् यदा स्वयमस्ति तदा स्वीयप्रकाशो-ऽप्यस्तीति प्रकाशव्याप्तत्वमात्रम्। नाद्यः। उत्पत्तिकालतः एव गृहीतघटस्य ग्रहणावस्थायामेव च विनष्टस्य तथात्वानिस्तारात्। मोक्षकालानवस्थायिन्याः अविद्यायाः स्वविषयीभूतात्मप्रकाशापेक्षया अल्पकालीनत्वेन तथात्वाभावप्रसङ्गाच्च। अनाद्यनन्तकालं स्वतःप्रकाशमानस्य शुद्धस्य ब्रह्मणोऽपि शुक्तिरजतपङ्क्तिसन्निवेशापत्तेः। अत एव न द्वितीयोऽपि। ननु चिदात्मनः स्वविषयत्वाभावेन स्वविषयप्रकाशव्याप्यत्वरूपं तन्नास्तीति चेत् न। अविद्याया अपि तन्न स्यात्। न हि अविद्याविषयत्वमपि त्वन्मते तस्यास्ति मिथ्याभूतं तदस्तीति चेत्। सममेतद्ब्रह्मणोऽपि। अस्त्वात्मनस्तथात्वं तावता का क्षतिरिति चेत् हन्त ब्रह्मणोऽपि मिथ्यात्वापातेन तन्निवृत्त्या त्वदीयसर्वस्वभङ्ग इत्यतोऽतिरिक्ता का क्षतिः। न च तस्य प्रातिभासिकत्वेऽपि वेदान्तैः सत्यत्वेन प्रमितत्वान्निवर्तकाभावाच्च न निवृत्तिरिति वाच्यम्। तथात्वे प्रातिभासिकत्वादिसत्तात्रयनिर्वचनप्रयासः केवलमदृष्टार्थः त्वदीयप्राचीनैरनुष्ठित इति वक्तुमुद्यतोऽसि। तथात्वे पूर्वेषां साधु साहाय्यमनुष्ठितं पाण्डित्यताण्डवं नाटयता लोकोत्तरप्रज्ञेन नवीनेन पदार्थसत्त्वप्रमाणायत्तं निवर्तकायत्ता निवृत्तिरिति खलु त्वदीयसिद्धान्तनिष्कर्षेण निर्गलितोऽर्थः। अन्यत्सर्वं पलालं ग्रन्थकन्थामात्रं यथाकथञ्चिद्योज्यत इति तत्त्वम्। तर्हि अस्माकमपरिन्थित्वा-त्कृतमस्मच्चरणानुसरणम्। न ह्यस्मन्मतेऽपि ज्ञातैकसन्तः पारमार्थिकाः सुखादयः पदार्था न सन्तीति। नन्वेवमेव मन्मते वस्तुस्थितिः। तथात्वे त्वदीयशास्त्रे तत्तत्सत्तानिर्वचनं लक्षणं च उपन्यस्तप्रमाणादिकं च सर्वमसङ्गतं स्यात्। एतेन यदुक्तं तेनैव ज्ञाननिवर्त्यत्वमेव मिथ्यात्वं तदेव ब्रह्मातिरिक्तप्रपञ्चस्य बाध्यत्वं नाम। न च नैयायिकादेरपि क्षित्यादावीश्वरज्ञाननिवर्त्यत्वाङ्गीकारात्सिद्धसाधनता। तेन चैतन्यातिरिक्तस्य सर्वस्य तथात्वानभ्युपगमात्। नन्वेवं सति ज्ञानपदोपादानं व्यर्थम्। परेण हि यावती निवृत्तिरभ्युपगम्यते सा सर्वा ज्ञानजन्यैवेति व्यावर्त्यासंभवादिति चेत्। इष्टापत्तेः। एवं च परेषामस्माकं च ब्रह्मान्यत् ध्वंसप्रतियोगि न वेत्येव विप्रतिपत्तिशरीरमिति सिद्धान्तनिष्कर्षः। अनित्यत्वमेव च इहामुत्रफलभोगवैराग्योपयोगि न तु

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिज्ञानमपीति। तदप्यपहस्तितं बोध्यम्। तथाहि। एवं निष्कर्षं ब्रुवता हि पञ्चषाः पदार्था विप्रतिपत्तिविषया अवशेषिताः। तत्र च आत्मपदार्थः सर्वः सर्वस्य नित्यतयैव स्वीकृतः। मनस्तु वाद्यन्तरैरपि कैश्चिदनित्यत्वेनैव स्थापितम्। सामान्यमपि तादृगेव। 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा। व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्' इति याज्ञवल्क्योक्तेः। 'पक्षमध्ये मृदाशौचं मासमध्ये हुतं त्यजेत्। अर्कस्नानं च न स्वातिसवितुः शूद्रतां व्रजेदि'त्यादिस्मृत्यन्तरोक्तेश्च। परमाणुषु तु बहूनां स्वरूपे नित्यत्वे च विप्रतिपत्तिरेव। बन्धनिवृत्त्यनन्तरं मोक्ष इति वदता च त्वयापि कालस्य मोक्षकालावस्थायित्वमवश्यमङ्गीकृतप्रायमेव। अद्वैतभङ्गभीरुणा च ब्रह्मात्मकता वा वक्तव्येति परिशेषात् आकाशो नित्योऽनित्यो वेत्येतावत्यां विप्रतिपत्तौ पर्यवसितमित्यभिनवोऽयं मायावादः। एवं निष्कर्षतामातिष्ठता अविद्यामायादिपदार्थसद्भावं वा तदीयसत्तावैचित्र्यं वा प्रतिपादयतां स्वप्राचीनानां युष्मदस्मत्प्रतीतिगोचरयोरित्यादिना शास्त्रमुखे एव महता प्रबन्धेनाध्यासप्रतिपिपादयिषया प्रवृत्तस्य स्वदर्शनाचार्यस्य साधु मुखभङ्ग एव विहितः। तन्मतोपष्टम्भकत्वं च स्वस्मिन्नाटयतो महत्साहसमिति एतेनैव च। शतच्छिद्रस्वमतोपरितत्ववाद्युद्भाविततद्दूषणगणनक्रग्रहणभीषणमकूपारं तर्तुमपारयता अति-नवीनेन केनचिदपेयदीक्षिताभिधानेन "यया लोके भवेत्पुंसो व्युत्पत्तिः प्रत्यगात्मनि। सा सर्वा प्रक्रिया साध्वी ज्ञेया साक्ष्यनवस्थितेः" इति सुरेश्वरछर्दितमुपजीव्य प्राचीनैर्व्यवहारसिद्धविषयेषु द्वैतसिद्धौ परम् अमृष्यद्भिरनादिमत्सरेण ये नानाविधा दोषा दर्शिता इत्यादिमूर्खजनप्रतारकत्वमावल्गितं तदप्यपास्तमिति ध्येयम्। एवं वदता हि स्वशास्त्रे व्युत्पादितेषु पदार्थेषु यत्र यत्र यस्य यस्य परस्य दुष्टत्वबुद्धिर्भवति तं तं प्रति स स पक्षो नोच्यत एव किन्तु तदपेक्षया मूर्खं तत्र दूषणानभिज्ञं प्रति। एवं च पुरुषबुद्धिमपेक्ष्य सर्वमपि शास्त्रे प्रमेयमुपपद्यते। ब्रह्माद्वैतसिद्धौ प्रवृत्तैर्दर्शनाचार्यैर्हि तत्साधकतयोपन्यस्तेषु दुष्टेष्वपि पक्षेषु नात्यन्तक्षोदो विधेयः। अनास्थयैव प्रणीतत्वादिति स्वप्राचीनानां हृदयं निष्कृष्य विवृतं भवति। एवं हि सति कुत्रापि शास्त्रे दूषणभूषणादिकं वा कथायां वादिनोः सदसदुत्तरव्यवस्था जयपराजयनियमो निग्रहस्थानादिवादाश्चोच्छिद्येरन्। तत्रापि हि शब्दो नित्यश्चाक्षुषत्वात् गगनवदित्यादौ प्रतिवादिना असिद्ध्याद्युद्भावितायां मम शब्दानित्यत्वे तात्पर्यं तत्रैव त्वया दृष्टिर्देया। हेतुदृष्टान्तादिकं त्वनादरेणैव मयोपन्यस्तमिति वदन् वादी विजयी स्यात्। तथा ब्रह्माद्वैते विश्वमिथ्यात्वे च जरद्गवादिवाक्यं प्रमाणयन्नपि तत्प्रामाण्याप्रामाण्यचिन्तायां प्रवृत्तं प्रतिवादिनं प्रति साध्यांशे दृष्टिर्देया, प्रमाणेषु तु नातीव क्षोदः कर्तव्य इत्यादिकमुक्त्वा कृती स्यात्। यदि च तत्र मानाधीना मेयसिद्धिरिति तद्विचारं विना विप्रतिपद्यमानं प्रति साध्यांशप्रतिपत्तिरेव दुर्लभा। अन्यथा परस्पराश्रयत्वं स्यादित्यवश्यं तत्तद्विचारो विधेयः

तत्प्रसक्तानुप्रसक्तं च सर्वं विवेचनीयमिति मन्येथाः। तर्हि किमधिकमाचरितं बकबन्धप्रयासानुसरणेनेति मूलाशुध्या सर्वाशुद्धिरिति यत्किञ्चिदेतत्। यत्तु तत्परिष्कारार्थं केचित्प्रलपन्ति। यथा चन्द्रं बोधयितुं शाखायां चन्द्रत्वबुद्धिः अरुन्धती बुबोधयिषया वा स्थूलतारायां तद्बुद्धिः कार्यते। न तु तत्र वास्तवं चन्द्रत्वादिकम्। नापि प्रतिपन्नचन्द्राः स्वबोधकं पर्यनुयुञ्जते किमसन्तमेवावादीरिति। सन्ति च तादृशान्यपि दर्शनानि यथा व्याकरणशास्त्रे परिनिष्ठितं पचतीत्यादिरूपं बोधयितुं डुपचष्लट्इत्यादि काल्पनिकमेव प्रक्रियाजालं प्रदर्श्यते। तच्च अव्यवस्थितमेव। अत एव क्वचिद्व्याकरणे सुप्रत्ययः। क्वचित् सिप्रत्ययः कैश्चित् सकारस्यैव विसर्गः कैश्चिच्च रुत्वं कृत्वा तस्य विसर्ग इति नानामार्गैः रामः इति रूपं साधुत्वेन बोध्यते। अतिनिष्कर्षे तु पदे वर्णानामिव वाक्ये पदानामप्यानर्थक्यादखण्डं (स्व)पदत्वमेव संसर्गबोधकं किञ्चित्पर्यवस्यतीति तत्रैव तात्पर्यम्। एवमेवमत्रापि ब्रह्माहेति तात्पर्यम्। एतावान्परं विशेषः यदेतदर्थशास्त्रमित्यर्थस्य मिथ्यात्वं तत्पुनः शब्दशास्त्रमिति प्रकृतमित्यादिकल्पनाया मिथ्यात्वमिति। तदेतदतिव्यधिकरणम्। दृष्टान्तानामुपन्यस्तानां सर्वेषामपि दृष्टमूलत्वेन दार्ष्टान्तिकस्य च शिथिलमूलत्वेन विषमत्वात्। चन्द्रारुन्धत्यादौ हि तत्स्वरूपं बोध्यबोधकयोः सिद्धमेव। न हि तत्र तत्स्वरूपांशे विप्रतिपत्तिः। किन्तु तदवस्थानप्रदेशविशेषं जिज्ञासुः शाखोपलक्षितप्रदेशविशेषं बोध्यते। न च तत्रापि शाखायां चन्द्राभेदबुद्धिर्बोध्यस्य भवति। तथा पचतीत्यादिसाधुशब्दरूपाणि लोकवेदयोः सिद्धान्येव। तदेतदाह कात्यायनः सिद्धे शब्दार्थसंबन्धे इत्याद्यवार्तिकेन। तानि पुनरनन्तत्वात्प्रतिपदपाठेन बोधयितुमशक्यत्वात् साधुत्वान्वाख्यानार्थे लघूपायाः पाणिन्यादिभिराचार्यैरादृताः। तदेतत्प्रयोजन-प्रतिपादनावसरे पस्पशायामेवं पतञ्जलिरुदाजहार। रक्षोहागमलध्वसन्देहाः प्रयोजनानीति। लघ्वर्थं चाध्येयं व्याकरणमिति च। डुपचष्लट् इत्याद्यनुशासनेन हि पचति पचतु अपचत् अपीपचत् पापच्यते पापक्ति पेचे पपाच पापच्यमान इत्येकैकस्य धातोर्महतोऽपि महतः शब्दौघान्सामान्यविशेषलक्षणशास्त्रेण प्रतिपद्येमहीति सर्वानुभवसाक्षिकम्। अत एव च क्वचिल्लक्षणबलेन सिद्धानामपि वचन्तीत्यादिकं न हि वचिरन्तिपरः प्रयुज्यत इत्यनादिविशिष्टाचारेण तादृशानामपि असाधुतामनुमिमीमहे। तदेतत्सर्व-तान्त्रिकाणां व्याकरणस्य फलं संमतमेव। पौरुषेयापौरुषेयागमेषु शब्दस्वरूपस्य निर्णीतत्वात्। न ह्येवमद्वैतं कस्यापि वादिनः केनापि मानेन सिद्धं, येन तदुपजीव्योत्तरकल्पना स्यात्। प्रत्युत तव मते कल्पनैव व्यर्था। वैयाकरणानां हि प्रतिपाद्यशब्दस्वरूपाणामानन्त्येन शृङ्गग्राहिकतया दर्शयितुमशक्यत्वेन युज्येत सामान्यविशेषभावापन्नलक्षणात्मता शास्त्रारम्भः। तव तु विपरीतम्। प्रतिपाद्यस्याद्वैतस्यैकत्वेन जीवब्रह्मणोरभेदः साधुरिति तावदुक्तिमात्रेणैव शास्त्रसमापनमस्तु। यथा हि वैयाकरणैर्यत्र शब्दवैचित्र्यं

नास्ति किन्त्वेकैव शब्दव्यक्तिर्बोधनीया तत्र सिद्धवदेव निर्देशाः क्रियन्ते । यथा दाश्वान् साह्वान् मीढ्वांश्चेति । अशनायोदन्यधनाया बुभुक्षापिपासागर्धेष्विति चेति । न हि तत्र शङ्काप्युन्मिषतीति । ननु व्याकरणे सिद्धे रूपे यत्र विप्रतिपत्त्यभावो तत्र युक्तिर्नान्विष्यते । न हि तत्र वैयाकरणा इको यण् कुतः क्रियते हलेव कुतो न क्रियत इत्याक्षिप्य युक्त्या समादधति । किन्तु सुद्ध्युपास्य इत्येव प्रयोगः सर्वेषामिष्टस्तदनुरोधाद्यणेव साधुर्बोध्यत इति वदन्ति । अद्वैते तु सर्वेषां वादिनां विप्रतिपत्तेस्तन्निरासार्थं मीमांसा कर्तव्यैव । अन्यथा भेदवादिनस्तवाभिमते जीवेश्वरौ भिन्नौ विष्णुः सर्वोत्तम इत्युक्तिमात्रेणैव शास्त्रे पर्यवस्यतु । यदि त्वयाऽप्येवं सति मीमांसारम्भणीया विप्रतिपत्तिव्युदासार्थं समानमेतन्ममापीति चेत् । मैवं योऽयं भवदीय एव बाणो भवन्तं प्रहरति । यतः सपक्षत्वेनोपन्यस्तव्याकरणशास्त्रीय-कल्पनावैषम्यं स्वमुखेनैव स्वकल्पनायाः स्फुटमुपायादिति रोग उपगतः । इत्यलं मृतमारणेन ।

**परि०**— साक्षिणः साधकत्वं नेति भावेन आशङ्कते **अज्ञानवशादेवेति** ॥ इतरेतराश्रयत्वं व्यक्तीकर्तुमाह **न खल्विति** ॥ **द्वयोरिति** । अज्ञानसाक्षिणोरित्यर्थः ॥

**गु०दी०**— **अज्ञानवशादेव साक्षिणः साधकत्वम्** इत्यत्र अज्ञानविशिष्टस्य साक्षिणः साधकत्वेऽज्ञानस्यापि स्वस्थितिं प्रति स्वस्यैव कारणत्वापत्तेरात्माश्रयप्रसङ्गेन केवलं साक्ष्येव साधक इति वक्तव्यम् । किञ्च प्रातीतिकाज्ञानप्रतीतिरूपे साक्षिणि प्रतीतेः प्राक् साक्षिसाचिव्यायाज्ञानप्रवेशासंभवेन अज्ञानस्वरूपनिष्पत्तावपि केवलसाक्षिण एव हेतुत्वाच्च । अतोऽज्ञानवशादेवेति रिक्तं वचः ।

**यादु०**— तथा चाज्ञानज्ञप्तेः साक्षिसाधकत्वसिद्ध्यधीनत्वेऽपि नाज्ञानसत्तायास्तदधीनत्वमतो नेतरेतरा-श्रयत्वमित्यत आह **न खलु साक्ष्यवभासादिति** । अज्ञानस्य प्रातिभासिकत्वाङ्गीकारादिति भावः ।

**वं०प०**— **न खल्विति** । अज्ञानस्य प्रातिभासिकत्वेन प्रतिभासमात्रशरीरत्वादिति भावः । द्वयोरज्ञान-साक्षिणोः । **न हीति** । किञ्चिदुपकाराभावे तदधीनताया एव मृषात्वादिति भावः ।

**कं०रा०**— **द्वयोरिति** । अज्ञानसत्त्वसाक्षिसाधकत्वयोरनादित्वेनोत्पत्तौ परस्परापेक्षत्वाभावान्नान्योन्या-श्रयत्वमित्यर्थः । तत्किमेवं वदता साक्षिणः साधकत्वस्याज्ञानापेक्षा यत्र कुत्रापि विषये नाङ्गीक्रियते उताङ्गीक्रियत इति विकल्प्याद्यं दूषयति **तर्हीति** । द्वितीयं निराचष्टे **अपेक्षायामिति** ।

**वा०चं०**— पक्षद्वयेऽपि साक्षिसाधकत्वसिद्धेरज्ञानसापेक्षत्वादितरेतराश्रयश्च स्यादित्याह **इतरेति** । ननु साक्षिणः साधकत्वसिद्धेरज्ञानाधीनत्वेऽपि नाज्ञानस्य साक्षिसाधकत्वसिद्ध्यधीनत्वम् । तदसिद्धावपि





व्यावहारिकाज्ञानादेः सत्त्वसंभवादित्यतः कालान्तरीयब्रह्मज्ञानबाध्यत्वेन व्यावहारिकत्वमङ्गीकुर्वताऽपि त्वया अज्ञानादौ पारमार्थिकार्थगतसत्त्वानङ्गीकारात् सत्त्वेन प्रतीतिमात्रमेव सत्तेत्येव वक्तव्यतया सत्त्वेन साक्ष्यवभासरूपाज्ञानसत्तायाः साक्षिसाधकत्वसिद्ध्यधीनता अस्त्येव । वियदादेः सद्भावे प्रतीतिनियमाभावेन तत्रार्थगतमायिकसत्त्वाङ्गीकारेऽप्यविद्यादिसद्भावे तत्प्रतीत्यभावाभावेन तत्र तत्प्रतीतेरेव तत्सत्तारूपत्वस्य अविद्यादिप्रातिभासिकत्वं वदता त्वयाऽप्यभ्युपगमाच्च तत्सत्तायाः साक्षिसाधकत्वसिद्ध्यधीनत्वाद्युक्त-मितरेतराश्रयत्वमित्याह **न खल्विति** । तवेत्यस्य आत्मातिरिक्तसर्वापारमार्थिकत्ववादिन इति विशिष्याविद्या-विद्यकादेः प्रातिभासिकत्ववादिन इति चार्थः । अनादित्वं वदता किं सर्वथाऽनपेक्षाऽभिमतोतान्यत्रापेक्षाया-मुत्पत्तौ तदभावः । नाद्य इत्याह **तर्हीति** । न द्वितीय इत्याह **अपेक्षायामिति** ।

**वा०र०**— परेणाज्ञानवशादित्युक्तावप्यज्ञानस्य सहकारित्वमात्रस्वीकारेणापि तदुक्त्युपपत्तेस्तत्पक्षे च सत एव साधकत्वमिति प्राप्त्या तद्दूषणस्यावश्योद्भाव्यस्य मूलेऽनुक्त्ययोग इत्यतः स्पष्टत्वाच्छिष्यैरेवोह्यत्वाभिप्रायेण मूले तदनुक्तेर्न दोष इति मूलाभिप्रायं व्यञ्जयन् स्वयं विकल्प्याद्यं बहिरेव दोषान्तरेण प्रदूष्य द्वितीयपक्षदूषणस्य प्रथमेऽपि प्राप्तेस्तदुभयदूषणपरत्वेन मूलं योजयति **अज्ञानवशात्साक्षिण इत्यादिना** । एतेनैव तत्र प्रथम इतिवत् द्वितीये इत्युक्त्वा प्रातिस्विकदूषणानभिधानात् पक्षद्वयेऽपीत्युभयसाधारणदोषमात्रोक्तिरयुक्तेति निरस्तम् । द्वितीयदूषणस्य प्रथमेऽपि प्रसक्तिसत्त्वेन तन्मात्रासाधारणदोषाभावादेव मेलनेनैव द्वितीयपक्षदूषणोपपत्तेः । **व्यावहारिकज्ञानादेरिति** । अत्र व्यावहारिकस्याज्ञानादेः सत्त्वमित्यस्याज्ञानादेर्व्यावहारिकसत्त्वसंभवादित्यत्रैव पर्यवसानम् । यद्वा ब्रह्मज्ञान-बाध्यत्वेन व्यावहारिकत्वमङ्गीकुर्वतेत्युत्तरग्रन्थानुसारेण व्यावहारिकत्वमज्ञानादिविशेषणहेतुतयोक्तम् । ततश्च अज्ञानादेर्व्यावहारिकत्वाद्व्यावहारिकस्य च सद्विशेषत्वाद्घटादाविव प्रमाणान्तरेण सत्त्वसिध्युपपत्तिरिति भावः । अज्ञानस्येत्येव वक्तव्ये क्वचिदज्ञानादेरित्यादिपदेन ज्ञानकार्यस्यापि साक्षिप्रमाणकतया परेण वक्तव्यत्वात्तदंशेऽपि साक्षिसाधकत्वविचारप्रवृत्तिपरतया मूलमुपलक्षणया व्याख्येयमिति सूचनायेति न दोषः । वक्ष्यति च **आविद्यकादेरिति** । अज्ञानगतं सत्त्वं किमात्मनीव पारमार्थिकमर्थगतमुत सत्त्वेन प्रतीतिमात्ररूपमिति विकल्पं मनसि निधायाद्यं पारमार्थिकेत्यादिना प्रदूष्य द्वितीयं च परिशेषयंस्तत्रापि साक्ष्यन्यसत्त्वेन प्रतीतिसिद्धार्थगत-मायिकसत्ताकघटादेरिवाज्ञानेऽपि तदन्यसत्त्वेन प्रतीतिसिद्धार्थगतमायिकसत्त्वरूपतानुपपत्तेः साक्षिरूपे च सत्त्वेन प्रतीतिः सत्तेति वाच्यमित्यपि परिशेषयन्न हि साक्ष्यवभासादन्या ज्ञानसत्ता तवास्तीत्येतदुपपादयति **कालान्तरीयब्रह्मज्ञानेत्यादिना** । अर्थगतमायिकसत्ता खलु तद्दूषणं वियदादेरित्यादि सद्भावे सद्भावदशायामपि । एवमुत्तरत्र । प्रतीत्यभावाभावेन । तस्य ज्ञातैकसत्त्वादिति भावः । तत्सत्तारूपत्वस्येत्यनन्तरं प्राप्तेश्चेति पूरणीयम् । न केवलमुक्तयुक्त्या तत्प्राप्तिरपि तु भवताऽप्यङ्गीकृतं तदिति सहेतुकमाह **अविद्यादीति** । तत्प्रतीतेरेव तत्सत्तारूपत्वस्येति वर्तते । प्रातिभासिकत्वं वदतेत्यनेन वियदादेः सद्भाव इत्याद्युक्तयुक्तिं सूचयति । यद्वाऽविद्यादिप्रातिभासिकत्वं वदता त्वयापि सत्तारूपत्वस्याभ्युपगमादिति संबन्धः । प्रतिभासिकत्वे कुतस्तथा-ऽभ्युपगमापत्तिरित्यतस्तत्प्रकारप्रदर्शनम् । वियदादेरित्यादीति शेषं विहायैव योजना । वस्तु साक्षीति मूलपाठे





न खल्वितीत्येवं प्रतीकोपादानपाठः । **अन्यत्रेति** । उत्पत्त्यतिरिक्तप्रतीत्यादावित्यर्थः । **अपेक्षायामितीति** । उत्पत्त्यतिरिक्तप्रतीत्यादावपेक्षायामिति मूलार्थः ।

**स०व्र०— इतरेतराश्रयप्रसङ्गादिति** । घटादौ प्रतीतिविषयत्वातिरिक्तस्यैव प्रतीतिविषयत्वरूप-सत्यत्वमात्रवत्यज्ञानादौ अतिरिक्तस्वरूपसत्यत्वस्याभावेन तादृशस्वरूपसत्त्वस्य च साक्षिसाधकत्वसिद्ध्यधीन-त्वादिति भावः । अनादित्वादिति वदता किं सर्वथा परस्य परापेक्षाभावोऽभिप्रेत उतोत्पत्त्यादौ । नाद्य इत्याह **तर्ह्यज्ञानवशादितीति** । नान्त्य इत्याह **अपेक्षायामिति** ।

**वि०ठ०—** ननु साक्षिणः साधकत्वस्याज्ञानसापेक्षत्वेनाज्ञानसिद्ध्यधीनत्वेऽपि नाज्ञानसिद्धेः साक्षिणः साधकत्वं किन्तु स्वतःस्थितामज्ञानसत्तां साक्षीविषयीकरोति इत्येव अतः कथमन्योन्याश्रय इत्यत आह **न खल्विति** । अज्ञानस्य परेण प्रातिभासिकत्वाङ्गीकारात् साक्षिप्रतिभासव्यतिरेकेणाज्ञानसत्ताया एवाभावेन अज्ञानसिद्धेः साधकस्य साक्ष्यधीनत्वात् भवेदेवान्योन्याश्रय इत्याशयेनान्योन्याश्रयमुपपादयति **ततोऽज्ञाने सतीति** । द्वयोरनादित्वे नान्योन्यसिध्यर्थमपेक्षाभावेऽपि प्रयोजकप्रयोज्यभावमात्रेण सापेक्षत्वाधीनत्वं युज्यत इत्यत आह **अपेक्षायां त्विति** ।

**चषकः— साक्ष्यवभासादिति** । अज्ञानस्य प्रातिभासिकत्वोपगतेरिति भावः ।

**२५९ सु०— एवमुभयवादिसंप्रतिपन्नं प्रमाणं स्वमतेऽस्तीति दर्शयितुं सत्यस्य साक्षिणोऽज्ञानसाधकत्वं पराभ्युपगतमुपन्यस्तम् । सांप्रतं प्रसङ्गात्तदपि नोपपद्यत इत्याह अविशेषस्येति ।**

## अनु०— अविशेषस्य साध्या साधकता पुनः ॥

भावरूपमज्ञानमनिच्छन्तं प्रति हि तत्र साक्षिप्रत्यक्षं प्रमाणमुपन्यस्तम् । न च तदुचितम् । साक्षिणोऽशेषविशेषविधुरत्वाङ्गीकारात् । अविशेषस्य साधकता तु परं प्रति त्वया साध्यैव । न तु सिद्धा । यत्साधकं करणं वा फलं वा नित्यं वा ज्ञानं तत्सर्वं जात्यादि-विशेषवत् । यच्च निर्विशेषं शशविषाणादि न तत्साधकमिति परेण नियमस्याङ्गीकृतत्वात् । न ह्यसंप्रतिपन्नसाधकभावं कस्याप्यर्थस्य साधनायोपन्यासमर्हति । अतिप्रसङ्गात् ।

**बिन्दुः— यत्साधकमिति** । प्रमाणमित्यर्थः । तच्च त्रिविधम् । करणं चक्षुरादि । फलं जन्यज्ञानम् । न करणं नापि फलं किन्तु तृतीयः प्रकारो नित्यं ज्ञानं ईश्वरज्ञानं साक्षिरूपं चेति सर्वमप्येतत्सविशेषमेव । साक्षिनिर्विषयतायाः मां प्रत्यसिद्धत्वादिति भावः ।

**परि०— फलं वेति** । जन्यज्ञानादिरूपं फलं वेत्यर्थः । तस्यापि व्यवहारादिसाधकत्वादिति भावः । **नित्यं वा ज्ञानमिति** । ईश्वरसंबन्धिनित्यज्ञानं वेत्यर्थः । तस्य कार्यमात्रे हेतुत्वादिति भावः । **परेणेति** । भावरूपमज्ञानमनिच्छता तार्किकादिना त्वत्प्रतिवादिनेत्यर्थः ।

**कं०रा०— यदिति** । ज्ञानकरणं फलं जन्यज्ञानं नित्यं वा ज्ञानं यत्साधकं तत्सर्वं जात्यादिरूप-धर्मयुक्तमेवेत्यर्थः ।

**श्रीनिधि०— यत्साधकमित्यादि** । क्वचित् प्रमाकरणं साधकम् । क्वचित् प्रमा साधिका भवति । प्रमा च द्विविधा । नित्यानित्यत्वभेदात् । तत्रानित्या फलभूतेति भावः ।

**वा०चं०**— नन्वविशेषस्येत्यादिभाष्येऽविशेषस्य साधकत्वनिराकरणेऽसङ्गतिः प्रकृतसाक्षिसाधकत्व-निराकरणे च पूर्ववाक्ये तदुपन्यासानुपपत्तिर्निराकर्तव्यत्वे च पराभ्युपगततयाऽप्युपन्यासो व्यर्थ एव । सार्थक्ये वा तावताऽपि प्रकृतस्वेष्टसिद्ध्या तन्निरासोऽसङ्गत एवेत्यत आह **तदेवमिति** । नन्वविशेषस्येत्यविशेषस्य साधकताया अप्रस्तुतत्वात्तदसिद्धत्वकथनमसङ्गतम् । न च साक्षिणोऽविशेषस्य साधकत्वं प्रस्तुतमेवेति वाच्यम् । तथाऽपि साक्षिणोऽविशेषस्याज्ञानसाधकत्वं वदतो ममाविशेषसाधकताया अपि सिद्धतया तदसिद्धिकथनायोगात् । न च प्रतिवादिना स्वापेक्षया तदसिद्धिकथनमिति वाच्यम् । भावरूपाज्ञानवादिना स्वेनापि प्रमाणान्तराभावेन साक्षिण एव तत्साधकत्वेन तस्य च निर्विशेषतया तत्साधकतायाश्च स्वीकार्यत्वेन स्वापेक्षतयाऽपि तदसिद्धिकथनानुपपत्तेरित्यतो भावरूपाज्ञानं येन प्रतिवादिना स्वीकृतं तेनापि साक्षिणः सविशेषत्वमुपपाद्य स्वमते साक्षिणाऽज्ञानसिद्धेर्वक्तुं शक्यतया त्वया च साक्षिणो निर्विशेषत्वाङ्गीकारात्तस्य चाज्ञानसिद्धौ साधकत्वेनोपन्यासे प्रतिवादिना स्वापेक्षया निर्विशेषस्य साधकत्वासिद्धेर्वक्तुं शक्यत्वात् । अस्तु वा भावरूपाज्ञानवादिनः स्वापेक्षया निर्विशेषस्य साधकत्वासिद्धे-रशक्यकथनीयत्वम् । तथाऽपि न तं प्रति तव भावरूपाज्ञानसाधनं वैयर्थ्यप्रसङ्गात् । किन्तु भावरूपाज्ञानमनङ्गीकुर्वाणं प्रत्येव । तेन च निर्विशेषस्य साधकताया अनङ्गीकार्यत्वात्तेन स्वापेक्षया तदसिद्धिरुद्भावयितुं शक्यैवेत्याशयेन मूलं योजयितुं ततः पूर्ववक्तव्यं तावदाह **भावरूपमिति** । इदानीं मूलं योजयति **अविशेषस्येति** । असिद्धौ वक्तव्यायां साध्यत्वोक्तिर्न श्लिष्टेत्यतः साध्येत्यस्य सावधारणतयाऽनया वाचोभङ्ग्या सैवोक्ता भवतीत्याशयेनाह **न त्विति** । ननु परं प्रत्यविशेषसाधकताया असिद्धिमात्रेण न तदसाधकत्वं भवतीत्यत आह **न हीति** । अनित्यतासाधकत्वेन असंमतचाक्षुषत्वस्य, आगमादेः प्रामाण्यमनङ्गीकुर्वन्तं प्रति तस्य, शशविषाणादेश्च साधनायोपन्यासापत्तेरित्यर्थः ।





**वा०र०— असङ्गतिरिति।** अविशेषस्य कस्यचित्पदार्थस्य प्राक् साधकतया प्रकृतत्वाभावादित्याशयः। प्राक्प्रकृतः साक्ष्येव विशेषपदेन विवक्षित इति न दोष इत्याशङ्क्य निषेधति **प्रकृतसाक्षीति। तदुपन्यासेति।** साक्षिणः साधकत्वोपन्यासानुपपत्तिरित्यर्थः। निराकर्तव्यस्य प्राक् वस्तुस्थितितया कथनायोगादिति भावः। परकीयाभ्युपगमप्रतिपादनमेव प्राक्कृतं इदानीं तु स्वरीत्या तन्निराकरणं क्रियत इति न विरोध इत्यत आह **निराकर्तव्यत्वे चेति।** परकीयमतनिषेधार्थं प्रवृत्तिरिति ज्ञापनाय परमततया प्रागुपन्यासार्थक इत्याशङ्कानिरासायाह **सार्थक्ये वेति। तावताऽपि प्रकृतेति।** यद्धि स्वस्य प्रतिकूलं तदेव निराकार्यम्। सतः साक्षिणश्च साधकतया पराङ्गीकारः स्वस्यानुकूल एव यत्सत् तन्न साधकमिति पराभ्युपगमखण्डनोपयोगितया प्रत्यक्षस्य सतः साधकतेति स्वाभ्युपगतप्रमेयोपपादकत्वादतस्तन्निरासोऽसङ्गत इत्यर्थः। **आहेति।** पूर्वं परमततयोपन्यासोपयोगस्येदानीं तन्निराकरणस्य वस्तुस्थितितया कथनस्य च व्यवस्थया प्रवर्तनान्न पूर्वोत्तरविरोध इत्याहेत्यर्थः। **असङ्गतमिति।** यद्यपि प्रागेतच्छङ्कानिरासेन साक्षिणः साधकत्वनिरासपरत्वशङ्कोत्थापनस्य तत्परिहारादेश्च कृततया पुनरेतच्छङ्का-नवकाशः। तथापि तच्छङ्कापरिहारत्वेन यत्साक्षिरूपाविशेषपरत्वमविशेषपदस्योक्तं तत्रैव प्रकारान्तरेण अनुपपत्ति-शङ्कनाय पुनः प्रथमतोऽसङ्गत्याशङ्कनपूर्वकं साक्षिरूपाविशेषग्रहणेन तत्परिहारशङ्कनमित्यदोष इति ज्ञेयम्। **वदतो ममेति।** अत्रापि परकीयोक्तिप्रकारप्रदर्शनभारेण ममेत्युक्तम्। वस्तुतो वदतः परस्येत्येवार्थः। यद्वा वदतो ममाविशेषस्य साधकताया अपि सिद्धत्वादिति परेण वक्तुं शक्यतया तद्रीत्या तदसिद्धिकथनायोगादिति योजनीयम्। एतत्प्रकरणेऽपि त्वया साध्यैवेत्यादिरूपेण मूलसत्त्वाट्टीकायां ममेत्यादिप्रयोगः। एवमुत्तरत्रापि त्वया चेत्यस्य वादिना चेत्यर्थ इति ज्ञातव्यम्। **स्वापेक्षयेति।** स्वमतरीत्याऽविशेषस्य साधकताया असिद्धिकथनमित्यर्थः। स्वमतेऽपि भावरूपाज्ञानं तावदस्ति। तत्सिद्धिः किं प्रमाणान्तरेणोत साक्षिणा। नाद्यः। अज्ञानसाधकप्रमाणान्तराभावात्। न द्वितीयः। साक्षिणाऽज्ञानसिध्यङ्गीकारे तस्य निर्विशेषतास्वभावत्वादविशेषस्य साधकतेत्येव स्वपक्षे स्वीकार-सिध्या स्वमतरीत्याऽप्यविशेषस्य साधकताऽसिद्धेति कथनानुपपत्तेरित्याह **भावरूपाज्ञानेति।** साक्षिण एव तत्साधकत्वेन वाच्यत्वादिति योज्यम्। भावरूपमज्ञानमनिच्छन्तं प्रतीति मूले तदिच्छन्तं प्रतिवादिनं प्रति त्वविशेषस्य साधकतासाधनमनावश्यकम्। तेनाप्यविशेषस्य साधकतास्वीकारादिति शङ्कितरीत्या प्रतीयते। तां प्रतीतिं वारयितुं स्वयं प्रतिवादिनं प्रत्यपि साधकता साध्यैवेत्युपपादयन्नङ्गीकारवादेन च मूलप्रवृत्तिरित्याह **भावरूपाज्ञानं येनेत्यादिना। अनङ्गीकार्यत्वादिति।** सक्षिणो ह्यविशेषत्वं भावरूपाज्ञानाभावेनासाधकतया साक्षिणोऽनभ्युपगमात् तस्याविशेषस्य साधकतापि तेनानङ्गीकार्येत्याशयः। **अनया वाचोभङ्ग्येति।** साध्यैवेत्यनयेत्यर्थः। वाग्दिक्पश्यन्त्यो युक्तिहरदण्डेष्विति विशेषस्मरणेन वाचो युक्तिरिति षष्ठ्या अलोपेन प्रयोगोपपत्तावपि वाचोभङ्गेति कथं प्रयोगसाधुत्वम् अत्र लेख्यमस्ति। कुतो न सिध्येत्यत आह **यत्साधकमिति** मूलम्। नित्यं ज्ञानं वेति संबन्धः। यत्साधकं तज्जात्यादिविशेषवदिति संबन्धः। साधकमेव निर्देशविशेषणप्रदर्शितं **करणं वेत्यादिना।** ततश्च साधकभूतं करणरूपप्रमाणं सत्ताद्रव्यत्वपृथिवीत्वादियथार्थज्ञानजनकत्वादिविशेषवत् फलरूपं तु प्रमाणं सत्तागुणत्वादिनिर्दोषार्थेन्द्रियसन्निकर्षजत्वादिविशेषवत् ईश्वरीयं नित्यज्ञानं तु सर्वविषयत्वे गुणत्वादिजात्यादिरूपविशेषवदसाक्षिरूपं तु गुणत्वादिनिर्दुष्टस्वरूपेन्द्रियाभिव्यक्तत्वादिविशेषवदिति योजना।





**तदसाधकत्वमिति** । परासंप्रतिपत्तावपि स्वसंप्रतिपत्त्या साधकत्वसंभवादिति भावः । असंप्रतिपन्नसाधकभावस्यापि किञ्चिदर्थसाधनायोपन्यासेऽतिप्रसङ्गादित्युक्तोपपादनाय प्रवृत्तेऽनित्यतासाधकत्वेनेत्यादिग्रन्थे किञ्चित् कार्यं प्रत्यपि साधकत्वेन सर्वासंप्रतिपन्नस्य साधकत्वेनोपन्यासे शशविषाणादेरपि किञ्चिदर्थसाधनायोपन्यासः स्यादित्यतिप्रसङ्गः । किञ्चित्साधकत्वेनोपलब्धस्याप्यर्थविशेषं प्रति साधकतयोपन्यासे रूपवत्वादिसाधकत्वेन संप्रतिपन्नस्यानित्यतासाधकत्वेनासंप्रतिपन्नस्यापि चाक्षुषत्वस्य तत्साधकतयोपन्यासापत्तिरित्यतिप्रसङ्गः । अर्थविशेषसाधकत्वेन यदेकेन स्वीकृतमपि तदन्येन तत्तत्साधकत्वेन नाङ्गीकृतम् । तं प्रति तदर्थसाधनाय तस्य तदर्थं प्रत्यसंप्रतिपन्नसाधकभावस्योपन्यासे आगमादेः प्रामाण्यमनङ्गीकुर्वन्तं प्रतीत्यादिरिति प्रसङ्ग इति विवेकः । तत्रान्त्यः प्रकृतोपयुक्तः संपूर्णविषयसद्भावात् । इतरौ तु असंप्रतिपत्तिमात्रांश इति न दोष इति ज्ञेयम् । योजना तु । चाक्षुषत्वस्योपन्यासापत्तेरिति संबन्धः । अनित्यतासाधकत्वेनेति च आवर्तनीयं तथाविधत्वेनासम्मतस्य चाक्षुषत्वस्यानित्यतासाधकत्वेनोपन्यासापत्तेरिति तत्खण्डार्थः । यद्वा तस्येत्यादिवक्ष्यमाणस्थलद्वय इव साधनायेत्यस्यात्र संबन्धात् योग्यतया चानित्यतेत्यस्य साधनायेत्यनेन संबन्धे सत्युक्तार्थलाभः । आगमादेः प्रामाण्यमनङ्गीकुर्वन्तं प्रति तस्य साधनायोपन्यासोपपत्तेरिति संबधः । तत्र साधनायेत्यस्य आगमादिना यत्साध्यमीश्वरादिकं तत्साधनायेति योग्यतयार्थः । शशविषाणादेश्च किञ्चिदर्थसाधनायोपन्यासोपपत्तेरिति योज्यम् ।

**स०व्र०— सत्यस्यापि साक्षिणोऽज्ञानसाधकत्वमिति** । यथोक्तं सङ्क्षेपशारीरके 'आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर' इति ।

**विठ०—** यथा करणप्रमाणं साधकं तथा तत्फलभूतस्यापि केवलप्रमाणस्य साधकत्वात् तस्य च नित्यानित्यभेदेन द्विविधत्वात् फलं वा नित्यं वा नित्यं वा ज्ञानमित्युक्तम् । नित्यज्ञानस्य साक्षिणः फलत्वं च स्वरूपेन्द्रियप्रयोज्यत्वेन ज्ञातव्यम् । **परेण** भावरूपाज्ञानमनिच्छता । **असंप्रतिपन्नसाधकभावमिति** । साधकत्वेनासंप्रतिपन्नमित्यर्थः ।

**चषकः— तत्सर्वमिति** । करणं साधकतमत्ववत् फलं निर्दोषतज्जन्यत्ववत् नित्यज्ञानं तादृशस्वरूपेन्द्रियाभिव्यक्तत्ववत् ।

**२९६ सु०— ननु प्रमाणं वस्तुसिद्धावुपयुज्यते । तत्सविशेषत्वं तु किमर्थमिति चेत्सत्यम् । निर्विशेषस्य प्रामाण्यमेव नोपपद्यत इति तदर्थमेव विशेषानुसरणम् । न हि साधकतमत्वादिविशेषाभावे प्रामाण्यं शक्यनिर्वाहम् । साक्षिण्यारोपिततयैवाज्ञानं सिद्ध्यति । न ततोऽतिरिक्तं साधकत्वं तस्येति चेत् । न तर्हि सुतरां साक्षिणाऽज्ञानसिद्धिः । प्रकाशाश्रयं तमः प्रकाशेनैव सिद्ध्यतीत्यस्यार्थस्याविशेषवादिना भवता परं प्रत्युपपादयितुमशक्यत्वात् ॥ किञ्चाज्ञान-**

**मारोपितमपि साक्षिणो विषयो न वा । आद्ये विषयित्वं साक्षिण्यंापतितम् । द्वितीये साक्षित्वमेवानुपपन्नम् । 'साक्षाद्द्रष्टरि संज्ञायामि'ति निर्वचनासंभवात् । अतद्विषयेण तत्सिद्धिरलौकिकी । निर्विशेषस्याप्यज्ञानवशात्साक्षित्वमिति च निरस्तम् ।**

**बिन्दुः**— **न तर्हि सुतरामिति** । अज्ञानं हि परेण साक्षिचैतन्यावरणमिति स्वीकृतं, तेन च आवृते चैतन्ये प्रकाशकाभावान्न तत्सिद्धिरित्यर्थः । ननु चैतन्यस्यावृतत्वे चैतन्यं मा प्रकाशिष्ट अविद्यात्वनावृता कुतो न प्रकाशेतेति चेत् । भ्रान्तोऽसि । चैतन्यप्रकाशे आवृतेऽपि यद्यविद्या प्रकाशेत तर्हि स्वप्रकाशतामेव लभेत न चैवं भवतोऽभ्युपगमः । किन्तु चेतने प्रकाशमाने तदध्यस्तं प्रकाशत इति सोऽयं प्रकाश एव यद्यज्ञानेनावृतः केनेदानीं प्रकाशेतेति । तदेतदाह **सुतरामिति** । यदि चावृतेऽपि प्रकाशो तदज्ञानं प्रकाशयेत् । तर्हि स्वीकृतमप्यावरणमकिञ्चित्करमिति तत्तिरस्कृत्यैव शुद्धबुद्धानन्दैक-रसाद्वितीयोदासीनस्वभावरूपमात्मस्वरूपमपि सर्वदा भासेत तत्र श्रवणादिप्रयासो व्यर्थः समापद्येतेति भावः । स्यादेतत् । यदि सर्वोऽपि चिदात्मा अज्ञानेनाव्रियत इत्यवोचाम । न चैवं आत्मनोऽपरिच्छिन्नत्वात् अज्ञानस्य तु परिच्छेदात् । किन्तु एकदेशवर्तितमः स्वानवच्छिन्नचैतन्यप्रदेशप्रकाशो न भासते एवं च नोक्तदोष इत्याशङ्क्य परिहरति **प्रकाशाश्रयमिति** । अविशेषवादिनस्तव मते आत्मनि प्रदेशानां वा अवयवानां वा असंभवादिति भावः । वस्तुतस्तु एकदेशेऽपि प्रकाशरूपात्मनि अज्ञानं संभवत्येव । न, तमःप्रकाशयोरिव ज्ञानाज्ञानयोर्विरोधेन आश्रयाश्रयिभावासंभवात् । न हि लोके कुत्रापि प्रकाश-माश्रित्य तमोऽवतिष्ठत इत्यस्ति । तथात्वे तन्निर्हरणार्थं प्रदीपारोपणादौ न कश्चित्प्रयतेतेति दूषणमत्र बोध्यम् । तदेतत् सूचयितुं अज्ञानशब्देन प्रस्तुतेऽपि तमःशब्दं प्रायुङ्क्तेति ।

**परि०**— यदुक्तं पूर्वत्राज्ञानवशादेव साक्षिणः साधकत्वमित्युक्ते इतरेतराश्रयत्वप्रसङ्गादिति । तन्न । अधिष्ठानतया ज्ञानावभासत्त्वमेव साक्षित्वम् । तथाच साक्षित्वमज्ञानसत्त्वं चैकमेव । साक्ष्यव-भासादन्यस्याज्ञानसत्त्वस्याभावादज्ञानावभासत्त्वादन्यस्य साक्षिणः साधकत्वस्याभावात् कुतोऽन्यो-न्याश्रय इति शङ्कते **साक्षिणीति** । ततः अज्ञानारोपादित्यर्थः । तमोऽज्ञानम् । **अशक्यत्वादिति** । प्रकाशाश्रयमित्यनेनाश्रयत्वस्य प्रकाशेनेति तृतीयया साधकत्वस्य च विशेषस्य चाभावे परं प्रति त्वया वक्तुमशक्यत्वादित्यर्थः । ननु प्रकाशेनैव सिद्ध्यतीत्यस्य प्रकाशजन्यज्ञानेन विषयीक्रियत इति नार्थः । येन साधकत्वं स्यादित्यत आह **किञ्चेति** । **इति निर्वचनेति** । व्याकरणसूत्रे हि साक्षिपदस्य साक्षादितिपदात् द्रष्टर्थे संज्ञायां विषये इनिप्रत्ययो भवतीति इनिप्रत्यये 'अव्ययानां भमात्रे टिलोप' इति

साक्षात्पदस्य टिलोपे च साक्षात्पश्यतीति साक्षीति यद्व्युत्पादनं तस्यासंभवादित्यर्थः। दोषान्तरं चाह **अतदिति**॥ तदविषयकेणेत्यर्थः। तद्विषयमानेनैव तत्सिद्धेर्घटादौ दृष्टेरिति भावः॥ **निरस्तमिति**। इतरेतराश्रयप्रसङ्गादित्यनेनेति भावः॥

**गु०दी०— प्रकाशाश्रयम्** इत्यत्र प्रकाशपदेन चिद्रूपप्रकाशः कथ्यते। तमःपदेन भावरूपमज्ञानम्। सौरालोकवच्चिद्रूपप्रकाशस्याविशेषवादिनेत्यर्थः।

**यादु०— न हि साधकतमत्वादिविशेषाभाव इति**। करणरूपप्रमाणे प्रमासाधकतमत्वं, फलरूपे निर्दोषकरणजन्यत्वं, साक्षिरूपे नित्यज्ञाने निर्दुष्टस्वरूपेन्द्रियाभिव्यक्तत्वमित्याद्या विशेषा द्रष्टव्याः। शङ्कते **साक्षिण्यारोपिततयैवेति। न ततोऽतिरिक्तमिति**। येन विशेषापेक्षा स्यादिति शेषः। यथा दिवाभीतान्धकारः सौरालोकारोपितः सौरालोकेनावभासते। एवमज्ञानं चैतन्यारोपितं चैतन्येनैव भासत इत्यर्थः। **प्रकाशेनैवेति**। न हि दिवाभीतान्धकारः सौरालोकेनैव सिध्यति किन्तु दिवाभीतदुष्टेन्द्रियादेव। तथा चाधिष्ठानस्यैवारोपितज्ञप्तिकारणत्वम् अन्यत्र क्वाप्यदृष्टमत्रैव तन्निर्वाहकविशेषाभावे कल्पयितुमशक्यमिति भावः। **आद्ये विषयित्वमिति**। तथा च सविशेषत्वापत्तिरिति भावः। **साक्षाद्द्रष्टरीति**। साक्षाद्द्रष्टर्यभिधेये साक्षाच्छब्दादिनिप्रत्ययो विहित इत्यर्थः।

**वं०प०—** फलप्रामाण्याभिप्रायेण **फलं वा** इत्युक्तम्। ईश्वरज्ञानाभिप्रायेण नित्यं वा ज्ञानमित्युक्तम्। **न ततोऽतिरिक्तमिति**। तथा चाज्ञानारोपाधिष्ठानत्वमेवाज्ञानसाधकत्वमिति भावः। **प्रकाशेति**। साक्षिणः प्रकाशरूपत्वेन तदाश्रितं तमोऽज्ञानमधिष्ठानभूतप्रकाशेनैव सिध्यतीति परं सिद्धान्तिनं प्रत्युपपादयितुं त्वया न शक्यते, अधिष्ठानस्यैवारोपितज्ञप्तिकारणतायाः कुत्राप्यदर्शनादिति भावः। अन्यत्र कुत्राप्यदृष्टमत्रैव कल्प्यत इत्याशङ्कापरिहारायोक्तम्। **अविशेषवादिनेति**। कुत्राप्यदृष्टमत्रैव साक्षिणि कल्पयितुं तदा शक्यते, यदीतरापेक्षया तन्निर्वाहकः कश्चन विशेषः स्यात्। स तु नास्ति। त्वया साक्षिणि विशेषानङ्गीकारादिति भावः। ननु साक्षिणः अज्ञानविषयकत्वाभावेऽपि तेन तत्सिद्धिः किं न स्यादित्यत आह **अतद्विषयेणेति**। अतद्विषयकेणेत्यर्थः। **निरस्तमिति**। इतरेतराश्रयप्रसङ्गेनेत्यर्थः।

**कं०रा०— प्रकाशेति**। अविशेषवादिमते साक्षिरूपप्रकाशस्याज्ञानं प्रत्याश्रयत्वाभावेन 'प्रकाशाधिष्ठानकं तमः प्रकाशेनैव सिध्यती'त्यस्यार्थस्य परं प्रति भवतोपपादयितुमशक्यत्वादित्यर्थः। **साक्षादिति**। साक्षाच्छब्दाद्द्रष्टरि वाच्ये इनिप्रत्यये अव्ययानां भमात्रे टिलोप इति टिलोपे च साक्षिशब्दो निष्पन्न इति यत्साक्षिशब्दनिर्वचनं तस्यासंभवात्साक्षिणो ज्ञानविषयीकारित्वाभावे साक्षित्वमेवानुपपन्नमित्यर्थः। साक्षिणो ज्ञानविषयकत्वाभावे दूषणान्तरमाह **अतद्विषयेणेति**। निर्विशेषस्यापि चैतन्यस्याज्ञानवशाद्द्रष्टृत्वरूपं साक्षित्वमस्त्वित्याशङ्क्य तदेतत् अज्ञाने सति चैतन्यस्य साक्षित्वसिद्धिः, सत्यां च तस्यामज्ञानसिद्धिरिति परस्पराश्रयेण निरस्तमित्याह **निर्विशेषस्येति**। एतत् अविशेषस्य साक्षिणः साधकत्वम्। **तदिति**। साक्षिव्यतिरिक्तस्याविशेषप्रमाणस्याभावादित्यर्थः।





**श्रीनिधि०— न ततोऽतिरिक्तमिति** । अज्ञानारोपाधिष्ठानतोऽतिरिक्तं नास्तीत्यर्थः । सुतरामिति आरोपितस्यासत्त्वादिति भावः । इत्यस्यार्थस्य परं प्रत्युपपादयितुमशक्यत्वादिति संबन्धः । **अविशेषवादिना** निर्विशेषवादिना । **प्रकाशाश्रयं तम इति** । प्रकाशश्चिद्रूपप्रकाशः तम इव तमः अज्ञानमिति यावत् । **साक्षाद्द्रष्टरीति** । अस्मिन्नर्थे संज्ञायां गम्यमानायां स निपात्यत इत्यर्थः । साक्षात् शब्दादिनिप्रत्यये कृते निरुक्तत्वात् आत् इत्यस्य लोपे साक्षीति निष्पद्यत इति काशिकायामुक्तम् । साक्षादीक्षत इति साक्षीति गीताभाष्यटीकायामुक्तम् । अत्र चान्त्याक्षरसाम्यान्निरुक्तयो भवन्तीति यथासंभवं प्रत्ययलोपादिकमूह्यम् ।

**वा०चं०**— पराभिप्रेतनियमेऽप्रयोजकत्वं शङ्कते **नन्विति** । ननु साक्षिणोऽज्ञानसाधकत्वं नाम यदि परमार्थसदज्ञानप्रमितिजनकत्वमङ्गीक्रियते तदा स्यादयं दोषः । न चैवम् । साक्षिण्यज्ञानस्याध्यस्तत्वमेवाज्ञानसिद्धिः साक्षिणस्तदध्यासाधिष्ठानत्वमेव साधकत्वमिति नानुपपत्तिरिति शङ्कते **साक्षिणीति** । तर्हि पूर्वं साधकत्व-प्रयोजकविशेषाभावात्साधकत्वानुपपत्तिरभिहिता । इदानीं त्वयैव साक्षिणोऽज्ञानाधिष्ठानत्वमात्रमङ्गीकृत्य साधकत्वस्वरूपस्यैवापलापे साक्षिणाऽज्ञानसिद्धिरित्येतद्भग्नमेव । न हि रजतारोपाधिष्ठानं शुक्तिस्तत्साधिकेत्याह **न तर्हीति** । ननु साक्षिणोऽज्ञानाधिष्ठानमात्रत्वं न मयोच्यते किन्तु तस्यैव तत्सिद्धिकरणत्वं चेति नोक्तदोष इति चेत्तर्हि न केवलं करणत्वप्रयोजकविशेषाभावेन करणत्वानुपपत्तिः किन्त्वधिष्ठानस्यैव करणताया अलौकिकत्वेना-धिष्ठानत्वेनापि । न च त्वयाऽपि मामहं जानामीत्यादौ ज्ञानरूपस्य साक्षिणस्तदेव ज्ञानं प्रति कर्तृत्वकर्मत्वयोः कल्पनात्तद्वदेवाधिष्ठानस्यैव करणत्वकल्पनायामपि न दोष इति वाच्यम् । विशेषबलान्मत्कल्पनोपपत्तावप्य-विशेषवादित्वेन त्वत्कल्पनानुपपत्तेरित्याह **प्रकाशाश्रयमिति** । अत्र साक्ष्यज्ञानशब्दाभ्यां प्रस्तावेऽपि प्रकाश-तमःशब्दौ प्रयुञ्जानेनेदं सूचितम् । प्रकाशतमसोरिव साक्ष्यज्ञानयोर्निवर्त्यनिवर्तकभावस्यैवोचिततया अधिष्ठाना-धिष्ठेयभावस्य साध्यसाधकभावस्य वाऽनुपपत्तिः । न च त्वन्मते प्रकाशरूपसाक्षिण एवाज्ञानाधिष्ठानत्व-तत्प्रकाशत्ववन्ममापि नानुपपत्तिरिति वाच्यम् । भावरूपाज्ञानानङ्गीकारेण प्रवृत्तं प्रत्येतत्पर्यनुयोगानुपपत्तेः । मम विशेषबलेन सर्वोपपत्तावप्यविशेषवादिनस्तवानुपपत्तिरेवेति । अस्तु वाऽधिष्ठानस्यैव कारणत्वं तथाऽप्य-ज्ञानस्य साक्षिविषयत्वाविषयत्वाभ्यां निर्विशेषत्वसाक्षित्वाभावप्राप्त्या साक्षित्वनिर्विशेषत्वयोर्विरोध इत्याह **किञ्चेति** । **साक्षादिति** । साक्षाच्छब्दोऽव्ययं संज्ञाग्रहणं च धनिकाधमर्णान्योपद्रष्टृरूपाभिधेयनियमार्थम् । तथा च साक्षाच्छब्दाद्द्रष्टरि वाच्ये संज्ञायामिनिप्रत्ययेऽव्ययानां भमात्रेति टिलोप इति टिलोपे च साक्षीति निष्पन्नमिति भावः । द्वितीये दोषान्तरमाह **तदिति** । **निरस्तमिति** । अन्योन्याश्रयेणेति शेषः ।

**वा०र०— पराभिप्रेतेति** । भावरूपाज्ञानमङ्गीकुर्वतो नैयायिकादेरभिप्रेत इत्यर्थः । **तत्सविशेषत्वं तु किमर्थमिति** मूलम् । प्रमाणेन वस्तुसिद्धौ जनयितव्यायां तत्र सत्ताजात्यादिविशेषस्योपयोगाप्रतीतेरिति भावः । मास्तु तर्हि जात्यादिविशेषस्यावश्यकता । प्रमाणत्वोपयोगिसाधकतमत्वादिविशेषस्तु आवश्यक एव । विशेषवदेव साधकमित्येव नियमोऽङ्गीक्रियत इत्याह **निर्विशेषस्येति** मूलम् । **तर्हि पूर्वं साधकत्वेति** । तर्हि त्वयैव साक्षिण





इत्यादि इत्याहेति संबन्धः । त्वया साक्षिणः साधकत्वे स्वरूपेणाङ्गीकृते मया तत्प्रयोजकाभावेन तदनुपपत्त्या साक्षिणा ज्ञानसिद्धिरित्येतद्भग्नमित्युक्तं इदानीं तु त्वयैव स्वरूपेणैव साधकत्वनिषेधः क्रियत इति साक्षिणा तत्सिद्धिभङ्ग इति नास्माकं तत्र प्रयत्नापेक्षेत्युच्यत इति हृदि कृत्वा सुतरामित्युक्तमिति दर्शयितुं पूर्वोत्तरग्रन्थप्रमेयभेदकथनं कृतम् । **पूर्वमभिहितेदानीमित्याहेति** । न हि रजतेति तदुपपादनं कृतमित्येवमेतद्वाक्ययोजना । **नोक्तदोष इति** । साधकत्वस्वरूपापलापरूपदोषो नेत्यर्थः । **तर्हि न केवलमिति** । त्वदभ्युपगमेन साधकत्वस्वरूपापलापं नोद्भावयामः । अपि तु प्रागुक्तसाधकत्वप्रयोजकाभावेनापादितामज्ञानप्रमितिजनकत्वरूपसाधकत्वानुपपत्तिमेव त्वदङ्गीकृताधिष्ठानत्वेनापि ब्रूम इत्यर्थः । **अधिष्ठानत्वेनापि** । करणत्वानुपपत्तिरिति पूर्वेणान्वयः । **तदेवेति** । साक्षिरूपमेवेत्यर्थः । प्रागविशेषस्येत्येतत्सर्वधर्मरहितस्येति व्याख्यातमिदानीं भेदकार्यकारिविशेषरहितस्येति व्याख्यानमभिप्रेत्याविशेषवादिनेति हेतुतयोपन्यस्तमिति सूचयन्नाह **विशेषबलादिति** । मूलार्थस्तु अज्ञानस्य तमस्त्वात् साक्षिणश्च प्रकाशत्वात्तमसः प्रकाशाश्रितत्वस्य प्रकाशेन तत्सिद्धेश्चान्यत्रादृष्टतया प्रकृते साक्ष्याश्रयत्वतदधीनसिद्धिकत्वयोरज्ञानेऽनुपपत्तिः । अन्यथा अन्यत्रापि प्रकाशस्य तमःसाधकत्वात्तदाश्रयत्वयोरापातात् । न च मामहं जानामीत्यादौ ज्ञानरूपसाक्षिणः कर्तृत्वकर्मत्वयोस्त्वयोपपादनवत् साक्ष्याश्रयत्वाद्युपपादनमपि मया कर्तुं शक्यमिति वाच्यम् । मन्मते भेदकार्यकारिविशेषस्य सत्त्वेन तद्बलादेकस्यैव कर्तृत्वकर्मत्वयोर्मयोपपादयितुं शक्यत्वेऽपि त्वया तादृशविशेषानङ्गीकारेणैकस्यैवाधिष्ठानत्वकरणत्वयोरुपपादयितुमशक्यत्वादिति । एतदर्थं च टीकास्थविशेषवादित्वेनेत्यस्य भेदकार्यकारिविशेषानङ्गीकारित्वेनेत्यर्थः । केचित्तु अविशेषवादित्वेनेत्यस्य इतरप्रकाशापेक्षया यत्किञ्चिद्विशेषराहित्येनेत्यर्थः । तद्विशेषसत्त्वेनैव साक्षिणः । सविशेषत्वापत्त्या निर्विशेषत्वभङ्गः । तथा चान्यत्र तमसः प्रकाशेनैव सिद्धेरदृष्टत्वेऽपि विशेषोपेतसाक्षिणाऽज्ञानसिद्धिरुपपन्नेति शङ्कानवकाशोऽपि टीकाकृता सूचितो भवतीति वदन्ति । **प्रस्तावेऽपीति** । साक्ष्यज्ञानयोरिति पूरणीयम् । तच्च तन्त्रेणोपात्तं पूर्वेण षष्ठ्यन्ततयोत्तरेण च सप्तम्यन्ततया संबध्यत इति ज्ञेयम् । **अज्ञानाधिष्ठानत्वेति** । अज्ञानाश्रयत्वेत्यर्थः । **प्रवृत्तं प्रतीति** । नैयायिकादिकमिति शेषः । ननु परमते भावरूपाज्ञाननिराकरणानन्तरमपि स्वमतेऽपि तत्सद्भावात् तन्निराकरणायोग इत्याशंक्य न वयं भावरूपाज्ञानपरिपन्थिनः किन्तु परपक्षे तदसंभवं व्युत्पादयाम इत्युत्तरमूले प्रतिपादनात्सिद्धान्तिनस्तावत् भावरूपाज्ञानाङ्गीकारोऽस्त्येवेति तद्दोषस्य त्वयेव मयापि परिहारः शक्य इति शङ्कानिरासायाह **मम विशेषेति** । अधिष्ठानत्वेन करणत्वे निराकृते सति कथं विषयत्वाविषयत्वविकल्पावकाश इत्यतस्तद्विकल्पस्य करणत्वाङ्गीकारेण प्रवृत्तत्वान्न दोष इति योजयति **अस्तु वेति** । **निर्विशेषत्वेत्यादि** । साक्षिण इति शेषः । अज्ञानस्य साक्षिविषयत्वे साक्षिणि विषयित्वरूपविशेषप्राप्त्या तस्य निर्विषयत्वाभावप्रसङ्गेन निर्विषयत्वविरोधः । तस्य तदविषयत्वे तु साक्षित्वाभावप्रसङ्गेन साक्षित्वविरोध इति योजना । साक्षित्वनिर्विषयत्वयोर्विरोध इत्येवमेतद्ग्रन्थपर्यवसानकथनं तु निर्विशेषस्याप्यज्ञानवशादित्युत्तरमूलानुसारेणेति ज्ञातव्यम् । वृत्त्याद्यनुसारेण सूत्रार्थवर्णनपूर्वकं तदुपयुक्तकथनेन रूपनिष्पत्तिप्रकारमाह **साक्षाच्छब्द इति** । धनिकाधमर्णशब्दौ दातृप्रतिगृहीतृवाचिनौ । तदन्यो य उपद्रष्टेति योजना । अधिकं जन्माधिकरणे गीताभाष्यटीकाव्याख्यानपञ्चिकायां नवमाध्याये चास्मन्निरूपितं ज्ञेयम् । यद्यप्यत्र साक्षिशब्दनिर्वचनेन साक्षादीक्षत इतिं ज्ञानकर्तृता लभ्यत इति





नार्थविषयकत्वलाभस्तथापि तज्ज्ञानस्य स्वरूपत्वात्तत्प्रयुक्तं सविषयकत्वमपि प्राप्तमिति हृदयम् । पूर्वदोषेण दूषितत्वेऽपि दोषान्तरकथने तात्पर्यान्न वैयर्थ्यमित्याशयेनावतारयति **द्वितीय इति** । एतेन वा ज्ञानातिरिक्त-दुःखादिविषयकत्वमादाय साक्षित्वनिर्वाह इत्यपास्तम् । विषयित्वप्राप्तेरपरिहारात् । अतद्विषयेणेत्युक्तदोषाच्च पुनस्तच्छङ्काप्रसरादिति शङ्काया अप्रसरादिति विभागः ।

**स०व्र०— न हि साधकतमत्वादिविशेषाभाव इति** । करणरूपप्रमाणे साधकतमत्वं फलरूपे निर्दोषकरणजन्यत्वम् । साक्षिरूपे नित्यज्ञाने निर्दुष्टस्वरूपेन्द्रियाभिव्यक्तत्वमिति विशेषाः द्रष्टव्याः । शङ्कते **साक्षिण्यारोपिततयैवेति** । **अशक्यत्वादिति** । यथा दिवाभीतान्धकारः सौरालोकारोपितः सौरालोकेनैवावभासते, एवमज्ञानं चैतन्यारोपितं चैतन्येनैव भासत इत्यर्थः । **न तर्हीति** । तर्हि न सिद्धिरिति भावः । **प्रकाशेनैव सिद्ध्यतीत्यस्यार्थस्येति** । न हि दिवाभीतान्धकारः सौरालोकेन सिद्ध्यति । किन्तु दिवाभीतदुष्टेन्द्रियादेव । तथा च अधिष्ठानस्यैवारोपितज्ञप्तिकरणत्वमन्यत्र क्वाप्यदृष्टमत्रैव तन्निर्वाहकविशेषाभावे कल्पयितुमशक्यमिति भावः । **साक्षाद्द्रष्टरीति** । साक्षाद्द्रष्टर्यभिधेये संज्ञायां गम्यमानायां साक्षीति निपात्यत इत्यर्थः । **निर्वचनासंभवादिति** । साक्षिणः कर्तृत्वेन कारकत्वात् कारकमात्रस्याप्यतद्विषयकज्ञानजनकत्वापत्त्या तद्विषयत्वस्यावश्यकत्वादिति वा कर्तृत्वेऽप्यज्ञानादिप्रतीतौ तस्यैव करणत्वात् करणस्य सविषयकत्वनियमादज्ञानविषयत्वाभावे साक्षित्वमेव न स्यादिति वाऽभिप्रायः । न च अज्ञानविषयत्वाभावेऽपि दुःखादिविषयत्वेन तदुपपत्तिरिति वाच्यम् । तथात्वे सविषयत्वापत्त्या निर्विशेषत्वभङ्ग इत्याद्यपक्षोक्तदोषापत्तेरिति द्रष्टव्यम् । **अलौकिकेति** । रूपाविषयेणापि रसनेन रूपसिद्धिप्रसङ्गादित्यर्थः । **निरस्तमिति** । अन्योन्याश्रयेणेति शेषः ।

**विठ्ठ०— साधकतमत्वादिविशेषेति** । करणे साधकतमत्वं नित्यफले निर्दुष्टस्वभावत्वं अनित्यफले निर्दोषकरणजन्यत्वमिति विशेषो द्रष्टव्यः । यदुक्तं अज्ञानवशादेव साक्षिणः साधकत्वमित्युक्ते अन्योन्याश्रय इति तथा साक्षिण्यारोपितत्वेनैवाज्ञानसिध्याज्ञानारोपाधिष्ठानत्वातिरिक्तस्य साक्षिणः साधकत्वस्यैवाभावेन तदनपेक्षत्वादिति शङ्कते **साक्षिणीति** । **प्रकाशाश्रयमिति** । चैतन्यप्रकाशरूपसाक्ष्याश्रितं तमः तम इव भावरूपाज्ञानमित्यर्थः । अत्र प्रकाशतमःशब्दप्रयोगस्तु सौरालोकारोपोऽन्धकारः सौरालोकेनैव सिध्यतीत्यस्यार्थस्य वाऽतिजुगुप्सितताज्ञापनार्थम् । **विषयित्वमिति** । ततश्च सविशेषत्वापत्तिरिति भावः । **अलौकिकीति** । देवदत्तसुखाद्यविषयेच्छापि यज्ञदत्तसाक्षिणा देवदत्तसुखादिसिद्धिः स्यादित्यतिप्रसङ्गादिति भावः ।

**चषकः— साक्षादिति** । साक्षादित्यव्ययं, तस्मात्प्रकृतिभूताद्रूढौ गम्यमानायां द्रष्टरि वाच्ये इनिप्रत्यये अव्ययानां भमात्रे टिलोपे च साक्षीति निष्पद्यत इति भावः ।

**प्रदीपः— साक्षाद्द्रष्टरीति** । साक्षाद्द्रष्टर्यभिधेये साक्षाच्छब्दादिनिप्रत्ययो विहित इत्यर्थः । यद्यज्ञानं साक्षिणो विषयो न स्यात्कथं तेनाज्ञानसिद्धिः स्यात् । न हि चक्षुषा रससिद्धिरस्तीत्याह **अतद्विषयेणेति** । सत्ताभ्युपगमस्य कथाङ्गत्वे मानाभावात्प्रमाणाद्याकार एव प्रयोजकोऽतोऽसद्वादिनोऽपि कथाधिकारः किमुतानिर्वचनीयवादिन इति ।

**२५७ सु०— यस्तु वैय्यात्याद् ब्रवीति 'सिद्धप्रामाण्यमिव साध्यप्रामाण्यमपि प्रमाणं प्रयोगार्हमेव । अन्यथा शब्दानित्यत्वे कृतकत्वमुपन्यस्य परेणान्यतरासिद्धावुद्भावितायां तत्साधनस्फूर्तिमताऽपि तूर्ष्णी भवितव्यम् । अहं चाविशेषस्य साक्षिणः साधकत्वं विप्रतिपत्तौ साधयिष्यामी'ति । स प्रष्टव्यः । किं सविशेषेण प्रमाणेनैतत्साध्यते । उताविशेषेणेति । नाद्यः । तस्य तव मिथ्यात्वात् । परेण चोक्तन्यायेन तस्य साधकत्वानभ्युपगमात् । अतो द्वितीय एवाङ्गीकर्तव्य इत्याह तच्चेति ।**

## अनु०— तच्चाविशेषमानेन साध्यम्

**बिन्दुः— तूर्ष्णी भवितव्यमिति** । यदि कथकैः प्रसाध्याङ्गको हेतुर्न क्रियते किन्तु सर्वत्रोभयवादिसिद्ध एव तथात्वे अन्यतरसिद्धकृतकत्वादिहेतुमुपन्यस्यतः परेणान्यतरासिद्धावुद्भावितायां तावन्मात्रमेव तस्य निग्रहस्थानं स्यात् । तथाच प्रतिवाद्युद्भावितदोषनिराकरणासमर्थस्येव स्वोपन्यस्तसाधनासिद्धिपरिहारसमर्थस्यापि तूर्ष्णीभावापत्त्या तावन्मात्रेणैव कथापर्यवसानं स्यादिति भावः ।

**परि०— परेणेति** । शब्दनित्यत्ववादिनेत्यर्थः ॥ **तत्साधनेति** । शब्दः कृतकः व्यञ्जकप्रयत्नानन्तरभावित्वादिति कृतकत्वसाधकलिङ्गोपस्थितिमता तार्किकेणेत्यर्थः ॥ साधयिष्यामीतीति शब्दस्येति ब्रवीतीति पूर्वेणान्वयः ॥

**गु०दी०—** कृतकत्वं प्रयत्नानन्तरीयकत्वेन शक्यसाधनम्, अविशेषस्य साधकत्वरूपविशेषसाधनं तु व्याहतत्वादशक्यमिति दूषणे सत्येव दूषणान्तरमाह **स प्रष्टव्य इति** ।

**वं०प०—** तच्चाविशेषमानेन साध्यमित्युक्तत्वात्सविशेषप्रमाणेन साधनपक्षे दूषणं वक्तुमाह **यस्त्विति** । ननु सविशेषस्य मिथ्यात्वेऽपि तस्य साधकत्वमङ्गीकृतमिति चेत्तत्राह **परेणेति** । सिद्धान्तिनेत्यर्थः । उक्तन्यायेन 'न सिद्धं चान्यसाधनमि'त्युक्तन्यायेन । **तस्य** मिथ्याभूतप्रमाणस्य ।

**श्रीनिधि०— तत्साधनस्फूर्तिमतेति** । प्रयत्नानन्तरीयकत्वात् शब्दस्य कृतकत्वम् । अन्यथा सर्वदोपलब्धिप्रसङ्ग इति भावः ।

**वा०चं०—** ननु साधकत्वप्रयोजकविशेषाभावेन व्याहत्यादिना चाविशेषस्य साधकत्वे निरस्ते पुनस्तच्छङ्काऽप्रसरात्तत्साधकसविशेषत्वादिविकल्पनिरासेन तन्निरसनं तच्चेत्याद्युत्तरभाष्येऽनुपपन्नमित्यतः प्रमाणसिद्धे न व्याहत्यादिकमिति वैयात्याद् ब्रुवाणं प्रत्युत्तरग्रन्थस्तदहङ्कारखण्डनायैवेत्याशयेनाह **यस्त्विति** । अत्र पूर्वत्र





नेहनानेतिवाक्यातिरिक्तोभयसंप्रतिपन्नसाधकभावस्य प्रत्यक्षादेरिवात्रान्यस्याभावात्साक्षिण एव साधकत्वे विवादात् तत्र साधकत्वानुभवस्याशक्यशङ्कत्वात्पूर्ववत्प्रमाणसमाहारात्मकप्रमाणस्य वक्तुमशक्यत्वाद्वैयात्यपर्यन्तधावनमिति द्रष्टव्यम् । अत्र निर्विशेषपक्षपर्यवसानेन तत्र दूषणमभिदधता भाष्यकारेण पक्षान्तरप्रसक्तेरुक्तन्यायेन दूषण-सौलभ्यस्य च सूचितत्वात्तदाह **स प्रष्टव्य इति** ।

वा०२०— **प्रमाणसिद्ध इति** । प्रमाणसिद्धे व्याहत्यादिकं न दोष इति ब्रुवाणं प्रतीति संबन्धः । मया चाविशेषस्य साधकत्वं प्रमाणात्साध्यत इति तथा वक्तुर्भाव उत्तरमूले द्रष्टव्यः । **अत्र पूर्वत्रेति** । अत्र वैय्यात्यपर्यन्तं धावनमिति संबन्धः । पूर्वत्रेत्यादेरयमर्थः । मिथ्याभूतस्य साधकत्वं न सिद्धमित्यस्माभिरुक्ते मिथ्याभूतं साधकमित्यर्थे प्रमाणद्वयसमाहारः प्रमाणतया परेण प्रागाशङ्कितस्तत्र नेहनानेति वाक्यस्य मिथ्या-भूतस्य साधकत्वासिद्धावपि प्रत्यक्षादौ मिथ्यात्वे सति साधकत्वमस्तीति शङ्कनं युक्तम् । उभाभ्यामपि तत्स्वीकारेण तत्र साधकत्वे विवादाभावात् । तत्र साधकत्वानुभवसत्त्वेन प्रमाणद्वयसमाहारप्रवृत्तिप्रकारस्य अथ मतमित्यादि प्रागुक्तरीत्या संभवाच्च । न चैवं सक्षिणोऽशेषविशेषविधुरत्वाङ्गीकारादविशेषस्य साधकताया-श्चासिद्धेरित्येवमविशेषस्य साधकत्वाभावेऽस्माभिः प्रतिपादिते तथाविधस्यापि साधकत्वं साधयिष्यामीति ब्रुवाणेनाविशेषस्य साधकत्वेऽपि प्रमाणद्वयसमाहारस्य प्रमाणतया शङ्का संभवति । साक्षिव्यतिरिक्तस्यान्यस्य प्रमाणसमाहारप्रवृत्तिविषयस्योभयसंप्रतिपन्नसाधकभावस्याभावेन तत्र साधकत्वं तावदनुभवसिद्धम् । अविशेषत्वं च केनचित्प्रमाणेन सिद्धमित्यादिरूपेण प्रमाणद्वयसमाहारप्रवृत्तेरयुक्तत्वात् । तस्मात्साक्षिणमेव पुरस्कृत्य तत्रैवोक्त-रीत्या तत्समाहारप्रवृत्तिरिति वाच्यम् । न च तदपि संभवति । तत्र साधकत्वे विवादेनानुभवसिद्धताया अशक्य-शङ्कत्वात् । तथा च साक्षिव्यतिरिक्ते वा साक्षिणि वा विशेषस्य साधकत्वरूपेऽर्थे मिथ्याभूतस्य साधकत्व इव प्रमाणद्वयसमाहाररूपप्रमाणप्रवृत्तेर्वक्तुमशक्यत्वमिति । प्रमाणान्तरस्य चाभावादित्याशयः । उभयसंप्रतिपन्न-साधकस्येत्युपलक्षणं प्रमाणसिद्धमिथ्यात्वकस्येत्यपि ज्ञेयम् । अन्यस्येत्यस्योभयसंप्रतिपन्नसाधकभावस्य प्रमाणान्तरसिद्धाविशेषत्वस्य चेत्यर्थः । साक्षिणः साधकत्व एव विवादादिति संबन्धः । पूर्वत्र यस्य नेहनानेति वाक्यस्य मिथ्याभूतस्य साधकत्वे विवादस्तदतिरिक्ते प्रमाणसमाहारप्रवृत्तिवर्णनं कृतम् । इदानीं तु विवादाधिकरणसाक्ष्यतिरिक्तस्य विशेषतायाः परेणाप्यनङ्गीकारेण विवादाधिकरण एव समाहारप्रवृत्तिर्वाच्येति दुर्घटत्वमिति प्रतिपादयितुं प्राक् नेहनानेति वाक्यातिरिक्तेति; अत्र च साक्षिण एवेति चोक्तमिति ज्ञातव्यम् । अस्तु कृतकत्वेनानित्यतासाधनदशायां कृतकत्वस्यासिद्धिशङ्कायां तत्र प्रयत्नानन्तरीयकत्वकारणान्वयव्यतिरेकानु-विधायित्वादिरूपसाधनेन तत्साधनसंभवात्साध्यप्रामाण्यस्यापि साधकतयोपन्याससंभवः । प्रकृते तु कथं तथाविधस्योपन्यासः इत्यतस्तद्वदहमप्यज्ञानसाधकतयोपन्यस्तसाक्षिणि अविशेषत्वप्रयुक्तसाधकत्वाभावशङ्का-वारणायाविशेषस्यापि साधकतास्तीत्येतत्साधनमुखेन विशेषत्वेऽपि साक्षिणः साधकत्वसंभवं प्रतिपादयामीति न दोष इत्याह **अहं चेत्यादि** मूलम् । **साक्षिण इति** न साधनीयान्तर्गतम् । अविशेषस्यापि साधकत्वसिद्धौ साक्षिणोऽप्यविशेषत्वेऽपि साधकत्वमित्येषोऽर्थोऽपि सिध्यत्येवेति भावेन प्रधानप्रमेयसूचकतया तदभिधानात् ।

तथा चाविशेषस्य साधकता साध्येति भाष्योक्तानुसारेणाविशेषत्वेन साधकत्वाभावे शङ्किते साक्षिणः साधकत्वसिध्यर्थकाविशेषस्य साधकताविप्रतिपत्तौ तन्निरासाय तस्यापि सास्तीत्येतत्साधयिष्यामीत्यभिप्रेतोऽर्थः । अत एवोत्तरमूले तदविशेषं प्रमाणं किं साक्षीत्यादिविकल्पः साक्षीति पक्षेऽन्योन्याश्रयोद्भावनं च युज्यते । अन्यथा विकल्पायोगः प्रागेव च आत्माश्रय उद्भाव्येतेति ज्ञेयम् । अविशेषमानेन साध्यमिति भाष्यकारीयपक्षविशेषोपादाने सति पक्षान्तरनिराकरणादिकं न युक्तमित्यतो भाष्ये आवश्यकतयाऽभिप्रेतं तत्सूचितं च तदिति न दोष इत्याह **अत्र निर्विशेषेति** । प्रसक्तेः सूचितत्वादिति संबन्धः । **दूषणेति** । तद्दूषणेत्यर्थः । **तदाहेति** । पक्षान्तरप्रसञ्जनपूर्वकं तद्दूषणमाहेत्यर्थः । **तत्साध्यत** इति मूलम् । अविशेषस्यापि साधकत्वमित्येतदित्यर्थः । **तव** मिथ्यात्ववादिनः । **परेण** जगत्सत्यत्ववादिना । **उक्तन्यायेन** मिथ्यायाः साधकत्वं चेत्युक्तन्यायेन । **द्वितीय एवेति** । अविशेषस्य साधकत्वमविशेषप्रमाणेन साध्यत इति द्वितीय इत्यर्थः । भाष्ये तच्चाविशेषस्य साधकत्वं च विशेषेणैव मानेन साध्यमित्यर्थः ।

**२५८ सु०— किमतः । इदं ततः । तदविशेषप्रमाणं किं साक्ष्युतान्यत् । आद्ये अन्योन्याश्रयत्वम् । साक्षिणः साधकत्वसिद्धावविशेषस्यापि साधकत्वमित्येषोऽर्थः सिद्ध्यति । तत्सिद्धौ च साक्षिणः साधकत्वसिद्धिरिति । न द्वितीयः । तदभावात् । अविशेषान्तराङ्गीकारे दूषणमाह इत्यनवस्थितिरिति ।**

**अनु०— इत्यनवस्थितिः ॥**

**तस्यापि अविशेषस्य साधकत्वमविशेषप्रमाणेनैव साध्यमित्युपपादनम् इतिशब्देन सूचयति ।**

**परि०— किमत इति** । अविशेषस्य साधकत्वं चाविशेषप्रमाणान्तरसाध्यमित्युक्तितः किमनिष्टमिति प्रश्नार्थः । इदं वक्ष्यमाणमन्योन्याश्रयादिकमिति परिहारार्थः ॥

**वा०चं०—** नन्वस्मिन्पक्षे भाष्येऽनवस्थित्यभिधानमसङ्गतम् । साक्षिणोऽन्यस्य वैतदर्थसाधकत्वेनाश्रयणेऽपि परंपरानाश्रयणादित्यतस्तत्पक्षद्वयस्य सुलभदूषणत्वाद्भाष्यकारीयं तत्पक्षोपेक्षणेन परम्पराश्रयण एव दूषणाभिधानं युक्तमेवेत्याशयेन स्वयमेव दूषणाशङ्कोत्तरत्वेन तत्पक्षं विकल्प्य प्रतिक्षिप्य परम्परापक्षे भाष्यं योजयति **किमत इति** । प्रकारानुक्तेरिति शब्दस्य प्रकारसमर्पकत्वासंभवादाह **तस्यापीति** ।

**वा०र०— किमत इति** । अविशेषस्य साधकत्वमविशेषमानेनैव साध्यं चेत्तर्हि तेनैव साधयिष्यामि । ततः किं दूषणम् । न हीदमेव दूषणमिति भावः । इदं ततः । वक्ष्यमाणविकल्पपूर्वकनिराकरणदूषणं ततः प्राप्तं भवतीत्यर्थः । तत्प्रकारमाह **तदविशेषमिति** । अविशेषस्यापि साधकत्वमित्येतत्प्रमेयसाधकमविशेषं प्रमाण-





मित्यर्थः । **साक्षिण इति** । आद्ये साक्षिरूपप्रमाणेन विशेषस्य साधकत्वं सिध्यतीति वक्तव्यम् । तत्र साक्षिणः साधकतासिध्यभावे तेनाविशेषस्य साधकत्वमिति प्रमेयासिध्या तेन तत्सिध्यर्थं तस्य साधकतासिध्या भवितव्यम् । तत्सिद्धिश्चाविशेषत्वयुक्तिखण्डिताऽविशेषस्यापि साधकत्वमित्येतत्प्रमेयसिध्यधीनेति परस्पराश्रय इत्यर्थः । **तदभावादिति** । साक्षिव्यतिरिक्तस्याविशेषप्रमाणान्तरस्यानङ्गीकारादित्यर्थः । **अविशेषान्तरेति** । अज्ञानसिद्धये साक्षी साधकतयोपन्यस्यते । तस्य चाविशेषत्वेन साधकत्वाभावशङ्कायामविशेषमपि साधकमित्येषोऽर्थोऽविशेष-प्रमाणेन साध्यते । तच्चाविशेषप्रमाणं न साक्षीत्यङ्गीकुर्मो येनान्योन्याश्रयावकाशः । अपि तु साक्षिव्यतिरिक्तमेवा-विशेषं प्रमाणमित्यङ्गीक्रियत इति चेदुच्यत इत्यर्थः । अनवस्थाप्रकारस्यानुक्तत्वात् तत्प्रकारसूचकतयेतिशब्दं योजयति । तस्याप्यविशेषस्येतीति टीकायां व्यक्तम् । तावतापि कथमनवस्था । अविशेषस्य साधकत्वरूपप्रमेय-साधकतयाभिप्रेतविशेषप्रमाणस्यापि प्रागुक्तविशेषत्वयुक्त्या साधकत्वानुपपत्तिशङ्कायां तत्प्रमाणसाधकतासिद्धये प्रमाणान्तरं साक्षिरूपमुच्यते । तथा च साक्षिणाऽविशेषस्य साधकत्वमित्येतत्प्रमेयसाधकाविशेषप्रमाणस्य साधकत्वसिध्यङ्गीकारे तदप्रसरादित्यत उक्तम् **इत्युपपादनमिति** । इति शब्द आवर्तनीयः । द्वितीय आद्यर्थकः । इत्याद्युपपादनमित्यर्थः । तथा च सविशेषप्रमाणस्यानङ्गीकारपराहतत्वादविशेषपक्षेऽपि तस्य साक्षिरूपत्वे तस्य साधकताया असिध्या साक्षिणाऽविशेषप्रमाणान्तरस्य साक्षिव्यतिरिक्तस्य साधकतासिद्धौ सत्यां तेनाविशेष-प्रमाणेनाविशेषस्यापि साधकतेति प्रमेयसिद्धिरित्यस्य वक्तुमशक्यत्वे प्राप्ते साक्षिणः साधकतासिद्ध्यर्थमप्यवि-शेषस्य साधकतासाधकप्रमाणानुसरणे साक्षिणः साधकत्वसिद्धौ तेनाविशेषस्यापि प्रमाणस्य साधकत्वसिद्धिः । तत्सिद्धौ च तेनाविशेषप्रमाणेनाविशेषं प्रमाणं साधकमित्येतत्प्रमेयसिद्धिः तत्सिद्धौ च साक्षिणोऽप्यविशेषत्वेऽपि साधकतासिद्धिरिति चक्रकाश्रयप्रसङ्गः । अविशेषस्यापि साधकत्वमित्येतत्साधकाविशेषप्रमाणस्य साधकता-सिद्धिर्न साक्षिणेति ब्रूमः किन्तु तृतीयेनाविशेषप्रमाणेनेत्यङ्गीकारे तु तत्प्रमाणेऽप्यविशेषत्वप्रयुक्तसाधकता-नुपपत्तिप्रसक्तौ तत्परिहाराय तत्साधकतासाधकत्वेनापि साक्षिपक्षं प्रतिक्षिप्याविशेषप्रमाणान्तरेण चतुर्थ-साधकतासिद्धिरिति पक्षमवशेष्य तत्रापि एवमेवाङ्गीकारेऽनवस्था दीयत इति न कश्चिद्दोष इत्याशयः । तदेवं मूलार्थं सिद्धत्वान्मनसि कृत्वैवात्र मूलेऽनवस्थामात्रपरं भाष्यं योजयितुं मध्ये किमत इत्यादिना दूषणाशङ्कादि यद्योजितं तत्कुत इत्यतस्तद्व्यावर्त्यां शङ्कामुत्थाप्य भाष्याभिप्रेतत्वाभिप्रायेण तस्य प्रवृत्तेरिति तच्छङ्कापरिहारौ च वदन्नुत्तरग्रन्थप्रतिपाद्यमर्थं च दर्शयति **नन्वस्मिन्पक्ष इति** । अज्ञानसाधकतयोपन्यस्तसाक्षिणः साधकता-सिध्यर्थकाविशेषमपि साधकमित्येतत्प्रमेयसाधकमविशेषप्रमाणमेवेति पक्ष इत्यर्थः । **आश्रयणेऽपीति** । आश्रयणोपपत्त्येत्यर्थः । **परम्परानाश्रयणादिति** । तदनङ्गीकारादित्यर्थः । **सुलभेति** । अनेन पक्षान्तरदूषणाभाव-प्रयुक्तन्यूनतापि भाष्ये परिहृता भवति । **दूषणाशङ्केति** । किमत इत्यनेनातः किं दूषणमिति तच्छङ्कामुत्थाप्य तदुत्तरत्वेनेत्यर्थः । **तत्पक्षम्** अविशेषसाधकतासाधकमविशेषप्रमाणमिति पक्षमित्यर्थः । **परम्परेति** । अविशेष-प्रमाणं साक्ष्यतिरिक्तमस्तीत्यङ्गीकारपक्ष इत्यर्थः । **भाष्यं योजयतीति** । अनवस्थित्यभिधायकतया योजयती-त्यर्थः । **किमत इतीति** । इत्यादिनेत्यर्थः । **प्रकारेति** । अनवस्थाप्रकारस्य भाष्येऽनुक्तेरित्यर्थः । **समर्पकत्वेति** । तत्र शक्त्यभावादिति भावः । सूचयतीत्येतद्व्यावर्त्यमिदम् ।

**२५९ सु०— ननु च 'अविशेषस्य साध्या साधकते'ति प्रकृतमतः सा चेति परामर्शो युक्तः। सत्यम् । तथाऽपि प्राग्यन्मिथ्याभूतस्यापि साधकत्वं प्रमाणविकल्पनिराकरणेन निरस्तं तत्सविशेषत्वादिविकल्पनिराकरणेनापि निराकरणीयमिति सूचनाय सामान्येन नपुंसकनिर्देशः। एतेन प्राग्विकल्पितः सताऽऽत्मभूतेनेति पक्षोऽपि निरस्तो वेदितव्यः।**

**परि०**— तच्चेति निर्देशायोगमाशङ्कते **ननु चाविशेषस्येति** । **तत्सविशेषत्वादीति** ॥ मिथ्याभूतस्य साक्षिणः साधकत्वम् । 'तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वये'ति साधकप्रमाणविकल्पेन यथा निरस्तं, एवं मिथ्याभूतस्य साधकत्वं सविशेषप्रमाणेन साध्यते, अथाविशेषमानेन । आद्ये तस्यापि तव मिथ्यात्वात् । परेण च तस्य साधकत्वानङ्गीकारात् । न द्वितीयः । प्रतिवादिनस्तस्य साधकत्वासम्मतेरिति निराकरणीयमिति सूचनायेत्यर्थः ॥ **प्राग्विकल्पित इति** । 'सता चेद्वैतसिद्धिः स्यादि'त्यत्र सतेत्यात्मभूतेन वा आत्मातिरिक्तेन वेति विकल्पितात्मभूतेनेति पक्षोऽप्यविशेषस्य साधकत्वखण्डनेन निरस्त इत्यर्थः ।

**वं०प०— तत्सविशेषत्वादीति** । मिथ्याभूतस्य साधकत्वम् । 'तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वये'ति साधकप्रमाणविकल्पेन यथा निरस्तम् । एवं मिथ्याभूतस्य साधकत्वं सविशेषप्रमाणेन साध्यते । अथाविशेषप्रमाणेन । आद्ये तस्यापि तव मिथ्यात्वात् । परेण च तस्य साधकत्वानङ्गीकारात् । न द्वितीयः । प्रतिवादिनस्तस्य साधकत्वासम्मतेरिति निराकरणीयमिति सूचनायेत्यर्थः । **एतेनेति** । साक्षिणः साधकत्वनिराकरणेनेत्यर्थः । **आत्मभूतेनेति** । तस्यैव साक्षित्वादिति भावः ।

**कं०रा०— ननु चेति** । अविशेषस्य साध्यासाधकता पुनरिति पूर्ववाक्ये अविशेषस्य साधकता प्रकृता । अतः सा चाविशेषमानेनेति निर्देशः कर्तुमुचितः । न तु तच्चाविशेषमानेनेति भावः । भवेदेतच्चोद्यावकाशो यद्यत्र तच्छब्देनाविशेषस्य साधकतैव परामृश्येत । न चैवम् । किं नाम यत् प्राक् मिथ्याभूतस्य साधकत्वं साधकप्रमाणविकल्पनिरासेन निरस्तं तत्सविशेषत्वादिविकल्पनिरासेनापि निराकर्तव्यमिति सूचयितुं मिथ्याभूतस्य साधकत्वमपि परामृश्यते । अतः सामान्ये नपुंसकनिर्देशोपपत्तिरित्याशयेन परिहरति **सत्यमिति** । **एतेनेति** । एतेनाविशेषस्य साधकत्वनिरासेन मिथ्याभूतस्य साधकत्वं सता प्रमाणेन साध्यत इति पक्षे आत्मरूपेण सता वा तदन्येन वेति प्राग्विकल्पितयोः पक्षयोर्मध्ये तदन्येनेति पक्षे द्वैतसिद्धिः स्यादित्यनेन दूषिते सत्यवशिष्टो यः आत्मरूपेण सतेति पक्षः स निराकृतो वेदितव्य इत्यर्थः ।

**श्रीनिधि०**— ननु सामान्ये नपुंसकनिर्देश इति न युज्यते । अविशेषस्य साधकतेति एकस्यैव प्रमेयस्य प्रकृतत्वात् अनेकेष्वेव हि सामान्यविवक्षा संभवतीत्यतः अत्रापि अनेकप्रमेयापेक्षया सामान्यविवक्षेति मन्वान आह **प्राग्यदिति** । सविशेषत्वादिविकल्पेति मिथ्याभूतस्य साधकत्वं मिथ्याप्रमाणेन साध्यते सता वा । तथा

सविशेषणेन वा निर्विशेषणेन वा इति विकल्पो द्रष्टव्यः । **प्राग्विकल्पित इति** । सत्ता चेदित्यत्र इति शेषः । **एतेन** अन्याविशेषसाधकत्वस्य परं प्रत्यसिद्धत्वेन । सत्य आत्मा अविशेष इति तन्मतमिति भावः ।

**वा०चं०— सामान्येनेनेति** । भिन्नलिङ्गतयोपस्थितानेकसाधारणपरामर्शो नपुंसकमित्याशयः । वस्त्रेण शुक्लेन कंबलेन शुक्लेन तेनानेन शुक्लेनेत्यत्र तल्लक्षणमात्रविशेषाभावान्नपुंसकमनपुंसकेनेत्यस्याप्राप्तौ (नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । अक्लीबेन सहोक्तौ क्लीबं शिष्यते । तच्च वैकवत्स्यात्तल्लक्षण एव शेषश्चेत् । शुक्लः पटः शुक्ला पटी शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि ।) सामान्यविवक्षायां नपुंसकत्वैकवद्भावयोर्वक्तव्यत्वाद्बहुविषयेण तेनैव तदिति नपुंसकनिर्देशस्याप्युपपत्तेर्नपुंसकमनपुंसकेनेत्यनुक्त्वा सामान्येन इत्युक्तमत एव भाष्यकारेण नपुंसकस्य व्यापित्वात्प्राधान्यमुपादाय प्रधाने कार्यसम्प्रत्ययाच्छेष इत्यादिना तदिदं शुक्लमित्याद्युपपाद्य सूत्रं प्रत्याख्यातम् । अत एव च सामान्ये नपुंसकमित्यनेनैव (सामान्ये नपुंसकम् । दृढं भक्तिर्यस्य दृढभक्तिः । स्त्रीत्वविवक्षायां तु दृढा भक्तिः ।) तदिदं शुक्लमिवेत्यादेरुपपत्तेर्नपुंसकमनपुंसकेनेति सूत्रवैयर्थ्यमाशङ्क्य द्वन्द्वापवादायेति तदभियुक्तैः समभिहितम् । अथवा सामान्येनेत्यस्य सा च तच्चेति स्त्रीनपुंसकसाधारण्येनैकशेषेणेत्यर्थः । तदुपपादकसूत्रं च नपुंसकमनपुंसकेनेत्येतदेव द्रष्टव्यम् ।

**वा०र०**— सामान्यशब्दस्य समानानां यो भावस्तदर्थकतया तत्र नपुंसकमित्यर्थप्रतीतिवारणाय व्याचष्टे **भिन्नलिङ्गतयेति** । स्त्रीपुंनपुंसकरूपभिन्नलिङ्गशब्दैरुपस्थितानामनेकेषां साधारणरूपेण परामर्श इत्यर्थः । ननु शुक्लः कम्बलः । शुक्ला बृहतिका । शुक्लं वस्त्रम् । तदिदं शुक्लं तानीमानि शुक्लानीत्यत्र नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति सूत्रेण नपुंसकशेषविकल्पेनैकवद्भावयोर्विधानादेकवद्भावपक्षे तदिदं शुक्लमित्यत्रेव प्रकृतेऽपि सा च तच्चेति नपुंसकस्यानपुंसकेन सह वचनप्रयुक्तनपुंसकशेषे एकवद्भावे च साऽविशेषस्य साधकता तत् मिथ्यायाः साधकत्वं च तदिति साध्विति समाधानसंभवे तत्परित्यागेन मूलकृता सामान्येनं नपुंसकतया साधुत्वाश्रयणे निमित्ताभाव इत्यतः सूत्रस्य सर्वनिर्वाहकत्वाभावात्सार्वत्रिकैकशेषनिर्वाहकतयाऽङ्गीकृतप्रकारेणैव प्रकृते साधुत्वनिर्वाह उचित इत्याशयं दर्शयति **वस्त्रेण शुक्लेनेति** । अत्र वस्त्रेण शुक्लेन कम्बलेन शुक्लेनानेन शुक्लेनेति पाठः । कम्बलेन तेनानेन शुक्लेनेति मूलकोशगतपाठे तेनेत्यस्य पूर्वोत्तरसमभिव्याहाराच्छुक्लेनेत्यर्थः । अनेनेत्यस्य च प्रकृतपरत्वाद्बुद्धिसन्निधापितं वस्त्वन्तरमनेनेत्यनेनोच्यते । परन्तु कम्बलेन शुक्लेन तेनानेन शुक्लेनेति पाठो न सम्मतः । मञ्जर्यादावपि तेन शुक्लेनेत्येतयोरुभयोरप्रयोगादिति ज्ञेयम् । तेनानेनेत्यत्र स च अयं तेनेत्यर्थे शुक्लेनेति चरमं च सार्थव मित्यन्ये । तेनेत्येतद्विवरणं शुक्लेनेतीत्येतदित्यप्याहुः । **तल्लक्षणमात्रविशेषेति** । अयमाशयः । रामौ रामा इत्यादाविव शुक्ले शुक्लानीत्यादावपि सरूपाणामेकशेष इत्यनेनैवैकशेषसिध्या नैतद्योगप्रयोजनमित्याशङ्कायामत्र वृद्धो यूनेत्यतः तल्लक्षणश्चेदेव विशेष इत्यस्यानुवृत्त्याश्रयणाद्यत्र नपुंसकानपुंसककृतविशेषावगमस्तत्रैवानेनैकशेषसिध्या शुक्लश्च शुक्लश्च शुक्लावित्यत्र तद्विशेषशून्येऽस्याप्रवृत्त्या सरूपाणामित्यनेनैव एकशेषेऽपि शुक्लश्च कृष्णश्च शुक्लकृष्णावित्यत्र नपुंसकातिरिक्तस्वरूपवैलक्षण्यस्थले शुक्लश्च कृष्णं च शुक्लकृष्णे इत्यत्रोभयवैलक्षण्यस्थले चैकशेषस्यैवाभावेऽपि





शुक्लश्च शुक्लं च शुक्ले इत्यादौ लिङ्गकृतवैलक्षण्यं यत्र तत्राऽनेन नपुंसकशेष इत्यस्य सिद्धिः । तत्राप्यस्ति विशेषः । शुक्ला बृहतिका शुक्लं वस्त्रं ते इमे शुक्ले इत्यत्र शुक्लेत्यत्रत्यविभक्तेर्हल्ङ्याबिति लुप्ततया विभक्तौ विभक्त्यन्तयोश्च सारूप्याभावात् शुक्लश्च शुक्लं चेत्यत्र तु विभक्तौ सारूप्येऽपि विभक्त्यन्तयोर्वैरूप्यान्न सरूपाणामित्यस्य प्रसङ्ग इति । तदेवं सरूपाणामित्येतदप्रवृत्तये लिङ्गकृतवैरूप्यावगमस्य निमित्तताश्रयणसिध्या यत्र शुक्लश्च शुक्लं चेत्यादिरूपेण तत्कृतवैरूप्यं तत्र नपुंसकमनपुंसकेनेत्यनेन नपुंसकशेषैकवद्भावप्राप्तावपि यत्र वस्त्रेण शुक्लेन कम्बलेन शुक्लेनेत्यादि-स्थले पुंनपुंसकयोर्विभक्तौ विभक्त्यन्तयोश्च सारूप्यान्नपुंसकानपुंसककृतविशेषो नावगम्यते तत्रानेन तदप्राप्तिरिति । **सामान्यविवक्षायामिति** । उक्तं च मञ्जर्याम् । सामान्यविवक्षायामेकशब्दत्वमेकवचनं नपुंसकत्वं च भविष्यतीति । नन्वेतावता यत्र नपुंसकानपुंसककृतवैलक्षण्याभावस्तत्र सामान्यविवक्षोक्त्या तादृशस्थल एव तस्यानुसर्तव्यत्वेऽपि प्रकृते लिङ्गकृतवैलक्षण्यसद्भावान्नपुंसकमनपुंसकेनेत्यनेनैव नपुंसकशेषसिद्धिरेकवद्भावसिद्धिश्च भविष्यतीति वि मत्र सामान्यविवक्षायामित्युपायाश्रयणेनेत्यत उक्तं **बहुविषयेणेति** । सूत्रं तावन्न सकलनिर्वाहकम् । सामान्य इत्यु-पायश्च सार्वत्रिकः ततोऽवश्याश्रयणीयेनानेनान्यत्रेव नपुंसकमित्येतद्विषयेऽपि नपुंसकशेषैकवद्भावयोरुपपत्तौ किं सूत्राश्रयणेनेत्येवं सूत्रप्रत्याख्याने तात्पर्येणास्य प्रवृत्तेरिति भावः । उक्तरीत्या प्रत्याख्यानं भाष्यसंमतं चेत्याह **अत एवेति । नपुंसकस्य व्यापित्वादिति** । प्रधाने कार्यसंप्रत्ययाच्छेषो भविष्यति । किं प्रधानमित्यादिभाष्ये हि नपुंसकमेव प्रधानम् । एवं हि दृश्यते लोके । अनिर्ज्ञातार्थगुणसन्देहे नपुंसकलिङ्गं प्रयुज्यते । किं जातमित्युच्यते । स्त्री वा पुमान्वा । एतद्वयं हि जायत इत्यादिप्रतिपादनान्नपुंसकस्य व्यापित्वात्स्त्रीपुंसयोरपि प्रयुज्यमानत्वा-न्निमित्तात्प्राप्तं यत्प्राधान्यं तदुपादायेत्यर्थः । प्रधाने कार्यसंप्रत्ययाच्छेष इत्यादिनेत्यत्रादिपदेन प्रधाने कार्यसंप्रत्ययाच्छेषो भविष्यतीत्यादि भाष्यं गृह्यते । **तदिदं शुक्लमित्यादीति** । तत्रापि नपुंसकप्राधान्यादेव नपुंसकशेषसंभवान्न तदर्थं सूत्रमावश्यकमिति प्रत्याख्यातमित्यर्थः । अयमपि योगोऽशक्यो वक्तुमित्यादि प्रतिज्ञानुसारात् । उपपादितं चैतत्कुसुमविकासे यद्येवं तदिदमिति मञ्जरीवाक्यव्याख्यावसरे नपुंसकस्य व्यापित्वा-त्प्राधान्यम् । स्थितिर्हि नपुंसकशब्दार्थः । स्थितिर्नाम सत्त्वादिपरिणामानां रूपादिपञ्चगुणानां साम्यावस्था । सा च पुंस्त्रीवाच्यवृद्धिह्रासमध्यवृत्तित्वाद्वृद्धिह्रासौ स्पृशतीति वृद्धिह्रासयोरपि वर्तते । तथा च स्थितिरूपत्वेनैव स्त्रीपुंसयोर्विवक्षायां सिद्धो नपुंसकशब्दप्रयोग इति । न च तावता नपुंसकशेषसिद्धावप्येकवद्भावसिध्यर्थं सूत्रमिति वाच्यम् । द्रव्याभिधाने द्विवचनबहुवचनयोः प्रसङ्गेऽप्याकृत्यभिधाने तस्या एकत्वेनैवैकवचनोपपत्तेः । अत एवोक्तं भाष्ये । एकवच्चास्यान्यतरस्यामित्येतदपि न प्रयोजनम् । आकृतिवाचित्वादेकवचनम् । द्रव्याभिधाने द्विवचन-बहुवचने इति । एतच्च जात्याख्यायामित्यादिसूत्रेषु भाष्यकृता बहुधोक्तमिति भावः । उक्तरीत्या प्रत्याख्यानं मञ्जर्यादिसंमतं च । तत्रैतत्प्रत्याख्यानेन सूत्रवैयर्थ्यमाशंक्य तदिदं शुक्लमित्यादौ नपुंसकशेषादिप्रयोजनाभावेऽपि द्वन्द्वनिवृत्तिरूपप्रयोजनसत्त्वान्न सर्वथा वैयर्थ्यमिति प्रतिपादनादित्याशयेनाह **अत एव चेति** । प्रत्याख्यानस्य संमतत्वादेवेत्यर्थः । **द्वन्द्वापवादायेति** । द्वन्द्वनिवृत्त्यर्थमित्येव मञ्जर्युक्तत्वेऽपि एकशेषस्य द्वन्द्वापवादतयोक्तिं तत्र तत्रत्यां मनसि कृत्वाऽयमर्थानुवादः कृत इति ज्ञेयम् । ज्योतिरधिकरणीयपरापव्याख्याननिरासस्थलीयरामानुज-मतानुवादस्थस्त्रष्ट्रीत्वेतिपदोपादानावसरे सामान्येन नपुंसकाश्रयणमस्माभिर्व्याख्यास्यते । तद्भिन्नम् । सामान्ये





वस्तुत्वादिरूपेण साधारणाकारेण निर्दिष्टे नपुंसकरूपत्वात्तस्यां लेख्यमस्ति .........'। एवं दृढं भक्तिर्यस्येति दृढभक्तिरित्यत्र स्त्रीत्वमविवक्षित्वा भक्तिगताऽदार्ढ्यनिवृत्तिमात्रे तात्पर्यम् । अत एव परः सन्निकर्षः संहितेति सूत्रीय एकैकवर्णवर्त्तित्वाद्वाच इति भाष्यकैयटेनैतदभिप्राय उक्त इत्यादिकमुत्तरत्र व्युत्पादयिष्यामः । प्रपञ्चो यदीत्येतद्योजनावसरे एतदध्यायान्ते द्वयोर्भावो द्विता तदीयो वर्गो द्वैतः सामान्ये नपुंसकमित्यत्राप्येवम् । एवमन्यत्र । गीताभाष्यटीकायां गुणमयीत्वमित्येतत्स्थलेऽपि सामान्येन नपुंसकनिर्देश इत्येतन्मूलस्योक्तरीत्या सूत्रप्रत्याख्यानतात्पर्येण प्रवृत्तिकल्पने बहु प्रतिपत्तव्यं भवतीत्यपरितोषान्मूलस्य सूत्रप्रत्याख्यानतात्पर्यमनाश्रित्य सूत्रस्वारस्यचिन्तया किमस्माकं प्रयोजनं यथाश्रुतसूत्रेणैव प्रकृते एकशेष इत्यभिप्रायं चाश्रित्य सामान्येनेत्येतत् तर्हि कथमित्यतस्तदर्थमपि वदन् नपुंसकमनपुंसकेनेत्येतत्सूत्रेणैव नपुंसकशेषादिप्रवृत्तिं वाक्यार्थतयाह **अथवा सामान्येनेत्यस्येति** । **एतेन प्रागिति** मूलम् । सता चेदित्यतःपरमात्मरूपेण तदन्येन वेति विकल्पः । प्रथमपक्षे वक्ष्याम इत्याद्यपक्षदूषणप्रतिज्ञानं चाध्याहार्यमिति प्राग्योजितत्वात्सतेति पक्षे तत्राप्यात्मस्वरूपेणेति पक्ष इत्यर्थः ।

**विठ्ठ०— एतेनेति** । अविशेषस्य साधकत्वनिराकरणेन । सता चेदित्यत्र परमात्मरूपेण तदन्येन वेति प्राग्विकल्पिताद्यपक्षो निरस्त इत्यर्थः । अत एव तत्र आद्ये वक्ष्याम इत्युक्तम् ।

विश्वसत्यतामनङ्गीकुर्वतां वादित्वाभावः—

**२६० सु०— 'मिथ्यात्वं यदी'त्यादिनोक्तं प्रसङ्गमुपसंहरति अनङ्गीकुर्वतामिति ।**

## अनु०— अनङ्गीकुर्वतां विश्वसत्यतां तन्न वादिता ॥

यस्मादेवं न मिथ्याभूतस्य साधकत्वं **तत्** तस्मात् **विश्वसत्यतामनङ्गीकुर्वताम्** आत्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वं प्रतिपादयतां 'नेहनाने'त्यादिवाक्यानामपि मिथ्यात्व-प्रसक्त्या **न वादिता** न साधकता स्यात् । 'तद्वाक्यस्ये'ति प्रकृतमेकवचनं समूहविषयमिति ज्ञापयितुमुपसंहारे बहुवचनम् ।

**परि०**— 'सता वा साध्यते त्वये'ति 'साधकत्वं सतस्तेने'ति चैकवचनेन प्रस्तावात्पुरुषपरत्वे बहुवचनायोगं मत्वा श्रुत्यादिवाक्यपरतया योजयति **यस्मादिति** ।

**कं०रा०**— विश्वसत्यतामनङ्गीकुर्वतामित्यस्य व्याख्यानमात्मातिरिक्तस्य सर्वस्यापि **मिथ्यात्वं प्रतिपादयतामिति** । न वादितेत्यस्य व्याख्यानं **न साधकतेति** । ननु मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्येत्युपक्रमे प्रकृतमेकवचनं त्यक्त्वाऽनङ्गीकुर्वतामित्युपसंहारे बहुवचनं किमर्थं प्रायोजीत्यत आह **तद्वाक्यस्येति** ।





**वा०चं०**— ननूत्तरभाष्ये उक्तमेवोच्यते । न चोपसंहारोऽयमविशेषस्येत्युक्तोपसंहाररूपत्वाप्रतीतेरित्यत आह **मिथ्यात्वमिति** । ननु सत्यताऽनङ्गीकारिणां वादित्वाभावस्य पूर्वमनभिहितत्वान्नायमुपसंहार इत्याशङ्कामुपसंहारत्वज्ञापकतच्छब्दपरामृष्टव्यं दर्शयन्नेव निराकरोति **यस्मादिति** ।

**वा॑टि॰र०**— **अविशेषस्येत्युक्तेति** । अविशेषस्य साध्यासाधकतेत्यव्यवहितप्रकृतप्रमेयोपसंहाररूपत्वेत्यर्थः । **परामर्शं दर्शयन्नेवेति** । तदुपदर्शने च वादिरूपार्थानङ्गीकारप्रतीतेः प्रकृतवाक्याङ्गीकारस्यैव प्रतीतेश्चेत्याशयः ।

कथाङ्गभूतप्रमाणादिकस्य सत्यता—

**२६१ सु०— अथवाऽतिप्रसङ्गान्तराभिधानमेतत् । तथा हि । यदि चैतन्यातिरिक्तं समस्तं मिथ्या स्यात्तदा समस्तान्तर्गतं कथाव्यवहाराङ्गभूतं प्रमाणादिकमपि मिथ्या स्यात् । तथाच विश्वसत्यतामनङ्गीकुर्वतः तन्मिथ्यात्वमङ्गीकुर्वतो मायावादिनो निरुपायस्य कथकता न स्यात् । कुतः । तत् तस्मादुक्तरीत्या मिथ्याभूतस्य साधनबाधनाङ्गताऽयोगादिति ॥ विश्वमिथ्यात्वमङ्गीकुर्वतामपि चार्वाकाणां बौद्धानां च वादित्वोपलंभाद् व्यभिचार इति चेन्न । तेषामप्यापादनविषयत्वात् । तदिदमुक्तम् अनङ्गीकुर्वतां चार्वाकबौद्धमायावादिनामिति । अन्यथा त्वया तेनेत्येकवचनस्य प्रस्तुतत्वादनङ्गीकुर्वत इत्यवक्ष्यत् ।**

**बिन्दुः— चार्वाकाणां बौद्धानां चेति** । चार्वाकमते हि निर्विकल्पकप्रत्यक्षमेव मानं सविकल्पकं भ्रम एव तथाच विशिष्टाकारस्य सर्वस्यापि भ्रान्तिविषयत्वेनासत्त्वाङ्गीकारात् तद्व्यवहारो न स्यात् ? । बौद्धस्य तु शून्यमेव तत्त्वं वदतः सर्वासत्त्ववादिनो मायावादिसोदरत्वं प्रसिद्धमेवेति । **तेषामप्यापादनेति** । ननु येन यः पदार्थो सन्नित्यङ्गीक्रियते तस्य तद्विषयकव्यवहाराभावापादनेनैव भवतामप्यसत्ख्यातिवादिनां शुक्तिरजतादिव्यवहारो न स्यात् । तथा चैवमापादने कथं न स्वव्याहतिरिति चेत् । भ्रान्तोऽसि । न हि वयमसद्विषयको व्यवहारो न स्यादित्यापादनं प्रतिपद्येमहि येनैवमुपालभ्येमहि किं नाम सर्वासत्त्ववादिनो मते शब्दादिप्रमाणस्य कथाङ्गभूतस्यासत्त्वात् । तदुच्चारणमेव न स्यात् । न हि वन्ध्यासुतवाक्यं केनाप्यनुवदितुं शक्यते । मन्मते तु शुक्तिरजतस्य मिथ्यात्वेऽपि शुक्तिरजतमिति शब्दस्य सत्यत्वेन तदुच्चारणे बाधकाभावात् ।





**परि०**— बहुवचनं वाद्यन्तराभिप्रायं मत्वा शब्दशक्तिस्वारस्यमनुरुद्ध्य पुरुषपरतया योजयति **अथवेति** ॥ **अतिप्रसङ्गान्तराभिधानमिति** । सर्वमिथ्यात्वपक्षे नेहनानेत्यादेर्मिथ्यात्वापातेनासाधक-त्वापत्तिरूपातिप्रसङ्गापेक्षया वादिनः कथाधिकाराभावरूपातिप्रसङ्गान्तराभिधानमित्यर्थः । 'मिथ्यात्वं यदि दुःखादेरि'त्याद्यर्धश्लोकं तावदनुवर्त्यार्थमाह **यदीति** । तद्वाक्यस्येत्येतत् प्रमाणादिकथाङ्गमात्रपरं मत्वा व्याचष्टे **कथाव्यवहाराङ्गभूतं प्रमाणादिकमिति** । आदिपदेन व्याप्तिदृष्टान्तादिप्रमाणाङ्गस्य हेत्वाभासादिनिग्रहस्थानादेश्च ग्रहः । ततश्च किमित्यतोऽनङ्गीकुर्वतामित्यर्धं योजयति **तथा चेति** ॥ बहुवचनकृत्यमग्रे विवरिष्यन्नेकवचनान्तत्वमुपेत्य फलितार्थमाह **तन्मिथ्यात्वमङ्गीकुर्वत इति** ॥ वादितेत्यस्यार्थः **कथकतेति** । कथाधिकारितेत्यर्थः । इतिशब्दस्यातिप्रसङ्गान्तराभिधानमेतदिति पूर्वेण अन्वयः । बहुवचनकृत्यं व्यनक्ति **विश्वेत्यादिना** ॥

**यादु०**— **कथाव्यवहाराङ्गभूतं प्रमाणादिकमपीति** । अत्रादिपदेन प्रमेयसंशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां सङ्ग्रहः । एवमग्रेऽपि ।

**वं०प०**— बहुवचनाभिप्रायं वक्तुमाह **विश्वमिथ्यात्वमिति** । **आपादनविषयत्वादिति** । न हि पक्षे पक्षतुल्ये वा व्यभिचार इति भावः । **अन्यथेति** । आपादनेऽपि प्रमाणबाधनस्य दूषणत्व इत्यर्थः ।

**कं०रा०**— **अन्यथेति** । चार्वाकबौद्धमायावादिनामापादनविषयतयाऽनभिप्रेतत्वे मायावादिन एव तद्विषयतयाऽभिप्रेतत्वेऽनङ्गीकुर्वत इत्येवावक्ष्यत् । न त्वनङ्गीकुर्वतामिति निर्देशं कुर्यादित्यर्थः । मायावादिन एवापादनविषयतयाऽभिप्रेतत्वेऽप्यनङ्गीकुर्वतामिति बहुवचनं युज्यते, व्यक्तिबाहुल्याभिप्रायेणेत्यत उक्तम् **त्वयेति** । 'सता वा साध्यते त्वया । साधकत्वं सतस्तेने'ति पूर्वत्र जात्येकवचनस्य प्रस्तुतत्वादत्रापि तदेव प्रयोक्तव्यं स्यादिति भावः ।

**वा०चं०**— अस्मिन्पक्षेऽनङ्गीकुर्वतां वादितेति पदयोः, बहुवचनस्य, तस्माद्व्यवहृतिः सर्वेत्युत्तरवाक्यस्य च स्वारस्याभावात्प्रकारान्तरेण तद्भाष्यं व्याख्याति **अथवेति** । अत्र विश्वसत्यतामनङ्गीकुर्वतामिति बीजकथनेनापादकं लब्धम् । यद्वाऽनेन विश्वशब्दस्यात्मातिरिक्तसर्वपरत्वम् । कथाव्यवहाराङ्गप्रमाणादिसर्वपरत्वं च । अनङ्गीकुर्वतां विश्वसत्यतामिति संपूर्णस्य चावृत्तिः । एवं चात्मातिरिक्तं सर्वं सत्यं यदि नाङ्गीक्रियेत मिथ्या स्यादिति यावत् । तर्हि कथाङ्गभूतं प्रमाणादिकमपि सत्यं नाङ्गीकर्तव्यं स्यात् । तदपि मिथ्या स्यादिति यावत् । यदि चैवं तर्हि कथकता न स्यादिति भाष्यं व्याख्यातं भवति । नन्वस्मिन्नपि पक्षे उपसंहारत्वज्ञापकतच्छब्दानुपपत्तिरित्यतो मिथ्याभूतस्यापि प्रमाणादेरेवोपायत्वान्न तदभाव इत्याशङ्कानिवर्तकपूर्वोक्तरीतिलब्धन्यायसमर्पकत्वान्न तच्छब्दा-





नुपपत्तिरित्याशयेनाह **कुत इत्यादिना** । अनेन यदि प्रमाणादीन्यसन्ति स्युस्तर्हि साधकानि न स्युस्तथाच तत्कार्यव्यवहारानुपपत्तिरिति मध्ये तर्कस्वरूपमभिप्रेतमिति सूचयति । अस्मिन्पक्षे बहुवचनस्वारस्यं दर्शयितुं तन्निवर्त्यशङ्कापूर्वकं तद्विषयमाह **विश्वेति** । बौद्धानां केषाञ्चिद्विश्वमिथ्यात्वाभ्युपगमः प्रसिद्ध एव । चार्वाकाणां चानुमानादेः प्रामाण्याभावेनातीन्द्रियस्यासत्त्वाद्गोलकमात्रस्य वस्तुतोऽप्रत्यक्षत्वेन तदतिरिक्तप्रत्यक्षस्य च साधकाभावेनाभावात्तत्सिद्धविश्वस्याप्यभाव इति विशेषद्योतनाय चार्वाकाणां बौद्धादीनामिति द्वन्द्वनिर्देशाभाव इति द्रष्टव्यम्।

**वा०र०— पदयोः** इत्यस्य **बहुवचनस्येत्यस्य** च स्वारस्याभावादित्युत्तरेण संबन्धः। **प्रकारान्तरेणेति**। अतिप्रसङ्गान्तरपरतयेत्यर्थः । तत्र चानङ्गीकुर्वतां वादितेत्यादेः स्वारस्योपपत्तेरित्याशयः । न वादिता स्यादिति भाष्ययोजनया तर्कपरत्वप्रतीत्युपपत्तावपि तत्रापादकानुक्तेः कथं तर्कपरतया भाष्ययोजनेत्यत आह **अत्रेति**। भाष्य इत्यर्थः। बीजकथनेन। कथाव्यवहाराङ्गप्रमाणादिमिथ्यात्वरूपापादकं प्रति बीजभूतप्रपञ्चमिथ्यात्वकथनेनेत्यर्थः। आपादकलाभे विश्वशब्दस्य कथाव्यवहाराङ्गप्रमाणपरतया तर्हि कथाङ्गभूतप्रमाणादिकमित्यादिरूपं भाष्यव्याख्यानं तु यद्वेत्युत्तरयोजनायामिव समानमिति भाव इत्याहुः । वस्तुतस्तु अथवेतीत्यनन्तरमनेनात्र विश्वसत्यतामित्यादिरेव पाठः। यद्वा विश्वशब्दस्येत्येव पाठश्च। मूलकोशानुसारात्। तथा च संपूर्णैकैव योजनेति ज्ञेयम्। आपादकस्यापि भाष्यादेव लाभसंभवे किमिति बहिर्लभकल्पनाश्रयणमिति मनसि कृत्वाह **यद्वेति** । विश्वसत्यतामनङ्गीकुर्वता-मित्येतदापादकसमर्पकं यथा स्यात्तथा योजयति **एवं चात्मेति**। **अस्मिन्नपि पक्ष इति**। पूर्वयोजनायामनङ्गीकुर्वतां वादितेत्यादेरस्वारस्यभयाद्योजनान्तरं प्रवर्तितं न तद्युक्तम् । पूर्वत्रेवात्राप्यनुपपत्तिसद्भावात्सा चोपसंहारत्वेत्यादि-रीत्येवमनुपपत्तिमात्रसमुच्चयार्थोऽपि शब्द इति बोध्यम्। **तद्विषयमिति**। बहुवचनविषयमित्यर्थः। कथं बौद्धादीनां मिथ्यात्ववादित्वमित्यतस्तदुपादयति **बौद्धानामिति** । **केषाञ्चिदिति** । माध्यमिकानामित्यर्थः। **असत्त्वादिति** । ननु तावतातीन्द्रियार्थमिथ्यात्वाङ्गीकारः सिद्धः । प्रत्यक्षसिद्धस्य तु सत्यत्वं तेनाङ्गीकृतमिति न सर्वमिथ्यात्व-वादितेत्यत आह **गोलकमात्रस्येति** । परेण तथात्वाङ्गीकारादुक्तं **वस्तुत इति** । गोलकमात्रवति विगतलोचना-दावन्धादौ चक्षुष्मानित्यादिव्यवहाराभावादिति भावः। **साधकाभावेनेति**। रूपादिज्ञानानुमानस्य तेन वक्तुमशक्य-त्वादित्यर्थः। **इति द्वन्द्वेति** । इति भिन्नवचननिर्देशं कुर्वता द्वन्द्वनिर्देशो नाश्रित इति योज्यम् । तन्निर्देशे हि चार्वाकबौद्धानामिति वा बौद्धचार्वाकाणामिति वा प्रसज्यत इति भावः।

**विठ्ठ०—** प्रमाणादिकमपीत्यादिशब्देन प्रमेयसंशयप्रयोजनदृष्टान्तादीनां कथाङ्गभूतानां ग्रहणम् । **चार्वाकाणामिति**। तैरप्यतीन्द्रियस्य सर्वस्यापि मिथ्यात्वाङ्गीकारादिति भावः।

**चषकः— प्रमाणादिकमपीति**। आदिपदेन गौतमसूत्रोक्तनिग्रहस्थानानां ग्रहः।

**२६२ सु०—** तथाऽपि प्रमाणबाधः । चार्वाकादीनां वादित्वस्य प्रत्यक्षादिसिद्धत्वात् । मैवम् । वादित्वाभावस्यात्रापाद्यमानत्वात् । साधनस्य हि प्रमाणबाधो दूषणम् । न त्वापादनस्य । तस्यानिष्टविषयत्वात् । अनिष्टस्य च प्रामाणिकपरित्यागाप्रामाणिकस्वीकाररूपत्वात् । अन्यथाऽतिप्रसङ्गमात्रोच्छेदप्रसङ्गादित्याशयवानुक्तस्य प्रसङ्गत्वं स्फुटीकर्तुं विपर्ययपर्यवसानमाह **तस्मादिति** ।

## **अनु०—** तस्माद् व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता ॥

यस्मादस्ति परस्य वादित्वाभिमानः **तस्मात्** । अन्यथा युष्मदस्मदित्यादिपूर्वोत्तरपक्षबलाबलचिन्ता न स्यात् । व्यवह्रियतेऽनयेति **व्यवहृतिः** । कथाङ्गभूतप्रमाणादीति यावत् । प्रमाणादीनां कथाव्यवहारकारणत्वात्कारणाभावे च कार्याभावस्य सुलभत्वात्सुस्थोऽतिप्रसङ्गमूलभूतः प्रतिबन्ध इति ज्ञापयितुं प्रमाणादीति रूढपदपरित्यागेन **व्यवहृतिरिति** यौगिकपदोपादानम् ।

**बिन्दुः—** तदिदं वक्ष्यति **प्रमाणादीनां कथाव्यवहारकारणत्वादिति** । यद्यपि चक्षुरादिप्रत्यक्षप्रमाणस्य धूमादेरनुमानस्य चासत्त्वेऽपि तद्व्यवहारे बाधकं नास्ति । शब्दाभिलापरूपव्यवहारं प्रत्यर्थस्याकारणत्वात् । अन्यथा अतीतानागतयोः शशशृङ्गादेश्च व्यवहारो न स्यात् । तथापि कथायां परं प्रति उपन्यस्तं प्रत्यक्षेण प्रत्यक्षविधया प्रमाणं किन्तु भूतलं घटवत् तदवगाहिप्रत्यक्षसिद्धत्वादित्यादिप्रकारेण परं प्रत्युपन्यसनीयम् । तथाच परं प्रति तदनुविधयैव प्रमाणम् । अनुमानं चार्थरूपं प्रति नोच्चारणार्हं किन्तु तत्प्रतिपत्तिजनकं पञ्चावयवादिन्यायवाक्यमेव प्रयोक्तव्यं तत्पुनः शब्दप्रमाणसमकक्ष्यं संपन्नमिति सर्वासत्त्ववादिना शब्दासत्त्वस्याप्यङ्गीकृततया तद्व्यवहर्तृता न स्यात् । किञ्च परार्थानुमानस्थलेऽपि स्वयं प्रत्यक्षेणानुमानेन वाऽर्थं प्रतीत्य परबोधनार्थं न्यायवाक्यं प्रयोक्तव्यं व्यवहारस्य व्यवहर्तव्यधीसाध्यत्वात् । साध्यसाधनभावस्य च करणसत्तासापेक्षत्वात् । सर्वासत्त्ववादिमते च प्रत्यक्षानुमानादेरप्यसत्त्वेन तस्मात्स्वार्थबोधो न स्यात् तदभावे च तज्जन्यः परं प्रति शब्दप्रयोगो न स्यादिति कुत्राप्यर्थे परस्य वादिता न स्यात् । अपि तु केवलं जडवत् दृढीभावापत्त्या प्रवृत्तिनिवृत्त्यादिविलोपश्च स्यादिति भावः ।





**परि०— नत्वापादनस्येति** । 'प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषका' इति सन्ध्ये सृष्टिरित्यधिकरणानुव्याख्याने तथा विवरिष्यमाणत्वादिति भावः । युष्मदस्मदित्यादि परभाष्योपक्रमानुवादः । **चिन्तेति** । परस्येत्यनुषङ्गः ॥ **व्यवह्रियतेऽनयेति** । 'अकर्तरि च कारके संज्ञाया'मित्यनुवृत्तौ 'स्त्रियां क्तिनि'ति विधानात्करणे क्तिन्प्रत्ययः । प्रमाणादीत्येव कुतो नोक्तमित्यत आह **प्रमाणादीनामिति** । प्रतिबन्धः व्याप्तिः । पूर्वार्धोक्तातिप्रसङ्गमूलभूतेत्यर्थः । **व्यवहारेति** । प्रमाणादिविषय इत्यर्थः ॥

**वं०प०— अतिप्रसङ्गेनेति** । यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्यादितर्केऽपि प्रमाणबाधसद्भावादिति भावः । **प्रमाणादीति** । रूढपदपरित्यागेन व्यवहृतिरिति व्यवहारकारणत्वार्थकयौगिकपदेन प्रमाणाद्युपादाने निमित्तमाह **प्रमाणादीनामिति** । अस्तु प्रमाणादीनां सत्त्वं तद्विषयस्य सत्त्वं मास्त्विति शङ्कापरिहाराय दुःखादीतिरूढपदपरित्यागेन व्यावहारिकमिति व्यवहारविषयत्वार्थकयौगिकपदोपादानं कृतमित्यर्थः ।

**वा०चं०**— ननु तस्मादित्युत्तरवाक्येऽस्यापादनत्वस्पष्टनमयुक्तं साधनत्वस्याप्युपपत्तेः । न च साधनत्वे प्रमाणबाधात्तत्परित्याग इति वाच्यम् । प्रमाणबाधस्य विशेषाभावेन साधन इवापादनेऽपि साम्येन वृथा पक्षपातस्यायुक्तत्वादित्यतो विशेषमुपपादयन् भाष्यमवतारयति **तथापीति** । वस्तुतः साधनशून्ये मायिनि वादित्वस्य ममाप्यसंमतेः । परेणापि स्वस्मिन्वास्तववादित्वानभ्युपगमाद्विपर्ययपर्यवसानेऽसिद्धिं परिहर्तुं वादित्वाभिमान इत्युक्तम् ।

**वा०र०— विशेषमुपपादयन्निति** । प्रमाणबाधस्योभयत्राविशेषेऽपि साधन एव दूषणत्वं न त्वापादन इति विशेषमित्यर्थः । परेण स्वस्मिन् वादित्वाङ्गीकारेऽपि सर्वमिथ्यात्वं वदता वास्तववादित्वानङ्गीकारेण वादित्वाभाव एवेत्याह **परेणापीति** । **पूर्वोत्तरेति** । पूर्वपक्षे बलाभावः । उत्तरपक्षे तु बलमस्तीत्येवं बलाबलविचारकरणमयुक्तं स्यादित्यर्थः । ननु विपर्ययपर्यवसानदशायामापादनानुसारेण कथकत्वाभिमानस्त्वतः प्रमाणादिसत्यमित्येवं वाच्यम् । व्यवहृतिः सत्येति कथमुक्तमित्यतो व्यवहृतिपदं प्रमाणादिपरतया व्याचष्टे **व्यवह्रियत इति** मूलम् । तथा चायं करणसाधन एवाभिमतो न भावसाधन इति प्रमाणसत्यत्वस्यैवोपसंहारलाभान्नानुपपत्तिरिति भावः । तथापि रूढप्रमाणादिपदपरित्यागेन यौगिकव्यवहृतिपदोपादाने किं निमित्तमित्यत आह **प्रमाणादीनामिति** । **प्रतिबन्धो** व्याप्तिः ।

**स०व्र०— चार्वाकाणामिति** । प्रात्यक्षिकविश्वसत्यत्वाभ्युपगमेऽपि अतीन्द्रियविश्वमिथ्यात्वाङ्गीकाराद्वा अनुमानादिना प्रामाण्यस्य ग्राह्यत्वात्तस्याप्रामाण्ये प्रत्यक्षप्रामाण्यग्राहकाभावेन तदसिद्ध्या ऐन्द्रियकविश्वसत्यत्वमपि न सिद्ध्येदित्यभिप्रायेण वा इदं बोध्यम् ।

व्यवहारविषयस्य दुःखादेः सत्यता—

२६३ **सु०—** अस्तु कथाङ्गभूतप्रमाणादिव्यवहारस्य सत्यता, दुःखादिबन्धस्य तु किमायातमित्यत आह **व्यावहारिकमिति** ।

**अनु०—** व्यावहारिकमेतस्मात्सत्यमित्येव चागतम् ।

**एतस्मात्** प्रमाणादिव्यवहारस्य सत्यत्वाद् **व्यावहारिकं** व्यवहारविषयो दुःखादि । **चशब्दो न केवलं व्यवहारो व्यावहारिकं चेति संबध्यते । 'न हि प्रमेयं नास्त्यस्ति च प्रमाणमिति** संभवति व्याघातादि'त्यर्थप्रतिपादनाय **व्यावहारिकम्** इत्युक्तम् ।

**बिन्दुः—** अत एव वक्ष्यति **न केवलं व्यवहारो व्यावहारिकं चेति** । उपपादयिष्यति च **न हि प्रमेयं नास्ति प्रमाणं चास्तीत्यादिना** ।

**परि०—** **इत्युक्तमिति** । अन्यथा प्रामाणिकमित्यवक्ष्यदिति भावः ।

**गु०दी०—** एतस्माद्दुःखादिकमेव सत्यमित्येवोक्ते कुतो हेतोरिति शङ्कायां तस्य तद्विषयत्वादिति वाक्यान्तरमध्याहृत्य योजनीयम् । व्यावहारिकपदेनैव दुःखादेर्ग्रहणे तेनैव पदेन तस्य तद्विषयताऽपि लभ्यते । न तु तदर्थमपि वाक्यान्तरमपेक्षितमिति भावेनाह **न हीति** ।

**वं०प०—** **न हीति** । **व्याघातादिति** । पदार्थप्रमितिकरणस्यैव प्रमाणत्वादिति भावः ।

**कं०रा०—** **व्याघातादिति** । प्रमेयाभावे तत्सत्ताघटितप्रामाण्यायोगेन प्रमेयं नास्ति प्रमाणमस्तीत्यस्य व्याहतत्वादिति भावः ।

**श्रीनिधि०—** अतिप्रसङ्गान्तराभिधानमिति नेह नानेति वाक्यस्य सर्वमिवोक्ते कुतो हेतोरिति शङ्कायां तस्य तद्विषयत्वादिति वाक्यान्तरमध्याहृत्य योजनीयम् । व्यावहारिकपदेनैव दुःखादेर्ग्रहणे तेनैव पदेन तस्य तद्विषयताया अपि सिद्धेः न तु तदर्थं वाक्यान्तरमपेक्षितमिति भावेनाह **न हीति** । **दुःखादिबन्धस्य त्विति** । सत्यत्व इति शेषः ।





॥ प्रमाणादिव्यवहारस्य सत्यत्वे पूर्वपक्षः ॥

**२६४ सु०— यदत्रोक्तम् । प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन तत्कस्य हेतोः । किं वाग्व्यवहारस्य प्रमाणादिसत्ताऽभ्युपगमव्याप्तत्वेन तदभावे प्रवर्तयितुमशक्यत्वात् । अथ कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावात् । उत लोकसिद्धत्वात् । अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसङ्गकत्वात् ।**

**बिन्दुः— सत्ताऽभ्युपगमव्याप्तत्वेनेति** । विमतो व्यवहारः प्रमाणसत्ताभ्युपगमवत्कर्तृकः तथाविधव्यवहारत्वात् । विमतो व्यवहर्ता वा प्रमाणादिसत्ताऽभ्युपगमवान् व्यवहर्तृत्वादिति । अप्रयोजकत्वशङ्कानिरासाय विपक्षे बाधकं प्रष्टुमाह **तदभावे इति** । व्यापकनिवृत्तौ व्याप्यनिवृत्ते-रावश्यकत्वात् रसव्यापकरूपव्यावृत्त्या वायौ रसव्यावृत्त्युपलम्भादिति भावः । बाधकान्तरं पृच्छति **अथेति** । रूपरसादिवन्न केवलमनयोः व्याप्तिमात्रं किन्तु कार्यकारणभावोऽप्यभिप्रेतोऽस्ति इति वा वह्न्यभावाद्धूमाभाव इवापाद्यत इति प्रश्नार्थः । बाधकान्तरं च प्रष्टुमाह **लोकसिद्धत्वादिति** । तथाच लौकिकव्यवहार एव तथाविधो विरुध्येतेति भावः । **अथवेति** । कथा हि वादजल्पवितण्डाभेदेन त्रिविधा तत्र वादस्य फलं तत्त्वनिर्णयः इतरयोर्विजयः । स च साधनबाधनापत्त्या संभवति । शिष्यसखि-सब्रह्मचारिणो हि प्रमाणैर्बोधितास्तत्त्वं व्यवस्यन्ति । प्रतिवादिनो हि दूषणैः निगृहीताः पराजयन्त इति । तत्र च शिष्येण साधनसत्तानभ्युपगन्त्रा गुरूपन्यस्तप्रमाणमनभ्युपगम्य प्रमाणाभावान्न मम तत्त्वबोधो भवतीति गुर्वादौ पर्यनुयुक्ते तत्त्वनिर्णयः कुत्रापि न स्यात् । दूषणसत्तानभ्युपगन्त्रा पराजितेनापि प्रतिवादिनापि मया दूषणसत्ताया अनभ्युपगमान्न मम पराजयः किन्तु स्वपक्षसाधनपरपक्षदूषणानि यावन्ति त्वयोपन्यस्तानि तेषां सत्ताया मया अनभ्युपगतत्वेन मदाक्षिप्तप्रमेयांशे तव तूर्णीभावेन तवैव पराजयो मम तु विजय एव मदुपन्यस्तानां सत्तायाः सद्वादिना त्वयाऽभ्युपगतत्वादिति विजयोऽप्यति-प्रसज्येतेति भावः । **तत्त्वनिर्णयविजयातिप्रसङ्गकत्वादिति** । तत्त्वनिर्णयस्याभावः । विजयस्याति-प्रसङ्गः स्यादित्यर्थः । (सृष्टीरुपदधाति छत्रिणो गच्छन्तीतिवच्चेति । ... गसमवायेनेयमुक्तिः)

**परि०—** अनङ्गीकुर्वतामित्यत्र द्वितीययोजनायामुक्ततर्के परोक्तबाधकमनुवदति **यदत्रे**त्यादिना **तदेतत्सर्वमनेनापहसितमि**त्यन्तेन । अत्र विश्वसत्यतामनङ्गीकुर्वतां कथकता न स्यादित्युक्तप्रसङ्गे यद्बाधकमुक्तं तदपहसितमिति दूरेणान्वयः । हेतुभावाद्धेतुत्वादित्यर्थः । **लोकसिद्धत्वादिति** । प्रमाणादिसत्त्वस्य लोकव्यवहारसिद्धत्वादित्यर्थः । **तदिति** । प्रमाणसत्त्वानभ्युपगमस्येत्यर्थः । प्रमाणहीनस्यापि तत्त्वनिर्णयेऽतिप्रसङ्गादिति भावः ।





**यादु०**— प्रमाणादिसत्ताऽभ्युपगमस्य कथाऽङ्गत्वे मानाभावात्प्रमाणाद्याकार एव प्रयोजकोऽतोऽसद्वादिनोऽपि कथाधिकारः किमुतानिर्वचनीयवादिन इत्यभिप्रेत्य यत्केनचिदुक्तं तदनूद्य दूषयति **यदत्रोक्तमित्यादिना** । कथकेनेत्येकवचनं वैतण्डिकाभिप्रायेण । तदितरस्य प्रमाणादिसत्ताऽभ्युपगमसिद्धेः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मरणात् कस्य हेतोः कस्माद्धेतोरित्युक्तानेव विकल्पान्विशदयति **किमित्यादिना** । अशक्यत्वात्तत्सत्ताऽभ्युपगम इति शेषः । रसो रूपमविनाभावबलेनैव गमयति न कार्यकारणभावः तत्र मूलं, एवं कथकवाग्व्यवहारोऽपि प्रमाणादिसत्ताऽभ्युपगमाविनाभूत इत्येव तं गमयति । न कारणकार्यत्वेनेति प्रथमविकल्पार्थः । यथा ज्ञानलक्षणं कार्यं स्वकारणं कल्पयति तथा वाग्व्यवहारोऽपि कार्यतया स्वकारणं प्रमाणादिसत्ताऽभ्युपगमं गमयतीति द्वितीयविकल्पार्थः । यद्यपि कार्यमप्यविनाभावेनैव गमयति । तथापि स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमात्पृथगुपन्यासः । लोकशब्देन लोकव्यवहार उच्यते । तथा च यथा घटादिकं लोकव्यवहारसिद्धमङ्गीकार्यं तथा प्रमाणादिसत्ताऽपीति तृतीयविकल्पार्थः । प्रमाणादिसत्तामनभ्युपगच्छतोऽपि कथकस्य यदि वादजल्पफलयोस्तत्त्वनिर्णयजययोः सिद्धिस्तदोन्मत्तस्यापि तत्सिद्धिः स्यादिति प्रमाणादिसत्तामनभ्युपगमस्य फलातिप्रसङ्गहेतुत्वात्तत्सत्ताऽभ्युपगन्तव्येति चतुर्थविकल्पार्थः ।

**वं०प०**— **तदभावेनेति** । प्रमाणादिसत्ताभ्युपगमाभावेनेत्यर्थः ।

**श्रीनिधि०**— **यदत्रोक्तमिति** । यच्छब्दस्य तदपहस्तितमित्युत्तरत्र संबन्धः । **किमिति** । साधकमिति शेषः ।

**वा०चं०**— अत्र भाष्यकारेण प्रसङ्गत्वसूचनेन सूचितपरिहारं खण्डनोक्तदूषणाभासं निराकर्तुमनुवदति **यदत्रेति** । तत्सत्ताऽभ्युपगमस्य कथाङ्गत्वे मानाभावात्प्रमाणाद्याकार एव प्रयोजकोऽतोऽसद्वादिनोऽपि कथाधिकारः किमुतानिर्वचनीयवादिन इत्याशयः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मरणात्क स्येति षष्ठी । प्रवर्तयितुमशक्यत्वादनुपपन्नत्वादित्यादीनामनुषक्तेनाभ्युपेयमित्यनेन संबन्धः । कार्यस्याप्यविनाभावेन गमकत्वेऽपि स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमाद्रूपरसादिवत्स्वभावलिङ्गकमनुमानं विकल्प्य कार्यलिङ्गकं विकल्पयति **अथेति** । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इत्यादौ लोकशब्दस्य तद्व्यवहारे प्रयोगाल्लोकसिद्धत्वं प्राणिनिकायेन व्यवह्रियमाणत्वमिति तृतीयं विकल्पयति **उतेति** । प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतो वादजल्पादिफलतत्त्वनिर्णयजयाद्युपपत्तावुन्मत्तादेरपि तत्स्यादिति तत्सत्ताऽनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति चतुर्थं विकल्पयति **अथवेति** ।

**वा०र०**— **प्रसङ्गत्वसूचनेनेति** । विपर्यये पर्यवसानकथनमुखेन तत्सूचनेनेत्यर्थः । सूचितः परिहारो यस्येति बहुव्रीहिः । सत्ताऽभ्युपगस्य कथाङ्गत्व इत्यादि विद्यासागर्यनुसारेण खण्डनग्रन्थभावमाह **तत्सत्ताऽभ्युपगमस्येति** । सत्तेत्येव तत्रोक्तावपि तदिति पूरणं साकाङ्क्षतापरिहाराय । **आकार एवेति** । न तु

तत्सत्तापीत्येवकारार्थः । एतदाक्षेपकर्तुरनिर्वचनीयवादितया वस्तुतोऽसत्त्वाङ्गीकारायोगात्सत्त्वाभावेऽपि साधकता युक्तेत्येतत्प्रमेयप्रतिपादनव्याजेनापाततः साधकत्वाङ्गीकरणमयुक्तमित्यतस्तदभिप्रायकथनमतोऽसद्वादिनोऽपी-त्यादि । कथकेनेत्येकवचनं खण्डनिकाभिप्रायेण । तदितरस्य प्रमाणादिसत्ताऽभ्युपगमसिद्धेरिति शङ्करभट्टोक्तेः । सोऽयमपूर्व इत्युत्तरखण्डनव्याख्यानावसरेऽत्र योऽत्र खण्डनवादिनो मुख्या इति दर्शयतीति विद्यासागर्युक्तेश्च चार्वाक-बौद्धमायावादिनामिति पूर्वमूलोक्तचार्वाकबौद्धमायावाद्याख्यास्त्रयः खाण्डनिकाः । तर्कसमुदायविवक्षया कथकेने-त्येकवचनं मूले । न तु व्यक्त्यैक्याभिप्रायेण । वस्तुतस्तु यद्वा कथकेनेत्यस्य कथकाभ्यामित्येवार्थः । सत्ताभ्युपगमं खण्डयता स्वपरसाधारण्येनैव खण्डनस्यावश्यकत्वात् । वस्तुतस्तु सत्तानङ्गीकारिणं प्रत्येवास्य ग्रन्थस्य प्रवृत्त्या कथकपदेन यो नाङ्गीकरोति सत्तां तद्ग्रहणस्यैव प्राप्तेरित्यवधेयम् । कथायां च न वैतण्डिकस्य प्रवेश इति पूर्वत्र शङ्करभट्टोक्तेः खाण्डनिकपदं वैतण्डिकार्थतयोपादाय शङ्करभट्टवाक्यानुवादमात्रमन्यथाख्यातौ कृतम् । तदज्ञानमूलमिति स्पष्टमेव । न ह्येतत्कथायां स्वपक्षसाधनाद्यभावः । तत्त्वनिर्णयादिफलकत्वाङ्गीकारस्योत्तरखण्डनानुवादमूलात्प्रतीतेः । प्रमाणादिसत्त्वासत्त्वौदासीन्येनेत्यनुसारेण खण्डनवादिनोऽपि प्रमाणाद्यभ्युपगमावगतेश्च । वैतण्डिकस्य प्रमाणादि-सत्त्वचिन्तायास्तत्त्वनिर्णयस्य चाप्रसक्तेः । **कात्यायनेति** । भाष्यकारोक्तरीत्या हेताविति सूत्रे सर्वनाम्नस्तृतीया चेति सूत्रे च वृत्तिरीत्या स्मरणादित्यर्थः । **षष्ठीति** । कस्मादिति पञ्चम्यर्थ इति शेषः । यतो यत्कारणमित्येतत्संबधि-टीकाव्याख्यावसरे विवृतमेतत् । अशक्यत्वादित्यनूद्यानुपपन्नत्वादिति व्याकुर्वन्नेव साकाङ्क्षतया तदादिहेतूनां पूर्वसंबन्धं च दर्शयति **प्रवर्तयितुमशक्यत्वादिति** । **अभ्युपेयमित्यनेनेति** । एतेनाशक्यत्वादित्यनन्तरं सत्ताऽभ्युपगम इति शेषपूरणं विद्यासागरकृतमसदिति सूचितम् । अथ तत्र पुस्तकान्तरे सत्तानभ्युपगम इति नञ्गर्भः पाठः तदापि वाग्व्यवहारस्येत्यनन्तरं सप्तम्यन्तस्य तस्य पूरणीयत्वेऽपि अशक्यत्वादित्यनूद्य शेषपूरणायोगः । अशक्यत्वस्य सत्तानभ्युपगमविरुद्धत्वात् । प्रवर्तयितुमशक्यत्वादित्यतः प्रागेव शेष इत्यभिप्राये च स्वायत्तन्याय-विरोध इति सूचितम् । यदप्यन्याथाख्यातौ प्रमाणादिसत्ताऽभ्युपगम इति शेषपूरणम् । तदपि विद्यासागरीपुस्तकान्तर-गतानुपपन्नपाठमूलकमित्युपेक्ष्यम् । तत्पुस्तकान्तरगतनञ्युक्तपाठवन्ममापि तथा पाठ एव संमत इति चेद्धन्त तर्हि तवापि अशक्यत्वादित्यनूद्य शेषपूरणाद्ययोग इत्यादि दूषणं समानम् । किञ्च वाग्व्यवहारस्य प्रवर्तयितु-मशक्यत्वादित्येव खण्डनपाठात्प्रमाणादिसत्ताऽभ्युपगमव्याप्तस्य तदभ्युपगमाभावे प्रवर्तयितुमशक्यत्वादि-त्येतावदर्थसमर्पणायात्र मूले तदभाव इत्यस्येव खण्डनग्रन्थेऽपि सत्तानभ्युपगम इत्यस्यावश्यकतया शेषत्वेन संपूरणस्य तट्टीकाकृता कर्तव्यत्वेऽपीह मूले तत्समर्पकतदभाव इत्यस्यैव सत्त्वेन पुनस्सत्तानभ्युपगम इत्यस्य वैयर्थ्यापातेन शेषपूरणस्याकर्तव्यत्वम् । अशक्यत्वादित्यादेरन्वयप्रदर्शनाभावायोगश्च टीकाकारं मन्यस्येत्यलम् । अधिकं वाक्यार्थविनोदे द्रष्टव्यम् ।

अथ कथकप्रवर्तनीयेति द्वितीये हेतुभावः । प्रमाणादिसत्ताभ्युपगमस्येति विवक्षितम् । वक्ष्यति चैतत् दूषणावसरे न तत्सत्ताऽभ्युपगमस्य कारणतेति । अत एव शङ्करभट्टेन तथैवोक्तम् । ननु तथापि यत्कार्येण कारणानुमानं द्वितीयविकल्पतयाऽभिधीयते । तदयुक्तम् । अविनाभावस्य कार्यकारणयोरपि सत्त्वेन व्याप्तिबलेन व्यवहाराप्रमाणसत्ताभ्युपगमं साधयतीति प्रथमकल्प एव प्रमाणादिसत्ताभ्युपगमस्य व्यवहारं प्रति हेतुत्वात् कार्येण





व्यवहारेण कारणस्य प्रमाणादिसत्ताभ्युपगमस्यानुमानमित्येतत् । द्वितीयपक्षस्यान्तर्भूतत्वेन पार्थक्यायोगादित्यतः पार्थक्यमुपपादयन्नुत्तरकल्पमवतारयति **कार्यस्यापीति** । कार्यलिङ्गकस्य पृथगुपादानात् स्वाभावपदेनाकार्यकारणानुमानमुक्तम् । रूपरसादौ कार्यकारणभावाभावेऽपि रसस्य रूपानुमापकत्वं रूपस्य च स्पर्शानुमापकत्वं व्यापकाभावे व्याप्यायोगेनाविनाभावबलेनाङ्गीकृतमतस्तदनुसारेण प्रकृते विद्यमानस्यापि कार्यकारणभावस्याविवक्षया केवलमविनाभावबलमात्रमाश्रित्य प्रथमं कल्पमुक्त्वा यथा ज्ञानं कार्यतया कारणं कल्पयति तथा व्यवहारोऽपि कार्य सन् स्वकारणं प्रमाणादिसत्ताऽभ्युपगमं कल्पयतीति द्वितीयकल्पमाहेत्यर्थः । स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमादिति । स्वभावानुपलब्धिकार्येत्यत्र तथोक्तत्वादित्यर्थः । पद्धत्यादौ कार्यादिभेदेन त्रिविधानुमानवर्णनं तन्मूलकमपीति ज्ञेयम् । **इति तृतीयमिति** । पञ्चम्यर्थव्याख्यानस्याभावात् व्याख्येयप्रातिपदिकार्थमात्रवचनम् । क्वचिद्विशिष्टानुवादोऽपि मूलानुसारेणेत्यदोषः । उत साधनबाधनक्षम इति मूले साधनक्षमत्वं स्वपक्षप्रमितिजनकत्वं बाधनक्षमत्वं तु परपक्षप्रतिषेधप्रमितिजनकत्वमिति ज्ञेयम् ।

**स०व्र०— यदत्रोक्तमिति** । यच्छब्दस्य तत्सर्वमित्युत्तरत्र संबन्धः । कथकेनेत्येकवचनं वैतण्डिकाभिप्रायेण । तदितरस्य प्रमाणादिसत्ताभ्युपगमसिद्धेः । **तत्कस्य हेतोरिति** । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनवचनात् कस्माद्धेतोरित्यर्थः । तत्र किं प्रमाणमिति यावत् । **हेतुभावादिति** । हेतुत्वादित्यर्थः । यद्यपि कार्यमविनाभावेन गमकं तथापि स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमात् पृथगुपन्यासः । **लोकसिद्धत्वादिति** । लोकशब्देन लोकव्यवहार उच्यते, तत्सिद्धत्वं प्राणिनिकायेन व्यवह्रियमाणत्वम् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इत्यादौ लोकशब्दस्य व्यवहारे प्रयोगदर्शनादित्यर्थः । **अथवेति** । प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतो वादफलस्य तत्त्वनिर्णयस्य जल्पादिफलस्य विजयस्य चोपपत्तौ उन्मत्तारब्धकथाया अपि तत् स्यादिति तदनभ्युपगमस्य फलातिप्रसङ्गहेतुत्वादित्यर्थः ।

**वि०ठ०—** कथाव्यवहाराङ्गभूतप्रमाणादिसत्ताभ्युपगमपूर्वकत्वमुक्तं कथकवाग्व्यवहारस्य तदयुक्तं प्रमाणादिसत्ताभ्युपगमस्य कथाङ्गत्वे मानाभावात् प्रमाणाद्यङ्गीकारस्यैव प्रयोजकत्वात् अतोऽसत्त्ववादिनामपि कथाधिकारः किमुतानिर्वचनीयवादिनामित्यभिप्रेत्य यत्परेण स्वग्रन्थे उक्तं तदनूद्य दूषयति **यदत्रोक्तमित्यादिना** । यच्छब्दस्य तदनेनापहस्तितं वेदितव्यमिति संबन्धः । प्रमाणादीनां सत्त्वमभ्युपेयमिति यत् तत्कस्माद्धेतोरङ्गीकार्यमित्यर्थः । कथकप्रवर्तनीयवाग्व्यवहारस्य प्रमाणादिसत्ताभ्युपगमव्याप्यत्वेन व्यापकीभूतप्रमाणादिसत्ताभ्युपगमाभावे तद्व्याप्यस्य वाग्व्यवहारस्य प्रवर्तयितुमशक्यत्वात् प्रमाणादिसत्ताभ्युपगम आवश्यक इत्युच्यते इति प्रथमविकल्पार्थः । प्रमाणादिसत्ताभ्युपगमस्य कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुत्वात् कारणानभ्युपगमे कार्यस्याप्यभावापत्तेः कार्यभूतो व्यवहारः स्वकारणं प्रमाणादिसत्ताभ्युपगमं गमयतीति द्वितीयविकल्पाभिप्रायः । यद्यपि कार्यमपि अविनाभावेनैव कारणगमकं तथापि पूर्वविकल्पे कार्यकारणभावमविवक्षित्वा रूपाद्रसानुमानवत् व्याप्तिमात्रमाश्रित्योक्तं इह तु तद्विवक्षयेति भेदः । प्रमाणादिसत्ताभ्युपगमस्य लोकव्यवहारसिद्धत्वात् तदभ्युपगमः कार्य इति तृतीयविकल्पार्थः । प्रमाणादिसत्ताभ्युपगमे वादकथायाः तत्त्वनिर्णयरूप-





फलसिद्धिः स्यात् जल्पादौ विजयसिद्धिः स्यात् अन्यथा उन्मत्तवाग्व्यवहारेणापि तत्त्वनिर्णयादिसिद्धिः स्यादिति तत्त्वनिर्णयविजयातिप्रसङ्गहेतुत्वात् प्रमाणादिसत्ता अभ्युपगमनीयेति चतुर्थविकल्पाशयः ।

**चषव**:— प्रमाणादीनामेव कथौपयिकतोपेयते न तत्सत्यतोरीकृतेरिति कथायां प्रमाणादीनामसत्तामूरीकुर्वाणा अपि यदाऽधिक्रियन्ते तदा किमुतानिर्वनचीयतामुपगच्छन्त इत्यभिसन्दधतः खण्डनकारस्य दूषणाभासान् प्रत्याचिख्यासुरनुवदति **यदत्रोक्तमित्यादिना** । न वादितेत्यनुपपन्नमितीत्यन्तेन । **कस्य हेतोः** कस्माद्धेतोः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मृतेः । सत्तायां जातिनिरूपिताऽविनाभावबलेन यथा तदनुमापकता तद्वत्कथकवाग्व्यवहारस्य प्रमाणादिसत्तोपगतिनिरूपितव्याप्यतापन्नतया तदनुमापकतेति, धूमं प्रति वह्नेर्हेतुत्वात् तस्य तदनुमापकतेव प्रकृतेऽपि तं प्रति तस्या हेतुत्वात्तस्य तदनुमापकतेति, यथा स्तम्भादिकं लौकिकव्यवहारविषयीभूतमुपगन्तव्यं तथा प्रमाणादिसत्ताऽपीति, वादजल्पकथाफलीभूततत्त्वनिर्णयविजयौ प्रति प्रमाणादिसत्तोपगतेर्हेतुतया द्वैतवादिधर्मिकतत्सत्ताभ्युपगन्तृत्वापादककतादृशफलवैधुर्यापाद्यकापत्तेः तत्सत्तोपगन्तव्येति च कल्पचतुष्टयीं प्रतिसंधत्ते । किमित्यादिनाऽतिप्रसञ्जकत्वादित्यन्तेन । हेतुकृतकार्यस्यापि स्वकारणीभूतसाध्यनिरूपितव्याप्तिबलेनैव तदनुमापकतया आद्यकल्पात् द्वितीयस्य भेदो दुर्वच इति तु न शङ्कनीयम् । 'स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमि'ति पराभ्युपगतिमात्रेण विकल्पनात् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इत्यादौ लोकशब्दस्य तदीयव्यवहारपरतादर्शनेन लोकसिद्धत्वादित्यस्य तादृशव्यवहारविषयत्वादित्यर्थः । **अतिप्रसञ्जकत्वात्** । प्रमाणादिसत्तामनुपेत्यापि व्यवहार उन्मत्तादेरपि तादृशफलद्वयशालिता स्यादिति प्रसङ्गहेतुत्वात् ।

**प्रदीपः**— केनचिदुक्तं तदनुवदति **यदत्रेत्यादिना** । तदभ्युपगमसाहित्यनियतस्येति प्रमाणादीनां सत्ताभ्युपगमेन साहित्यनियतिरविनाभावः तदविनाभूतस्येति यावत् अशक्यत्वात्सत्ताभ्युपगम इति शेषः । यथा रूपं स्पर्शमविनाभावमात्रबलेन गमयति तथा व्यवहारः प्राणादिसत्ताभ्युपगममविनाभावेन गमयतीति प्रथमकल्पार्थः । राज्ञां कार्यतया कारणं कल्पयति तथा व्यवहारोऽपीति द्वितीयकल्पार्थः । यद्यपि कार्याविनाभावेन गमकं अथ च स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमार्थः । पृथगुपन्यासो लोकशब्देन लोकव्यवहार उच्यते तत्सिद्धत्वं प्रमाणाकार्येण व्यवह्रियमाणत्वं लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इत्यालोकशब्दस्य व्यवहारे प्रयोगदर्शनादिति तृतीयार्थः । प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतो वादफलस्य तत्त्वनिर्णयस्य जयस्य चोपपत्तौ उन्मत्तादेरपि स्यादिति तदनभ्युपगमस्य फलातिप्रसङ्गहेतुत्वात् । सत्ताभ्युपगम इति चतुर्थार्थः ।

**२६९ सु०— आद्येऽपि किं व्यवहारमात्रं प्रमाणादिसत्ताऽभ्युपगमव्याप्तमुत साधनबाधनक्षमो व्यवहारः । न प्रथमः । तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वेन व्यभिचारात् । तस्यैवानिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः । तस्यापि**

पक्षत्वे बाधः । द्वितीये बाधतादवस्थ्यम् । मम सत्तानभ्युपगमस्यानुभवसिद्धत्वात् । हेतुश्च तवासिद्धः । सिद्धत्वे वा सिद्धं मम समीहितम् । व्यतिरेके च सद्वचनाभासलक्षण-योगित्वमुपाधिः । यतोऽभ्युपगम्यापि प्रमाणसत्तां प्रवर्तिताः मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैर्मतान्तरानुसारिभिरपरैः साधनाद्यक्षमा इति कथ्यन्ते । तेन ज्ञायते व्यवहारस्य साधनाद्यक्षमतायां सद्वचनाभासलक्षणयोगित्वमेव प्रयोजकम् । न तु सत्ताऽनभ्युपगम इति ॥ ननु यदि प्रमाणादीनि न सन्ति । तदा व्यवहार एव धर्मी कथं सिद्ध्येत् । दूषणादिव्यवस्था वा कथं स्यात् । सर्वविधिनिषेधानां प्रमाणाधीनत्वात् । मैवम् । न ब्रूमो वयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति । किं नाम सन्ति न सन्ति प्रमाणादीनीत्यस्यां चिन्तायाम् उदासीनैः, यथा स्वीकृत्य तानि भवता व्यवह्रियन्ते तथा व्यवहारिभिरेवं कथा प्रवर्त्यतामिति ॥ किञ्च कीदृशीं मर्यादामवलम्ब्य प्रवृत्तायां कथायामिदं दूषणमुक्तं भवता । किं प्रमाणादीनां सत्त्वमभ्युपगम्योभाभ्यां वादिप्रतिवादिभ्यां प्रवर्तितायाम्, उतासत्त्वमभ्युपेत्य, अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य । नाद्यः । अभ्युपगत-प्रमाणादिसत्त्वं प्रत्येतादृक्पर्यनुयोगानवकाशात् । न द्वितीयः । स्वस्याप्यापत्तेः । न तृतीयः । तथैव कथान्तरप्रसक्तेः । तस्मात्प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन, व्यवहारनियमे समयं बद्ध्वा, प्रवर्तितायां कथायां भवतेदं दूषणमुक्तमिति वाच्यम् । तथा च व्याघातः । न च वाच्यं नेदं दूषणं प्रतिवादिनं प्रत्युच्यते । किं नाम शिष्यादयः प्रमाणादिसत्ताऽनभ्युपगन्तुः कथाऽनधिकारं ज्ञाप्यन्त इति । यतः शिष्यादीन्प्रत्यपि चार्वाकादेर्दोषोऽयमित्येवाभिधातव्यम् । कथं च तथा स्यात् । तस्य कथाप्रवेशाप्रवेशयोस्तद्बोधाक्षमत्वात् । कथायामेव हि निग्रहः ।

बिन्दुः— व्यतिरेके चेति । यत्र प्रमाणादिसत्ताभ्युपगमपूर्वकत्वाभावः तत्र साधनबाधन-क्षमव्यवहारत्वाभाव इति व्यतिरेकव्याप्तावित्यर्थः, उपाधिलक्षणस्थसाध्यसाधनपदयोर्व्याप्यव्यापक-परत्वात् प्रकृते चास्योपाधेः साधनाभावरूपव्यापकव्यापकत्वात्साध्याभावरूपव्याप्याव्यापकत्वात् । यद्वा विपक्षबाधकतर्कमूलभूतायामापाद्यापादकयोर्व्याप्तावित्यर्थः । यदि व्यवहारोऽयं तादृशसत्ता-ऽभ्युपगमपूर्वको न स्यात् तर्हि साधनबाधनक्षमो न स्यात् । इति हि तर्कस्य पर्यवसानं तत्र च यत्र तादृशसत्ताभ्युपगमपूर्वकत्वाभावः तत्र साधनबाधनक्षमव्यवहारत्वाभाव इत्यत्र सद्वचनाभासलक्षणत्वम् । सद्वचनत्वं प्रमाणवाक्यत्वं तदाभासत्वं प्रमाणाभासत्वमिति यावत् । तस्य च जरद्गवादिवाक्ये साध्यव्यापकत्वात् पक्षे चार्वाकादिवाक्ये च साधनाव्यापकत्वादयमुपाधिरिति भावः । अथवा यदि वा





नायं व्यवहारकर्ता प्रमाणादिसत्तानभ्युपगन्तृत्वात्तद्वचवहारो वा न व्यवहारः प्रमाणादिसत्ताभ्युपगमपुरःसरताशून्यत्वादिति वक्ष्यमाणरीत्याऽनुमाने सद्वचनाभासलक्षणयोगित्वमुपाधिरित्यर्थः । औत्सर्गिकं धियां प्रामाण्यमिति । अन्यथा वह्नेरपि दाहप्रयोजकत्वं न स्यात् किन्तु तन्निष्ठाप्रतिबध्यताया एव तथात्वं स्यात् । न चेष्टापत्तिः । उत्सर्गापवादन्यायोच्छेदापत्तेः । तथाहि । हिंसाऽधर्मसाधनमिति ह्युत्सर्गः । तदपवादश्च क्रत्वर्थहिंसा । अपवादश्चोत्सर्गस्य बाधकः यथा कर्मण्यणः आतोऽनुपसर्गे क इति कप्रत्ययः । बाधकैकापोद्यत्वस्य चोत्सर्गत्वात् । तत्र यदि क्रतुबाह्यहिंसाऽधर्मसाधनमित्युत्सर्गशास्त्रार्थः स्यात् । तदा भिन्नविषयत्वादेव एतयोर्बाध्यबाधकभावो न स्यात् । अन्यथा कर्मनाशाजलस्पर्शस्याधर्मजनकत्वावेदकप्रमाणस्य जाह्नवीसलिलबिन्दुस्पर्शस्य धर्मजनकत्वावेदकप्रमाणस्य च परस्परमुत्सर्गापवादत्वं बाध्यबाधकभावश्च स्यादिति भावः । स्यादेतदित्यादिः शक्यत इत्यन्तं परग्रन्थानुवादः ।

**परि०—** **किं व्यवहारमात्रमिति** । विमतो व्यवहारः प्रमाणसत्त्वाभ्युपगमपूर्वकः व्यवहारत्वादिति साध्यते, साधनबाधनक्षमव्यवहारत्वादिति वेति प्रश्नार्थः । **बाध इति** । चार्वाकादिनाऽनुमानादिप्रमाणसत्ताऽनभ्युपगमादिति भावः ॥ **सिद्धं ममेति** । मायावादिव्यवहारस्य साधनादिक्षमत्वं प्रतिवादिसिद्धं चेत्तर्हि विश्वमिथ्यात्वं प्राप्तमेवेति भावः । **व्यतिरेके चेति** । नायं व्यवहारवान् । साधनादिक्षमव्यवहारवान् वा न भवति, प्रमाणसत्त्वानभ्युपगन्तृत्वादिति वा, त्वदीयव्यवहारः साधनाद्यक्षमः प्रमाणसत्ताभ्युपगमपूर्वकत्वविधुरत्वादिति वा । व्यतिरेकसाधने चेति वा पूर्वोक्तसाध्यहेत्वोर्व्यतिरेकव्याप्तौ चेति वा प्रमाणसत्त्वानभ्युपगमो न प्रयोजकः । किन्तु सद्वचनस्य निर्दोषशब्दस्य आभासः तद्वदवभासमानत्वे सति तल्लक्षणशून्यः शब्दस्तस्य यल्लक्षणं योग्यताराहित्यादिरूपं तद्युक्तत्वमेवोपाधिः प्रयोजकमित्यर्थः । कथमिदं ज्ञायते प्रमाणसत्त्वानभ्युपगमोऽप्रयोजकः त्वदुक्तमेव प्रयोजकमित्यतो व्यभिचाराव्यभिचाराभ्यामिति भावेनाह **यत इति** ॥ मतान्तरानुसारिभिः तार्किकमतानुसारिभिः प्रवर्तिताः शब्दानित्यत्वादिव्यवहाराः अपरैर्मीमांसकैः शब्दनित्यत्वमतानुसारिभिरित्यर्थः । कथ्यन्त इत्यनन्तरं सद्वचनाभासलक्षणायोगित्वे च प्रत्यक्षप्रामाण्यादिव्यवहाराः साधनादिक्षमा इति कथ्यन्त इत्यपि ध्येयम् । सिद्धान्ती शङ्कते **ननु यदीति** । मायावादी समाधत्ते **न ब्रूमो वयमिति** । **भवतेति** । **सत्त्ववादिनेत्यर्थः** । **इदमिति** । प्रमाणसत्ताऽभावे साधनादिक्षमव्यवहारो न स्यादिति दूषणमित्यर्थः ॥ **पर्यनुयोगेति** । दूषणाभिधानेत्यर्थः । **कथान्तरेति** । शब्दनित्यत्वानित्यत्वविषये तावदेका कथा । तदुपायस्यैकेन सत्त्वमन्येनासत्त्वमुपेत्योपक्रान्ता । तत्र च शब्दनित्यत्वादिचिन्तां हित्वा तदुपायो यदि तेऽसन्स्यात्तर्हि तव कथा न स्यादित्यापादने कथान्तरप्रसक्तिदोषः । असतो





व्यवहाराङ्गत्वानङ्गत्वचिन्तारूपकथान्तरमप्यसतो व्यवहाराङ्गत्वसाधनोपायस्यैकेन सत्त्वमन्येनासत्त्वमुपेत्य पूर्वत्रेव प्रवर्तनीयम् । तथैवोपक्रमात् । तत्रापि कथान्तरे एवमापादने द्वितीयकथात्यागेन तदुपायगोचरतृतीयकथाप्रसक्तिः । साऽपि तथैव चालनीया । तत्राप्येवमापादने पुनस्तथैव कथान्तरप्रसक्तिरित्यपर्यवसितकथान्तरप्रसक्तेरित्यर्थः । एके तु अन्तरशब्दो विशेषवाची । तथैवैकेन सत्त्वमपरेणासत्त्वमुपेत्यैव तादृशकथाविशेषस्य प्रसक्तत्वेन तत्रैवं दोषोक्तेरयुक्तत्वादित्यर्थः इत्याहुः । तच्चिन्त्यम् । न चैवं कथान्तरप्रसक्त्यादिदोष इत्यग्रिमग्रन्थविरोधादित्यन्ये । ज्ञाप्यन्त इत्यस्य 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णाविति' द्विकर्मकत्वात्कर्मणि प्रयोगाच्च शिष्यादय इत्यनधिकारमिति च निर्देशो युक्तः । **कथाप्रवेशाप्रवेशयोरिति** । प्रवेशे कीदृशीं मर्यादामित्यनेनोक्तविकल्पदोषाणामापत्तेरित्यस्य स्फुटत्वादप्रवेशपक्षे व्यनक्ति **कथायामेव हि निग्रह इति** । हिर्यत इत्यर्थे ।

**गु०दी०— व्यतिरेके च** इत्यत्र मायावादिना क्रियमाणो व्यवहारः प्रमाणादिसत्ताभ्युपगमव्याप्तो भवितुमर्हति साधनबाधनक्षमव्यवहारत्वात् तत्त्ववादिव्यवहारवत् इत्यनुमाने अन्वयव्याप्तौ स्पष्टोपाध्यभावेऽपि यो व्यवहारः प्रमाणादिसत्ताभ्युपगमव्याप्तो न स साधनबाधनक्षमव्यवहारोऽपि न यथा अप्रामाणिकव्यवहार इति व्यतिरेकव्याप्तावित्यर्थः । तत्र हि साध्यं साधनबाधनाक्षमव्यवहारत्वं यत्र यत्र तत्र सद्वचनाभासलक्षणयोगित्वमस्ति । अतोऽसौ साध्यव्यापकः ।

**यादु०— साधनबाधनक्षम इति** । साधनक्षमत्वं स्वपक्षप्रमितिजनकत्वं, बाधकक्षमत्वं परपक्षप्रतिषेधप्रमितिजनकत्वम् । विमतो मायावादिव्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरः । व्यवहारत्वात्संप्रतिपन्नभाट्टादव्यवहारवदिति प्रथमकल्पाभिप्रेतमनुमानं दूषयति **न प्रथम इति** । **चार्वाकमाध्यमिकादेरिति** । ननु माध्यमिकादेर्विश्वमिथ्यात्ववादितया प्रमाणादिसत्तानभ्युपगन्तृत्वेऽपि चार्वाकस्य प्रत्यक्षरूपप्रमाणसत्ताऽभ्युपगन्तृत्वात्कथं तद्व्यवहारे व्यभिचार इति चेन्न । सकलप्रमाणसत्ताऽभ्युपगमः कथकवाग्व्यवहारव्यापको, यत्किञ्चित्प्रमाणसत्ताऽभ्युपगमो वा । आद्ये चार्वाककथायां व्यभिचारो, द्वितीये माध्यमिककथायामित्यस्यार्थस्य विवक्षितत्वात् । यद्वा प्रमाणादीत्यादिपदेन तर्कादेः परिग्रहः । तथाच चार्वाकस्य प्रत्यक्षरूपप्रमाणसत्ताऽभ्युपगमेऽपि तर्काभ्युपगमो नास्तीति व्यभिचार इत्यर्थः । चार्वाकैकदेशी चार्वाक इत्यप्याहुः । ननु चार्वाकादेर्वाग्व्यवहार एव नास्ति कुत्र व्यभिचार इत्यत आह **तस्यैवेति** । तत्तद्दर्शने तत्तदुक्तयुक्तिनिराकरणान्यथाऽनुपपत्तिरेव तद्वाग्व्यवहारे प्रमाणमित्यर्थः । विमतो व्यवहारः, प्रमाणादिसत्ताऽभ्युपगमपुरःसरः, साधनबाधनक्षमव्यवहारत्वाद्भाट्टादिव्यवहारवत् । विपक्षे चार्वाकादिव्यवहारवत्साधनादिक्षमता न स्यादिति द्वितीयं विकल्पमाशङ्क्याह **द्वितीय इति** । किञ्च विशिष्टव्यवहारस्यापि माध्यमिकादिव्यवहार एव व्यभिचारः । ननु माध्यमिकादिव्यवहारः साधनबाधनक्षमो न





भवति । प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावाद्रथ्यापुरुषवाग्व्यवहारवदित्यनुमानेन तत्र हेत्वभावसिद्धेर्न व्यभिचार इत्याशङ्कायामस्यानुमानस्य सोपाधिकत्वान्नोक्तहेत्वभावसाधकत्वमित्याशयेनाह **व्यतिरेके चेति** । साधन-बाधनक्षमव्यवहारत्वरूपपूर्वहेतुव्यतिरेके माध्यमिकादिव्यवहारनिष्ठतया अव्यभिचारायोक्तरीत्या साध्यतया विवक्षित इत्यर्थः । यद्वा व्यतिरेके पूर्वानुमानव्यतिरेकव्याप्तावित्यर्थः । वस्तुतस्तु माध्यमिकादिव्यवहारो न साधनादिक्षम इत्युक्तानुमानेऽन्वय एवायमुपाधिरिति द्रष्टव्यम् । अत एव सिद्धान्तेऽन्वय एवायमुपाधिरिति वक्ष्यति । सद्वचनाभासः स्फुटवचनाभासो व्यभिचारादिस्तल्लक्षणं साध्यात्यन्ताभावसामानाधिकरण्यादि तद्योगित्वमित्यर्थः । तथा च वाग्व्यवहारस्य साधनाद्यक्षमत्वे साधनदूषणाभासलक्षणयोगित्वं तन्त्रं न तु प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभाव इति भावः । सद्वचनाभासशब्देन निग्रहस्थानं विवक्षितम् । तल्लक्षणं तत्त्वज्ञानाभावलिङ्गत्वं तद्योगित्वमित्यर्थ इत्यन्ये । अत्र च वाग्व्यवहाररूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्य विवक्षितत्त्वान्न घटादौ साध्याव्यापकतेति द्रष्टव्यम् । उपाधिरेव साध्ये प्रयोजको न हेतुरित्युक्तं विशदयति **यतोऽभ्युपगम्यापीति** । मतान्तरानुसारिभिर्मीमांसकैः । मतान्तरानुसारिभिरपरैस्तार्किकैः । तथा च नैयायिकमीमांसकयोः कथमुभयोरपि प्रमाणादिसत्ताऽभ्युपगमवत्त्व-मुक्तत्वभावेऽपि साध्यस्योपाधिप्रयुक्तस्यैव सत्त्वेन नोक्तहेतुस्तत्प्रयोजक इति भावः । तस्मात्साधनबाधनक्षम-व्यवहाररूपहेतोरपि माध्यमिकादिव्यवहारे व्यभिचारो युक्त एवेत्यवधेयम् । ननु कथकवाग्व्यवहारस्य प्रमाणादि-सत्ताऽभ्युपगमपूर्वकत्वाभावे तदसत्ताऽभ्युपगमपूर्वकत्वमेवोक्तं स्यात् । 'परस्परविरोधे तु न प्रकारान्तरस्थितिरि'ति वचनात् । तथा च प्रमाणाभावेनाश्रयाद्यसिद्धिर्न वा साधनदूषणमित्यव्यवस्था स्यादिति शङ्कते **नन्विति** । यद्यपि एतत्पक्षचतुष्टयदूषणानन्तरमाशङ्कनीयम् । तथापि विलम्बमसहमानेनात्रैवाऽऽशङ्कितमिति ध्येयम् । कथापूर्वकाले प्रमाणादिसत्ताऽभ्युपगमस्याप्रयोजकतामाचक्ष्महे न तु प्रमाणादीनि न सन्तीत्येवंरूपतदसत्त्वाऽभ्युपगमस्यापि कथापूर्वकाले सत्त्वमनिर्वचनीयरूपतृतीयकोटेः सत्त्वेन तयोः परस्परविरोधस्यैवासंमतत्वात् । अतो नेदं चोद्यं युक्तिमित्याह **न ब्रूम इति** । उदासीनैः कथाऽऽरभ्येति पूर्वेणान्वयः । एतदेवोपपादयति **यथेति** । अत्र तथे-त्येकस्तच्छब्दो यच्छब्दोपादानादेव द्रष्टव्यः । तथा च यथा तानि प्रमाणादीनि स्वीकृत्य भवता व्यवह्रियते, तादृशव्यवहारनियमे समयं बद्ध्वा कथाऽऽरभ्यते, तथा, तथाव्यवहर्तृभिरुपेक्षितसदसत्त्वप्रमाणैर्व्यवहर्तव्य-मित्येवं समयबन्धादिरूपव्यवहारवद्भिरस्माभिरपि कथा प्रवर्त्यतामिति ब्रूम इति संबन्धः । यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिध्येदित्यादिनोक्तं दूषणं स्वव्याहतं चेति वक्तुमाह **किञ्चेति** । कथायामेव दूषणाभिधानं नान्यत्रेति नियमादेतेषां विकल्पानामवकाश इति ध्येयम् । **एतादृक्पर्यनुयोगेति** । यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिद्ध्येदित्येतादृशपर्यनुयोगानवकाशादित्यर्थः । **स्वस्याप्यापत्तेरिति** । प्रमाणाद्यसत्त्वस्य स्वेनाप्यङ्गीकृतत्वेन स्वस्यापि धर्म्याद्यसिद्धिरूपदूषणापत्तेरित्यर्थः । **तथैव कथान्तरेति** । यथा प्रकृतैतद्दूषणाधिकरणकथारूपव्यवहाराख्यो धर्म्येकेन प्रमाणादिसत्ताऽनभ्युपगमेऽपि सिद्धः । तथैव मया प्रमाणादिसत्ताऽनभ्युपगमेऽपि मत्कर्तृककथान्तरादिरूपव्यवहारादिलक्षणधर्म्यादिसिध्युपपत्तिरिति भावः । **तथा च व्याघात इति** । स्वयमेव प्रमाणादिसत्ताऽभ्युपगममन्तरेणापि प्रकृतकथारूपव्यवहारप्रवृत्तिमङ्गीकृत्य, तत्र यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं सिद्ध्येदिति दूषणाभिधाने व्याघात इत्यर्थः । ननु





प्रमाणादिसत्ताऽनभ्युपगमे कथाऽनधिकारो न कथायां प्रतिपाद्यते किन्तूपदेशद्वारेणैव शिष्यशिक्षाऽर्थं क्रियते ततो न व्याघात इत्याशङ्क्य निषेधति **न चेति**। शिष्यादय इत्यत्रादिपदेन पुत्रादयो ग्राह्याः। **कथं च तथेति**। एवमभिधानं शिष्यादिबोधनाय कथमुपपन्नं स्यादित्यर्थः। कुत इत्यत आह **तस्य कथेति**। तस्य चार्वाकादेर्यदि कथाप्रवेशानन्तरमेतद्दूषणमुच्यते तदेयमेव कथा कथं प्रवृत्तेत्याद्युक्तविकल्पदूषणप्रसङ्गः। यदि न तस्य कथापवेशस्तदा न तं प्रति दूषणाभिधानं युक्तमिति शिष्येणापि वक्तुं शक्यत्वान्न तेनापीदं बोद्धुं शक्यमित्यर्थः। ननु यदि न तस्य कथाप्रवेशस्तदा न तं प्रति दूषणाभिधानमिति कुत इत्यत आह **कथायामेव हीति**। कथायामखण्डिताहङ्कारेण परेण पराहङ्कारखण्डनस्य, कथाकारणसम्यग्ज्ञानाभावस्य वा निग्रहत्वादिति भावः।

**वं०प०**— ननु चार्वाकमते प्रत्यक्षस्यैव प्रामाण्यम्। माध्यमिकस्य सर्वशून्यतया व्यवहारस्याप्यभावात्कुतो व्यभिचार इत्यत आह **तस्येति**। यद्यपि चार्वाकः प्रत्यक्षमेकं स्वीकुरुते तथाऽप्यनुमानादिभिर्व्यवहरत्येतत्सत्तां तु न मनुते। माध्यमिकस्य सांवृतो व्यवहारोऽस्ति। अन्यथा प्रसक्त्यभावात्प्रतिषेधासंभवादित्यर्थः। ननु सोऽपि पक्षीक्रियत इत्यत आह **तस्यापीति**। प्रमाणादिसत्त्वस्य तेनानङ्गीकारादिति भावः। **अनुभवेति**। मदनुभवेत्यर्थः। विमतो मायावादिव्यवहारः प्रमाणादिसत्ताभ्युपगमपूर्वकः साधनबाधनक्षमव्यवहारत्वाद्भाट्टादिव्यवहारवदित्यनुमाने बाधादिकमभिधाय व्यतिरेकव्याप्तावुपाधिं चाह **व्यतिरेके चेति**। **सद्वचनेति**। यः 'परार्थानुमानस्य प्रयोगो वाक्यलक्षण' इति वचनेन परार्थानुमानस्य शब्दरूपत्वाद्वचनेत्युक्तम्। सद्वचनं समीचीनानुमानम्। तदाभासस्य यल्लक्षणं व्यभिचारादि तद्योगित्वमित्यर्थः। **व्यवहार एवेति**। कथ वाक्यप्रबन्ध इति धातोः कथारूपो यो वाग्व्यवहारस्तद्रूपो यो धर्मी साधनदूषणाधिकरणत्वात्स कथं सिध्येदित्यर्थः। **इति स्वीकृत्येति**। प्रमाणादीनामसत्त्वं स्वीकृत्येत्यर्थः। **कथायामिति**। कथायामेव हि निग्रह इति भावः। **इदं दूषणमिति**। यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं सिद्ध्येदिति दूषणमित्यर्थः।

**कं०रा०**— **न प्रथम इति**। व्यवहारमात्रं प्रमाणादिसत्ताभ्युपगमव्याप्तमिति प्रथमपक्षे व्यवहारत्वेन मायावादिव्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वं व्यवहर्तृत्वेन मायावादिनो वा प्रमाणादिसत्ताभ्युपगन्तृत्वं तस्यैव तदनभ्युपगन्तृत्वेन व्यवहर्तृत्वाभावो वा तदीयव्यवहारस्य वा प्रमाणादिसत्ताभ्युपगमपूर्वकत्वराहित्येन व्यवहारत्वाभावः साध्यत इत्युक्तं स्यात्। तत्तु न संभवति। प्रमाणादिसत्तामनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्व्यवहारदर्शनेन व्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वराहित्यस्य च तदीयव्यवहारे व्यवहर्तृत्वस्य प्रमाणादिसत्तानभ्युपगन्तृत्वस्य च चार्वाकादौ व्यभिचारादित्यर्थः। यद्यपि तदनभ्युपगच्छत इत्यत्र तच्छब्देन प्रकृतप्रमाणादिसत्तापरामर्शो तामिति निर्देष्टव्यं न तु तदिति। तथाऽपि तां प्रमाणादिसत्तामनभ्युपगच्छन् तदनभ्युपगच्छन्निति द्वितीयासमासोऽयम्, श्रितादिषु गम्यादीनामुपसंख्यानमित्युक्तेः। अतो न कश्चिद्दोष इति द्रष्टव्यम्। **तस्येति**। यद्यपि वाग्विस्तराणामिति बहुवचनस्य प्रस्तुतत्वात्तेषामिति वक्तव्यम्। तथाऽपि चार्वाकमाध्यमिकादिवाग्विस्तराणां वैदिकसिद्धान्तविरोधित्वेनैकत्वं दर्शयितुं तस्येत्येकवचनं प्रयुक्तमिति द्रष्टव्यम्। ननु

चार्वाकवाग्विस्तरादेरपि पक्षत्वान्न तत्र व्यभिचार इत्यत आह **तस्यापीति** । तत्र प्रमाणादिसत्ताभ्युपगमपूर्वकत्वादिराहित्यस्य निश्चितत्वाद्बाध इति भावः । **द्वितीय इति** । साधनबाधनक्षमव्यवहारः प्रमाणादिसत्ताभ्युपगमव्याप्त इति द्वितीयपक्षे साधनबाधनक्षमव्यवहारत्वेन मायावादिव्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वं साध्यत इत्यादिकमुक्तं स्यात् । तच्च न संभवति । मायावादिनः प्रमाणादिसत्ताभ्युपगमो नास्तीति निश्चितत्वेन बाधतादवस्थ्यादित्यर्थः । **हेतुरिति** । साधनबाधनक्षमव्यवहारस्वरूपहेतुः पक्षीकृते मायावादिव्यवहारे तव तत्त्ववादिनोऽसिद्ध इत्यर्थः । **व्यतिरेके चेति** । मायावादिव्यवहारो न साधनबाधनक्षमः प्रमाणादिसत्ताभ्युपगमपूर्वकताशून्यत्वादिति व्यतिरेकसाधने समीचीनवचनवदाभासमानं तल्लक्षणरहितमिति सद्वचनाभासस्य यल्लक्षणं तद्वत्त्वमुपाधिरित्यर्थः । साधनबाधनाक्षमत्वरूपसाध्यं प्रति प्रमाणादिसत्ताभ्युपगमपूर्वकताशून्यत्वरूपहेतुरप्रयोजकः । सद्वचनाभासलक्षणयोगित्वरूपोपाधिरेव प्रयोजक इत्युपपादयति **यत इत्यादिना** । प्रमाणादिसत्तामभ्युपगम्यापि नैयायिकमतान्तरानुसारिभिः प्रवर्तिता व्यवहारा अभ्युपगतप्रमाणादिसत्त्वे मीमांसकादिमतान्तरानुसारिभिरन्यैः सद्वचनाभासलक्षणवत्त्वं प्रदर्श्य साधनाद्यक्षमा इति कथ्यन्ते यतस्तेन ज्ञायते व्यवहारस्य साधनाद्यक्षमतायां सद्वचनाभासलक्षणयोगित्वमेव प्रयोजकं न तु सत्ताभ्युपगमराहित्यमिति । अन्यथोक्तस्थले साधनबाधनाद्यक्षमत्वं न स्यादिति भावः । **ननु यदीति** । प्रमाणादिसत्ताऽनभ्युपगमे प्रमाणादीनि न सन्तीत्यङ्गीकृतं स्यात् । तथा च प्रमाणाद्यभावे तत्साध्यव्यवहारात्मककथैव न सिध्यतीति तत्र व्यभिचाराद्युद्भावनं दूर इति भावः । **दूषणादीति** । अत्रेदं दूषणमस्त्यत्र तु नास्तीति व्यवस्था प्रमाणाद्यसत्त्वे न स्यात् । सकलविधिनिषेधानां प्रमाणाधीनसिद्धिकत्वात् । तथा च सद्वचनाभासलक्षणयोगित्वस्योपाधित्वं तद्व्यतिरेकस्य प्रतिपक्षत्वं च न सङ्गच्छते । तयोर्लब्धात्मकत्वाभावादिति भावः । सत्त्वासत्त्वोदासीनप्रमाणादिस्वरूपाङ्गीकारमात्रेण कथानिष्पत्तिर्दूषणादिव्यवस्था च संभवतीत्यभिप्रेत्य परिहरति **मैवमिति** । **इदमिति** । प्रमाणसत्ताभावे साधनादिक्षमव्यवहारो न स्यादिति दूषणमित्यर्थः । **स्वस्याप्यापत्तेरिति** । प्रमाणाद्यसत्त्वस्य स्वेनाप्यङ्गीकृतत्वेन स्वस्यापि धर्माद्यसिद्धिरूपदूषणापत्तेरित्यर्थः । इदं दूषणं कथानिष्पत्त्यभावरूपं दूषणम् । **तथैवेति** । यद्येकेन प्रमाणादिसत्त्वमपरेण च तदसत्त्वमङ्गीकृत्य प्रवृत्तायां कथायां प्रमाणादिसत्ताभ्युपगमरूपकारणशून्यस्य तत्कार्यकथाप्रवृत्तिरेव नेति दूषणमुच्यते तदा प्रकृतकथैव प्रमाणादिसत्ताभ्युपगमस्य कथाप्रवृत्तिसाधनत्वसाधनाय कथान्तरं प्रसज्येतेत्यर्थः । यद्वा । एकेन प्रमाणादिसत्त्वमपरेण च तदसत्त्वमङ्गीकृत्य प्रवर्तितकथावत्प्रमाणादिसत्ताभ्युपगमपूर्वकत्वरहितकथान्तरस्यापि प्रसङ्गादित्यर्थः । तथा च प्रमाणादिसत्तामनङ्गीकुर्वतः कथकता नेत्ययुक्तमिति भावः । **व्याघात इति** । कथायां प्रवृत्तं प्रति कथाऽनधिकाररूपदूषणोक्तौ व्याघात इति भावः । **प्रतिवादिन इति** । येन व्याघातः स्यादिति शेषः । **कथं चेति** । प्रमाणादिसत्ताऽनभ्युपगन्तुश्चार्वाकादेरयं दोष इति शिष्यान्प्रत्यभिधानं कथं स्यान्न कथञ्चिदित्यर्थः । तत्र हेतुमाह **तस्येति** । तस्य चार्वाकादेः कथाप्रवेशेऽङ्गीकृते तदधिकारस्यैव सत्त्वेन कथाऽनधिकाररूपदोषस्य शिष्यैर्बोद्धुमशक्यत्वात् । अनङ्गीकृते तु तस्मिन्कथाबाह्यस्य निग्रहत्वाभावादेव तद्दोषस्य ज्ञातुमशक्यत्वादित्यर्थः । तस्य चार्वाकादेरयं दोष इत्यभिधानस्य चार्वाकादेः कथाप्रवेशाप्रवेशयोः कथाऽनधिकाररूपदोषबोधजननाक्षमत्वात् । कथाप्रवेशपक्षे कथाऽनधिकारस्यैवाभावेनाप्रवेशपक्षे तु कथाबाह्यस्य दोषत्वाभावेनेति वा योज्यम् ।





**श्रीनिधि॰— व्यभिचारादिति** । **मायावादी** प्रमाणसत्ताभ्युपगमवान् । व्यवहर्तृत्वादित्यनुमान इति ज्ञेयम् । **तस्यैवेति** । चार्वाकादेर्विस्तृतवाग्रूपव्यवहारस्येत्यर्थः । **तन्निरासः** प्रमाणादीनि सन्ति न सन्तीत्यादिपक्षेषु दोषकथनेनेत्यर्थः । **बाध इति** । प्रमाणसत्तानङ्गीकारस्यानुभवसिद्धत्वादिति भावः । **हेतुश्चेति** । साधनबाधनक्षम-व्यवहारत्वलक्षणहेतुरित्यर्थः । **समीहितमिति** । सिषाधयिषितसतस्साधकत्वस्य सिद्धेरिति भावः । **व्यतिरेके चेति** । यत्र प्रमाणसत्ताद्यभ्युपगमाभावः तत्र साधनबाधनक्षमव्यवहाराभावः इति व्यतिरेकव्याप्तावित्यर्थः । **सद्वचनाभास-लक्षणयोगित्वमिति** । सद्वचनात् विलक्षणीभूत आभास आगमाभासः तस्य मच्छास्त्रोक्तलक्षणं तद्वत्त्व-मित्यर्थः । अत चोपाधित्वं व्यापकव्यापकत्वेन व्याप्यव्यापकत्वेनेति ज्ञेयम् । उपाधेः प्रयोजकत्वमुपपादर्यात **यतोऽभ्युपगम्यापीति** । प्रमाणाद्यभ्युपगन्तॄणामेव परस्परं कथाप्रसक्तौ तत्रान्यतरेण हेत्वाभासादौ प्रयुक्ते अपरः अयं साधनाद्यक्षम इति कथ्यत इति एकदेशार्थः व्यवहार एव धर्मीति । कथायाः प्रमाणतदुपयुक्ताभिलपनरूपत्वा-दिति भावः । **चिन्तायामुदासीनै**रित्यस्य तथा व्यवहारिभिरेवेत्यनेन संबन्धः । **तथैव कथान्तरप्रसक्ते**रिति व्याघातोपलक्षणमिदम् । तथैव प्रागारब्धक्षणिकत्वादि कथावदेव प्रमाणसत्ताभ्युपगमसाधनरूपकथान्तरप्रसक्ते-रित्यर्थः । केचित्तु यदि प्रमाणादि सत्ता नाङ्गीक्रियते तया आरब्धा कथा सा न स्यादित्युच्यते उत कथान्तरं न स्यादिति विकल्पं मनसि निधाय आद्ये कथाया आरब्धत्वादेव तदभावापादने व्याघात इति प्रथमदूषणं च मनसि निधाय द्वितीये दूषणमुच्यते तथैवेत्यनेनेत्याहुः । आद्यव्याख्यानेऽपि । तथा च प्रमाणादिव्यवहाररूपकथास्वरूपमेव न निष्पद्येतेत्यापादनमयुक्तम् । कथाप्रवृत्तेरनुभवसिद्धत्वेन प्रमाणबाधादिति आशयो द्रष्टव्यः । **व्यवहारनियमे समयं बध्वेति** । व्यवहारनियमविषये सङ्केतं कृत्वेत्यर्थः । **तथाच व्याघात इति** । प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन चाभ्यां कथा प्रवर्त्यतामिति समयं बध्वा पुनः प्रमाणादिसत्त्वानभ्युपगमे तथैव निष्पद्येतेति दूषणे समयबन्धेन दूषणस्य विरोधं प्रमाणादिसत्ताभ्युपगमस्य कारणत्वानङ्गीकारेण प्रवृत्तायां कथायां पुनः प्रमाणादिसत्त्वाङ्गीकारस्य कारणताभ्युपगमे व्याघात इत्यर्थः । **तस्य कथेति** । कथाप्रवेशे प्रवेशादेव कथानधिकारज्ञापनायोगः । अप्रवेशेऽपि तथैव कुत इत्यत आह **कथायामेवेति** । (हेत्वनुपपत्तेरिति प्रमाणे सत्ताभ्युपगमलक्षणकारणाभावादित्यर्थः ।)

**वा॰चं॰— व्यभिचारादिति** । विमतो व्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरो वाग्व्यवहारत्वात् संमतवदित्यत्र चार्वाकादिव्यवहारे व्यभिचार इत्यर्थः । ननु प्रत्यक्षप्रामाण्यवादित्वेन चार्वाकव्यवहारे साध्यस्यापि सत्त्वात्सर्वशून्यतया माध्यमिकव्यवहारस्यैवाभावेन तत्र हेतोरेवागमनान्न व्यभिचार इत्यतोऽनुमानादिसत्ता-मनङ्गीकृत्यापि चार्वाकेण क्रियमाणेऽनुमानादिसाध्यव्यवहारेऽथवा प्रत्यक्षप्रामाण्यस्यानुमानैकगम्यत्वात्तदप्रामाण्ये प्रत्यक्षस्याप्यप्रामाण्यमेवेति प्रत्यक्षादिसाध्ये सर्वस्मिंश्चार्वाकव्यवहारे, सांवृतव्यवहारमङ्गीकुर्वतो माध्यमिकस्य व्यवहारे च व्यभिचारः स्यादेव । अन्यथा प्रसक्त्यभावात्तत्प्रतिषेधायोग इत्याशयेनाह **तस्यैवेति** । **बाध इति** । तदीयप्रमाणादिसत्ताऽनभ्युपगमस्य सुप्रसिद्धत्वादिति भावः । आद्यद्वितीयमुक्तदूषणातिदेशेन दूषयति **द्वितीय इति** । अत्र बाधासिद्ध्योः परेणानुक्तावपि संभावितत्वादुक्तिः परोक्तोपाधेश्च दूषणान्तरतयोक्तिरिति द्रष्टव्यम् । किञ्च विमतो वाग्व्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरः साधनबाधनक्षमवाग्व्यवहारत्वाद्वाद्यादिसंप्रतिपन्नव्यवहारवत् अन्यथा

चार्वाकादिव्यवहारवत्साधनबाधनक्षमता न स्यादिति द्वितीयकल्पे पर्यवसितेऽनुमानेऽसमव्याप्तिकयोरन्वयव्याप्ति-वैपरीत्येन व्यतिरेकव्याप्तिनियमात्साधनबाधनक्षमव्यवहारत्वाभावं प्रति प्रमाणादिसत्ताभ्युपगमपूर्वकत्वाभावस्य व्याप्ततायाश्च, साधनबाधनक्षमव्यवहारत्वाभावसद्वचनाभासलक्षणयोगित्वरूपव्यापकोपाध्योश्चार्वाकादिव्यवहारे सत्त्वात्प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावरूपव्याप्यस्य पक्षे सत्त्वेऽप्युक्तोपाधेरभावेन, सोपाधिकतयाऽसंभवात् । व्यतिरेके उपाधौ चान्वये मूलशैथिल्यस्य स्वतःसिद्धत्वान्नेदमनुमानं संभवतीत्याशयेनाह **व्यतिरेके चेति** । सद्वचनाभासलक्षणान्यसिद्ध्यादिलक्षणानि तेषामन्यतमयोगित्वमित्यर्थः । ननु घटादौ सत्यपि व्यापके उपाधेरभावान्नास्य साध्यव्यापकत्वमिति चेन्न । वाग्व्यवहारत्वे सति साधनबाधनाद्यक्षमत्वे पुरुषश्यामत्वे शाकाद्याहार-परिणतिभेदस्येवास्याप्युपाधित्वसंभवात् । अन्यथा स श्यामो मित्रातनयत्वादित्यादाविन्द्रनीलादौ साध्याव्यापकत्वेन शाकाद्याहारपरिणतिभेदस्याप्युपाधित्वं न स्यादिति भावः । ननु चार्वाकादिव्यवहारे प्रमाणादिसत्ताऽनभ्युपगमपुरः-सरत्वसद्वचनाभासलक्षणयोगित्वयोर्द्वयोरपि सत्त्वात्साधनाद्यक्षमत्वे सद्वचनाभासलक्षणयोगित्वस्यैव प्रयोजकत्व-निश्चायकाभावेन नोपाधित्वमित्यत आह **यत इति** । शब्दो द्रव्यमव्यवहितसंबन्धग्राह्यत्वाद्घटवत् । शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वाद्रूपादिवदिति व्यवहारस्याभ्युपगतप्रमाणसत्तापुरःसरत्वेऽप्यन्योन्याभासतया प्रतिषेधस्य दृश्यमानत्वात्प्रमाणादिसत्ताऽनभ्युपगमस्य साधनाद्यक्षमत्वप्रयोजकत्वे स न स्यादिति भावः । **नै**नु प्रमाणादीनां सत्त्वानङ्गीकारे तदसत्त्वाङ्गीकारापातेन तेषां चासत्त्वे व्यवहाररूपधर्मिणो दूषणादिव्यवस्थायाश्चासिद्ध्या सद्वचना-भासलक्षणयोगित्वं प्राप्तमेवेति साधनव्यापकत्वान्नायमुपाधिरित्याशङ्कते **नन्विति** । सत्त्ववदसत्त्वस्यापि अनङ्गी-कारान्न सद्वचनाभासलक्षणप्राप्तिरित्याशयेन परिहरति **मैवमिति** । उभयानङ्गीकारे कथं व्यवहारसिद्धिरित्याशयेन शङ्कते **किं नामेति** । यद्वा यदि प्रमाणानि न सन्तीति न स्वीकारस्तर्हि मदिष्टसिद्धिरित्याशङ्कते **किं नामेति** । तथेत्यस्याऽऽवृत्तिः । तच्च व्यवहारिभिरित्यनेन संबन्धे समस्तं कथेत्यनेन त्वसमस्तं तथाव्यवहारिभिरुपेक्षित-सदसत्त्वप्रमाणमात्रमूलव्यवहारिभिः । यद्यप्यन्यथा त्वयाऽपि मां प्रति नेदं दूषणमभिघातुं शक्यं कीदृशी मर्यादा-मालम्ब्येत्यादिना परेणोक्तानङ्गीकारे बाधकमभिहितमिति परग्रन्थाद्भाति । तथाऽपि मयौदासीन्येन कथाप्रवृत्ति-स्वीकारान्नानुपाधित्वमस्येत्यर्थस्य पूर्ववाक्येनैव सिद्धत्वात्त्वयाऽप्येवमेवाङ्गीकार्यमित्याशयेन प्रवृत्तस्योत्तरगन्थस्य दूषणान्तरपरत्वप्रतिभासात्प्रमाणादिसत्तामनभ्युपगम्य कथाप्रवृत्तिं परेणाप्यङ्गीकारयत्यन्यथेतीति तट्टीकाया-मवतारितत्वाच्च दूषणान्तरत्वेनैवानुवदति **किश्चेति** । अनेकविशेषप्रसक्तेरभावात्कीदृशीमित्यादिप्रश्नानुपपत्तिरित्यतः तां दर्शयति **किमित्यादिना** । असत्त्ववादिनः सत्त्वाभ्युपगमे कथारम्भ एवापसिद्धान्तेन निग्रहे कथारम्भस्यैव अनुपपत्तिरित्यतः कल्पान्तरमाह **उतेति** । असत्त्वाभ्युपगमे तु सत्त्ववादिनो निग्रहात्पूर्वोक्तदूषणं तदवस्थमित्यत उभयानुगुणं पक्षान्तरमाह **अथेति** । **एताहगिति** । प्रमाणादीनामसत्त्वे धर्म्यसिद्धिर्दूषणादिविभागासिद्धिः सर्वपदार्थानां नास्तीति निषेधस्यास्तीति विधेर्विभागस्य च प्रमाणायत्तत्वादित्यादिरूपस्येत्यर्थः । तथा च निरनुयोज्यानुयोग इति भावः । **स्वस्यापीति** । परस्येव स्वस्यापि धर्माद्यसिद्ध्यापादकन्यायस्य तुल्यतया जात्युत्तरत्वमिति भावः । **तथैवेति** । प्रमाणादिसत्ताऽनभ्युपगमे किमियं कथा नोपपद्यते कथान्तरं वा । नाद्यः । आरब्धत्वादेव । न द्वितीयः । विमताः कथाः प्रमाणादिसत्ताऽनभ्युपगमपुरःसराः कथात्वात्प्रारब्धैतत्कथावदिति भावः । **तस्मादिति** ।





प्रमाणतर्काभ्यां व्यवहर्तव्यमिति व्यवहारनियमे समयसङ्केतं बद्ध्वा सदसत्त्वौदासीन्येन प्रवृत्तायां सत्त्वानङ्गीकाराद्धर्म्याद्यसिद्धिरिति दूषणाभिधाने व्याघातः। औदासीन्येन प्रवृत्तिर्नाम सत्ताद्यनभ्युपगम्य प्रवृत्तिः। सत्त्वानङ्गीकारे व्यवहारो न सिद्ध्येदित्यनेन सत्तानभ्युपगमे कथाया अप्रवृत्तिरुक्ता भवति। तथा च सत्तामनभ्युपगम्य प्रवृत्तायां कथायां सत्ताऽनभ्युपगमे कथाप्रवृत्तिर्नास्तीति दूषणाभिधाने कथं न व्याघात इत्यर्थः। तर्हि कारणांन्तराभावात्कथं कथाप्रवृत्तिरित्यतस्तत्कारणकथनं व्यवहारेति। स च वक्ष्यमाणोऽनुसन्धेयः। प्रमाणादिसत्ताऽनभ्युपगमे कथानधिकारो न कथायां प्रतिवादिनं प्रत्युच्यते किन्तु शिष्यशिक्षापरं क्रियतेऽतो न व्याघात इति शङ्कते **न चेति**। चार्वाकादेः कथाप्रवेशेऽयं दोषो वक्तव्य इति विनेयो बोद्ध्यते तदप्रवेशे वा। नोभयथाऽपीत्याह **तस्येति**। बोधाक्षमत्वे हेतुमाह **कथायामेवेति**। कथाप्रवेशे सत्येवातत्त्वज्ञानलिङ्गं निग्रहस्तस्येति विनेयबोधनं संभवति कथातोऽन्यत्र निग्रहाविषयत्वात्। तथा च व्याघात इति भावः।

**वा०र०— माध्यमिकादेरिति**। मूलगतादिपदेन शून्यत्वादिपरिग्रहः। वाग्व्यव्यवहाराणां प्रतायमानत्वादिति मूलपाठे गुण्डिराजोक्तरीत्या प्रतीयमानत्वं विस्तीर्यमाणत्वम्। सत्त्रैविध्यं चेत्येतदवतारमूलगतलौकिको व्यवहारः प्रतायत इत्यस्य सप्रपञ्चं जन्यत इत्यर्थष्टीकाकृता वक्ष्यते। फलतस्त्वेक एवार्थः। वाग्विस्तराणामिति मूलपाठे तु प्रतीयमानत्वादित्येव पाठः। तेन नान्येतरस्य वैयर्थ्यशङ्कावकाश इति ज्ञेयम्। **विमतो व्यवहार इति**। इदं चानङ्गीकुर्वतामिति व्यतिरेकव्याप्तिप्रदर्शनं धर्मप्राधान्यविवक्षा चेति वक्ष्यमाणटीकोक्तरीत्या अनुमानसिद्धिमभिप्रेत्येति ज्ञेयम्। चार्वाकादीत्यादिना मांध्यमिकादिसङ्ग्रहः। निर्विशेषणवाग्व्यवहारत्वहेतोरिति शेषः। व्यभिचार इति प्रातिपदिकार्थमात्रकथनम्। **प्रत्यक्षप्रामाण्येति**। चार्वाकस्येति शेषः। साध्यस्यापि सत्त्वादित्यस्य न व्यभिचार इति वक्ष्यमाणेन संबन्धः। सर्वशून्यतया माध्यमिकस्येति शेषः। **सर्वशून्यतया** सर्वाभाववादितया। तथा च धर्म्यभावे तत्र धर्मायोग इत्युक्तं भवति। **अनुमानादिसाध्येति**। धर्मधर्माभावादिप्रतिपादनाय प्रवृत्तेन हेतूपन्यासादेः करणेन परार्थप्रयोगस्य करणेन च तद्व्यवहारस्यानुमानार्थापत्तिशब्दसाध्यत्वादिति भावः। शङ्करभट्टोक्तरीत्यापि व्यभिचारमुपपादयति **अथवेति**। अथवा सर्वस्मिंश्चार्वाकव्यवहार इति संबन्धः। **सांवृतेति**। मायिवन्माध्यमिकेनापि पारिभाषिकसत्त्वस्वीकारेण सर्वशून्यत्वप्रयुक्तव्यवहाराभावाभावात्तद्व्यवहारे व्यभिचारो युक्त इत्याशयः। **अन्यथेति**। माध्यमिकादिव्यवहारस्यैवाभाव इत्यर्थः। तस्यापि पक्षीकरणे तत्रैव भागे बाध इति विद्यासागर्यनुसारेण मूलं **तस्यापि पक्षत्वे बाध इति**। तत्र मम सत्तानभ्युपगमस्येत्युत्तरमूलं मनसि कृत्वा प्रकृतानुसारेण बाधमुपपादयति **तदीयेति**। मूले तस्यापि पक्षत्वे बाध इत्यनन्तरमेव तदीयसत्तेतिवाक्यस्य विन्यासे कर्तव्ये द्वितीयपक्षदूषणावसरे मम सत्तेत्याद्युक्तिरुभयत्र बाधोत्त्यनन्तरं प्रवृत्तत्वादुभयोपपादनमिदं यथासंभवमित्याशयेनेति मूलाशयश्च स्पष्टीकृतोऽनेन भवति। अत्र च खण्डनटीकानुसारेण चार्वाकादिव्यवहारांशे बाधमभिधाय द्वितीये बाधतादवस्थ्यमित्युक्तेरुपपत्त्यर्थं मूले बाध इति पूर्ववाक्ये पक्षत्वेन प्रागभिहिते मायिव्यवहारेऽपि बाधो वाच्यतयाऽभिप्रेतः। मम सत्तेत्युपपादनं च तत्र ज्ञेयम्। अन्यथा चार्वाकादिव्यवहारपक्षतायाः साधनबाधनेति पक्षे अप्राप्तेस्तत्र बाधस्यावक्तव्यतया बाधतादवस्थ्यमित्यत्र तद्बाधग्रहणायोगान्मायिव्यवहारे च बाधानभिधानात्





तादवस्थ्यमित्यस्यायोगप्रसङ्गः । पक्षद्वयेऽप्युपपादनसाम्ये बाधत्वरूपेण तादवस्थ्योक्तिरित्यस्यायोगाच्च । अत एव सिद्धान्तटीकायां व्यभिचारादीत्यादिपदसङ्ग्राह्य बाधोऽपि द्विरूपं इति ज्ञेयम् । **आद्यद्वितीयमिति** । साधनबाधनक्षमो व्यवहार इति द्वितीयमित्यर्थः । **उक्तदूषणेति** । बाधरूपदूषणेत्यर्थः । **अत्रेति** । साधनबाधनक्षम इति द्वितीय इत्यर्थः । **अनुक्तावपीति** । उपलक्षणं चेदम् । प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं तदीयसाधनबाधनेत्यादिनोपाधेरेवोक्तत्वेऽपीत्यपि द्रष्टव्यम् । अयमाशयः । खण्डनग्रन्थे हि निर्विशेषणव्यवहारमात्रपक्षे व्यभिचारेण निरस्ते द्वितीयपक्षमाशङ्कामुखेनोत्थाप्योपाधिमात्रेण दूषणं कृतम् । मूले तु तट्टीकोक्तरीत्या विंकल्पमुखेन ग्रन्थप्रवृत्तेर्द्वितीयपक्षदूषणपरतयैवोपाधिग्रन्थं योजयितुं संभावितत्वात्खण्डनानुक्तयोरपि बाधसिध्योरभिधानं कृत्वा पश्चात् दूषणान्तरतया खण्डनोक्त उपाधिर्योजित इति । **व्यतिरेके चेति** मूले उपाधिश्चेति चशब्दसंबन्धः । तेन दूषणान्तरत्वप्रत्यय इयाशयेनोत्तरमूलं दूषणान्तरपरतया योजयति **किञ्चेति** । पूर्वत्र वाग्व्यवहारत्वहेतुकानुमाने व्यभिचारे उक्ते तत्परिहाराय साधनबाधनक्षमेति विशेषणोपादानेन च तदनुमान एवोपाधिपरतया योजनस्य स्वारस्यात्प्रक्रमानुसारेण च तदनुमानेऽन्वयव्याप्तिनिश्चयेन उपाधिलक्षणायोगेन च तत्रास्योपाधेरयोगाद्व्यतिरेकव्याप्तावेवैतदनुमानीयान्वयव्याप्त्युपायभूतायामुपाधिपरमिदमित्याशयेन व्यतिरेक इत्युक्तं मूले । यद्यपि विमतो व्यवहारो न साधनादिक्षम इत्युपाधिदूषणपरोत्तरमूलानुसारेण तथैवानुमानविवक्षायां परकीयमेतदुपाधिप्रदानं विवक्षितत्वा तदनुमानीयान्वयव्याप्तावेवोपाधिरयं वक्तुं शक्यः । अत एवोत्तरमूले तथैवाभिधानम् । तथाप्यत्रान्वय्यनुमानविवक्षायाः प्रक्रमात्तत्रैवोपाधिं योजयितुं व्यतिरेक इत्युक्तम् । उत्तरग्रन्थे त्वन्वय्यनुमानीयव्यतिरेके उपाधेर्व्यतिरेकानुमानीयान्वये उपाधेश्च विशेषाभावात्फलतः प्रमेयैक्यविवक्षयोत्तरत्र यथाश्रुतभाष्योक्तसाधनसाध्यपुरस्कारेण व्यतिरेकानुमानमेव भाष्याभिप्रेततया प्रसज्य तत्रत्यान्वये उपाधिर्नेत्युक्तमिति न पूर्वोत्तरमूलविरोधः । यद्यपि च व्यतिरेके चेति मूलस्यैव व्यतिरेक्यनुमानविवक्षायामिति व्याख्यातुं शक्यतया तथा व्याख्याने उत्तरमूलानुगुण्यमिति विरोधप्रसक्तेरभावान्नोक्तप्रमेयैक्यविवक्षादिकल्पनावकाशस्तथापि विद्यासागरेण प्रक्रममनुसरताऽसमव्याप्तिकयोरित्यादिना व्यतिरेकव्याप्तिं पुरस्कृत्यान्वय्यनुमानदूषणतयैव योजनात्स्वयमप्यन्वयप्रक्रममनुरुध्यैव टीकायामुपाधिरन्वय्यनुमानीयव्यतिरेकव्याप्तावेव योजयिष्यत इति ज्ञेयम् । तच्चान्यथाख्यातिकारैः वस्तुतस्त्वित्यादिना अस्यान्वयोपाधिपरतया योजनं तत्किंमूलकमिति सूरयो विदांकुर्वन्तु । पर्यवसितेऽनुमान इति समानाधिकरणसप्तम्यौ । यत्र साधनबाधनक्षमव्यवहारत्वं तत्र प्रमाणादिसत्ताऽभ्युपगमपुरःसरत्वमित्यन्वयानुसारेण दण्डघटादौ कारणताघटकव्यतिरेकव्याप्तिवद्यत्र साधनबाधनक्षमव्यवहारत्वाभावस्तत्र प्रमाणादिसत्ताभ्युपगमपुरःसरत्वाभाव इत्यपि व्यतिरेकव्याप्तिस्वरूपं प्रतीयेत । तत्र च सद्वचनाभासलक्षणयोगित्वरूपोपाधेः उपाधित्वं न विवक्षितम् । व्यवहारस्य साधनाद्यक्षमतायां सद्वचनाभासलक्षणयोगित्वमेव प्रयोजकं न सत्तानभ्युपगम इत्युत्तरमूलानुसारेण साधनबाधनाद्यक्षमत्वादेरेव व्यापकत्वादिकं तद्व्यापकत्वादिनैव चायमुपाधिरिति प्रतीत्या तद्विरोधापातात् अतोऽत्र साध्याभावोऽन्यथाव्याप्य इत्युक्तान्वयवैपरीत्येन व्यतिरेकव्याप्तिस्वरूपमभिमतमिति हेतुपुरःसरं वदन् व्यापकव्यापकत्वादिरूपोपाधिलक्षणानुगमं च दर्शयन् अस्तु नाम व्यतिरेके उपाधिस्तथाऽप्यन्वयव्याप्तिसंभवात् । अनुमानं त्वदुष्टमेवेत्याशङ्कां च परिहरन् एतदनुमानासंभवरूपमुपाधिफलं च दर्शयति





**असमव्याप्तिकयोरित्यादिना** । नियमादित्यनन्तरं प्राप्ताया इति शेषः । व्याप्यतायाश्चेत्यस्यासंभवादिति वक्ष्यमाणेन संबन्धः । साधनबाधनेत्यादिसत्त्वादित्यन्तं व्यापकव्यापकत्वप्रदर्शनम् । प्रमाणादीत्यादिकमभावेनेत्यन्तं व्याप्यव्यापकत्वप्रदर्शनम् । अन्वये मूलेत्यनेन व्यतिरेकव्याप्तेरन्वयव्याप्तिसिध्यर्थत्वेन उपाधिना तस्यां दुष्टायां तन्मूलकान्वय्यनुमानमूलभूतान्वयव्याप्तेः शिथिलत्वमभावः स्वतःसिद्ध इत्युच्यते । व्यतिरेके चेत्यंशोऽपि खण्डनस्थत्वाभावेऽपि तट्टीकायां योजनामूलेऽनूदित इति ज्ञेयम् । सद्वचनाभासः स्फुटावभासो व्यभिचारादिस्तल्लक्षणं साध्यात्यन्ताभावसामानाधिकरण्यादीति शङ्करभट्टी । इह तु सद्वचनाभासस्य लक्षणानि असिध्यादिरूपाणीत्यर्थः । यद्वा सद्वचनाभासलक्षणानीत्यनूद्य व्याख्यानेन सद्वचनाभासार्थे सिध्यादयस्तेषां लक्षणानीत्यर्थः सूचितः । वक्ष्यति च मूले स्वरूपासिद्धत्वं तच्च सद्वचनाभासविशेष एवेति । तेषां यदन्यतमं तद्योगित्वमिति योज्यम् । शुद्धव्यापकव्यापकत्वमिह विवक्षितमिति भ्रान्त्या शङ्कते **ननु घटादाविति** । ननु गर्भस्थ इत्यादिशङ्कासमाधानरूपविद्यासागर्यनुसारेण साधनधर्मावच्छिन्नव्यापकव्यापकत्वात् युक्तमुपाधित्वमिति समाधत्ते **वाग्व्यवहारत्वे सतीति** । सतीत्यस्य तदवच्छिन्नत्वमर्थः । अक्षमत्वे अस्याप्युपाधित्वसंभवादिति संबन्धः । तत्र दृष्टान्तः **पुरुषश्यामत्व इति** । पुरुषत्वावच्छिन्नश्यामत्व इत्यर्थः । पुरुषत्वं च साधनान्तर्गतधर्मो वा पक्षधर्मो वेत्यन्यदेतत् । दृष्टान्ते विवदमानं प्रत्याह **अन्यथेति** । **द्वयोरपीति** । व्याप्योपाध्योर्द्वयोरपीत्यर्थः । **इति व्यवहारस्येति** । इति द्रव्यत्वसाधनतत्प्रतिषेधरूपव्यवहारद्वयस्येत्यर्थः । **अभ्युपगतेति** । मीमांसकनैयायिकाभ्यामिति शेषः । **अन्योन्याभासतयेति** । मीमांसकेन नैयायिकोक्तस्याभासतया प्रतिषेधः साधनाद्यक्षमत्वमुच्यते । एवं नैयायिकेनापि । तथा चोभाभ्यामुभयोक्तस्याभासताङ्गीकारेण साधनबाधनाद्यक्षमत्वस्य व्यवस्थाप्यत्वदर्शनादित्यर्थः । अनेन मूलगतं मतान्तरेत्यादि विवृतं भवति । ननु यदि प्रमाणानीत्येतद्ग्रन्थफलस्याप्रतीतेः फलं वदन्नवतारयति **ननु प्रमाणादीनामिति** । असत्त्वे व्यवहाररूपेत्यादिवदता व्यवहारः प्रमितो न वेत्यादिविकल्पनिराकरणपरतया योजनं विद्यासागरीस्थं न युक्तमिति सूचितम् । यदि प्रमाणानि न सन्ति तदेति पूर्वोक्तानुवादेनासत्त्वपुरस्कारेणैव दूषणाय खण्डनप्रवृत्तिसिध्योक्तविकल्पानवकाशात् । **धर्मिण इति** । प्रमाणाधीनत्वात्प्रमेयसिद्धेस्तदसत्त्वे धर्म्यसिद्धिरित्यर्थः । एवं दूषणादिविभागरूपप्रमेयासिद्धिरप्यभिप्रेता ज्ञेया । फलकीर्तनं साधनव्यापकत्वादिति । प्रमाणाद्यसत्त्वे धर्म्याद्यसिद्धिरेव कुत इत्यत आह **सर्वविधीति** मूलम् । विधिर्भावो निषेधोऽभावः । एतादृक्पर्यनुयोगेयुत्तरमूलटीकायां विवृतमेतद्भविष्यति । विद्यासागर्यामादिपदेन दूषणभूषणतद्विधानादिसङ्ग्रह इत्युक्तम् । खण्डनवाक्ये तु निषेधानामित्येव पठितम् । किन्तु बहुवचनमाद्यर्थ इति स्वीकृत्य तद्व्याख्यानमिति कथञ्चिदुपपादनीयम् । गुण्डिराजीये तु विधिरूपाणां वाग्व्यवहाराणां निषेधरूपाणां वाग्व्यवहाराणामित्युक्तम् । **इत्याशयेनेति** । अनेन न ब्रूमो वयमित्यादिखण्डनस्वारस्यानुसारेणार्थान्तरस्यैव प्रतीतेः प्रतीतत्वमात्रेण धर्मित्वं न प्रमितत्वेनेत्याद्यभिप्रायकथनं विद्यासागरीयमनुपपन्नमिति सूचयति । खण्डनग्रन्थस्वारस्यमनुरुध्यैव किन्नामेत्येतदपि प्रकारान्तरेणैव द्वेधा योजितमिति ज्ञेयम् । **कथेत्यनेन त्वसमस्तमिति** । अनेन द्वितीयस्य कथा प्रवर्त्यतामित्यनेन संबन्ध इति सूचितम् । तथा चोदासीनैस्तथा व्यवहारिभि रूपेक्षितसदसत्त्वप्रमाणमूलव्यवहारिभिः कथा प्रवर्त्यतामिति ब्रूम इति मूले संबन्ध इति स्फुटत्वान्नोक्तं **परग्रन्थाद्धातीति** । तथा चास्य पूर्वोक्तं यन्मयौदासीन्येन कथाप्रवृत्तिस्वीकारादनुपाधित्वं नायातीति





प्रमेयं तदुपपादकतया अन्यथेत्यादिखण्डनग्रन्थप्रवृत्तिवदेवात्राप्यन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदं भवता दूषणमुक्तं तदपि न वक्तुं शक्यं कीदृशीं मर्यादामित्यादिरूपेणैव च कीदृशीमिति ग्रन्थः प्रवर्तनीय इति किञ्चेति दूषणान्तरपरतया तद्योजनं कथमिति भावः । **पूर्ववाक्येनैव सिद्धत्वादिति** । न ब्रूमो वयमित्यादि पूर्व-ग्रन्थेनैव मयौदासीन्येनेत्यादेरर्थस्य सिद्धत्वात्तदुपपादनस्यानावश्यकत्वेन तत्परतया योजनापेक्षया कीदृशीमित्यादि-ग्रन्थस्य त्वयाप्येवमङ्गीकार्यमित्याशयेन प्रवृत्तस्य दूषणान्तरकथनपरतया योजनाया एव स्वारस्येन तत्परत्वस्यैव प्रतिभासादित्यर्थः । तट्टीकासम्मता चेयं योजनेत्याह **प्रमाणादिसत्तामिति** । **दूषणान्तरत्वेनैवेति** । स्वयमपि तथाङ्गीकृत्य परं प्रति तद्दूषणे व्याघात इत्येतद्दूषणं पूर्वोक्तातिरिक्तं तत्परत्वेनैवेत्यर्थः । **असत्त्ववादिन इति** । प्रमाणादिसत्तानभ्युपगन्तुरित्यर्थः । **सत्त्वाभ्युपगमेति** । कथामूलतया प्रमाणादिसत्ताभ्युपगम इत्यर्थः । **कथारम्भ एवेति** । तत्काल एव । निग्रहे इति सति सप्तमी । मूले **उतार्थेति** कल्पद्वयेऽपि उभाभ्यां वादिप्रतिवादिभ्यां प्रवर्तितायामित्येतदनुषञ्जनीयतया सिद्धम् । सत्त्ववादिना असत्त्वाङ्गीकारेऽपसिद्धान्त इति तन्निग्रहात्कथारम्भा-नुपपत्तिरिति प्रागुक्तदूषणं तदवस्थमिति भावेनाह **असत्त्वाभ्युपगमे त्विति** । **निरनुयोज्येति** । अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनरूपत्वात्तस्येति भावः । **असिध्यापादकन्यायस्येति** । प्रमाणाद्यसत्त्वाभ्युगमरूपन्यायस्येत्यर्थः । **जात्युत्तरत्वमिति** । आपत्तिफलकीर्तनम् । धर्म्याद्यसिध्यापादकं प्रमाणाद्यसत्त्वं स्वयमङ्गीकृत्य परं प्रति तदसत्त्वेन धर्माद्यसिध्यापादने स्वस्यापि तदापत्त्या स्वन्यायविरोधेन स्वव्याघातकत्वाज्जात्युत्तरत्वमित्यर्थः । तथैव कथान्तरप्रसक्तेरित्युक्ते एतत्कथानारम्भपक्षस्यादूषणात्सोऽङ्गीकृत इति प्रतीयतेऽतस्तत्कथानारम्भापादनपक्षस्य स्पष्टदूषणतया तदनिराकरणं मूले इति भावेन विकल्पमुत्थाप्याद्यं बहिर्निराकृत्य द्वितीयनिराकरणपरतया मूलं भावकथनेनैव व्याचष्टे **प्रमाणादिसत्तानभ्युपगम इति** । **कथावदितीति** । अनेन तथैवारब्धौ तत्कथावदेव कथान्तरप्रसक्तेः । कथान्तरस्यापि प्रमाणादिसत्तानभ्युपगमपुरःसरत्वस्य प्रसक्तेरनुमातुं शक्यत्वादिति मूलं व्याख्यातं भवति । **इति दूषणेति** । अनेन मूलस्थमिदं दूषणमित्युक्तं विवृतं भवति । तथाच व्याघात इत्येतदपि दूषणाभिधाने व्याघात इति व्याख्यातं भवति । औदासीन्येन प्रवृत्तेः सत्तानङ्गीकाराद्धर्म्याद्यसिद्धिरित्येतयोर्विरोधप्रकाराप्रतीते-र्व्याघातो न ज्ञायत इत्यतस्तमुपपादयति **औदासीन्येनेति** । **कथाया अप्रवृत्तिरिति** । तेन सत्ताभ्युपगन्तव्येति प्राप्नोतीति शेषः । **तथा चेति** मूलमेव व्याघातोपपादनपरतयापि योजयति **तथा च सत्तामिति** । **दूषणाभिधान इति** । तदभिधानस्य सत्ताङ्गीकारावेदकत्वादिति शेषः । व्यवहारनियमे समयं बध्वेत्यस्य प्रकृतप्रमेयोपसंहारत्वा-भावाद्वैयर्थ्यमित्यतस्तद्भागस्य मूले उदाहरणं सङ्गमयति **तर्हीति** । **वक्ष्यमाण इति** । प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादि रूप इति वक्ष्यमाण इत्यर्थः । यद्यपि प्रमाणतर्काभ्यामित्यनेन प्रागेव स्वयमपि तदभिधानं कृतमस्ति । तथाप्युत्तरमूले व्यवहर्तव्यत्व इव निग्रहाद्युद्भावनविषयेऽपि नियमप्रकारस्य प्रमाणादीत्यादिपदोपात्तस्य विवक्षया वक्ष्यमाणत्वोक्तिः । खण्डनटीकानुसारेणैकदेशोक्तिरप्युत्तरमूलमूलिकैवेति न दोष इति ज्ञेयम् । स च व्यवहारः यः प्रमाणतर्काभ्यां व्यवहर्तव्यमित्येवंरूपत्वेन प्रागस्माभिर्व्याख्यातः स तु वक्ष्यमाणो मूल एवोत्तरत्र वक्ष्यत इति योजनीयमित्यप्याहुः । मूले शिष्यादय इत्यादिपदेन पुत्रादिपरिग्रहः । अत एव प्रथमसूत्रन्यायभाष्ये वादजल्पयोः सप्रयोजनत्वमभिधाय वितण्डया प्रवर्तमानो वैतण्डिकः सप्रयोजनमनुयुक्तः यदि प्रतिपद्यते सोऽस्य पक्षः सोऽस्य





सिद्धान्त इत्यत्र वैतण्डिकस्य वादित्वाभावाशयेनैव प्रतिपद्य स इति मध्यमपुरुषप्रयोगमकृत्वा प्रतिपद्यत इति प्रथमपुरुषनिर्देशात्स इति परोक्षनिर्देशाच्च वादीकरणाभावः । शिष्यं प्रति बोधनं च गम्यत इति खण्डनाद्युक्त-रीत्योपपादनमवधेयम् । **शिष्यशिक्षेति** । शिष्यादिशिक्षेत्यर्थः । **न व्याघात इति** । चार्वाकादेः कथाधिकारो नास्तीति शिष्यं प्रति बोधनपक्षे प्राक् प्रमाणादिसत्तामनभ्युपगम्य शिष्यं प्रति कथाप्रवृत्त्यभावान्न तन्मूलकश्चार्वाकादेः प्रमाणादिसत्तानङ्गीकारिणः कथाधिकारो नास्तीति वचनस्य व्याघात इत्यर्थः । तद्बाधाक्षमत्वादिति खण्डनानुसारी मूलपाठः । तद्बाधश्चार्वाकादिबाधः । चार्वाकादेरयं दोष इति शिष्यज्ञापनं कदा युज्येत यदि तस्य सदोषो बाधनक्षमः स्यात् । न चैवं तस्य कथाप्रवेशाभावेऽनेन दोषेण तद्बाधाया अतत्त्वज्ञानरूपाया अनुपपत्तेस्तथा च तस्य दोषत्वेन शिष्यादिबोधोऽनुपपन्न इत्याशयः । तत्पाठानुसारेण विद्यासागर्युक्तावतारानुसारेण च बाधाक्षमत्वे हेतुमाहेत्येव अवतारपाठः । बोधपदपाठश्चेत्सशिष्यबोधाक्षमत्वमेव पूर्ववाक्यार्थ इति भावेनेति ज्ञेयम् । चार्वाकादिबाधाक्षमत्वं निग्रहस्य कुतः । येन तद्बोधः । शिष्यादीन्प्रत्यनुपपन्नः स्यादित्यतो बोध्यनिग्रहेण तद्बाधासंभवे हेतुमाहेत्यर्थः । **निग्रहस्तस्येति** । अखण्डिताहङ्कारेण पराहङ्कारखण्डनरूपत्वान्निग्रहस्य कथायामेव च निग्रहसंज्ञायाः प्रवृत्तिसिध्या कथाप्रवेशाभावे चार्वाकादेरयं कथानधिकाराख्योऽतत्त्वज्ञानफलकोऽहङ्कारखण्डनरूपो दोष एव न भवतीति शिष्यादिकं प्रति तस्य दोषत्वेन बोधनं न संभवति । तस्य कथाप्रवेशमनङ्गीकृत्यापि तस्यायं दोष इति बोधने व्याघातः । बोधनेन कथाप्रवेशस्याभ्यनुज्ञानसिद्धेरिति फलितोऽर्थः ।

**स०व्र०— न प्रथम इति** । विमतः प्रमाणादिसत्ताऽभ्युपगमपुरःसरः वाग्व्यवहारवत्त्वात् संप्रतिपन्न-वदित्यत्र निर्विशेषणवाग्व्यवहारस्य हेतुत्वे चार्वाकादिव्यवहारे व्यभिचार इत्यर्थः । ननु माध्यमिकादेः शून्यवादितया प्रमाणादिसत्तानभ्युपगन्तृत्वेऽपि चार्वाकस्य प्रत्यक्षरूपप्रमाणसत्ताभ्युपगन्तृत्वात् कथं व्यभिचारः इति चेत् न । सकलप्रमाणसत्ताभ्युपगमो वाग्व्यवहारव्यापकः यत्किञ्चित्प्रमाणसत्ताभ्युपगमो वा । आद्ये चार्वाककथायां, द्वितीये माध्यमिककथायामित्यस्यार्थस्यात्र विवक्षितत्वात् । यद्वा प्रमाणादिपदेन तर्कादेः परिग्रहः । तथा च चार्वाकस्य प्रमाणाभ्युपगमेऽपि तर्काभ्युपगमो नास्तीति व्यभिचार इत्यर्थः । चार्वाकैकदेशी चार्वाक इत्यप्याहुः । ननु माध्यमिकस्य सर्वशून्यत्ववादितया व्यवहारस्याप्यभावात् कुतो व्यभिचार इत्यत आह **तस्येति** । माध्यमिकस्यापि सांवृतो व्यवहारोऽस्ति । अन्यथा प्रसक्त्यभावात् प्रतिषेधासंभवादित्यर्थः । किञ्च कथकवाग्व्यवहारः प्रमाणादि-सत्तास्वीकारपुरःसरः साधनबाधनक्षमव्यवहारत्वात् भाट्टादिव्यवहारवत् । विपक्षे चार्वाकादिव्यवहारवत् साधनादि-क्षमता न स्यादिति द्वितीये अनुमानं प्रयोक्तव्यम् । तत्राद्येऽसमव्यापकयोर्हेतुसाध्ययोर्व्यतिरेकव्याप्तिनियमात् साधनबाधनक्षमव्यवहाराभावेन प्रमाणादिसत्तानभ्युपगमेन प्रवर्तितत्वं व्याप्तमिति चार्वाकादिव्यवहारे त्वया दर्शनीयम् । अनुमानस्य सोपाधिकत्वात् व्यतिरेके उपाधौ च अन्वये मूलशैथिल्यमेवेत्यभिप्रेत्याह **व्यतिरेके चेति** । सद्वचनाभासलक्षणान्यसिद्ध्यादीनि तेषामन्यतमयोगित्वादित्यर्थः । ननु चायं नोपाधिः, सति साध्ये, घटादावसत्त्वेन साध्याव्यापकत्वादिति चेत् । मैवम् । पुरुषस्य श्यामत्वे शाकपाकजत्वस्येव वाग्व्यवहारत्वे सति साधन-बाधनक्षमत्वाभावे सद्वचनाभासलक्षणयोगित्वं प्रयोजकमिति सन्तोष्टव्यम् । केचित्— किञ्च विशिष्टव्यवहारस्यापि

माध्यमिकादिव्यवहार एव व्यभिचारः । ननु माध्यमिकादिव्यवहारः साधनबाधनक्षमो न भवति । प्रमाणादिसत्ताभ्युपगमपुरःसरत्वाभावादित्यनुमानेन हेतोरेवाभावसाधनान्न व्यभिचार इत्याशङ्क्य अनुमानस्य सोपाधिकत्वान्न हेतुव्यतिरेकसाधनत्वमित्याशयेनाह **व्यतिरेके चेति** । साधनबाधनक्षमव्यवहारत्वरूपपूर्वहेतुव्यतिरेके माध्यमिकव्यवहारनिष्ठतया व्यभिचाराभावायोक्तरीत्या साध्यतया विवक्षित इत्यर्थः । सद्वचनं समीचीनप्रयोगः तदाभासो व्यभिचारादिः, तल्लक्षणं साध्यात्यन्ताभावसामानाधिकरण्यादिः, तद्योगित्वमित्यर्थः । सद्वचनाभासशब्देन निग्रहस्थानं विवक्षितं, तल्लक्षणं तत्त्वज्ञानाभावलिङ्गत्वं, तद्योगित्वमित्यर्थ इत्यन्ये इत्याहुः । ननु प्रमाणादिसत्तानभ्युपगतावनिर्णय इत्यत आह **यत इति** । शब्दो द्रव्यमव्यवहितसंबन्धग्राह्यत्वात् पटवदिति । शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपादिवदिति व्यवहाराभ्युपगते प्रमाणसत्तापुरःसरत्वे अन्योन्यमाभासतया प्रतिषेधो दृश्यते । प्रमाणाद्यनभ्युपगम्य प्रवर्तिततत्वस्य साधनाद्यक्षमत्वप्रयोजकत्वे तन्न स्यादिति भावः । ननु यथा कथकव्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वासाधने भवता व्यभिचारादिकमुच्यते तथा तस्य प्रमाणाद्यसत्त्वाभ्युपगमपूर्वकत्वसाधने मयाऽप्याश्रयासिद्ध्यादिकं वक्तुं शक्यत एवेत्याशङ्कते **नन्विति** । यद्यप्येतत् पक्षचतुष्टयदूषणानन्तरमाशङ्कनीयम् । तथाऽपि विलम्बमसहमानेनात्रैवाशङ्कितमिति ध्येयम् । ननु वयं कथापूर्वकाले प्रमाणादिसत्ताभ्युपगमस्याप्रयोजकत्वमाचक्ष्महे. । न तु प्रमाणादीनि न सन्तीत्येवंरूपतदसत्त्वाभ्युपगमस्यापि कथाप्रयोजकत्वेन पूर्वकालसत्त्वं, येनेदं चोद्यं स्यादित्याह **न ब्रूम इति** । ननु प्रमाणादिसत्त्वं त्वया कथापूर्वकाले नाभ्युपगतं, तदसत्त्वमपि यदि नाभ्युपगम्यते, तदा प्रमाणादीनां व्यवहारागोचरत्वप्राप्त्या प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपसमयबन्धाद्यसंभवेन पुनः कथाऽऽरम्भोऽनुपपन्न इत्याशङ्कते **किन्नामेति** । उत्तरमाह **सन्ति न सन्तीत्यादिना** । अत्र कथाशब्द आवर्तनीयः । तथा चेत्थं योजना । यथा स्वीकृत्य तानि भवता व्यवह्रियन्त, समयबन्धादिपूर्वककथाऽऽरभ्यते, तथा सन्ति न सन्ति प्रमाणादीनीत्यस्यां चिन्तायां उदासीनैस्तथाव्यवहारिभिरुपेक्षितसदसत्त्वकप्रमाणैर्व्यवहर्तव्यमित्येव समयबन्धादिरूपव्यवहारवद्भिः अस्माभिरपि कथा प्रवर्त्यतामिति ब्रूम इति । प्रमाणादिसत्ताऽभ्युपगन्त्रा त्वया यादृशसमयबन्धेन कथाप्रवृत्तिरभ्युपगता तादृशसमयबन्धेनैव प्रमाणादिसत्त्वाद्युदासीनेन मयाऽपि कथाप्रवृत्तिरुच्यत इति भावः । **न तृतीय इति** । प्रमाणादिसत्तानभ्युपगमे किमियं कथा नोपपद्यते । कथान्तरं वा । नाद्यः । आरब्धत्वादेव । न द्वितीयः । विमताः कथाः प्रमाणादिसत्तानभ्युपगमपुरःसराः कथात्वात् प्रारब्धैतत्कथावदिति कथान्तरस्याप्युपपत्तेरिति भावः । चार्वाकादेः कथाप्रवेशेऽयं दोषो वक्तव्य इति बोध्यते उत कथातोऽन्यत्र वक्तव्य इति । उभयथाप्यनुपपत्तिरित्याह **तस्येति** । तत्र हेतुमाह **कथायामिति** । कथाप्रवेशो सत्येव तत्त्वज्ञानलिङ्गनिग्रहस्तस्येति विनेयबोधनं संभावितम् । कथातोऽन्यत्र निग्रहाविषयत्वात्, तथा च व्याघात इत्यर्थः ।

**विठ्ठ०**— तत्र तावदाद्यपक्षं दूषयितुं विकल्पेन पृच्छति **आद्येऽपीति** । साधनबाधनक्षमव्यवहार इत्यत्र प्रमाणादिसत्ताभ्युपगमव्याप्त इति ग्राह्यम् । विमतो व्यवहारः प्रमाणादिसत्ताभ्युपगमपूर्वकः व्यवहारत्वात् संप्रतिपन्नवदिति प्रथमविकल्पे अभिप्रेतमनुमानं दूषयति **न प्रथम इति** । चार्वाकादिव्यवहारेषु व्यवहारत्व-





रूपहेतुसत्वेऽप्युक्तसाध्याभावाद्व्यभिचार इति भावः । यद्यपि चार्वाकः प्रत्यक्षप्रमाणसत्तामभ्युपैति तथाऽपि अनुमानादेरेव प्राचुर्येण व्यवहारोपयोगित्वात् तेन च तत्सत्तानभ्युपगमात् तद्विवक्षया व्यभिचारोक्तिरिति ध्येयम् । ननु चार्वाकमाध्यमिकादिव्यवहार एव न सिद्धान्तः कुत्र व्यभिचार इत्यत आह **तस्यैवेति** । चार्वाकव्यवहारोऽपि पक्षकुक्षिनिक्षिप्त इति न तत्र व्यभिचार इत्यत आह **तस्यापीति** । चार्वाकादि-व्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वस्यैवानिश्चितत्वात् बाध इत्यर्थः । विमतो मायिव्यवहारः प्रमाणादि-सत्ताभ्युपगमपूर्वकः साधनबाधनक्षमव्यवहारत्वात् भट्टादिव्यवहारवत् इति द्वितीयपक्षे अभिप्रेतानुमानं दूषयति **द्वितीय इति** । सर्वमिथ्यात्ववादिनो मम प्रमाणादिसत्तानभ्युपगमस्यानुभवसिद्धत्वात् बाध इत्यर्थः । प्राचीनपक्षे बाधस्योक्तेरत्रापि तस्यैव दूषणत्वप्राप्तेस्तादवस्थ्यमित्युक्तम् । मायावादिव्यवहारे साधनबाधनक्षमव्यवहारत्वस्य तत्त्ववादिभिरनङ्गीकारात् स्वरूपासिद्धिश्चानुमानस्येत्यत आह **हेतुश्चेति** । उक्तानुमानप्रामाण्यसिध्यर्थम् अस्मदीय-व्यवहारस्य साधनक्षमव्यवहारतासिद्ध्यङ्गीकारो यदि तर्हि तत एव अस्मदभिमतं प्रपञ्चमिथ्यात्वं सिद्धमित्याह **सिद्धत्वे चेति** । ननु न हि मायावादिव्यवहारः प्रमाणादिसत्ताभ्युपगमपूर्वकः साधनबाधनक्षमव्यवहारत्वात् इति साध्यते येन बाधासिद्धी स्यातां किन्तु विमतो मायिव्यवहारो न साधनादिक्षमः प्रमाणादिसत्ताभ्युपगम-पूर्वकताराहितत्वात् चार्वाकादिव्यवहारवत् इत्युक्तसाध्यव्यतिरेकेण साधनव्यतिरेक एव साध्यते तेन साधना-द्यक्षमतदीयव्यवहारेण न प्रपञ्चमिथ्यात्वसिद्धिरित्यत आह **व्यतिरेके चेति** । प्रागुक्तानुमानवैपरीत्येनानुमाने । सद्वचनवदाभासते इति सद्वचनाभासः तस्य यल्लक्षणं व्यभिचारादिदोषयुक्तहेत्वादिप्रतिपादनरूपत्वं योग्यताराहित्यादिशब्ददोषयुक्तं वा तद्योगित्वं सद्वचनाभासलक्षणयोगित्वं तदत्रोपाधिः स्यात् यत्र साधनादिक्षमत्वाभावः तत्र सद्वचनाभासलक्षणयोगित्वमिति चार्वाकादिव्यवहारे दृष्टत्वेन साध्यव्यापकत्वात् साधनवति मायावादिव्यवहारे उपाध्यभावस्य तेनाङ्गीकारादिति भावः । उपाधिरेव साध्ये प्रयोजको न हेतुरित्येत-त्कुत इत्यत आह **यत इति** । यदि साधनाद्यक्षमतायां प्रमाणाभ्युपगमपूर्वकत्वाभाव एव प्रयोजकः स्यात् तर्हि प्रमाणादिसत्ताभ्युपगन्तॄणां तार्किकादीनां वेदपौरुषेयत्वादिव्यवहाराः साधनबाधनक्षमा एव स्युः । वेदापौरुषेयत्वादिमतानुसारिभिरपरैर्मीमांसकादिभिः तथात्वे च प्रमाणादिसत्ताभ्युपगन्तृभिरेव मीमांसकादिभिः तार्किकादिव्यवहाराः साधनाद्यक्षमा इति न कथ्येरन् कथ्यन्ते चाभ्युपगतप्रमाणादिसत्त्वैर्वेदापौरुषेयत्वादि-मतानुसारिभिरपरैर्मीमांसकादिभिः प्रमाणादिसत्तामभ्युपगम्यापि प्रवर्तिताः तार्किकादिव्यवहाराः साधनाद्यक्षमा इति तेन ज्ञायते साधनाद्यक्षमरूपे साध्ये उपाधिरेव प्रयोजको न हेतुरिति भावः । नन्वयमुपाधिर्न साधनाद्भिद्यते साधनं हि प्रमाणादिसत्ताभ्युपगमपूर्वकताराहित्यं प्रमाणादीनां च सत्त्वाभावे व्यवहाराख्यस्य धर्मिणस्तद्गतदूषणादिव्यवस्थाया-श्चासिध्या तादृग्व्यवहारत्वरूपे वचनस्यापि सद्वचनाभासलक्षणयोगित्वमेव तथाच प्रमाणादिसत्ताभ्युपगमपूर्वकता-राहित्यरूपसाधनमेव सद्वचनाभासलक्षणयोगित्वमिति नायमुपाधिरित्याशयेन शङ्कते **ननु यदीति** । सिद्धान्तग्रन्थे स्पष्टोऽयमर्थः । प्रमाणाधीनत्वादित्यतःपरं तस्मान्नोपाधिस्साधनाद्भिद्यत इति शेषः । प्रमाणसत्तानङ्गीकारेणापि तत्सत्त्वासत्त्वोदासीनसमयबन्धेन कथाव्यवहारस्वरूपनिर्वाहोपपत्त्या तत्सिद्धिसंभवेन तत्प्रकारकवचनस्य सद्वचना-भासलक्षणयोगित्वाभावात् उपाधिस्साधनाद्भिन्न एवेत्याशयेन परिहरति **मैवमिति** । न हि वयं प्रमाणादीनि न

सन्तीति तदसत्त्वमङ्गीकृत्य तत्प्रकारकसमयबन्धेन कथारभ्येति ब्रूमः किं नाम यथा भवता तानि प्रमाणादीनि स्वीकृत्य प्रमाणादिसत्त्वमङ्गीकृत्येति यावत् तादृशसमयबन्धेन व्यवह्रियते तथा प्रमाणादीनि सन्ति न सन्ति इत्यस्यां चिन्तायां प्रमाणादिसदसत्त्वविचारे उदासीनैः व्यवहर्तृभिः कथा प्रवर्त्यतामिति समयबन्धेनैवेति ब्रूम इत्यर्थः । यद्वा अस्यां चिन्तायां उदासीनैः कथा आरभ्येति पूर्ववृत्त्यान्वयः । एतदेवोपपादयति **यथेति** । यथेति विद्यमानत्वात् तथेत्यध्याहार्यम् । तथा व्यवहारिभिरित्यत्र तथेत्यनेन पूर्वोक्तव्यवहारप्रकारपरामर्शः । तथाच तानि प्रमाणादीनि सत्त्वेन स्वीकृत्य भवता व्यवह्रियन्ते तादृशव्यवहारनियमे समयं बध्वा आरभ्यते तथा व्यवहर्तृभिरुपेक्षितसदसत्वप्रमाणवै : व्यवहर्तव्यमित्येव समयबन्धादिरूपव्यवहारवद्भिः अस्माभिरपि कथा प्रवर्ततामिति ब्रूम इति संबन्धः । ननु यदि प्रमाणादीनि न सन्ति इत्यादिना यदुक्तं तत् स्वव्याहतं चेति वक्तुमाह **किञ्चेत्यादिना** । उतेति वादिप्रतिवादिभ्यामुभाभ्यामपि प्रमाणादीनामसत्त्वमभ्युपेत्य प्रवृत्तायामित्यर्थः । अङ्गीकृतेत्यतःपरं प्रवर्तितायां कथायामिति संबध्यते । पक्षत्रयेऽपीदं दूषणमुक्तं भवतेत्यनुषञ्जनीयम् । **एतादृक्पर्यनुयोगेति** । यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिध्येदित्येतादृशप्रतिक्षेपानवकाशात् प्रमाणादिसत्त्वाङ्गीकारेणापादकाभावादिति भावः । **स्वस्यापीति** । यदि प्रमाणादीनि न सन्ति तर्हि व्यवहार एव धर्मी कथं सिध्येदिति दूषणं परं प्रति वदता प्रतिवादिना स्वेनापि प्रमाणाद्यसत्त्वस्यैवाङ्गीकारेण स्वस्याप्येतद्दूषणापत्तेरित्यर्थः । **न तृतीय इति** । एकेन प्रमाणादिसत्त्वमपरेणासत्त्वमङ्गीकृत्य प्रवृत्तायां कथायां परेण प्रमाणादिसत्त्वानङ्गीकारे व्यवहार एव धर्मी न सिध्येदिति इदं दूषणमुक्तमिति तृतीयः पक्षः न युक्तः यथा मया एकेन प्रमाणसत्तानभ्युपगमेऽपि परकृतैतद्दूषणाधिकरणकथारूपव्यवहाराख्यो धर्मी सिद्धः तथैव मया प्रमाणादिसत्त्वानभ्युपगमेऽपि ब्रह्मातिरिक्तविश्वमिथ्यात्वापादककथान्तररूपधर्मिसिद्धिप्रसक्तेरित्यर्थः । अस्त्वेवं पक्षत्रयस्यानुपपत्तिस्तथापि यदि प्रमाणादीनि न सन्ति इत्यादेः किं दूषणमायातमित्यत आह तस्मात्पक्षत्रयस्यायुक्तत्वादिति । **तथाच व्याघात इति** । स्वयमेव प्रमाणादिसत्ताभ्युपगममन्तरेण तदौदासीन्येनैव कथाप्रवृत्तिमङ्गीकृत्य प्रवर्तितायां कथायां प्रमाणादिसत्त्वानभ्युपगमे कथारूपधर्मी न सिध्येदित्यभिधाने तु व्याहतिरिति भावः । ननु प्रमाणादिसत्ताभ्युपगमे कथानधिकारो न परं प्रति कथायां प्रतिपाद्यते येन कीदृशी मर्यादामवलम्ब्य प्रवृत्तायां कथायां इत्यादिविकल्पदूषणं सङ्गच्छेत किं नाम प्रमाणादिसत्तानभ्युपगन्तुः कथाधिकार एव नास्तीति शिष्यान् सब्रह्मचारिणः प्रति वा सयुक्तिकं निरूप्यते अतो न व्याहतिरित्याशङ्क्य निषेधति **न चेति** । कस्य कथानधिकारोऽभिधीयते । अतः चार्वाकादेः प्रमाणादिसत्तानभ्युपगन्तुः अनधिकार इति वक्तव्यं तथा चैवमभिधानं शिष्यादिबोधनाय कथमुपयोगि स्यादित्यर्थः । **कथं चेति** । तस्य चार्वाकादेः कथाप्रवेशानन्तरमेतद्दूषणमुच्यते उत तस्य कथाप्रवेशाभावदशायाम् । नाद्यः इयमेव कथा कीदृशी मर्यादामवलम्ब्य प्रवृत्तेत्याद्युक्तिविकल्पदूषणप्रसङ्गेनास्योपदेशस्य शिष्यावबोधाक्षमत्वात् । न द्वितीयः कथायामेव पराहङ्कारखण्डनस्य निग्रहलक्षणत्वेन चार्वाकादेः कथाप्रवेशाभावे तं प्रति दूषणाभिधानं न युक्तमिति शिष्यो मन्यते इत्येतस्याप्युपदेशस्य तद्बोधाक्षमत्वात् तथाच शिष्यादीन्प्रत्यपि न परस्यानधिकारज्ञापनं युक्तमिति भावः ।

**चषकः**—— आद्येऽपि व्यवहारत्वावच्छेदेन तादृशसाध्यनिरूपिता व्याप्तिरुत सिषाधयिषितार्थगोचरप्रतिपत्त्यौपयिकत्वतद्विपरीतार्थगोचरतज्जनकत्वरूपसाधनबाधनक्षमव्यवहारत्वावच्छेदेनेति कल्पद्वयमभिप्रेत्याह





**आद्येऽपीत्यादिना** । प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वतदभावकोटिकशङ्काऽस्कन्दितव्यवहारे व्यवहारत्वेन भट्टादिव्यवहारं निदर्शनीकृत्य तदुपगतिपूर्वकत्वसाधनेऽनैकान्त्यमभिधत्ते **प्रथम इति** । यद्यपि माध्यमिकस्य विश्वालीकत्वोपगन्तृतया तन्मतदिशाऽनैकान्त्यस्य सूपपादत्वेऽपि चार्वाकस्य प्रत्यक्षप्रमाणसत्यतोरीकर्तृतया तद्दिशा तस्य दुरुपपादतैव । तथापि प्रमाणसामान्यसत्तोपगतिपूर्वकत्वं कतिपयतदुपगमपूर्वकत्वं वा सिषाधयिषितम् । आद्ये चार्वाकदिशाऽन्त्ये माध्यमिकदिशेति ग्रन्थसङ्गमनात् । ननु व्यभिचारनिरूपकाधिकरणस्यैव दुर्मिलतया अनैकान्त्यस्य दुरुपपादतेत्यत आह **तस्यैवेति** । त्वदीयनये तदभिहितयुक्तिप्रतिविधानानुपपत्तिरेव तादृशाधिकरणप्रमापिकेत्यर्थः । **तस्यापि** । चार्वाकमाध्यमिकादिव्यवहारस्यापि । **पक्षत्वे** । ऊरीकृते । तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतन्निदर्शनकसाधनबाधनान्यतरक्षमव्यवहारत्वलिङ्गकानुमानं दर्शितसाध्यसाधनाभावयोश्चार्वाकादिव्यवहारेषु गृहीतव्याप्यव्यापकभावतया यद्ययमुक्तसाध्यव्यतिरेकवान् स्यात्तदा तद्व्यापकसाधनव्यतिरेकवान् स्यान्न च तादृशः अतो न साध्यव्यतिरेकवानित्यप्रयोजकताशङ्कानिरासकबाधकतर्कसचिवं द्वितीयकल्पीयमाशङ्क्य प्रतिविधत्ते **द्वितीय इति** । यं प्रत्यनुमिमीते तन्मतदिशा बाध इति भावः । उभयसंप्रतिपन्नेन हेतुना तादृशे धर्मिणि सन्दिग्धं साध्यं साधनीयमिति परीक्षकाणां कुलधर्म इत्यन्यतरदिशाऽसिद्धिमभिधत्ते **हेतुरिति** । तव तत्त्ववादिनः । किञ्च विशिष्टव्यवहारत्वेनोक्तसाध्यसाधनेऽप्रयोजकता । न च यद्ययं तत्सत्ताऽभ्युपगतिपूर्वको न स्यात्तदा तत्पूर्वकत्वाभावव्यापकविशिष्टव्यवहारत्वाभाववान् स्यान्न चायं तदभाववान् अतस्तत्सत्तोपगतिपूर्वक इति बाधकतर्कात्तन्निवृत्तिरिति वाच्यम् । तर्काङ्गान्वयव्याप्तावुपाधिमत्तया दूषितायां तदनवतारादित्यनुसन्दधानस्तत्र व्यभिचारादिदोषदूषितत्वस्य, निग्रहस्थानयोगित्वस्य वोपाधितामाह **व्यतिरेके चेति** । प्रकृतसाधनव्यतिरेकलक्षणापाद्य चेत्यर्थः । दर्शितोपाधेर्वाग्व्यवहारत्वरूपपक्षधर्मावच्छिन्नोक्तापाद्यव्यापकतया तादृशापादकवति माध्यमिकादिव्यवहारेऽसत्त्वेन तदव्यापकतया चोपाधितानिर्वाहात् तर्काङ्गव्याप्तिविरहेण तदनवतारादप्रयोजकमनुमानमिति भावः । स्फुटीकरिष्यति च सिद्धान्तेऽन्वय एवायमुपाधिरिति व्याकर्तारः । विशिष्टव्यवहारत्वस्यापि माध्यमिकव्यवहार एव व्यभिचारः । ननु माध्यमिकादिव्यवहारः, साधनबाधनक्षमो न भवति, प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावाद्रथ्यापुरुषवाग्व्यवहारवदित्यनेन तत्र हेत्वभावसिद्धेर्न व्यभिचार इत्याशङ्कायामस्यानुमानस्य सोपाधिकत्वान्नोक्तहेत्वभावसाधकत्वमित्याशयेनाह **व्यतिरेकेति** । साधनबाधनक्षमव्यवहारत्वरूपपूर्वहेतुव्यतिरेके माध्यमिकादिव्यवहारनिष्ठतया व्यभिचाराय साध्यतया विवक्षित इत्यर्थः । यद्वा व्यतिरेके पूर्वानुमानव्यतिरेकव्याप्तावित्यर्थ इति व्याकुर्वते । उपाधेस्तादृशापाद्यप्रयोजकतां व्यनक्ति **यत इति** । मतान्तरानुसारिभिर्नैयायिकैः मतान्तरानुसारिभिरपरैर्मीमांसकैः । इत्थं च कथकयोर्नैयायिकमीमांसकयोः प्रमाणादिसत्तोरीकर्तृतया तदीयव्यवहारे तत्सत्तोपगतिपूर्वकताराहित्यरूपापादकविरहेऽपि दर्शितापाद्यस्योक्तोपाधिनिबन्धनस्य सत्त्वेनोपाधिरेवापाद्ये प्रयोजको नापादकमिति प्रकृतानुमानेऽप्रयोजकतानिरासकतर्काङ्गभूतव्याप्तिविरहनियन्त्रिततदनवतारेणाप्रयोजकमुक्तानुमानमिति भावः । ननु प्रमाणादीनां सत्तां यदि नाभ्युपेयात् तदा सदसत्तामेवोपैषीदिति प्रमाणानामेवासत्त्वे व्यवहाररूपधर्मिणः साधनदूषणनिष्ठायाश्चासिध्यापत्त्या सद्वचनाभासलक्षणयोगितारूपोपाधिरेव पक्षे प्रासाङ्क्षीदित्यापादकव्यापकतया नोपाधिता सङ्गच्छत इत्याशङ्कते **नन्विति** । ननु प्रमाणधर्मिकसत्ताप्रकारकोपगतेरिव तदसत्तोपरक्तोपगतेरपि कथातः

प्रागनुपगमेनानिवर्चनीयत्वाख्यविधान्तरोपगमेनैवोक्ताखिलनिर्वाहान्न क्षतिरित्याशयेन समाधत्ते **मैवमिति**। उदासीनैः तादृशौपगतिद्वयविनिर्मुक्तैः । इदं च कथाऽऽरभ्येति पूर्वेणान्वेति । तथा व्यवहारिभिः प्रमाणानां सत्त्वासत्त्वेऽनुपेत्यैव व्यवहर्तव्यमिति समयं बद्धद्भिरस्माभिरपि । इतीति ब्रूम इत्यनेनान्वेति । यदीत्यादिग्रन्थेनाभिहितं दूषणं स्वव्याहतमित्यभिधित्समानः पीठिकामारचयन् परलपनेनैव भाषयते । किञ्चेत्यादिकवाच्यमित्यन्तेन । **स्वस्यापीति**। प्रसञ्जकस्य तदसत्तोरीकारस्य स्वसाधारण्यादिति भावः। **तथैव कथान्तरेति**। वादिप्रतिवाद्युभयत्वपर्याप्त्यधिकरणेन तत्सत्ताऽनङ्गीकृतावपि तदन्यतरमात्रेण तदूरीकृत्यैव निखिलकार्यनिर्वाहो यथा भवदुपगतस्तथा तत्सत्तायास्तदूरीकृत्यगोचरत्वेऽपि अन्यतरतदूरीकारगोचरतयैवाखिलकार्यनिर्वाहः सङ्गच्छत इति भावः । **व्याघात इति** । तत्सत्तोपगतिमन्तरेणापि कथाप्रवृत्तिमुपेत्येतरं प्रति तदनुपगमे तदनिष्पत्त्यापादने व्याहतिरित्यर्थः । कथकताऽऽपन्नप्रतिवादिबोधोद्देश्यिका नेयमुक्तिः किन्तु तदनापन्नविनेयबोधोद्देश्यिकैवेति न क्षतिरित्याशङ्क्य प्रत्याख्याति **न चेति**। **कथं च तथेति**। विनेयादिबोधनं कया विधया स्यादित्यर्थः। तस्य चार्वाकादेः तद्बोधेति । विनेयस्येति पूरणीयम् । कथायां प्रविष्टं चार्वाकं प्रति नेदं सुवचम् । कया विधयेयं कथा प्रावर्तिष्टेति विकल्पानामुत्थितेः । तदप्रविष्टं प्रति तु तदुर्वचमिति विनेयेनापि सुवचत्वान्न तेनापि सुबोधमेतदिति भावः। तत्र बीजमाह **कथायामेवेति**। निग्रहलक्षणस्य कथाघटितत्वादिति भावः।

**प्रदीपः**— तत्र किं व्यवहारमात्रस्याविनाभावः किं वा विशिष्टस्येति प्रथमविकल्पे विकल्पः साधकत्वं स्वपक्षमिति जनकत्वं बाधकत्वं तु परपक्षप्रतिषेधप्रमितिजनकत्वमिति विकल्पक्रमेणापाकरोति **नेत्यादिना**। विमतः प्रमाणादिसत्ताङ्गीकारपुरस्सरः व्यवहारत्वात्संप्रतिपन्नवदित्यत्र निर्विशेषणव्यवहारस्य हेतुत्वे चार्वाकादिव्यवहारे व्यभिचार इत्यर्थः । ननु चार्वाकस्य प्रत्यक्षप्रामाण्यान्माध्यमिकस्य सर्वशून्यतया व्यवहारस्याप्यभावात् कुतो व्यभिचार इत्यत आह **तस्येति**। यद्यपि चार्वाकः प्रत्यक्षमेकं स्वीकुरुते तथाऽप्यनुमानादिभिर्व्यवहारं नैव तत्सत्तां न मनुते माध्यमिकस्यापि संव्यवहारोऽस्ति अन्यथा प्रसक्त्यभावात् तत्प्रतिषेधासंभवादिति भावः। **तस्यापीति**। चार्वाकादिव्यवहारस्यापि पक्षीकरणे तत्रैव भागे बाध इत्यर्थः। व्यवहारमात्रस्य साहित्यनियतिं न ब्रूमः किन्तु विशिष्टव्यवहारस्येति कथकवाग्व्यवहारः प्रमाणादिसत्ताव्यवहारपुरस्सरः साधनबाधनयोरन्यतरपक्षव्यवहारत्वात् भाट्टादिसंप्रतिपन्नव्यवहारवत् विपक्षे चार्वाकादिव्यवहारवत् साधनादि क्षमता स्यादिति द्वितीयं कल्पमाशङ्क्याह **द्वितीय इति**। मध्यव्यवहारस्य साधनबाधनक्षमत्वं त्वयाभ्युपगम्यते न वा। नोभयथाप्यनुमानं संभवतीत्याह **हेतुश्चेति** । असमव्याप्तिकयोः अन्वयव्याप्तिवैपरीत्येन व्यतिरेकव्याप्तिनियमात् साधनबाधनक्षमव्यवहारस्य सत्ताभ्युपगमव्याप्तत्वे सति साधनबाधनक्षमव्यवहाराभावेन प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं व्याप्तमिति चार्वाकादिव्यवहारे त्वया दर्शनीयम् तदशक्यदर्शनं सोपाधिकत्वात्तत्संबन्धस्यापि पक्षे बाधकस्याप्येतेन मूलशैथिल्यमुक्तमेवेत्यभिप्रायेणाह **व्यतिरेके चेति** । विमतो व्यवहारसाधनबाधनक्षमो न भवति प्रमाणादिसत्त्वमनभ्युपगम्य प्रवर्तितत्वात् उन्मत्तवाक्यवदित्यत्रान्वय एवोपाधिरिति मन्तव्यम् । सद्वचनाभासलक्षणान्यसिद्ध्यादिलक्षणानि तेषामन्यतमयोगित्वमित्यर्थः । ननु सद्वचनाभासलक्षणयोगित्वं नोपाधिः सति साध्ये घटादावसत्त्वेनाव्यापकत्वात् । ननु गर्भस्थो मैत्रीतनयः श्यामः मैत्रीतनयत्वात्संप्रतिपन्नमैत्रीतनयवदिति । अत्र





शाकाद्याहारपरिणतिपरंपराजन्यत्वमपि नोपाधिः स्यात् । इन्द्रनीलादौ सति साध्ये तदभावात् । ननु पुरुषश्यामत्वे शाकाद्याहारपरिणतिजन्यत्वं प्रयोजकमिति विशिष्टस्तर्हीहापि वाग्व्यवहारत्वे सति साधनबाधनक्षमत्वे सद्वचनाभासलक्षणयोगित्वं प्रयोजकमिति सन्तोष्टव्यम् । ननु प्रमाणाद्यनभ्युपगम्य प्रवर्तितसद्वचनाभासलक्षणयोः सतोः कस्तत्रान्यतरप्रयोजकत्वनिर्णय इत्यत आह **यत इति** । शब्दो द्रव्यं व्यवहितसंबन्धग्राह्यत्वात् घटवदिति, शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपवदिति च व्यवहारस्याभ्युपगतप्रमाणसत्तापुरस्सरत्वेऽपि अन्योन्याभासतया प्रमितो न वा । न चेदाश्रयासिद्धिः । प्रमितश्चेत् धर्मिग्रहग्रस्तमनुमानं नोत्पत्तुमलं न सन्ति प्रमाणादीनिति प्रतिज्ञाहानिश्चेति चोदयति **नन्विति** । प्रमाणाधीनत्वात्प्रमेयसिद्धेः दूषणादिविभागोऽपि प्रमाणाभावेन स्यादित्याह **दूषणेति** । प्रमाणाद्यसत्त्वे धर्म्याद्यसिद्धिरेव कृत इत्यत आह **सर्वेति** । विधिर्भावो निषेधोऽभावः । आदिपदेन दूषणभूषणतद्विभागादिसङ्ग्रहः । प्रतीतमात्रेण न धर्मित्वं न वा प्रमितत्वं न विशेषणवैयर्थ्याद्व्यावहारिकप्रामाण्याभ्युपगमाच्च न विरोध इति । परिहरति **मैवमिति** । यथा तानि प्रमाणादीनि स्वीकृत्य भवता व्यवह्रियन्ते तत्र तथेत्यतस्तच्छब्दो यच्छब्दोपादानादेव द्रष्टव्यः । तथा प्रमाणादीनि सन्ति न सन्तीत्यस्यां चिन्तायामुदासीनैरुपेक्षितसदसत्त्वप्रमाणमात्रमूलैस्तथा व्यवहारिभिः तथा प्रवर्त्यतामिति ब्रूम इति । कथायामेव दूषणस्य कथनीयत्वात्सत्तामूलैव कथेति नियमवादिनः तदनुगुणा न संभवतीत्येतत् प्रश्नमुखेनोपपादयति **किञ्चेति** । सामान्यतो ज्ञातः संभवादनेककोटितया विशेषतो ज्ञातः सन्दिग्धश्चार्थः । प्रष्टव्यः । इह पुनः तथाभावाभावात्कथमयं प्रश्न इत्याशङ्क्य तथाभावं दर्शयति **किमित्यादिना** । प्रमाणादिसत्तामनभ्युपगन्तुः कथामूलतया प्रमाणादिसत्ताभ्युपगमे कथारम्भ एवापसिद्धान्तेन निगृहीतत्वात् अनुत्पन्नसमैव कथा स्यादिति अपरितोषात्कल्पान्तरमाह **उतेति** । उभाभ्यां वादिभ्यां प्रवर्तितायामित्युपरितनकल्पनाद्वयेऽप्यनुषङ्गः । असत्त्वाभ्युपगमे तु सद्वादिनो निग्रह इति तदुभयोचितं कल्पान्तरमाह **अथेति** । विकल्पक्रमेण निराकरोति **नाद्य इति** । कुत इत्यत आह **हीति** । अभ्युपगतं प्रमाणादीनां सत्त्वं येन परं प्रति तादृक्पर्यनुयोगस्य प्रमाणादीनामसत्त्वे धर्म्यसिद्धिर्दूषणादिविभागासिद्धिः सर्वपदानां नास्तीति निषेधस्यास्तीति विधेः भावादेश्च प्रमाणायत्तत्वादितिरूपस्य चोद्यस्यानवकाशात् निरनुयोज्यानुयोगो नाम निग्रह इत्यर्थः । अस्तु तर्हि द्वितीयो निवेद्यत्वादित्यत आह **नेति** । परस्यात्मनोऽपि धर्म्याद्यसिद्ध्यापादकन्यायस्य तुल्यतया जात्युत्तरत्वं पर्यनुयोगानवकाशश्चेत्यर्थः । एतेन सत्त्वमपरेणासत्त्वमुपेत्य प्रवर्तितायामिति कल्पं दूषयति **नेति** । प्रमाणादिसत्तानभ्युपगमे किमियं कथा नोपपद्यते कथान्तरं वा । नाद्यः आरब्धत्वादेव । न द्वितीयः विमताः कथा अनभ्युपगमपुरस्सर्यः कथात्वात्प्रारब्धेतरकथावदिति भावः । प्रमाणादिसत्ता सत्तौदासीन्येन समबलत्वात् प्रवृत्तायां कथायां भवतेदं दूषणम् उक्तं मन्तव्यम् । तथा च तद्वदेव कथान्तरमपि स्यादिति विचारफलमुपसंहरति **तस्मादिति** । सत्तानभ्युपगमे कथानधिकारो न कथायां प्रतिपाद्यते किन्तूपदेशद्वारेण शिष्यशिक्षापरं क्रियते नातो व्याघात इत्याशङ्क्य तस्य कथाधिकारानधिकारयोरेतदवद्यं तस्येति शिष्यबोधनं न संभवतीति परिहरति **न चेति** । शिष्यादय इत्यादिपदेन पुत्रादिसङ्ग्रहः । चार्वाकादेः कथाप्रवेशोऽयं दोषो वक्तव्य इति बोध्यते उत कथातोऽन्यत्र वक्तव्य इति । उभयथापि अनुपपत्तिरित्याह **तस्येति** । बोधाक्षमत्वे हेतुमाह **कथायामिति** । कथाप्रवेशे सत्येव तत्त्वज्ञानलिङ्गान्निग्रहस्तस्येति विनेयबोधनं संभवति । कथातोऽन्यत्रवादिनो निग्रहाविषयत्वात्तथाच व्याघात इत्यर्थः ।

**२६६ सु०— न द्वितीयः । स्यादप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्तानभ्युपगमे निवर्तेत । न त्वेवं संभवति । तथा सति तत्सत्तानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत । हेत्वनुपपत्तेः । अथ मन्यसे । कथकवाग्व्यवहारं प्रति हेतुत्वात्प्रमाणादीनां सत्त्वम् । सत्त्वाच्चाभ्युपगमो यत्सत्तदभ्युपगम्यत इति स्थितेरिति मैवम् । कयाऽपि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात्प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः । कथातः पूर्वं तु तत्त्वावधारणं परपराजयं वाऽभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यम् । तच्च व्यवहार-नियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां संभाव्यत इति व्यवहारनियममेव बध्नीतः । स च प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपः । न च प्रमाणादीनां सत्ताऽपीत्थमेव ताभ्यामङ्गीकर्तुमुचिता । तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः । प्रमाणादिसत्ता-मभ्युपेत्यापि तथाविधव्यवहारनियमव्यतिरेकेण कथाप्रवृत्तिं विना तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य कथकयोरपर्यवसानात् ।**

**परि०—** प्राग्विकल्पितकल्पचतुष्टयमध्ये कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावादिति पक्षं निराह **न द्वितीय इति** । **हेत्वनुपपत्तेरिति** । प्रमाणादेः सत्त्वानङ्गीकारे कारणायोगादित्यर्थः । **तच्चेति** । तत्त्वावधारणादि च संभाव्यत इत्यन्वयः । **व्यवहारेति** । पञ्चावयवत्र्यवयवादिप्रमाणतर्कादिव्यवहार-विषयसमयबन्धादेवेत्यग्रे व्यक्तम् । समयः सङ्केतः । इत्थमेव । व्यवहारनियमवदेवेत्यर्थः ।

**यादु०—** प्रमाणादिसत्ताऽभ्युपगमस्य कथकवाग्व्यवहारं प्रति हेतुत्वात्कथातः पूर्वं तदभ्युपगतिरिति द्वितीयपक्षं प्रतिषेधति **न द्वितीय इति** । वाग्व्यवहारं प्रति प्रमाणादीनां हेतुत्वं संभाव्येतापि न तु तत्सत्ता-ऽभ्युपगमस्यापि, माध्यमिकवाग्व्यवहारे व्यतिरेकव्यभिचारादित्यर्थः । ननु प्रमाणादीनां हेतुत्वं यदि मनुषे तदा तत्सत्ताऽभ्युपगमस्यापि हेतुत्वं मंस्यसे । यतो नियतपूर्वसत्त्वं हेतुत्वम् । तच्चावश्याभ्युपेयमित्यवर्जनीयासङ्ग एव प्रमाणादिसत्ताभ्युपगमः कथातः पूर्वमित्याशङ्कते **अथेति** । यद्यदा सत्तया ज्ञायते तत्तदाऽभ्युपगम्यत इति व्याप्तेरुभयसिद्धत्वादिति भावः । प्रमाणादीनि सन्ति हेतुत्वाद्ब्रह्मवत् । प्रमाणादीन्यभ्युपगमविषयाः सत्त्वाद्ब्रह्मवदिति यस्यां कथायां त्वया साधनीयं सा किमुक्तविधया प्रमाणादिसत्ताऽभ्युपगमे प्रवृत्ता । उत तदनभ्युपगमेऽपि समयबन्धमात्रात् । आद्येऽन्योन्याश्रयः कथाप्रवृत्तौ सत्ताऽभ्युपगमसिद्धिस्तत्सिद्धौ च कथाप्रवृत्तिरिति । द्वितीये त्वाह **कथाऽपीति** । अग्रे वक्ष्यमाणयेत्यर्थः । नियमस्थितिः समयबन्धः । भवता प्रसाध्येत्यनन्तरं तथा च तद्वदेव कथान्तरप्रवृत्तिसंभवेनास्मदिष्टसिद्धिरिति वाक्यशेषः । कयाऽपि नियमस्थित्येत्यनेन समयबन्धस्य कथापूर्वकत्वं सत्त्वमावश्यकमित्युक्तं तदपि कुत इत्यतस्तत्कल्पकं वक्तुमाह **कथात इति** । कथातः पूर्वं समयबन्धाभ्युपगम-





कल्पकं कथाफलमेवास्तीत्यर्थः । केचित्तु । ननु प्रमाणादिसत्ताऽभ्युपगमवत्समयबन्धोऽपि कथायां तन्त्रमेवेत्यत आह । कथात इतीत्यप्याहुः । **व्यवहारनियमेति** । व्यवहारनियमरूपसमयबन्धादित्यर्थः । **द्वाभ्यामिति** । अनेन कथातः पूर्वं समयबन्धाभ्युपगम उभयसंमतो, न प्रमाणादिसत्ताऽभ्युपगम इव हेतुना साध्य इति सूचितम् । तेन कथायामेव, समयबन्धः पूर्वमावश्यक इति केनचिद्धेतुना साधनीयम् । कथा च समयबन्धाधीनेति परस्पराश्रयो-ऽन्तरेण च तं कथैष्टव्येति शङ्का निराकृतेति ध्येयम् । अनुरोध्यं समयबन्धं दर्शयति **स चेति** । वादिनेव साधकेन प्रथमप्रयोक्त्रा । प्रमाणतर्काभ्यां व्यवहर्तव्यम् । वादाभिप्रायमेतत् । जल्पादौ छलादिप्रयोगस्यापि संभवात् । प्रायिकत्वापेक्षया वेदमुक्तम् । सत्साधनापरिस्फूर्तिदशायामेव कदाचिच्छलोपादानात् । इत्यादीत्यनेन प्रतिवादिनाऽपि कथाऽङ्गतत्त्वज्ञानविपर्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमं निग्रहस्थानं तस्य प्रदर्शनीयम् । तद्व्युत्पादने प्रथमस्य भङ्गो व्यवहर्तव्यः । अन्यथा तु द्वितीयस्यैव । तादृशेतरौ च जेतृतया व्यवहर्तव्यौ । प्रामाणिकः पक्षः तत्त्वतया व्यवहर्तव्य इत्यादिरूपसमयबन्धसङ्ग्रहः । ननु प्रमाणासत्ताऽपि तथैवानुरुध्यतामित्यत आह **न चेति** । समयबन्धस्यावश्यकत्वात्तन्मात्रमनुरोध्यं न तु प्रमाणाद्यभ्युपगमोऽपि कल्पनागौरवप्राप्तेरित्यर्थः । **कथाप्रवृत्तिं विनेति** । कथाप्रवृत्त्यभाव इत्यर्थः ।

**वं०प०— स्यादप्येवमिति** । अपिः संभावनायाम् । कथकप्रवर्तनीयकथारूपवाग्व्यवहारं प्रति प्रमाणादि-सत्ताभ्युपगमस्य हेतुत्वं तदा संभावितं स्यादित्यर्थः । वाग्व्यवहारस्वरूपं वाग्व्यवहाररूपकथास्वरूपम् । कुत इत्यत आह **हेतुतेति** । प्रमाणादिसत्ताभ्युपगमरूपकारणानुपपत्तेस्तदभावादित्यर्थः । स्थितिर्व्याप्तिः । **कयाऽपि नियमस्थित्येति** । प्रमाणेन तर्केण च व्यवहर्तव्यमित्येवंरूपे व्यवहारनियमे यः समयबन्धः सङ्केतकरणं तेन प्रवृत्तायामित्यर्थः । **तच्चेति** । अभिलषितमित्यर्थः । **स चेति** । व्यवहारनियम इत्यर्थः । **प्रमाणादिसत्ताऽपीत्थ-मेवेति** । यथा प्रमाणेन तर्केण च व्यवहर्तव्यमिति व्यवहारनियमे समयबन्धो द्वाभ्यां क्रियते एवमेव सद्भिरेव प्रमाणै-र्व्यवहर्तव्यमिति समयबन्धः क्रियतामित्यर्थः । **तादृशेति** । प्रमाणेन तर्केण च व्यवहर्तव्यमित्येवंरूपेत्यर्थः । **उपपत्तेरिति** । प्रमाणादीनां सत्ता नाङ्गीकर्तुमुचितेत्याशयः । **प्रमाणादिसत्तामित्यादि** । अयं भावः । यः प्रमाणादिसत्तां कथाप्रवृत्तिकारणमङ्गीकरोति । तेनाप्युक्तव्यवहारनियमसमयबन्धस्तावदवश्यमङ्गीकर्तव्यः । तद्व्यतिरेकेण कथाप्रवृत्त्यभावेनाभिलषितस्य तत्त्वनिर्णयादेरनिष्पत्तेः । तथा चावश्यकल्प्यमाननियतपूर्ववर्तिनः समयबन्धादेव कथाप्रवृत्तिरूपकार्यसंभवे तत्सहभूतस्य प्रमाणादिसत्ताभ्युपगमस्य न कथाप्रवृत्तिकारणत्वं समयबन्धेनान्यथासिद्धत्वात् । अथापि तस्य कारणत्वकल्पने कल्पनागौरवमिति भावः ।

**कं०रा०— तच्चेति** । तत्त्वावधारणादिरूपं फलमित्यर्थः । **ताभ्यां** कथकाभ्याम् । **इत्थमेव** व्यवहार-नियमादेवेत्यर्थः ।

**श्रीनिधि०— न द्वितीय इति** । कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादिसत्ताभ्युपगमस्य हेतुत्वात् पदभावे व्यवहारस्वरूपं न निष्पद्येतेत्युच्यते उत प्रमाणादीनामेव हेतुत्वं तच्च सत्तां विना नोपपद्यते ततश्च प्रमाणादीनि

सन्तीत्यभ्युपगन्तव्यमित्युच्यते । आद्य आह **स्यादप्येवमिति** । **हेत्वनुपपत्तेरिति** । प्रमाणादिसत्ताभ्युपगमलक्षणकारणाभावादित्यर्थः । द्वितीयमाशङ्क्य परिहरति **अथ मन्यस इत्यादिना तदभ्युपगम्यत इति** । सदित्यभ्युपगम्यत इत्यर्थः । स्थितेर्व्याप्तेः लोकव्यवस्थितेरीति वार्थः । नियमस्थित्या नियमव्यवस्थया । प्रमाणादिना व्यवहर्तव्यमित्यादिरूपया । **प्रवृत्तायां कथायामिति** । तथाच न कथास्वरूपनिष्पत्तिरिति न पूर्वोक्तदोषोऽत्रास्तीति भावः । **प्रसाध्य इति** । अस्त्वेवमिति चेन्न । प्रमाणादीनि सन्ति । व्यवहारहेतुत्वात् । मायी तत्सत्ताभ्युपगमवान् व्यवहर्तुत्वादिति वाच्यम् । तथा च बाधो व्यभिचारश्चेति भावः । ननु कथातःपूर्वमेव तत्सत्ताङ्गीकारः प्रसाध्यते इति चेन्न । कथारूपकार्यान्यथाऽनुपपत्त्या सा अङ्गीकार्येति वाच्यम् । कथा त्वन्यथैवोपपन्ना न तदङ्गीकारमाक्षिपतीत्याह **कथातःपूर्वं त्वित्यादिना** । अनुरोद्धव्यमङ्गीकर्तव्यम् । **तच्चेति** । अभिलषितमित्यर्थः । **व्यवहारनियमसमयबन्धेति** । व्यवहारनियमविषयसमयबन्धादित्यर्थः । **स चेति** । व्यवहारनियमश्चेत्यर्थः । **इत्थमेव** व्यवहारनियमवदेव । ननु व्यवहारनियमवत् सत्ताभ्युपगमो मयि समाविष्टः तथा च उभयोरपि कथाहेतुत्वमस्तु इत्यतः न समावेशमात्रेण कारणता कल्पयितुं शक्या । किं नामोभयसिद्धान्वयव्यतिरेकवत्त्वेनैव । तच्च व्यवहारनियमस्यैव न तु सत्ताभ्युपगमस्यापि । कथास्वरूपतत्फलयोर्दर्शनादित्याह **प्रमाणादिसत्तामभ्युपगम्यापीत्यादिना** । **प्रमाणव्यवहारः** प्रमाणमूलकव्यवहारः । विद्वद्व्यवहार इति यावत् । तस्य प्रमाणमूलकत्वस्य तदर्थमिवेति । व्यवहारस्य प्रमाणादिमूलकत्वसिद्ध्यर्थमित्यर्थः । प्रमाणादिसत्तानङ्गीकारे विचार एव न संभवतीति वदतः कुत इत्युक्ते विचारसाध्यं यत्प्रमाणमूलकत्वं तद्व्युत व्यवहारादित्युक्तिः संभवति तत्रैव कथान्तरप्रसक्तेरिति भावः । विचारसाध्यस्य विचारमात्रकारणत्वं न संभवति आत्माश्रयादिप्रसङ्गादिति वा । त्वां प्रत्यपि समान इति त्वदभ्युगतस्यैव व्यवहारनियमस्य मयावलम्बनात् सत्त्वाभ्युपगमानभ्युपगमत्वप्रयोजके इति भावः । व्यभिचारादिदोषः आदिपदेन बाधः ।

**वा०चं०**— सत्ताऽभ्युपगमस्य कथाव्यवहारं प्रति हेतुत्वात्प्रमाणादिसत्ताऽभ्युपगम इति द्वितीयमाशङ्क्य निराकरोति **न द्वितीय इति** । अन्वयव्यतिरेकावसेयत्वात्कारणतायाः प्रमाणादिसत्ताऽनभ्युपगमेऽपि प्रमाणादिभिर्हेतुभिः कथाव्यवहारनिष्पत्तिसंभवेन व्यतिरेकासंभवेन न तत्सत्ताऽभ्युपगमस्य कारणता येन तदभ्युपगमः स्यादिति भावः । नन्वभ्युपगमाभावे प्रमाणादीनां हेतुत्वनिवृत्तेर्व्यतिरेकः संभवत्येवेत्यत आह **न त्विति** । ननु प्रमाणादीनां कथाहेतुतायास्तवापीष्टत्वाद्धेतोश्च प्राक् सत्यत्वनियमात्प्रमाणादीनां कथातः प्राक् सत्त्वे सिद्धे, यद्यदा सत्तदा तदभ्युपगमनीयमेवेति सत्ताऽभ्युपगमस्यापि कथापूर्वभावित्वेन तद्धेतुत्वं सिद्धमिति द्वितीयपक्षे आशयविशेषं शङ्कते **अथेति** । हेतुत्वस्य सत्त्वरूपत्वाभावस्य वक्ष्यमाणत्वाद्धेतुत्वेन सत्ताऽभ्युपगमानुमानस्य च कथायामेव निग्रहेण कथातोऽन्यत्रासंभवात्प्रमाणादिसत्ताऽभ्युपगमेन प्रवृत्तायां कथायां तदनुमानस्य च कथाप्रवृत्तौ सत्ताऽभ्युपगमसिद्धिस्तत्सिद्धौ च कथाप्रवृत्तिरित्यन्योन्याश्रयापातेनानुपपत्तेः समयबन्धप्रवृत्तकथायां तत्साधने चोक्तरीत्या व्याघात इति भावेनाह **मैवमिति** । ननु प्रमाणादिसत्ताऽभ्युपगमस्य कथाप्रवृत्त्युत्तरकालसाध्यत्वे कारणान्तराभावात्कथं कथाप्रवृत्तिरित्यतः पूर्वसूचितं व्यवहारनियमस्य कथाकारणत्वमुपपादयति **कथात इति** । व्यवहारनियमस्वरूपदर्शनं **स चेति** । आदिपदेन प्रतिवादिना प्रतिज्ञाहान्यादिनिग्रहस्थानमुद्भावनीयम् । तद्भङ्गे प्रथमस्य भङ्गो व्यवहर्तव्योऽन्यथा





द्वितीयस्य । प्रामाणिकः पक्षस्तत्त्वतया व्यवहर्तव्य इत्यादेः सङ्ग्रहः । ननु तत्त्वनिर्णयादिफलार्थमेव समयबन्धादिवत्प्रमाणादिवत्प्रमाणादिसत्ताऽपि कथाङ्गत्वेनाङ्गीकार्येत्यत आह **न चेति** । **तादृशेति** । उभयाङ्गीकारे गौरवादिति भावः । ननु तर्हि नियमं परित्यज्य प्रमाणादिसत्तैवानुसर्तव्या लाघवस्यैवमपि संभवादित्यत आह **प्रमाणादीति** ।

**वा०र०**— अत्र प्रकरणे बहुविकल्पानां सत्त्वात् द्वितीयपदस्यार्थविशेषाप्रतीतिं मत्वा द्वितीयपदं व्याकुर्वन्नवतारयति **सत्ताभ्युपगमस्येति** । **अन्वयव्यतिरेकेति** । यस्मिन्सत्येव यद्भवति नासतीत्यन्वयव्यतिरेकेत्यर्थः । **हेतोश्च प्रागिति** । नियतप्राक्सत्त्वस्यैव कारणत्वरूपत्वादिति भावः । **तदाभ्युपगमनीयमिति** । सत्त्वेनेति शेषः । अत्र ग्रन्थे प्रमाणादीनि सन्ति कारणत्वाद्ब्रह्मवदित्यनुमानानन्तरं प्रमाणादीन्यभ्युपगमनीयानि सत्त्वाद्ब्रह्मवदित्यनुमानं विवक्षितमित्यतः प्रमाणादिकं सत्त्वेनाभ्युपगन्तव्यम् । हेतुत्वादिति विशिष्टसाधकतापि हेतुत्वस्यैव फलतः प्राप्तेत्याशयेनैतत्प्रवृत्तिसिद्धेरुत्तरग्रन्थे हेतुत्वेन सत्ताभ्युपगमानुमानस्येति न विरुद्धमिति ज्ञेयम् । हेतुत्वात्सत्त्वं सत्त्वाच्चाभ्युपगम इति परानुवादपूर्वकतद्दूषणरूपकथयापीति मूलं द्वेधा पराभिप्रायं विकल्प्य तद्दूषणमभिमतमिति मनसि कृत्वा अभिप्रेततया सत्त्वमेव हेतुत्वमिति पक्षमुत्थाप्य तद्दूषणस्य चात्र खण्डनग्रन्थे वा तदनुवादरूपमूले वा अभावात्तद्ग्रन्थे तस्य वक्ष्यमाणत्वेन तदनुसारेण मूलेऽपि खण्डनमतनिरासान्तेऽलमित्येतद्व्यावर्त्यशङ्काव्याजेन वक्ष्यमाणत्वमित्याशयेनाह **वक्ष्यमाणत्वादिति** । कारणत्वस्यान्तर्भूतसत्त्वरूपताया अन्तर्भावितसत्त्वं चेत्कारणमित्यादिना निराकरणेनास्यापि वक्ष्यमाणत्वादित्यर्थः । अत एवाऽलमित्येतदर्थतयैतत्खण्डनस्थतत्पक्षदूषणोत्तरमथ न सत्ताकारणकोटौ निविष्टा । किन्तु कारणत्वं सत्त्वनियमाभावे पक्षान्तरशङ्कानुसारेण पूर्वत्र फलत उक्तम् । तत्पक्षान्तरोत्थापनपूर्वकं तद्दूषयति **हेतुत्वेन सत्ताऽभ्युपगमेति** । अनुमानस्य च कथातोऽन्यत्रासंभवादिति संबन्धः । तत्र हेतुः **कथायामेव निग्रहेणेति** । अनेनैतदनुमानं कथातोऽन्यत्र कथायामेव वेत्यभिप्रेतकल्पद्वये निग्रहपदोक्तानुमानस्य कथायामेव प्रवर्तनीयतया तदन्यत्र तत्प्रवृत्त्यनुपपत्तेरित्याद्यपक्षदूषणं लब्धं भवति । द्वितीयदूषणायाह **प्रमाणादीति** । अनुमानस्य चानुपपत्तेरिति संबन्धः । तत्र हेतुरन्योन्याश्रयापातेनेति तदुपपादनं **कथाप्रवृत्तावित्यादि** । अत्रापि किं प्रमाणादिसत्ताऽभ्युपगमेन प्रवृत्तायामुत समयबलप्रवृत्तायामित्यभिप्रेतविकल्पद्वये आद्यपक्षदूषणमेतत् । समयबलेत्येतत्तु द्वितीयपक्षदूषणमिति सूचितम् । **समयबलेति** । व्यवहारनियमसमयबन्धबलेन प्रवृत्तेत्यर्थः । एवं कथातोऽन्यत्र साधनमपाकृत्य कथायामपि साधनपक्षे कथाप्रवृत्तिं द्वेधा विकल्प्याद्येऽन्योन्याश्रयेणानुमानासंभवरूपं दूषणम् । द्वितीयपक्षे तु व्याघातो दूषणमिति मूलाभिप्रेतं वर्णयतैव कथापि नियमेत्यादि प्रसाध्य इत्यन्तं मूलमपूर्णमिति न शङ्कनीयमिति सूचितं भवतीति ज्ञेयम् । व्याघातस्तु प्रमाणादिसत्तामनभ्युपगम्य व्यवहारनियममात्रं मूलीकृत्य च प्रवृत्तकथायामपि सत्तानुमानप्रवृत्तौ सत्ताभ्युपगमापत्त्या व्याघात इत्येवंरूपो द्रष्टव्यः । **कारणान्तराभावादिति** । नियमस्थित्यभ्युपगम एव कारणमुक्तमिति तु न वाच्यम् । तत्कल्पकाभावादित्याशयः । **पूर्वसूचितमिति** । व्यवहारनियमे समयं बद्ध्वेत्यनेन पूर्वेण सूचितमित्यर्थः । **उपपादयतीति** । अनेनैवमुपपादनीयमिति सूचयति । यदुक्तं नियमस्थित्यभ्युपगमकल्पकं

नास्तीति । तन्न । तत्फलस्यैव तत्त्वनिर्णयादेः कल्पकत्वात् । न च दिवाऽभुञ्जानस्य पीनतायाः शार्वं भोजनं विनाऽनुपपन्नायास्तदाक्षेपकत्वदर्शनात्प्रकृते च फलस्य नियमस्थित्यभ्युपगमं विनाऽनुपपत्त्यभावात्कथं तेन तदाक्षेप इति वाच्यम् । व्यवहारनियमसमयसंबन्धाभ्यामेव तत्फलस्य सत्त्वेनान्यथानुपपत्तेरत्रापि सत्त्वात् । तदेतदुक्तं मूले समयबन्धादेवेत्येवकारेणान्यथोपपत्तिनिरासकेनेति । **तच्चेति** मूलस्य तच्च तत्त्वनिर्णयादिकमभिलषितं द्वाभ्यामपि कथकाभ्यां व्यवहारनियमसमयबन्धादेव संभाव्यत इत्यतस्तत्फलसिध्यर्थं तौ कथकौ व्यवहार-नियममेव बध्नीतः व्यवहारनियम एव ताभ्यामनुरोद्धव्य इति यावदित्यर्थो ज्ञातव्यः । **व्यवहारनियमेति** । अनेन **स चेति** मूलपदं व्यवहारनियमस्त्विति व्याख्यातं भवति **आदिपदेनेति** । अत्र च प्रमाणतर्काभ्यां व्यवहर्तृत्वस्य प्रथमप्रयोक्तृरूपवादिधर्मत्वाद्व्यवहर्तव्यमित्यन्तो वादिनियमो मूलेऽभिहितो भवति । अत एव खण्डनोक्तस्य व्यवहर्तव्यमित्यतः परस्य वादिनेत्यस्यापि आदिपदेन ग्रहणं मूले व्याख्येयमिति सिद्धं कृत्वा प्रतिवादि-नियमादिकमेवादिपदेन सङ्ग्राह्यतया दर्शितमिति न दोषः । प्रमाणतर्काभ्यामेव व्यवहर्तव्यमित्येतद्वादाभिप्रायकं प्रायोपेक्षया वा जल्पादौ छलादिप्रयोगस्यापि संभवादित्यादि विद्यासागर्याम् । प्रतिवादिनापीत्यादिना खण्डनोक्त-प्रतिवादिनियमस्यादिशब्दार्थतया प्रदर्शनं प्रतिवादिनाऽपीत्यादिकमुद्भावनीयमित्यन्तम् । अत्रापि कथाङ्गतत्त्वज्ञान-विपर्ययलिङ्गमिति खण्डनोक्तं पूरणीयम् । तस्य च कथाङ्गं प्रमाणादि तस्य तत्त्वज्ञानं सम्यग् ज्ञानम् । तद्विपर्ययो विप्रतिपत्तिरप्रतिपत्तिर्वा तद्गमकमित्यर्थो विजिगीषुकथाविवक्षायाम् । वादविवक्षाया तु कथाया अङ्गं फलत्वेन यत्तत्त्वज्ञानं तद्विपर्ययोऽभावोऽस्य तत्त्वज्ञानं न विद्यत इत्यत्र लिङ्गं गमकमित्यर्थः । तादृशं हेत्वाभासो निरनु-योज्यानुयोगश्चेति द्वयं निग्रहस्थानं प्रतिवादिना वादिव्यवहारे व्युत्पादनीयम् । वादकथायामिति तु प्रतिवादिना-ऽपीत्यपिपदेन सूचितमिति ज्ञेयम् । प्रतिज्ञाहान्यादिकमित्यस्य तदन्यतममित्यर्थः । वादिकृतप्रमाणतर्काभ्यां व्यवहार इति शेषः । एवं कथानियमं प्रदर्श्य फलव्यवस्थां दर्शयति **तद्भङ्गे प्रथमस्येति** । तदित्यावर्तते । आद्यस्य तेनेत्यर्थः । द्वितीयस्य तस्येत्यर्थः । तथा च तेन प्रतिज्ञाहान्यादिनिग्रहस्थानेन तस्य वादिव्यवहारस्य भङ्गे सति । तन्निग्रह-स्थानस्य तद्भङ्गक्षमत्वेन प्रतिवादिना व्युत्पादने कृते सतीति यावत् । तर्हि प्रथमस्य निराकृतसाधनादिव्यवहारस्य वादिनः भङ्गः पराजयो व्यवहर्तव्यः । अन्यथा तन्निग्रहस्थानस्य वादिव्यवहारभङ्गक्षमत्वेन निग्रहस्थानव्युत्पादन-सामर्थ्याभावे शक्यसमर्थननिग्रहस्योद्भावनात् द्वितीयस्यैव प्रतिपादन एव भङ्गः । पराजयो व्यवहर्तव्य इति योज्यम् । एतेन तच्छब्दस्य प्रतिज्ञाहान्यादिपरामर्शकत्वे तद्भङ्गस्य प्रतिवादिरूपद्वितीयभङ्गापादकत्वेऽपि वादिरूप प्रथमभङ्गा-पादकत्वाभावाद्विपरीतत्वम् । तथा तन्निग्रहस्थानभङ्गाभावस्यापि प्रथमभङ्गापादकतया द्वितीयभङ्गानापादकतया च वैपरीत्यमिति शङ्का गर्भस्रावेणैवापहस्तिता । प्रमाणतर्काभ्यां व्यवहर्तव्यमित्यनेन प्रकृतव्यवहारस्य भङ्गकर्मतयो-पादानमिति ज्ञेयम् । यापीयं शङ्का; खण्डने तद्व्युत्पादने प्रथमस्य पराजयो व्यवहर्तव्यः । अन्यथा द्वितीयस्यैवेत्यनेन न यदि प्रतिवादी स्वोद्भावितं निग्रहस्थानं व्युत्पादयेत् समर्थयेत् तर्हि समर्थितनिग्रहोपेतपक्षवादिनः प्रथमस्य पराजयो व्यवहर्तव्यः । यदि च न व्युत्पादयेन्न समर्थयेत्तर्हि निरनुयोज्यानुयोगापत्त्या द्वितीयस्यैव पराजयो व्यवहर्तव्य इति प्रतिपादनादत्र च तत्प्रमेयाप्रतीतेर्न तत्सङ्ग्रहार्थकतया आदिपदव्याख्यानमेतदिति, सापि न । उक्तरीत्या भङ्गे सतीत्यनेनैव प्रतिवादिना स्वोक्तदूषणे वादिव्यवहारभङ्गक्षमतयोपपादिते सतीत्यर्थलाभात् । अन्यथा तेन



तद्भङ्गस्यैवायोगादेवमन्यथेत्यनेनापि तद्भङ्गक्षमतयाऽनुपपादिते सतीत्यर्थो लभ्यते। अन्यथा तेनोपपादितस्य निग्रहस्थानस्य प्राप्तस्यैवोद्भावनप्राप्त्या निरनुयोज्यानुयोगानवकाशापातात्। द्वितीयभङ्गपदस्य पराजयार्थत्वमेवोक्तम्। अन्यस्यासंभवात्। कुतस्तर्हि खण्डनोक्तप्रकारेण तद्व्युत्पादने प्रथमस्य पराजय इत्यादिरूपेणैव नोक्तम्। वक्रोक्तिमाश्रित्याप्युक्ताभिप्रायं मन्यत इत्यत्र हेत्वभावादिति चेत्सत्यम्। तथापि निग्रहस्थानव्युत्पादनं हि न साक्षाद्वादिपराजयापादकं किन्तु तेन वादिसाधनस्य भङ्गमुखेनैव। एवं तदव्युत्पादनमपि न प्रतिवादिनः साक्षात्तदापादकं किन्तु तेन वादिसाधनस्य भङ्गासंभवेन तस्य पराहङ्कारखण्डनरूपत्वाप्राप्त्या निग्रहत्वयोगे निरनुयोज्यानुयोगमुखेनैव। तदिहावश्यकस्य वादिसाधनभङ्गस्य वा मध्ये वचनेन खण्डनोक्तमुपपादितं भवतीत्याशयेन यथाश्रुतखण्डनानुवादो वा तट्टीकानुसारेण व्याख्यानानुवादो वा न कृत इति सूरिभिः सन्तोष्टव्यम्। उपलक्षणमेतत्। याविदानीं प्रकृतौ वादिप्रतिवादिनौ ययोरन्यतरो निगृह्यते। ताभ्यामितरौ यौ वादिप्रतिवादिनौ। ययोर्मध्ये वादी निग्रहस्थानशून्यः प्रतिवादी च स्वोद्भावितनिग्रहस्थानव्युत्पादनसमर्थस्तौ जेतृतया व्यवहर्तव्यावित्यपि द्रष्टव्यम्। जल्पवितण्डयोः फलव्यवस्थामभिधाय वादेऽपि तामाह **प्रामाणिक इति**। **तत्त्वतया** वादफलनिश्चयविषयत्वेन। इत्यादेरित्यादिपदेनाप्रामाणिकः पक्षस्तत्त्वं न भवतीति व्यवहर्तव्य इति सङ्गृहीतमिति ज्ञेयम्। यद्वा वाद्युक्तसाधनदूषणानन्तरमपि प्रतिवादी स्वपक्षस्थापनं कुर्यात्। अन्यथा आत्मानमरक्षन् परघाती वीर इव न विजयी स्यात्। तदनन्तरं प्रथमवाद्यपि प्रतिवाद्युक्तदूषणाङ्गं प्रदूष्य रक्षितस्वपक्षोऽपि विजयार्थं परस्थापनाङ्गं प्रदूषयेत्। अन्यथा वञ्चितपरप्रहारोऽपि तमप्रहरमाण इव श्लाघ्य एव स्यान्न विजयी। वितण्डा तु स्वपक्षस्थापनाहीनेत्यादेः। सोपपादनस्यादिपदार्थतया विद्यासागर्यां प्रतिपादितस्य सङ्ग्रहः। **तत्त्वनिर्णयादीति**। आदिपदेन परपराजयग्रहः। प्रमाणादिसत्ताऽभ्युपगमेनापि कथाप्रवृत्त्युपपत्तेस्तदर्थं तदभ्युपगमोऽपि स्वीक्रियतामित्याशङ्कां परिहर्तुमाह **उभयाङ्गीकार इति**। **कल्पनागौरवमवादीति**। सिद्धान्तवाक्यानुसारेण गौरवाभिप्रायो दर्शितः। **ननु तर्हीति**। गौरवपरिहाराय हि सत्ताऽभ्युपगमपरित्यागः। तर्हि तदभ्युपगममेव कथाप्रवृत्तिहेतुतया अङ्गीकृत्य तादृशव्यवहारनियम एव त्यज्यताम्। तन्मात्रस्यैवाङ्गीकारेऽपि लाघवसंभवादित्यर्थः। **अत आहेति**। प्रमाणादिसत्ताऽभ्युपगमस्य व्यतिरेकशून्यत्वान्न नियमतुल्यतेत्याहेत्यर्थः।

**स०व्र०— अथ मन्यस इति**। प्रमाणादीनां कारणत्वं तवापीष्टं, नियतपूर्वक्षणसत्त्वमेव कारणत्वमिति सत्त्वमभ्युपगन्तव्यमित्यर्थः। सत्ताऽभ्युपगमस्य कथाप्रवृत्त्युत्तरकालसाध्यत्वं किं कथातः पूर्वं वादिप्रतिवादिभ्यामनुरोद्धव्यं नियमस्थित्यभ्युपगममाक्षिपतीत्यर्थः।

**विठ्ठ०—** अथ कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादिसत्ताभ्युपगमस्य हेतुत्वात् प्रमाणादिसत्त्वं कथकेनाभ्युपेयमिति द्वितीयपक्षं प्रतिक्षिपति **न द्वितीय इति**। यदि प्रमाणादीनां सत्तानभ्युपगमे वाग्व्यवहारो निवर्तेत तर्हि वाग्व्यवहारस्य प्रमाणादिसत्ताभ्युपगमान्वयव्यतिरेकानुविधायित्वात् कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादिसत्ताभ्युपगमहेतुता स्यात्। न हि प्रमाणादिसत्तानभ्युपगमे वाग्व्यवहारो निवर्तते इति संभवति। प्रमाणादिसत्तानभ्युपगमे न व्यवहारानिवृत्तौ तत्सत्तानभ्युपगन्तॄणां चार्वाकादीनां व्यवहारहेतुभूतप्रमाणादिसत्ताभ्युपगमाभावेन

व्यवहारस्वरूपमेव न निष्पद्येत । न हि कारणाभावे कार्यमुत्पत्तुमर्हतीति । दृश्यते च चार्वाकाणां व्यवहारः तस्मात् प्रमाणादिसत्ताभ्युपगमस्य कथकप्रवर्तनीयवाग्व्यवहारं प्रति न हेतुत्वमिति भावः । हेत्वनुपपत्तेरित्यस्य हेत्वभावादित्यर्थः । ननु व्यवहारं प्रति तावत् प्रमाणादीनां हेतुत्वं नियतपूर्वकाले सत एव कारणत्वमिति तत्सत्त्वमवश्यमङ्गीकार्यमेव तथाच कथायाः प्रमाणादिसत्ताभ्युपगमपूर्वकत्वं प्राप्तमेवेति शङ्कते **अथ मन्यसे इति** । प्रमाणादीनि सन्ति हेतुत्वात् ब्रह्मवदिति सत्त्वादेव ब्रह्मवदेव सत्त्वाभ्युपगमः यस्यां कथायां साध्यते भवता सा कथा किमुक्तविधया प्रमाणादिसत्ताभ्युपगमपूर्वप्रवृत्ता उत तदभ्युपगमेऽपि यत्किञ्चित्समयबन्धमात्रात् । आद्ये त्वन्योन्याश्रयः कथाप्रवृत्तौ तत्र प्रमाणादिसत्ताभ्युपगमपूर्वकत्वसिद्धिः तत्सिद्धावेव प्रमाणादिसत्ताभ्युपगम-पूर्वककथाप्रवृत्तिरिति । द्वितीयेऽप्याह **कयापीति** । नियमस्थितिः समयबन्धः । प्रसाध्य इत्यनन्तरं तद्वदेव कथान्तरोपपत्तेरिति ग्राह्यम् । तथाच यत्किञ्चित् समयबन्धमात्रेण कथाप्रवृत्तिमङ्गीकृत्य प्रवृत्तायां कथायां प्रमाणादिसत्ताभ्युपगमसाधनाङ्गीकारे प्रमाणादिसत्ताभ्युपगमस्य न कथाकारणत्वसिद्धिरिति भावः । व्यर्थश्चायं प्रमाणादिसत्ताभ्युपगमः तथाहि कथारम्भे कथकाभ्यां वादिप्रतिवादिभ्यां द्वाभ्यामपि समयबन्धस्तावदवश्यं कर्तव्यः अन्यथाऽतिप्रसङ्गेन स्वाभिलषितप्रयोजनासिद्धेः स च समयबन्धो यावदंशं विना न फलपर्यवसानं तावन्मात्रविषये कार्यः । अन्यथागौरवात् व्यर्थत्वाच्च । तथाच प्रमाणादिसत्ताभ्युपगमं विनाऽपि केवलं प्रमाणेन तर्केण व्यवहर्तव्य-मित्यादि समयबन्धमात्रेण कथाप्रवृत्त्युपपत्तेः । प्रमाणादिसत्ताभ्युपगमसमयबन्धे कृतेऽपि उक्तविधसमयबन्धं विना कथाप्रवृत्तौ द्वाभ्यामभिलषितस्य तत्त्वनिर्णयविजयादेः फलस्य पर्यवसानाभावात् वैयर्थ्यमेव प्रमाणादिसत्ताभ्युप-गमस्येति भावेनाह **कथातःपूर्वमिति** । जल्पकथायां स्वपक्षस्थापनस्यापि सद्भावात् तत्त्वावधारणमित्युक्तम् । व्यवहारनियमरूपसमयबन्धादित्यर्थः । **द्वाभ्यामिति** । समयबन्धस्योभयवादिसंप्रतिपन्नतासूचनार्थम् । इत्यादी-त्यादिपदेन त्र्यवयवपञ्चावयवादिनियमस्य प्रतिज्ञाहान्यादिनिग्रहप्राप्तौ पराजय इत्यादेश्च सङ्ग्रहः । प्रमाणादिसत्तापि तथैव बध्यतामित्यत आह **न चेति** । कथाप्रवृत्तेरित्यतःपरं प्रमाणादिसत्ताभ्युपगमो व्यर्थ इति शेषः । अन्यथा कल्पनागौरवं चेत्याशयेनाह **प्रमाणादीति** । कथाप्रवृत्तिं विनेति कथाप्रवृत्त्यभावेनेत्यर्थः ।

**चषकः**— कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुत्वादिति द्वितीयकल्पं प्रत्याचष्टे **न द्वितीय इति** । प्रमाणवृत्तिवाग्व्यवहारनिरूपितहेतुतायां विशेष्यताप्रत्यासत्त्या सत्ताप्रकारकोपगतेरवच्छेदकतायां माध्यमिकादि-व्यवहारस्य तदवच्छिन्नाव्यतिरेकनियन्त्रितानुत्पादप्रसङ्गेनायोगादिति भावः । अथ प्रमाणादीनां कार्याव्यवहित-पूर्वक्षणावच्छेदेन कार्याधिकरणवृत्तित्वघटितवाग्व्यवहारनिरूपितकारणाभ्युपगम एव तत्सत्तोपगम इति, तत्कारणतोपेयते न तु तत्सत्तेति रिक्तं वच इत्याशङ्कते **अथेति** । कारणत्वं पदार्थान्तरं न सत्ताघटितमिति प्रतिसन्दधानः । प्रमाणादीनि धर्मीकृत्य हेतुत्वेन सत्त्वं ब्रह्मवत्सत्त्वेनाभ्युपगतिविषयत्वं च तत्कस्यां कथायां सिषाधयिषितमुक्तभङ्ग्या प्रमाणादिसत्तोपगत्या प्रवृत्तायां कथायां, तदनुपगमेन समयबन्धादिनैव वेति कल्पद्वयीघटकाद्यकल्पस्यान्योन्याश्रयेण प्रत्याख्याततां मन्वानः कल्पान्तरं प्रत्यस्यति । **कयाऽपीति** । अनुपदमभिधास्यमानयेत्यर्थः । **नियमस्थित्या** समयबन्धेन । समयबन्धस्यान्वयव्यतिरेकितामुपपादयति **तत्रेत्यादि** । तत्सत्तोपगतेस्तद्राहित्यं दर्शयति **तादृशेति** ।





**प्रदीपः**— कथाप्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावात्प्रमाणादिसत्ताभ्युपगतिरिति द्वितीयं कल्पं दूषयति **नेति** । यस्मिन्सत्येव यद्भवति नासतीत्यन्वयव्यतिरेकाभ्यां कारणत्वमवधेयम् । न चेह व्यतिरेकोऽस्ति प्रमाणादिसत्तानभ्युपगन्तुरपि व्यवहारनिष्पत्तेरित्याशयः । सत्ताभ्युपगमनिवृत्तौ प्रमाणादीनां व्यवहारकारणत्वमपि निवर्तत एवेति अस्ति व्यतिरेक इत्यत आह **न त्विति** । कथां प्रति हेतुभावात् सत्ताभ्युपगमस्य स कर्तव्य इति द्वितीयकल्पेऽभिप्रायविशेषं शङ्कते **अथेति** । प्रमाणादेः कारणत्वं त्वयापीष्टं नियतप्राक्सत्त्वमेव च कारणत्व-मित्यभ्युपगन्तव्यं सत्त्वमित्यर्थः । प्रथमेऽपि प्रमाणादिसत्ताभ्युपगमेन प्रवृत्तायामुत समबलाद्योऽन्योन्याश्रयस्तथा प्रवृत्तौ सत्ताभ्युपगमसिद्धिस्तत्सिद्धौ च कथाप्रवृत्तिरिति । द्वितीये चास्मत्समीहितसिद्धिरित्यर्थः । सत्ताभ्युपगमस्य तथाप्रवृत्त्युत्तरकालसाध्यत्वे किं तर्हि कथातः पूर्वं वादिभ्यामनुरोद्धव्यं नियमेऽपीत्यभ्युपगम इति चेत् किं तर्हि तस्य कल्पकमित्याशङ्क्याह **कथात इति** । नियमस्थित्यभ्युपगमफलमेवाक्षिपतीत्यर्थः । ननु यद्येन विनानुपपन्नं तत्तदाक्षेपकं यथा दिवाऽभोजनवतः पीनत्वं शार्वरभोजनमन्तरेणानुपपन्नं तदाक्षेपकं न चेह फलं नियमस्थितिव्यतिरेकेणानुपपन्नं अन्यतोऽपि तत्सिद्धेरित्यत आह **तद्धेति** । एवेत्यन्यथोपपत्तिं निराचष्टे । स नियमः कीदृश इत्यतस्तं दर्शयति **स चेति** । वादिना साधकेन प्रथमप्रयोक्त्रा प्रमाणतर्काभ्यां व्यवहर्तव्यम् । वादाभिप्रायमेतत् । जल्पादौ छलादि-प्रयोगस्यापि संभवात्प्रायोपेक्षया व्यवहारं वा परपराजयार्थमेव विजिगीषुकथायां मत्सरेण प्रवृत्तेः कदाचन सम्यक् साधनेऽपि परेणोक्ते झटिति वास्तवदूषणास्फुरणेन पर्याकुलितचेतस्तया छलादिप्रयोगस्याप्युपपत्तेः तथा सति छलाद्याकुलितबुद्धिः परः कदाचिदुत्तरमप्रतिपद्यतां नो निगृह्येतेति कथाया अङ्गं फलतया तत्त्वज्ञानं तदभावे गमकं हेत्वाभासो निरनुयोज्यानुयोगश्चेत्येतद्द्वयं निग्रहस्थानं प्रतिवादिना वादिव्यवहारे व्युत्पादनीयम् । वादकथायामुत्तरत्र प्रतिज्ञाहान्याद्यन्यतमं दर्शनीयं तत्तद्व्युत्पादनोपरतजातयः तदव्युत्पादने प्रतिवादिनः निगृहीताभ्यामितरो जेतृतया व्यवहर्तव्यौ प्राणिकी(?) वादफलनिश्चयविषयत्वेन व्यवहर्तव्ये वादिनि साधनमात्रं प्रयुज्य सङ्क्षेपतो विस्तरतो वा आभासानुद्धृत्य विरते सत्युच्यमानग्राह्यनिग्राह्यनिग्रहात्प्राप्तावभासबहिरुक्तग्राह्यनिग्रहालाभे तद्वचनार्थमवगम्यानूद्य दूषणं प्रतीत्या प्रतिवादी स्वपक्षस्थापनां प्रयुञ्जीत । अप्रयुञ्जानस्तु दूषितपरपक्षोऽपि न विजयी आत्मानमरक्षन्परघातीव वीरः । तस्मिन्नप्येवं निरसिते सति अनुक्तोच्यमानग्राह्यनिग्रहालाभे तद्वचनार्थमवगम्यानूद्य दूषणं प्रति दूष्याभास-बहिरुक्तग्राह्यनिग्रहालाभे प्रथमवादीस्थापनाङ्गं दूषयेत् अदूषयंस्तु रहितः स्थापको न हि जयी श्लाघ्यस्तु स्याद्वञ्चित-परप्रहारेव तमप्रहरन् अनुक्तोच्यमानग्राह्याभासबहिरुक्तग्राह्यनिग्रहलाभे तावतैव कथाविरतेर्न साधनविचारावकाशः शरसन्धानमूर्छितः तस्य तद्बाणवारणतत्प्रहरणानुष्ठानवद्विकलत्वात् तत्रानुक्तग्राह्यमप्रतिभाष्यश्च मानग्राह्यमप्राप्त-कालादि आभास बहिरुक्तग्राह्यं प्रतिज्ञाविरोधादिति येष्वसत्स्वभासचिन्ता प्रतिपक्षस्थापनाहीना वितण्डेत्यादिपदेन सङ्गृह्यते फलहेतुत्वेन सङ्केतनियमः कथाङ्गमङ्गीक्रियते चेत् प्रमाणादिसत्तापि तथाङ्गीक्रियेताविशेषादित्यत आह **न चेति** । उभयाङ्गीकारे गौरवं स्यादित्यर्थः । ननु नियममन्तरेण प्रमाणादिसत्तास्वीकारात्कथाप्रवृत्त्युपपत्तेः उभयाङ्गीकारे गौरवान्नियम एव कृतो न परित्यज्यत् इत्यत आह **प्रमाणेति** । तथाविधस्योक्तलक्षणव्यवहारनियमस्य व्यतिरेकाभावे सति विप्रलम्भकादिवादिसमयवत् कथाप्रवृत्तिर्न संभवतीत्यर्थः । लोकसिद्धत्वात्सत्ताङ्गीकृतिरिति ।





**२६७ सु०— नापि तृतीयः । लोकव्यवहारोऽपि प्रमाणव्यवहारो वा स्यात् पामरादि-साधारणव्यवहारो वा । नाद्यः । विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् । तदर्थमेव च पूर्वं नियमस्य गवेषणात् । नापि द्वितीयः । शरीरात्मत्वादीनामपि तथा सति भवता स्वीकर्तव्यतापातात् । पश्चात्तद्विचारबाध्यतया नाभ्युपेयत इति चेत् । तर्हि प्रमाणादि-सत्ताऽपि यदि विचारबाध्या भविष्यति तदा नाभ्युपेयैव । अन्यथा तूपगन्तव्येति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवति ।**

**परि०—** लोकसिद्धत्वादिति पक्षं निराह **नापि तृतीय इति** । **पूर्वं नियमस्य गवेषणादिति** । तथाच पूर्वं व्यवहारनियमसमयबन्धादेव प्रवृत्तकथायां प्रमाणव्यवहारोपपत्तौ किं तत्सत्तयेति भावः । **इति तावन्न भवतीति** । किन्तु विचारबाध्यत्वाबाध्यत्वाभ्यामेवेति प्राप्तमिति भावः ।

**यादु०—** लोकसिद्धत्वात्तत्सत्ताङ्गीकार्येति तृतीयं निरस्यति **नापीति** । **प्रमाणव्यवहार इति** । प्रामाणिकलोकव्यवहार इत्यर्थः । **पामराः** शास्त्रसंस्काररहिताः । 'विवर्णः प्राकृतो नीचः पामरस्तु पृथग्जन' इत्यभिधानात् । तर्हि विचारप्रवृत्त्यैव तन्निरूप्यतामित्यत आह **तदर्थमेवेति** । विचारार्थमेवेत्यर्थः । **नियमस्येति** । प्रमाणादिसत्ताऽभ्युपगमनियमस्येत्यर्थः । तथाच विचारप्रवृत्त्या प्रमाणादिसत्ताऽभ्युपगमस्य प्रामाणिकलोकव्यवहारसिद्धत्वं तत्सिद्धेन प्रमाणादिसत्ताऽभ्युपगमेन विचारप्रवृत्तिरित्यन्योन्याश्रय इति भावः । **शरीरेति** । अहं स्थूल इत्यादिप्रत्ययाच्छरीर एवात्मव्यवहारादित्यर्थः । विचाराबाध्यलोकव्यवहारसिद्धत्व-मभ्युपगम्यतायां तन्त्रमतो न शरीरात्मत्वादीनामपि स्वीकारप्रसङ्गः इति शङ्कते **पश्चादिति** । प्राप्ताप्राप्तविवेकेन अबाध्यत्वमेव स्वीकारप्रयोजकमागतं न लोकव्यवहारसिद्धत्वम् । अबाध्यत्वं च प्रमाणादिसत्तायां न विचार-प्रवृत्तिमन्तरेण निश्चेतुं शक्यमिति भावः ।

**वं०प०—** **तस्येति** । अयं प्रामाणिकलोकव्यवहार इत्यर्थः । **शरीरेति** । अहं स्थूलोऽहं कृश इत्यादिव्यवहारस्तावदस्ति । देहधर्माणां स्थूलत्वादीनामात्मनि व्यवहारश्च देहात्मनोरभेदं विना न संभवतीति देहात्मत्वमपि स्वीकार्यं स्यादित्यर्थः । तत् देहात्मत्वादि । **अन्यथा त्विति** । यदि विचाराबाध्या भविष्यतीत्यर्थः । **इतीति** । विचाराबाध्यत्वस्यैवाभ्युपगम्यतायां तन्त्रत्वादित्यर्थः ।

**कं०रा०—** **विचारेति** । विचारप्रवृत्तिं विना व्यवहारप्रामाण्यस्य ज्ञातुमशक्यत्वादित्यर्थः । ततः किमित्यत आह **तदर्थमिति** । विचारप्रवृत्त्यर्थमेव विचारात्मककथातः पूर्वं तत्कारणनियमस्य गवेषणाद्विचार्यमाणत्वात् । तथा च तद्विचारावसरे कथासाध्यप्रामाण्यनिश्चयानन्तरभाविनः प्रमाणादिसत्ताभ्युपगमस्य कथाकारणकोटौ निवेशो नेति निश्चीयत इति भावः । यद्वा । विचारप्रवृत्त्या लोकव्यवहारप्रामाण्यनिश्चये तत्सिद्धप्रमाणादिसत्ताभ्युपगमोऽस्त्वित्यत आह तदर्थमितीत्यवतार्याभिप्रायः पूर्ववदेव वर्णनीयः ।





**वा०चं०**— लोकशब्दस्योभयत्र तुल्यत्वाद्विकल्पयति **लोकेति** । **पामरः** संस्काररहितः । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जन' इति नामशासनात् । **विचारेति** । विचारसिद्धौ च सत्ताऽभ्युपगमस्ततश्च विचार इति चक्रकमिति भावः । सत्तां स्वीकृत्यापि नियमो बद्ध्यते वादिभिर्विचारप्रवृत्त्यर्थं, तदनुपपत्तिरपि सत्ताया अहेतुत्वं गमयतीत्याह **तदिति** । अबाध्यत्वे सति लोकव्यवहारसिद्धत्वं स्वीकारप्रयोजकमिति शङ्कते **पश्चादिति** । तर्हि प्रमाणादिसत्ता लोकप्रसिद्धत्वादङ्गीकार्येत्येतद्गतमित्याह **तर्हीति** ।

**वा०र०**— **उभयत्रेति** । प्रामाणिकाप्रामाणिकयोरित्यर्थः । **सत्तां स्वीकृत्यापीति** । वादिभिर्विचारप्रवृत्त्यर्थं नियमो बध्यत इति संबन्धः । विचारप्रवृत्त्यर्थमित्यादिनैव तदर्थमेवेत्यादिमूलं व्याख्यातं भवति **तदनुपपत्तिरपीति** । बध्यमाननियमानुपपत्तिरित्यर्थः । सत्तास्वीकारोत्तरमपि यत् नियमस्वीकरणं तदनुपपत्तिरिति यावत् । **भग्नमिति** । हेत्वन्तराश्रयणादिति भावः । **तर्हीतीति** । तथाचाबाध्यत्वस्यैव स्वीकारप्रयोजकत्वात्तस्य च प्रमाणादिसत्तायां विचारप्रवृत्तिमन्तरेण निश्चेतुमशक्यत्वमिति भावः ।

**स०व्र०**— तर्हि विचारप्रवृत्त्यैव तन्निरूप्यतामत आह **तदर्थमेवेति** । विचारार्थमेवेत्यर्थः । नियमस्य प्रमाणादिसत्ताभ्युपगमनियमस्य । तथा च विचारसिद्धौ व्यवहारस्य प्रामाणिकत्वसिद्धिः, तत्सिद्धौ सत्त्वाभ्युपगमसिद्धिः, ततश्च विचारसिद्धिः इति चक्रकापत्तिरिति भावः । एके तु विचारप्रवृत्त्या प्रमाणादिसत्ताभ्युपगमस्यापि प्रामाणिकलोकव्यवहारसिद्धत्वम् । तत्सिद्धेन प्रमाणादिसत्ताभ्युपगमेन विचारप्रवृत्तिरित्यन्योन्याश्रय इत्याहुः । अबाध्यत्वे सति लोकसिद्धत्वं स्वीकारप्रयोजकमिति न शरीरात्मत्वादीनामपि स्वीकारप्रसङ्ग इति शङ्कते **पश्चादिति** । हेत्वन्तरं नाम निग्रहस्थानं स्यादिति दूषयति **तर्हीति** । लोकसिद्धेरप्रयोजकतामाह **अन्यथेति** । प्राप्ताप्राप्तविवेकेनाबाध्यत्वमेव स्वीकारप्रयोजकमागतम् । न लोकव्यवहारसिद्धत्वम् । अबाध्यत्वं प्रमाणादिसत्तायाः न विचारप्रवृत्तिमन्तरेण निश्चेतुं शक्यमिति भावः ।

**विठ्ठ०**— लोकसिद्धत्वात् प्रमाणादिसत्ताङ्गीकार्या इति तृतीयपक्षमपाकरोति **नापि तृतीय इति** । **प्रमाणव्यवहारः** प्रामाणिकव्यवहारः । प्रामाणिकलोकव्यवहारसिद्धत्वात् प्रामाणिकसत्ताभ्युपगमनियमः इत्याद्यः पक्षो न युक्तः विचारप्रवृत्तिमन्तरेणायं प्रामाणिकव्यवहार इत्यस्य निरूपयितुमशक्यत्वात् । विचाराख्यव्यवहारप्रवृत्त्यर्थमेव पूर्वं प्रमाणादिसत्ताभ्युपगमनियमे विचारप्रवृत्तिः विचारप्रवृत्तावेव तत्र लोकव्यवहारस्य प्रामाणिकत्वसिद्धिः तत्सिद्धौ च प्रामाणिकलोकव्यवहारसिद्धत्वात् प्रमाणादिसत्ताभ्युपगमनियमसिद्धिरिति चक्रकाश्रयप्रसङ्गः । विचारप्रवृत्तावेव तत्र प्रामाणिकलोकव्यवहारसिद्ध्या प्रमाणादिसत्ताभ्युपगमसिद्धिः तत्सिद्धावेव वाग्व्यवहाररूपविचारप्रवृत्तिरित्यन्योन्याश्रयो वा इत्याशयेनाह **नाद्य इति** । पामरव्यवहारसिद्धत्वेनाङ्गीकार्यत्वं स्यादित्यतिप्रसङ्गोक्त्या दूषयति **नापीति** । विचाराबाध्यलोकव्यवहारसिद्धत्वमेवाङ्गीकार्यतायां प्रयोजकं शरीरात्मादेश्च विचारबाध्यत्वेन न तस्य स्वीकार्यतापातः इत्याशयेन शङ्कते **पश्चादिति** । तर्ह्यबाध्यत्वमेवाभ्युपगन्तव्यत्वे तन्त्रं न लोकसिद्धमित्यायातं तथाच लोकव्यवहारसिद्धतया प्रमाणादिसत्त्वाभ्युपगमनियमसिद्धिरिति अयं पक्षो भग्न इत्याशयेन परिहरति **तर्हीति** ।

**चषकः**— लोकसिद्धत्वात्सोपेयेति तृतीयमपाकुरुते **नापीति** । **प्रमाणव्यवहारः** प्रेक्षावद्व्यवहारः । **पामराः** शास्त्रसंस्काररहिताः । **तस्य** प्रेक्षावद्व्यवहारत्वस्य । **तदर्थमेव** विचारार्थमेव । **पूर्वनियमस्य** प्रमाणादि-सत्ताऽभ्युपगमनियमस्य । तथाच तत्सत्तोपगतिधर्मिकः प्रेक्षावद्व्यवहारसिद्धत्वनिर्णयो विचारप्रवृत्तिनिबन्धनः सा च तादृशव्यवहारसिद्धतत्सत्तोपगतिनियन्त्रितेत्यन्योन्याश्रय इति भावः । **शरीरेति** । गौरोहमित्यादिप्रतीत्या शरीर एवात्मत्वव्यवहारादित्यर्थः । **पश्चात्** शास्त्रजनितदेहात्मविवेकोत्तरम् । तद्देहात्मत्वम् । **नाभ्युपेयत इति** । विचाराबाध्यलोकव्यवहारसिद्धत्वस्यैवोपगन्तव्यतानिमित्तत्वादिति भावः । विचाराबाध्यत्वरूपविशेषणांशस्यैव उपगन्तव्यताहेतुत्वसंभवेन तद्विशेषितव्यवहारसिद्धत्वस्य तत्तन्त्रतोरीकृतिर्निर्बीजेत्याह **तर्हीत्यादि** । प्रमाणादि-सत्तायां विचाराबाध्यत्वं च तत्प्रवृत्तिमन्तरेण दुष्प्रतिपादमिति भावः ।

**प्रदीपः**— तृतीयं निरस्यति **नेति** । लोकशब्दस्य प्रामाणिकाप्रामाणिकयोः तुल्यत्वाद्विकल्पयति **लोकेति** । **पामराः** शास्त्रसंस्काररहिताः । 'विवर्णः प्राकृतो नीचः पामरश्च पृथग्जनः' इति नामानुशासनात् विचारसिद्धौ प्रामाणिकत्वसिद्धिर्व्यवहारस्य तत्सिद्धौ सत्ताभ्युपगमः ततश्च विचार इति चक्रकाद्यापत्तेः । नाद्योऽनवद्य इत्याह **नेति** । सत्तां स्वीकृत्यापि नियमो बाध्यते वादिभिर्विचारप्रवृत्त्यर्थं तदनुपपत्तिरपि सत्तायामहेयत्वं गमयतीत्याह **तदिति** । द्वितीयमतिप्रसङ्गेनापाकरोति **नापीति** । अबाध्यत्वे सति लोकसिद्धत्वं स्वीकारप्रयोजकमिति न शरीरात्मत्वादीनामपि स्वीकारप्रसङ्गादिति शङ्कते **पश्चादिति** । हेत्वन्तरं नाम निग्रहस्थानं स्यादिति दूषयति **तर्हीति** । लोकसिद्धेरप्रयोजकतामाह **अन्यथेति** । प्राप्ताप्राप्तविवेकेनाबाध्यमेव स्वीकार-प्रयोजकमित्याशयः । तदभ्युपगमस्य फलातिप्रसञ्जकत्वात् **तदभ्युपगम इति** ।

**२६८ सु०— न चतुर्थः । यादृशो भवता प्रमाणादिसत्तामभ्युपगम्य व्यवहारनियमः कथायामवलम्ब्यते तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणौदासीन्येनास्माभिरप्यवलम्बनात् । तस्य यदि मां प्रति फलातिप्रसञ्जकत्वम् । तदा त्वां प्रत्यपि समानः प्रसङ्गः । तस्मात्प्रमाणादि-सत्ताऽभ्युपगमस्य कथोपयोगाभावादनङ्गीकुर्वतां प्रमाणादिसत्तां न वादितेत्यनुपपन्नमिति ।**

**परि०**— प्रमाणसत्त्वानभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति कल्पं निराह **न चतुर्थ इति** । विश्वशब्दार्थः प्रमाणादीति ।

**यादु०— यादृशो भवतेति** । समयनियमबन्धादेरेवावश्याश्रयणीयात्फलव्यवस्थोपपत्तेः कथातः पूर्वं प्रमाणादिसत्ताऽभ्युपगमो व्यर्थ इत्यर्थः । तथा चावश्यक्लृप्तनियतपूर्ववर्तिन एव नियतसमयबन्धात्कार्यसंभवे तत्सहभूतस्य प्रमाणादिसत्ताऽभ्युपगमस्यान्यथासिद्धस्य न कथादिकारणत्वमिति प्रमाणादिसत्ताऽभ्युपगमो व्यर्थ इत्यर्थः । **तस्येति** । कथापूर्वं प्रमाणादिसत्ताऽभ्युपगमाभावे व्यवहारादिनियममात्रस्योन्मत्तादिसाधारण्यमुक्त्वा यदि





फलातिप्रसङ्ग उच्यत इत्यर्थः । **तदा त्वां प्रत्यपीति** । न च वाच्यं मम कथातः पूर्वं प्रमाणादिसत्ताऽभ्युपगन्तृत्वमप्यस्तीति न फलातिप्रसङ्गः इति कयाऽपि नियमस्थित्या प्रवृत्तायां कथायां भवतेदं दूषणं वाच्यम् । तथैव कथान्तरप्रवृत्त्युपपत्तेरन्यथाऽन्योन्याश्रयादित्युक्तन्यायेन कथापूर्वं प्रमाणादिसत्ताऽभ्युपगमस्यैव कर्तुमशक्यत्वेनोक्तान्यथासिध्या च केवलो व्यवहारनियम एव फलातिप्रसञ्जको न भवतीति त्वयाऽपि वक्तव्यमिति भावः ।

**वं०प०—** अवश्यकल्प्यमाननियतसमयबन्धेनान्यथासिद्धत्वान्न तत्सहभूतस्य प्रमाणादिसत्ताऽभ्युपगमस्य कथाप्रवृत्तिकारणत्वमित्याशयेनाह **यादृश इति** । प्रमाणादिसत्तामभ्युपगम्य भवता यादृशो व्यवहारनियम इत्यन्वयः । **यादृश इति** । प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपः । प्रमाणादिसत्तामभ्युपगम्यैवं व्यवहारनियमे कृते सद्भिरेव प्रमाणैर्व्यवहर्तव्यमित्येवं नियमो भवताऽवलम्बित आश्रित इत्यर्थः । **तस्यैव** नियमस्य । **तदा त्वां प्रतीति** । न च मम कथातः पूर्वं प्रमाणादिसत्ताऽभ्युपगन्तृत्वमस्तीति न फलातिप्रसङ्गो मत्पक्ष इति वाच्यम् । उक्तरीत्याऽन्यथासिध्याऽङ्गीकृतस्याप्यनङ्गीकृतप्रायत्वादित्याशयात् ।

**वा०चं०— यादृश इति** । अवश्याश्रयणीयनियमादेव फलव्यवस्थोपपत्तेः सत्ताऽभ्युपगमो व्यर्थ इत्याशयः । नियमस्याप्रामाणिकत्वेनाव्यवस्थापकत्वे तवापि स न व्यवस्थापकः स्यादित्याह **तस्येति** । अनेनाक्षेपभाष्यं दर्शयन्नेवोपसंहरति **तस्मादिति** । अनेनोद्भाष्यस्यास्य प्रयासवैयर्थ्यमपि निरस्तं भवति ।

**वा०र०— अनेनेति** । चतुर्धापि प्रमाणादिसत्ताऽभ्युपगमः कथोपयोगी न भवतीति प्रतिपादनेनेत्यर्थः । आक्षेप्यभाष्यप्रदर्शनप्रयोजनमाह **अनेनोद्भाष्यस्येति** । अत्र चोद्भाष्यत्वं नामाक्षेपस्य भाष्यानुक्तत्वतत्सूचितत्वाभावादिकं न भवति । अपि त्वाक्षेप्यविषयस्य भाष्यानुक्तत्वमिति न कश्चिद्दोषः ।

**स०व्र०— न चतुर्थ इति** । न च, मया कथापूर्वं प्रमाणादिसत्ताऽभ्युपगतेति न फलातिप्रसङ्ग इति, कयाऽपि नियमस्थित्या प्रवृत्तायां कथायां भवतेदं दूषणं वाच्यम् । तथैव कथान्तरप्रवृत्त्युपपत्तेः । अन्यथा अन्योन्याश्रयादिप्रसङ्गादिति उक्तन्यायेन कथातःपूर्वं प्रमाणादिसत्ताऽभ्युपगमस्य कर्तुमशक्यत्वात् । तथा च व्यवहारनियम एव फलातिप्रसङ्गो न भवतीति त्वयापि वाच्यमिति भावः ।

**वि०ठ०—** प्रमाणादिसत्ताभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति चतुर्थं विकल्पं निराह **न चतुर्थ इति** । प्रमाणादिसत्तामभ्युपगम्यापि तत्त्वनिर्णयादिव्यवस्थायै यादृशो व्यवहाररूपसमयबन्धो भवता अङ्गीक्रियते प्रमाणादिसत्ताद्यौदासीन्येनापि तादृशस्यैव समयबन्धस्य तत्त्वनिर्णयादिफलव्यवस्थापकत्वोपपत्त्या अस्माभिस्तावत एवाङ्गीकृतत्वेन फलातिप्रसङ्गपरिहाराय न प्रमाणादिसत्ताभ्युपगन्तव्या इति भावेनाह **यादृशो भवतेति** । ननु प्रमाणादिसत्ताभ्युपगममन्तरेण समयबन्धमात्रस्य फलव्यवस्थापकत्वं न संभवति । तादृशव्यवहारस्योन्मत्तादिव्यवहारेऽपि संभवेन तेनापि फलप्राप्तिः स्यादित्यतिप्रसङ्गप्रातेरित्यत आह **तस्य यदीति** । प्रमाणादिसत्ताभ्युपगमपूर्वकत्वस्यावश्यकत्वं यस्यां कथायां साध्यते तस्यास्तदभ्युपगमपूर्वकत्वेऽन्योन्याश्रयापत्तेः सा कथा

तदभ्युपगममन्तरेण केवलसमयबन्धेनैव प्रवृत्तेति त्वयापि वाच्यम्। तत्रोक्तातिप्रसङ्गः समान इत्यर्थः। तदेतदुपसंहरति **तस्मादिति**।

**चषक**:— तदनुपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति तुरीयकल्पं न्यक्करोति। **न चतुर्थ इति**। तथा चावश्योपेतव्यसमयबन्धादेव फलोत्पत्तिसंभवेन तत्सहभूततत्सत्तोपगतेरन्यथासिद्धत्वमित्यर्थः। आक्षेपांशं निगमयति **तस्मादिति**।

**गूढ०**— नियमस्याप्रामाणिकत्वेनाव्यवस्थापकत्वमित्याशङ्क्य प्रामाणिकत्वादेव तवापि न व्यवस्थापकं स्यादित्यतिप्रसङ्गः। स मानमित्यत्राह **तस्येति**।

**प्रदीपः**— चतुर्थं दूषयति **नेति**। नियमबन्धादेवाश्रयणीयत्वात्फलव्यवस्थोपपत्तेः सत्ताभ्युपगमो व्यर्थ इत्यर्थः। नियमस्याप्रामाणिकत्वेन व्यवस्थापकत्वमित्याशङ्क्याप्रामाणिकत्वादेव तवापि न व्यवस्थापकप्रसङ्गः समान इत्याह **तस्येति**। प्रमाणादिसत्ताभ्युपगमवैयर्थ्योपपादनस्य प्रकृतोपयोगमाह **तस्मादिति**।

॥ प्रमाणादिव्यवहारस्य सत्यत्वे उत्तरपक्षः ॥

**२६९ सु०— तदेतत्सर्वमनेनापहसितं वेदितव्यम्।**

**तथा हि। यत्तावद्व्यवहारमात्रस्य प्रमाणादिसत्ताऽभ्युपगमव्याप्तत्वपक्षे दूषणमुक्तम्। तदसत्। यदि खल्वेवमस्माभिः साध्येत। मायावादी प्रमाणादिसत्ताऽभ्युपगमवान् व्यवहर्तृत्वात्, तद्व्यवहारो वा प्रमाणादिसत्ताऽभ्युपगमपुरःसरो व्यवहारत्वात्तत्त्ववादिवत् तद्व्यवहारवच्चेति। यद्वा (यदि वा) नायं व्यवहर्ता प्रमाणादिसत्ताऽनभ्युपगन्तृत्वात्। तद्व्यवहारो वा न व्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरताशून्यत्वादिति। तदा स्यादेव व्यभिचारादिदोषः। को (हि) नाम स्वस्थात्मैवमनुमिमीते। किं नाम यदि प्रमाणादीनि सन्ति न स्युः तर्हि साधकानि न स्युः। असतः साधकत्वानुपपत्तेः। तेषां चासाधकत्वे तत्कार्यो व्यवहारो न निष्पद्येत। तथा च वादिता न स्यात्। अस्ति चेयम्। तस्मात्तद्धेतूनां प्रमाणादीनां सत्ताऽभ्युपगन्तव्येत्याचार्येण प्रसङ्गत्वेनाभिमतत्वात्। व्यभिचारस्थलस्य च प्रसङ्गविषयतुल्यता अङ्गीकृता। बाधस्तु प्रसङ्गस्यालङ्कार एवेत्युक्तम्।**

**परि०— तदेतदिति** । यदत्रोक्तमित्यादिनोक्तमित्यर्थः । **अनेनेति** । पूर्वोक्तस्य प्रसङ्गत्व-द्योतकविपर्ययपर्यवसानपरेण तस्मादित्यादिश्लोकेनेत्यर्थः । पक्षचतुष्टयदूषणमपि क्रमेणोज्जिहीर्षुराद्यपक्षे-ऽप्याद्यपक्षदोषं तावन्निराह **यत्तावदित्यादिना** । **दूषणमिति** । तदनभ्युपगच्छतोऽपि चार्वाक-माध्यमिकादेरित्यादिनोक्तमित्यर्थः । एवमित्युक्तं व्यनक्ति **मायावादीति** । **व्यभिचारस्थलस्येति** । चार्वाकादेस्तद्व्यवहारस्य चेत्यर्थः । **अङ्गीकृतेति** । अनङ्गीकुर्वतामिति बहुवचनं प्रयुञ्जानेनाचार्येणेत्यर्थः । तथैव प्राग्व्याख्यानादिति भावः । तस्यापि पक्षत्वे बाध इत्युक्तं निराह **बाधस्त्विति** । **इत्युक्तमिति** । 'तस्माद्व्यवहृतिरि'त्येतदवतारिकायामिति भावः ।

**यादु०—** माध्यमिकादेः प्रमाणादिसत्ताऽनभ्युपगमेऽपि वादितोपलम्भाद्व्यभिचार इत्यत आह **व्यभिचारस्थलस्येति** । **प्रसङ्गतुल्यता** प्रसङ्गस्थलतुल्यता । तस्याप्युक्तरीत्याऽऽपादनविषयत्वान्न व्यभिचार इति भावः । यदुक्तं तस्यापि पक्षत्वे बाध इति तत्राह **बाधस्त्विति** ।

**वं०प०— प्रसङ्गविषयतुल्यतेति** । प्रसङ्गे यो विषयो धर्मी मायावादी तत्तुल्यतेत्यर्थः ।

**कं०रा०— व्यभिचारेति** । व्यभिचारस्थलस्य चार्वाकादेः प्रसङ्गविषयमायावादितुल्यताऽङ्गीकृता । तस्याप्यापादनविषयताऽङ्गीकृतेति यावत् । ननु चार्वाकादेर्वादित्वस्य प्रत्यक्षसिद्धत्वात्तदभावापादने बाध इत्यत आह **बाधस्त्विति** । **तत्** बाधासिद्ध्यादिकम् । **पूर्वोक्तः** सद्वचनाभासलक्षणयोगित्वरूपः ।

**श्रीनिधि०— को नाम इति** । ननु प्रसङ्गपक्षोऽपि दुष्टः । तथा हि यदि प्रमाणादिसत्ता नाङ्गीक्रियते तर्हि प्रमाणादीनि न सन्ति । स्युर्यदि न सन्ति तर्हि साधकानि न स्युः । यदि न साधकानि तर्हि तत्कार्यो व्यवहारो न निष्पद्येत तदभावे वादिता न स्यात् । अस्ति च वादिता ततो व्यवहारः सन् अस्ति च व्यवहारः तस्मात् साधकानि भवन्ति । यतः साधकानि ततः प्रमाणादीनि सन्ति तस्माच्च प्रमाणादि सत्ताऽङ्गीकार्येति खलु वक्तव्यम् । तत्र यतः प्रमाणादीनि सन्ति अतः सत्ताङ्गीकारवानिति विपर्ययपर्यवसानं न संभवति । तत्सत्तानङ्गीकारस्यानुभवसिद्धत्वेन बाधात् तथास्ति च व्यवहारः अतः साधकानीत्यपि न युज्यते । मिथ्यात्वसाधकत्वस्याभावेन बाधात् तस्मादनुमानवत् तर्कोऽप्यनुपपन्न इति । उच्यते । न वयं प्रमाणादिसत्तानङ्गीकारमपि आपादककोटौ निवेशयामः । येन विपर्ययपर्यवसाने बाधः स्यात् । किं नाम यदि प्रमाणादीनि सत्यानि न स्युस्तर्हि साधकानि न स्युः । भवन्ति साधकानि अतः प्रमाणादीनि सत्यानि । तथा च प्रमाणादीनां विद्यमानं सत्त्वमङ्गीकारार्हम् । अविद्यमानसत्त्वाङ्गीकारोऽनुपपन्नः । यथा वह्निमनङ्गीकुर्वन्तं प्रति वह्नेः सत्त्वात् वह्न्यनङ्गीकारो न युक्तः । यदि वह्निर्न स्यात् तर्हि तत्कार्यभूतो धूमोऽपि न स्यात् । अस्ति च धूमः तस्मात् वह्निरस्ति । तथा च वह्नेः सत्त्वात् सत्सत्त्वमङ्गीकारार्हम् । न तु विद्यमानं वह्निसत्त्वमतिक्रम्याविद्यमानं तदसत्त्वम् । विरोधादतिप्रसङ्गाच्चेत्येवमिति अत एव यदि प्रमाणादिसत्ताङ्गीकारो नास्तीत्यनुक्त्वा यदि प्रमाणादीनि न स्युरित्येव उक्तम् । विपर्यये पर्यवसानेऽपि प्रमाणादिसत्ताङ्गीकारोऽस्तीत्यनुक्त्वा प्रमाणादीनां सत्ताभ्युपगन्तव्येत्युक्तम् ।





एवमुत्तरत्रापि ज्ञायते। साधकत्वं मिथ्याप्रमापकत्वं न भवति येन बाधः। किं नाम मिथ्यात्वज्ञप्तिकारकत्वमात्रमिति न कश्चिद्दोषः। विश्वसत्यतामनङ्गीकुर्वतां वादिता साधकदूषकवचनवत्ता न कुतः तत्तत्स्यात् (?) मिथ्याभूतस्य साधकत्वात्। सत्यस्य साधकत्वानङ्गीकारात् तथा च साधनाद्यभावात् इति सन्न्यायरत्नावलीनयचन्द्रिकयोरुक्तोऽर्थः इति तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेरित्युक्तदोषं परिहरति **व्यभिचारस्थलस्येति**। तस्यापि पक्षत्वे बाध इत्युक्तं परिहरति **बाधस्तु इति**।

**वा०चं०**— अनङ्गीकुर्वतामिति वाक्यापातप्रतीतार्थे परोक्तानुपपत्तेस्तस्माद्व्यवहृतिरित्युत्तरवाक्ये प्रसङ्गत्वज्ञापनेन, यौगिकव्यवहृतिशब्दप्रयोगेण प्रमाणादीनां कथाव्यवहारकारणत्वज्ञापनेन च परिहृतत्वान्नानुपपत्ति-रित्याह **तदेतदिति**। अनङ्गीकुर्वतामिति व्यतिरेकव्याप्तिप्रदर्शनपरम्। तत्रापि धर्मिधर्मप्राधान्यविवक्षा च। तथा च विवक्षाभेदेन फलितमनुमानप्रकारद्वयमाह **मायावादीति**। यदित्येतस्मिन्वाक्येऽनङ्गीकुर्वतां न वादितेत्येव हेतुसाध्यकथनं पूर्ववदुभयविवक्षा च तदपि विवक्षाभेदेन। फलिततत्प्रकारमाह **यदिति**। व्यभिचारादीत्यादिपदेन बाधसङ्ग्रहः। **को नामेति**। अभिप्रायान्तरकल्पनया दूषणानि वदतः परस्यैव छलप्रसङ्ग इति सूचयति। प्रमाणादीनि न स्युर्नाङ्गीक्रियन्त इत्यनङ्गीकुर्वतामित्यस्यार्थकथनम्। उत्तरवाक्ये व्यवहृतिरिति प्रमाणानां व्यवहारकारणत्वोक्त्या लब्धस्य पूर्वमाहत्योक्तस्यापाद्यस्य कथनं **तर्हीति**। मिथ्यायाः साधकत्वं चेत्युक्तोपपादनप्रकारस्मारणम् **असत इति**। व्यवहृतिरित्येतल्लब्धस्यैव कथनं **तेषां चेति**। **तथा चेति** पूर्ववाक्योक्तार्थकथनम्। नन्वत्रापादनद्वयेऽपि यदसत्तन्न साधकं, यत्र साधकाभावस्तत्र कार्याभाव इति वा यस्य प्रमाणाद्यसत्त्वाङ्गीकारस्तेन तत्साधकत्वाभावस्याङ्गी-कर्तव्यता, यस्य साधकत्वाभावाङ्गीकारस्तेन तत्कार्याभावस्याङ्गीकर्तव्यतेति वा व्याप्तेर्वक्तव्यत्वात्प्रथमकल्पद्वये बौद्धादिरीत्या व्यभिचाराद्वितीयद्वये च बौद्धादावेव व्यभिचारात्प्रसङ्गे च पक्षाद्यभावेन पक्षतुल्यतया च तदपरिहारा-न्नैतदापादनं संभवतीत्यतोऽनङ्गीकुर्वतामिति बहुवचनलब्धं व्यभिचारस्थलस्य प्रसङ्गविषयतुल्यत्वमुत्तरवाक्य-सूचितप्रसङ्गत्वलब्धं पूर्वोपपादितं बाधासंभवं च स्मारयति **व्यभिचारेति**। एवं च तदनेनापहसितमित्यत्रानेनेति न केवलमुत्तरवाक्यपरामर्शः, किन्तु पूर्ववाक्यस्थबहुवचनस्य, मिथ्यायाः साधकत्वं चेत्यादेरपीति द्रष्टव्यम्।

**वा०र०**— **अनङ्गीकुर्वतामितीति**। आपातप्रतिपन्नार्थे प्राप्ता या परोक्तानुपपत्तिरिति योज्यम्। अनुपपत्तेरित्यन्तेन तदेतत्सर्वमिति व्याख्यातम्। अनेनेत्यस्य व्याख्यानं तस्मादित्यादिज्ञापनेन चेत्यन्तम्। प्रयोगेणे-त्यस्य ज्ञापनेनेत्युत्तरेण संबन्धः। चशब्दः पूर्वज्ञापनसमुच्चये। यदप्युक्तं कीदृशीमित्याद्युत्तरमूलप्रमेयमेतत्। प्रयोगेण प्रमाणानां कारणत्वोक्त्या। **नानुपपत्तिरिति**। तात्पर्यविषयार्थस्योपपन्नत्वाद्वाक्यार्थेऽनुपपत्तिर्नास्तीत्यर्थः। अनङ्गीकुर्वतामिति भाष्यान्नायं व्यवहर्तेति व्यवहर्तृत्वाभावसाध्यकानुमानस्यैव लाभोपपत्तावपि प्रमाणादिसत्ता-ऽभ्युपगमसाध्यकानुमानलाभायोगः। धर्मिनिर्देशे सति व्यवहारपक्षकानुमानद्वयस्याप्ययोगश्चेत्यतस्तदनुमान-चतुष्टयस्यापि लाभोपपत्तयेऽभ्युपगमतत्पूर्वकत्वानुमानप्रदर्शनपरमूलाभिप्रायं तावदाह **अनङ्गीकुर्वतामितीति**। न तु हेतुसाध्यप्रदर्शनाभिप्रायम्। येनाभ्युपगमसाध्यकानुमानप्रवृत्त्ययोग इति भावः। व्यवहारपक्षकानुमान-





स्यैतत्पक्षे लाभं दर्शयति **धर्मिधर्मेति** । धर्मिप्राधान्यविवक्षायां वादिपक्षीकरणे धर्मप्राधान्यविवक्षायां तु व्यवहाररूपधर्मपक्षीकार इति विवेकः । **हेतुसाध्येति** । हेतुगर्भविशेषणाऽभ्युपगमेन योग्यतया विशेष्यान्वये तत्र तदुभयकथनमित्यर्थः । **उभयं** धर्मिधर्मौ । **बाधसंग्रह इति** । चार्वाकादिव्यवहारस्यापि पक्षतायां तदंशे बाधः । तथा पक्षेऽपि मम सत्ताऽनभ्युपगमस्यानुभवसिद्धत्वाद्बाध इति द्विरूपोऽपि बाधोऽत्र बाधपदेनोच्यते । यथा चैतत्तथा प्रागेव विवृतमस्माभिः । को नामेतिपदस्य नामेत्येतत्प्रसिध्यर्थकहिशब्देन व्याकुर्वन्प्रयोजनमाह **को हीत्यभिप्राया-न्तरेति** । को हीत्यनेनेति सूचयतीति संबन्धः । मूले यदि प्रमाणादीनि सन्ति न स्युस्तर्हीति सन्ति पदान्तभविन पाठः । सन्तीति च सुबन्तम् । सत्यत्ववन्तीति च तदर्थः । सत्ताऽभ्युपगन्तव्येति विपर्ययपर्यवसानप्रदर्शनात् । सत्ताऽभ्युपगमेत्याद्युत्तरमूलप्रयोगाच्च । एवं सत्तापुरस्कारेणैवैतद्ग्रन्थप्रवृत्तावपि तामविज्ञाय प्रमाणाभावमात्रपुरस्कारेण प्रवृत्तिं च विज्ञायैव लेखकैः सन्ति स्युरित्येतयोरन्यतरेणैव यदि प्रमाणान्यभावप्रतियोगीनीत्यर्थस्य लाभादन्य-तरवैयर्थ्यमिति बुध्या क्वचित्स्युरित्येव क्वचिच्च सन्तीत्येवपदं लिखितम् । यद्येवं पाठस्तर्हि टीकायां कथं प्रमाणानि न स्युर्नाङ्गीक्रियन्त इत्येवमनुवादव्याख्यानयोरुपपत्तिरिति चेन्मैवम् । टीकाकृतापि सन्तीत्येतत्सत्त्वमभ्युपेत्यैव तदव्याख्यायैव च स्युरित्यनेनाङ्गीकाररूपार्थसमर्पणप्रदर्शनमुखेनाङ्गीकारगर्भमापादकं भाष्योक्तं मूलादायातीति प्रदर्शनाय स्युरित्येतस्यैवाङ्गीक्रियन्त इति व्याख्यानमात्रं कृतम् । तत एव सन्तिपदानुवादोऽपि न कृतः । न तु सत्तापुरस्कारस्य मूलकारस्तयोरभिमतत्वाभावात् । अन्यथा स्युरित्यस्य यथाश्रुतार्थत्वे अङ्गीकारगर्भापादकालापस्येव अङ्गीकारार्थत्वेऽपि यदि प्रमाणानि नाङ्गीक्रियन्त इत्येवापादकस्वरूपनिष्पत्त्या विपर्ययपर्यवसानदशायामपि तस्मात्प्रमाणादीन्यङ्गीकर्तव्यानीत्येवापादकविपर्ययस्य वक्तव्यत्वेन सत्ताऽभ्युपगन्तस्येति मूले तद्विपर्ययकथना-योगप्रसङ्गात् । अत एवानङ्गीकुर्वतामित्यस्येति विश्वसत्यतामित्येतदंशस्य सिद्धवत्कारेणोक्तम् । पूर्वमूलेऽनेकधा तदंशोक्तेः । अत एवोत्तरटीकायां सत्ताऽभ्युपगमेत्यादिर्बहुधा प्रयोगो दृश्यते । एवं च न स्युर्नाङ्गीक्रियन्त इत्यस्य सत्त्वेन नाङ्गीक्रियत इत्यर्थो लभ्यत इति न कश्चिद्दोष इत्यवधेयम् । उत्तरवाक्ये इत्यादावुत्तरत्वपूर्वत्वे परस्परा-पेक्षया । यौगिकव्यवहृतिपदेन व्यवहारकारणत्वे उक्ते उत्तरवाक्येन किञ्चिदर्थसिद्धिकरणत्वरूपसाधकत्वस्यापि लाभादित्यर्थः । लब्धस्यापाद्यस्येति संबन्धः । आपाद्यलाभश्चात्रापाद्यघटकसाधकत्वोक्तिमुखेन तदभावरूपा-पाद्यसूचनम् । अत एवोक्तस्योत्तरत्रोक्तावपि पूर्वत्र लाभ एवोक्त इति न कश्चिद्दोषः । **पूर्वमाहत्येति** । मिथ्यात्वं यदीत्याद्युपसंहारभूतानङ्गीकुर्वतामितिवाक्येन वादितेत्यस्य न साधकतेत्यर्थकत्वात्तेनाहत्य साक्षादुक्तस्येत्यर्थः । साक्षादुक्तिमात्रे ज्ञापकतया वक्तव्ये लब्धोक्तेरपि प्रमाणीकरणं तत्रैव विपर्ययपर्यवसानोक्त्या प्रागुक्तस्य प्रसङ्गतायाः स्थितत्वेन तद्बलादापाद्यत्वाकारोऽपि लभ्य इति सूचनाय इत्येतल्लब्धस्यैवेति । व्यवहियतेऽनेनेति यौगिकपदप्रयोगेण कारणत्वे उक्ते कारणाभावे कार्यायोग इत्यस्यापि लाभादिति भावः । अत्रापि पूर्वोक्त एव प्रकारः । **पूर्ववाक्येति** । अनङ्गीकुर्वतामित्यत्रत्य न वादितेत्यस्य न व्यवहर्तृत्वेत्यर्थकत्वस्यापि भावात्तदंशेनोक्तेत्यर्थः । अनङ्गीकुर्वता-मित्येतदर्थकनस्युरित्येतत्स्वारस्यानुसारेणाङ्गीकारगर्भामपि व्याप्तिं दर्शयति **यस्य प्रमाणादीति** । **प्रथमकल्पद्वय इति** । अङ्गीकारानन्तर्भाविन प्रवृत्तप्रथमव्याप्तिद्वय इत्यर्थः । **बौद्धादीति** । तैरङ्गीकृते व्यवहारमूलप्रमाणादा-वसत्त्वस्य तद्रीत्या सत्त्वेऽपि साधकत्वस्यैव तद्रीत्या सत्त्वेनासाधकत्वाभावात् व्यभिचारः । यदि च साधकाभाव





इत्यापादनस्य पूर्वापादनोत्तरमिष्टापत्तिशङ्कायां प्रवृत्त्या आपादकस्य तदङ्गीकृतत्वप्राप्त्या तद्रीत्या साधकाभाव-सत्त्वेऽपि व्यवहाररूपकार्यस्यैव सत्त्वात् द्वितीयापादनेऽपि व्यभिचार इत्यर्थः । एतेन प्रमाणासत्त्वाङ्गीकारात् तदङ्गीकृतप्रमाणादौ प्रथमकल्पीयप्रथमव्याप्तेर्व्यभिचारेऽपि तैः साधकसद्भावाङ्गीकारान्न साधकाभावस्तदङ्गीकृत इति न द्वितीयव्याप्तौ व्यभिचारप्रसङ्गः । अन्यथा प्रथमव्याप्तौ व्यभिचारो न स्याद्व्यापकाभावविरहादिति शङ्कानवकाशपराहता वेदितव्या । द्वितीयतर्कप्रवृत्त्यनुसारेण तत्रापादकसत्त्वोपपत्तेः । एवमङ्गीकारगर्भायां यस्य साधकाभावाङ्गीकार इति व्याप्तावपि तर्कप्रवृत्त्यनुसारेणैवापादकं बौद्धादौ प्राप्तमिति तत्र व्यभिचार इति बोध्यम् । **द्वितीयद्वय इति** । अङ्गीकारघटितव्याप्तिद्वय इत्यर्थः । **बौद्धादावेवेति** । तत्र प्रमाणाद्यसत्त्वाङ्गीकारादिसद्भावेऽपि तेन तत्साधकत्वाभावस्याङ्गीकर्तव्यतादेरभावादित्याशयः । ननु पक्षतावच्छेदकानवच्छिन्नत्वेऽपि सन्देहविषयत्वेन पक्षतुल्यत्वमाश्रित्य तत्र व्यभिचारो नास्तीति स्वीकारात् .......................................... आदाविव प्रकृतेऽपि बौद्धाद्यङ्गीकृतप्रमाणादौ बौद्धादौ वा पक्षतुल्यत्वान्न व्यभिचार इत्यत आह **प्रसङ्गे चेति** । अनुमाने हि पक्षस्तत्तुल्यं चास्तीति पक्षसमत्वप्रयुक्तव्यभिचारपरिहारस्तत्र युक्तः । न च तर्के पक्षाद्यस्ति । ततो न व्यभिचारपरिहारोऽनुमान इव तर्केऽपि संभवतीति शङ्कावकाश इति भावः । इयं च प्रसङ्गविषयतुल्यतेत्येतद्व्यावर्त्यशङ्का । **बहुवचनलब्ध-मित्यादि** । अत एव प्राक् मूले चार्वाकबौद्धमायावादिनामिति व्याख्यातमिति भावः । प्रसङ्गविषयेति वदता यथानुमाने साधनविषयपक्षतुल्यताव्यभिचारपरिहारोपाय एवं प्रसङ्गे प्रसङ्गविषयतुल्यता तत्परिहारहेतुः । एवं च प्रकृते पक्षाद्यभावेनानुमान इव पक्षतुल्यतया व्यभिचारपरिहारस्यासंभवेऽपि प्रसङ्गविषयो यो धर्मी तत्तुल्यत्वेनैव व्यभिचारपरिहारः संभवतीति मूलाभिप्रायः सूचितो भवति । प्राक्पक्षाद्यभावेनेत्यादेरुक्तत्वादिति ज्ञेयम् । तुल्यत्वस्य भाष्याभिमतत्वे ज्ञापकाभाव इत्यतो बहुवचनलब्धत्वोक्तिः । एवं बाधासंभवेऽपि प्रसङ्गत्वलब्धत्वोक्तिस्तदसंभवस्य भाष्यकारसूचितत्वसमर्पणायेति ज्ञेयम् । अत्र टीकायां प्रसङ्गत्वलब्धं बाधसंभवं च पूर्वोपपादितं स्मारयतीति पाठः । मूलकोशे स्मारयतीत्यतः प्रागेव हंसपदप्रक्षेपेण पूर्वोपपादितमित्यस्य चरमताया एव प्रतीतेः । तस्य च प्रसङ्गविषयतुल्यत्वमित्यनेनापि संबन्धः । तथा च प्रसङ्गविषयतुल्यत्वं प्रागुपपादितं स्मारयतीति संबन्धो ज्ञेयः । प्रसङ्गविषयतुल्यत्वे चानङ्गीकुर्वतां चार्वाकबौद्धमायावादिनामित्यादिमूलेन पूर्वमुपपादितत्वम् । साधनस्य हि प्रमाणबाधो दूषणं न त्वापादनस्येत्यादिमूले न तु बाधसंभवस्य प्रागुपपादनमिति ज्ञेयम् । यदि तु पूर्वोपपादितं बाधासंभवं चेति पाठस्तदापि पूर्वोपपादितमिति विशेषणस्य योग्यतया पूर्वत्रापि संबन्धः । अथवा पूर्वोपपादित-मित्यस्य पश्चाद्योजनायां बाधासंभवं च पूर्वोपपादितं स्मारयतीति पाठलाभात्प्रसङ्गविषयतुल्यत्वमित्यस्यापि पूर्वोपपादितत्वं सुलभमिति ज्ञेयम् । नन्वनेनेति मूले तस्माद्व्यवहृतिरित्यस्यैव परामर्शप्रतीतेस्तत्सिद्धप्रसङ्गत्व-लब्धबाधासंभवस्यैव हेतुतया प्राप्त्यनुसारेण बाधपरिहारमात्रे प्रदर्शनीयेऽनङ्गीकुर्वतामिति तत्पूर्ववाक्यसिद्धप्रसङ्ग-विषयतुल्यत्वस्यापि हेतुत्वेनोपादानपूर्वकं तेन व्यभिचारपरिहारकथनमसङ्गतम् । तद्वाक्यस्थबहुवचनस्यात्रा-परामर्शात् । तथा मिथ्यायाः साधकत्वं चेत्यादेरप्यपरामर्शान्नासतः साधकत्वानुपपत्तेरित्यादिस्मारणं संभवती-त्यतोऽत्रानेनेति प्रकृतपरामर्शिनिर्देशब्देन योग्यप्रकृतपरामर्शस्वीकारात् सन्निधानमात्रस्याप्रयोजकत्वासन्निहिता-सन्निहितानेकवाक्यानां परामर्शलाभात्तदुक्तहेतुभ्योऽनेकशङ्कापरिहारोपवर्णनं युक्तमेवेत्याशयेनाह **एवं च तदनेनेति** ।





उत्तरपूर्वशब्दौ परस्परापेक्षयेति प्रागेवावोचाम । इत्यादेरपीत्यपिशब्दस्य बहुवचनस्येत्यंत्रापि संबन्धः । परामर्श इत्यनुवर्तते । तथा च बहुवचनस्यापि परामर्श इति सिध्यति । इत्यादेरपीत्यतःपरमपि परामर्श इत्यनुवर्तत इति ज्ञेयम् । मूले **इत्युक्तमिति** । साधनस्य प्रमाणबाधो दूषणं न त्वापादनस्य । तस्यानिष्टविषयत्वादित्यादिनाऽनङ्गीकुर्वता-मित्येतद्व्याख्यावसर उक्तमित्यर्थः ।

**स०व्र०**— चार्वाकादिमते प्रमाणादीनामसत्त्वेऽपि साधकत्वमस्तीति व्यभिचार इत्यत आह **व्यभिचारेति** । यदुक्तं पक्षत्वे बाध इति तत्राह **बाधस्त्विति**।

**वि**ठ्ठ०— **अनेनेति** । तस्माद् व्यवहृतिस्सर्वा सत्येत्येव व्यवस्थिता । व्यावहारिकमेतस्मात् सत्यमित्येव चागतमित्यनेनेत्यर्थः । **दूषणमुक्तमिति** । चार्वाकादिव्यवहारे प्रमाणादिसत्ताभ्युपगमपूर्वकत्वादिरूपसाध्याभावात् व्यवहारत्वादिहेतोस्तत्र व्यभिचार इति यद्दूषणमुक्तमित्यर्थः । व्यभिचारादिदोष इत्यादिशब्देन तस्यापि पक्षत्वे बाध इत्युक्तबाधग्रहणम् । असत इत्यतःपरं प्रमाणादेरिति शेषः । ननु तर्कपक्षेऽपि व्यभिचारस्तदवस्थ एव चार्वाकादिभिः प्रमाणाद्यसत्त्वेऽपि तेषां साधकताऽङ्गीकारेण वादितोपलम्भात् आपादकस्य आपाद्यं विनाऽभावादित्यत आह **व्यभिचारस्थलस्येति** । **प्रसङ्गतुल्यता** प्रसङ्गस्थलतुल्यता । प्रसङ्गविषयतुल्यतेति पाठान्तरम् । तस्यापि पक्षत्वे बाधक इति यदुक्तं तत्राह **बाधस्त्विति** । **इत्युक्तमिति** । तस्माद् व्यवहृतिरिति एतदवतारिकायामिति भावः ।

**चषक**:— **प्रमाणादीनि न स्युरिति** । प्रमाणधर्मिकसत्ताऽऽश्रयत्वाभावापादककसाधकत्वाभावा-पाद्यकापत्तेरभिप्रेतत्वादिति भावः ।

**गूढ०**— दूषयति **तदेतदिति** । **अनेनेति** । न वादितेत्यनेनेत्यर्थः । तर्हि कथं साध्यत इत्यत आह **यदीति** । मास्तु तेषां साधकत्वमित्यत आह **तेषां चेति** । प्रमाणानामित्यर्थः । ततोऽपि किमत्राह **तथा चेति** । तर्कस्य विपर्यये पर्यवसानमाह **अस्ति चेयमिति** । तद्वेतूनां वादिताहेतूनां नन्वत्रास्ति च वादित्वं तस्मात्प्रमाणादीनां सत्त्व-मङ्गीकर्तव्यमिति विपर्ययपर्यवसाने यत्र वादित्वं तत्र प्रमाणादीनां सत्त्वाभ्युपगम इति वक्तव्यम् । न चैतद्युज्यते । चार्वाकादिषु सत्यपि वादित्वे तत्सत्ताभ्युपगमाभावेन व्यभिचारादित्यत आह **व्यभिचारस्थलस्येति** । तथाच तैरपि यदि प्रमाणानां सत्त्वं नाभ्युपगम्यते तर्हि साधकाभावाद्व्यवहाराभावेन वादित्वमेव तेषामपि न स्यादिति पक्षतुल्यत्वान्न तत्र व्यभिचार इत्यर्थः । चार्वाकादिमते प्रमाणादीनामसत्त्वेऽपि साधकत्वमस्तीत्यतो वा आह **व्यभिचारेति** । तथापि वादित्वस्य प्रतीयमानत्वेन तदभावापादने बाध इत्यत्राह **बाधस्त्विति** ।

**प्रदीपः**— अनङ्गीकुर्वतामित्यनेनैव सत्त्वासत्त्वाभ्युपगमौदासीन्यवर्णनं दूरतोऽपसारितमित्याह **तदेतदिति** । ननु तवोक्तयुक्तिबलादनुपपन्नमित्युक्ते कथं तवैव तस्यापाकरणं संभवतीत्यत आह **तथा हीति** । व्यवहारमात्रस्य सत्त्वाविनाभाव इति प्रथमे प्रथममुपेत्य तत्रोक्तं दूषणमपवदति **यदित्यादिना** । चार्वाकादिमते प्रमाणादीनामसत्त्वेऽपि साधकत्वमस्तीति व्यभिचार इत्यत आह **व्यभिचारेति** । यदुक्तं तस्यापि विपक्षत्वे बाधक इति तत्राह **बाधस्त्विति** ।





**२७० सु०— साधनबाधनक्षमव्यवहारस्य प्रमाणादिसत्ताऽभ्युपगमव्याप्तत्वपक्षेऽप्युक्तं दूषणमनेनैव निरस्तम् । मायावादिनं तद्व्यवहारं वा पक्षीकृत्य विशिष्टव्यवहारकर्तृत्वेन विशिष्टव्यवहारत्वेन वा हेतुना प्रमाणादिसत्ताऽभ्युपगन्तृत्वे तत्पूर्वकत्वे वा साध्यमाने तत्स्यात् । विमतो व्यवहारो न साधनादिक्षमः । प्रमाणादिसत्ताऽभ्युपगमपूर्वकता-रहितत्वादिति वा साधने कथञ्चिदन्वये पूर्वोक्तोपाधिः स्यात् । न चैवमित्युक्तम् ।**

**परि०**— आद्यपक्षेऽपि द्वितीयकल्पदोषमुद्धरति **साधनबाधनेति** । **अनेनैव** प्रसङ्गपर-मूलेनैव । **विशिष्टेति** । साधनादिक्षमेत्यर्थः । प्रागुक्तं सद्वचनाभासलक्षणयोगित्वोपाधिं च निराह **विमत इत्यादिना** । **इति वा साधन इति** । 'मायावादिनं तद्व्यवहारं वा पक्षीकृत्ये'ति पूर्वोक्तसाधनद्वय-प्रकारापेक्षया वाशब्दः । **कथञ्चिदन्वय इति** । कथञ्चित्साध्यव्यापकत्व इत्यर्थः । यत्र साधनाद्यक्षमत्वं तत्र सद्वचनाभासलक्षणयोगित्वमिति नास्ति । शशविषाणादौ प्रत्यक्षाभासादौ च साध्याव्यापकत्वात् । व्यवहारत्वादिरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वं तु संभाव्यत इति कथञ्चिदन्वय इत्युक्तम् । **न चैवमित्युक्तमिति** । साधनं न भवत्यापादनमेवेत्युक्तमित्यर्थः ।

**यादु०**— विशिष्टव्यवहारस्याविनाभाव इति प्रथमद्वितीयकल्पमभ्युपेत्य तत्रोक्तं दोषं परिहरति **साधनेति** । **विमतो व्यवहार इति** । इदं तु व्यवहारपक्षकानुमानस्य माध्यमिकादिव्यवहारे व्यभिचारपरिहाराय तत्र हेतुव्यतिरेक-साधनम् । अन्यथा कथाव्यवहारपूर्वं प्रमाणादिसत्ताऽभ्युपगम एवेदानीं विप्रतिपत्तेरर्थान्तरप्रसङ्ग इति द्रष्टव्यम् । **कथञ्चिदन्वय इति** । 'किं चायमुपाधिरि'त्यनुपदमेव वक्ष्यमाणरीत्या वस्तुगत्याऽयमुपाधिरेव न भवतीति भावेन कथञ्चिदित्युक्तमित्यवधेयम् ।

**वं०प०— विशिष्टेति** । साधनबाधनक्षमेत्यर्थः ।

**श्रीनिधि०— विशिष्टव्यवहारेति** । साधनबाधनक्षमव्यवहारेत्यर्थः । **अन्वये पूर्वोक्त इति** । व्यतिरेके पूर्वोक्त उपाधिरन्वये स्यादिति संबन्धः ।

**वा०चं०— उक्तदूषणमिति** । बाधासिद्ध्युपाधिलक्षणमित्यर्थः । वादिशब्दस्य विशिष्टव्यवहर्तृपरता-मभ्युपगम्योक्तरीत्याऽनङ्गीकुर्वतामिति वाक्यस्य व्यतिरेकव्याप्तिकथनेन, साक्षात्साध्यसाधनकथनेन वाऽनुमानपरतां विवक्षाभेदं चाश्रित्यानुमानप्रकारमाह **मायेति** । **न चैवमित्युक्तमिति** । आचार्यस्यात्र साधनस्यानभिमततया प्रसङ्गस्यैवाभिमतत्वात् । प्रसङ्गे च बाधासिद्ध्युपाधीनामसंभवादिति भावः । ननु बाधासिद्ध्योस्तत्राऽलङ्कारत्वेऽपि कथमुपाधेरसंभव इति चेन्न । प्रसङ्गविषयादन्यत्रोपाधिना व्यभिचारोन्नयने स्फुटव्यभिचारेणोपाधिवैयर्थ्यापातात् ।





उपाधिना प्रसङ्गविषये तदुन्नयनस्य च पक्षादिप्रविभागानन्तरमनुमानस्थल इवानुपपत्त्या आपाद्यस्याप्रामाणिकत्वेन तदभावसाधनरूपप्रतिपक्षस्य च बाधवदलङ्कारतया प्रतिपक्षोन्नायकत्वस्याप्यसंभवेनापादने तदसंभवात् । न चापादनमूलभूतव्याप्तिग्रहणदशायामुपस्थितस्याव्याप्त्युन्नायकत्वेन दूषणत्वं संभवत्येवेति वाच्यम् । उक्तापादनमूलभूतायां, यदसन्न तत्साधकं, यत्र कारणाभावस्तत्र कार्याभाव इति वा यत्रोक्तोभयाङ्गीकारः तत्रोक्तोभयोरङ्गीकर्तव्यतेति वा व्याप्तौ त्वदुक्तोपाधेरप्रसरात् । ननूक्तरूपायामपि व्याप्तौ, नासत्त्वं साधकत्वाभावे प्रयोजकं, किन्त्वाभासलक्षणयोगित्वमेव । एवं, न कारणाभावः कार्याभावे प्रयोजकः, किन्त्वाभासलक्षणयोगित्वमेवेति वक्तुं शक्यत एवेति चेन्न । तर्हि वन्ध्यासुतवचसोऽप्यसाधकत्वायाभासलक्षणमेव व्युत्पादनीयं स्यात् । न च वन्ध्यासुतवचसोऽप्यसिद्धिरूपाभासलक्षणमेवासाधकत्वे तन्त्रमिति वाच्यम् । तत्रासत्त्वस्यैवासिद्धिरूपाभासलक्षणप्रयोजकतया प्रकृतेऽप्यसत्त्वादेव तदापत्त्याऽसत्त्वं न तन्त्रमिति वचनस्य रिक्तत्वापत्तेः । अकारणकार्योत्पत्तौ च व्याघातस्य कारणाभावे कार्याभावस्य सुलभत्वादिति सूचितत्त्वाच्चेत्याशयः । अत एवात्रापाद्यापादकस्वरूपस्य निष्कृष्य कथनं तदुपपादकप्रकारस्मरणं चेति ध्येयम् । एवं च प्रकृते आपादनमूलभूतव्याप्तावप्युपाध्यसंभवो न तु सर्वत्रेत्येवाभिमतम् । अन्यथा सत्त्वाभावे साधकत्वं न स्यादिति वा प्रसङ्गं ब्रूमः । तत्रासत्त्वमुपाधिरिति चेदित्युत्तरग्रन्थविरोधापत्तेः । न्यायसाम्येन प्रसङ्गमूलभूतव्याप्तावपि तस्यावर्जनीयत्वाच्चेति द्रष्टव्यम् ।

**वा०र०**— पूर्वानुमाने वादितेत्यस्य व्यवहर्तृतामात्रमर्थः । नैवं प्रकृते । किन्तु विशिष्टव्यवहर्तृतार्थोऽभ्युपगम्यते अतो विशिष्टव्यवहारकर्तृत्वेनेत्यादि युज्यते । तथा विशिष्टव्यवहारकर्तृत्वेन प्रमाणादिसत्ताऽभ्युपगन्तृत्वादिसाधनमप्यनङ्गीकुर्वतामिति भाष्यादायाति । तद्भाष्ये यथाश्रुतसाध्यसाधनयोः प्रतीत्यनुसारेणैवात्र प्रयोगस्यानभिमतत्वात् । किन्तु तद्भाष्यमभिप्रेतप्रयोगे व्यतिरेकव्याप्तिप्रदर्शनपरम् । तथा च सत्ताऽभ्युपगन्तृत्व इत्यादि युज्यते । तथाऽत्र विवक्षाभेदोऽभिमतोऽस्ति । अतः मायावादिपक्षकमिव धर्मप्राधान्यविवक्षया तद्व्यवहारपक्षकमप्यनुमानं भाष्यलभ्यमिति युज्यते तथाऽत्र यथाश्रुतानङ्गीकुर्वतामित्यादेरेव हेतुसाध्यकथनपरता ततस्तथैवानुमानमपि भाष्यलभ्यतया प्राप्नोत्येव । तत्रापि धर्मिधर्मविवक्षाभेदोऽस्त्येवेत्याशयेन मायावादिनमित्यादिमूलं प्रवृत्तमित्याह **वादिशब्दस्येत्यादिना** । उक्तरीत्येत्यस्य पूर्वस्थल इवेत्यर्थः । आश्रित्येत्यनेन संबन्धः । प्राग्व्यवहर्तृत्वार्थकतया योजितवादिपदस्य विशिष्टव्यवहर्तृतार्थतया योजनामात्रं विशेषः । शिष्टं समानमित्याशयेनोक्तप्रकारातिदेशसूचनम् । अत एवात्रानुमानप्रकारमाहेत्येवोक्तम् । उक्तरीत्यैव मायावादी प्रमाणादिसत्ताऽभ्युपगमवानित्यादिरूपेणानुमानस्य ज्ञातव्यत्वमित्याशयः । अत्र च विवक्षाभेदोऽपि व्यतिरेक्यनुमान इवान्वय्यनुमानेऽपि संमत एव । परन्तु लक्षणया पूर्वत्रेवात्रापि नायं विशिष्टव्यवहर्तेत्यादिरूपेणानुमानान्तरप्रयोगो मूलाभिप्रेततया संमत एवेत्येके । व्यतिरेक्यनुमानमात्रे विवक्षाभेदो योज्यस्तेन यथाश्रुतमूलमेवास्त्विति भाव इत्यपरे । मूले **तत्स्यादिति** । बाधासिद्धिव्यतिरेके उपाधिलक्षणं दूषणं स्यादित्यर्थः । साक्षात्साधनसाध्यकथनपरमेवानङ्गीकुर्वतामिति मूलमित्याश्रित्य प्रवृत्तप्रयोगेऽप्युपाधिप्रसक्तिर्नेति वक्तुं तथा न साधनं क्रियत इत्याह





**विमतो व्यवहार** इति मूलम् । यद्यपि विशिष्टव्यवहारत्वेन प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वानुमाने उपाधिप्रसक्तिप्रतिपादनेनैतदनुमानेऽपि प्रसक्तिरुक्तप्रायैव । तथाच तत्रैवात्राप्युपाधिप्रसङ्गस्य तत्स्यादित्यनेनैव प्रतिपादनलाभात् पृथगभावसाध्यकानुमानमुत्थाप्य तत्रोपाधिप्रसक्तिप्रतिपादनं व्यर्थमित्याभाति । तथापि सत्ताऽभ्युपगमपूर्वकत्वानुमाने व्यतिरेके उपाध्युक्त्याऽभावसाध्यकेऽपि तथात्वमिति मन्दाशङ्कां निरसितुमन्वय एवायमुपाधिः प्रसक्त इति प्रतिपादनमावश्यकमेवेति पृथगेतदनुमानमुत्थाप्योपाधिप्रसक्तिवचनम् । अत एवान्वय इत्युक्तम् । अन्यथोपाधिप्रतिपादनस्थले स श्यामो मित्रातनयत्वादित्यादौ शाकाद्याहारपरिणतिभेद उपाधिरित्यादेरेव वचनेऽप्यन्वय इत्यधिकोक्तेरभावः । यत्र पुनः साध्यसाधनयोरेव व्याप्तावुपाध्यसंभवस्तत्र परं व्यतिरेक इति विशेषणमुपादीयत इति विवेको न स्यात् । तदत्रान्वय इत्यधिकप्रयोगादुक्तमन्दाशङ्कानिवृत्तिरेव प्रयोजनं पृथगुक्तेरिति सिध्यति । यद्यपि चैतदनुमानेऽपि तर्कत्वयुक्तिरेवोपाधिनिरासे हेतुरिति तया बाधासिध्यादिनिरासवदुपाधेः निरासस्यापि तत्स्यान्न चैवमित्युक्तमित्येतावतैव सिद्धेर्मन्दाशङ्कानिवृत्तिमात्रकरणाय पृथगनुमानोत्थापनपूर्वकतत्रोपाधिप्रसक्तिवर्णनं मध्ये न युक्तमित्याभाति । तथापि तर्कत्वयुक्तिव्यतिरिक्तयुक्त्याऽप्युपाधिं निराकर्तुमनुमानोत्थापनादिकरणम् । किञ्चायमुपाधिरित्याद्युत्तरनिराकरणस्यानुमानान्तरेऽसंभवेन विशिष्यैतदनुमान एव तन्निराकरणसाङ्गत्यसद्भावात् । अतो युक्त्यन्तरेण तन्निरासाय तन्निराकरणसङ्गततयैव परकीयप्रागुक्तप्रमेयान्तरनिराकरणाय च पृथक्तदुत्थापनसंभव इति विज्ञातव्यम् । तर्केऽप्युपाधेर्दोषत्वं वदन् प्रष्टव्यः । किं व्यभिचारोन्नायकत्वेन दूषणता । उत प्रतिपक्षोन्नायकतया । आद्येऽपि प्रसङ्गविषयादन्यत्र व्यभिचारोन्नयनं तद्विषय एव वेति विकल्पान्मनसि कृत्वा निराकरोति **प्रसङ्गविषयादित्यादिना** । वैयर्थ्यापातादित्यन्तमाद्यप्रथमनिराकरणम् । साध्यव्यापकवैलोम्यमित्येतन्न विलक्षणत्वाधिकरणीयानुव्याख्यानमूले अनुमानप्रवृत्युत्तरकालं तु सत्प्रतिपक्षतैव । साधनस्य साध्यव्यापकपरित्यागो हि पक्षादन्यत्र वा स्यात्पक्षे वेत्यादिविकल्पनिराकरणानुसारेणायं ग्रन्थः । आद्यद्वितीयनिराकरणम् **उपाधिनेति** । तदुन्नयनस्य चानुपपत्त्येति संबन्धः । तत्र हेतुं वक्तुमुक्तं पक्षादिप्रविभागानन्तरमनुमानस्थल इवेति । तादृशानुमानस्थले यथा पक्षे उपाधिना व्यभिचारोन्नयनस्यानुपपत्तिरेवं प्रसङ्गस्थलेऽपि धर्म्यादिप्रविभागानन्तरं व्यभिचारोन्नयनस्यानुपपत्तेरित्यर्थः । अनुमानोत्तरं पक्षे व्यभिचारोन्नयनं ह्येवं वाच्यम् । साध्यव्यापक उपाधिः पक्षाद्व्यावर्तमानः साध्यमपि व्यावर्तयतीति साध्यरहिते पक्षे वर्तमानं साधनं साध्यव्यभिचारीति । न चायं प्रकारः संभवति । तथा सति बाधितसत्प्रतिपक्षयोरपि व्यभिचारितापातादीत्यादेरुत्तरमूले प्रतिपादनात् । तथा च प्रसङ्गविषयेऽपि प्रतिपक्षोन्नायकताया एव प्रसङ्गधर्म्यादिप्रविभागानन्तरमापत्त्या न व्यभिचारोन्नयनं युक्तमिति भावः । अस्तु तर्हि प्रतिपक्षोन्नायकतयेति द्वितीयो निरवद्यत्वादित्यतः तमप्यपाकरोति **आपाद्यस्येति** । एतट्टीकावाक्ये आपादने तदसंभवादिति प्रधानप्रतिज्ञा । व्यभिचारोन्नायकत्वाद्यसंभववर्णनं तु तदुपपादकम् । ननु मास्तु प्रसङ्गधर्म्यादिप्रविभागोत्तरमव्याप्त्युन्नायकता प्रकृतोपाधेस्तथाप्यनुमानीयपक्षादिप्रविभागात् । प्रागिव तर्कीयधर्म्यादिप्रविभागात्प्रागेवाव्याप्त्युन्नायकता स्यादिति शङ्कते **न चापादनेति** । **उपस्थितस्येति** । उपाधेरिति विभक्तिविपरिणामेन वर्तते । **यत्रोभयोक्तेति** । अनेन प्रागुक्तमङ्गीकारगर्भं व्याप्तिद्वयमुक्तमिति ज्ञेयम् । इति व्याप्तावित्यनेन प्रकारान्तरेण व्यवहारादिपक्षकानुमानीयव्याप्तौ





कथञ्चिदुपाधिप्रसरेऽपीति सूचयति । वक्ष्यति चात एवात्रापाद्येत्यादि । तथा चानङ्गीकुर्वतामिति भाष्यच्छायानुसारिसाधनपरित्यागेन यदि प्रमाणानि सन्ति न स्युरिति भाष्याभिप्रेततर्कस्वीकारे तत्रत्यैवंविधव्याप्तौ चोक्तायां न त्वदीयउपाधिर्लगतीत्यर्थः । **उपाधेरप्रसरादिति** । शशविषाणादावेव साधकत्वाभाववति आभासलक्षणयोगित्वरूपोपाधेरभावादिति भावः । आपाद्यव्यापकत्वप्रयुक्तोपाधित्वस्यानुपपत्तावपि प्रकारान्तरेणोपाधित्वं संभवतीति शङ्कते **ननूक्तेति** । प्रयोजकत्वस्यैवोपाधित्वे निमित्तत्वमिति भावः । **वक्तुं शक्यत इति** । उपलक्षणं चेदम् । एवं न प्रमाणाद्यसत्त्वाङ्गीकारस्तेन साधकत्वाभावस्याङ्गीकर्तव्यतायां प्रयोजकः । किन्त्वाभासलक्षणयोगित्वमेवेत्यादिकमपि ज्ञेयम् । इति वा व्याप्ताविति प्रकृतव्याप्तिमात्रस्योक्तरूपायामपीत्यनेन ग्रहणे संभवति सति सङ्कोचायोगात् । मिथ्यायाः साधकत्वं चेत्यनेनाप्युक्तमिति योजनां सूचयितुं तत्रोक्तं प्रमेयमादाय समाधत्ते **तर्हि वन्ध्येति** । इष्टापत्तिमाशङ्कते **न च वन्ध्येति** । **रिक्तत्वेति** । व्याहततेत्यर्थः । एवं पूर्वतर्केऽप्रयोजकत्वं परिहृत्य द्वितीयेऽपि तं निरस्यति **अकारणकार्येति** । व्यवहृतिरिति यौगिकपदप्रयोगयुक्तिरनेनोक्ता । उक्तरूपव्याप्तावप्युपाधिनिराकरणमुक्तरीत्या कृतं यत्तस्य मूलकारसंमततां वक्तुं तज्ज्ञापकमाह **अत एवेति** । उक्तरीत्योपाधिखण्डनाभिप्रायादेवेत्यर्थः । **निष्कृष्येति** । भाष्यप्रतीताकारविलक्षणाकारेणेत्यर्थः । **तदुपपादकप्रकारेति** । असतः साधकत्वानुपपत्त्यादिप्रकारेत्यर्थः । नन्वेवमापादनमूलभूतव्याप्तावुपाध्यसंभवस्य व्याघातादिना प्रतिपादने प्रसङ्गत्वस्योपाध्यसंभवहेतुत्वोक्तिर्मूलकारीया न सार्वत्रिकी स्यात् । व्याघातादिना तदसंभवप्रतिपादनस्येतरत्रापादनमूलव्याप्तावुपाध्यभ्युपगमसूचकत्वप्रतीतेरित्यतः प्रकृत एवापादनमूलभूतव्याप्तावप्युपाध्यसंभव इत्यभिप्रायेणैव साधनं न विवक्षितं किन्त्विदमापादनमित्यादिका मूले उक्तिर्वस्तुतः कुत्राप्यापादने उपाधिर्नेत्यभिप्रायेण न भवतीति नानुपपत्तिरित्याह **एवं च प्रकृत इति** । न केवलमापादने इत्यपिपदार्थः । **न तु सर्वत्रेति** । सर्वत्रापादनमूलव्याप्तौ नोपाधिरिति नाभिप्रेतमित्यर्थः । **उत्तरग्रन्थेति** । वैलक्षण्यं सदसतोरप्येतेन निषिध्यत इत्येतद्भाष्यमूलग्रन्थेत्यर्थः । तत्रासत्त्वस्योपाधित्वाशङ्कनस्य व्यभिचारप्रतिपक्षोन्नायकतायाः प्रागुक्तरीत्यापादनेऽसंभवेनापादनमूलव्याप्तावेवोपाधिरित्यभिप्रायकतायाः सिद्धत्वादिति भावः ।

**स०व्र०—** **उक्तमिति** । अनङ्गीकुर्वतामित्येतद्व्याख्यावसरे । **कथञ्चिदन्वय इति** । वक्ष्यमाणरीत्या साधनव्यापकत्वात्कथञ्चिदित्युक्तम् । **न चैवमित्युक्तमिति** । नेदं साधनं किन्तु तर्क इत्युक्तमित्यर्थः ।

**विठ्ठ०—** साधनबाधनक्षमव्यवहारः प्रमाणादिसत्ताभ्युपगमव्याप्त इति द्वितीयपक्षस्योक्तं बाधतादवस्थ्यमिति दूषणं परिहरति **साधनेति** । **अनेनेति** । बाधस्य प्रसङ्गालङ्करणत्वकथनेनेत्यर्थः । तदेव विवृणोति **मायावादिनमिति** । विशिष्टेत्यस्य साधनक्षमेत्यर्थः । अनुमानप्रयोगप्रकारस्तु प्रथमपक्षे उक्तरीत्या द्रष्टव्यः । **तत्स्यात्** तद्दूषणं स्यात् । न चैवमित्युक्तमिति वक्ष्यमाणमनेन संबध्यते । तथाच साधने बाधो दूषणं स्यात् । न चैवं किन्तु प्रसङ्ग एवेत्युक्तम् । पूर्वोक्तसद्वचनाभासलक्षणयोगित्वमुपाधिरित्यर्थः । शशशृङ्गादौ प्रत्यक्षानुमानाभासयोश्च साधनसाध्याक्षमरूपसाध्यस्य सत्त्वेऽपि उपाधेरभावात् न साध्यव्यापकमिति चेत् तथापि पक्षतावच्छेदकावच्छिन्न-





साध्यव्याप्तत्वोपपत्तेरित्याशयेनोक्तं **कथञ्चिदन्वय इति**। साध्यव्याप्तावित्यर्थः। **न चैवमित्युक्तमिति**। नेदं साधनं किन्तु आपादनमेवेत्युक्तमिति।

**चषकः— व्यभिचारस्थलस्य** माध्यमिकादिव्यवहारस्य। **प्रसङ्गविषयतुल्यता** आपत्तिधर्मिभूता-द्वैतवादिव्यवहारतुल्यता। तथा च तस्याप्युक्तदिशाऽऽपादनविषयत्वान्नानैकान्त्यमिति भावः। **कथञ्चिदिति**। समनन्तरमेव साधनाभेदं तस्य प्रदर्श्योपाधित्वाभावस्य व्युत्पादनाशयेन कथञ्चिदित्युक्तिः।

**गूढ०— उक्तम्** अत्रान्यत्र चेत्यर्थः। **अनेनैवेति**। प्रसङ्गाभिधानेनैवेत्यर्थः। निरासप्रकारमेवाह **मायावादिनामिति**। **तत्स्यादिति**। बाधहेत्वसिद्धिव्यतिरेकपूर्वकउपाधिरिति दूषणजातं स्यादित्यर्थः। इति वा साधने कथञ्चिदन्वयपूर्वकउपाधिः स्यादिति पूर्वेण समुच्चयार्थो वाशब्दः। मायावादिनं तद्व्यवहारं वा पक्षीकृत्य विशिष्टव्यवहारकर्तृत्वादिना प्रमाणादिसत्ताभ्युपगन्तृत्वादौ साध्यमाने व्यतिरेकपूर्वकउपाधिः स्यादिति साधने त्वन्वयपूर्वकउपाधिः स्यादित्यर्थः। वस्तुतो मायावादिव्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकताराहित्येन साधनादिक्षमत्वाभावं साधयता तदीयव्यवहारस्य सद्वचनाभासलक्षणयोगित्वस्याप्यङ्गीकृतत्वेन पक्षे साधन-व्यापकत्वादुपाधिरेवायं न संभवतीत्याशयेन कथञ्चिदित्युक्तं **न चैवमिति**। एवमस्माभिर्न साध्यत इत्यर्थः।

**प्रदीपः**— विशिष्टव्यवहारस्याविनाभाव इति प्रथममभ्युपेत्य दोषं परिहरति **साधनेति**।

**२७१ सु०— किञ्चायमुपाधिर्न साधनाद्भिद्यते। यदा हि प्रमाणादिसत्ता नाभ्युपगता तदा तदसत्त्वमेवाङ्गीकृतमिति स्वरूपासिद्धत्वम्। तच्च सद्वचनाभासलक्षणविशेष एव॥ नन्वेतदाशङ्क्योक्तं न ब्रूमो वयमित्यादि। दुरुक्तं तत्। सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेः। एवं च वदता यदनिर्वचनीय-त्वमभिप्रेतं तदग्रे निराकरिष्यते।**

**परि०— साधनादिति**। प्रमाणसत्ताभ्युपगमपूर्वकतारहितत्वादिति साधनादित्यर्थः। तादृश-श्चानुमानमात्रोच्छेदकतया नोपाधिरिति भावः। साधनाभेदं व्यनक्ति **यदा हीति**। तदसत्त्वं प्रमाणादिव्यवहारासत्त्वमित्यर्थः। **तत्स्वीकारेति**। प्रमाणस्वीकारेत्यर्थः। **एवं च वदतेति**। सत्त्वाद्युदासीनैस्तानि स्वीकृत्येतिवदता स्वरूपासत्त्वं नाभिप्रेतम्। सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं यदभिप्रेतं तत् 'वैलक्षण्यं सदसतोरि'त्यादावग्रे निरसिष्यत इत्यर्थः।

**यादु०— तच्चेति**। सामान्यविशेषव्यक्त्योश्चाभेदः शिंशुपा वृक्षो घटः पृथिवीऽत्यादौ प्रसिद्ध एवेति भावः। धर्मविवक्षायां त्वभेदासंभवेऽपि सामान्यधर्मस्य विशेषधर्मव्यापकतया साधनव्यापकता स्यादिति





द्रष्टव्यम् । ननु सत्त्ववदसत्त्वस्याप्यनङ्गीकारान्न दोष इत्युक्तमित्याशङ्कते **नन्वेतदिति** । नन्वनिर्वचनीयवादिनो मम सत्त्वासत्त्वौदासीन्येनापि प्रमाणानां बुद्ध्यारोहः संभवतीत्यत आह **एवं च वदतेति** । **अग्र इति** । 'वैलक्षण्यं सदसतोरप्येतेन निषिध्यत' इत्यत्रेत्यर्थः ।

**वं०प०**— तदुपपादयति **यदा हीति** । **स्वरूपासिद्धत्वमिति** । तथा च प्रमाणादीनामसत्त्वप्राप्त्या प्रमाणादिसत्ताभ्युपगमपूर्वकताराहितत्वादिति हेतोरपि प्रमाणान्तर्गतत्वेनासत्त्वप्राप्त्या स्वरूपासिद्धत्वमित्यर्थः । **तच्चेति** । स्वरूपासिद्धत्वम् ।

**कं०रा०**— कथञ्चिदित्यनेन तस्योपाधित्वे सूचितमस्वारस्यं दर्शयति **किञ्चेति** । अयं सद्वचनाभास-लक्षणयोगित्वरूपोपाधिः प्रमाणादिसत्ताभ्युपगमराहित्यरूपसाधनान्न भिद्यते । प्रमाणादिसत्ताभ्युपगमराहित्ये तदसत्त्वमेवाङ्गीकृतम् । तथा च प्रमाणादीनां स्वरूपासिद्धत्वं हेतुवाक्येनोक्तं भवति । तच्च सद्वचनाभासलक्षण-विशेष एवेति । अतः साधनाभिन्नत्वेन तदव्यापकत्वाभावान्नायमुपाधिरिति भावः । यद्यपि स्वरूपासिद्धेरर्थ-दोषत्वान्न शब्दे सद्वचनाभासलक्षणविशेषत्वं तथाऽप्यर्थद्वारा वचनं प्रत्यपि दोषत्वात्तदिति ध्येयम् ।

**श्रीनिधि०**— **न साधनाद्भिद्यत इति** । साधनाधिकरणभिन्नाधिकरणं नेत्यर्थः । उपाधेः साधन-समानाधिकरण्यमुपपादयति **यदा हीत्यादिना** । अनुपदमेव वक्ष्माणरीत्या साधनाव्यापकत्वात् कथञ्चिदित्युक्तम् । **तदसत्त्वं** प्रमाणाद्यसत्त्वम् । व्यवहारासत्त्वमिति वान्यरूपासिद्धत्वम् । व्यवहारस्येति शेषः । **एतदाशङ्क्येति** । प्रमाणादीनामसत्त्वे व्यवहारस्यासत्त्वमाशङ्क्येत्यर्थः ।

**वा०चं०**— एवं प्रसङ्गत्वान्नायमुपाधिरिति मूलाभिप्रेतं परिहारमुक्त्वाऽस्तु साधनानुमानत्वं तथाऽपि नायमुपाधिः संभवतीत्यभ्युच्चयेन परिहारान्तरमाह **किञ्चेति** । यद्वा कथञ्चिदिति सूचितं साधनेऽप्यस्यानुपाधित्व-मुपपादयति **किञ्चेति** । अथवा साधनवदापादने तन्मूलभूतायां व्याप्तौ वाऽस्योपाधित्वशङ्कानिरासाय किमायासान्तरेण साधनेऽप्यस्योपाधित्वं न संभवतीत्याह **किञ्चेति** । **न साधनाद्भिद्यत इति** । साधनव्यापक इत्यर्थः । वक्रोक्तेः प्रयोजनं तु साधनमुपाधिं विनाऽनुपपन्नं पक्षे स्वयं सदुपाधिमप्याक्षिपतीति नोपाधेः पक्षे साधनाय यत्नान्तरं कर्तव्यमिति सूचनम् । साधनबलादेव पक्षे तत्सिद्धिमुपपादयति **यदा हीति** । यद्वा प्रमाणादिसत्ताऽभ्युपगमपूर्वकताराहित्यस्य साधनतया निर्दिष्टस्यापि तृतीयप्रकाराभावेनासत्त्वाभ्युपगम एव पर्यवसानात्पर्यवसितसाधनस्योपाधिघटितशरीरतया नोपाधिः साधनाद्भिद्यत इत्युक्तम् । एवं च नोपाधिः साधनाद्भिद्यते साधनशरीराप्रविष्टो न भवतीत्यर्थः । प्रकृत-साधनस्य तत्र पर्यवसानमुपपादयति **यदा हीति** । यद्वा व्यवहारस्य साधनाद्यक्षमत्वेऽसत्त्वाभ्युपगमपूर्वकत्वमेव हेतुः । तच्चोपाधिघटितशरीरमेवेत्याशयेन न साधनाद्भिद्यत इत्युक्तम् । न च हेत्वसिद्धिः । सत्ताऽनभ्युपगमेन तत्साधनादित्याशयेनाह **यदा हीति** । ननु सत्त्ववदसत्त्वस्याप्यनङ्गीकारादसत्त्वाभ्युपगमस्य न प्रकृतसाधन-व्यापकत्वं तत्पर्यवसानविषयत्वं वा स्वयमेव हेतुत्वं वेत्याशयेनाशङ्कते **नन्विति** । उभयानङ्गीकारे तृतीयप्रकारा-

भावेन कथायां प्रमाणादिस्वीकार एवानुपपन्न इत्याशयेनाह **दुरुक्तमिति** । ननु सत्त्वासत्त्वोभयानभ्युपगमेऽपि सदसद्वैलक्षण्यरूपतृतीयप्रकारेण प्रमाणादिस्वरूपस्य बुद्ध्यारोहेण स्वीकारोपपत्तेर्नानुपपत्तिरित्यत आह **एवं चेति** ।

**वा०र०**— पूर्वं प्रसङ्गत्वमाश्रित्य बाधादिवदुपाधेरपि परिहारः कृतः । इदानीं तु साधनत्वमाश्रित्योपाधिखण्डनं क्रियतेऽतः पूर्वोत्तरमूलविरोध इत्यतः पूर्वं वास्तवरीत्याश्रयणेन प्रसङ्गत्वेनोपाध्यसंभवः प्रतिपादितः । इदानीं त्वस्तु वा साधनानुमानमेवैतत् । तावताऽप्युपाधिर्नायातीति प्रतिपाद्यते इत्यङ्गीकारवादेन प्रवृत्तेर्न विरोधः । न चानङ्गीकृतप्रकारानुसरणेन तन्निराकरणं किं निबन्धनमिति वाच्यम् । अभ्युच्चयेन तस्यापि समर्थन-संभवादित्याह **एवमिति** । किञ्चेत्यादिग्रन्थो न तर्कत्वपरिहृतानुपपत्तिपरिहारकः । किन्तु साधने कथञ्चिदुपाधिः स्यादित्यनेन कथञ्चिदित्युक्तेः साधनेऽपि स नायातीति प्रतिपादितं भवति । तत्कथमित्याशङ्कापरिहाराय साधनेऽपि तस्योपाधित्वासंभवं प्रतिपादयितुं प्रवृत्त इति स्वीक्रियेत । तथा च पूर्वयोजनायामिव नैतद्योजनायां पूर्वग्रन्थविरोधापादकसाधनत्वाङ्गीकारप्रसक्तिरिति भावेन प्रकारान्तरमाह **यद्वा कथञ्चिदितीति** । अत्रापि प्रकृततर्कसमर्थनत्वत्यागरूपं दूषणमायात्येवेत्यपरितुष्यन् साधनानुमाने उपाधित्वनिराकरणस्यापि तर्के तन्निरासंसिध्यर्थत्वाभिप्रायेण क्रियमाणत्वान्न तर्कसमर्थनपरत्वाभावोऽस्य ग्रन्थस्य प्रसज्यत इत्याशयेन प्रकारान्तरेणावतारयति **अथवेति** । साधनवदित्यादेरयमर्थः । यथा साधने उपाधिर्दूषणमेवमापादनादावपि दूषणं स्यादित्येतच्छङ्कानिरासाय साधनव्यावृत्तापादनत्वरूपविशेषादेव नोपाधेर्दूषणत्वमायातीत्यायासान्तरेण किं प्रयोजनम् । किन्तु साधने उपाधित्वे हि तन्न्यायेनापादनेऽपि तद्दूषणत्वं वाच्यम् । न च साधने तस्योपाधित्वं संभवतीति प्रसञ्जकाभावादेवापादने शङ्काप्रसक्तिरेव नास्तीति प्रतिपादयति **वक्रोक्तेरिति** । साधनव्यापक इति वक्तव्ये तथाऽनुक्त्वा साधनान्न भिद्यत इति वक्रोक्तेरित्यर्थः । प्रयोजनं तु सूचनमिति संबन्धः । **साधनबलादेवेति** । कथं साधनमुपाधिमप्याक्षिपतीत्यत इति पूरणीयम् । अत्र पक्षे साधनान्न भिद्यत इत्यस्य साधनाभेद-प्रतिपादकस्यास्वारस्यमाश्रयणीयं भवतीत्यपरितोषात्प्रकारान्तरमाह **यद्वा प्रमाणादीति** । **तृतीयप्रकारेति** । सत्त्वाऽभ्युपगमपूर्वकत्वासत्त्वाभ्युपगमपूर्वकत्वरूपप्रकारद्वयातिरिक्ततृतीयप्रकाराभावादित्यर्थः । **उपाधिघटित-शरीरतयेति** । स्वरूपासिद्धत्वं सद्वचनाभासविशेष एवेति मूले प्रतिपादनानुसारेणासत्त्वस्य साधनशरीरप्रवेशेनैवो-पाधेस्तत्प्रवेशादिति भावः । अत्र पक्षे मूलाक्षरार्थमाह **एवं चेति** । **प्रकृतसाधनस्येति** । कथमसत्त्वाभ्युपगमे पर्यवसानमित्यतस्तस्य तत्र पर्यवसानमुपपादयतीत्यर्थः । पर्यवसानपक्षे साक्षाल्लाभायोगात्साक्षादेवोपाधिघटित-साधनलाभं दर्शयंस्तत्परत्वेनैतद्ग्रन्थं योजयति **यद्वा व्यवहारस्येति** । एवं चानङ्गीकुर्वतामिति भाष्योक्तः सत्त्वानभ्युपगमो न साक्षात्साधकत्वाभावसाधकतयाऽभिमतः किन्त्वसत्त्वाभ्युपगमसाधनद्वारैवेत्याशयः सूचितो भवति । **न प्रकृतेति** । न साधनाद्भिद्यत इत्येतद्योजनात्रयानुसारेण न प्रकृतसाधनव्यापकत्वमित्यादित्रयं कीर्तितम् । **तृतीयेति** । सत्त्वासत्त्वरूपप्रकारद्वयातिरिक्तप्रकारेत्यर्थः । **अग्र इति** मूलम् । वैलक्षण्यं सतश्चेत्यादिनेत्यर्थः ।

**स०व्र०**— तर्केऽप्युपाधिः किं न स्यादित्यतः कथञ्चिदित्युक्तानुपपत्तिं दर्शयति **किञ्चेति** । न च सद्वचनाभासलक्षणायोगित्वस्य प्रमाणादिसत्ताऽनभ्युपगमपूर्वकत्वस्य च भिन्नत्वात्कथमुपाधेः साधनाभेद इति





वाच्यम् । साधनव्यापकत्वप्रतिपादन एवास्य ग्रन्थस्य तात्पर्यात् । नन्वनिर्वचनीयवादिनः सत्त्वासत्त्वौदासीन्येनापि प्रमाणानां बुद्ध्यवारोहः शक्य एवेत्यत आह **एवं चेति**। निराकरिष्यते 'वैलक्षण्यं सतश्चापी'त्यादिना।

**विठ्ठ०**— अस्तु वेदं साधनानुमानं तथाऽप्युपाधिर्न संभवतीत्याह **किञ्चेति** । **तदा तदसत्त्वमेवेति** । सत्तानङ्गीकारस्य तदसत्त्वाङ्गीकारपर्यवसायित्वात् प्रमाणादीनामसत्त्वे तत्स्वरूपस्यैवासत्त्वं स्यादित्यर्थः । ततश्च किमित्यत उक्तं **तच्चेति** । स्वरूपासिद्धप्रमाणादिव्यवहारत्वमेव सद्वचनाभासलक्षणयोगित्वमिति साधनोपाध्योर्न भेद इति भावः । आकाङ्क्षायोग्यतादिराहित्यं खलु सद्वचनाभासलक्षणयोगित्वं तत् कथमिदं स्यादिति चेत् स्वरूपासिद्धप्रमाणादिव्यवहारस्यापि तद्विशेषत्वात् शिंशुपावृक्ष इत्यादौ विशेषस्य सामान्याभेदप्रसिद्धेः असिद्धव्यवहारत्वस्यापि योग्यतादिराहित्यविशेषत्वात् इत्याशयेन तत्र सद्वचनाभासलक्षणविशेष इत्युक्तम् । ननु मायावादिना यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं सिध्येदित्यादिना एतदुपाधेः साधनाभिन्नत्वमाशङ्क्य न ब्रूमो वयमित्यादिना प्रमाणादीनां सत्त्वासत्त्वौदासीन्येन समयबन्धेन व्यवहाराङ्गीकारे सद्वचनाभासलक्षणयोगित्वाभावादुपाधिः साधनभिन्न एवेत्युक्तमिति शङ्कते **नन्वेतदिति** । **तत्स्वीकारेति** । बुद्धौ आरूढस्यैव स्वीकारो भवति तथाचोभयोदासीनस्य बुध्यनारूढत्वेन व्यवहर्तॄणां स्वीकारानर्हत्वादिति भावः।

**चषकः— साधनादिति** । प्रमाणादिसत्तोपगतिपूर्वकतारहितत्वादिति साधनादित्यर्थः । साधन-व्यापकत्वान्नोपाधिरिति भावः । **तच्चेति** । सामान्यधर्मावच्छिन्नस्य विशेषधर्मावच्छिन्नाभेदस्तु वृक्षः शिंशुपा, द्रव्यं घट इत्यादौ प्रसिद्ध इति भावः । **निराकरिष्यत इति** । 'वैलक्षण्यं सदसतोरित्यादिने'ति पूरणीयम् । **पर्यनुयोज्यः** शङ्कनीयः । **संवादः** संप्रतिपत्तिः । **आद्यं** प्रमाणव्यवहार इति कल्पम् ।

**गूढ०**— अस्तु चैवं साधनं तथापि नायमत्रोपाधिरित्याह **किञ्चायमिति**। नन्वयमुपाधिर्न साधनात् भिद्यत इत्युक्तम् । प्रमाणादिसत्ताभ्युपगमपूर्वकतारहितत्वे सद्वचनाभासलक्षणयोगित्वरूपसाधनोपाध्योः पदार्थैक्यापत्तत्वेन तदभेदस्य वक्तुमशक्यत्वादित्यत आह **यदा हीति** । ततोऽपि कथमभेदः समर्थित इत्यत्राह **तच्चेति** । स्वरूपा-सिद्धत्वमिति भावः । तथाच प्रमाणादीनां सत्तानभ्युपगमे तदसत्त्वस्यैवाङ्गीकृतत्वेन तव मिथ्यात्वव्यवहार-मूलभूतप्रमाणस्य दृश्यत्वादेरप्यसत्त्वेन स्वरूपासिद्धत्वं स्यात्तस्य च सदसद्वचनाभासविशेषरूपत्वेन पक्षीकृतव्यवहारे हेतूपाध्योः सत्त्वेन साधनव्यापकत्वान्नायमुपाधिर्युज्यत इत्यर्थः । तथाच आहत्यपदार्थैक्याभावेऽपि अर्थतः सिद्धमैक्यमादाय न भिद्यत इत्युक्तमिति भावः । यद्वा सामान्यस्य सद्वचनाभासलक्षणयोगित्वस्य विशेषे स्वरूपासिद्धत्वादौ पर्यवसानमङ्गीकृत्यैवमुक्तम् । **सत्त्वासत्त्व इति** । निष्प्रकारस्य बुद्ध्यवारोहासंभवादिति भावः । **तत्स्वीकारानुपपत्तेः** । कथाप्रवृत्तिस्वीकारानुपपत्तेः । ननु सत्त्वासत्त्वाभ्यां प्रमाणस्वरूपस्य बुद्ध्यवारोहासंभवेऽपि तदतिरिक्तसत्त्वासत्त्वविलक्षणत्वरूपानिर्वचनीयत्वप्रकारेण बुद्ध्यवारोहः संभवतीति युक्त एव कथाप्रवृत्तिस्वीकार इत्यत आह **एवं चेति**।

**प्रदीपः**— प्रसङ्गाभिधानेनोपाधिः संभवतीत्युक्तम् इदानीमुपाधिरेवायं न संभवतीत्याह **किञ्चेति** । प्रमाणादिसत्ताभ्युपगमस्य कथं सद्वचनाभासशब्दार्थ इत्यर्थः । ननु सत्त्ववदसत्त्वस्याप्यङ्गीकारान्न दोष इत्युक्त-मनुभाष्यं (?) दूषयति **नन्विति** । नन्वनिर्वचनीयवादिनः सत्त्वासत्त्वौदासीन्येनापि प्रमाणानां बुद्ध्यावारोपः शक्यत एवेत्यत आह **एवं चेति** ।

**२७२ सु०— यदप्यत्रोक्तं 'कीदृशीं मर्यादामि'त्यादि । तत्र यः प्रमाणाद्यसत्त्वमभ्युपैति, यश्च तत्सत्तां प्रतीत्यापि 'सत्ताद्युदासीनोऽहमि'ति मन्यते तं प्रतीदं दूषणमिति वदामः । न चोक्तदोषः । न हि वयं प्रमाणादिसत्ताऽभ्युपगमं कथाप्रवृत्तिकारणतयाऽवश्यं ततः पूर्वभाविनं ब्रूमः । किं नाम यो यथाकथञ्चित्कथायां प्रवृत्तस्तं विपक्षे कथाऽनुत्पत्तिप्रसङ्गं दण्डं प्रदर्श्य तत्कारणानां प्रमाणादीनां सत्तामङ्गीकारयामः । न चैवं कथान्तरप्रस-क्त्यादिदोषः । प्रमाणादिसत्ताऽनभ्युपगमे कथाया एवानिष्पत्तेः । एतेन शिष्यज्ञापनमपि समाहितम् । प्रतिवादिनः कथाप्रवेशमभ्युपगम्य तत्र प्रवृत्तं प्रति प्रमितकथाकार्यबलेन कारणप्रमाणादिसत्ताया अभ्युपगन्तव्यत्वस्योक्तत्वात् ।**

**परि०**— **इत्यादीति** । तथाच व्याघात इत्यन्तमित्यर्थः । **न चोक्तदोष इति** । व्याघातदोष इत्यर्थः । ब्रूम इत्यनन्तरं येन व्याघातदोष इति योज्यम् । **न चैवमिति** । प्रारब्धप्रमेयान्तरकथात्यागेन प्रमाणसत्तापादने प्रकृतकथातः कथान्तरप्रसक्तिदोषः । कथान्तरेऽपि प्रमाणासत्त्ववादिनं प्रति एवमेवा-पादनीयमित्येवं पूर्वोक्तानेककथान्तरप्रसक्तिरित्यादिपदार्थः ।

**गु०दी०**— **न चैवम्** इत्यत्र प्रमाणसत्ताभ्युपगमसाधनरूपकथान्तरप्रसक्त्यादिदोषः । **प्रमाणसत्ता-नभ्युपगम** इत्यत्र कथास्वरूपनिष्पादककथनेऽपि कथान्तरत्वे (अर्थान्तरत्वे) कथाङ्गभूतव्याप्तिदृष्टान्तादिकथनेऽपि कथान्तरत्वं स्यादिति भावः । **कथाप्रवेशमभ्युपगम्येति** अङ्गीकृत्योक्तम् । वस्तुतस्तु प्रमाणसत्तामनङ्गीकुर्वतां चार्वाकादीनां कथकतैव न स्यादिति स्वमठे स्वशिष्यान् प्रति बोधयितुं न कथायाः उपयोग इत्यपि द्रष्टव्यम् ।

**वं०प०**— **तत्र य इति** । वादीत्यर्थः । **इदं दूषणमिति** । यदि प्रमाणानि न सन्तीत्यादिनोक्तं दूषण-मित्यर्थः । **यश्चेति** । प्रतिवादीत्यर्थः । ननु तर्हि यथैकेन प्रमाणादिसत्तानभ्युपगमेऽपि यदि प्रमाणादीनि न सन्तीति प्रकृतैतद्दूषणाधिकरणभूतकथारूपव्यवहाराख्यो धर्मी सिद्धस्तथैव मत्कर्तृककथान्तरप्रवृत्तिः प्रमाणादिसत्ताऽनभ्युप-गमेऽपि भविष्यतीत्युक्तो दोषः स्यादेवेत्याशङ्क्य निराकरोति **न चोक्तदोष इति** । कुतो न चेत्यत आह **न हीति** । **ब्रूम इति** । यद्येवं वयं ब्रूमस्तर्ह्येव प्रमाणादिसत्ताभ्युपगमाभावेऽप्येतद्दूषणाधिकरणकथाऽन्तरप्रवृत्त्युपपत्तिरिति





दूषणमस्माकं स्यान्न चैवं ब्रूम इत्यर्थः । **यथाकथञ्चिदिति** । समयबन्धादिमात्रेणेत्यर्थः । **प्रवृत्तो** वादी । कथायां प्रवृत्तं वादिनं प्रत्येव । **विपक्षे** प्रमाणादिसत्तानङ्गीकारे । **एवं सति** यथाकथञ्चित्कथायां प्रवृत्त्यङ्गीकारे । कथान्तर-प्रसक्त्यादिदोषो न च, न हीत्यर्थः । आदिपदेन स्वव्याघातग्रहणम् । स्वयमेव प्रतिवादी तत्त्ववादी प्रमाणादिसत्ता-ऽभ्युपगममन्तरेणापि प्रकृतकथारूपव्यवहारप्रवृत्तिमङ्गीकृत्य तत्र यदि प्रमाणादीनि न सन्ति तर्हि व्यवहार एव धर्मी न सिद्ध्येदिति दूषणाभिधाने किल स्वाव्याघातः स्यात् । न चैवम् । प्रमाणादिसत्ताऽभ्युपगममन्तरेण कथाप्रवृत्तेरस्माभिरनङ्गीकारात् । यथाकथञ्चित्प्रवृत्तं परं प्रत्येव विपक्षे बाधकप्रदर्शनेन सत्ताया अङ्गीकर्तव्य-त्वस्योक्तत्वात् । न ह्येवं सति व्याघातप्रसक्तिरस्तीत्याशयः । एतेनेत्युक्तम् विशदयति **प्रतिवादिन इति** । कथाप्रवेशं यथाकथञ्चित्कथायां प्रवेशम्।

**कं०रा०— न चोक्तदोष इति** । प्रमाणादिसत्ताभ्युपगमस्य कथानुपयोगलक्षणो दोष इत्यर्थः । एतेनेति शब्दपरामृष्टं हेतुमाह **प्रतिवादिन इति**। **आद्यमिति**। प्रमाणव्यवहारसिद्धत्वादित्याद्यमङ्गीकुर्म इत्यर्थः।

**श्रीनिधि०— न चोक्तदोष इति** । व्याघातलक्षण इति शेषः । **प्रमाणादिसत्तानभ्युपगम इति** । प्रमाणादिसत्तानङ्गीकारे प्रमाणादीनामसत्त्वेनासाधकत्वापत्त्या तत्सत्त्वे अङ्गीकार्ये प्रमाणादीनां ब्रह्मातिरिक्तत्वेन असत्यत्वान्मिथ्यात्वासाधकत्वमित्युक्ते कथान्तरता शङ्का न युक्ता। एतादृशस्य कथान्तरत्वे कथाया एवानिष्पत्तेः । वादिना हेतौ प्रयुक्ते स्वरूपासिद्ध्यभिशङ्कायां स्फूर्तिमतापि तन्निराकरणस्याकर्तव्यतापातादिति भावः । प्रमाणानां स्वरूपासिद्धत्वं यथा दूषणं तथा कथाया अपि स्वरूपसिद्धत्वस्य दूषणत्वादिति वा । आदिपदेन व्याघातदोषो नास्तीत्यर्थः। तृतीयपक्षवदेव तत्प्राप्तिपरिहारौ द्रष्टव्यौ।

**वा०चं०—** एवं प्रसङ्गत्वकथनेन भाष्यसूचितं परोक्तदूषणानां परिहारमभिधाय व्यवहृतिरिति प्रमाणानां कारणत्वोक्त्या, सत्ताऽभ्युपगमस्य कारणत्वाभावसूचनेन लब्धं परोक्तदूषणानां परिहारमुपपादयति **यदपीति** । प्रथमद्वितीयपक्षयोरनङ्गीकारपराहतिं सूचयन्पर्यनुयोगविषयं तावद्दर्शयति **तत्रेति** । तत्रासत्त्वमुपैति तं प्रतीति प्रथमद्वितीयपक्षयोरनङ्गीकारस्य सूचनम् । यः प्रमाणादीति असत्त्वाभ्युपगन्तुर्यश्चेति च तस्मादिति परपरिशेषित-स्योदासीनस्य च पर्यनुयोगविषयत्वं च सूचयति । नन्वेवं प्रथमद्वितीयोक्तदोषाभावेऽपि तृतीयपक्षोक्त-तथैवकथान्तरप्रसक्तदोषस्तस्मादिति परिशेषितपक्षोक्तव्याघातश्च स्यादेवेत्याशङ्क्य निषेधति **न चेति** । यच्चेत-द्दूषणाभिधानेन कथाप्रवृत्तेः प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वं साधयितुमस्माकमयं प्रयत्नः स्यात्तर्ह्यस्याः कथायाः असत्त्वाभ्युपगमेऽपि प्रवृत्तत्वादेव तद्वत्कथान्तरप्रवृत्तेरपि संभवात्कथाप्रवृत्तेर्न प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वं सुसाधम् । औदासीन्येन प्रवृत्तायां कथायां सत्ताऽनभ्युपगमे कथाऽप्रवृत्तिप्रतिपादने व्याघातश्च स्यात् । न चैवमिति भावेनाह **न हीति** । तर्हि साधनीयान्तराभावाद्विवादः पर्यवसन्नः किमित्याशङ्क्ते **किं नामेति** । **यथाकथञ्चिदिति** । असत्त्वमभ्युपेत्य वौदासीन्येन वेत्यर्थः । कथेत्यतःपूर्वं प्रारब्धेति शेषः । एवं च कथाप्रवृत्तेः सत्ताऽभ्युपगम-पूर्वकत्वस्य साधयितुमशक्यत्वेऽपि प्रमाणादीनां कथाप्रवृत्तिकारणत्वात्तेषामसत्त्वे कार्यभूतप्रमितप्रारब्धकथा-





नुत्पत्तिबाधकेन कथाकारणीभूतप्रमाणादिसत्त्वस्यासत्त्वाभ्युपगमेन वौदासीन्येन वा प्रवृत्तकथायामभ्युपगमनीयत्वप्रतिपादने कथान्तरप्रसक्तिव्याघातयोः प्रसक्तिरेव नास्तीत्याह **न चैवमिति** ।

**वा०र०**— अनेनापहस्तितमित्यत्र तस्माद्व्यवहृतिरित्यनेन प्रसङ्गत्वसूचनं व्यवहृतिपदप्रयोगेण सत्ताऽभ्युपगमस्य कारणत्वाभावज्ञापनं चेति हेतुद्वयं विवक्षिततयोक्तम् । तत्र प्रसङ्गत्वसूचनव्यावर्त्यशङ्कानिरासः पूर्वमिवेदानीमपि नास्ति । किन्तु व्यवहृतिरिति यौगिकपदप्रयोगसूचितदूषणपरिहारः कथ्यत इति पूर्वोत्तरप्रकरणयोः प्रमेयभेदं दर्शयन्नवतारयति **एवं प्रसङ्गत्वेति** । **दूषणानां परिहारमिति** । दूषणान्यनूद्य तेषामिति योज्यम् । **प्रथमद्वितीयपक्षयोरिति** । कीदृशीमित्यादिपूर्वग्रन्थे परेण विकल्पिते उभाभ्यां सत्त्वमभ्युपेत्य प्रवृत्तायां ताभ्यामसत्त्वं वा एकेनासत्त्वमपरेण सत्त्वं वेति पक्षत्रये प्रथमद्वितीयपक्षयोरित्यर्थः । पर्यनुयोगविषयमिति यं प्रत्यस्माभिस्तव कथाधिकारो न संभवतीति पर्यनुयोगः क्रियते । यो वादी दूष्यत इति यावत्तमित्यर्थः । पूर्वद्वयस्यानङ्गीकारोक्त्या तद्दूषणमस्मान्प्रत्यसङ्गतमिति सूचितम् । तावदित्युक्त्या पश्चात्तत्पक्षे तदुक्तानुपपत्तिमाशङ्क्य तत्परिहारः क्रियत इति सूचयति । एतन्मूलात्पर्यनुयोगविषयमात्रप्रतीतावपि प्रथमद्वितीययोरनङ्गीकाराप्रतीतेराह **तत्रासत्त्वमिति** । **तं प्रतीति** । अनेन हि योऽसत्त्वमभ्युपैति न तु सत्त्वमिति लाभादुभाभ्यां सत्त्वमङ्गीकृत्य प्रवृत्तकथायामिति पक्षोऽनङ्गीकृत इति लब्धमेव । य इत्येकवचनेनान्यस्य च दूषणकर्तुरसत्त्वाभ्युपगमो नास्तीति प्रतिपादनलाभादुभाभ्यामसत्त्वमङ्गीकृत्य प्रवृत्तायामिति द्वितीयपक्षोऽप्यनङ्गीकृत इति लभ्यत इत्यर्थः । प्रथमद्वितीयानङ्गीकारसूचनपूर्वं तृतीयाङ्गीकारमात्रस्य योऽसत्त्वमुपैतीत्येतन्मात्रेण स च न संभवादधिकं व्यर्थमित्यत उक्तं **यश्चेति च तस्मादितीति** । प्रमाणादीत्यनेन यश्चेत्यनेन चेति योज्यम् । अभ्युपगन्तुः पर्यनुयोगेति संबन्धः । **तृतीयपक्षोक्तेत्यादि** । तृतीयपक्षपरिशेष..............पक्षयोरङ्गीकारे तदुभयत्रोक्तदूषणतादवस्थ्यादिति भावः । अनेनोक्तेत्येतत्तत्पक्षोक्तेति विवृतं दोष इत्येतच्च विवृतं भवति । एत................\...... (प्रवृत्तीत्यादेर्व्याख्यानं कृतं भवति । दूषणाभिधानादियत्नेन कथाप्रवृत्तेः प्रमाणादि)..........नामसत्त्वाङ्गीकारे साधकत्वं न स्यादिति दूषणेत्यर्थः । **साधयितुमस्माकं यत्न इति** । अनेन सत्ताऽभ्युपगमपूर्वकत्वं य ............................ सुसाधं स्यादित्युत्तरेण संबन्धः । अनेन ब्रूम इत्यनन्तरं येनोक्तदोषः स्यादिति पूरणीयमिति सूचयति **प्रारब्धेतीति** । तथा च ................ नुत्पत्तिप्रसङ्गमिति व्याख्यानं सिध्यति । न चैवं कथान्तरप्रसक्त्यादिदोष इति मूलवाक्ये न चोक्तो दोष इत्यस्य परिहारः ............................ एवं सति अस्माभिः सत्ताऽभ्युपगमस्य कथाकारणत्वसाधनपक्षमनङ्गीकृत्य प्रमाणादिसत्त्वस्य कथायामभ्युपगमनीयत्वप्रतिपादनपरत्वं चाङ्गीकृत्य दूषणाभिधानादियत्न इत्यङ्गीकारे सतीत्यादिरूपेति मनसि कृत्वा स्वाङ्गीकृतपक्षे तद्दोषप्रसक्तिर्नास्तीत्यर्थपरतया योजयति **एवं च कथेति** । प्रमाणादिसत्त्वस्येत्यस्याभ्युपगमनीयत्वेत्युत्तरेण संबन्धः । प्रतिपादन इत्यन्तेन मूलस्थैवमित्यस्य व्याख्यानं कृतम् । मूलेत्यनेन शिष्येति । नेदं दूषणं प्रतिवादिनं प्रत्युच्यते येनोक्तदोषावकाशः स्यात्किं नाम शिष्यादयः प्रमाणादिसत्तानभ्युपगन्तुः कथनाधिकारं ज्ञाप्यन्त इत्युक्तं शिष्यादिज्ञापनमप्येतेन समाहितमित्यर्थः । अस्तु वा शिष्यादिज्ञापनमात्रकरणमेव





सत्तानभ्युपगमे कथाधिकाराभावप्रतिपादनप्रयोजनं तत्रोक्तदोषाप्रसरादित्याशयः । एतेनेत्यतिदिष्टप्रकारमेव दर्शयति **प्रतिवादिन इति** ।

**स०व्र०**— नन्वत्राप्युक्तं किमेतत्कथाऽऽरम्भो न संभवत्युत कथाऽऽन्तरारम्भः । नाद्यः । आरब्धत्वादेव । नान्त्यः । प्रमाणादिसत्ताऽनभ्युपगमेऽप्येतत्कथाऽऽरम्भवत्कथाऽन्तरारम्भोपपत्तेरिति । तद्दूषयति **न चोक्तदोष इति** । **न चैवमिति** । यदि सत्ताऽभ्युपगममन्तरेण प्रवर्तिता तत्कथा स्यात्तदैव तद्दृष्टान्तेन कथान्तरमप्येवं प्रसज्येतेति स्यात् । न चैतदस्ति । सत्ताऽनभ्युपगमे प्रारब्धाया अपि कथात्वाभावस्यापाद्यमानत्वादिति भावः । प्रमाणादिसत्त्वस्य प्रामाणिकव्यवहारसिद्धत्वे चक्रकाद्यापत्तिरुक्ता ।

**विट्ठ०**— सत्त्वासत्त्वौदासीन्यं नाम सदसद्विलक्षणत्वरूपानिर्वचनीयत्वमभिप्रेतं तथाच तत्स्वीकारो मम संभवतीति अत आह **इदं चेति** । वैलक्षण्यं सतश्चापीत्यत्रेत्यर्थः । **तत्र य इति** । कीदृशीं मर्यादामिति प्रश्ने यः प्रमाणाद्यसत्त्वमभ्युपैति चार्वाकादिः यश्च प्रमाणादिसत्तां ज्ञात्वाऽपि प्रपञ्चमिथ्यात्वसिद्धये तत्सत्तादौ उदासीनोऽहमिति मन्यते चार्वाकमाध्यमिकादिवैलक्षण्यात् मायावादी तं प्रति इदं दूषणमुच्यते इति वदाम इत्यर्थः । एवं तर्हि परस्य प्रमाणादिसत्ताभ्युपगममन्तरेणापि कथाप्रवृत्तिमङ्गीकृत्य प्रवृत्तायां कथायामेव प्रमाणादिसत्ताभ्युपगमे कथारूपधर्मिसिद्धिरित्यभिधाने स्वव्याहतिरिति प्रागुक्तदोषः स्यादित्यत आह **न चोक्तदोष इति** । ब्रूम इत्यतःपरं येन व्याघातः स्यादिति शेषः । **यथाकथञ्चिदिति** । स्वस्वमतरीत्या कथायां प्रवृत्तं प्रति प्रमाणादीनां समेषां हेतुतानङ्गीकारान्नोक्तदोषस्सङ्गत इति भावः ।

**गूढ०**— **यश्चेति** । य एवेत्यर्थः । **इदं दूषणमिति** । धर्मीव्यवहार एव सिध्येदित्यादिरूपमित्यर्थः । **न चोक्तदोष इति** । तथाचासत्त्वमभ्युपगम्य सत्ताद्युदासीन इति शब्दमात्रं प्रयुञ्जानं प्रति दूषणस्याभिधीयमानत्वादुदासीनपक्षोक्तः व्याघाताख्यदोषो नेत्यर्थः । नन्वेवमपि दूषणवक्ता किं सत्त्वाभ्युपगमवान् उतासत्त्वाभ्युपगमवान् । नाद्यः । कथान्तरप्रसक्तिरूपपूर्वोक्तदोषानुद्धारात् न द्वितीयः । स्वस्यापत्तेरिति पूर्वोक्तदोषापातादित्याशङ्क्याह **न हि वयमिति** । उक्तोपपादनफलं दर्शयति **न चैवं कथान्तरेति** । आदिपदेन स्वस्याप्यापत्तेरित्यस्य परिग्रहः । केचित्तु यत्कथान्तरमपि सत्ताभ्युपगमशून्यं प्रसज्येतेत्युक्तमपवदति **न चेति** । सत्ताभ्युपगमानन्तरेण प्रवृत्तेयं कथा स्यात् । तदेवैतद्दृष्टान्तेन कथान्तरमप्येवं प्रसज्येतेति स्यान्न चैतदस्ति सत्तानभ्युपगमे प्रारब्धाया अपि कथात्वाभावस्यापाद्यमानत्वादिति भाव इत्याहुः । एतेनेत्यस्यार्थमाह **प्रतिवादीति** ।

**प्रदीपः**— कथायामेव दूषणस्याभिधेयत्वात्सत्तामूलेव कथेति नियमवादिनस्तदनुगुणकथा न संभवतीति विकल्प्य तदनुभाष्यं दूषयति **यदपीति** । यदत्रोक्तं निरनुयोज्यानुयोगो जात्युत्तरं चेति तत्तावद्विघटयति **न चेति** । यत्कथान्तरमपि सत्ताभ्युपगमशून्यं प्रसज्येतेत्युक्तं तदपवादिनश्चेति सत्ताभ्युपगममन्तरेण प्रवर्तितेव कथा स्यात्तदेतत्





दृष्टान्तेन कथान्तरमप्येवं प्रसज्येतेत्युक्तं स्यात् नैतदस्ति सत्तानभ्युपगमे प्रारब्धाया अपि तथात्वाभावस्य आपाद्यमानत्वादिति भावः । चार्वाकादेः कथाधिकारयोरेतदवद्यं तस्येति न शिष्यबोधनं भवतीत्युक्तमतिदेशेन दूषयति **एतेनेति** । अतिदिष्टमेव हेतुं स्पष्टयति ।

**२७३ सु०— द्वितीयपक्षोक्तदोषोऽप्यसङ्गत एव । न हि वयं प्रमाणादिसत्ताऽभ्युपगममपि कथकप्रवर्तनीयवाग्व्यवहारकारणकोटौ निवेशयामः । येन तत्सत्ताऽनभ्युपगन्तॄणां वाग्व्यवहारस्वरूपं न निष्पद्येतेति प्रसङ्गः स्यात् । अपि तर्हि प्रमाणादीनामेव कथाकारणता । सा च सत्त्वाभावे नोपपद्यत इति तत्सत्त्वमङ्गीकरणीयमिति वदामः ॥ यत्पुनः 'कथकवाग्व्यवहारं प्रती'त्याद्याशङ्क्योक्तम् । 'एवं वदता कथाप्रवृत्त्युत्तरकालं प्रमाणादिसत्ता अङ्गीकारयितव्या । तथा च कथाफलस्य प्रमाणादिसत्ताऽभ्युपगमस्य न कथाकारणत्वम् । किन्तु प्रमाणैर्व्यवहर्तव्यमित्यादिव्यवहारनियमस्यैवे'ति तदस्माभिरभ्युपगतमेव ॥ यस्तु सत्ताऽभ्युपगममपि कथाकारणं ब्रूते । स एवैवं पर्यनुयोज्यः ॥ यत्पुनः 'न च प्रमाणादीनाम्' इत्यादिना कल्पनागौरवमवादि । तत्र किं प्रमाणादिसत्ताऽभ्युपगमे कल्पनागौरवमुत तत्सत्ताऽभ्युपगमस्य कारणकोटिप्रवेशने । नाद्यः । कारणत्वान्यथाऽनुपपत्त्या तत्सत्तायाः प्रमितत्वात् । प्रमितस्य परीक्षकैरङ्गीकरणीयत्वात् । द्वितीये तु संवाद एव ।**

**परि०—** 'स्यादप्येवं यदि कथकप्रवर्तनीये'त्यादिनोक्तदोषं चोद्धरति **द्वितीयपक्षोक्तेति** । **द्वितीये तु संवाद एवेति** । अस्माभिरपि सत्ताऽभ्युपगमस्य कारणकोटौ प्रवेशानङ्गीकारादिति भावः ।

**वं०प०— न कथाकारणत्वमिति** । अन्योन्याश्रयादिति भावः ।

**वा०चं०— एवं वदतेति** । हेतुत्वेन सत्त्वाभ्युपगमानुमानपक्षे परोक्त्या मुखतः प्रतीयमानान्योन्याश्रयप्रयोजकानुवादोऽयं, तदभिप्रेतो हेतुत्वस्य सत्त्वरूपत्वाभावपक्षस्त्वसतः कारणत्वं त्वित्यादिना खण्डनमतनिरासान्ते निरसिष्यत इति द्रष्टव्यम् । यद्यपि पूर्वोत्तरवाक्यबलान्न च प्रमाणादीनामित्येतद्वाक्यं सत्ताऽभ्युपगमस्य कारणत्वे गौरवमित्येतत्परमेव भाति तथाऽप्यस्य वाक्यस्य सामान्येन प्रवृत्तत्वाद्विकल्प्य दूषयति **तत्र किमिति** ।

**वा०र०— द्वितीयपक्षेति** मूलम् । कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादिसत्ताऽभ्युपगमस्य हेतुभावादिति द्वितीयपक्षमेव वाङ्गीकुर्मः । न चात्रोक्तदोषः । तस्यासङ्गतत्वादित्यर्थः । दोषस्तूत्तरवाक्ये स्पष्टः । असङ्गतिमेवोपपादयति **न हि वयमिति** । **इत्याद्याशङ्क्योक्तमिति** । हेतुत्वहेतुना ब्रह्मदृष्टान्तेन प्रमाणादौ सत्त्वेनाभ्युपगमसाधनमाशङ्क्योक्तमित्यर्थः । किमुक्तमित्यतस्तदेव दर्शयति **एवं वदतेति** । व्यवहारनियम-





स्यैवेत्युक्तमिति संबन्धः । एवं वदता हेतुत्वेन प्रमाणादिसत्ताऽभ्युपगमानुमानं कुर्वता यां सत्ता अङ्गीकारयितव्या सा हि कथाप्रवृत्त्युत्तरकालमेव । तथाच कथाफलस्येत्यादि योजना । **न कथेति** । तथा सत्यन्योन्याश्रयापत्तेरिति भावः । **व्यवहारनियमस्यैवेति** । तथा च व्यवहारनियममात्रं मूलीकृत्य प्रवृत्तायां सत्ताऽनभ्युपगमे कथारम्भानुपपत्तिरिति दूषणं व्याहतमिति भावः । तदेतदन्योन्याश्रयव्याघातलक्षणं दूषणमुक्तमिति फलति । तच्च दूषणवचने निरनुयोज्यानुयोगेन दुष्टमित्याशयेनाह **तदस्माभिरपीत्यादि** । कथाफलस्येत्यादिकमस्माभिः सत्ताभ्युपगमं कथाप्रवृत्तिकारणयाऽनिच्छद्भिरभ्युपगतमेवेत्यतस्तद्दूषणमस्मान्प्रति निग्रहो नेत्यर्थः । एवमङ्गी-कारिणामयं चेन्न निग्रहस्तर्हि कोऽनेन निगृहीतव्य इत्यत आह **यस्त्विति** । अनेन निग्रहप्रयोजकं रूपं दर्शयता अस्मासु तदभावादपि न निग्रहविषयतेत्युक्तं भवति । ननु प्रमाणादिसत्ताऽभ्युपगमस्य हेतुत्वयुक्त्या परेणाभि-धानस्य द्वेधाभिप्रायः । सत्त्वमेव हेतुत्वं ततश्च हेतुत्वाङ्गीकारे सत्त्वाङ्गीकारसिद्धिरिति । तथा हेतुत्वात्सत्त्वं सत्त्वाच्चाभ्युपगम इत्येतन्मूलस्वारस्यानुसारेण हेतुत्वेन सत्ताऽभ्युपगमानुमानात्तदभ्युपगमसिद्धिरिति । तथा चाशङ्काकर्तृसंमतोभयविधसत्त्वाभ्युपगमसिद्धिदूषणस्य प्राक्टीकोक्तरीत्या कृततया तदनुवादरूपेऽत्र ग्रन्थे एवं वदतेत्यनेन परोक्ततत्सिद्धिद्वयमनूदितमिति वक्तव्यम् । न च तद्युक्तम् । तथा च कथाफलस्येत्यादिना अनुमान-दूषणस्यैव प्रतीयमानतया तन्मात्रानुवादत्वोपपत्तावपि सत्त्वमेव हेतुत्वमित्यंशोऽप्यनुवादत्वानुपपत्तेः । न च तस्य नानुवादोऽत्र विवक्षित इति वाच्यम् । प्राक् सत्त्वाभ्युपगमसिद्धिप्रकारद्वयस्यापि शङ्कनाविशेषेऽन्योन्याश्रय-वक्ष्यमाणरीत्या निराकरणोक्तिभ्यां च टीकाकृदुक्तरीत्या निराकृतत्वाविशेषे च तद्दूषणपरिहारावसरे सङ्कोचकल्पने नियामकाभावात् । अत्र तत्सिध्यन्तरपक्षानुवादतद्दूषणानुवादतत्परिहाराणामभावप्रागुक्ततद्दूषणपरिहारालाभात् परोक्ततद्दूषणस्याङ्गीकृतत्वप्राप्त्या तत्सत्त्वाऽभ्युपगमसिद्धिपक्षस्यानङ्गीकृतत्वप्राप्तेवेत्याशङ्काः परिहरति **हेतुत्वेन सत्ताऽभ्युपगमेति** । हेतुत्वात्सत्त्वं सत्त्वाच्चाभ्युपगम इति फलतो हेतुत्वेन सत्ताऽभ्युपगमानुमानमिति प्रागेवोक्तम् । इतीत्यनेनाङ्गीकारयितव्येत्यन्तग्रहणम् । तथा चैवं वदता हेतुत्वेन सत्त्वसिद्धिमभ्युपगच्छता प्रमाणादिसत्ता कथाप्रवृत्त्युत्तरकालमङ्गीकारयितव्येत्ययमनुवादोऽन्योन्याश्रयप्रयोजकानुवादः । ........ हेतुत्वमिति प्रकारान्तरस्यान्तर्भासित्वं चेदित्यादिवक्ष्यमाणदूषणप्रयोजकस्याप्ययमनुवाद इत्यनेनोभयानुवादत्वमङ्गीकारपराहत-मिति चाङ्गीकारपक्षोक्तदोषो नेत्युक्तं भवति । हेतुत्वेन सत्त्वाभ्युपगमानुमानपक्षेऽन्योन्याश्रयस्य परोक्त्या मुखतः प्रतीयमानत्वविशेषणेन तदभिप्रेतो हेतुत्वस्येत्यादौ सत्त्वसिध्यन्तरपक्षदूषणस्याभिप्रेतत्वकथनेन चान्योन्याश्रय-वक्ष्यमाणान्तर्भावितसत्त्वं चेदित्युक्तदोषौ न समानौ । वक्ष्यमाणदोषस्य मुखतः परोक्त्या प्रतीयमानत्वाभावात् । किन्त्वभिप्रेतमेव तत्पक्षदूषणं तट्टीकाकृता मया वर्णितम् । अन्योन्याश्रयस्तु परोक्त्या मुखतः प्रतीयमानतयाऽवश्यं निरसनीयतया प्रथमप्राप्त इति पूर्वपिक्षया अभ्यर्हित इति तयोरस्ति विशेषः । तमेतं विशेषं पुरस्कृत्यान्योन्याश्रयमेव निराकर्तुं तदनुवादस्यैव कर्तव्यतया तत्प्रसञ्जकस्यैवैवंवदतेत्यनेनानुवादः कृत इत्यङ्गीकारोपपत्तेरिति भावः । एवं प्रतिपादयतैव नियामकोक्त्याऽनुवादे सङ्कोचकल्पनानुपपत्तिशङ्का परिहृता भवति । अत्र सत्त्वमेव हेतुत्वमित्यस्य अनुवादाभावे तद्दूषणानुवादस्याप्यभावे तत्परिहारस्यापि चाभावे तत्पक्षोऽनङ्गीकृत इत्यापद्येतेति तृतीयशङ्का-परिहारायाह **तदभिप्रेत इति** । अत्राभिप्रेतपदकृत्यमुक्तमेव । नात्र निराकरणाभावप्रयुक्तस्तत्पक्षदूषणाङ्गीकारः





प्रसज्यते । तस्योत्तरत्र मूलकृतैव अलमित्येतदभिप्रेतयुक्त्या निराकरिष्यमाणत्वेनेह तददूषणेऽपि बाधकाभावेन तदनुवादादेरनावश्यकत्वादित्यर्थः । **पूर्वोत्तरवाक्येति** । तथा सति तत्सत्ताऽभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येतेत्यादिपूर्वग्रन्थे व्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेरित्याद्युत्तरग्रन्थे च सत्ताऽभ्युपगमस्य व्यवहार-कारणकोटौ निवेशस्यैव वक्तव्यतया प्राप्तत्वात्तदनुसारेण तन्मध्यस्थैतद्वाक्येऽपि सत्ताऽभ्युपगमस्य कारणत्व एव गौरवं वाच्यतया प्राप्तमिति तत्पक्षमात्रस्यैव निराकार्यतया सत्ताऽभ्युपगममात्रे गौरवपक्षस्यानुपस्थानान्न विकल्पावकाश इति भावः । **तथापीति** । पूर्वोत्तरग्रन्थपरामर्शं विनैव न च प्रमाणादीनामिति वाक्यस्य प्रतीतार्थपुरस्कारेऽस्ति विकल्पावकाशः । न चैवं छलप्रसङ्गसंभावनमात्रपुरस्कारेण प्रवृत्तिपक्षे तदप्रसङ्गात् । प्रमेयान्तरप्रतिपादनाय तत्पक्षमुत्थाप्य दूषणकरणेन तस्यावश्यकत्वेनादोषाच्च । तथाहि । परो हि प्रमाणादीनां सत्त्वं नाभ्युपैति । अङ्गीकरोति च सत्त्वम् । उभयोदासीनोहमिति वा मन्यते । तदयुक्तम् । ब्रह्मवत्प्रमाणादीनामपि सत्त्वस्यैवाङ्गीकारोपपत्तौ तदनङ्गीकारायोगात् । न च सदद्वैतभङ्गापातात्प्रमाणादिसत्त्वानभ्युपगम इति वाच्यम् । ब्रह्मवत्प्रमाणादेरपि सत्त्वस्य प्रतीत्यविशेषे तदद्वैतस्यैवानङ्गीकर्तव्यत्वात् । न च लाघवमेव तदङ्गीकारे मूलम् । तर्हि ब्रह्मसत्त्वमपि गौरवात् त्याज्यमिति शून्यवादाश्रयणमेव गरीयः स्यात् । न च प्रमाणप्रमितं ब्रह्मसत्त्वमतस्तदङ्गीकारे न गौरवं दोषायेति वाच्यम् । तर्हि प्रमाणादिसत्त्वस्यापि प्रमिततया तदङ्गीकारेऽपि गौरवानापत्तेरिति भावः । **संवाद एवेति** मूलम् । मयाऽपि प्रमाणादिसत्ताऽभ्युपगमस्य कथाकारणकोटौ निवेशानभ्युपगमेन त्वया तदभावोपपादने संमतार्थप्रतिपादनाद्विवादपर्यवसानापत्तेरित्यर्थः ।

**स०व्र०**— तत्राह **तत्रोक्तमिति** । सत्ताऽभ्युपगमस्य कारणकोटावप्रवेशादिति भावः ।

**विठ्ठ०**— **यत्पुनरिति** । कथकवाग्व्यवहारं प्रति प्रमाणादीनां हेतुत्वात् तत्सत्त्वं सत्त्वाच्चाभ्युपगमः इत्याशङ्क्य कयापि नियमस्थित्येत्यादिना यत्किञ्चित्समयबन्धमात्रेण कथाप्रवृत्तिमङ्गीकृत्य तत्र प्रमाणादिसत्ताभ्युपगमसाधने कथाफलत्वात् प्रमाणादिसत्ताभ्युपगमस्य न कथाकारणत्वमिति यद्दूषणमुक्तं तदस्माभिरभ्युपेयत एव न हि वयं प्रमाणादिसत्ताभ्युपगमं कथाकारणं ब्रूमः किन्तु प्रमाणादिस्वरूपमेव । यस्तु तत्सत्ताभ्युपगममपि कथाकारणं मन्यते तस्यैव दूषणं नास्माकमिति भावः । **यत्पुनर्न चेति** । व्यवहारनियमसमयबन्धवत् प्रमाणादिसत्ताभ्युपगमसमयबन्धो नोचितः अवश्याभ्युपगमनीयेन व्यवहारनियमेनैव कथाप्रवृत्त्युपपत्तेः प्रमाणादिसत्ताभ्युपगमसमयबन्धस्याप्यङ्गीकारे गौरवादिति यदुक्तमित्यर्थः । **संवाद एवेति** । तत्सत्ताभ्युपगमस्य कारणकोटौ अनिवेशितत्वादिति भावः ।

**गूढ०**— **द्वितीयपक्षोक्तदोष इति** । प्रमाणादिसत्ताभ्युपगमस्य व्यवहारं प्रति हेतुत्वमिति । द्वितीयपक्षे उक्तो यः प्रमाणादिसंतानभ्युपगन्तॄणां व्यवहारस्वरूपानिष्पत्तिरूपो दोषः सोऽसङ्गत इत्यर्थः । असङ्गतत्व-मेवोपपादयति **न हि वयमिति** । मया प्रमाणादिसत्ताभ्युपगमस्य कथाप्रवृत्तिहेतुत्वानङ्गीकारात् त्वदुक्तं प्रमाणादि-सत्ताभ्युपगमस्य कथाप्रवृत्तिहेतुत्वदूषणमिष्टमेवेत्याह **एवं वदतेति** । तर्हीदं प्रवक्तव्यमित्यत आह **यस्त्विति** ।

**कारणकोटिप्रवेशन इति**। कथाप्रवृत्तेर्यत्कारणं तत्कोटौ प्रवेशन इति। **कारणत्वान्यथानुपपत्त्येति**। प्रमाणादीनामिति शेषः। असतः कारणत्वायोगादिति भावः। ननु प्रमितापि सत्ता नाङ्गीक्रियत इत्यत आह **प्रमितस्य चेति**। **संवाद एवेति**। प्रमाणादिसत्ताभ्युपगमस्य कथाप्रवृत्तिकारणकोट्यनिवेशनस्य मयाप्यङ्गीकृतत्वेन संवाद एवेत्यर्थः।

**प्रदीपः**— प्रतीतिव्यतिरेकाभावात्कथकं प्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादिसत्ताया हेतुतेत्युक्तं विघटयति **द्वितीयेति**। हेतुत्वेन सत्ताभ्युपगमानुमानं सत्ताभ्युपगमेन प्रवृत्तकथायां चेत्कथाप्रवृत्तौ सत्ताभ्युपगमसिद्धस्तत्सिद्धौ च कथाप्रवृत्तिरित्यन्योन्याश्रयः। समबलात्प्रवृत्तकथायां चेदिष्टसिद्धिरित्युक्तं तत्र निरनुयोज्यानुयोगो निग्रह इत्याह **यदिति**। यदुभयाङ्गीकारे गौरवमुक्तं तद्विघटयति **यदिति**। प्रमाणादिसत्त्वस्य प्रमाणव्यवहारसिद्धत्वे चक्रकाद्यापत्तिरुक्ता तत्राह **तत्रेति**। सत्ताभ्युपगमस्य कारणकोटावप्रवेशादिति भावः।

**२७४ सु०— तृतीयेऽप्याद्यं तावदङ्गीकुर्मः। तत्रोक्तं दूषितप्रायम्। द्वितीयाङ्गीकारेऽपि न दोषः। देहात्मत्वादिकं तु पश्चाद्विचारबाध्यतया नाभ्युपगम्यत इति। यदत्रोक्तं 'प्रमाणादिसत्ताऽपी'त्यादि। तेन किमुक्तं भवति। किं विचारसाध्यः प्रमाणादिसत्ताऽभ्युपगमो न विचारप्रवृत्तेः कारणमिति। किंवा विचाराबाध्यतया एव प्रमाणादिसत्ताऽभ्युपगमप्रयोजकत्वेन व्यवहारस्याप्रयोजकत्वमिति। आद्ये संप्रतिपत्तिः। न द्वितीयः। औत्सर्गिकं प्रामाण्यं बाधकादपोद्यत इत्यत्र दर्शने तस्यैव प्रयोजकत्वात्।**

**परि०— तृतीयेऽप्याद्यमिति**। 'लोकव्यवहारोऽपि प्रमाणव्यवहारो वा पामरादिसाधारणव्यवहारो वे'त्यत्राद्यमित्यर्थः। **तत्रोक्तमिति**। 'विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वादि'ति तु 'यो यथाकथंचित्कथायां प्रवृत्तः तं विपक्षे कथानुत्पत्तिप्रसङ्गदण्डं प्रदर्श्ये'त्यादिना दूषितप्रायमित्यर्थः। **द्वितीयेति**। 'पामरादिसाधारणव्यवहारो वे'ति द्वितीयेत्यर्थः। **इत्यत्रदर्शने** इत्येतस्मिन्सिद्धान्ते। **तस्यैवेति**। व्यवहारस्यैवेत्यर्थः। देहात्म्यैक्यादि त्वपवादात्त्यज्यते। तावताऽपवादहीनस्थले तस्य मानत्वे बाधकाभावात्। वक्ष्यते च भक्तिपादे। 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम्। व्यभिचार्यपवादेन मानमेव भविष्यतीत्यादी'ति भावः।

**यादु०**— प्रमाणादिसत्त्वस्य प्रामाणिकलोकव्यवहारसिद्धत्वेऽन्योन्याश्रयत्वं स्यादित्युक्तमित्यत आह **तत्रोक्तमिति**। सत्ताऽभ्युपगमस्यापि विचारपूर्वकालीनत्वस्यानङ्गीकारादित्युक्तत्वादिति भावः। **किं विचारेति**। भविष्यतीति प्रयोगात्पूर्ववर्तित्वरहितस्य कारणत्वं न संभवतीत्याद्यविकल्पस्य प्रसक्तिः। लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवतीति वाक्यपर्यालोचनया द्वितीयस्येति द्रष्टव्यम्। **तस्यैवेति**। उत्सर्गतः प्रवृत्तलोकव्यवहारस्यैवेत्यर्थः।





**वं०प०— तृतीये आद्यमिति** । लोकव्यवहारोऽपि प्रमाणव्यवहारो वा पामरादिसाधारणव्यवहारो वेत्यत्राद्यमित्यर्थः । **तत्रोक्तमिति** । विचारप्रवृत्त्यनन्तरं प्रमाणादिसत्ताभ्युपगमस्य प्रामाणिकव्यवहारसिद्धत्वं तत्सिद्धेन प्रमाणादिसत्ताभ्युपगमेन विचारप्रवृत्तिस्तस्य विचारकारणत्वादित्युक्तं दूषितप्रायम् । सत्ताऽभ्युपगमस्य विचारकारणत्वाभावेन द्वितीयकोट्यनङ्गीकारादिति भावः । **द्वितीयेति** । पामरादिसाधारणव्यवहारो वेति द्वितीयपक्षेत्यर्थः । **विचारसाध्य इति** । प्रमाणादिसत्ता विचारबाध्या यदि भविष्यति तदा नाभ्युपगन्तव्या । यदि विचारबाध्या न भविष्यति तर्ह्यङ्गीकर्तव्येत्युक्त्या विचारप्रवृत्तिसाध्यस्य प्रमाणसत्ताभ्युपगमस्य विचार-प्रवृत्तिपूर्वकालीनत्वाभावान्न विचारप्रवृत्तिकारणत्वमित्यर्थः । **तस्यैवेति** । उत्सर्गतः प्रवृत्तलोकव्यवहारस्यैवेत्यर्थः ।

**कं०रा०— तत्रोक्तमिति** । प्रमाणव्यवहारसिद्धत्वात्प्रमाणादिसत्ताभ्युपगन्तव्येति पक्षे विचारप्रवृत्ति-मन्तरेण व्यवहारप्रामाण्यस्य ज्ञातुमशक्यत्वादित्यादिना विचारात्मककथासाध्यप्रामाण्यनिश्चयानन्तरभाविनः प्रमाणादिसत्ताभ्युपगमस्य कथाप्रवृत्तिकारणत्वमिति यदुक्तं तद्दूषितप्रायम् । अस्माभिरपि प्रमाणादिसत्ताभ्युप-गमस्य कथाकारणकोटिनिविष्टत्वानङ्गीकारादिति भावः । **द्वितीयाङ्गीकारेऽपि** पामरादिसाधारणव्यवहार-सिद्धत्वादिति द्वितीयाङ्गीकारेऽपि । **तस्यैव** व्यवहारस्यैव ।

**श्रीनिधि०— दूषितप्रायमिति** । उपयुक्तविचारस्य कथान्तरत्वाभावादिति भावः । पूर्वभावित्वस्य अनभ्युपगमादिति वा । तृतीयपक्षानुवादेनादूषणात् प्रायमिति । खण्डनकारेण पुनः किञ्चिदाशङ्क्य समाहितम् ।

**वा०चं०— तत्रोक्तमिति** । व्यवहारप्रामाणिकत्वविचारस्य प्रमाणादिसत्ताऽभ्युपगमानधीनत्वेनोक्त-चक्रकाप्रवृत्तिरिति भावः । उक्तरीत्या चक्रकपरिहारलाभेऽपि चक्रकं नेत्येवंरूपेण पूर्वमनुक्त्या प्रायशब्दः । **तेन किमिति** । यद्यपि लोकव्यवहारसिद्धत्वादिति तावन्न भवतीत्युत्तरवाक्यबलादप्रयोजकत्वे तात्पर्यमेव प्रतिभाति । तथाऽपि पूर्ववाक्ये विचारबाध्यत्वाबाध्यत्वयोरनभ्युपगमाभ्युपगमोक्तेरभ्युपगमस्य विचारसाध्यत्वेऽपि पर्यवसान-संभवादुत्तरवाक्यस्य च 'तथा चान्योन्याश्रयतया नायं पक्षः साधुरिति तृतीयपक्षनिरासोपसंहारपरत्वस्यापि संभवात्प्रथमकल्पप्रसक्तिः' । उत्तरवाक्योक्ताप्रयोजकत्वोपपादकत्वेनापि पूर्ववाक्यस्योपपत्तेरुत्तरवाक्यस्वारस्या-नुरोधेन पराभिमतत्वाच्च द्वितीयकल्पप्रवृत्तिरिति द्रष्टव्यम् । **इत्यत्र दर्शन इति** । अन्यथा स्वतस्त्वभङ्गेनाप-सिद्धान्तापातादिति भावः ।

**वा०र०— आद्यमिति** मूले प्रामाणिकव्यवहारसिद्धत्वात्प्रमाणादिसत्त्वमभ्युपेयमित्याद्यमित्यर्थः । विचारसिद्धौ व्यवहारस्य प्रामाणिकत्वसिद्धिस्तत्सिद्धौ च सत्ताऽभ्युपगमस्ततश्च विचार इति पूर्वोक्तमेतत्पक्षे चक्रकदोषं परिहरति **व्यवहारेति** । यद्यपि विचारेत्यादिना प्राक् विचारमात्रं प्रकृतम् । तथापि विचारसिद्धौ व्यवहारस्य प्रामाणिकत्वसिद्धिरित्यत्रान्यविचारेणान्यसिद्धेरसंभवाद्व्यवहारप्रामाणिकत्वविचार एव विचारेत्यादि मूलादौ ग्राह्य





इत्याशयेन व्यवहारप्रामाणिकत्वविचारस्येत्युक्तमिति ज्ञेयम् । **अभ्युपगमानधीनत्वेमैति** । अनेन विचारसिद्धौ व्यवहारप्रामाणिकत्वसिद्धावपि तत्सिद्धौ च प्रमाणादिसत्ताऽभ्युपगमसिद्धावपि च न सत्ताऽभ्युपगमसिद्धौ व्यवहारप्रामाणिकत्वविचारसिद्धिरित्युक्तं भवति । किं वा विचाराबाध्यताया एवेत्युत्तरविकल्पकोटिप्रसक्तिसद्भावेऽपि किं विचारसाध्य इत्यादि प्रथमकल्पप्रसञ्जकाभावान्न प्रसक्तिरित्युक्तविकल्पानुपपत्तिरित्याशङ्कामुत्थाप्य निराकरोति **यद्यपि लोकेति** । सिद्धतया सत्त्वं तावदित्यादेरर्थानुवादोऽयम् । **अप्रयोजकत्वे तात्पर्यमेवेति** । प्रमाणादिसत्तापि यदि विचारबाध्या भविष्यति तदनभ्युपेयैव । अन्यथा तूपगन्तव्येत्यत्र प्रमाणादिसत्ताऽभ्युपगमे विचाराबाध्यत्वमेव प्रयोजकं न तु व्यवहार इत्यप्रयोजकत्वे तात्पर्यमेव प्रतीयते । अत एव व्यवहारसिद्धतया सत्त्वमिति तावन्न भवतीत्युत्तरवाक्ये व्यवहाराप्रयोजकत्वस्योपसंहार इति शङ्कार्थः । तथाच किं विचारसाध्य इति प्रथमकल्पावकाश एव नास्ति । विचारसाध्यत्वाकारस्योपस्थित्यभावादिति तदाशयः । विचारसाध्यत्वाकारोपस्थितिं प्रतिपादयन्नप्रयोजकत्व-तात्पर्यसाधकोत्तरवाक्यस्यार्थान्तरपरतोपवर्णनेनान्यथासिद्धिं च दर्शयन् प्रथमकल्पोपस्थितिं तावदुपपादयति **पूर्ववाक्ये विचारेति** । बाध्यत्वाबाध्यत्वयोरिति सप्तमी । सत्त्वस्येति वर्तते । प्रमाणसत्तापि यदीत्यादौ विचार-बाध्यत्वे सत्त्वानभ्युपगमस्य तदबाध्यत्वे तदभ्युपगस्य चोक्तेः लोकव्यवहारेत्युत्तरवाक्यबलेन मुखतो विचारबाध्यत्वं सत्त्वाभ्युपगमे प्रयोजकमित्यर्थप्रतिपादनपरत्वेऽपि यदि विचारबाध्येत्यादिरूपेणोभयोपादानमहिम्ना विचारपवृत्त्यभावे तदबाध्यत्वस्यापि ज्ञातुमशक्यत्वलाभात्प्रमाणादिसत्त्वाभ्युपगमे विचारो हेतुरित्येवं विचारसाध्यत्वे पर्यवसान-संभवादित्यर्थः । तर्हि लोकव्यवहारसिद्धत्वात्तावदित्येतदुपसंहाररूपवाक्यविरोध इत्यतो नायं प्रमाणादिसत्तापी-त्येतदुपसंहारः । अपि तु तृतीयपक्षनिरासोपसंहारस्तत्रापि विचारसाध्यप्रमाणादिसत्ताभ्युपगमस्य विचारं प्रति कारणत्वेऽन्योन्याश्रय एव तात्पर्यं नाप्रयोजकतायामिति न तद्विरोध इत्याह **उत्तरवाक्यस्य चेति** । एवं किं विचारसाध्यः प्रमाणादिसत्ताऽभ्युपगमो विचारप्रवृत्तेः कारणमित्याद्यपक्षप्रसक्तिमुपपाद्य द्वितीयकल्पोपस्थिति-मुपपादयति **उत्तरवाक्येति** । लोकव्यवहारसिद्धत्वादित्युत्तरवाक्ये व्यवहारप्रयोजकत्वमुच्यत इति तावत्स्पष्टम् । तदुपपादकं यदि प्रमाणादीति पूर्ववाक्यम् । तत्र विचाराबाध्यताया एवं प्रयोजकत्वकीर्तनेन व्यवहारप्रयोजक-त्वोपपादनात् । एवं चाप्रयोजकत्वोपपादकत्वेनापि पूर्ववाक्यस्योपपत्त्योत्तरवाक्यस्वारस्यानुसारेण प्राप्तोऽयं द्वितीयकल्पः वस्तुतः पराभिमतोऽपि भवतीत्यतस्तस्यात्र द्वितीयकोटित्वेन प्रसक्तिर्युक्तेत्यर्थः । **अन्यथा स्वतस्त्वेति** । करणनिष्ठज्ञानजननशक्तिवत्प्रामाण्यजननशक्तेरपि सहजत्वं तच्छक्तिद्वयस्याभेदो वा करणप्रामाण्य-स्योत्पत्तौ स्वतस्त्वं नाम । ज्ञप्तौ तु ज्ञानसाधनत्वग्राहकान्वयव्यतिरेकग्राह्यत्वम् । ज्ञानप्रामाण्ये तु ज्ञानजनक-मात्रोत्पाद्यत्वं तद्ग्राहकमात्रग्राह्यत्वं चोत्पत्तिज्ञप्त्योः क्रमेण स्वतस्त्वमित्येवं सिद्धान्ते निर्णीतत्वादुत्सर्गतः प्रवृत्तव्यवहारस्यैव प्रमाणतया ज्ञानजनकतद्ग्राहकापेक्षं प्रामाण्यं प्रमाणादिसत्ताज्ञाने त्वदुक्तरीत्या विचारबाध्यत्वेन सन्दिग्धे विचाराबाध्यत्वमपेक्षत इति नाङ्गीकर्तुमुचितम् । तथा सति ज्ञानजनकाद्यतिरिक्तस्य प्रामाण्योत्पत्त्या-द्यर्थमपेक्षापत्त्योक्तस्वतस्त्वभङ्गे नापसिद्धान्तः स्यादित्यर्थः ।

**सं०व्र०— तस्यैवेति** । व्यवहारस्यैवेत्यर्थः ।





**विठ्ठ०— तृतीयेऽपीति** । लोकव्यवहारसिद्धत्वादिति । तृतीये प्रामाणिकलोकव्यवहारेत्याद्याक्षेपमङ्गीकुर्म इत्यर्थः । प्रमाणादिसत्त्वस्य प्रामाणिकव्यवहारसिद्धत्वे अन्योन्याश्रय इति तत्रोक्तमित्यत आह **तत्रोक्तमिति** । सत्ताभ्युपगमस्य कारणत्वाभावेन विचारपूर्वकालीनत्वस्यानङ्गीकारादिति भावः । पामरव्यवहारसिद्धस्याभ्युपगमनीयत्वे शरीरात्मवादीनामपि स्वीकार्यतापात इति दोषः कुतो नेत्यत आह **किमिति** । तर्हि विचारबाध्यत्वमेवाभ्युपगन्तव्यत्वे तन्त्रं लोकव्यवहारसिद्धत्वं त्वप्रयोजकमेवेत्यापन्नमिति दूषणमुक्तमित्यत आह **यदत्रोक्तमिति** । अनुक्तोपालम्भपरिहाराय पराभिप्रायं विकल्प्य दूषयति **तेन किमुक्तं भवतीति** । प्रांक् पूर्वपक्षावसरे विचारबाध्या भविष्यतीति प्रयोगाद्विचारात्पूर्वभाविनः प्रमाणादिसत्ताभ्युपगमस्य कारणत्वं न संभवतीत्याद्यकल्पस्योत्थितिः द्वितीयस्तु स्फुट एव इति । **अत्र दर्शने इति** । अत्र सिद्धान्ते उत्सर्गतः प्रवृत्तव्यवहारस्यैव प्रयोजकत्वादित्यर्थः । 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यती'ति वक्ष्यमाणत्वादिति भावः ।

**गूढ०— तृतीयेऽपीति** । लोकव्यवहारसिद्धत्वादित्यर्थः । **आद्यमिति** । प्रमाणव्यवहार इत्याद्यमित्यर्थः । नन्वस्मिन्पक्षे विचारप्रवृत्तिमन्तरेण प्रमाणव्यवहारस्य दुर्निरूपत्वाद्विचारप्रवृत्तेश्च व्यवहारनियमेनैव संभवात्तथाच चक्रकापत्तिरिति प्रमाणव्यवहारोऽनुपयुक्त इत्युक्तमत आह **तत्रोक्तमिति** । प्रमाणव्यवहारस्य विचारसाध्यत्वातद्विचारहेतुत्वानङ्गीकारेणैतद्दूषितप्रायमित्यर्थः । तथा सति पामरव्यवहारसिद्धं देहात्मत्वमङ्गीकर्तव्यमत्राह **देहेति** । दूषयितुं विकल्पयति **तेनेति** । प्रमाणादिसत्तापीत्यादिवचनेनेत्यर्थः । **संप्रतिपत्तिरिति** । प्रमासत्ताभ्युपगमस्य विचारप्रवृत्तिकारणत्वानङ्गीकारादसंमतिरित्यर्थः । **तस्यैवेति** । व्यवहारस्यैवेत्यर्थः । प्रामाण्यस्यौत्सर्गिकत्वानङ्गीकारेणाबाधस्य प्रयोजकत्वमिति भावः ।

**प्रदीपः—** अबाध्यत्वे सति लोकसिद्धत्वं स्वीकारप्रयोजकमित्यत्रोत्तरमाह **यदिति** । किं विचारेति पूर्वक्षणवर्तित्वरहितस्य कारणत्वं नास्तीत्याद्यः कल्पो बाधपर्यालोचनया प्रामाण्यावधारणमिति द्वितीयविकल्पक्रमेणोत्तरमाह **आद्य इति** ।

**२७८ सु०— चतुर्थपक्षोक्तदोषोऽप्यनेनैव परिहृतः । न हि वयं प्रमाणादिसत्ताऽभ्युपगमं कथाफलनिष्पत्तिहेतुं ब्रूमः । किन्तु प्रमाणादीन्येव । तेषां च तद्धेतुता नासतामुपपद्यत इति तत्सत्ताऽवश्यमभ्युपगमनीयेति ।**

**स्यादेतत् । नियतवाग्व्यवहारक्रियासमयबन्धेन कथां प्रवर्तयताऽपि व्यवहारसत्ता अभ्युपगन्तव्या । न हि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातुं शक्या । क्रिया हि निष्पादना । असतः सद्रूपताप्रापणमिति यावत् । प्रमाणैर्व्यवहर्तव्यमिति च नियमबन्धनं**

**प्रमाकरणभावस्य नियमान्तर्भावान्नियतपूर्वसत्त्वरूपं कारणत्वं प्रमाणानामनादाय न पर्यवस्यति । दूषणानां चास्तित्वेन भङ्गावधारणनियमबन्धने साधनाङ्गानां च व्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च कण्ठोक्त्यैव तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते ।**

**परि०**— यदपि सत्यत्ववादिनोक्तं पूर्वपक्षयित्वा समाधानं मायावादिनोक्तं तच्छङ्कासमाधाने द्वे अप्यनूद्य निराह **स्यादेतदि**त्यादिना **तदप्यनेनैव परिहृतमि**त्यन्तेन । **व्यवहारक्रिया** व्यवहारकृतिः । व्यवहारकरणविषयसमयबन्धेनेत्यर्थः । **व्यवहारक्रियाऽभिधातुं शक्येति** । व्यवहारकर्तव्यताऽभिधातुं शक्येत्यर्थः । 'एभिरपि बाधकैरि'त्यस्याभिमतस्य प्रसाधनीयत्वेनेत्यन्वयः ।

**यादु०**— **चतुर्थपक्षोक्तेति** । प्रमाणादिसत्ताऽभ्युपगमस्य समयबन्धनेनान्यथासिद्धस्य न कारणत्वमिति यो दोषश्चतुर्थपक्षेऽभिहितः सोऽपि प्रमाणादिसत्ताऽभ्युपगमस्य कथाफलनिष्पादकतया कथापूर्वकालीनत्वस्यानङ्गीकारेणैव परिहृत इत्यर्थः । अनङ्गीकारमेव दर्शयति **न हि वयमिति** । तथा च चतुर्थपक्षोक्तदूषणे इष्टापत्तिरिति भावः । ननु प्रमाणादिसत्ता कुतो नाङ्गीकार्या । द्वैतापत्तिभयादिति चेत् । तर्हि कथापूर्वं समयबन्धमात्राङ्गीकारेऽपि सुतरां द्वैतापत्तिः । समयबन्धकरणस्य स्वसत्ताऽभ्युपगमं प्रमाणादिसत्ताऽभ्युपगमं चानादाय अपर्यवसानात् । अत एव समयबन्धमात्रेणैव कथाऽऽरम्भो न प्रमाणादिसत्तामभ्युपगम्येति वचनं स्वव्याहतमित्याशङ्कते **स्यादेतदिति** । **व्यवहारक्रियेति** । व्यवहारकरणरूपसमयबन्धेनेत्यर्थः । तस्य स्वसत्ताऽभ्युपगममनादाय अपर्यवसानमुपपादयति **न हीति** । तस्य प्रमाणादिसत्ताऽभ्युपगममनादायापर्यवसानमुपपादयति **प्रमाणैरिति** । **प्रमाकरणभावस्येति** । प्रमाणैरिति तृतीयया करणत्वाभिधानात्तस्य च कारणविशेषत्वादिति भावः । **अस्तित्वेनेति** । यस्य व्यवहारे दूषणानि सन्ति तस्य भङ्गः पराजयोऽवधार्य इति नियमबन्धन इत्यर्थः । **साधनाङ्गेति** । यस्य पुनः साधनस्य हेतोरङ्गानि व्याप्त्यादीनि सन्ति तस्य जयो व्यवहर्तव्यः । तद्विषयस्य प्रतिज्ञातार्थस्य तत्त्वरूपता च व्यवहर्तव्येत्येवं व्यवहार-नियमनादावित्यर्थः । आदिपदेन साधनाङ्गानामसत्त्वे तद्विषयस्याप्यसत्यत्वमिति व्यवहारनियमनस्य ग्रहणम् । **अङ्गीकृतमिति** । दूषणानि सन्ति व्याप्त्यादिकमस्तीत्यादिवचनं तत्सत्ताऽङ्गीकारपरमेवेति भावः । **रिक्तमिति** । स्वव्याहतत्वादर्थशून्यं वचनमित्यर्थः । अत्र यद्यपि स्वव्याहतिरेवोक्ता प्रतीयते नापसिद्धान्तः तथाऽपि समयबन्धस्य स्वसत्ताऽभ्युपगमपर्यवसानोपपादनं न व्याहत्यनुकूलमतः सोऽप्यत्राभिप्रेत इति गम्यत इति द्रष्टव्यम् ।

**वं०प०**— **नियतेति** । नियतवाग्व्यवहारकरणरूपसमयबन्धेनेत्यर्थः । अस्तित्वेन सत्यत्वेन । **भङ्गः** परपक्षस्य ।

**कं०रा०**— **प्रमाणैरिति** । प्रमाणैर्व्यवहर्तव्यमिति नियमबन्धनं प्रमाणानां प्रमापेक्षया नियतपूर्वसत्त्वरूपं कारणत्वमनादाय न पर्यवस्यतीत्यर्थः । तत्र हेतुः **प्रमाणेति** । प्रमाणानां करणत्वस्य प्रमाणैर्व्यवहर्तव्यमिति





नियमेऽन्तर्भूतत्वात्करणत्वस्य च कारणविशेषरूपत्वादिति भावः । इत्येवमाशङ्क्यैभिरपि बाधकैः कथाया-मारब्धायामभिमतस्य प्रसाधनीयत्वे पूर्वोक्तबाधाया न निस्तारः स्यादिति यदुक्तं तदप्यनेनैव परिहृतमित्यन्वयः । इदंशब्दपरामृष्टं हेतुमाह **कथेति** । व्यवहारनियमबन्धनदशायां प्रमाणादिसत्त्वमभ्युपगम्यापि मया प्रमाणादिसत्त्वं नाङ्गीक्रियत इति यो वदति तस्य स्वव्याघातो वर्तते । वर्तमानमपि स्वव्याघातमजानानं कथायां प्रवृत्तं परं प्रति स्वव्याघातस्फुटीकरणाय कथास्वरूपस्य तत्फलस्य च निष्पत्तये स्वेच्छास्वीकृतस्य व्यवहारनियमस्य प्रमाणादि-सत्तास्वीकारे पर्यवसानमित्येवाऽस्माभिरुच्यमानत्वात्परस्य कथाप्रवृत्तिरेव नेत्यस्यानुच्यमानत्वादित्यर्थः । तथा च कथायां प्रवृत्तायां परस्य कथाप्रवृत्तिरेव नेत्युक्ते व्याघात इति पूर्वोक्तबाधाया अनवकाश इति भावः ।

**श्रीनिधि०**— तदनूद्य दूषयति **स्यादेतदित्यादिना** । उच्यमानत्वादित्यन्तेन । नियतवाक् व्यवहारक्रिया समयबन्धेनेति । वाग्व्यवहारकरणनियमविषये समयबन्धेनेत्यर्थः । **दूषणानां चेति** । अस्तित्वेन भङ्गावधारणम् । भङ्गनिश्चयः । तन्नियमबन्धने नियमबन्धे यस्मिन् पक्षे दूषणं सत् तस्य भङ्गनिश्चय इति नियमबन्ध इत्यर्थः । **साधनाङ्गानामिति** । आदिपदेन प्रतिज्ञादेरङ्गानां बाधाभावादीनां ग्रहणम् । सत्त्वेन तद्विषयस्य तत्त्वरूपता व्यवहारनियमबन्धादाविति । यत्र साधनादेरङ्गं व्याख्यादिकमस्ति तत्र साधनादिविषयस्य तत्त्वरूपता । आदिपदेन यत्र तेषामसत्त्वं तत्र साधनादिविषयस्यातत्त्वरूपतेति गृह्यते । एवंरूपनियमबन्धादावित्यर्थः । कण्ठोक्तमेव **तस्य तस्येति** । यद्विषयो नियमबन्धः क्रियते तस्य तस्येत्यर्थः ।

**वा०चं०— अनेनैवेति** । तत्सत्ताऽभ्युपगमस्य कथाव्यवहारकारणत्वमनभ्युपगम्य प्रमाणादीनामेव तत्कारणत्वाभ्युपगमेनैवेत्यर्थः । व्याघातरूपं सत्ताऽनभ्युपगमे स्वोक्तिलब्धं बाधकमाशङ्क्य परेणोक्तं दूषणमपि पूर्वोक्तन्यायेनैव परिहृतमिति वक्तुं परोक्तमनुवदति **स्यादेतदिति** । नियतत्वं समयविशेषणम् । नियमबन्ध एव पर्यवसानवृत्त्या व्यवहारसत्तां स्वीकारयतीति भावः । ननु सत्तां विनाऽनुपपत्तिशून्यस्य कथं तत्स्वीकारहेतुत्वमित्यत आह **न हीति** । किमियं राज्ञामाज्ञा नेत्याह **क्रियेति** । एवमपि नानुपपत्तिलाभ इत्यत आह **असत इति** । अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्त्वमिष्टं स्यात् । यतो निष्पादनं नामासतः सत्त्वप्रापणमित्यर्थः । न केवलं व्यवहारसत्त्वं स्वोक्त्यैवेष्टं प्रमाणादिसत्त्वमपि तदुक्तिबलादेवापद्यत इत्याह **प्रमाणैरिति** । तृतीयया करणत्वाभिधानात्तस्य च सत्ताऽव्यतिरेकात्प्रमाणादीनां सत्त्वमनङ्गीकृत्य नियमबन्धो न पर्यवस्यतीत्यर्थः । यद्वादिव्यवहारे दोषाः सन्ति तस्य भङ्गो व्यवहर्तव्यो यस्य पुनः साधनाङ्गानि तस्य जय इति वदन्नेव पुनस्तानि न सन्तीति च वदन्कथं सभ्यः स्यादित्याह **दूषणानां चेति** । साधनं हेतुस्तद्विषयस्य प्रतिज्ञातार्थस्य । तद्वैपरीत्येनासत्यत्वमादिपदार्थः । रिक्तं परस्परपराहतत्वेन शून्यं वचनमित्यर्थः । कथायामेवैतद्बाधकोपन्यासेन सत्ताऽभ्युपगमः साधनीयस्तदभ्युपगममन्तरेण च न कथाप्रवृत्तिः ।

**वा०र०— तत्सत्ताऽभ्युपगमस्येति** । तथा चैतन्न्यायेन तत्सत्ताऽभ्युपगमस्य कथाफलनिष्पत्ति-कारणत्वमनभ्युपगम्य प्रमाणादीनामेव तत्त्वनिर्णयादिकथाफलनिष्पत्तिहेतुत्वाभ्युपगमादिति लभ्यते । एवं च





व्यवहारनियममात्रेण कथाफलातिप्रसङ्गवारणसंभवात्तत्सत्ताऽभ्युपगमो व्यर्थ इति चतुर्थपक्षोक्तदोषः । पूर्ववत् संप्रतिपत्त्या निरस्त इति योजितं भवति । **व्याघातरूपमिति** । सत्तानभ्युपगमे स्वोक्तिलब्धं व्याघातरूपं बाधकमिति संबन्धः । अयमर्थः । परेण हि व्यवहारनियमादेव कथाप्रवृत्त्युपपत्तेः प्रमाणादिसत्त्वाभ्युपगमोऽनावश्यक इति प्रतिपाद्यते । तदयुक्तम् । सत्ताऽभ्युपगमस्य व्यवहारांशे वा प्रमाणाद्यंशे वा अनावश्यकत्वं वक्तव्यम् । नोभयमपि संभवति । व्यवहारनियमाभ्युपगमान्तर्गततयैव व्यवहारसत्त्वस्य प्रमाणादिसत्त्वस्य चाभ्युपगतत्वप्राप्त्या तदभावोक्तौ स्ववचनव्याघातापत्तेरित्येवं सत्ताऽनभ्युपगमे स्वोक्तिलब्धं स्वाभ्युपगतव्यवहारनियमोक्तिलब्धं च व्याघातलक्षणं बाधकमिति । **परोक्तमनुवदतीति** । परोक्तशङ्कातद्दूषणेऽनुवदतीत्यर्थः । अत्र चेत्येवमाशङ्क्य यदुक्तमिति मूलानुसारेण स्यादेतदित्येतदन्तभविन कथारम्भः शक्यत इत्यतः परकीयशङ्काग्रन्थः । एतैरपीत्यादिकं तद्दूषणमिति विवेको बोध्यः । विद्यासागर्यनुसारेण व्याख्यानं नियतत्वं समयेत्यादि । एतैरपीत्यन्तम् । अनेन समयेनेति व्यवहर्तव्यमितीत्यतःपरं नियमबन्ध इति शेषः । व्यवहारो निष्पादनीय इत्युक्त्यैवेति । व्यवहर्तव्यपदेन व्यवहारकर्तव्यताभिधाना-द्व्यवहारकरणस्य च तन्निष्पादनात्मकत्वात् । व्यवहारो निष्पादनीय इत्युक्तिलाभ इति भावः । **स्वोक्त्यैवेति** । स्वकीयव्यवहारनियमाभ्युपगमेनैवेत्यर्थः । स्वोक्त्यैवेष्टं व्यवहारसत्त्वमेव केवलं न भवति किन्तु प्रमाणादिसत्त्वमपि स्वोक्तिबलादेव लभ्यत इति योजनीयम् । सत्ताऽव्यतिरेकादिति नियतपूर्वसत्त्वरूपकारणत्वस्य सत्ताव्यतिरेका-भावात् । सत्तानन्तर्भाविन निरूपयितुमशक्यत्वादित्यर्थः । **यद्वादिव्यवहार इति** । पूर्वमर्थतः सत्त्वप्राप्तिरभिहितेदानीं तु कण्ठत एव तत्प्राप्तिरभिधीयत इति स्पष्टत्वान्नोक्तम् । अनेनैव भङ्गाव्यवहारार्थतया व्याख्यातं भवति । साधनाङ्गानि सन्तीति विद्यासागर्यनुसारीपाठः । सन्तीतिपदाभावेऽप्यनुवृत्त्या योज्यमित्यप्याहुः । अत एव पुनस्तानि न सन्तीत्युभयसाधारणं वचनम् । तेन न न्यूनताशङ्कावकाशः । साधनाङ्गानामित्यत्र साधनं नाम सिद्धिरूपक्रियेति प्रतीतिवारणाय व्याचष्टे **साधनं हेतुरिति** । तद्विषयस्येत्येतदनूद्य व्याचष्टे **तद्विषयस्य प्रतिज्ञार्थस्येति** । अत्र तच्छब्देन प्रकृतसाधनपरामर्श इति ज्ञेयम् । तत्त्वरूपताव्यवहारनियमनादावित्यादिपदार्थमाह **तद्वैपरीत्येनेति** । साधनाङ्गव्याप्त्यादीनां वैपरीत्येनासत्त्वेन साधनविषयप्रतिज्ञातार्थस्यासत्त्वमित्यर्थः । अत्र चोक्तरीत्यादिपदार्थस्य तट्टीकाकृतोक्तत्वात्तत्साधुत्वासाधुत्वचिन्तायां प्रयोजनाभावात्स एवार्थस्त्वित्याशयेनैतदर्थाभिधानं न तु वस्तुतः । दूषणानामस्तित्वनियमेनैव व्याप्त्याद्यसत्त्वसङ्ग्रहेण पृथक्तदुपादानस्याकर्तव्यत्वात् । दोषाः सन्ति साधनाङ्गानि सन्तीत्येतावन्तमेव नियमशरीरतयाऽभिधाय पुनर्व्याप्त्याद्यसत्त्वे प्रतिज्ञार्थस्यासत्यत्वमिति नियमवचनस्य पूर्वविरोधाच्च । किन्तु गुंडिराजोक्तरीत्या यत्र यत्रास्ति भवतिशब्दप्रयोगोऽस्ति व्यवहारनियमान्तर्गतेऽन्यत्रापि तत्र सर्वत्र कण्ठोक्तमेव सत्त्वमिति प्रतिपादनायादिपदमिति बोध्यम् ।

**स०व्र०— स्यादेतदिति** । वाग्व्यवहारक्रियासमयबन्धो, वाग्व्यवहारः कर्तव्य इति समयबन्धः । नियतत्वं समयविशेषणम् । नियमबन्ध एव पर्यवसानगत्या व्यवहारसत्तां स्वीकारयतीत्याशयः । ननु सत्तां विनाऽनुपपत्त्य-भावात् न तां स्वीकारयतीत्यत आह **न हीति** । कुत इत्यत आह **क्रियेति** । नन्वत्राप्यनुपपत्तिर्न प्रतीयत इत्यत आह **असत इति** । अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्त्वमिष्टं स्यात् यतो निष्पादनं





नामासतः सत्त्वप्रापणमित्यर्थः । न केवलं व्यवहारसत्त्वं स्वोक्त्यैवेष्टं प्रमाणादिसत्त्वमपि त्वदुक्तिबलादापद्यत इत्याह **प्रमाणैरिति** । तृतीयया करणत्वाभिधानात्तस्य च कारणविशेषत्वात्कारणविशेषत्वस्य सत्त्वाव्यतिरेकात्प्रमाणादीनां सत्त्वमनङ्गीकृत्य नियमबन्धनमेव न पर्यवस्यतीत्यर्थः । यद्वाग्व्यवहारे दोषाः सन्ति तस्य जय इति वदन्नेव पुनस्तानि न सन्तीति वदन् कथं सभ्यः स्यादित्याह **दूषणानामिति** । साधनस्य हेतोरङ्गानां व्याप्त्यादीनां सत्त्वेन तद्विषयस्य प्रतिज्ञातार्थस्य तत्त्वरूपत्वता सत्यतेति यावत् । तद्वैपरीत्येनासत्यत्वमादिपदार्थः । उपसंहरति **इति रिक्तमिति** । परस्परपराहतत्वेन शून्यवचनमित्यर्थः ।

**विठ्ठ०— चतुर्थपक्षोक्तेति** । प्रमाणादिसत्ताभ्युपगमस्य समयबन्धेनैवान्यथासिद्धस्य न कथाकारणत्वमिति यो दोषश्चतुर्थपक्षेऽभिहितः सोऽपि प्रमाणादिसत्ताभ्युपगमस्य कथाफलनिष्पादकतया कथातःपूर्वकालीनस्यानङ्गीकारेणैव परिहृत इत्यर्थः । अनङ्गीकारमेव दर्शयति **न हीति** । **प्रमाणादीन्येव** कथाफलनिष्पत्तिकारणानीति संबन्धः । परेण स्वग्रन्थे प्रमाणादिसत्ताभ्युपगमे किञ्चिन्निमित्तमाशङ्क्य परिहृतं तदपि तदनुवादपुरस्सरं दूषयति **स्यादेतदित्यादिना** । वाग्व्यवहारक्रियाव्यवहारकृतिः प्रमाणैर्व्यवहर्तव्यमित्यादिनियमोपेतव्यवहारकारणविषयसमयबन्धेनेत्यर्थः । **अभ्युपगन्तव्येति** । अन्यथा तद्विषयसमयबन्धापर्यवसानादिति भावः । अपर्यवसानमुत्पादयति **न हीति** । व्यवहारक्रिया व्यवहारकारणं व्यवहारस्य करणीयता नाभिधातुं शक्येति यावत् । अस्तु व्यवहारकरणं नामासतो व्यवहारस्य सद्रूपताप्रापणं तथापि प्रमाणादिव्यवहारस्य सत्तानभ्युपगमे नियमबन्धापर्यवसानं कथमित्यतः प्रमाणैर्व्यवहर्तव्यमिति नियमान्तर्गतप्रमाणस्य प्रमां प्रति कारणतारूपत्वेन कारणतायाश्च कार्यपेक्षया नियतपूर्वसत्त्वरूपत्वात् प्रमाणादिसत्त्वमनादाय नियमबन्धस्यापर्यवसानं भवत्येवेत्याह **दूषणानामिति** । **अस्तित्वेन** सत्त्वेन । यस्य व्यवहारे दूषणानि सन्ति तस्य भङ्गः पराजयोऽवधार्यते इति नियमबन्धने यस्य पुनः साधनस्य हेतोरङ्गानि व्याप्त्यादीनि सन्ति तस्य हेतोर्विषयस्य साध्यार्थस्य सत्त्वरूपता व्यवहर्तव्या तत्प्रयोक्तुः जयश्च साधनानामसत्त्वे तद्विषयस्यासत्त्वमित्येवंप्रकारकव्यवहारनियमादौ तस्य तस्य प्रमाणदूषणसाधनजयपराजयादेः सत्त्वं कण्ठरवेणाङ्गीकृतमित्यर्थः । **रिक्तं** स्वव्याहतत्वादर्थशून्यम् ।

**चषकः— चतुर्थपक्षेति** । अन्यथासिद्धत्वान्न तत्सत्तोपगतेः कारणत्वमित्येवंरूपः । ननु द्वैतापत्तिभिया प्रमाणादिसत्तां यदि नोपेयात्तदा विधिनिषेधाववधूय प्रत्यययायोगेन समयबन्धादेस्तद्धेतुतास्वीकारो न घटत एवेत्यादिदिशा सत्यत्ववाद्यभिहितं पूर्वमतीकृत्य यदभ्यधात्खण्डनकारस्तदप्यनूद्य प्रतिविधत्ते **स्यादेतदित्यादिना परिहृतमित्यन्तेन** । **अचेतयन्तम्** अनभिजानानम् । **सूत्रकृतैव निराकरिष्यत इति** । समयचरणे 'नासतोऽदृष्टत्वादि'ति शून्यवादापाकृतिनय इति भावः । खण्डनकृन्मतनिरासः ।

**गूढ०—** अनेनैवेत्यस्यार्थमाह **न हि वयमिति** । पुनरपि खण्डनमतमाशङ्कते **स्यादेतदिति** । नियतत्वं समयविशेषणम् । नियमबन्ध एवापर्यवसानवृत्त्या व्यवहारसत्तां स्वीकारयतीत्यन्वयः । ननु सत्तां विनाऽनुपपत्त्यभावान्न तां स्वीकारयतीत्याह **असत इति** । अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्त्वमिष्टं स्यात् । यतो निष्पादनं नामासतः सत्त्वप्रापणमित्यर्थः । न केवलं व्यवहारसत्त्वं स्वोक्त्यैवेष्टं





प्रमाणादिसत्त्वमपि त्वदुक्तिबलादेवापद्यत इत्याह **प्रमाणेति**। तृतीयया करणत्वाभिधानात्तस्य च करणविशेषत्वात्। कारणविशेषस्य सत्ताव्यतिरेकात्प्रमाणानां सत्त्वमनङ्गीकृत्य नियमबन्धो न पर्यवस्यतीत्यर्थः। यद्वादिव्यवहारे दोषाः सन्ति तस्य भङ्गो व्यवहर्तव्यो यस्य पुनः साधनाङ्गानि सन्ति तस्य जय इति वदन्नयं पुनस्तानि न सन्तीति च वदन् कथं सभ्यः स्यादित्याह **दूषणानामिति**। साधनस्य हेतोरंशानां सत्त्वेन तद्विषयस्य प्रतिज्ञातार्थस्य तत्त्वरूपता सत्यतेति। यावत्तद्वैपरीत्येनासत्त्वमादिपदार्थः उपसंहरति **रिक्तमिति**। परस्पराहतत्वेन शून्यवचनमित्यर्थः।

**प्रदीपः**— नियमबन्धादेवाश्रयणीयात्फलव्यवस्थोपपत्तेः सत्ताभ्युपगमो व्यर्थ इति यदुक्तं तत्राह **चतुर्थेति**। **स्यादेतदिति**। नियमबन्ध एवापर्यवसानवृत्त्या व्यवहारतां स्वीकारयतीत्याशयः। ननु सत्तां विनानुपपत्त्यभावान्न तां स्वीकरिष्यतीत्यत आह **न हीति**। किमियं राज्ञामाज्ञेति नेत्याह **क्रियेति**। ननु अत्राप्युपपत्तिर्न प्रतीयत इत्यत आह **असत इति**। अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्त्वमिष्टं स्याद्यतो निष्पादना नाम सतः सत्त्वप्रापणमित्यर्थः न केवलं व्यवहारसत्त्वं स्वोक्तौ वेषणं प्रमाणादिसत्त्वमपि तदुक्तिबलात् आपद्यत इत्याह प्रमाणैरिति। तृतीयया कारणत्वाभिधानात् तस्य च कारणविशेषत्वात् कारणत्वस्य सत्त्वाव्यतिरेकात् प्रमाणानां सत्त्वमनङ्गीकृत्य नियमबन्धनमेव न पर्यवस्यतीत्यर्थः। यदि वाग्व्यवहारे दोषाः सन्तीति च वदन् कथं सत्यः स्यादित्याह **दूषणानामिति**। साधनहेतोः अङ्गानां व्याप्त्यादीनां सत्त्वेन तद्विषयस्य प्रतिज्ञातार्थस्य तत्त्वरूपता सत्यतेति यावत्।.तद्वैपरीत्ये सत्यत्वमादिपदार्थः। उपसंहरति **इतीति**। **रिक्तं** परस्परपराहतत्वेन शून्यं वचनमित्यर्थः। एभिरिति कथायामेव चैतान्बाधकानुपन्यस्यासद्वादिनं निगृह्य सत्त्वाभ्युपगमनं साधनीयं तथा च तदन्तरेण कथाप्रवृत्तिः सत्त्वाभ्युपगमसिद्धौ कथासिद्धिस्तत्सिद्धौ बाधकोपन्यासः ततश्च सत्ताभ्युपगम इति चक्रकापत्तिर्वेत्यर्थः।

**२७६ सु०— प्रमाणादीनां सत्तामनभ्युपगम्य कथाऽऽरम्भः शक्यत इत्येवमाशङ्क्य यदुक्तम् 'एतैरपि बाधकैः कथायामारब्धायामभिमतस्य प्रसाधनीयत्वेन पूर्वोक्तबाधाया न निस्तारः स्यादि'ति तदप्यनेनैव परिहृतम्। कथास्वरूपफलनिष्पत्तये स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्य प्रमाणादिसत्तास्वीकार एव पर्यवसानमिति कथायां प्रवृत्तं स्वव्याघातमप्यचेतयन्तं प्रत्यस्माभिरुच्यमानत्वात्॥ ननु कथादेः कार्यस्य सत्त्वे कथञ्चित्कारणस्य प्रमाणादेः सत्त्वमङ्गीकरणीयं स्यात्। कार्यस्यैव सत्त्वाभावे किं कारणसत्तयेति चेत्। कुतः प्रमाणात्कथादिसत्ताऽभावो भवता निश्चितः। श्रुत्यादेरिति चेन्न। तस्यैवानेकातिप्रसङ्गगहननिविष्टत्वात्। तथाच सिद्धे तत्प्रामाण्ये कथादिकार्यासत्त्वसिद्धिः, ततोऽन्यथासिद्ध्या तर्कस्याभासतासिद्धिः, तस्यां च श्रुत्यादिप्रामाण्यसिद्धिरिति चक्रकापत्त्या नैकस्यापि सिद्धिः॥ असतः कारणत्वं तु सूत्रकृतैव निराकरिष्यत इत्यलं प्रसङ्गेन।**

**बिन्दुः— सूत्रकृतैवेति** । असदिति चेन्न प्रतिषेधमात्रत्वादित्यादिना समयपाद एव निराकरिष्यमाणत्वादित्यर्थः ।

**परि०— पूर्वोक्तेति** । सत्ताऽनभ्युपगन्तुश्चार्वाकादेरपि व्यवहारदर्शनान्मायावादिनाऽपि सत्ताऽनभ्युपगमात्कथारूपकार्यलिङ्गेन तत्सत्ताऽभ्युपगमसाधने बाधस्य न निस्तार इत्यर्थः । केचित्तु पूर्वोक्तबाधकान्न निस्तार इत्यर्थ इत्याहुः । **अनेकातिप्रसङ्गगहनेति** । सर्वमिथ्यात्वपरत्वे स्वयं मिथ्या स्यात् । तथाचासाधकं स्यात् । तस्य साधकत्वसाधकमपि सच्चेद्ब्रह्मातिरिक्तमद्वैतभङ्गः । ब्रह्मैव चेन्निर्विशेषस्य साधकत्वायोगः । मिथ्या चेत्तस्याप्यसाधकत्वमित्याद्यनेकातिप्रसङ्गारण्यनिविष्टत्वा-दसाधकत्वमिति भावः । श्रुत्यादेरसाधकत्वमेव व्यनक्ति **तथा चेति** । **तर्कस्येति** । यदि प्रमाणसत्ता न स्यात्तर्हि कथाऽऽदिकार्यनिष्पत्तिर्न स्यादित्येवंरूपतर्कस्य प्रमाणसत्त्वेन विनाऽप्युपपत्त्या आभासत्व-सिद्धिरित्यर्थः । **सूत्रकृतैवेति** । नासतोऽदृष्टत्वादिति समयपादीयशून्यवादापाकरणाधिकरण इति भावः ।

**यादु०— पूर्वोक्तबाधाया इति** । तथैव कथान्तरप्रसक्तिः । अन्यथाऽन्योन्याश्रय इत्युक्तबाधस्येत्यर्थः । नास्माभिः प्रमाणादिसत्ताङ्गीकारोऽपि कथाकारणमित्युच्यते येनोक्तदोषः किन्तु प्रमाणदिसत्ताऽभ्युपगमो न कथापूर्वमपेक्षितः । आवश्यकव्यवहारनियमेनैवानतिप्रसक्तकथायां फलसिद्धेरिति वदन्तं कथञ्चित्कथायां प्रवृत्तं प्राप्तमपि स्वव्याघातमपसिद्धान्तं चापश्यन्तं परं प्रति कथातः पूर्वं स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्योक्तरीत्या समयबन्धसत्तास्वीकारे प्रमाणादिसत्तास्वीकारे च पर्यवसानं ततश्च स्वव्याघातादिकमपरिहार्यमेवेत्युच्यत इत्याह **कथास्वरूपेति** । कार्यस्यैव सत्त्वाभाव इति इममंशमसिद्ध्या दूषयित्वा किं कारणसत्तयेत्यनेनोक्तमसतः कारणत्वं दूषयति **असतः कारणत्वं त्विति** । अथवाऽसतः कारणत्वं यत्खण्डनकारस्याभिप्रेतं तत्सूत्रविरुद्धं चेत्याह **असत इति** । नासतोऽदृष्टत्वादित्यत्रेति शेषः ।

**वं०प०— कथायां प्रवृत्तं** स्वेच्छास्वीकृतव्यवहारनियमेन यथाकथञ्चित्कथायां प्रवृत्तम् । **स्वव्याघात-मिति** । प्रमाणादिसत्तामनङ्गीकृत्य प्रमाणैर्व्यवहर्तव्यमिति स्वेच्छास्वीकृतव्यवहारनियमस्योक्तरीत्या सत्त्व एव पर्यवसानमिति स्वव्याघातः । अचेतयन्तं अपश्यन्तम् । **श्रुत्यादेरिति** । नेहनानेतिश्रुत्या सर्वस्य सत्त्वाभावो बोध्यते । तथा च सर्वान्तर्गतस्य कथाऽऽदेरपि सत्त्वाभावो निश्चित इत्यर्थः । **अनेकातिप्रसङ्गेति** । 'तद्वाक्यस्याग्रतो भवेत्', 'प्रत्यक्षविरोधत' इत्युक्तानेकातिप्रसङ्गेनेत्यर्थः । **तत्प्रामाण्ये** नेहनानेतिश्रुतिप्रामाण्ये । **अन्यथासिद्धेरिति** । अन्यथासिद्धिरप्रयोजकत्वम् । ब्रह्मज्ञानेतरज्ञानबाध्यत्वाभावे सत्त्वाभावे साधकत्वं न स्यादिति तर्के मिथ्यात्व-साधकश्रुतिविरोधेनाप्रयोजकत्वप्राप्तेरित्यर्थः । **तस्य चेति** । तर्कस्याभासत्त्वेन तद्विरोधाभावादित्यर्थः ।

**कं०रा०— तत्प्रामाण्ये** श्रुतिप्रामाण्ये । **तर्कस्य** कथाङ्गभूतप्रमाणादेः सत्त्वाभावे कथालक्षणं कार्यं न निष्पद्येतेति तर्कस्य । **तस्यां चेति** । तर्कस्याभासत्वसिद्धौ सत्यां तर्कविरोधाभावेन श्रुत्यादिप्रामाण्यसिद्धिरिति

भावः । ननु प्रमाणादेः सत्त्वाभावेऽपि कथालक्षणकार्यं प्रति कारणत्वं किं न स्यादित्यत आह **असत इति** । असतः कारणत्वं तु नासतोऽदृष्टत्वादित्यादौ सूत्रकृतैव निराकरिष्यत इति नास्माभिस्तन्निराकरणे यत्नः कर्तव्य इति भावः ।

**श्रीनिधि०— अभिमतस्येति** । प्रमाणतद्विषयादेरसत्त्वस्येत्यर्थः । **बाधाया न निस्तार इति** । तदनभ्युपगच्छतोऽपि मम कथारम्भदर्शनादिति भावः । अचेतयन्तमलक्षयन्तं अज्ञानं तदिति अजानन्तमिति वा । **कथञ्चित् कारणस्येति** । रज्जुसर्पादिकार्यस्य भयादेः सत्त्वेऽपि कारणस्याभावात् सत्त्वात् कथञ्चिदित्युक्तम् । इदं च स्वरीत्येति ज्ञेयम् । **गहनेति** । काननेत्यर्थः । **सूत्रकृतेति** । असदिति चेन्न । प्रतिषेधमात्रत्वादित्यनेनेति भावः ।

**वा०चं०—** तथा च सत्ताऽभ्युपगमसिद्धौ च बाधकोपन्यासस्ततश्च सत्ताऽभ्युपगम इति चक्रकमित्याह **एतैरपीति** । ननु पर्यवसानोक्तेर्न किञ्चिदपि फलमित्यतः स्वव्याघातोद्बोधनमेव तत्फलमित्याशयेनाह **स्वव्याघातमिति** । अन्यथासिद्ध्या तर्काभासत्वं शङ्कते **नन्विति** । असतोऽपि कारणत्वसंभवाभिप्रायेण कथञ्चिदिति । नन्वसतोऽपि साधकत्वसंभवात्तर्केऽप्रयोजकत्वमित्यत आह **असत इति** । ननु नासतोऽदृष्टत्वादित्यस्य वैभाषिकादिमतनिरासायाभावकारणतानिरासाय वा प्रवृत्तेर्न तद्विरोध इत्यत आह **अलमिति** । शून्यमते साक्षात्प्राप्तासत्कारणतानिरासपरतायाः स्फुटत्वेन वैभाषिकादिमतार्थिकप्राप्तासत्कारणतानिरासपरताया अनुपपन्नत्वाद्वैभाषिकादिमतनिरासकत्वेऽप्यसत्कारणतानिरासपरत्वस्यापरिहार्यत्वाच्च विहिताकरणविशेषादर्शनादीनां प्रत्यवायभ्रमादिहेतुतादर्शनेनादृष्टत्वहेत्वसिद्ध्याऽभावकारणतानिरासकत्वानुपपत्तेश्चेति भावः । यद्वा सत्ताविशिष्टस्य कारणत्वे, सत्ताविशिष्टे सत्तावृत्तौ सत्तायामपि सत्तावृत्त्यापत्त्या, सत्तोपलक्षितस्य कारणत्वेऽसत एव कारणत्वं प्राप्तमिति न सूत्रस्यासत्कारणत्वनिरासे तात्पर्यमित्यत आह **अलमिति** । घटविशिष्टभूतले घटसत्त्वे घटेऽपि घटसत्त्वापत्त्या, घटोपलक्षिते तत्सत्त्वे घटशून्येऽपि तदापत्तिरित्याद्याभाससमानयोगक्षेमतया 'कथमसतः सज्जायेतेति' श्रुत्या 'असद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादिति तत्सूत्रीयस्वभाष्येण च विरुद्धतया अस्य युक्त्याभासत्त्वादिति भावः ।

**वा०र०—** नास्माभिः सत्त्वं साध्यते । किन्तु स्वेच्छया स्वीकृतस्यैव व्यवहारनियमस्य प्रमाणसत्ताऽङ्गीकारे पर्यवसानमात्रमुच्यते ततो न चक्रकादिदोष इति भावेन प्रवृत्तकथास्वरूपफलेति वाक्ये स्वव्याघातमित्येतस्य कृत्यमाह **ननु पर्यवसानेति** । अभावकारणतानिरासाय वेति प्रागुक्तं दूषयति **विहिताकरणेति** । तेषां करणाद्यभावरूपत्वादिति भावः । प्रत्यवायेत्यादेः क्रमेणान्वयः । **अदृष्टत्वेति** । सूत्रोक्तस्यादृष्टत्वहेतोरभावकारणतानिरासायोपन्यास इति योजनेऽसिद्धिरायातीति तथा योजनानुपपन्नेत्यर्थः । यत्प्रागुक्तं टीकायां तदभिप्रेतो हेतुत्वस्य सत्त्वरूपत्वाभावपक्षस्त्वसतः कारणत्वं चेत्यादिनेति । तदपि विवृतमनेनेति ज्ञेयम् । सत्त्वमेव हि कारणत्वमसतश्च तदभावात्कारणत्वं नेत्यर्थस्योत्तरत्र प्रतिपाद्यमानत्वादिरूपैतन्मूलस्य विवक्षितत्वादिति भावेन अन्तर्भावितसत्त्वं चेदित्यादिखण्डनोक्तं सत्त्वस्य हेतुत्वरूपत्वाभावमाशङ्क्य तन्निरासपरतयाऽलमित्येतदर्थमाह **यद्वेति** । श्रुत्येत्यस्य विरुद्धतयेत्यनेन संबन्धः । इति खण्डनग्रन्थनिराकरणम् ॥

**स०व्र०**— परिहरति **यदुक्तमिति**। कथायामेवैतानि बाधकान्युपन्यस्य प्रतिवादिनं निगृह्य सत्ताऽभ्युपगमनं साधनीयम्। तथा च न तदन्तरेण कथाप्रवृत्तिः। सत्ताऽभ्युपगमसिद्धौ कथासिद्धिस्तत्सिद्धौ बाधकोपन्यासस्ततश्च सत्ताऽभ्युपगम इति चक्रकापत्तिरित्यर्थः। नास्माभिः प्रमाणादिसत्ताङ्गीकारोऽपि कथाकारणमित्युच्यते। येनोक्तदोषः किन्तु प्रमाणादिसत्ताऽभ्युपगमो न कथापूर्वमपेक्षितः आवश्यककथाव्यवहारनियमेनैवानतिप्रसक्तकथाफलसिद्धे-रिति वदता प्राप्तमपि स्वव्याघातमपश्यन्तं कथञ्चित्कथायां प्रवृत्तं परं प्रति कथातः पूर्वं स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्योक्तरीत्या प्रमाणादिसत्तास्वीकार एव पर्यवसानम्। तथाच प्रमाणादिसत्ताऽभ्युपगमो न कथापूर्वमपेक्षितः आवश्यकव्यवहारनियमेनैवोपपत्तेरिति वचनं स्वव्याहतं, व्यवहारनियमस्यैवोक्तरीत्या प्रमाणादि-सत्ताऽभ्युपगमपर्यवसायित्वादित्युच्यमानत्वात्। तथा च प्रमाणादिसत्ताऽभ्युपगमः कथापूर्वमपरिहार्य इत्याह **कथास्वरूपेति**। **कथञ्चित्कारणेति**। असतोऽप्यारोपितस्य सर्पादेर्भयकम्पादिसत्यकार्यजनकत्वदर्शनात् कथञ्चिदित्युक्तम्। कार्यस्यैव सत्त्वाभाव इतीममंशमसिद्ध्या दूषयित्वा किं कारणसत्तयेत्युक्तमसतः कारणत्वं दूषयति **असतः कारणत्वं त्विति**। **निराकरिष्यते**। 'नासतोऽदृष्टत्वादि'त्यत्र।

**विठ्ठ०**— **एतैरपीति**। उक्तैरेतैर्बाधकैः प्रमाणादीनां सत्त्वं कथायामारब्धायाम्। न द्वितीयोऽनवसर-दुस्थत्वात्। कथायामारब्धायामभिमतस्य प्रसाधनीयत्वे प्रतिवादिनः कथाप्रवेशनकथकत्वस्य तदीयव्यवहारस्य च प्रत्यक्षसिद्धत्वात् स कथकः तदीयवाक्सन्दर्भो वा न व्यवहारः प्रमाणादिसत्तानभ्युपगन्तृत्वात् तत्पूर्वकत्वा-भावादित्युक्ते पूर्वोक्तदोषतादवस्थ्यमित्यर्थः। नास्माभिः प्रमाणादिसत्तानभ्युपगमेनाकथकत्वादि साध्यते किं नाम कथायां प्रवृत्तं कथास्वरूपतत्फलनिष्पत्तये स्वेच्छाभ्युपगतस्य व्यवहारनियमस्य प्रमाणादिसत्तास्वीकारे च पर्यवसानत्वेऽपि मया तत्सत्ता न स्वीकृतेति लज्जामपहाय स्वव्याघातमज्ञात्वा वदन्तं प्रत्यकथकत्वाद्यापादनेन तद्बोधनमेव क्रियते अतो नोक्तदोष इति भावेनाह **कथास्वरूपेति**। यदुक्तं कार्यत्वात् प्रमाणादीनां सत्त्वं स्वीकार्य-मिति कार्यस्य सत्यत्वे खलु कारणस्य सत्यता स्यात् कथादिकार्यस्यैवासत्त्वेन कारणसत्यता दूरनिरस्तेति शङ्कते **नन्विति**। **श्रुत्यादेरिति**। नेहनानेत्यादिश्रुतेः दृश्यत्वादिलिङ्गाच्चेत्यर्थः। खण्डनकाराभिमतं असतः कारणत्वं नासतो दृष्टत्वादिति सूत्रविरुद्धं चेत्याह **असतः कारणत्वमिति**। ननु नासतः कारणत्वं किन्तु कारणस्य व्यावहारिक-सत्ताङ्गीक्रियते इति चेन्न अनुपदमेव निराकरिष्यमाणत्वात्। नाप्यनिर्वचनीयत्वं तस्यापि वैलक्षण्यं सदसतोरिति दूष्यमाणत्वात्। तदेवाह **अलं प्रसङ्गेनेति**।

**गूढ०**— परिहरति **यदुक्तमिति**। कथायामेवैतानि बाधकान्युपन्यस्य सिद्धान्तिनं निगृह्य सत्ताभ्युपगमनं साधनीयम्। तथाच न तदनन्तरेण कथाप्रवृत्तिः सत्ताभ्युपगमसिद्धौ कथासिद्धिस्तत्सिद्धौ बाधकोपन्यासस्ततश्च सत्ताभ्युपगम इति चक्रकापत्तिरित्यर्थः। अनेनैवेत्यस्यार्थमाह **कथास्वरूपफलनिष्पत्तय इति**। कथास्वरूपफलयो निष्पत्तय इत्यर्थः। कथायां प्रवृत्तं प्रतीति अस्माभिरुच्यमानत्वादित्यन्वयः। **स्वव्याघातमचेतयन्तमिति**। प्रमाणादिसत्त्वमनङ्गीकृत्य व्यवहारनियमबन्धने तत्सत्तास्वीकारस्यैव प्राप्तत्वेनापन्नं स्वव्याघातमजानन्तमित्यर्थः।





निश्चायकप्रमाणाभावान्न सत्त्वाभावनिश्चय इत्याशयेनाह **कुत इति**। **अतिप्रसङ्गेति**। मिथ्यात्वं यदीत्यनेनोक्तेत्यर्थः। एवं च फलितं चक्रकाश्रयमाह **तथा चेति**। **अन्यथासिद्धेति**। प्रमाणादिसत्त्वाभावेऽपि कथाप्रवृत्तिसिद्धेत्यर्थः। नन्वसत एव प्रमाणादेः कारणत्वं किं न स्यादित्यत आह **असत इति**। **निराकरिष्यते**। नासतो दृष्टत्वादित्यादिनेति शेषः।

**प्रदीपः**— नास्माभिः सत्त्वं साध्यते किन्तु स्वेच्छया स्वीकृतस्यैव व्यवहारनियमस्य प्रमाणादिसत्ताङ्गीकारे पर्यवसानमात्रमुच्यते ततो न चक्रकादिरिति परिहारप्रकारमाह **कथेति** । सत्ताऽसत्तौदासीन्यवादमवलम्ब्य तथा प्रवर्तयितुं न शक्येत्युक्तम्। एवमसद्वादावलम्बनेन प्रामाण्याद्यसत्त्वमभ्युपेत्य न शक्यैवेत्याह **असत इति**। ननु चेत्यादि सत्तावगमे सति सत्ताभावेन व्यवहाराभावदर्शनात् केवलव्यतिरेकाभावासत्तावगम एव हेतुरिति भावः।

॥ विश्वस्य व्यवहारसत्त्वाभावः ॥

व्यवहारसतः प्रमाणादेः साधकत्वाभावः—

**२७७ सु०— स्यादेतदेवम्। यदि 'नेहनाने'त्यादिबलेनात्मातिरिक्तस्य सर्वस्यासत्त्वमभ्युपगच्छामः। न चैवम्। किं नाम। व्यावहारिकी सत्ताऽभ्युपगम्यत एव। तथा च सर्वान्तःपातिनो व्यवहारसतः प्रमाणादेः साधकत्वसंभवान्नोक्तप्रसङ्ग इत्यत आह व्यवहारसतश्चेति।**

## अनु०— व्यवहारसतश्चापि साधकत्वं तु पूर्ववत्॥

**चशब्दो हेतौ। अपिशब्दः समुच्चये। तुशब्दोऽवधारणे। व्यवहारसतोऽपि साधकत्वं पूर्वस्यासत इव, प्रतिवादिनो न सिद्धमेव यतोऽतो नोक्तप्रसङ्गनिस्तार इति।**

**परि०**— चशब्दादित्रयस्योक्तार्थतामन्वयं दर्शयन्नेव योजयति **व्यवहारसतोऽपीति**। षष्ठ्यन्ताद्वतिरित्युपेत्य पूर्ववदित्येतत् पूर्वस्यासत इवेत्युक्तम्।

**कं०रा०**— **पूर्वस्येति**। अनेन पूर्ववदिति मूले वतिप्रत्ययस्तत्र तस्येवेत्यनुशासनात्तस्येवेत्यर्थ इत्युक्तं भवति।

**श्रीनिधि०**— **पूर्वस्यासत इवेति**। मिथ्याभूतस्येवेत्यर्थः।





**वा०चं०**— ननु नेहनानेतिवाक्यबलसिद्धासत्त्वप्रपञ्चान्तर्गतप्रमाणादेरसत्त्वमङ्गीकुर्वता व्यावहारिकसत्त्वस्य शङ्कितुमशक्यतया व्यावहारिकसत्त्वाप्रसक्तेस्तत्साधकत्वोपयोगनिरासकोत्तरभाष्यमसङ्गतमित्यत आह **स्यादेतदिति** । नेहनानेतिवाक्यं च पारमार्थिकत्वाभावविषयमिति गूढाभिसन्धेः शङ्केयमिति ध्येयम् । समुच्चयस्यैकेनैव सिद्ध्या चापिशब्दयोरन्यतरस्य वैयर्थ्यमित्यतः प्रकृतसङ्गतिं दर्शयितुं प्रकृतं प्रत्येतद्वाक्यार्थस्य हेतुत्वद्योतकतया चशब्दं व्याचष्टे **चेति** । इवेति वतेरर्थकथनम् । प्रतिवादिन इत्यादि तल्लब्धार्थकथनम् । चशब्दद्योतितहेतुं प्रति योग्यसाध्याध्याहारोऽतो नोक्तेत्यादिः ।

**वा०र०**— **वाक्यबलसिद्धासत्त्वेति** । वाक्यवत् न सिद्धमसत्त्वं यस्य प्रपञ्चस्य स तथोक्तः । **प्रपञ्चान्तर्गतेति** । सर्वान्तःपातिन इत्येतन्मूलानुवादरूपेणानेन नेहनानेत्यादिवाक्यबलेन यदि जगन्मिथ्या स्यात्तर्हीदं वाक्यमपि मिथ्या स्यादिति तर्के व्याप्त्यभावशङ्कापरिहारकतया यदि जगन्मिथ्या स्यात्तर्हि तदन्तःपातिमुक्त्यादिकमपि मिथ्या स्याद्गन्धर्वनगरान्तर्गतभवनवत् । यद्वा यदि नेहनानेत्यादिकं जगति विषये प्रवर्तमानं तन्मिथ्यात्वं प्रतिपादयेत्तर्हि उक्तश्रुत्यादिविषये प्रवर्तमानं तन्मिथ्यात्वमपि प्रतिपादयेदविशेषादिति तद्वाक्यस्याग्रत इत्यत्र प्रागभिप्रेतव्याप्तिद्वयमध्ये आद्या व्याप्तिः सूचिता । द्वितीया त्वन्यथा स्वस्मिन्नेवास्य प्रामाण्यं प्रतिहतमित्यादिना प्रागेव मूले सूचिता । मिथ्यायाः साधकत्वं चेत्येतद्भाष्यटीकादौ चाद्या व्याप्तिरुक्तेति ज्ञेयम् । **शङ्कितुमशक्यतयेति** । असत्त्वविरुद्धत्वात्सत्त्वस्येति भावः । **तत्साधकत्वोपयोगेति** । तस्य व्यवहारसत्त्वस्य यः साधकत्वोपयोगः प्रमाणादिसाधकत्वे उपयोगस्तन्निरासकेति योज्यम् । **इत्यत आहेति** । इत्याशङ्कानिरासायोक्तोपयोगनिरासकभाष्यं सङ्गमयतीत्यर्थः । ननूक्तमूलान्न सङ्गतिसिद्धिः । नेहनानेत्येतत्सिद्धासत्त्वविरुद्धत्वेन व्यावहारिकसत्त्वस्य शङ्कितुमशक्यत्वयुक्तिपरिहाराभावादित्यतो नेहनानेत्यनेन सर्वथा निषेधे किल विरोधप्रसक्तिः । न चैवमिति मूलाभिप्रायमाह **नेहनानेतीति** । **इत्यतः प्रकृतेति** । यद्यपि परस्परसमुच्चयार्थतया सार्थक्यस्य बहुस्थले प्रदर्शनात् प्रकृतेऽपि तथात्वे वैयर्थ्यशङ्कानवकाशस्तथापि सति प्रकारान्तरेणोपयोगेषूक्तरीत्या कथञ्चित्सार्थक्यं न वर्णनीयमित्याशयेनेदमिति ज्ञातव्यम् । **प्रकृतं प्रतीति** । अनेनाहेताविति मूलं प्रकृतं प्रतीत्यादिरूपेण व्याख्यातं भवति । **वतेरिति** । षष्ठ्यर्थे तत्र तस्येवेत्यनेन प्राप्तवतेरित्यर्थः । प्रतिवादिनो न सिद्धमित्येतदनुवृत्त्याश्रयणेन योजितमिति प्रतीतिनिरासायाह **प्रतिवादिन इत्यादीति** । **तल्लब्धेति** । इवार्थकवति लब्धेत्यर्थः ।

**विठ्ठ०**— **नेहनानेति** वाक्यस्य सर्वासत्त्वप्रतिपादकत्वाभावान्न तर्कविरोध इति शङ्कते **स्यादेतदिति** ।

**चषव** :— **इवेति** । वतेरर्थकथनम् ।

**गूढ०**— ननु प्रामाण्यादेर्व्यावहारिकसत्त्वाङ्गीकारान्नासाधकत्वमिति शङ्कते **स्यादेतदेवमिति** । यद्वा नन्वेतावतैवासतः साधकत्वस्य दूषितत्वात् अग्रिमकारिकायां व्यवहारसतः साधकत्वनिषेधोऽनुपपन्न एवेत्यतस्तन्निवर्त्यां शङ्कामुत्थापयति **स्यादेतदेवमिति** । समुच्चयस्यापिशब्देनैव संभवाच्च शब्दवैयर्थ्यमित्याशङ्क्याह **चशब्द इति** । एवं सति सिद्धं वाक्यार्थमाह **व्यवहारसतोऽपीति** ।





**२७८ सु०— अमयर्थः । यदि 'व्यावहारिकं सत्' नाम सदेव, तदा मिथ्यात्वप्रतिपादनं व्याहतम् । फलितं चास्मन्मनोरथद्रुमेण । व्यर्थं च 'व्यावहारिक'पदम् । अथ तदसत्तदा किमनेन अधिकमाचरितम् । सत्त्वाभावे साधकत्वं न स्यादित्यनिष्टप्रसङ्गस्य तदवस्थत्वादिति ।**

**परि०—** नोक्तप्रसङ्गनिस्तार इत्येतद्व्यनक्ति **यदि व्यावहारिकं सन्नामेति** । तस्यापि वाद्यादिमात्रस्यापि ।

**वा०चं०—** ननु व्यावहारिकसत्त्वस्य व्यवहारनिर्वाहक्षमत्वरूपस्य पारमार्थिकसत्त्वरूपत्वात्कथं नोक्तप्रसङ्गनिस्तार इत्यतस्तस्य पारमार्थिकत्वरूपत्वपक्षमुपर्येव निरस्य सत्त्वेन व्यवहारमात्रं न तु वस्तुतः सदिति पारमार्थिकसत्त्वरूपताऽभावपक्षं परिशेष्य तन्निरासपरत्वेन भाष्यं योजयति **अयमर्थ इति** । आशयमजानानस्येवेदमुत्तरम् । अत एव ननु चेत्यादिना तदाशयोद्घाटनेनोत्तरं भविष्यतीति द्रष्टव्यम् । **फलितं चेति** । सत्यस्यैव साधकत्वं नासत इत्यस्माभिः प्रतिपादनीयस्य सिद्धेरित्याशयः ।

**वा०र०— तस्येति** । व्यावहारिकस्वत्वस्येत्यर्थः । **रूपताभावपक्षमिति** । तस्येति वर्तते । ननु सत्त्रैविध्याभिप्रायेण व्यावहारिकसत्त्वपरेण साधकत्वोपयोगितयोक्ते सति कथं सत्त्वेन व्यवहारमात्रमित्यादिपक्षपरिशेषेण दूषणमित्यत आह **आशयमजानानस्येवेति** । तथा चेदं भाष्यं परकीयाशयोद्घाटनात् प्रागापातप्रतिपन्नार्थमादाय दूषणरूपम् । परेण तदुद्घाटने तु सत्त्रैविध्यं चेत्युत्तरं भाष्यं तदुत्तरमिति भावः ।

**विठ्ठ०—** छलप्रसङ्गतापरिहाराय विकल्पमुखेन मूलाभिप्रेतं दूषणं समर्थयितुमाह **अयमर्थ इति** । वादिप्रतिवादिमध्यस्थमात्रस्येति । अत्र मात्रपदं उक्तत्रिविधपुरुषव्यतिरेकेण पुरुषान्तरं व्यावर्तयितुम् । अत्र वाद्यादित्रयस्य यदाकदाचित् बाधितत्वावगमाभावात् तत्सत्ताभ्युपगमनीयेति मन्यसे उत तस्य वादिप्रतिवादिमध्यस्थमात्रस्यापि यदाकदाचित् बाधावगमाभाव इत्यनङ्गीकृत्य कथाकालमात्र एव बाधितत्वावगमाभावात् तत्सत्ताभ्युपगमनीयेति मन्यस इत्यर्थः ।

**चषक :— व्यर्थं चेति** । सदन्तराव्यावर्तकत्वादिति भावः ।

**गूढ०—** नन्वसतः साधकत्वाभाववद्व्यावहारिकसत्त्ववतोऽपि साधकत्वाभावकथनमयुक्तं व्यवहारनिर्वाहहेतुत्वरूपव्यावहारिकसत्त्ववतः साधकत्वस्य सिद्धान्तिनाङ्गीकारादित्यत आह **अयमर्थ इति । व्यर्थं चेति** । व्यवहारनिर्वाहहेतुभूतं यत्सत्त्वं तदतिरिक्तसत्त्वस्यैवाभावेन व्यावर्त्याभावाद्विशेषणं व्यर्थमित्यर्थः ।

**२७९ सु०— ननु च द्विविधं 'सत्' मुख्यममुख्यं च। तत्र यस्य सर्वप्रकारेण बाधितत्वं नास्ति तन्मुख्यं सत्, पारमार्थिकमिति च गीयते। यस्य तु सत्प्रतीतिरेव सत्ता तदमुख्यं सत्। न च ततः सत्ता सिद्ध्यति।**

**यादु०— सत्प्रतीतिरेव सत्तेति**। सत्ताव्यवहारहेतुर्नार्थगताऽपरा सत्ताऽस्ति। सत्ताऽवगमे सति सत्त्वाभावेन व्यवहाराभावादर्शनात्। तथा चाधिष्ठानगतैव सत्ताऽऽरोप्येऽवभासते नारोप्यस्य पृथक् सत्त्वमस्तीति केषाञ्चिन्मायिनां मतमिति भावः। उक्तं हि विवरणे। 'इदन्तासंसर्गवद्रजतस्य शुक्तिकासत्तासंसर्गोऽयमवभासते न रजतस्यापरं सत्त्वमि'ति।

**वं०प०— सत्प्रतीतिरेव सत्तेति**। नार्थसत्ताऽस्तीत्यर्थः। अद्वैतहानिं परिहरति **न च प्रतीतेरिति**। ब्रह्मस्वरूपाद्भेदो न चेत्यर्थः।

**वा०चं०—** ननु सत्त्वपक्षोक्तदूषणानुपमर्दकतया सत्त्रैविध्यस्य परेणानाशङ्कनीयत्वात्तन्निरासकोत्तर-भाष्यमसङ्गतम्। तथा हि। सत्त्रैविध्यं वदता प्रमाणादीनां सत्त्वात्साधकत्वस्योपपादनेनासत्त्वपक्षोक्तदूषणपरिहारेऽपि सत्त्वाङ्गीकारे मिथ्यात्वप्रतिपादनं व्याहतमिति सत्त्वपक्षोक्तदूषणस्य परिहारो न कर्तुं शक्यः। न च सत्ता-त्रैविध्याद्व्यावहारिकसत्तासद्भावेऽपि ब्रह्मनिष्ठपारमार्थिकसत्त्वाभावेन मिथ्यात्वमिति वाच्यम्। सत्त्वाविशेषेऽपि ब्रह्मनिष्ठसत्त्वाभावेन जगतो मिथ्यात्वे ब्रह्मण्यपि जगन्निष्ठसत्त्वाभावेन तस्यापि मिथ्यात्वापत्तेरित्यतो न सत्ता-त्रैविध्यवादिनाऽविशेषेण सत्त्वमङ्गीक्रियते किं नाम क्वचिन्मुख्यमपरत्रामुख्यममुख्येन च न मुख्येनेवार्थगत-सत्तासिद्धिरित्यभिप्रेत्य सत्त्वयोर्मुख्यामुख्यभेदेन द्वैविध्यं, तत्स्वरूपं, अमुख्येन तदसिद्धिप्रकारं च प्रतिपादयति **ननु चेत्यादिना**।

**वा०र०— परेणेति**। परेणानाशङ्कनीयत्वे सत्त्वपक्षोक्तदूषणोपमर्दकत्वाभावो हेतुः। तमेव स्पष्टयति **तथा हीति**। **सत्त्वात्साधकत्वस्येति**। सत्त्वाङ्गीकारेण साधकत्वस्येत्यर्थः। **सत्त्वाविशेषेऽपीति**। ब्रह्म-जगन्निष्ठसत्त्वयोः सत्त्वत्वेनाविशेषेऽपीत्यर्थः। अनेन सत्त्वत्वाविशेषादित्यविशेषव्याप्तिरुक्ता भवति। **अविशेषेण सत्त्वमिति**। उक्तसत्त्वयोरविशेषो नाङ्गीक्रियत इत्यर्थः। अमुख्येनेत्यादौ सत्त्वमिति प्रकृतं विभक्तिविपरिणामेन तृतीयान्ततया संबध्यते। मुखेनेवेति व्यतिरेकदृष्टान्तः। द्वैविध्यं तत्स्वरूपमित्येतयोः प्रतिपादयतीत्युत्तरेण संबन्धः।

**गूढ०—** ननु व्यावहारिकविशेषणं व्यर्थमित्येतदयुक्तं व्यावर्त्यसद्भावादिति शङ्कते **ननु चेति**। **सत्प्रतीतिरेवेति**। सत्त्वेन प्रतीयमानत्वमेवेत्यर्थः। **तत इति**। सत्त्वेन प्रतीतिमात्रादेवेत्यर्थः।





**२८० सु०— तथा हि । किं सत्ताऽवगममात्रात्तत्सत्ताऽभ्युपगम्येति मन्यसेऽबाधिताऽवगमाद्वा । नाद्यः, मरुमरीचिकाऽऽदौ जलरूपतासद्भावाभ्युपगमप्रसङ्गात् । द्वितीयेऽपि वादिप्रतिवादिमध्यस्थमात्रस्य । तस्यापि कथाकाल एव बाधितत्वावगमाभावात्, अथवा कस्यचिदपि कालान्तरेऽपि च बाधितत्वबोधविरहात् । नाद्यः अतिप्रसङ्गात् । पुरुषत्रयावगतस्याप्येकक्षणावगतस्य पुरुषान्तरेण तेनापि क्षणान्तरेऽपि बहुलं बाधदर्शनात् । न चासावर्थोऽसत्योऽपि द्वित्रादिपुरुषमात्रपूर्वजाततत्प्रतीत्यनुरोधाद् बाधदर्शने सञ्जातेऽपि तथैव सन्नित्यभ्युपगम्यते । तस्मात् द्वितीयः पक्षः परिशिष्यते । न चासावमुख्येऽस्तीति कुतः पारमार्थ्यप्राप्तिः । न च वाच्यं सत्प्रतीतेरपि प्रतीत्यन्तरमेव सत्तेत्यनवस्थेति । प्रतीतेः पारमार्थिकत्वात् । न हि तस्याः बाधोऽस्ति । अस्ति चेत्सैव प्रतीतिरबाधिता परमार्थसती । न च प्रतीतेः स्वरूपभेदोऽस्तीत्यतो विज्ञानं ब्रह्मैव परमार्थसत् ।**

**परि०**— ननु बाधदर्शनेऽपि वाद्यादित्रयावगतोऽर्थः सत्य एवास्त्वित्यतो नेत्याह **न चासाविति** । असत्योऽपि ह्यसावर्थः तथैव सन्निति न चाभ्युपगम्यत इत्यन्वयः । **तत्प्रतीतीति** । अर्थप्रतीतीत्यर्थः । पूर्वजातेत्यस्य तु बाधापेक्षया पूर्वोत्पन्नेत्यर्थः । **सैव प्रतीतिरिति** । बाधरूपप्रतीतिरित्यर्थः । ब्रह्मरूपत्वात्तस्या इति भावेनाह **न चेति** । परव्यामोहनकरी माया स्वाश्रयव्यामोहनकरी अविद्या क्रमादीशजीवयोराश्रिता । लौकिको व्यवहारो हानोपादानादिः ।

**गु०दी०**— **प्रतीतेः पारमार्थिकत्वात्** इत्यस्य अधिष्ठानचैतन्यस्यैव सकलजगत्प्रतीतित्वात् तस्य च पारमार्थिकत्वादित्यर्थः । **अस्ति चेत्** सत्यत्ववादिनां हि रीत्या वृत्तिरेव तत्तदर्थज्ञानं न त्वधिष्ठानचैतन्यं नामास्तीति बाधोऽस्तीति चेत्, तस्याप्यभावस्य ज्ञानं चैतन्यमेवेति वदतो मम सैव परमार्थसती । नहि तस्या अपि बाधः परेण वक्तुं शक्यते । प्राचीनाधिष्ठानचैतन्यस्य पुनरुत्थानप्रसङ्गात् । नन्वेवमप्युत्तरकालीनाभावप्रतीतेरेव बाधाभावेन पारमार्थिकता आगता न प्राचीनप्रतीतेरित्यत आह **न च प्रतीतेरिति** । इदमपि चिन्त्यम् । बाधितस्य प्राचीनचैतन्यस्य अबाधितस्योत्तरचैतन्यस्य चैक्यायोगात् । सर्वस्यापि भावाभावात्मकबाह्यजगतः वृत्तिरेव ज्ञानं न तु तत्तदधिष्ठानचैतन्यं नामास्तीति बाधे यस्यकस्यापि त्वदभिलषिताबाधिताधिष्ठानचैतन्यस्यैवासिद्ध्या, उक्तकुयुक्तेरनवसर एव । एवं च सत्त्वप्रतीतिरेव सत्तेति वदतः प्रतीतिपरम्परया तार्किकादिभिरुच्यमाना अनवस्था तदवस्थैव । अधिष्ठानचैतन्यभावे घटवृत्तावुल्लिख्यमाना सत्ता ब्रह्मगतैव चेदन्यथाख्यातिप्रसङ्गः । घटगता चेत्सैव सत्ताऽस्तु किमनेन निर्वचनेन । किञ्च जगति सत्ताप्रतीतिरेव सत्ता चेद्ब्रह्मण्यपि सैव सत्ता स्यात् । लाघवात् । श्रुतिबलाद्ब्रह्म सच्चेज्जगदपि तत एव सत्स्यात् । अर्थक्रियाकारिणि जगति तदयोग्यशुक्तिरजतादितो वैलक्षण्याय सत्त्वप्रतीत्यतिरिक्तसत्ताया एव सर्वैरपि वक्तव्यत्वाच्च । अपि च सत्त्वप्रतीतेरेव सत्त्वे अन्धकारस्थघटादेरसत्त्वप्रसङ्गः ।

तत्राप्यधिष्ठानचैतन्यमेव सत्त्वप्रतीतिरिति त्वज्ञानावृतमधिष्ठानचैतन्यं न तत्तदर्थप्रतीतिरिति वदता त्वयैव न वक्तुं शक्या । ऐश्वरीसत्ताप्रतीतिरपि स्वाश्रयाव्यामोहकमायाश्रयमीश्वरं वदतस्तवैव न । सत्ताप्रतीतियोग्यता तत्राप्यस्तीति चेत्तर्हि सत्त्वप्रतीतियोग्यध्वस्तघटादितो व्यवच्छेदायाभावाप्रतियोगित्वापरपर्याया विद्यमानत्वरूपा सत्यता योग्यतानिर्वाहाय भवतैव वाच्या या अतः सैव सत्ताऽस्तु किमनेन बकबन्धन्यायेन । किञ्च आविपालगोपालबालं सकललोकानुभवसिद्धा तत्तदर्थगता सत्ता कुतोऽन्यत्र नीयते । श्रुतिस्तु सार्वजनीनबहुतरप्रत्यक्षबाधिता स्वाध्येतृस्वाध्यापकस्वस्वरूपनिष्पादकस्वरवर्णाद्यभावाच्च भीता प्रयत्नशतेनापि न तवोपकर्त्री । अतः केवलं स्वमतरक्षायै कल्पनेयं वाच्या ।

**यादु०— तस्यापीति** । वादिप्रतिवादिमध्यस्थमात्रस्यापीत्यर्थः । अत्रैवं विकल्पक्रमः । किं वादिप्रतिवादिमध्यस्थमात्रस्य बाधितावगमाभावो हेतुरुत कदाऽपि । एवं कस्यचिदपि प्रतीतिकाले बाधबोधविरहो विवक्षित उत कदाऽपीति विकल्पनीयम् । **अतिप्रसङ्गादिति** । व्यभिचारादित्यर्थः । तमेव दर्शयति **पुरुषत्रयेति** । पुरुषान्तरेण । तेन पुरुषत्रयेणैकक्षणावगतस्य क्षणान्तरे बाधदर्शनादिति आद्येऽप्याद्यस्य दूषणम् । आद्यस्य द्वितीयपक्षदूषणं द्वितीयस्य द्वितीयपक्षदूषणेऽन्तर्भवति । तथा द्वितीयस्य प्रथमपक्षदूषणमपि प्रथमस्य प्रथमपक्षदूषणमिति ज्ञातव्यम् । ननु विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्संप्रतिपन्नवदिति पुरुषत्रयावगतस्यापि सत्त्वान्न व्यभिचार इत्याशङ्क्याह **न चेति** । द्वौ च त्रयश्च द्वित्रास्त आदयो येषां ते द्वित्रादयः । ते च ते पुरुषास्तन्मात्रस्य या पूर्वजाता तस्यार्थस्य प्रतीतिरित्यर्थः । तथा चात्र प्रतीतिसत्त्वसाधने सिद्धसाधनम् । अर्थसत्त्वसाधने बाधविरोध इति भाव इत्याहुः । पुरुषत्रयावगतस्येत्यादेरुदाहरणं तु कथाकाले योगाचारसौत्रान्तिकवैभाषिकत्रयावगतस्य स्वरसभङ्गुरत्वस्य वाद्यन्तरेण बाध्यतादर्शनात् । तथा पुरुषत्रयस्य शुक्तिकायां रजतभ्रमे कालान्तरे तस्यैव विशेषदर्शनेन बाधदर्शनादित्याद्यूह्यम् । **द्वितीयः पक्ष इति** । द्वितीयस्य द्वितीयपक्ष इत्यर्थः । **प्रतीतेरिति** । अन्यथा ज्ञेयवज्ज्ञानस्याप्यसत्त्वे शून्यवादप्रसङ्ग इति भावः । ननु ज्ञेयवज्ज्ञानस्यापि बाध्यत्वे शून्यवादो युक्त एवेत्यत आह **न हीति** । नन्वसिद्धो बाधाभाव इत्यत आह **अस्ति चेदिति** । न शून्यवादसंभव इति भावः । ननु बाधरूपप्रतीतेः पारमार्थिकत्वेऽपि तद्बाधिताया वियदादिप्रतीतेर्न पारमार्थिकत्वमित्यनवस्थातादवस्थ्यमित्यत आह **न चेति** । विज्ञानतत्त्वस्याखण्डत्वादिति भावः । नन्विदं विज्ञानवादिनां मतं न वेदान्तिनाम् । तन्मते ब्रह्मण एव परमार्थसद्रूपत्वेन विज्ञानस्यापि पारमार्थिकत्वे सदद्वैतभङ्ग इत्यत आह **विज्ञानं ब्रह्मैवेति** । 'विज्ञानमानन्दं ब्रह्मे'ति श्रुत्या विज्ञानब्रह्मणोरैक्यावगमान्न ब्रह्मैव परमार्थसदित्यस्य भङ्ग इति भावः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुत्या ब्रह्मणो विज्ञानात्मकताया उक्तत्वान्नाद्वैतहानिरिति भावः । ननु वेदान्तिमते कथं वियदादिज्ञानानां ब्रह्मात्मकत्वमिति चेत् । उच्यते । तन्मते सर्वत्र वृत्तिप्रतिबिम्बितचैतन्यमेव ज्ञानमित्युच्यते न केवलमन्तःकरणपरिणामरूपं जडम् । तस्याज्ञाननिवर्तकत्वाद्यभावेन ज्ञानशब्दावाच्यत्वात् । तथा च ज्ञानशब्दवाच्यान्तर्गतविशेष्यं विशेषणांशत्यागेन सर्वत्रानुस्यूतं ब्रह्मरूपमेवेति काऽत्र कथन्ता । उक्तं च सर्वार्थज्ञानानामैक्यं सङ्क्षेपशारीरकटीकायाम् । 'सर्वेष्वर्थेषु यत्स्फुरणमवभासते तत्तदर्थविशेषितबुद्धिवृत्तिविशिष्टं सत् ज्ञानशब्दवाच्यं भवति । तदेव तत्तदर्थाकारबुद्धिविशेषणांशापायेनानुगम्यमानं प्रकाशमात्रस्वभावं ज्ञानशब्दस्य लक्षणं भवती'ति ।





**कं०रा०—— पुरुषेति** । पुरुषत्रयावगमे पुरुषान्तरेण, तस्यापि पुरुषत्रयावगतस्यापि बहुलं बाधदर्शनात् । तस्यापि पुरुषत्रयस्याप्येकक्षणावगतस्य क्षणान्तरे बहुलं बाधदर्शनादित्यर्थः । **न चेति** । असत्योऽप्यसौ पुरुषत्रयावगतोऽर्थो द्वित्रादिपुरुषमात्रस्य पूर्वं जाता या सत्ताप्रतीतिस्तदनुरोधाद्बाधदर्शने सञ्जातेऽपि तथैव सन्निति न ह्यभ्युपगम्यत इत्यर्थः । **प्रतीतेरिति** । प्रतीतेः पारमार्थिकत्वेन मुख्यसत्त्वादमुख्यसत्येव सत्प्रतीतेः सत्तारूपत्वाङ्गीकारात्तस्याः प्रतीत्यन्तरं न वाच्यमिति नानवस्थेति भावः । किञ्च प्रतीतेः स्वरूपभेदाभावात् सत्प्रतीतेः प्रतीत्यन्तरमेव सत्तेत्येतदेव वक्तुं न शक्यत इत्याह **न चेति** ।

**श्रीनिधि०—— वादिप्रतिवादिमध्यस्थमात्रस्येति** । मात्रशब्देन इतरपुरुषव्यवच्छेदः बाधितावगमाभावा-दित्यत्रापि संबध्यते अस्यापि वाद्यादित्रयस्यापि । तत्रापीति शेषः । एतत्कल्पद्वयं दूषयति **नाद्य इति** । पुरुषान्तरेण बाधदर्शनादित्याद्यस्य उत्तरम् । तेनापि वाद्यादितया त्रयेणापि क्षणान्तरे बाधदर्शनादिति द्वितीयस्य । क्षणान्तर इत्येतत् घटनाय एकक्षणावगतस्येत्युक्तम् । अतिप्रसङ्गमुपपादयति **न चासाविति** । अत्रापि द्वित्रादिपुरुषमात्रेति आद्यपक्षानुसारेण पूर्वजाततत्प्रतीतिद्वितीयपक्षानुसारेणोक्तमिति ज्ञेयम् । **प्रतीतेः पारमार्थिकत्वादिति** । अधिष्ठाना-वच्छिन्नं चैतन्यमेव भासकमिति पक्षानुसारेणेयमुक्तिः । दृष्टिसृष्टिपक्षे तत्प्रतीतेः साक्षिरूपताङ्गीकारादेवमुक्तिरिति केचित् । ननु घटपटादिप्रतीतीनामनन्तत्वात् वा एतावत्या ब्रह्मैव सदित्येतद् विरोध इत्यत आह **प्रतीतेरिति** । प्रतीतीनां परस्परभेदो नेत्यर्थः । प्रतीत्यानन्त्यं तु घटपटादीनामेवानन्त्येनौपाधिकम् । न तु स्वाभाविक मिति भावः । अस्ति चेत्सैव प्रतीतिरबाधिता भविष्यतीत्युक्तम् । दृष्टिसृष्टिपक्षे साक्षिप्रतीतेर्याथार्थ्याभावाभावविषयिण्याः कथाया याथार्थ्यम् । तथा च प्रतीतिभेदे अङ्गीकार्ये द्वैतमापन्नमित्यत आह **न च प्रतीतेरिति** वा । न साक्षिणस्तत्तद्विषयत्व-मुच्यते । येन प्रतीतिभेदः स्यात् किं नामैकस्मिन्नेव साक्षिणि भावाभावादिकं सर्वमारोपितमिति भावः ।

**वा०चं०——** ननु प्रतीतेरेवार्थसाधकत्वात्सत्ताप्रतीतावपि तदसिद्धौ न क्वाऽप्यर्थसिद्धिः स्यादित्यत आह **तथा हीति** । वादिप्रतिवादिमध्यस्थानामेव बाधबोधविरहाद्वा कस्यापि बाधबोधविरहाद्वा । आद्येऽपि तेषां कथाकाल एव तदभावाद्वा कालान्तरेऽपि वा । द्वितीयेऽपि प्रतीतिकाल एव वा कदाऽपि वेति विकल्पान्मनसि निधायाह **द्वितीयेऽपीति** । द्वयमप्यनैकान्त्येन निरस्यति **नाद्य इति** । अनैकान्त्यमेव स्फोरयति **पुरुषेति** । पुरुषत्रयावगत-स्यापि पुरुषान्तरेणेत्याद्ये वाद्यादीनामेव कालान्तरेऽपीति द्वितीयस्य । एकक्षणावगतस्य तेनापि क्षणान्तर इत्यनेन वाद्यादीनामेव कथाकाल एवेत्याद्यस्य द्वितीये कस्यचिदपि प्रतीतिकाल एवेत्याद्यस्य च निरासः । वैभाषिकसौत्रान्तिकयोगाचारावगतस्य स्वरसभङ्गुरत्वस्य वाद्यन्तरेण, पूर्वं सर्पतया दृष्टस्रजस्तेनैव कालान्तरे बाधदर्शनादिति भावः । ननु विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात्संमतवदिति पुरुषत्रयावगतस्यापि सत्त्वेन तत्र साध्यस्यापि सत्त्वान्न व्यभिचारस्तत्राह **न चेति** । द्वौ त्रयौ वा द्वित्राः । त एव पुरुषा मात्राः परिमाणं यस्य तस्य पूर्वजातस्य च तस्य वस्तुनः प्रतीतिरिति विग्रहः । बाधदर्शने सञ्जातेऽपि द्वित्रादिपुरुषमात्रपूर्वजाततदर्थप्रतीत्यनुरोधा-दसत्योऽप्यसावर्थस्तथैव सन् । तथाभूत इति यावत् । इति न चाभ्युपगम्यत इति संबन्धः । तादृशावगमेन प्रातीतिकसत्त्वसाधने सिद्धसाधनमर्थसत्त्वसाधने बाधबोधविरोध इत्याशयः । **तस्मादिति** । द्वितीये द्वितीय इत्यर्थः ।

जगद्विषयकप्रतीतेः कालान्तरे बाधो भविष्यतीत्याशयेनाह **न चेति** । **प्रतीत्यन्तरमेवेति** । अन्यथाप्रतीतौ तद्गतसत्तास्वीकारेऽविशेषादर्थेऽपि सा स्यादित्याशयः । ननु बाधप्रतीतेः पारमार्थिकत्वे किमायातं जगत्सत्त्व-प्रतीतेरित्यत आह **न चेति** । साक्षिचैतन्यरूपप्रतीतेर्ब्रह्मरूपत्वादिति भावः । यद्वा ननु तथा सति सदद्वैतभङ्ग इत्यत आह **न चेति** । ब्रह्मस्वरूपान्न भेदः प्रतीतेरिति भावः । सत्ताप्रतीतिमात्रान्न जगतः सत्त्वसिद्धिरित्यर्थप्रतिपादनाय प्रवृत्तेन मयाऽनवस्थापरिहाराय प्रतीतेः पारमार्थिकत्वं व्युत्पादयता ब्रह्मैव परमार्थसदित्यपि व्युत्पादितं भवती-त्याशयेन मुख्यं सदित्यस्योदाहरणमाह **अत इति** ।

**वा०र०**— ननु वादिप्रतिवादिमध्यस्थानां कथाकाल एव बाधावगमाभावस्येव कालान्तरेऽपि तदवगमाभावस्यापि दूष्यत्वात् कस्यचिदपि कालान्तर इव प्रतीतिकालेऽपि उक्ताभावस्य दूष्यत्वात् पुरुषत्रयावगतस्येत्युत्तरत्र कल्पत्रयस्य तस्मादित्यत्र चैकस्य दूषणावगमान्न तदनुसारेण विकल्पावसरेऽपि मूले वाद्यादीनां कथाकाल एव बाधितावगमाभावाद्वा कालान्तरेऽपि तदभावाद्वेति विकल्पो दर्शनीयः । एवं कस्यचिदपीत्युत्तरकल्पेऽपि कस्यचिदपि प्रतीतिकाल एव वा कालान्तरे वेति स प्रदर्शनीयस्तत्कथमेकैकत्रो-पादानम् । न चाकर्षणानुकर्षणाभ्यां पूर्वोत्तरवाक्ययोः कालान्तरेऽपीति प्रतीतिकाल इत्यर्थककथाकाल एवेति च संबध्यत इति वाक्यद्वयात्कल्पनचतुष्टयप्राप्तिरिति वाच्यम् । तथा सति पूर्ववाक्ये मध्यस्थमात्रस्य कथाकाल एवेत्यादेरेव वक्तव्यत्वापत्त्या तस्यापीत्यस्यानन्वयप्रसङ्गादित्यतोऽत्र कथाकालान्तरकोटिकविकल्पो न प्रथममेव विवक्षितोऽपि तु बाधावगमाभावः । किं वाद्यादीनामुत कस्यचिदपीत्येवं प्रथमं विकल्प्य कल्पद्वयेऽपि कथाकाल एवेत्यादि विकल्पान्तरं प्रवर्तनीयमित्यभिमतम् । तथा च मध्यस्थमात्रस्य बाधितावगमाभावादिति प्रथमकल्पप्रतिपादनानन्तरं तस्यापि कथाकाल एव तदभावो वा कालान्तरेऽपि वेति विकल्पान्तरप्रवर्तनाय तस्यापीत्यस्यावश्यकत्वात् । एतद्बलादेवोत्तरकल्पेऽपि कस्यचिदपि बाधितबोधविरहादिति विकल्पानन्तरं तस्यापि प्रतीतिकाल एवोत्तरकालान्तरेऽपीति विकल्पोऽपि लभ्यत इत्येवमेकैकत्रोभयोपादानलाभान्नानुपपत्तिरित्याशयं स्पष्टयन् वाद्यादिविकल्पोत्तरं कालविकल्पद्वयप्रदर्शनपरतया द्वितीयेऽपीत्येतन्मूलं योजयति **वादिप्रतिवादि-मध्यस्थानामेवेत्यादिना** । मात्रस्येत्यस्य व्याख्यानमेवेति । मात्रस्य (?) बाधितावगमाभावादिति संबन्धमात्रा-श्रयणेनेवावशिष्टस्य कल्पान्तरत्वमिति भावेनोक्तं **तेषां कथाकाल एवेति** । कथाकाल इति विशिष्यनिर्देशेन कालान्तरलाभः अवधारणेन चापीति लभ्यत इत्याशयेनोत्तरकल्पीयकालान्तरेऽपीत्यस्यानुकरणं **कालान्तरे-ऽपीति** । अथवेति पक्षे कालान्तरेऽपीत्यपिशब्दबलात्प्रतीतिकाल एवेत्यपि लब्धमित्याशयेन पक्षान्तरप्रदर्शनं **प्रतीतिकाल एव वेति** । कस्यापि बाधबोधविरहादिति प्रथमविकल्पीयद्वितीयपक्षो लभ्यत इत्यर्थः । कालान्तरेऽपीत्येतत्त्यागेन तु प्रथमद्वितीय इति स्पष्टम् । खण्डनटीकायामपि तस्यापीत्येतत्स्वारस्याभिप्रायेणैव कल्पान्तरे कल्पान्तरीयकालान्तरेऽपीत्यादेः संबन्धो वर्णित इति भावः । प्रथमद्वितीयकल्पयोः द्वितीयप्रथम-कल्पगतकालान्तरेऽपि तत्काल एवेत्यनयोः संबन्ध इत्यर्थः । पुरुषत्रयस्यैकक्षणेऽबाधितावगमत्वहेतुरनैकान्तिक इत्येतत्परतया पुरुषत्रयेति वाक्यमाद्यमनैकान्त्ये न दूषयतीत्यवतारितं खण्डनटीकायाम् । तदयुक्तम् ।





द्वितीयद्वितीयपक्षातिरिक्तावान्तरकल्पत्रयस्याप्येतद्वाक्यादेव दूषणलाभेन तन्निरासकतयैव योजनीयत्वात् । एतेनैव अवान्तराद्यविकल्पद्वितीयस्यावान्तरद्वितीयविकल्पदूषणेऽन्तर्भाववचनमप्यसङ्गतम् । एकक्षणावगतस्यापि क्षणान्तर इत्यनेनैवावान्तरप्रथमप्रथमदूषणसिध्या पुरुषान्तरेणेत्येतद्वैयर्थ्यापत्त्या तेनैव वाद्यादीनां कालान्तरेऽपीत्येतत्कल्पनिरासस्यापि प्रतीत्यनुसारेण प्राप्ततया द्वितीयद्वितीयेऽन्तर्भावादेः कल्पनानौचित्यादित्याशयेन पुरुषत्रयस्येत्यादि मूलतात्पर्यमाह **द्वयमपीति** । द्वितीयद्वितीयव्यतिरिक्तावान्तरविकल्पद्वयसहितं प्रधानविकल्पकोटिद्वयमपीत्यर्थः । निरासप्रकारस्यास्फुटत्वात् तं विवेकेनाह **पुरुषत्रयेति** । **पुरुषान्तरेणेतीति** । पुरुषान्तरेणेत्यनेनेत्यर्थः । आद्ये वाद्यादीनामेव कस्यापि वेति प्रथमप्रधानविकल्पस्य वाद्यादीनामेवेत्याद्य इत्यर्थः । **द्वितीयस्येति** । आद्ये वाद्यादीनामेव कथाकाल एव वा कालान्तरेऽपि वेति यो विकल्पस्तत् द्वितीयस्येति योज्यम् । एवमेवाद्यस्येत्यादि व्याख्येयम् । द्वितीयस्य निरास इत्युत्तरेण संबन्धः । एवमुत्तरत्रापि । पुरुषत्रयावगतस्येत्यादिकं स्फोरयति **वैभाषिकेति** । **वाद्यन्तरेणेति** । स्थायित्ववादिनेत्यर्थः । बाधदर्शनादिति संबन्धः । **सर्पतयेति** । पूर्वं सर्पतया दृष्टा या स्रक् सा तथोक्ता मन्दान्धकारे पथि गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा भुजङ्गं मन्यमानस्य कालान्तरे समीपे सर्पणाभावादिना स्रक्त्वदर्शनेन बाधदर्शनादित्यर्थः । **इति पुरुषत्रयेति** । इत्यनुमानेन प्रतीतियाथार्थ्यसिध्या तद्याथार्थ्यदिवेति योज्यम् । पुरुषत्रयावगतस्यापि सत्त्वस्य सिद्धत्वेनेत्यर्थः । द्वित्रादिपुरुषेति वाक्यं दुर्गमार्थत्वाद्विग्रहप्रदर्शनादिना व्याचष्टे **द्वौ त्रयो वेत्यादिना** । अत्र द्वौ त्रयो वेति विग्रहे संख्येयार्थया संख्यया संख्यायाः समासविधायकेन संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येय इत्यनेन बहुव्रीहिसमासे बहुव्रीहौ संख्येये डजबहुगणादिति बहुव्रीहेर्डचि टिलोपे च द्वित्रा इति रूपम् । द्वौ त्रयो वा मानं येषामिति प्रक्रियावाक्यं तु पर्यवसितार्थकथनपरम् । न तु विग्रहप्रदर्शनपरम् । अन्यपदार्थे समासस्य पूर्वेणैव सिद्धेः । आदशतः संख्या संख्येये वर्तत इति वचनेन संख्येयवचनयोर्मनत्वायोगादिति भावः । उक्तं च संख्ययाव्ययेति सूत्रभाष्ये द्वित्राः त्रिचतुरा इति कोऽयं समासः । बहुवीहिरित्याह कोऽस्य विग्रहः । **द्वौ त्रयो वेतीत्यादि** । वार्थेऽस्य समासस्याङ्गीकारादत्र संशयस्य वार्थत्वात्संशयस्य च कोटिद्वयावमर्शित्वादनियतसंख्यावमर्शिसंशये त्रयोऽपि प्रतीयन्त इति तदपेक्षं द्वित्रा इति बहुवचनमित्यादि प्रमेयं शेष्यादौ द्रष्टव्यम् । संख्ययाव्ययासन्नेति सूत्रीयभाष्यकैयटादौ च द्वौ त्रयो वेति विग्रहप्रदर्शनात् द्वौ त्रयश्च द्वित्रा इति खण्डनटीकोक्तविग्रहायोग इति चानेन सूचितम् । अत्र द्वित्रा इत्यनन्तरं आदयो येषां ते द्वित्रादयः त एव पुरुषा इति पाठः स्वरस एव । यदि च द्वित्रा इत्यनन्तरं त एवेति पाठः । तदा तु द्वित्रशब्दे विग्रहस्य दुर्गमतया तावन्मात्रं प्रदर्श्यादिपदेन बहुव्रीहेः स्पष्टतया तमप्रदर्श्यैव पुरुषेत्यादेर्विग्रह एव प्रदर्शित इति न दोष इति ज्ञेयम् । **मात्रा परिमाणमिति** । परिमाणे द्वयसच्दघ्नञ्मात्रच इति परिमाणेऽर्थे मात्रचो वितस्तिमात्रमित्यादौ विधानादिति भावः । यस्य तस्य पूर्वजातस्य च तस्य वस्तुन इति विद्यासागर्युक्तप्रकारेण विगृहीतम् । तदभिप्रायविशेषो ज्ञातव्योऽस्ति । पूर्वोत्पन्नप्रतीत्यनुरोधात् सत्त्वमित्यादिगुंडिराजीयेऽनुवादेन पूर्वजातत्वस्य प्रतीतिविशेषणत्वप्राप्त्या पूर्वजाता या तस्य वस्तुनः प्रतीतिरिति विग्रहप्रतीतेः । इह च द्वित्रादिपुरुषमात्रं च तत् पूर्वजातं च तत् तच्चेति विग्रहाश्रयणप्रतीतेः । अत एव पूर्वजातस्य चेति चशब्दः । **पूर्वजाततदर्थेति** । स चासावर्थश्च तदर्थः । द्वित्रादिपुरुषमात्रश्चासौ पूर्वजातश्चासौ तदर्थश्च । स तथोक्तस्तत्प्रतीत्यनुरोधादित्यर्थः । सन्नित्येतावतापूर्तेस्तथैवेत्यधिकमिति प्रतीतिनिरासाय तथैव सन्निति विशिष्टमेकार्थ-





समर्पकमित्याशयेनानूद्य व्याचष्टे **तथैव सन्निति**। तथाभूतशब्दो हि सत्त्ववाची तथा सन्नित्यस्य च तथाभूत इत्यनेन समानार्थकता । एवं भूतः । एवं सन् इत्यादेरेकार्थतायाः सिद्धत्वादित्याशयः । **द्वितीये द्वितीय इति** । अवान्तरद्वितीयविकल्पस्य द्वितीय इत्यर्थः । यद्वा प्रथमप्रधानविकल्पस्य कस्यचिदपीति द्वितीयविकल्पे यो विकल्पः प्रतीतिकाल एव वा कालान्तरेऽपि वेति तत्र द्वितीयः कस्यापि कालान्तरेऽपीति द्वितीय इत्यर्थः । अस्तु तर्ह्यबाधितावगमादेव जगतोऽपि सत्त्वसिद्धिरित्यतः प्रवृत्तं न चासावमुख्येऽस्तीति वाक्यमाशयकथनेनावतारयति **जगद्विषयकेति**। तथा च कस्यापि कालान्तरेऽपि बाधो नास्तीत्येतज्जगद्विषयकप्रतीतौ नास्तीति तद्रूपसत्तावगमान्न जगत्सत्त्वसिद्धिरित्यर्थः । अर्थस्य सत्त्वेन प्रतीतिरेव सत्ता यथैवं तत्प्रतीतेरपि सत्त्वेन प्रतीतिरेव सत्तेति क्रमप्रसङ्गेऽनवस्था शङ्किता मूले न च वाच्यम् । **सत्प्रतीतेरपीति** । तत्रार्थे सत्तानङ्गीकारेऽपि प्रतीतिगतसत्ता-ऽङ्गीकारान्नानवस्थेत्याशङ्कापरिहारायाह **अन्यथाप्रतीताविति** । अन्यथेत्यस्यैव विवरणं प्रतीतौ तद्गतसत्तास्वीकार इति । **प्रतीतेरिति** मूलम् । तथाच प्रतीतिगतसत्त्वाङ्गीकारादर्थवत्सत्ताप्रतीतेरेव सत्त्वरूपतानङ्गीकारान्नानवस्थे-त्याशयः । ननु तर्ह्यविशेषादर्थेऽपि तद्गतमेव सत्त्वमस्त्वित्यतो वैषम्यमाह **न हीति** मूलम् । अस्तु वाऽर्थवत्प्रतीतिरपि बाधस्तथापि प्रतीतिपारमार्थ्यं संभवत्येवेत्याह **अस्ति चेदिति** । **सैव** बाधप्रतीतिरेव । **किमायातमिति** । जगत्सत्यत्वप्रतीतेस्तु परमार्थसत्त्वाभावादनवस्थातादवस्थ्यमिति भावः । स्वप्रकाशवादीयखण्डनग्रन्थोऽप्यत्र अनुसृतो मूले । **साक्षिचैतन्येति** । अत्रैतच्छङ्कापरिहारोऽनेन व्युत्पाद्येति । .......... । **यद्वेति** । योजनापक्षे बाधप्रतीतिजगत्सत्यत्वप्रतीत्योर्भेदशङ्कायाः कथं परिहारः कार्य इत्यपि सावकाशतया परिहार्यमस्ति । ........... । सत्ताप्रतीतिमात्रादिति वाक्येऽपि प्रतीतेः पारमार्थिकत्वमित्येतत्तु प्रतीतेः पारमार्थिकत्वादित्येतदनुवादतयोप-पादयितुं कथञ्चिच्छक्यते । .......... ।

**स०व्र०**— प्रमाणादि परमार्थसत् अबाधितावगमगोचरत्वादात्मवदित्याशङ्क्याह **द्वितीय इति** । तस्य वादिप्रतिवादिमध्यस्थमात्रस्य कथाकाले बाधितावगमाभावात्सत्ताऽभ्युपगम्यते । किंवा कदाचिदपि तदभावात् । उत कस्यचिदपि कालान्तरेऽपि बाधावगमविरहादिति विकल्पार्थः । आद्यमनैकान्त्येन दूषयति **नेति** । व्यभिचारमेव स्फोरयति **पुरुषेति** । पुरुषत्रयावगतस्य स्वरसभङ्गुरत्वस्य वाद्यन्तरेण बाध्यतादर्शनात् । तथा महान्धकारे पथि गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा सर्पं मन्यमानस्य कालान्तरे निकटोपसर्पणेन दर्शने बाधदर्शनात्पुरुषत्रयस्यैकक्षणे अबाधितावगमत्वहेतुस्तत्र व्यभिचारीत्यर्थः । ननु विगीतः प्रत्ययो यथार्थः प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानेन पुरुषत्रयावगमस्य याथार्थ्ये तदवगतस्यापि सत्यत्वान्न तत्र व्यभिचार इत्यत्राह **न चेति** । द्वौ त्रयश्च द्वित्राः, त एव आदयो येषां ते द्वित्रादयः, त एव पुरुषास्तन्मात्रस्य पूर्वजातेति विग्रहः । प्रातीतिकत्वसाधने सिद्धसाधनमर्थसत्त्व-साधने बाधबोधविरोध इत्यर्थः । द्वितीयं परिशेषयति **तस्मादिति** । तमेव विशदयति **न चेति** । नन्वेवं चेत्सत्प्रतीतेः सत्त्वं नाम सत्त्वेन प्रतीतिरेव, एवं तस्या अपीति पूर्वपूर्वप्रतीत्यसत्त्वे उत्तरोत्तरप्रतीतेरप्यसत्त्वमित्याशङ्क्ते **न चेति** । साक्षिचैतन्यरूपत्वेन पारमार्थिकत्वात्प्रतीतेर्नानवस्थेत्याह **प्रतीतेरिति** । प्रतीतेः भ्रमत्वात्कथं पारमार्थ्यमिति चेन्न । तस्य बाधकैकसमधिगम्यत्वात्प्रकृते तदभावादित्याह **न हि तस्या इति** । बांधकाभावेन पारमार्थ्ययुक्त-





मिदानीमभ्युपेत्यापि तत्सत्त्वं प्रतीतेः पारमार्थिकत्वमुपपादयति **अस्ति चेदिति** । सैव बाधिकैवेत्यर्थः । ननु बाधकज्ञानस्य पारमार्थिकत्वेऽपि सत्प्रतीतेः पारमार्थिकत्वे किमायातमित्यत आह **न च प्रतीतेरिति** । अथवा नन्वतीन्द्रियधर्मादिप्रतीतेर्न चैतन्यरूपत्वम् । तत्र चैतन्याभिव्यक्त्यनङ्गीकारात् । अतो धर्मादिप्रतीतेर्वृत्तिरूपाया बाधसंभवेन सत्त्वेन प्रतीतिरपर्यवसन्नेति वक्तव्यम् । अतस्तत्रोक्तानवस्थेत्यत आह **अस्ति चेदिति** । क्वचित् धर्माद्यतीन्द्रियप्रतीताविति शेषः । अयं भावः । न धर्मादिप्रतीतेरपि सत्त्वेन प्रतीतिरेव सत्तेत्यनवस्था । सर्वस्या अपि प्रतीतेः सत्त्वेन प्रतीतेरनावश्यकत्वात् । कस्याश्चित्प्रतीतेर्विशेषदर्शने बाधरूपासत्त्वप्रतीतेरपि संभवे तत्रैव पर्यवसानात् । न च बाधरूपासत्त्वप्रतीतेरपि सत्त्वेन प्रतीतिरेव सत्तेति पुनरनवस्था । तस्याः बाधाभावेन परमार्थ-सत्त्वात् । अन्यथा बाध्यत्वेनाभिमतायाः पूर्वप्रतीतेरेव परमार्थसत्त्वप्राप्त्या तत्रैव परम्परापर्यवसानादिति । नन्वेवं ब्रह्मैव परमार्थसदिति सदद्वैतमतहानिः । घटादिप्रतीतेर्बाधप्रतीतेर्वा परस्परं ब्रह्मणश्च भिन्नत्वादित्यत आह **न च प्रतीतेरिति** । घटादिप्रतीतेर्बाधप्रतीतेर्वा, न परस्परं, न वा ब्रह्मस्वरूपाद्भेदोऽस्तीत्यर्थः । अभावस्य ब्रह्मात्मकत्वात्तस्य च स्वविषयकप्रकाशरूपत्वादभावज्ञानरूपबाधप्रतीतेर्ब्रह्माभेदो युक्त इति मन्तव्यम् । तदिदमाह **विज्ञानं ब्रह्मैवेति** । स्वविषयज्ञानरूपं ब्रह्मैवेत्यर्थः ।

**विट्ठ०**— अथवेत्यत्रापि वाद्यादिपुरुषत्रयनियममपहाय यस्यकस्यचिदपि पुरुषस्य यदाकदाचित् बाधबोधाभावात् तत्सत्तानभ्युपगम्येति मन्यस इति प्रसङ्गः । **अतिप्रसङ्गादिति** । **व्यभिचारादिति** । तमेव दर्शयति **पुरुषत्रयेति** । पुरुषत्रयस्य यत्किञ्चित् वस्तुसत्तावगमेऽपि तस्यैव वस्तुनः पुरुषान्तरेण बहुलं बाधदर्शनात् तस्य पुरुषत्रयावगतस्यैव तेनैव पुरुषत्रयेणापि कथाकालातिरिक्तकालान्तरेऽपि बाधदर्शनात् न वाद्यादित्रयस्यैव कथाकाल एव बाधितत्वावगमाभावस्सत्यत्वे हेतुरिति भावः । ननु पुरुषान्तरेणैकेन बाधदर्शनेऽपि पूर्वपुरुषत्रयावगतत्वात् सत्यत्वं भवतु तथा तेनैव पुरुषेणोत्तरकालं बाधदर्शनेऽपि पूर्वजाततद्विषयकसत्ताप्रतीत्यनुरोधात् सत्यत्वमस्तु इत्यत आह **न चेति** । असत्योऽपि असावर्थः निरपवादबाधदर्शने सञ्जाते सत्यपि द्वित्रादिपुरुषप्रतीत्यनुरोधात् तस्य द्वित्रादिपुरुषस्यापि पूर्वजातप्रतीत्यनुरोधात् तथैव पूर्वप्रतीत्यनुसारेणैव सन्निति न चाभ्युपगम्यते इत्यर्थः । यस्य सत्प्रतीतिरेव सत्ता तद्मुख्यं सदित्युक्तम् । तत्र वियदादेः सत्तानिर्वाहिका या सत्प्रतीतिः तस्याः सत्तानिर्वाहार्थं सत्प्रतीत्यन्तराङ्गीकारे अनवस्थेति शङ्कां निराकरोति **न च वाच्यमिति** । ननु कथं प्रतीतेः पारमार्थिकत्वं चैतन्यातिरिक्तत्वादित्यत आह **न हीति** । घटाद्यवच्छिन्नचैतन्यमेव तत्प्रतीतिः । चैतन्यस्य बाधाभावः प्रसिद्धोऽतः पारमार्थिकता युज्यते इति हिशब्दाभिप्रायः । वृत्तिरूपैव प्रतीतिरिति मते बाधोऽस्तीत्यत आह **अस्ति चेदिति** । सैव बाधरूपैव प्रतीतिरबाधितेति नानवस्थेति भावः । ननु बाधरूपप्रतीतेः पारमार्थिकत्वेऽपि तद्बाधितायाः वियदादिप्रतीतेः न पारमार्थिकत्वं ततश्च तत्सत्तानिर्वाहाय प्रतीत्यन्तरमित्यनवस्था तदवस्थेत्यत आह **न चेति** । न वियदादिप्रतीतेरन्या तत्प्रतीतिस्वरूपभेदोऽङ्गीक्रियते येनानवस्था वियदादिप्रतीतेरपि प्रतीत्यन्तराङ्गीकारात् विज्ञान-तत्त्वस्याखण्डत्वात् । न चैवं ब्रह्मातिरिक्तस्य विज्ञानतत्त्वस्य सत्यत्वाङ्गीकारे अद्वैतहानिरिति वाच्यम् । विज्ञानं ब्रह्मेत्यादिश्रुत्या ब्रह्मैक्यावगमादिति भावः । यद्यपि तन्मते वृत्तिज्ञानं न ब्रह्मरूपं तथापि जडस्य प्रकाशरूपत्वायोगात्

समर्पकमित्याशयेनानूद्य व्याचष्टे **तथैव सन्निति** । तथाभूतशब्दो हि सत्त्ववाची तथा सन्नित्यस्य च तथाभूत इत्यनेन समानार्थकता । एवं भूतः । एवं सन् इत्यादेरेकार्थतायाः सिद्धत्वादित्याशयः । **द्वितीये द्वितीय इति** । अवान्तरद्वितीयविकल्पस्य द्वितीय इत्यर्थः । यद्वा प्रथमप्रधानविकल्पस्य कस्यचिदपीति द्वितीयविकल्पे यो विकल्पः प्रतीतिकाल एव वा कालान्तरेऽपि वेति तत्र द्वितीयः कस्यापि कालान्तरेऽपीति द्वितीय इत्यर्थः । अस्तु तर्ह्यबाधितावगमादेव जगतोऽपि सत्त्वसिद्धिरित्यतः प्रवृत्तं न चासावमुख्येऽस्तीति वाक्यमाशयकथनेनावतारयति **जगद्विषयकेति** । तथा च कस्यापि कालान्तरेऽपि बाधो नास्तीत्येतज्जगद्विषयकप्रतीतौ नास्तीति तद्रूपसत्तावगमान्न जगत्सत्त्वसिद्धिरित्यर्थः । अर्थस्य सत्त्वेन प्रतीतिरिव सत्ता यथैवं तत्प्रतीतेरपि सत्त्वेन प्रतीतिरिव सत्तेति क्रमप्रसङ्गेऽनवस्था शङ्किता मूले न च वाच्यम् । **सत्प्रतीतेरपीति** । तत्रार्थे सत्तानङ्गीकारेऽ[illegible] सत्ता-ऽङ्गीकारान्नानवस्थेत्याशङ्कापरिहारायाह **अन्यथाप्रतीताविति** । अन्यथेत्यस्यैव विवरणं प्र[illegible]ीकार इति । **प्रतीतेरिति** मूलम् । तथाच प्रतीतिगतसत्त्वाङ्गीकारादर्थवत्सत्ताप्रतीतेरेव सत्त्[illegible]वस्थे-त्याशयः । ननु तर्ह्यविशेषादर्थेऽपि तद्वतमेव सत्त्वमस्त्वित्यतो वैषम्यमाह **न हीति** मूल[illegible]त्प्रतीतिरि बाधस्तथापि प्रतीतिपारमार्थ्यं संभवत्येवेत्याह **अस्ति चेदिति** । **सैव** बाधप्र[illegible]ायातमि जगत्सत्यत्वप्रतीतेस्तु परमार्थसत्त्वाभावादनवस्थातादवस्थ्यमिति भावः । [illegible]ण्डनग अनुसृतो मूले । **साक्षिचैतन्येति** । अत्रैतच्छङ्कापरिहारोऽनेन व्युत्पाद्येति [illegible] बाधप्रतीतिजगत्सत्यत्वप्रतीत्योर्भेदशङ्कायाः कथं परिहारः कार्य इत्यपि साव[illegible] सत्ताप्रतीतिमात्रादिति वाक्येऽपि प्रतीतेः पारमार्थिकत्वमित्येतत्तु प्र[illegible] पादयितुं कथञ्चिच्छक्यते । .......... ।

**स०व्र०**— प्रमाणादि परमार्थसत् अबाधितावगम[illegible] वादिप्रतिवादिमध्यस्थमात्रस्य कथाकाले बाधितावगमाभावा[illegible] कस्यचिदपि कालान्तरेऽपि बाधावगमविरहादिति विक[illegible] स्फोरयति **पुरुषेति** । पुरुषत्रयावगतस्य स्वरसभङ्गु[illegible] गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा सर्पं मन्यमानस्यं[illegible] अबाधितावगमत्वहेतुस्तत्र व्यभिचारीत्यर्थः । [illegible] पुरुषत्रयावगमस्य याथार्थ्ये तदवगतस्यापि स[illegible] आदयो येषां ते द्वित्रादयः, त एव पुरुषा[illegible] साधने बाधबोधविरोध इत्यर्थः । द्विती[illegible] सत्त्वं नाम सत्त्वेन प्रतीतिरेव, **ए**[illegible] साक्षिचैतन्यरूपत्वेन [illegible] चेन्न । तस्य बा[illegible]



मिदानीमभ्युपेत्यापि तत्सत्त्वं प्रतीतेः पारमार्थिकत्वमुपपादयति **अस्ति चेदिति** । सैव बाधिकैवेत्यर्थः । ननु बाधकज्ञानस्य पारमार्थिकत्वेऽपि सत्प्रतीतेः पारमार्थिकत्वे किमायातमित्यत आह **न च प्रतीतेरिति** । अथवा नन्वतीन्द्रियधर्मादिप्रतीतेर्न चैतन्यरूपत्वम् । तत्र चैतन्याभिव्यक्त्यनङ्गीकारात् । अतो धर्मादिप्रतीतेर्वृत्तिरूपाया बाधसंभवेन सत्त्वेन प्रतीतिरपर्यवसन्नेति वक्तव्यम् । अतस्तत्रोक्तानवस्थेत्यत आह **अस्ति चेदिति** । क्वचित् धर्माद्यतीन्द्रियप्रतीताविति शेषः । अयं भावः । न धर्मादिप्रतीतेरपि सत्त्वेन प्रतीतिरिव सत्तेत्यनवस्था । सर्वस्या अपि प्रतीतेः सत्त्वेन प्रतीतेरनावश्यकत्वात् । कस्याश्चित्प्रतीतेर्विशेषदर्शने बाधरूपासत्त्वप्रतीतेरपि संभवे तत्रैव पर्यवसानात् । न च बाधरूपासत्त्वप्रतीतेरपि सत्त्वेन प्रतीतिरिव सत्तेति पुनरनवस्था । तस्याः बाधाभावेन परमार्थ-सत्त्वात् । अन्यथा बाध्यत्वेनाभिमतायाः पूर्वप्रतीतेरेव परमार्थसत्त्वप्राप्त्या तत्रैव परम्परापर्यवसानादिति । नन्वेवं ब्रह्मैव परमार्थसदिति सदद्वैतमतहानिः । घटादिप्रतीतेर्बाधप्रतीतेर्वा परस्परं ब्रह्मणश्च भिन्नत्वादित्यत आह **न च प्रतीतेरिति** । घटादिप्रतीतेर्बाधप्रतीतेर्वा, न परस्परं, न वा ब्रह्मस्वरूपाद्भेदोऽस्तीत्यर्थः । अभावस्य ब्रह्मात्मकत्वात्तस्य च [illegible]विषयकप्रकाशरूपत्वादभावज्ञानरूपबाधप्रतीतेर्ब्रह्माभेदो युक्त इति मन्तव्यम् । तदिदमाह **विज्ञानं ब्रह्मैवेति** । [illegible]ज्ञानरूपं ब्रह्मैवेत्यर्थः ।

**वि०ठ०**— अथवेत्यत्रापि वाद्यादिपुरुषत्रयनियममपहाय यस्यकस्यचिदपि पुरुषस्य यदाकदाचित् [illegible]बोधाभावात् तत्सत्तानभ्युपगम्येति मन्यस इति प्रसङ्गः । **अतिप्रसङ्गादिति** । **व्यभिचारादिति** । तमेव दर्शयति **पुरुषत्रयेति** । पुरुषत्रयस्य यत्किञ्चित् वस्तुसत्तावगमेऽपि तस्यैव वस्तुनः पुरुषान्तरेण बहुलं बाधदर्शनात् तस्य पुरुषत्रयावगतस्यैव तेनैव पुरुषत्रयेणापि कथाकालातिरिक्तकालान्तरेऽपि बाधदर्शनात् न वाद्यादित्रयस्यैव कथाकाल एव बाधितत्वावगमाभावस्सत्यत्वे हेतुरिति भावः । ननु पुरुषान्तरेणैकेन बाधदर्शनेऽपि पूर्वपुरुषत्रयावगतत्वात् सत्यत्वं भवतु तथा तेनैव पुरुषेणोत्तरकालं बाधदर्शनेऽपि पूर्वजाततद्विषयकसत्ताप्रतीत्यनुरोधात् सत्यत्वमस्तु इत्यत आह **न चेति** । असत्योऽपि असावर्थः निरपवादबाधदर्शने सञ्जाते सत्यपि द्वित्रादिपुरुषप्रतीत्यनुरोधात् तस्य द्वित्रादिपुरुषस्यापि पूर्वजातप्रतीत्यनुरोधात् तथैव पूर्वप्रतीत्यनुसारेणैव सन्निति न चाभ्युपगम्यते इत्यर्थः । यस्य सत्प्रतीतिरेव सत्ता तदमुख्यं सदित्युक्तम् । तत्र वियदादेः सत्तानिर्वाहिका या सत्प्रतीतिः तस्याः सत्तानिर्वाहार्थं सत्प्रतीत्यन्तराङ्गीकारे अनवस्थेति शङ्कां निराकरोति **न च वाच्यमिति** । ननु कथं प्रतीतेः पारमार्थिकत्वं चैतन्यातिरिक्तत्वादित्यत आह **न हीति** । घटाद्यवच्छिन्नचैतन्यमेव तत्प्रतीतिः । चैतन्यस्य बाधाभावः प्रसिद्धोऽतः पारमार्थिकता युज्यते इति हिशब्दाभिप्रायः । वृत्तिरूपैव प्रतीतिरिति मते बाधोऽस्तीत्यत आह **अस्ति चेदिति** । सैव बाधरूपैव प्रतीतिरबाधितेति नानवस्थेति भावः । ननु बाधरूपप्रतीतेः पारमार्थिकत्वेऽपि तद्बाधितायाः वियदादिप्रतीतेः न पारमार्थिकत्वं ततश्च तत्सत्तानिर्वाहाय प्रतीत्यन्तरमित्यनवस्था तदवस्थेत्यत आह **न चेति** । न वियदादिप्रतीतेरन्या तत्प्रतीतिस्वरूपभेदोऽङ्गीक्रियते येनानवस्था वियदादिप्रतीतेरपि प्रतीत्यन्तराङ्गीकारात् विज्ञान-[illegible]स्याखण्डत्वात् । न चैवं ब्रह्मातिरिक्तस्य विज्ञानतत्त्वस्य सत्यत्वाङ्गीकारे अद्वैतहानिरिति वाच्यम् । विज्ञानं [illegible]ादिश्रुत्या ब्रह्मैक्यावगमादिति भावः । यद्यपि तन्मते वृत्तिज्ञानं न ब्रह्मरूपं तथापि जडस्य प्रकाशरूपत्वायोगात्

वृत्तिप्रतिबिम्बितचैतन्यसंवलितमेवात्र विज्ञानशब्देन विवक्षितं तथाच विज्ञानशब्दान्तर्गतं यद्विशेष्यं तत् विशेषणांशत्यागेन सर्वत्रानुस्यूतं ब्रह्मस्वरूपमेवेति ध्येयम् ।

**चषकः**— **जलरूपतेति** । तत्राप्यवगमसद्भावादिति भावः । वाद्यादित्रितयावगतत्वं सत्यताया-मतन्त्रमित्याह **न चासावर्थ इति** । **द्वितीयः पक्ष इति** । पुरुषान्तरीयकालान्तरीयबाधबोधविरहाख्य इत्यर्थः । **सैव** बाधरूपैव ।

**गूढ०**— कुतः सत्प्रतीतिमात्रात्सत्त्वासिद्धिरित्यतस्तदसिद्धिमुपपादयति **तथा हीति** । ज्ञानमात्रस्य ज्ञेयत्वसाधकत्वे मरुमरीचिसलिलादेरपि सत्त्वस्वीकारप्रसङ्गेनाद्यं दूषयति **नेति** । प्रमाणादिपरमार्थसदबाधितावगमगोचरत्वादात्मवदित्याशङ्क्याह **द्वितीय इति** । तस्य वादिप्रतिवादिमध्यस्थमात्रस्य कथाकाले बाधितावगमाभावात् । सत्तामभ्युपगम्य किं वा कदाचिदपि तदभावात् । उत कस्यचिदपि कालान्तरेऽपि बाधावगमविरहात् । उत प्रतीतिकाल इति विकल्पार्थः । आद्यमनैकान्त्येन दूषयति **नेति** । व्यभिचारमेव स्फोरयति **पुरुषेति** । पुरुषत्रयावगतस्यापि पुरुषान्तरेणैकक्षणावगतस्य च क्षणान्तरे तेनापीति संबन्धः । योगाचार-सौत्रान्तिकवैभाषिकत्रयावगतस्य स्वरसभङ्गुरत्वस्य वाद्यन्तरेण बाध्यतादर्शनात् । तथा मन्दान्धकारे पथि गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा सर्पं मन्वानस्य कालान्तरेण निकटोपसर्पणादिना रशना तत्त्वदर्शनेन बाध्यतादर्शनात् । पुरुषत्रयस्यैकक्षणे बाधितावगमत्वहेतुस्तत्र व्यभिचरतीत्यर्थः । आद्यविकल्पस्य द्वितीयविकल्पदूषणं द्वितीय-विकल्पदूषणेऽन्तर्भवतीति न पृथगुच्यते । ननु विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात्संप्रतिपन्नप्रत्ययवदिति । पुरुषत्रयावगतस्यापि सत्त्वात् न तत्र व्यभिचार इत्याशङ्क्याह **न चेति** । द्वौ त्रयश्च द्वित्रा आदिर्येषां ते द्वित्रादयस्त एव पुरुषाः त एव मात्रा परिमाणं यस्य तस्य पूर्वजातस्य वस्तुनः प्रतीतिरिति विग्रहः । प्रातीतिकसत्त्वसाधने सिद्धसाधनमर्थसत्त्वसाधने बाधविरोध इत्यर्थः । द्वितीयेनास्माकं काऽपि क्षतिरिति तं परिशेषयति **तस्मादिति** । तमेव विशदयति **न चेति** । **असाविति** । कस्यचिदपि कदापि कालान्तरेऽपि बाधाभावः, अमुख्ये सति न चास्ती-त्यर्थः । ब्रह्मज्ञानेन बाधस्यैव संभवादिति भावः । नन्वर्थस्य यथा प्रतीतिसत्त्वं तथा प्रतीतेरर्थसत्तैव स्वीकर्तव्या । व्यवहाराङ्गत्वात्तथाच नासद्वादः । अर्थसत्त्वे प्रमाणाभावादवगमः कथं न सन्निति जिज्ञासायामवगमोऽस्तीत्यव-गमान्तरमेव तस्य सत्त्वमित्यनवस्था स्यादित्याशङ्क्याह **न चेति** । साक्षिचैतन्यरूपत्वेन पारमार्थिकत्वा-त्प्रतीतेर्नानवस्थेत्याह **प्रतीतेरिति** । **सैवेति** । यथा बाधः सैवेत्यर्थः । ननु यदि प्रतीतेरपि परमार्थसत्त्वं तर्हि सदद्वैतभङ्ग इत्यत्राह **न चेति** । ननु बाधप्रतीतेः पारमार्थिकसत्प्रतीतेः किमायातमित्यत आह **न चेति** । साक्षिचैतन्यस्यैकत्वादित्यर्थः ।

**प्रदीपः**— ज्ञानमात्रस्याङ्गत्वेऽतिप्रसङ्गात् ज्ञेयावच्छिन्नस्याङ्गत्वे तस्याप्यङ्गत्वप्रसङ्ग इत्याह **तथा हीति** । ज्ञानमात्रस्य ज्ञेयांशत्वसाधकत्वे मरीचिसलिलादेरपि सत्त्वप्रसङ्गेनाद्यं दूषयति **नेति** । प्रमाणादिपदार्थः सन्नबाधितावगमगोचरत्वादात्मवदित्याशङ्क्याह **द्वितीयेऽपीति** । तस्य वादिप्रतिवादिमध्यस्थमात्रस्य कथाकाले बाधितावगमाभावात् सत्ताभ्युपगमः किं वा कदाचिदपि तदभावादुत कस्यचिदपि कालान्तरेऽपि बाधावगमविरहादुत





प्रतीतिकाल इति विकल्पार्थः। आद्यमनेकान्तेन दूषयति **नेति**। व्यभिचारमेव स्फोरयति **पुरुषेति**। पुरुषत्रयावगतस्य स्वरसभङ्गुरत्वस्य वाद्यन्तरेण बाध्यतादर्शनात्तथा मन्दान्धकारे पथि गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा सर्पं मन्वानस्य कालान्तरे निकटोपसर्पणादिना रशनात्वदर्शनेन बाध्यतादर्शनात्पुरुषत्रयस्यैकत्रक्षणे बाधितावगमत्वहेतुस्तत्र व्यभिचरतीत्यर्थः। आद्यविकल्पस्य द्वितीयविकल्पदूषणं द्वितीयविकल्पदूषणेऽन्तर्भवतीति न पृथगुच्यते। ननु विगीतप्रत्यया यथार्थाः प्रत्ययत्वात्संप्रतिपन्नवदिति पुरुषत्रयावगतस्यापि सत्त्वान्न तत्र व्यभिचार इत्याशङ्क्याह **न चेति**। द्वौ च त्रयश्च द्वित्राः त आदयो येषां ते द्वित्रादयः त एव पुरुषास्त एव मात्रा परिमाणं यस्य तस्य पूर्वजाता सा च तस्य वस्तुनः प्रतीतिरिति विग्रहः। प्रातीतिकसत्त्वसाधने सिद्धसाधनं अर्थसत्त्वसाधने बाधविरोध इत्यर्थः। द्वितीये नास्माकं क्षतिरिति परिशेषयति **तस्मादिति**। नन्वर्थस्य यथाप्रतीतिसत्त्वं तथाप्रतीतेरर्थः सन्नेव स्वीकर्तव्यो व्यवहाराङ्गत्वात्तथा च सद्वादः सिद्ध्यति तस्यैव सत्त्वादिति। अयथार्थसत्त्वे प्रमाणाभावादवगमः कथं संभवति जिज्ञासायामागमोऽस्तीत्यवगमार्थमेव सत्त्वमिति। तथा सति अनवस्था स्यादित्यत आह **न चेति**। यथा रत्नपरीक्षायां त्रयाणां चतुर्णां वा वाक्यात् सम्यक् ज्ञाने जाते न पुनः ज्ञानान्तरमपेक्ष्यते तथान्यत्रापीति ज्ञानान्तरानुसरणावश्यकत्वाभावान्नानवस्थेत्यर्थः। साक्षिचैतन्यरूपबाध्यत्वात् पारमार्थिकत्वान्न प्रतीतिरेव सत्तेत्याशयेनाह **प्रतीतिरिति**। ननु बाधप्रतीतेः पारमार्थिकसंप्रतीतेः किमायातमित्यत आह **न चेति**। साक्षिचैतन्यस्यैकत्वादित्यर्थः।

**२८१ सु०— अमुख्यं पुनर्द्वेधा। मायोपाधिकमविद्योपाधिकं चेति॥ तत्र आद्यमंबरादिकम्। तच्चाऽऽब्रह्मज्ञानाद् बाधवैधुर्येण हानादिव्यवहारनिर्वाहकत्वाद् व्यावहारिकमिति गीयते। कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमादेव हि लौकिको व्यवहारः प्रतीयते॥ द्वितीयं शुक्तिरजतादि। तत्तु प्रतीतिसमयमात्रपरिवर्ति। न पुनर्हानादिहेतुरिति प्रातीतिकमुच्यते॥**

**वं०प०**— नन्वब्रह्मज्ञानाद्बाधवैधुर्ये ब्रह्मज्ञानबाध्यत्वप्राप्त्या कथं हानादिव्यवहारः। प्रत्यक्षादेर्लौकिकः प्रामाण्यव्यवहारश्चेत्यत आह **कतिपयेति**। अब्रह्मज्ञानिनामित्यर्थः। **कतिपयकालेति**। ब्रह्मज्ञानात्प्रागित्यर्थः।

**श्रीनिधि०— मायोपाधिकं अविद्योपाधिकं चेति**। स्वाश्रयातिरिक्तसकलपुरुषव्यामोहिका माया। तत्तत्पुरुषव्यामोहिका अविद्येति ज्ञेयम्। **आब्रह्मज्ञानात्** ब्रह्मज्ञानपर्यन्तम्।

**वा०चं०**— तर्हि पारमार्थिकसत्त्वाभावेन जगतो मिथ्यात्वे व्याहतिपरिहारेऽपि मिथ्यात्वाविशेषाच्छुक्तिरजतादिवत्प्रमाणादेरपि साधकत्वं न स्यादन्यथा तस्याप्यर्थक्रियाकारित्वं स्यादित्यतस्तत्राप्यवान्तरविशेषः सत्तात्रैविध्यं वदतोऽभिप्रेत इत्याशयेनाह **अमुख्यं पुनरिति**। मायाऽविद्याभेदमाश्रित्य वैकस्या एव मूलप्रकृतेरावरणविक्षेपशक्तिविशेषाभिप्रायेण वाऽयं विभागः। तत्राम्बरादेर्हानादिव्यवहारनिष्पादककतिपयप्रतिपत्तृकतिपयकालतथात्वावगमप्रयोजकाब्रह्मज्ञानबाधवैधुर्योपपादनाय ब्रह्माश्रितमायोपाधिकत्वोक्तिः। शुक्तिरजतादेश्च हानादिव्यवहाराभावप्रयोजकप्रतीतिसमयमात्रपरिवर्तित्वोपपादनाय प्रातिस्विकतत्तज्जीवाश्रिताविद्योपाधिकत्वोक्तिः।





प्रातिस्विकपुरुषप्रतीतिमात्रसिद्धतया दुःखादेराविद्यकत्वस्य परेणोक्तावपि ब्रह्मान्यज्ञानबाधवैधुर्येण तस्याविद्याव - त्वविवक्षया रजतादेरेव तथात्वेनात्रोपादानमिति द्रष्टव्यम् । नन्वाब्रह्मज्ञानाद्बाधवैधुर्यस्य कथं हानादिव्यवहार- प्रयोजकत्वमित्यतो बहुयत्नसाध्यबाधकीभूतब्रह्मज्ञानस्य कालान्तरीयत्वेन तदभावदशायां बहुपुरुषाणां बहुकालमर्थ- तथात्वज्ञानसंभवात्तस्यैव च व्यवहारप्रयोजकत्वान्नानुपपत्तिरित्याशयेनाह **कतिपयेति** । प्रतीयते सप्रपञ्चं जन्यत इत्यर्थः ।

**वा०र०**— ननु मायोपाधिकमविद्योपाधिकं चेति विभागो न युक्तः । मायाविद्याभेदस्यैव दुर्निरूपत्वादित्यत आह **मायाविद्याऽभेदमिति** । अर्थक्रियासमर्थप्रपञ्चारोपहेतुर्माया । विभ्रममात्रहेतुरविद्येति भेदमित्यर्थः । मायाविद्यावैलक्षण्यादित्याद्युत्तरमूलव्याख्यावसरे टीकायां 'न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत' इति विद्यैव त्वित्यधिकरणीयानुव्याख्यानव्याख्याने मायाविद्यावैलक्षण्यनिरासस्य वक्ष्यमाणत्वोक्तिरनयोर्भेदोऽप्युत्तरमूले स्पष्ट इति ज्ञेयम् । **मूलप्रकृतेरिति** । एतच्च ................ स्पष्टम् ........... । **निष्पादककतिपयेति** । हानादिव्यवहारनिष्पादकः कतिपयप्रतिपत्तॄणां कतिपयकाले यस्तथात्वेन सत्त्वेनावगमस्तत्प्रयोजकेति योजना । **प्रयोजकाब्रह्मज्ञानेति** । प्रयोजकत्वं वैधुर्यविशेषणम् । प्रयोजकप्रतीतीत्यत्र प्रयोजकत्वं परिवर्तित्वविशेषणम् । दुःखादेराविद्यकत्वकोव्याश्रयतया परग्रन्थेष्वभिधानात् द्वितीयं दुःखादीति निदर्शनीयम् । तत्कथं शुक्तिरजतादी- त्युदाहृतमित्यत आह **प्रातिस्विकपुरुषेति** । **ब्रह्मान्येति** । अत्र च ब्रह्मान्यज्ञानबाध्यत्वमेव प्रयोजकीकृत्य आविद्यकत्वं विवक्ष्यते । तच्च रजतादावेव न दुःखादाविति तत्प्रयुक्ताविद्यकत्वविशेषोऽपि शुक्तिरजतादावेवेति तस्यैवोदाहरणं युक्तमिति भावः । सप्रपञ्चो जन्यत इति खण्डनटीकायां व्याख्यातम् । तत्र प्रपञ्चसहितः विस्तारसहित उत्पद्यते इत्यनेन विस्तारव्यवहारयोः समप्राधान्येनोत्पत्तिरिति प्रतीयतेऽतः विस्तारस्योत्पत्त्युत्तरकालीनतां दर्शयितुमाह **सप्रपञ्चमिति** । क्रियाविशेषणत्वाश्रयणेन तु सप्रपञ्चो व्यवहारो यथा स्यात्तथा व्यवहारो जन्यत इति प्रतिपादने व्यवहार उत्पन्नः सन्विस्तीर्णो भवतीति लभ्यत इति भावः ।

**स०व्र०**— आपणस्थरूप्यस्य शुक्तिरूप्यस्य चामुख्यत्वाविशेषेऽर्थक्रियाकारित्वतदभावव्यवस्था न स्यादित्यतस्तत्रापि भेदमाह **अमुख्यमिति** ।

**विट्ठ०**— ननु वस्तुतो असत्यस्य ब्रह्मज्ञानेतराबाध्यत्वमात्रेण कथं व्यवहारनिर्वाहकत्वं स्वयमसतः अकिञ्चित्करत्वादित्यत आह **कतिपयेति** । दीर्घकालसत्त्वावगमविषयत्वमेवाम्बरादावमुख्यं सत्त्वं विवक्षितं लौकिकहानादिव्यवहारोऽपि तत्प्रकारसत्तावानेव अतो व्यवहारनिर्वाहकत्वोक्तिरुपपद्यते वस्तुतो विलम्बेनापि बाध्यत्वात् असत्वं चोपपद्यते इति भावः ।

**चषक**:— **आद्यं** मायोपाधिकम् । **द्वितीयम्** अविद्योपाधिकम् ।

**गूढ०**— ननु अमुख्यसत्त्वस्य ब्रह्मेतरस्मिन् सर्वत्राङ्गीकारे आपणस्थरूप्यस्य शुक्तिरूप्यस्य च विशेषाभावादापणस्थेन कटकाद्यर्थक्रियावच्छुक्तिरूप्येणाप्यर्थक्रिया स्यादित्यतो अमुख्यसत्त्वस्यापि द्वैविध्यमाह





**अमुख्यमिति** । तस्य व्यावहारिकत्वं कुतः प्रातीतिकत्वमेव किं न स्यादत्राह **तच्चेति** । सत्त्वं व्यवहाराङ्गमङ्गीकृतं चेन्मुख्यव्यतिक्रमे कारणाभावादर्थसत्त्वमेवाङ्गीक्रियतामिति चेन्न । लौकिकव्यवहारस्यापि प्रातीतिकसत्त्व-मूलत्वादित्याह **कतिपयेति** । स प्रतीयत स प्रपञ्चो जन्यत इत्यर्थः । अन्यथा तदुच्छेदप्रसङ्गादिति हेतुर्द्रष्टव्यः । कतिपयप्रतिपत्तॄणां कतिपयकाले तथात्वेन व्यवहारनिर्वाहकत्वेनावगमस्तस्मादित्यर्थः ।

**प्रदीपः**— सत्त्वं व्यवहाराङ्गमङ्गीकृतं चेन्मुख्यव्यतिक्रमे कारणाभावादर्थसत्त्वमेवाङ्गीक्रियतामिति चेन्न । लौकिकव्यवहारस्य प्रातीतिकसत्त्वमूलत्वादित्याह **कतिपयेति** । प्रतीयते सप्रपञ्चं जन्यत इत्यर्थः । अन्यथा तदुच्छेद-प्रसङ्गादिति हेतुर्द्रष्टव्यः ।

**२८२ सु०— तदेवं सत्त्रैविध्यादम्बरादिकं विश्वं सदपि पारमार्थिकत्वाभावान्मिथ्येति युज्यते । व्यावहारिकसत्त्वाच्च तदन्तर्गतस्य प्रमाणाऽऽदेः कथाऽङ्गतोपपद्यते । पारमार्थिक-प्रातीतिकव्यावृत्त्यर्थत्वेन व्यावहारिकपदं च संभवतीति ॥**

**वा०चं०**— एवं च सत्त्वासत्त्वपक्षद्वयोक्तस्यापि दूषणस्य परिहारः सिद्ध इत्याशयेनोपसंहरति **तदेवमिति** ।

**गूढ०**— उपसंहरति **तदेवमिति** ।

तत्साधकप्रमाणस्वरूपस्य निर्णेतुमशक्यत्वम्—

**२८३ सु०— अत्रेदं वक्तव्यम् । किं पारमार्थिकसदेव सत् असच्च बाधकभेदेन द्विविधमिति सत्त्रैविध्यम्, उत सत्येवावान्तरभेदेन ।**

**परि०**— **बाधकभेदेनेति** । ब्रह्मज्ञानतदितरबाधकभेदेनेत्यर्थः ।

**गु०दी०**— एवं च "बहूनामनुग्रहो न्याय्य" इति वचनात्सार्वजनीनानुभवसिद्धसकलमतरक्षणाय तत्तदर्थ-गतैवास्तु सत्ता, किमनेन दुराग्रहेणेत्यादिदूषणं शिष्यैरेवोह्यतामिति भावेनाह **अत्रेदं वक्तव्यमिति** ।

**यादु०**— **बाधकभेदेनेति** । ब्रह्मज्ञानतदितरज्ञानलक्षणबाधकभेदेन सत्त्वेन प्रतीयमानमेव द्विविधमित्यर्थः ।

**वा०चं०**— नन्वमुख्यं सदित्युक्तेऽमुख्यः सिंह इत्यादावसिंह इवासदेव भाति । एतादृशे च सत्त्रैविध्ये, सत्त्वाभावे साधकत्वं न स्यादिति प्रसङ्गानिस्तारेण 'सत्त्रैविध्यं चे'त्युत्तरभाष्योक्तदूषणान्तरं न सङ्गतमित्यतोऽमुख्यं सदित्युक्तेऽसदिवाभिधात्वाविशेषेऽपि, रूढियोगयो रूढ्यविशेषेऽपि धेनुवागादौ गवादिशब्दानां मुख्यत्वामुख्यात्ववत्, कयाचिद्विवक्षया सत्येवावान्तरभेदेनापि सत्त्रैविध्यसंभवात्तत्पक्षदूषणस्यावश्यकत्वादमुख्यं सदसदिति पक्षस्य





पूर्वोक्तरीत्या दुष्टत्वात्तदुपपादनप्रकारस्य च स्पष्टत्वाद्भाष्यकारेण तं पक्षमुपेक्ष्यावान्तरभेदपक्ष एव दूषणमुच्यत इत्यभिप्रेत्य पक्षद्वयं विकल्प्याद्यपक्षे पूर्वोक्तदूषणमेवातिदिश्य तदुपपादनप्रकारं चाभिधाय द्वितीयपक्षदूषणत्वेन भाष्यं योजयति **अत्रेदमिति** । यद्यपि कथञ्चित्प्रथमपक्षदूषणत्वेनापि भाष्यं योजयितुं शक्यं तथाऽपि तस्य पूर्वोक्तरीत्या दुष्टत्वाददूषितपक्षदूषणतया भाष्यं योजितमिति द्रष्टव्यम् । ज्ञानमात्रेणेत्यत्र मात्रशब्दसूचितार्थसत्त्वनिषेधं सूचयति **असदिति** । शुक्तिरजतादेः प्रकृतत्त्वेऽपि विरुद्धत्वेनात्यन्तासंभाविततया विषपीयूषदृष्टान्तोक्तिः । ननु न सदिति ज्ञानमात्रस्यार्थक्रियार्हत्वप्रयोजकत्वं येनोक्तदोषः किन्त्वाब्रह्मज्ञानबाधवैधुर्यसहितस्य तस्येति विषादिदृष्टान्त-वैषम्यमित्यतो ब्रह्मज्ञानरूपप्रपञ्चबाधकस्य कालान्तरीयत्वं तात्कालिकबाधोपपन्नविषादिदृष्टान्तवैषम्यमित्युक्तं स्यात् । तच्चाप्रयोजकमित्याह **बाधेति** ।

**वा०२०— इत्युक्ते**ऽसदेव भातीति संबन्धः । तत्र दृष्टान्तः **अमुख्यसिंह इत्यादाविति** । इत्यादा-वसिंहो यथा भाति तथेत्यर्थः । असिंह इत्युपलक्षणम् । अनग्निरित्याद्यपि ज्ञेयम् । आदिपदेनामुख्योऽग्निरित्यादे-रुपादानस्य सिद्धत्वात् । **एतादृशे चेति** । असदवान्तरभेदद्वयसहितैकसद्घटितसत्त्रैविध्य इत्यर्थः । **दूषणान्तर-मिति** । पूर्वदोषोपमर्देन सत्त्रैविध्यशङ्कायामेव दूषणान्तरवचनस्यावश्यकत्वादिति भावः । अमुख्यं सदित्युक्ते यथाऽसद्भातितस्तत्प्रयुक्तं सत्त्रैविध्यमपि सदसदवान्तरभेदयुक्तं प्राप्नोति तथा सत्येवावान्तरभेदेऽपि भातीति तत्प्रयुक्तसत्त्रैविध्यमपि मुख्यामुख्यसन्मात्रकावान्तरभेदयुक्तं प्राप्नोति । तथाच पूर्वसत्त्रैविध्यपक्षदूषणाय भाष्यस्य अनावश्यकत्वेऽपि द्वितीयसत्त्रैविध्यनिरासाय । तदावश्यकमेवेत्याशयेनाह **अमुख्यं सदित्युक्त इत्यादिना** । अत्रामुख्यं सदित्युक्ते कयाचिद्विवक्षया सत्येवावान्तरभेदेनापि सत्त्रैविध्येत्यादिसंबन्धः । सत्येवेत्यतःपरं भासमानेनेति शेषः । अमुख्यं सदित्युक्ते असदिव भासमानेनावान्तरभेदेनेति योजना । असदिवेति तत्र दृष्टान्ताभि-धानम् । ततश्चामुख्यं सदित्युक्ते यथाऽसद्भातितद्वत्कयाचिद्विवक्षया सर्वथा बाधाभावसप्रभेदबाधसद्भावयोर्विवक्षया सत्येव भासमानेनावान्तरभेदेन मुख्यामुख्यभेदो मुख्येऽप्यवान्तरभेदश्चात्रावान्तरभेदः । तेनापि सत्त्रैविध्यसंभवात् । न केवलं प्रागुक्तावान्तरभेदसहितासत्सद्भेदेन सत्त्रैविध्यसंभव इत्यपिपदार्थः । ननु सत्येव कथं कयाचित् विवक्षया मुख्यामुख्यत्वेऽदृष्टत्वादित्यत उक्तमभिधात्वाविशेषेऽपीत्यादि । यथा रूढियोगयोरभिधात्वाविशेषेऽपि रूढेर्मुख्यत्वं योगस्य त्वमुख्यत्वम् । योगाद्रूढेर्बलीयस्त्वं वदद्भिस्तथाङ्गीकारात् । यथा वा गवादिशब्दानां धेनुवागादौ रूढ्या विशेषेऽपि धेन्वामेव गोशब्दस्य मुख्यत्वं वागादावमुख्यत्वं गोशब्दाज्झडिति धेनुसंप्रत्ययादियुक्तिमद्भिस्तथोच्य-मानत्वात् तथेत्यर्थः । एवं चात्र रूढियोगादौ मुख्यत्वामुख्यत्वभेदवदिति प्रकृतावान्तरभेदभानोपपादनमिति सुधीभिराकलनीयम् । यदेवं सत्त्रैविध्यान्तरमप्यमुख्यं सदित्युक्त्या प्रतीयमानसत्येवावान्तरभेदेनापि प्राप्तं तदा तन्निरासायोत्तरभाष्यं सार्थकमेवेत्याह **तत्पक्षेति** । सत्येवावान्तरभेदपक्षेत्यर्थः । तत्प्रयुक्तसत्त्रैविध्यदूषणस्येति फलति । ननु तर्हि प्रागुक्तसदसदवान्तरभेदप्रयुक्तसत्त्रैविध्यनिरासालाभः । न चासतः साधकत्वायोगस्य प्रागभिधानात्तद्रीत्यैव तन्निराससिद्धिरिति वाच्यम् । सत्त्वेन ज्ञानरूपाधिकोपायशङ्कनेन तन्निरासस्यात्रोपपादना संभवात्तथाच भाष्ये न्यूनतेत्याशङ्कायामाह **अमुख्यं सदसदिति पक्षस्येति । यद्यपि कथञ्चिदिति** ।





सत्येवावान्तरभेदेन सत्त्रैविध्यं केन मानेन सिध्येदित्यादिरूपेण द्वितीयपक्षदूषणपरत्वेनेव सावान्तरभेदासत्सद्रूपसत्त्रैविध्यमपि केन मानेनेत्यादि योजनायाः शङ्क्यत्वादित्यर्थः । कथञ्चित्पदं तु तथात्वे आवृत्त्याश्रयणं भवतीति भावेन सूचितार्थसत्त्वेति पाठः । **प्रकृतत्त्वेऽपीति** । द्वितीयं शुक्तिरजतादीति तस्य प्रकृतत्त्वेऽपीत्यर्थः । ततश्च शुक्ती रजतत्वेन ज्ञानमात्रेण रजतोचितार्थक्रियां न कुर्यादित्येव वाच्यमित्याशयः । **विरुद्धत्वेनेति** । विषपीयूषदृष्टान्तोक्तिरित्यसंभावितत्वनिमित्तेन । तत्र हेतुः **विरुद्धत्वेनेति** । शुक्तिरजतयोः परस्परविरुद्धस्वभावत्वाभावे विषपीयूषयोस्तु तमःप्रकाशयोरिव मारकत्वजीवकत्वरूपपरस्परं विरुद्धस्वभावता । अतो विषस्य पीयूषतया ज्ञाने सत्यपि पीयूषोऽन्वितार्थक्रियाकारित्वमत्यन्तासंभावितमिति विशेषसद्भावाद्विषपीयूषदृष्टान्तोक्तिरित्यर्थः । **अर्थक्रियार्हत्वप्रयोजकत्वमिति** । ब्रूम इति शेषः । उक्तदोषः । विषस्यापि पीयूषतयाऽवगतस्य पीयूषोचितार्थक्रियार्हत्वापत्तेरिति दोष इत्यर्थः । **विषादिदृष्टान्तेति** । विषविषयकपीयूषत्वावगमस्याब्रह्मज्ञानबाध्यतया तद्बाधसहितमेव विषस्य पीयूषतया ज्ञानं भवतीति ब्रह्मज्ञानबाध्यप्रमाणादिगोचरसदिति ज्ञानस्य तद्वैषम्यमित्यर्थः । इत्यत इत्यनन्तरं तावता ब्रह्मज्ञानेति पाठः । तावतेति वा शेषः । **ब्रह्मज्ञानरूपेति** । अब्रह्मज्ञानबाधवैधुर्यसहितस्येति विशिंषता हि प्रमाणादौ सदिति ज्ञानस्य बाधस्त्वङ्गीकृत एव । परन्तु जगद्विषये स कालान्तरभावी विषे तु तात्कालिक इत्येव वैषम्यमुक्तं भवतीत्यर्थः । प्रमाणादीनामेव प्रकृतत्त्वेऽपि प्रपञ्चबाधकस्येति प्रपञ्चग्रहणं प्रपञ्चान्तभविनैव प्रमाणादिसत्त्वासत्त्वयोः प्राप्त्याशयेन । **विषादीति** । विषपीयूषदृष्टान्तेत्यर्थः । दृष्टान्तपदमतिप्रसङ्गोदाहरणपरम् । एवं पूर्वत्रापि सूत्रन्यायातिप्रसङ्गादीनामुदाहरणप्रत्युदाहरणयोर्दृष्टान्तत्वाभावात् । अथवा तथात्वे विषमपीति प्रसङ्गस्य विपर्ययपर्यवसाने कार्ये विषपीयूषतयाऽवगतमर्थक्रियां न करोत्यतस्तद्वदेव प्रमाणादिकमपि सत्त्वेनावगतमात्रं न सदुचितार्थक्रियां करोतीति प्राप्त्या दृष्टान्तत्वमिति भावेन तथोक्तिरिति ज्ञेयम् ।

**विठ्ठ०— बाधकभेदेनेति** । ब्रह्मज्ञानतदितरज्ञानरूपबाधकभेदेनेत्यर्थः ।

**चषक :— बाधकभेदेन** चरमान्तःकरणवृत्तितदितररूपबाधकभेदेन ।

**गूढ०—** ननु सतोऽवान्तरभेदेन त्रैविध्यपरेणानुक्तत्वात्सत्त्रैविध्यं चेत्यत्र तद्दूषणमयुक्तमित्यतो विकल्पमुखेन दूषणं सङ्गमयितुमाह **अत्रेदमिति** । ननु सत्त्रैविध्यं चेत्यत्र सत्त्वे वावान्तरभेदेन सत्त्रैविध्यं दूष्यते । तद्युक्तम् । परोक्तसत्त्रैविध्यानिराकरणात् । परोक्तदूषणस्यैव सङ्गतत्वेन तदनुक्तदूषणस्यासङ्गतत्वादित्यतो विकल्पमुखेन सङ्गमयति **अत्रेदमिति** । आद्यकल्पदूषणस्य स्फुटत्वात् द्वितीयकल्पोत्तरत्वेन मूलं योजितमिति भावः । बाधकभेदेन निष्प्रकारब्रह्मज्ञानसप्रकारकास्मदादिज्ञानरूपबाधकभेदेन ।

**२८४ सु०— आद्ये प्रागुक्तदोषानिस्तारः । न हि सदिति ज्ञानमात्रेणासदर्थक्रियार्हम् । येन तथाविधं प्रमाणादि कथाङ्गतां गच्छेत् । तथात्वे विषमपि पीयूषतयाऽवगतं तदर्थक्रियां कुर्यात् । बाधविलम्बस्त्वप्रयोजकः । अर्थतादवस्थ्यानिवृत्तेः । एवं ज्ञानसत्यताऽपि ।**





**शुक्तिरजतादेरपि रजतोचितार्थक्रियाकारित्वप्रसङ्गात् । यदपि 'तथैव लौकिको व्यवहारः प्रतीयत' इति, तदग्रे निराकरिष्यते । 'अर्थक्रियाऽप्यसती'ति चेतरेतराश्रयादिना निरस्तम् । सतोऽर्थक्रियाऽसंभवादसत्येव कथञ्चित् सा अङ्गीकार्येति चेत् । श्रुतिप्रामाण्यनिश्चयोत्तर-कालमेवैतत् । प्राक्तन्निश्चयात्परमार्थसत एवार्थक्रियेति मन्यमानः प्रतिवादी कथं बोधनीयः । अन्योन्याश्रयादिप्रसङ्गादित्युक्तम् ।**

**परि०— एवं ज्ञानसत्यताऽपीति** । असत्त्वावान्तरभेदश्चेदुक्तदोषेण दुष्टेत्यर्थः । सदितिज्ञानमात्रेणार्थक्रियाहेतुत्वे दोषान्तरमाह **शुक्तिरजतादेरिति** । **अग्रे निराकरिष्यत इति** । 'अतत्त्वावेदकत्वं चेदप्रामाण्यं सतां मतम् । दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमा । रज्जुसर्पादि-विज्ञानादप्याधिक्यादमानते'त्यादिना चतुर्थस्य द्वितीयपाद इति भावः । **निरस्तमिति** । 'कुतः प्रमाणात् कथाऽऽदिसत्त्वाभावो भवता निश्चितः । श्रुत्यादेरिति चेदित्या'दिना निरस्तप्रायमित्यर्थः । **सेति** । अर्थक्रिया । **श्रुतिप्रामाण्येति** । नेहनानेति सर्वासत्त्वावबोधकश्रुतिप्रामाण्येत्यर्थः । **इत्युक्तमिति** । 'कुतः प्रमाणात्कथादीत्या'दिग्रन्थ एवेति भावः ।

**यादु०— अग्रे निराकरिष्यत इति** । 'दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमे'त्यादिना चतुर्थे निराकरिष्यत इत्यर्थः ।

**वं०प०— तथात्वेति** । अब्रह्मज्ञानाद्बाध्यत्ववैधुर्येण बाधविलम्बेनेति यावत् । हानादिव्यवहारनिर्वाहकत्वेन प्रामाण्यव्यवहारः प्रतीयते । तथा च ब्रह्मज्ञानबाध्यविषयकत्वेन प्रत्यक्षादेरतत्त्वावेदकं प्रामाण्यमिति भावः । **आद्ये प्रागुक्तेति** । व्यावहारिकसत्त्वमसत्प्रभेद एवेत्यङ्गीकृतं चेत्तर्हि कथाऽङ्गभूतप्रमाणादीनां व्यावहारिकसत्त्वाङ्गीकारेऽपि असत्त्वस्यैव प्राप्त्या साधकत्वं न स्यादिति प्रागुक्तदोषानिस्तार इत्यर्थः । ननु व्यावहारिकसत्त्वमसत्प्रभेद एव । न चोक्तदोषः । प्रमाणादिकं सदिति ज्ञानमात्रेण कथाङ्गत्वोपपत्त्या साधकत्वोपपत्तिरित्यत आह **न हीति** । **पीयूषतयेति** । 'पीयूषममृतं सुधेत्य'भिधानात् । तदर्थक्रियां जीवनरूपम् । व्यावहारिकसत्त्वस्यासत्प्रभेदत्वेऽपि ब्रह्मज्ञानबाध्यत्वेन बाधविलम्बसद्भावाद्व्यावहारिकसतां प्रमाणादीनां साधकत्वमित्यत आह **बाध्येति** । **अर्थेति** । बाधविलम्बेऽपि प्रमाणादीनामर्थानामसत्त्वरूपत्वं तावन्न निवर्तते । तथा च साधकत्वं न संभवतीति भावः । प्रमाणादीनामसत्प्रभेदरूपव्यावहारिकसत्त्वेऽपि साधकत्वं प्रमाणादिप्रतीतेः पारमार्थिकत्वादित्युक्तत्वादिति चेत्तत्राह **एवमिति** । सत्यता अप्रयोजिकेति लिङ्गविपरिणामेनानुवर्तते **शुक्तीति** । एतावन्तं कालं रजतज्ञानमासीदित्यनुभवेन शुक्तिरजतज्ञानस्वरूपस्यापि सत्यत्वादिति भावः । **तथैवेति** । बाधविलम्बप्रयुक्तो लौकिको हानादिनिर्वाहत्वव्यवहारः प्रामाण्यव्यवहारश्च भवति ब्रह्मज्ञानबाध्यविषयकत्वेनातत्त्वावेदकप्रामाण्यव्यवहारश्च प्रतीयत इति यदुक्तं तदित्यर्थः ।





प्रमाणादीनामसत्प्रभेदरूपव्यावहारिकसत्ताङ्गीकारे साधकत्वानुपपत्तिरसतोऽर्थक्रियाकारित्वाभावादित्युक्तमयुक्तम् । स्यादिदम् यद्यर्थक्रिया सती स्यात् । न चैवम् । अर्थक्रियाया अप्यसत्त्वाङ्गीकारादित्यत आह **अर्थक्रियाऽपीति** । **निरस्तमिति** । नेहनानेति श्रुतिप्रामाण्यसिद्धौ सर्वासत्त्वसिध्या तदन्तर्गतार्थक्रियाया अप्यसत्त्वसिद्धिस्तत्सिद्धौ प्रत्यक्षादिप्रमाणविरोधाभावेन श्रुतिप्रामाण्यसिद्धिरित्यन्योन्याश्रयचक्रकादिर्ना निरस्तमित्यर्थः । सतः परमार्थसतो ब्रह्मणः । अर्थक्रिया तत्कारित्वम् । निष्क्रियत्वं 'निष्क्रियं निष्कलमि'त्यादिश्रुतेरिति भावः । असति व्यावहारिके प्रत्यक्षादौ । साऽर्थक्रिया । तत्कारित्वमित्यर्थः । परिशेषादिति भावः । एवं च कथाऽङ्गभूतप्रमाणादेः सत्यत्वाभावेऽपि साधकत्वं युक्तमिति हृदयम् । **श्रुतीति** । नेहनानेति श्रुतेः सर्वासत्त्वरूपार्थे प्रामाण्यनिश्चयेत्यर्थः । **एवं तदिति** । सतोऽर्थक्रियाऽसंभवादित्युक्तपरिशेषकरणमित्यर्थः । **प्रागिति** । सर्वासत्त्वरूपार्थे नेह नानेति श्रुतेः प्रामाण्यनिश्चयात्प्रागित्यर्थः । **अन्योन्याश्रयेति** । श्रुतिप्रामाण्यनिश्चये परमार्थसतोऽर्थक्रियाकारित्वासिध्या कथाङ्गभूतप्रमाणादेरसतोऽपि साधकत्वसिद्धिस्तत्सिद्धावसत्त्वे साधकत्वं न स्यादिति तर्कस्याभासत्वसिध्या तद्विरोधाभावेन श्रुतिप्रामाण्यनिश्चय इत्यन्योन्याश्रय इत्यर्थः ।

**कं०रा०— एवमिति** । ज्ञानसत्यताऽपि तद्विषयस्यार्थक्रियाकारितायामप्रयोजिका शुक्तिरजतादेरपि स्वोचितार्थक्रियाकारित्वप्रसङ्गादित्यर्थः । **इतरेतराश्रयेति** । अर्थक्रियाया असत्त्वसिद्धौ प्रपञ्चस्यासत्त्वेऽर्थक्रियाकारित्वं न स्यादिति तर्कस्यान्यथासिद्धत्वेनाभासतया तद्विरोधाभावात् श्रुतेः प्रामाण्यसिद्धिः । तत्सिद्धौ चार्थक्रियाया असत्त्वसिद्धिरितीतरेतराश्रयेणादिशब्दोपात्तचक्रकेण च निरस्तमित्यर्थः । चक्रकमुक्तरीत्योपपादितप्रायम् ।

**श्रीनिधि०— प्रागुक्तदोषेति** । असतः साधकत्वाभावलक्षणदोषेत्यर्थः । घटादिसत्त्वज्ञानस्य सत्यत्वेन तस्मादेवार्थक्रियेत्यत आह **एवं ज्ञानस्य सत्यतापीति** । नार्थक्रिया योगिनीत्यर्थः । कुत इत्यत आह **शुक्तिरजतादेरिति** । सत्यज्ञानविषयत्वादर्थक्रियेत्यतो वाह **एवमिति** । अप्रयोजिकेत्यर्थः । उत्तरवाक्यं पूर्ववदेव सङ्गतमिति केचित् । अग्रे निराकरिष्यत इति दीर्घभ्रान्तिकरी चेत्यादिनेति भावः । परमार्थसतो ब्रह्मणः निर्विशेषत्वेनार्थक्रियाया असंभवात् संभिन्ने मिथ्याभूते साङ्गीकार्येति शङ्कते **सत इति** ।

**वा०चं०—** सर्वथा बाधवैधुर्येऽर्थस्यासत्त्वासंभवेऽपि कालान्तरीयबाधाङ्गीकारेऽसत्त्वानिवृत्त्याऽर्थक्रियानुपपत्तिस्तदवस्थैवेत्याह **अर्थेति** । नन्वर्थस्यासत्त्वेऽपि तत्सत्ताया अर्थक्रियां प्रत्यप्रयोजकत्वाज्ज्ञानसत्ताया एव च प्रयोजकत्वात्तस्याश्चोपपादितत्त्वान्नार्थक्रियाऽनुपपत्तिरित्यतो बाधविलम्बपक्षोक्तमप्रयोजकत्वं ज्ञानसत्यत्वपक्षेऽप्यतिदिशति **एवमिति** । **शुक्तिरजतादेरिति** । न हि तस्या बाधोऽस्तीत्युक्तोपपादकस्य तत्प्रतीतावपि साम्यादिति भावः । ननु बाधविलम्बस्य नाप्रयोजकत्वम् । व्यवहारान्यथाऽनुपपत्त्या तत्प्रयोजकत्वस्य सिद्धेरित्याशयेन परेण यदुक्तं तथैवेत्यादि तदाशङ्क्य निषेधति **यदपीति** । अर्थसाध्यव्यवहारस्यार्थगतपारमार्थिकसत्त्वेनेव ज्ञानसाध्यस्य च ज्ञानपारमार्थिकसत्त्वेनैवान्यथासिद्ध्याऽन्यथोपपत्तेर्वक्ष्यमाणत्वादित्यर्थः । यद्वा त्रैकालिकाबाध्यत्वनिश्चयादेव व्यवहारस्य 'ऊरीकृत्य च तान्सर्वान्' इत्यादिना वक्ष्यमाणत्वादिति भावः । इतरेतराश्रयत्वादिनेत्यत्रादिशब्देन





चक्रकं गृह्यते । ननु ब्रह्मणोऽर्थक्रियाङ्गीकारे क्रियाऽऽवेशेन विकारित्वापत्त्या निर्विकारश्रुतिविरोधेनासंभवाज्जगतश्च नेहनानेतिश्रुतिबलेन मिथ्यात्वादर्थक्रियायाश्च प्रतीतिसिद्धत्वाज्ज्ञानसत्यत्वब्रह्मज्ञानमात्रबाध्यत्वयोस्तत्प्रयोजक-त्वाङ्गीकारेणार्थक्रियाया अप्यसत्त्वाङ्गीकारेण वा तत्र प्राप्तदूषणानि कथञ्चित्परिहृत्यासत्येव सा स्वीकर्तव्येति शङ्कते **सत इति** ।

**वा०र०— असत्त्वानिवृत्त्येत्यादि** । अनेनार्थस्य यत्तादवस्थ्यमसत्त्वं तस्यानिवृत्तेः । तथा सत्त्वादेवार्थक्रियाकारितानुपपत्तिरेवात्रार्थतादवस्थ्यं तस्या अनिवृत्तेस्तदवस्थत्वादित्येवमावृत्त्याश्रयणेन व्याख्यातं भवतीति ज्ञेयम् । **अर्थस्यासत्त्वेऽपीति** । नार्थक्रियानुपपत्तिरित्युत्तरेण संबन्धः । तत्कथमित्यत उक्तं **तत्सत्ताया इत्यादि** । **उपपादितत्वादिति** । अर्थसत्त्वाभावेऽपि ज्ञानस्य ब्रह्मरूपत्वाश्रयणेनोपपादितत्वादित्यर्थः । **पक्षोक्तमप्रयोजकत्वमिति** । अनेनैवमित्यस्याप्रयोजिकेत्यर्थः । ज्ञानसत्यताप्येवं अप्रयोजिका । न केवलं बाध-विलम्ब इत्यपेरर्थ इति योजना सूचिता भवति । **इत्युक्तोपपादकस्येति** । इति जगत्सत्ताप्रतीतावुक्तोपपादक-स्येत्यर्थः । **तत्प्रतीतावपि** शुक्तिरजतादिप्रतीतावपीत्यर्थः । **तत्प्रयोजकत्वस्य सिद्धेरिति** । बहुयत्नसाध्य-बाधकीभूतब्रह्मज्ञानस्येत्युक्तरीत्या सिद्धेरित्यर्थः । **तथैवेत्यादीति** । अत्र मूलानुसारेण तथैवेत्येवानुवादः कृतः । तथैवेत्यस्य कतिपयप्रतिपत्तृककतिपयकालतथात्वावगमादेव हीत्यर्थः । **अन्यथोपपत्तेरिति** । अनेनाग्र इत्यस्य ............चेत्युक्तं भवति । विनोदस्थमवलोक्य । **वक्ष्यमाणत्वादित्यर्थ इति** । अत्रार्थ इत्यस्याभिप्रेतोऽर्थ इत्यर्थः । अत एवोत्तरयोजनायां भाव इति प्रयुक्तं **वक्ष्यमाणत्वादिति** । पृथगधिकरण इति शेषः । **अर्थक्रियाऽप्यसतीति चेति** मूलम् । अत्र च ननु कथादेः कार्यस्य सत्त्वे कथञ्चित्कारणस्येत्यादिशङ्कोत्तरभूतकुतः प्रमाणात्कथादिसत्त्वाभावो भवता निश्चितः श्रुत्यादेरिति चेत् । इति पूर्वखण्डनमतनिरासान्त्यमूलानुसारेणार्थक्रियाया असत्त्वं कुतः प्रमाणात् । श्रुत्यादेरिति चेत् । तस्यैवानेकान्तप्रसङ्गगहननिविष्टत्वात् । तथाच सिद्धे श्रुत्यादिप्रामाण्ये अर्थक्रियाया असत्त्वसिद्धिः तस्मिंश्च सिद्धे असत्त्वेऽर्थक्रियाकारित्वं न स्यादित्यादितर्कस्यान्यथासिध्या आभासत्त्वेन बाधकत्वायोगाच्छ्रुत्यादि-प्रामाण्यसिद्धिरितीतरेतराश्रयत्वम् । यदि च श्रुत्यादिना प्रामाण्ये सिद्धे अर्थक्रियाया असत्त्वसिद्धिः तत्सिद्धौ च तर्काभासत्वसिद्धिस्तत्सिद्धौ वक्तेत्यादिप्रामाण्यसिद्धिरिति व्यक्तित्रयविवक्षा तदा चक्रकमिति सिद्धवत्कृत्वा आदि-पदसङ्ग्राह्यमेवाह **आदिशब्देन चक्रकं गृह्यत इति** । अर्थक्रियासंभवमुपपादयन्नुत्तरभाष्यमवतारयति **ननु ब्रह्मण इति** । विकारित्वापत्त्येत्यनन्तरं विकारित्वस्य चेति शेषः । **निर्विकारेति** । निर्विकारोक्षरः शुद्ध इति श्रुत्येत्यर्थः । **असंभवादिति** । ब्रह्मणोऽर्थक्रियाङ्गीकारस्येति विभक्तिविपरिणामेन वर्तते । सत इवासतोऽपि तदसंभव एव । तत्रापि बाधकसद्भावादित्यत उक्तं मूले **कथञ्चिदिति** । तत्तात्पर्यमाह **जगतश्चेति** । अत्रासत्येव सा स्वीकर्तव्येति प्रतिज्ञाय कथं तत्र दूषणेषु सत्सु तदङ्गीकार इत्यत उक्तं **तत्र प्राप्तदूषणानि कथञ्चिदिति** । तत्रासति तदङ्गीकारे प्राप्तानि यानि दूषणानि तानीत्यर्थः । परिहारप्रकारस्य प्रदर्शनं **नेहनानेत्यादि** । **प्रतीतिसिद्धत्वादिति** । प्रतीतेश्च ब्रह्मरूपत्वस्य प्रागुक्तप्रकारेण सिद्धत्वादित्याशयः । प्राग्विषपीयूषदृष्टान्ते शुक्तिरजतादौ चार्थक्रियाप्रसङ्गोऽभिहितस्तमुद्धर्तुमाह **ज्ञानसत्यत्वेति** । अनयोस्तु विषादिदृष्टान्तादावभावादिति भावः । एतेनार्थक्रियाऽप्यसतीति प्राङ्निराकृतपक्षमपि





स्वीकरोति **अर्थक्रियाया अपीति**। एवं दूषणपरिहारे विषमपि पीयूषतयेत्याद्यतिप्रसङ्गनिर्वृत्तिसिद्धावपि बाधविलम्ब-स्त्वप्रयोजक इत्यादिदूषणमायात्येवेत्यत उक्तं **कथञ्चिदिति**।

**स०व्र०— प्रागुक्तेति**। असत्त्वे साधकत्वं न स्यादिति प्रागुक्तेत्यर्थः। ननु शुक्तिरजतादेः प्रमाणादेश्च असत्त्वाविशेषेऽपि शुक्तिरजतादेस्तात्कालिकबाधविषयत्वेनार्थक्रियानर्हत्वेऽपि प्रमाणादेः कालान्तरीयबाधविषयत्वेन अर्थक्रियाकारित्वं किं न स्यादित्यत आह **बाधविलम्बस्त्विति**। अतिप्रसङ्गादिति भावः। ननु तथापि प्रपञ्चविषयकज्ञानस्य सत्यत्वेन प्रपञ्चस्यार्थक्रियाकारित्वं स्यादित्यत आह **एवमिति**। अप्रयोजिकेति शेषः। अतिप्रसङ्गं चाह **शुक्तिरजतादेरपीति**। **अग्रे निराकरिष्यत इति**। 'दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमे'-त्यादिना चतुर्थस्य द्वितीये।

**विठ्ठ०— प्रागुक्तेति**। 'मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः' इत्युक्तदोषानिस्तार इत्यर्थः। असत्यत्वेऽपि सदिति ज्ञानविषयत्वेन साधकत्वाद्यर्थक्रिया संभवतीत्यत आह **न हीति**। **एवं ज्ञानसत्यतापीति**। ज्ञानसत्यतापि सत्प्रतीतिगोचरतैवेति चेदुक्तदोष एवेत्यर्थः। सदिति प्रतीतिविषयतामात्रेण ज्ञानस्य व्यवहारजनकत्वेति प्रसङ्गमाह **शुक्तीति**। **निराकरिष्यतीति**। दीर्घभ्रान्तिकरी चेत्स्यात् अतत्वावेदकप्रमेत्यत्रेत्यर्थः। **इतरेतराश्रया-दिनेति**। अर्थक्रियायाः असत्त्वे सिद्धे विलम्बबाध्यस्यासतोऽपि व्यवहारनिर्वाहकतासिद्धिः तत्सिद्धावेवोक्त-बाधकाभावात् ब्रह्मातिरिक्तस्य सर्वस्यासत्त्वसिध्या अर्थक्रियायाः असत्त्वसिद्धिः इत्यन्योन्याश्रयः। मध्ये सर्वा-सत्त्वस्य पृथक्करणे चक्रकमिति। कुतः प्रमाणात् कथादिसत्त्वाभावो भवता निश्चित इत्यत्रोक्तरीत्या निरस्तप्राय-मित्यर्थः। **अन्योन्याश्रयप्रसङ्गादिति**। नेहनानेतिश्रुतिप्रामाण्ये निश्चिते चैतन्यातिरिक्तस्य सर्वस्य मिथ्यात्वसिध्या सतश्चैतन्यस्य सर्वधर्मविकलतयार्थक्रियाकारित्वाभावसिद्धिः तत्सिद्धावेव सतोऽर्थक्रियासंभवेन बाधकाभावात् श्रुतिप्रामाण्यसिद्धिः इति अन्योन्याश्रय इति भावः।

**चषक:— बाधविलम्बः** अखण्डार्थनिष्ठवेदान्तवाक्यजन्यनिष्प्रकारकब्रह्मप्रमारूपबाधविलंबः। **अग्रे निराकरिष्यत इति**। 'दीर्घभ्रान्तिकरी चेत्स्या'दित्यादिनेति पूरणीयम्।

**गूढ०— प्रागुक्तदोषेति**। 'असत्त्वे साधकं न स्यादि'ति प्रागुक्तदोषेत्यर्थः। ननु सदिति प्रतीति-मात्रेणार्थक्रियाकारित्वं न स्यादित्यत्राह **न हीति**। तथाविधं असत्। **तथात्व इति**। असतोऽपि सदिति ज्ञानमात्रेण अर्थक्रियार्हत्व इत्यर्थः। ननु बाधविलम्बस्यार्थक्रियाकारित्वप्रयोजकत्वादसतोऽपि प्रमाणादेर्बाधविलम्बेनार्थ-क्रियाकारित्वं स्यादित्यत आह **बाधेति**। तत्र हेतुमाह **अथेति**। बाधविलम्बेऽपि अर्थस्यासत्त्वनिवृत्तेरभावादित्यर्थः। नन्वस्तु विषयस्यासत्त्वं तथापि ज्ञानसत्यताया अर्थक्रियाकारित्वप्रयोजकत्वाद्यविषयं ज्ञानं सत्यं तस्यार्थक्रियाकारित्वं स्यादेवेत्यत आह **एवं ज्ञानसत्यतापीति**। अर्थक्रियायां न प्रयोजिकेति शेषः। तत्र हेतुः **शुक्तिकेति**। तत्रापि ज्ञानसत्यत्वादिति भावः। अन्यथा भ्रान्त्युपाधित्वस्य शुक्तिरजतज्ञानं मम न वृत्तमिति व्यवहारः स्यादिति भावः।

**तथैवेति** । कतिपयप्रतिपत्तॄणां कतिपयकाले व्यवहारनिर्वाहकत्वावगमादेव । नन्वर्थक्रियाया असत्त्वाकारिप्रपञ्चस्यापि असत्त्वमेवेत्यत आह **अर्थक्रियापीति** । **इतरेतराश्रयत्वादिनेति** । सिद्धे अर्थक्रियाया असत्त्वे अन्यथासिद्ध्या तर्कस्याभासत्त्वसिद्धिस्तस्यां च सत्यां श्रुतिप्रामाण्येन तस्या सत्त्वसिद्धिरित्यर्थः । शङ्कते **सत इति** । कुतो न प्रतिबोधयितुं शक्य इत्यत आह **अन्योन्येति** । ननु सत्त्रैविध्यमिति मूले केनेत्यस्य सत्त्रैविध्यं केन मानेन सिद्ध्येन्न केनापीति आक्षेपार्थं प्रतीयते । तदयुक्तम् ।

**प्रदीपः**— ननु असतोऽपि सदित्यवभासविषयत्वात्तदर्थक्रियाकारित्वं स्यादित्यत आह **न हीति** । न चोत्तरक्षणकालान्तरबाधप्रयुक्तो विशेषः बाध्यत्वसाम्यादित्याह **बाधेति** । ज्ञानसत्यताप्यप्रयोजकाप्रातिभासिकेऽपि साक्षिणः सत्त्वाद्विशेषभावप्रसङ्गादित्याह **एवमिति** । अर्थक्रियापि पारमार्थिकत्वे भवति नान्यथेत्याह **यदपीति** । नन्वर्थक्रियाया अप्यसद्रूपत्वान्न तस्यार्थसत्त्वमाक्षिप्यत इत्यत आह **अर्थेति** । अर्थस्य सत्त्वसिद्धौ व्यवहारसत्त्वसिद्धिः व्यवहारसत्त्वसिद्धावर्थसिद्धिरित्यादिसाक्षिणीति सदसद्विलक्षणत्वरहितस्य साधकत्वमुभयसंमतमित्याशयः ।

**२८९ सु०— द्वितीयं दूषयति सत्त्रैविध्यं चेति ।**

## अनु०— सत्त्रैविध्यं च मानेन सिद्ध्येत्केनेति पृच्छ्यते ॥

**केन इत्यस्य परमार्थसता वा व्यावहारिकसता वा प्रातिभासिकसता वा । आद्येऽपि किमात्मेतरेण उत आत्मनेत्यर्थः । पृच्छ्यते अस्माभिरिति शेषः । यथा मिथ्याभूतस्य साधकत्वं केन सिद्ध्येदिति पृष्टं तथेति चार्थः । व्यावहारिकसतः साधकत्वसिद्धये यदुपन्यस्तं तच्चेति वा ॥**

**परि०**— उत सत्येवावान्तरभेदेन सत्त्रैविध्यमितिकल्पदूषकतयाऽवतारयति **द्वितीयमिति** । अनुक्तसमुच्चयार्थत्वमुपेत्याह **यदुपन्यस्तं तच्चेति वेति** । अब्रह्मज्ञानाबाधितत्वं कतिपयप्रतिपत्तृ-कतिपयकाले तथाऽवगतत्वं चेत्यर्थः ।

**वं०प०**— **द्वितीयमिति** । सत्येवावान्तरभेद इति द्वितीयं पक्षमित्यर्थः । **तच्चेति वेति** । तथा च प्रकृतत्वानुसन्धानार्थश्चशब्द इति भावः ।

**श्रीनिधि०**— व्यावहारिकसत इतिवत् प्रमाणमुपन्यस्यते **तच्चेति** । चशब्दोऽनुक्तसमुच्चयार्थः न तूक्तमत्र समुच्चीयत इति ज्ञेयम् ।





**वा०चं०**— अत्र केनेत्यस्य प्रत्यक्षादिपरत्वे पूर्वं प्रत्यक्षाद्यनिरासात्तस्यापीत्युत्तरदूषणासङ्गतिः । सता मिथ्याभूतेन वेति पूर्वोक्तप्रकारपरत्वे मिथ्याभूतस्य साधकत्वासंभवेऽपि सत्येवावान्तरभेदेन सत्त्रैविध्यमङ्गीकृत्य तादृशसतः साधकत्वमुच्यत इति ब्रुवाणं प्रति मिथ्याभूतेनेत्यस्या विकल्पकोटेरनुपपन्नत्वात्पराभिप्रेतव्यावहारिक-प्रातिभासिकयोर्विकल्पकोटावसङ्ग्रहापत्त्या च साधकतया पराभिप्रेतत्रिविधसतामेव सत्त्रैविध्यसाधकविकल्प-कोटित्वमुचितमित्यभिप्रेत्य केनेत्यस्यार्थमाह **केनेति** । कर्त्रनुक्तेर्योग्यकर्तारमध्याहरति **पृच्छ्यत इति** । नन्वेतादृ-ग्विकल्पानां पूर्वमप्रवृत्ततया समुच्चायकचशब्दानुपपत्तिरित्यतः प्रमाणविकल्पप्रश्नत्वसामान्येन समुच्चय इत्याशयेन समुच्चयविषयं दर्शयति **यथेति** । अत एव पक्षान्तरमाह **व्यावहारिकेति** ।

**वा०र०**— अत्र केनेत्यस्येत्यारभ्य केनेत्यस्यार्थमाहेत्यन्तस्यैवान्वयेन प्रवृत्तत्वात् उत्तरदूषणासङ्गतेरिति पञ्चम्यन्तः पाठः । असङ्गत्यापत्त्येति च तदर्थः । तेन सत्त्रैविध्यसाधकविकल्पकोटित्वमुचितमिति प्रतिज्ञाया हेतुत्वोपपत्तिः । **पूर्वोक्तेति** । तच्च मिथ्याप्रमाणेन सता वेति पूर्वानुव्याख्यानोक्तेत्यर्थः । प्रकारपरत्वे विकल्पकोटे-रनुपपन्नत्वादसङ्ग्रहापत्त्या चेति संबन्धः । असङ्ग्रहापत्त्या चेत्यनन्तरं तदुभयपरत्वपरित्यागेनेति शेषः । अन्यपरत्वे दोषापत्त्येदमेवोचितमित्युक्ते अन्यपरित्यागस्यापि लाभ इति वा । **एतादृगिति** । परमार्थसता वेत्यादिरूपेत्यर्थः । **प्रमाणविकल्पेति** । न तु प्रमाणविशेषविकल्पप्रश्नत्वरूपेणेत्यर्थः । **अत एवेति** । चशब्दोक्तमुख्यसमुच्चयस्यासंभवादेव प्रथमपक्षेऽपरितुष्यन्पक्षान्तरसमुच्चयातिरिक्तनिर्देशरूपं चशब्दस्यार्थान्तरमाहेत्यर्थः ।

**विठ्ठ०**— आब्रह्मज्ञानबाध्यत्वादिकं यदुपन्यस्तं चेत्यनुक्तसमुच्चयार्थको वा चशब्द इत्याह **यदुप-न्यस्तमिति** ।

**चषकः**— **द्वितीयमिति** । सत्येवावान्तरभेदेनेति द्वितीयकल्पमित्यर्थः ।

**गूढ०**— तथा सति पृच्छत इत्यस्यायोगादित्यतो व्याचष्टे **केनेत्यस्येति** । केनेत्यस्य इत्यर्थ इत्यन्वयः । न च केनेत्येतावन्मात्रेण कथमेतावानर्थो लब्ध इति वाच्यम् । अस्य सर्वनामत्वात् सर्वनामश्च बुद्धिस्थवाचकत्वादिति भावः । पृच्छ्यते इत्यत्र परेणेति प्रतीयते तदयुक्तम् । परस्य तत्साधनत्वेन दूषणार्थकप्रश्नायोगादित्यत आह **पृच्छ्यत इति** । समुच्चेतव्याभावात् समुच्चायकचशब्दायोग इत्यत आह **यथेति** । तस्यैवार्थान्तरमाह **व्यावहारिकेति** । यदुपन्यस्तं सत्त्रैविध्यमिति शेषः ।

**२८६ सु०— पृच्छाविषयत्वमेव न दोष इत्यत आह तस्यापीति ।**

## अनु०— तस्याप्युक्तप्रकारेण नैव सिद्धिः कथञ्चन ॥

**असतः साधकत्वस्येव तस्य सत्त्रैविध्यस्यापि कथञ्चन** विकल्पितपक्षेषु **कस्मिंश्चन पक्षे नैव सिद्धिः** । कुतः । **उक्तप्रकारेणैव** । तथा हि । न तावत्परमार्थसताऽऽत्मेतरेण, द्वैतापत्तेः । नाप्यात्मनैव, तस्य निर्विशेषस्य साधकताऽयोगात् । व्यावहारिकप्रातीतिकयोस्तु स्वरूपमेवाद्यापि न सिद्धमिति । नामुख्यं सदसन्नापि सत् । येनोक्तदोषप्रसङ्गः । किन्त्वनिर्वचनीयम् । न च तदपि दुर्वचम् । सदसद्वैलक्षण्यस्यैव तत्त्वात् । तच्चोक्तविधया व्यावहारिकप्रातिभासिकभेदाद् द्विविधम् । तत्र व्यावहारिकस्य प्रपञ्चस्य सदसद्विलक्षणस्य सद्विलक्षणत्वादुपपन्नं श्रुत्यादिना मिथ्यात्वसमर्थनम् । असद्विलक्षणत्वात्तदन्तर्गतस्य प्रमाणादेः साधकत्वं चेति ।

**परि०**— अपिपदार्थमाह **असत इत्यादि** । **स्वरूपमेवेति** । सदवान्तरभेदभिन्नं स्वरूपमेवासिद्धं दूरे तत्साधकत्वमित्यर्थः । विवृतमेतन्न्यायामृते सत्तात्रैविध्यभङ्गे । शङ्कते **नामुख्यमिति** । अमुख्यं सदित्यनुवादः । नासत् नापि सदिति कोटिद्वयनिषेधः ।

**यादु०**— शङ्कते **नामुख्यं सदिति** । **उक्तविधयेति** । बाधकभेदेनेत्यर्थः ।

**वं०प०**— नन्वात्मेतरेण व्यावहारिकेण प्रातिभासिकेन वा प्रमाणेन सत्त्रैविध्यसिद्धिरस्त्वित्यत आह **व्यावहारिकेति** । शङ्कते **नेति** । अमुख्यं यत्सत्तत् असत् असदवान्तरभेदो न भवतीत्यर्थः । **सत्** पारमार्थिकम् ।

**कं०रा०**— शङ्कते **नेति** । अमुख्यं सदसन्न नापि सदित्यर्थः ।

**वा०चं०**— एकेनैव सिद्धेः, एवेति कथञ्चनेत्यनयोरन्यतरवैयर्थ्यमित्यत आह **विकल्पितेति** । 'सता चेद् द्वैतसिद्धिः स्यादि'त्युक्तप्रकारं मनसि निधाय **न तावदिति** । 'अविशेषस्य साध्या साधकता पुनरि'त्युक्तप्रकारकथनं **तस्येति** । 'न सिद्धं चान्यसाधनमि'त्यस्य न पूर्ववन्मिथ्याभूतस्य साधनत्वं न सिद्धमिति धर्मनिषेधोऽत्रार्थोऽपि तु साधनत्वेन त्वदभिमतव्यावहारिकप्रातिभासिकस्वरूपमेवासिद्धमिति धर्मिनिषेध इत्याशयेनाह **स्वरूपमेवेति** । **अद्यापीति** । सत्त्रैविध्यसाधकतया सत्त्रैविध्यस्योपन्यासे आत्माश्रयादीति ध्वनयति । ननु मिथ्याभूतस्य साधकत्वनिरासावसरे विश्वसदसद्वैलक्षण्यस्य निरासोऽसङ्गत इत्यतस्तस्यापि साधकत्वोपपादकतया पराभिप्रेतत्वात्तन्निरासासङ्गतिरित्याशयेन पराभिप्रायमुद्घाटयति **नामुख्यमिति** । **किन्त्विति** । यद्यप्यत्र किन्तु सदसद्विलक्षणमित्युक्तौ लाघवं तथाऽप्यनिर्वचनीयत्वं तृतीयः प्रकार इति परेषां व्यवहारादनिर्वचनीयलक्षणान्तरनिरासेन परेण सिद्धान्तितस्य सदसद्विलक्षणत्वज्ञानबाध्यत्वरूपलक्षणद्वयस्य निरासपरतयोत्तरभाष्यस्यावतारयिष्यमाणत्वेन





तदुपक्षेपाय च गौरवमाश्रितमिति ध्येयम् । अत्र सदसद्विलक्षणत्वस्य साधकत्वाद्युपयोगितया कथनात्तत्र विभागाकथने शुक्तिरजतादेरपि साधकत्वापातेनापसिद्धान्तापत्त्या सदसद्विलक्षणविशेषस्यैव साधकत्वं वक्तुं तद्द्वैविध्यमाह **तच्चेति**।

**वा०र०— एकेनैवेति** । **एवेति** । कथञ्चनेत्यनयोरेकेनैवान्यतरेणैव सिद्धेस्तस्यापि न सर्वथासिद्धिः संभवतीत्यर्थप्रतिपादनसिद्धेरित्यर्थः । तस्यापि न कथञ्चनसिद्धिरित्येतावतोक्तस्यैव नैव सिद्धिरित्यनेनोच्यमानतया ऽन्यतरवैयर्थ्यमित्याशयः । **आहेति** । कथञ्चनेत्यस्यावधारणार्थव्यतिरिक्तमर्थमाहेत्यर्थः । न तावत्परमार्थेत्यादि-दूषणानामुक्तिस्थलं दर्शयन्नुक्तप्रकारेणेत्येतद्व्याख्यानतामुपपादयति **सता चेत्यादिना** । **पूर्ववदिति** । पूर्वत्र यथा धर्मनिषेधोऽर्थः । एवमत्रार्थो न भवतीति व्यतिरेकदृष्टान्तः । आद्यापीत्येतदनूद्य तत्तात्पर्यमाह **अद्यापीति** । **सत्त्रैविध्येति** । अन्योन्याश्रयादीति सत्त्रैविध्यसिद्धौ व्यावहारिकप्रातीतिकस्वरूपसिद्धिस्तत्सिद्धौ च तादृश-प्रमाणसिध्या सत्त्रैविध्यसिद्धिरित्यन्योन्याश्रयः । सत्त्रैविध्यसिद्धौ व्यावहारिकादिस्वरूपसिद्धौ च तथाविध-प्रमाणसिद्धिस्तत्सिद्धौ च सत्त्रैविध्यसिद्धिरित्येवं चक्रकं वेति नैकस्यापि सिद्धिरित्यर्थः । **निरासोऽसङ्गत इति** । तन्निरासपरमुत्तरभाष्यमसङ्गतमित्यर्थः । न तन्निरासासङ्गतिरित्यत्राप्युक्तरीत्यैवेत्यर्थः । **पराभिप्रायमिति** । परोक्त-सदसद्विलक्षणत्वस्य साधकत्वोपयोगिताप्रकारमित्यर्थः । **लाघवमिति** । अनिर्वचनीयमित्युक्तावपि तद्दुर्वचत्वशङ्का-परिहाराय सदसद्विलक्षणत्वरूपेण व्याख्यानस्यावश्यकतया प्रथममेव सदसद्विलक्षणमित्युक्तौ लाघवमित्यर्थः । **व्यवहारादिति** । तद्व्यवहारानुसारेणैव चात्र तृतीयप्रकाराद्याशङ्कनादिति भावः । अस्य च गौरवमाश्रितमिति वक्ष्यमाणेन संबन्धः । **उत्तरभाष्यस्येति** । वैलक्षण्यं सतश्चापीत्यादिभाष्यस्येत्यर्थः । **अवतारयिष्यमाणत्वेनेति** । अथवा निर्वचनीयममुख्यं सदित्युक्तमित्यादियोजनान्तर इति शेषः । **तदुपक्षेपाय चेति** । अत्र सामान्यतो निर्वचनमित्युक्तावेवोत्तरत्र विशेषविकल्पावकाश इति भावः । यद्यपीहापि दुर्वचत्वोक्तिशङ्कापरिहाराय सदस-द्विलक्षणत्वोक्तिरस्त्येवेति विशेषपर्यवसानस्योपक्षेपत्वं युक्तमित्याभाति । तथापि निर्वचनीयशब्दार्थतया अर्थविशेषसिद्धवत्कारेण तं पक्षं दूषयितुमेव सदसद्विलक्षणत्वस्य तत्वादित्युक्तावपि परोक्तलक्षणान्तरनिरास-पूर्वकलक्षणद्वयोपादानस्यात्राभावात्तथाविधविचारोपक्षेपोऽनिर्वचनीयमित्ययं भवत्येव । अत एवोत्तरमूलेऽनिर्वच-नीयममुख्यं सदित्युक्तमित्यनुवाद इति भावः । **तत्रेति** । सदसद्विलक्षण इत्यर्थः । **शुक्तीति** । तस्यापि सदसद्वैलक्षण्यवत्त्वादिति भावः । इष्टापत्तिं परिहरति **अपसिद्धान्तेति** । साधकत्वाद्युपयोगनिरासकत्वादिति नञ् घटितः पाठः ।

**विठ्ठ०— अद्यापि न सिद्धमिति** । व्यावहारिकादिस्वरूपसिद्धौ तेन व्यावहारिकादिप्रमाणेन सत्त्रैविध्य-सिद्धिः ततश्च व्यावहारिकसत्त्वादिसिद्धिः इति अन्योन्याश्रयप्रसङ्गादिति भावः । उत्तरमूले सदसद्वैलक्षण्यनिराकरणं न प्रकृतसङ्गतमित्यतः तत्सङ्गमयितुं शङ्कते **नामुख्यं सदिति** । अमुख्यं सदित्यनुवादः । असन्न नापि सदिति कोटिद्वयनिषेधः ।



**चषकः— न च तदपीति** । अनिर्वचनीयमित्यर्थः । **तत्त्वात्** अनिर्वचनीयरूपत्वात् । अन्यारादिति पञ्चमीविधायकसूत्रेऽन्य इत्यर्थग्रहणमित्याकरे व्यक्ततया निरूपकताप्रत्यासत्त्या भावप्रत्ययान्तोपस्थाप्यभेदान्वाय-प्रतियोगित्वार्थिकया सदसत्पदप्रकृतिकपञ्चम्या भवितव्यमिति कथं षष्ठी विन्यस्तेत्यत आह **संबन्धमात्र इति** । प्रतियोगित्वत्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नजन्यताशालिशाब्दबोधतात्पर्यिका तत्सूत्रे विहिता पञ्चमी नेह विवक्षिता । किन्तु संबन्धत्वरूपव्यापकधर्मावच्छिन्नप्रकारकताघटितधर्मावच्छिन्नजन्यताशाल्यन्वयबोधतात्पर्यिका 'शेषे' इति लक्षणलक्षिता षष्ठ्येवेति भावः ।

**गूढ०—** यद्यप्यत्र केनेत्यस्याक्षेपार्थत्वमङ्गीकृत्य केनापि मानेन सत्त्रैविध्यं न सिध्यतीति दूषणं संभवतीति पृच्छ्यते **तस्यापीति** । चेति व्यर्थं एवं च लाघवमपि । तथापि शिष्यैर्यत्र दूषणं वक्तव्यं तत्र प्रश्नपूर्वकमेव वक्तव्यमिति ज्ञापनाय एवमुक्तमिति न वैयर्थ्यमिति द्रष्टव्यम् । तस्यापीत्यत्रापिशब्दवैयर्थ्यमाशङ्क्याह **असत इति** । नैव सिद्धिरित्ययुक्तं केनापि प्रकारेण सिद्धेः संभवादित्यत उक्तं **मूले कथञ्चनेति** । तद्व्याचष्टे **विकल्पितेति** । ननूक्तप्रकारेण न सिद्धिरित्ययुक्तम् । पूर्वमसतः साधकत्वासंभवस्योक्तत्वात् । तया व्यावहारिकसत्त्वाङ्गीकारेण साधकत्वस्योपपादितत्वात् तथाच कथमुक्तप्रकारेण न सिद्धिरित्युक्तमित्यत आह **तथा हीति** । **निर्विशेषस्येति** । निर्विशेषत्वेनाङ्गीकृतस्येत्यर्थः । **साधकत्वायोगात्** साधकत्वानङ्गीकारात् । द्वितीयतृतीयौ प्रत्याख्याति । ननु नामुख्यं सदयुक्तं सदसद्रूपप्रकारसंभवेऽपि तृतीयप्रकारसंभवादिति शङ्कते **नामुख्यमिति** । **उक्तदोषप्रसङ्ग इति** । सदसद्रूपपक्षद्वये साधकप्रमाणाभावसाधकत्वाभावरूपोक्तदोषप्रसङ्ग इत्यर्थः । तर्हि किंरूपं तदित्यत आह **किन्त्विति** । सदसद्विलक्षणत्वेन निर्वक्तुं शक्यत्वान्न दुर्वचमित्याह **सदसदिति** । नन्वेतत्सदसद्वा नाद्यः । साधक-प्रमाणाभावात् । नान्त्यः साधकत्वाभावप्रसङ्गादित्यत आह **तच्चेति** । सदसद्विलक्षणरूपानिर्वचनीयमित्यर्थः ।

॥ विश्वस्य सदसद्वैलक्षण्याभावः ॥

॥ सदसद्विलक्षणप्रमाणादेः साधकत्वाभावः ॥

तत्साधकप्रमाणस्वरूपस्य सत्त्वादिविकल्पानां निरासः—

**२८७ सु०—** स्यादेतदेवं कथञ्चिद्यदि विश्वस्य सदसद्विलक्षणत्वं स्यात् । तदेव न सिद्ध्यतीत्याह **वैलक्षण्यं सदसतोरिति** ।

## अनु०— वैलक्षण्यं सदसतोरप्येतेन निषिद्ध्यते ॥

**श्रीनिधि०—** ननु अन्यारादितरर्तेऽञ्चूत्तरपदाजाहियुक्ते इत्यत्रान्य इत्यर्थग्रहणमित्युक्तत्वेनान्यशब्द-समानार्थवैलक्षण्यशब्दयोगे पञ्चम्या भाव्यम् । वैलक्षण्यशब्दस्य भेदभेदकोभयवादित्वात् इत्यत आह **सदसतोरिति** ।





**वा०चं०**— ननु सदसद्वैलक्षण्यस्य साधकत्वाद्युपयोगानिरासकत्वादुत्तरभाष्यमसङ्गतमित्यतः स्वरूपनिषेधस्यापि तदर्थत्वान्नासङ्गतिरित्याशयेनाह **स्यादिति** । सदसद्वैलक्षण्यसिद्धावपि तस्य साधकत्वाद्युपयोगाभावस्यैतेनेत्यादिना वक्ष्यमाणत्वात्कथञ्चिदित्युक्तम् ।

**वा०र०**— उत्तरभाष्ये परशङ्कितस्य साधकत्वाद्युपयोगस्य निरासो नास्ति । तदप्रतीतेरित्यर्थः । साधकत्वाद्युपयोगनिरासकत्वादित्यस्य तन्निरासार्थं प्रवृत्तत्वादित्यर्थः । तथा च तन्निरासार्थं प्रवृत्ते भाष्ये सदसद्वैलक्षण्यस्य तदुपयोगनिरास एव सङ्गतो न तु सदसद्वैलक्षण्यस्वरूपनिषेध इति तन्निषेधार्थकैतद्भाष्यमसङ्गतमिति यथाश्रुत एव पाठ इत्यप्याहुः । **तदर्थत्वादिति** । सदसद्वैलक्षण्यस्य साधकत्वोपयोगनिरासार्थत्वादित्यर्थः । सदसद्वैलक्षण्यस्वरूपे सिद्ध एव सद्विलक्षणत्वान्मिथ्यात्वप्रतिपादकत्वमसद्विलक्षणत्वाच्च साधकत्वमुपपन्नमित्यादिपरोक्तं युज्यते । तदसिद्धौ तु न साधकत्वाद्युपपादनावसर इत्येवं तन्निरासोपयोगो द्रष्टव्यः ।

**स०व्र०**— स्यादेतदेवं **कथञ्चिदिति** । एतेन सद्विलक्षणत्वादित्यादिना दोषस्य वक्ष्यमाणत्वात् कथञ्चिदित्युक्तम् ।

**गूढ०**— परिहरति **स्यादेतदेवमिति** ।

**२८८ सु०— विश्वस्येति शेषः । सदसतोरिति संबन्धमात्रे षष्ठी । तथा च सदसद्भ्यामित्यर्थः ॥ एतेन प्रमाणविकल्पनिरासेन । तथा हि । विश्वस्य सदसद्वैलक्षण्यं किं सता प्रमाणेन साध्यते, उतासता, अथ सदसद्विलक्षणेन । नाद्यः, वादिनोऽनुपपत्तेः । न द्वितीयतृतीयौ, प्रतिवादिनोऽसंप्रतिपत्तेरिति ॥ नन्वत्र सदसद्वैलक्षण्ये साधकत्वं न स्यादिति प्रसङ्गो वाच्यः । न च तत्र व्याप्तिः । मैवम् । साक्षिणि व्याप्त्यवधारणोपपत्तेः । सत्त्वाभावे साधकत्वं न स्यादिति वा प्रसङ्गं वक्ष्यामः । तत्रासत्त्वमुपाधिरिति चेन्न । तस्य सत्त्वाभावानतिरेकात् । तद्भङ्गस्य च प्रागनिर्वचनीयसिद्धेरशक्यत्वात् । एतेन सद्विलक्षणत्वान्मिथ्यात्वोपपादनमसद्विलक्षणत्वात्साधकत्वं चोपपन्नमिति परास्तम् । सद्वैलक्षण्येऽसत्त्वापत्त्या साधकत्वाभावस्य, असद्वैलक्षण्ये च सत्त्वापातेन मिथ्यात्वोपपादनस्यासंभवस्यापत्तेः । प्रागनिर्वाच्यसिद्धेः व्याप्तिद्वयनिरासायोगात् । असद्वैलक्षण्यमात्रेण हानादिव्यवहारोपपत्तौ शुक्तिरजतादावपि तत्प्रसङ्गः । मायाविद्यावैलक्षण्यान्नैवमिति चेन्न । तस्य निराकरिष्यमाणत्वात् । वैलक्षण्यमात्रस्य प्रकृतानुपयोगादिति ।**





**परि०**— 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चमीविधिसूत्रेऽन्य इत्यर्थग्रहणोक्तेः सदसद्भ्यामिति भाव्यमित्यत आह **संबन्धमात्रे षष्ठीति**। प्रतियोग्यनुयोगिभावमविवक्षित्वा संबन्धमात्रे 'षष्ठी शेषे' इति सूत्रेण षष्ठीत्यर्थः । **वादिनोऽनुपपत्तेरिति** । आत्माऽतिरिक्तेन सता चेदद्वैतभङ्गात् । आत्मना चेन्निर्विशेषस्य साधकत्वायोगादित्यर्थः । **सत्त्वेति** । सत्त्वाभावे साधकं न स्यादिति वा प्रसङ्गं वक्ष्यामो ब्रवामेत्यर्थः (ब्रूम इत्यर्थः) । **तत्रेति** । सत्त्वाभावे साधकं नेत्यत्रेत्यर्थः । **व्याप्तिद्वयेति** । सद्वैलक्षण्येऽसत्त्वम् असद्वैलक्षण्ये सत्त्वमिति व्याप्तिद्वयेत्यर्थः । असद्वैलक्षण्ये समानेऽपि मायिकत्वाविद्यकत्वाभ्यां प्रपञ्चप्रातिभासिकयोर्वैलक्षण्यान्न हानाद्यतिप्रसङ्ग इति शङ्कते **मायेति** । **निराकरिष्यमाणत्वादिति** । विश्वमायिकत्वादेरिति योज्यम् । 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणश्चेत्स्वतोऽन्यगे'त्यादिना आनुमानिकपादे प्रकृत्यधिकरण इति भावः । एके तु 'निर्विशेष' इत्यादावज्ञानखण्डनेन तदवान्तरभेदस्य निराकरिष्यमाणत्वादित्यर्थ इत्याहुः ।

**यादु०**— **संबन्धमात्रमिति** । कर्तृत्वाद्यसंभवात् । 'षष्ठी शेषे' इत्यनेन षष्ठीति भावः । **साक्षिणि व्याप्त्यवधारणेति** । व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्यर्थः । **तस्य निराकरिष्यमाणत्वादिति** । 'न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत' इत्यत्रेति शेषः । उक्तं वैलक्षण्यमङ्गीकृत्यापि दूषणान्तरमाह **वैलक्षण्यमात्रस्येति** । असद्विलक्षणत्वाविशेषेऽपि मायाऽविद्यारूपोपादानवैलक्षण्यमात्रस्य प्रकृतहानादिव्यवहारानुपयोगादित्यर्थः । न हि घटपटयोः सत्त्वाविशेषे उपादानवैलक्षण्यमात्रेणैकत्र हानादिव्यवहाराभावो भवतीति भावः ।

**वं०प०**— **अनुपपत्तेरिति** । सता चेदद्वैतभङ्गात् । आत्मना चेन्निर्विशेषस्य साधकत्वायोगादित्यर्थः । **व्याप्तिरिति** । भवन्मते सदसद्विलक्षणवस्त्वभावेन दृष्टान्ताभावादिति भावः । यत्सदसद्विलक्षणं न तत्साधकमित्यन्वयव्याप्तिग्रहणस्थलाभावेऽपि यत्साधकं न तत्सदसद्विलक्षणमिति व्यतिरेकव्याप्तौ सदसद्विलक्षणत्वाभावसाधकत्वयोर्वादिप्रतिवादिसंप्रतिपत्त्या साक्षिण एव दृष्टान्तत्वं संभवतीत्याशयेनाह **साक्षिणीति** । **व्याप्तीति** । व्यतिरेकव्याप्तीत्यर्थः । **तस्येति** । असत्त्वस्य सत्त्वाभावरूपहेत्वभिन्नत्वेन नोपाधित्वमित्यर्थः । न हि हेतुरेवोपाधिः । साधनाव्यापकत्वाभावादिति भावः । नन्वनिर्वचनीयरूपतृतीयकोटिसद्भावात्सत्त्वाभाव एवासत्त्वमिति नियमभङ्ग इत्यत आह **तद्भङ्गस्येति** । ननु सद्वैलक्षण्ये च असत्त्वं असद्वैलक्षण्ये च सत्त्वमिति न व्याप्तिद्वयं युक्तमनिर्वचनीयरूपतृतीयकोटिसद्भावादित्यत आह **प्रागिति** । असद्विलक्षणत्वात्साधकत्वं चोपपन्नमित्येतद्दूषयति **असदिति** । नन्वसद्वैलक्षण्येऽपि मायिकत्वाद्धानादिव्यवहारहेतुत्वं प्रत्यक्षादेर्युक्तमसद्वैलक्षण्येऽप्याविद्यकत्वाच्छुक्तिरजतादेर्न हानादिव्यवहारहेतुत्वमित्याशङ्कते **मायेति** ।

**कं०रा०**— **वादिन इति** । मायावादिमते विश्वसदसद्वैलक्षण्यसाधकस्य सत्त्वाभावादिति भावः । **नन्विति** । विश्वस्य सदसद्वैलक्षण्यं सदसद्विलक्षणेन प्रमाणेन साध्यत इति तृतीयपक्षेऽसंप्रतिपत्तिं वदता तत्त्ववादिना





विश्वसदसद्वैलक्षण्यसाधकं प्रमाणं यदि सदसद्विलक्षणं स्यात्तर्हि साधकं न स्यादित्यनिष्टप्रसङ्गो मायावादिनं प्रति वक्तव्यः । न च तत्र प्रसङ्गे मूलभूतापाद्येनापादकस्य व्याप्तिरस्ति । सदसद्वैलक्षण्यरूपापादकस्याप्रमितत्वेन तयोः सहचारानुपलम्भादित्यर्थः । **व्यतिरेकेति** । आपाद्यव्यतिरेकस्य साधकत्वस्यापादकव्यतिरेकस्य सदसद्वैलक्षण्याभावस्य च साक्षिण्यवधारणोपपत्तेरित्यर्थः । साक्षिणि व्याप्त्यवधारणोपपत्तेरिति पाठेऽप्ययमेवार्थोऽनुसन्धेयः । यद्यपि व्यतिरेकव्याप्त्यवधारणं नानुमानाङ्गम् । तथाऽपि तयाऽन्वयव्याप्तिरनुमीयत इत्यत्र तात्पर्यम् । न च वाच्यमापादकस्यासत्त्वेन तन्निष्ठव्याप्तेरप्यसत्त्वान्नानुमासंभव इति । आपादकस्यासत्त्वेऽप्यापाद्येन विनाभावो नास्तीत्येवंरूपाविनाभावलक्षणव्याप्तेः सत्त्वेन तदनुमितिसंभवादिति । वस्तुतस्तु "स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणमि"त्युक्तेः परीत्याऽनिष्टप्रसञ्जनरूपदूषणस्य कर्तव्यत्वात् । परमते च व्यतिरेकव्याप्तेरङ्गत्वात्परीत्या व्यतिरेकव्याप्त्यवलम्बनेन अनिष्टापादनं कृतमिति ध्येयम् । विश्वसदसद्वैलक्षण्यसाधकप्रमाणं सदसद्विलक्षणमिति वदता तस्य प्रमाणस्य सत्त्वाभावोऽङ्गीकृत एव । अतस्तेनैव साधकत्वाभावापादने न कश्चिद्दोषः । आपाद्यापादकव्याप्तेरत्यन्तासति सुग्रहत्वादित्यभिप्रेत्याह **सत्त्वाभाव इति** । **तस्येति** । असत्त्वस्य सत्त्वाभावरूपसाधनाभिन्नत्वेन तदव्यापकत्वाभावान्नोपाधित्वमिति भावः । ननु सत्त्वाभाववत्यनिर्वचनीयेऽसत्त्वाभावान्न तस्य सत्त्वाभावानतिरेक इत्यत आह **तद्भङ्गस्येति** । अनिर्वचनीयस्याद्याप्यसिद्धतया तत्सिद्धेः प्रागसत्त्वस्य सत्त्वाभावानतिरेकभङ्गस्य वक्तुमशक्यत्वादित्यर्थः । **प्रागिति** । अनिर्वाच्यसिद्धेः प्राक् यत्र सद्वैलक्षण्यं तत्रासत्त्वं यत्रासद्वैलक्षण्यं तत्र सत्त्वमिति व्याप्तिद्वयस्य निरासायोगादित्यर्थः ।

**श्रीनिधि०— संबन्धमात्र इति** । पञ्चम्यपादाने इत्यस्य व्याख्यानरूपमिदं सूत्रमिति अपादानादित्वेन अविवक्षित्वानुगतसंबन्धत्वेन विवक्षया षष्ठीति भावः । अन्तिमपक्षनिराकरणे शङ्कते **नन्वत्रेति** । **न च तत्रेति** । सदसद्वैलक्षण्यस्याप्रसिद्धत्वेन व्याप्तिर्न संभवतीति भावः । **साक्षिणीति** । व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्यर्थः । अप्रामाणिकप्रतियोगिताभावस्य स्वीकारादिति भावः । **व्याप्तिद्वयेति** । सद्वैलक्षण्ये असत्त्वं असद्वैलक्षण्ये सत्त्वमिति व्याप्तिद्वयेत्यर्थः । **निराकरिष्यमाणत्वादिति** । निर्विशेषे स्वयं भातेत्यादिनेति भावः । दीर्घकालबाध्यत्वाल्पकालबाध्यत्वलक्षणवैलक्षण्यं भवत्वित्यत आह **वैलक्षण्यमात्रस्य (च) इति** । **प्रकृतेति** । सत्त्वाभावे साधकत्वं न स्यादित्यत्रेति भावः । कस्यचित् बहुदोषवशात् बहुवर्षेषु शङ्खे प्रतीयमानं पीतं पीतार्थक्रियां कुर्यादिति भावः । विद्यमानाविद्यमानवचने अत्र प्रसिद्धसदसद्वाचिनावित्यर्थः ।

**वा०चं०**— सदसतोः परस्परवैलक्षण्यस्य सिद्धान्ततया, प्रकृतानुपयोगाच्च तन्निषेधोऽनुपपन्न इत्यत आह **विश्वस्येति शेष इति** । 'अन्यारादितरर्ते' इत्यत्रान्य इत्यस्यार्थग्रहणत्वात्पञ्चमीप्राप्त्या षष्ठीनिर्देशायोग इत्यत आह **सदसतोरितीति** । कर्तृत्वादिषट्कारकविवक्षायां तत्तद्विभक्तिवत्तदतिरिक्तसंबन्धविशेषविवक्षायामेवोपपदविभक्तेः प्राप्त्या, प्रकृते च कर्तृत्वादिवत्संबन्धान्तरस्य विशिष्याविवक्षया संबन्धसामान्यस्यैव विवक्षणात् षष्ठ्युपपत्तिरिति भावः । सत्तात्रैविध्यस्यास्मिन्पक्षेऽनभ्युपगमेन पारमार्थिकव्यावहारिकप्रातिभासिकत्वादिविकल्पानां प्रकृतेऽसंभवेन तन्निरासदूषणातिदेशासंभवात्पूर्वत्रेवात्रापि प्रमाणविकल्पनिरासात्सामान्येऽतिदेश इत्याशयेनाह **एतेनेति** । अत





एवात्रोपयुक्तं प्रमाणविकल्पप्रकारं दर्शयति **तथा हीत्यादिना** । **अनुपपत्तेरिति** । आत्मतदितरपक्षोक्तदूषणद्वयस्य निर्विशेषसाधकत्वासंभवाद्वैतहानिरूपस्यापत्त्योभयविधसत्पक्षानुपपत्तेरित्यर्थः । **असंप्रतिपत्तेरिति** । उक्तरीत्या असत्साधकत्वस्य व्यावहारिकादिवत्सदसद्विलक्षणस्वरूपस्यैवासिद्धतया सदसद्विलक्षणसाधकत्वस्य चासंप्रतिपत्तेरित्यर्थः । असंप्रतिपत्तेरित्यनेनाभिप्रेतं प्रसङ्गं शङ्कामुखेन दर्शयंस्तत्रानुपपत्तिं शङ्कते **नन्विति** । **व्याप्तीति** । साधकत्वं सतस्तेनेति साक्षिणः साधकत्वोपपादनात्तत्र व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्यर्थः । असत्त्वसदसद्वैलक्षण्यरूपपक्षद्वये पृथक् प्रसङ्गमभिप्रेत्य पराङ्गीकारेण द्वितीये साक्षिणि व्यतिरेकव्याप्त्या समाधायाधुना पक्षद्वयेऽप्येकरूपमेव प्रसङ्गं मनसि निधायाविशेषस्येत्युक्तरीत्या पराङ्गीकारस्यायुक्तत्वात्साक्षिणि व्याप्त्यवधारणासंभवेऽप्यसत्येवान्वयव्याप्त्यवधारणं सुकरमित्याशयेन पक्षान्तरमाह **सत्त्वाभाव इति** । यद्वा सदसद्वैलक्षण्यपक्ष एव पर्यवसानमसत्यन्वयव्याप्तिप्रदर्शनायाह **सत्त्वाभाव इति** । यद्यसत्त्वं नाम सत्त्वाभावस्तदाऽऽपादकानतिरिक्ततया नोपाधित्वम् । यदि चासत्त्वमत्यन्ताभावप्रतियोगित्वं तदा तस्य सत्त्वाभावरूपापादकानतिरेकस्तदभाववत्यभावः । एवं चापादकव्यापकत्वान्नोपाधित्वमित्याशयेनाह **तस्येति** । ननु सत्त्वाभाववत्यनिर्वचनीयेऽसतोऽसत्त्वस्य न तद्रूपत्वं नापि तद्व्यापकत्वमित्यतोऽन्योन्याश्रयतया नैतदुपपद्यत इत्याह **तद्धङ्गस्येति** । सद्वैलक्षण्यसिद्धावपि न साधकत्वादिसिद्धिः प्रत्युत वैपरीत्यमेवेत्याह **एतेनेति** । प्रमाणविकल्पनिरासकतर्के प्राप्तोपाधिनिरासाय सत्त्वाभावस्यासत्त्वव्याप्तिप्रतिपादनेनेत्यर्थः । असद्वैलक्षण्ये सत्त्वप्राप्तिरपि तुल्यन्यायतया तद्वलब्धैवेति द्रष्टव्यम् । अनेनैतेनेति प्रतिपादितप्रमेयमपि भाष्यसूचितमेवेति ध्वनयति । एवमसद्वैलक्षण्यस्य परोक्तं साधकताप्रयोजकत्वमभ्युपगम्य तस्य सत्त्वापादकतया तत्सिद्धान्तप्रतिकूलताऽभिहिता । अधुना परोक्तमसद्वैलक्षण्यस्य साधकत्वप्रयोजकत्वमेवानुपपन्नमतिप्रसङ्गादित्याह **असद्वैलक्षण्यमात्रेणेति** । ननु विश्वस्य मायिकत्वाच्छुक्तिरजतादेश्च आविद्यकत्वात्तन्निष्ठासद्वैलक्षण्ययोरपि तथात्वेन वैलक्षण्यमात्रत्वाभावाद्व्यवहारतदभावरूपवैलक्षण्योपपत्तिरित्याशङ्क्ते **मायेति** । अर्थक्रियासमर्थप्रपञ्चारोपहेतुर्माया विभ्रममात्रहेतुरविद्येति मायाऽविद्यावैलक्षण्यं तादृशकार्यविशेषसंपादकतया अभिमतं किंवा स्वाश्रयाव्यामोहिनी माया तद्व्यामोहिन्यविद्येति अर्थक्रियासामर्थ्यतदभावरूपकार्यविशेषसंपादकवैलक्षण्यमात्रम् । नाद्यः । प्रमाणाभावेन तादृशवैलक्षण्यस्य 'न चाप्येकत्वविज्ञानादि'त्यनुव्याख्याव्याख्यानावसरे निराकरिष्यमाणत्वादित्याह **तस्येति** । न द्वितीयः । यथाकथञ्चिद्वैलक्षण्यस्य कार्ये व्यवहारसंपादनतदभावानुपयोगेनातिप्रसङ्गानुद्धारादसद्वैलक्षण्यकथनमनुपयुक्तमित्याह **वैलक्षण्यमात्रस्य चेति** । यद्वा आद्यपक्षमेव मायाऽविद्यावैलक्षण्यं वदतोऽभिमततया सिद्धवत्कृत्य तस्येत्यनेन दूषणमुक्तम् । उत्तरवाक्यं तु तथाऽपि ब्रह्मज्ञानबाध्यत्वतदितरबाध्यत्वाभ्यां व्यवहारनिर्वाहकत्वतदभावरूपविशेषः किं न स्यादित्यतो बाधविलम्बेऽप्यर्थतादवस्थ्यानिवृत्तेरित्युक्तरीत्या तादृशवैलक्षण्यं व्यवहाराद्यप्रयोजकमित्याह वैलक्षण्येतीति योज्यम् ।

**वा०र०— सिद्धान्ततयेति** । तन्निषेधोऽनुपपन्न इत्युत्तरेण संबन्धः । निमित्तान्तरमाह **प्रकृतेति** । **अर्थग्रहणत्वादिति** । भिन्नो रामाद्विलक्षणो देवदत्तो यज्ञदत्तादित्यादिसिध्यर्थतया तथात्वस्य व्याख्यातत्वादित्याशयः । एतच्चादृश्यत्वनये प्रपञ्चयिष्यते । ततश्चान्य इत्यर्थकवैलक्षण्यशब्दयोगेऽपि पञ्चमीत्यर्थः ।





**कर्तृत्वादीति** । कर्त्रादावेव प्रथमादिविधानेऽपि तत्र कर्तृत्वादिविवक्षा आवश्यकी । विवक्षातः कारकाणीत्युक्तेरिति भावः । **तत्तद्विभक्तिवदिति** । प्रथमादिकारकविभक्तिवदित्यर्थः । उपपदविभक्तेः प्राप्त्येत्यत्र दृष्टान्तोऽयम् । एवं तदुभयस्थलद्वयं प्रदर्श्य प्रकृते तदसंभवमाह **प्रकृते चेति** । अनेन कारकोपपदविभक्त्योः कुतो नाश्रयणमिति शङ्का परिहृता भवति । **सामान्यस्यैवेति** । षष्ठी शेष इत्यनेन तत्सामान्ये षष्ठीविधानादिति भावः । **अतिदेशासंभवादिति** । भाष्यस्थेतेनेति शेषः । **पूर्वत्रेवात्रापीति** । पूर्वत्र यथा प्रमाणविकल्पनिरासेन सत्त्वैविध्यं निरस्तमेवमत्रापि सदसद्वैलक्षण्यं प्रमाणविकल्पेन निरस्यते इत्येवं प्रमाणत्वमात्रपुरस्कारेण प्रमाणविकल्पनिरासे अतिदेशाङ्गीकारात् तद्गतपरमार्थसत्त्वादेः प्रागुक्तस्य पुरस्काराभावान्नानुपपत्तिरित्यर्थः । **अत एवेति** । परमार्थसता वा प्रमाणेनेत्यादि विशिष्टविकल्पतन्निरासस्यातिदेशमनभिप्रेत्य प्रमाणविकल्पमात्रतन्निरासयोरभिप्रेतत्वादेवेत्यर्थः । **अत्रोपयुक्तेति** । अत्राभिप्रेतनिरासानुसारेण प्रमाणविकल्पप्रदर्शनपूर्वकं तन्निरासप्रकारं च दर्शयतीत्यर्थः । **आत्मतदितरेति** । प्रमाणं सदिति पक्षेऽपि तदात्मरूपं तदितरद्वा । नाद्यः । निर्विशेषात्मस्वरूपस्य साधकत्वासंभवात् । न द्वितीयः । अद्वैतहानेरित्येवं तत्पक्षद्वयोक्तदूषणद्वयस्यापत्त्येत्यर्थः । **असत्साधकत्वस्येति** । असंप्रतिपत्तेरित्युत्तरेण संबधः । **अभिप्रेतं प्रसङ्गमिति** । सदसद्वैलक्षण्यरूपतृतीयपक्षनिरासकतयेत्यर्थः । असंप्रतिपत्तेरित्यनेनासत्त्वरूपद्वितीयपक्ष-निरासकतया प्राप्ते यद्यसत्स्यात्तर्हि साधकं न स्यादिति तर्के तु शशविषाणादौ व्याप्तिग्रहसंभवेन तत्रानुपपत्तेरभावात् तत्परित्यागो मूले । अत एव सत्त्वाभावेन साधकमित्येतदवतारे टीकाकृदसत्त्वसद्वैलक्षण्येत्यादि वक्ष्यतीति ज्ञेयम् । **न च तत्रेति** मूलम् । तत्र च व्याप्तिर्नास्तीति योज्यम् । सदसद्वैलक्षण्यस्यैवाप्रसिद्धत्वाङ्गीकारेण तद्रूपापादकवति साधकत्वाभावरूपापाद्यसामानाधिकरण्यग्रहानुपपत्त्या व्याप्तिग्रहस्यैवानुपपत्तेरित्यर्थः । मास्त्वन्वयव्याप्तिग्रहोपपत्तिः । व्यतिरेकव्याप्तिस्तु शक्यग्रहेत्याशयं सूचयन् व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्यर्थोपपादकतया साक्षिणः साधकत्वं च सिद्धमस्तीत्याह **साधकत्वं सतस्तेनेतीति** । **असत्त्वसदसद्वैलक्षण्येति** । उक्तपक्षद्वये प्रसङ्गभेदस्याभिप्रेत-त्वोक्त्यैवासत्त्वपक्षे व्याप्त्यनुपपत्तिशङ्काभावात्तदनुत्थापनमिति सूचयति । साक्षिणि व्यतिरेकव्याप्त्यवधारणमपि न संभवति । परमते साक्षिणो निर्विशेषतया साधकत्वस्य तत्रायोगेन तत्रापि साधकत्वसदसद्वैलक्षण्याभावयोः सामानाधिकरण्यग्रहसंभवादित्यत उक्तं **पराङ्गीकारेणेति** । परेण तादृशस्यापि साधकत्वाङ्गीकारादिति भावः । **एकरूपमेवेति** । सत्त्वाभाव इत्यनेनासत्त्व इत्यस्य सदसद्वैलक्षण्य इत्यस्य च सङ्ग्रहात् । असद्वैलक्षण्यांशस्य चादृष्टत्वादिति भावः । न साक्षिणि व्यतिरेकव्याप्त्यवधारणं संभवति । साक्षिणः साधकत्वस्यैवाभावात् । न च विशेषस्यापि परेण तदङ्गीकृतमिति वाच्यम् । तदङ्गीकारस्याप्रयोजकत्वात् । अत एवाविशेषस्य साध्यासाधकतेति पूर्वानुव्याख्याने तन्निराकरणं कृतमित्यपरितोषाभिप्रायेण सत्त्वाभाव इत्येतन्मूलप्रवृत्तिरिति सूचयन्नसत्येव व्याप्तिग्रहरूपोत्तरपक्षतात्पर्यं चाह **अविशेषस्येत्युक्तरीत्येति** । नन्वेतदयुक्तम् । न च तत्र व्याप्तिरिति मूले सदसद्वैलक्षण्यरूपतृतीयपक्ष एव तर्कीयव्याप्त्यभावशङ्कानुसारेण तत्समाधानस्यैव कर्तव्यतया असत्त्वे साधकत्वं न स्यादित्येतत्तर्कीयव्याप्तौ शशविषाणादेरेव दृष्टान्ततया तदनुपपत्तेरभावेन तस्याः समाधेयत्वाभावात्तर्कीय-व्याप्तिप्रदर्शनस्यानावश्यकत्वेन तत्प्रदर्शनपरतया मूलयोजनाया अयोगादित्यस्वरसात्पक्षान्तरमाह **यद्वेति** । असमन्वयव्याप्तिप्रदर्शनाय पर्यवसानमिति संबन्धः । सत्त्वाभाव एवेति शेषः । पर्यवसानमाहेति संबन्धः । असत्त्व





इत्यापादकस्यापि सत्त्वाभावे पर्यवसानं व्यावर्तयितुं सदसद्वैलक्षण्यपक्ष एवेति । अन्वयव्याप्तीत्यनेनैव पूर्वोक्तरीत्या व्यतिरेकसंभवेऽपि तदाश्रयणमृज्वन्वयसंभवेन स्वरसमिति सूचयति । **तत्रेति** मूलम् । सत्त्वाभावरूपापादकाश्रयणेन प्रवृत्ततर्क इत्यर्थः । शशशृङ्गादौ साधकत्वाभाववत्यसत्त्वसद्भावात्सत्त्वाभाववति प्रमाणादौ च तदभावादापाद्य-व्यापकत्वापादकाव्यापकत्वेनोपाधित्वमित्यर्थः । असत्त्वस्यात्यन्ताभावप्रतियोगित्वरूपत्वे सत्त्वाभावातिरिक्तत्व-प्राप्त्या तदनतिरिक्तत्वोक्त्यप्रयोग इत्यतोऽत्राभिप्रेत्य विकल्पं सत्त्वाभावरूपत्वे तदनतिरेको यथाश्रुत एवात्यन्ता-भावप्रतियोगित्वरूपत्वे तु तदनतिरेको नाम तदपरित्याग इति विवक्षितमिति न दोष इत्याशयं च दर्शयन्नवतारयति **यद्यसत्त्वमिति** । **आपादकेति** । आपादकस्यैवोपाधितास्वीकारे आपादकमापाद्यव्यापकतया स्वीकार्यम् । न च तद्युक्तम् । साधकत्वाभावरूपाद्यवति ब्रह्मणि सत्त्वस्यैव सत्त्वेन तदभावाभावादित्याशयः । सत्त्वाभावा-नतिरेकादित्येतन्मूलस्थसत्त्वाभावानतिरेकपदं सत्त्वाभावरूपापादकानतिरेक इत्यनूद्य तदभाववत्यभाव इति व्याख्यातम् । **आपादकव्यापकत्वादिति** । तथाच व्याप्यव्यापकत्वे सतीत्युपाधिलक्षणान्तर्गतविशेषाभावा-न्नोपाधित्वमित्यर्थः । व्याख्यानद्वयानुसारेणापादकानतिरेकं द्विविधमप्याक्षिपन्नवतारयति **ननु सत्त्वाभाववतीति** । नापि **तद्व्यापकत्वमिति** । असत्येव व्यभिचारादिति भावः । अनेन तद्भङ्गस्येत्यस्य सत्त्वाभावानतिरेकभङ्गस्येति व्याख्यातं भवति । **अन्योन्याश्रयतयेति** । अनिर्वचनीयसिद्धौ तत्र सत्त्वाभावस्यासत्त्वव्यभिचारसिद्धिस्तत्सिद्धौ च सत्त्वाभावानतिरेकभङ्गेनोपाधित्वोपपत्त्या तर्कस्याभासतासिद्धौ तद्विरोधाभावात्सदसद्विलक्षणप्रमाणेन सदस-द्विलक्षणरूपानिर्वचनीयसिद्धिरित्यन्योन्याश्रयतयेत्यर्थः । **साधकत्वादीति** । मिथ्यात्वोपपादनसिद्धिरादिपदार्थः । नन्वेतेनेत्यस्योक्तोपाधिनिरासाय सत्त्वाभावस्यासत्त्वव्याप्तिप्रतिपादनेनेत्यर्थस्यैव प्राप्त्यनुसारेण वर्णनात्तेन च सत्त्वाभावेऽसत्त्वापत्त्या साधकत्वाभावः स्यादिति वैपरीत्यप्राप्तिवर्णनस्योपपत्तावप्यसद्वैलक्षण्ये च सत्त्वापातेन मिथ्यात्वोपपादनस्यासंभवापत्तेरित्युक्तापत्तिवर्णनायोगः । सत्त्वाभावेऽसत्त्वमिति व्याप्त्या सत्त्वाभावेऽसत्त्वप्राप्ता-वप्यसत्त्वाभावे सत्त्वस्य प्राप्त्यभावेनोक्त्यापत्तिमूलाभावादित्यतः सत्त्वाभावस्यासत्त्वव्याप्त्या यदा सत्त्वाभावे-ऽसत्त्वमिति प्राप्तं तदाऽसद्वैलक्षण्ये सत्त्वमित्यपि लभ्यत एव । यद्यसद्वैलक्षण्ये सत्यपि सत्त्वं न स्यात्तर्हि सत्त्वाभावेऽसत्त्वमिति व्याप्तेर्व्यभिचारापत्त्योक्तव्याप्तिरेव न सिध्येदित्येवं तद्व्याप्तिबलेनोक्तापत्तिमूलमपि प्राप्यत एवेत्याह **असद्वैलक्षण्ये सत्त्वेति** । ननु सद्वैलक्षण्येऽसत्त्वप्राप्तिर्यथा सत्त्वाभावस्यासत्त्वव्याप्तिमपेक्षते; एवमसद्वैलक्षण्ये सत्त्वप्राप्तिरपि स्वमूलतयाऽसत्त्वाभावस्य सत्त्वव्याप्तिमपेक्षते । न तु पूर्वव्याप्तिबलमात्रम् । न चेयं व्याप्तिरत्रोक्तेत्यत उक्तं **तुल्यन्यायतयेति** । उक्तरीत्या अस्या व्याप्तेः सत्त्वाभावस्यासत्त्वव्याप्त्युपपादक-व्यतिरेकव्याप्तितयोपपाद्योपपादकव्याप्तिद्वयं विना चार्थसिद्धेरभावेनास्माभिः सत्त्वाभावस्य सत्त्वव्याप्त्युक्त्यैव तदुपपादकैतद्व्याप्तेरप्युक्तप्रायत्वात् तदुभयेनैव सद्वैलक्षण्येऽसत्त्वप्राप्तिवर्णनाभिप्रायसिद्धेरसत्त्वाभावे सत्त्वप्राप्ति-मूलव्याप्त्युक्तिरस्त्येव । एतावांस्तु विशेषः । सत्त्वाभावव्याप्तावियं व्यतिरेकव्याप्तिरसत्त्वाभावव्याप्तौ गृह्यमाणायां चेयमन्वयव्याप्तिरिति । तमेतं विशेषं पुरस्कृत्यैव सत्त्वाभावस्यासत्त्वव्याप्त्यार्थतोऽसद्वैलक्षण्ये सत्त्वप्राप्तिरिति चाभिप्रेत्य बलपर्यन्तधावनमपि युक्तमेव । अत एव व्याप्तिद्वयेत्युत्तरमूलम् । तथा च सद्वैलक्षण्ये सत्त्वाप्राप्त्युपपत्त्या मूलसत्त्वान्मिथ्यात्वप्रतिपादनस्यासंभवापत्तेरपि सत्त्वाभावस्यासत्त्वव्याप्तिप्रतिपादनेन प्राप्तिवर्णनं युक्तमित्याशयः





सुधीभिरवधेयः । केचित्तु सत्त्वाभावेऽसत्त्वप्राप्तिरिवासद्वैलक्षण्ये सत्त्वप्राप्तिरपि सत्त्वाभावस्यासत्त्वव्याप्तिमूलिकैव । बलपदं तु व्याप्त्याख्यबलेति योज्यमित्याहुः । **अनेनेति** । सद्वैलक्षण्ये असत्त्वापत्त्या साधकत्वाभावः स्यादित्येवं वैलक्षण्यं सदसतोरिति भाष्योक्तन्यायस्यैतेनेत्यनेनातिदेशो व्याकुर्वतैवैतेन सद्विलक्षणत्वादिति मूलवाक्योक्तपर-प्रमेयनिरासरूपं प्रमेयमपि भाष्यसूचितमेवेति ध्वनयतीत्यर्थः । अनिर्वचनीयसिद्धौ साधकत्वाद्युपपत्तिरिति परोक्तप्रमेयनिरासो यः एतेनेत्यादिना वर्णितः सोऽपि नोपर्येव किन्तु भाष्यसूचित इत्याशयः । नन्वसद्वैलक्षण्यस्य साधकताप्रयोजकतां स्वीकृत्यैव हि तथात्वे सत्त्वापातेन मिथ्यात्वप्रतिपादनासङ्गतिरभिहिता । तदनङ्गीकारे शुक्तिरजतादौ सत्यप्यसद्वैलक्षण्ये तस्य हानादिसाधकत्वाभावेन तस्य साधकताप्रयोजकतया शङ्कानुपपत्तिरित्येव प्रथमप्राप्ततया दूषणं वक्तव्यं स्यात् । न चैवं कृतम् । तथा च पूर्वसाधकताप्रयोजकत्वं स्वीकृत्येदानीं तत्त्यागे पूर्वोत्तरविरोध इत्यतः पूर्वग्रन्थस्याङ्गीकारवादेन प्रवृत्तत्वादिदानीं च वस्तुस्थितिकथनान्न पूर्वोत्तरविरोध इति तत्परिहारं दर्शयन् पूर्वसङ्गतत्वेनोत्तरग्रन्थमवतारयति **एवमसद्वैलक्षण्यस्येति** । **सिद्धान्तप्रतिकूलता** मिथ्यात्वप्रतिपादना-संभवरूपा । **तथात्वेनेति** । मायिकत्वेनाविद्यकत्वेन चेत्यर्थः । अनेन मायाविद्यावैलक्षण्यादिति मूले मायाविद्ययोर्वैलक्षण्यान्मायिकाविद्यकयोर्वैलक्षण्यम् । तयोर्वैलक्षण्यं चात्र हेतुतया विवक्षितमिति सूचयति । नैवमित्यस्य व्याख्यानं वैलक्षण्यमात्रत्वाभावादिति । तस्यैवावृत्त्या व्याख्यानान्तरं शुक्तिरजतादावपि हानादिप्रसङ्ग इति नेति कार्यमिति मनसि कृत्वा तत्तात्पर्यमाह **व्यवहारतदभावेति** । मायाविद्यावैलक्षण्यस्य स्वाश्रया-व्यामोहिनीत्यादिरूपस्य मायिकाविद्यकवैलक्षण्यसंपादकत्वाभावेन तत एव तन्निष्ठासद्वैलक्षण्ययोरपि वैलक्षण्या-लाभात्कार्यविशेषासंपादकमायाविद्यावैलक्षण्यमेतदिति तस्य निराकरिष्यमाणत्वोक्त्ययोगः । कार्यविशेषसंपादक-मायाविद्यावैलक्षण्यस्यैव न चाप्येकत्वेत्युत्तरानुव्याख्याने निराकरिष्यमाणत्वादित्यतोऽत्र तत्संपादकवैलक्षण्य-विवक्षायामेव निराकरिष्यमाणत्वोक्तिरिति न दोष इत्याशयेन मायाविद्यास्वरूपयोर्द्विविधत्वात् तद्वैलक्षण्यमपि द्विविधमिति तत् द्वेधा विकल्प्याद्यपक्षदूषणतया निराकरिष्यमाणत्वोक्तियोजनपूर्वकं द्वितीयदूषणतया च वैलक्षण्यमात्रस्य चेति वाक्यं योजयति **अर्थक्रियेत्यादिना** । **अनुव्याख्याव्याख्यानेति** । विद्यैवेत्येतदधि-करणीयानुव्याख्यानेत्यर्थः । प्रकृतानुपयोगादित्येतन्मात्रमावर्तत इत्यभिप्रेत्य तत्प्रकारान्तरेण योजयति **अतिप्रसङ्गेति** । अतिप्रसङ्गोद्धाराय हि मायाविद्यावैलक्षण्यं परेणोपन्यस्तम् । न च तेन व्यवहारतदभावसंपादना-भावेऽतिप्रसङ्गनिरासो भवतीति तेन तदुद्धाराभावात्प्रकृतानुपयोग इति भावः । तावन्मात्रावृत्तिमेवाभिप्रेत्य प्रकारान्तरेण योजयति **असद्वैलक्षण्यकथनमिति** । एतदावृत्तिपूर्वकव्याख्यानं त्वसद्वैलक्षण्यात् साधकत्व-मित्येतत्परप्रमेयनिराकरणोपसंहारतयेति ज्ञेयम् । शुक्तिरजतादावपि हानादिप्रसङ्गे उक्ते शङ्कित्रा कार्यविशेष-संपादकवैलक्षण्यस्यैव शङ्कनीयतया अर्थक्रियेत्यादिरूपस्यैव शङ्कनसिध्या विकल्पपूर्वकदूषणानवकाश इत्यपरि-तोषाद्विकल्पप्रवृत्तिमस्वीकृत्यैव प्रकारान्तरेण योजयति **यद्वाऽऽद्यपक्षमेवेति** । **सिद्धवत्कृत्येति** । कार्यविशेष-संपादकस्यैव शङ्कित्रभिप्रेततया युक्तत्वादित्यर्थः । अत्र पक्षे वैलक्षण्यमात्रस्येत्यनेन स्वाश्रयेत्यादिरूप-मायाविद्यावैलक्षण्यग्रहणायोगान्मायाविद्ययोरपुरस्कारेणैव शङ्कितवैलक्षण्यान्तरमेवात्र गृह्यत इति दर्शयंस्तद्वैलक्षण्य-शङ्कोत्थापनपूर्वकं तन्निरासकतया द्वितीयवाक्यमवतारयति **उत्तरवाक्यं त्विति** । इति योज्यमित्युत्तरेण संबन्धः ।





**स०व्र०**— ननु सदसतोरिति षष्ठीप्रयोगोऽनुपपन्नः। 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इत्यनेन सूत्रेणान्यार्थकशब्दयोगे पञ्चमीविधानेन प्रकृतेऽप्यन्यार्थकवैलक्षण्यशब्दप्रयोगस्य सत्त्वादित्यत आह **सदसतोरिति**। **अनुपपत्तेः** असंप्रतिपत्तेः । यत्सदसद्विलक्षणं न तत्साधकमिति अन्वयव्याप्तिग्रहणस्थलाभावेऽपि यत्साधकं न तत्सदसद्विलक्षणमिति व्यतिरेकव्याप्तौ सदसद्विलक्षणत्वाभावसाधकत्वयोर्वादिप्रतिवादिसंप्रतिपत्त्या साक्षिण एव दृष्टान्तत्वं संभवतीत्याह **साक्षिणीति** । उपाधेः साधनव्यापकतामाह **तस्येति** । असत्त्वस्य सत्त्वाभावं विहायावस्थानाभावात् तयोः समव्याप्तत्वमिति यावत् । न चानिर्वचनीये सत्त्वाभावसत्त्वेऽपि असत्त्वाभावेन साधनाव्यापकतेत्यत आह **तद्भङ्गस्येति** । सत्त्वाभावासत्त्वयोर्व्याप्तिभङ्गस्येत्यर्थः । तथा चानिर्वचनीयत्वे सिद्धे सत्त्वाभावसत्त्वयोर्व्याप्तिभङ्गेन साधनाव्यापकत्वेनासत्त्वस्योपाधित्वात् सत्त्वाभावे साधकत्वं न स्यादित्यस्मदभिमततर्कस्याभासत्वसिद्धिः । तत्सिद्धौ च विरोधाभावादनिर्वचनीयसिद्धिरित्यन्योन्याश्रय इति भावः । केचित्तु । **तस्येति** । उपाध्यापादकयोरभेदादित्यर्थः । नन्वनिर्वचनीयवादिनोऽभेदोऽसिद्ध इत्यत आह **तद्भङ्गस्येति** । इति व्याचक्षते । ननु प्रपञ्चे मायिकासद्वैलक्षण्यस्य सत्त्वेन तस्य हानादिव्यवहारनिर्वाहकत्वेऽपि शुक्तिरजतादौ असद्वैलक्षण्यस्याविद्यकत्वेन हानाद्यर्थक्रियाऽनर्हतेति शङ्कते **मायेति** । **निराकरिष्यमाणत्वात्** । प्रथमस्य चतुर्थे । तर्ह्यल्पकालबाध्यत्वदीर्घकालबाध्यत्वरूपवैलक्षण्यं प्रयोजकमस्त्वित्यत आह **वैलक्षण्यमात्रस्येति** । सद्वैलक्षण्यान्मिथ्यात्वोपपादनमसद्वैलक्षण्याच्च साधकत्वमिति प्रकृतेऽनुपयोगादित्यर्थ इत्यप्याहुः।

**विठ्ठ०**— अन्यारादितरर्त इत्यादिना पञ्चम्या भाव्यं कथं षष्ठीत्यत आह **संबन्धमात्रेति** । अन्य इत्यर्थग्रहणाङ्गीकारात् वैलक्षण्येऽपि पञ्चमीति ज्ञेयम् । षष्ठी शेषे इत्यनेन षष्ठीति भावः । **साक्षिणि व्याप्त्यवधारणोपपत्तेरिति** । व्यतिरेकव्याप्त्यवधारणोपपत्तेरिति भावः । क्वचित् व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्येव पाठः । ननु न सत्त्वाभावोऽप्यसत्त्वं भवति अनिर्वचनीयत्वेनोपपत्तेः अतस्तदनतिरेको भग्न इत्यत आह **तद्भङ्गस्येति** । तथा चान्योन्याश्रय इति भावः । सद्वैलक्षण्ये असत्त्वं असद्वैलक्षण्ये सत्त्वमिति व्याप्तिद्वयमप्यनुपपन्नम् अनिर्वचनीयत्वादित्यत आह **प्रागनिर्वाच्येति** । प्रागुक्त एव बाधः । ननु अम्बरादिकं मायाकल्पितं शुक्तिरजतादिकं त्वाविद्यकमिति वैलक्षण्यात् न शुक्तिरूप्यादौ हानव्यवहारः इत्याशयेन शङ्कते **मायेति** । **निराकरिष्यमाणत्वादिति** । 'न चाप्येकत्वविज्ञानमुक्तन्यायेन युज्यत' इत्यादाविति शेषः । तर्हि अल्पकालदीर्घकालबाध्यतारूपवैलक्षण्यं भवत्वित्यत आह **वैलक्षण्यमात्रस्येति** । शुक्तिरूप्यादेरम्बरादेश्चासद्वैलक्षण्याविशेषात् उक्तरूपवैलक्षण्यम् अप्रयोजकमिति भावः ।

**चषकः**— **व्याप्तीति** । प्रकृतापादकव्यतिरेकनिरूपिताऽऽपाद्यव्यतिरेकनिष्ठाव्याप्तीत्यर्थः । **तद्भङ्गस्य** तत्प्रभेदस्य । **तत्प्रसङ्गः** हानादिव्यवहारप्रसङ्गः । **निराकरिष्यमाणत्वादिति** । तुरीयपादे, प्रकृतिनये, 'सा मन्ददृष्टिस्तस्यैवे'त्यादिना, प्रतिविधास्यमानत्वादित्यर्थः । **वैलक्षण्यमात्रस्य** उपादानवैलक्षण्यमात्रस्य । **प्रकृतानुपयोगात्** शुक्तिरजतादौ तत्प्रसङ्गानपनोदकत्वात् ।





**गूढ०**— वैलक्षण्यनिषेधस्य धर्म्यप्रतीतेराह **विश्वस्येति शेष इति**। ननु सदसतोरिति कर्मषष्ठी प्रतीयते तदनुपपन्नम्। तयोर्वैलक्षण्यस्य सर्वसिद्धत्वेन तन्निषेधस्य बाधितत्वादित्याशङ्क्याह **सदसतोरिति**। एवं सति फलितार्थमाह **तथा चेति**। **प्रमाणेति**। प्रमाणस्य सदसत्त्वादिविकल्पास्तेषां निरासेनेत्यर्थः। निरासकप्रकारमेवाह **तथा हीति**। तर्कस्याभासत्त्वं शङ्कते **नन्विति**। **न चेति**। सदसद्वैलक्षण्यस्य भवन्मते प्रसिद्धत्वेन व्याप्तिग्रहस्थला-भावादिति भावः। यत्सदसद्विलक्षणं तन्न साधकमित्यन्वयव्याप्त्यसंभवेऽपि यत्साधकं तन्न सदसद्विलक्षणं यथा साक्षीति व्यतिरेकव्याप्त्यवधारणं सुशकमेवेत्याशयेनाह **साक्षिणीति**। तथाच न तर्कस्याभासत्वमिति भावः। नन्वन्वयव्यतिरेकयोरन्वयस्य ऋजुत्वात् स एव प्रदर्शनीयः। व्यतिरेकव्याप्तेर्भवद्भिरनङ्गीकारेण तदुपदर्शनायोगा-च्चेत्यत आह **सत्त्वाभाव इति**। नन्वत्रासत्त्वमुपाधिः साधकत्वाभावरूपसाध्यवति नृशृङ्गादौ असत्त्वस्य सत्त्वेन साध्यव्यापकत्वात् पक्षीकृतप्रमाणादौ च सत्त्वाभावे सत्यपि असत्त्वाभावेन साधनाव्यापकत्वाच्चेत्याशङ्कते **तत्रेति**। तर्क इत्यर्थः। **तस्येति**। असत्त्वस्येत्यर्थः। तथाच साधनव्यापकत्वान्नायमुपाधिरित्यर्थः। न चाभेदे व्याप्यव्यापकभाव एव नेति वाच्यम्। अभेदेऽपि तस्यावश्यकत्वात्। अन्यथा शब्दस्य कृतकत्वेनानित्यत्वे कृतकत्वस्यैवोपाधितापत्तेरिति भावः। नन्वसत्त्वस्य प्रकारान्तरेण निरुच्यमानत्वात् न साधनव्यापकत्वमित्यत आह **तद्भङ्गस्येति**। असत्त्वस्य साधनाभेदभङ्गस्येत्यर्थः। अनिर्वचनीयस्य सिद्धौ सत्त्वाभाववतोऽप्यसत्त्वाभावेन तद्भङ्गः स्यादित्यर्थः। परोक्तफलं दूषयति **एतेनेति**। अतिदेशार्थमाह **सद्वैलक्षण्य इति**। ननु व्याप्तिद्वयमप्ययुक्तम्। अनिर्वचनीये सद्वैलक्षण्यासद्वैलक्षण्ययोः सत्त्वेऽपि सत्त्वासाधकत्वयोरभावेन व्यभिचारादित्याह **प्रागिति**। किञ्च सत्त्वानङ्गीकारे हानादिव्यवहार एव न स्यात्। नन्वसद्वैलक्षण्यमात्रेणैव तदुपपत्तेर्न सत्त्वाङ्गीकार इत्यत आह **असद्वैलक्षण्येति**। **तत्प्रसङ्गः** हानादिप्रसङ्गः। व्यवहारप्रयोजकस्य तत्रापि भावादिति भावः। ननु प्रपञ्चे मायिकासद्वैलक्षण्यसत्त्वाद्धानादिव्यवहारोपपत्तिः। शुक्तिरजतादावाविद्यकसदसद्वैलक्षण्यसत्त्वान्न व्यभिचार इत्यत आह। शङ्कते **मायीति**। **निराकरिष्यमाणत्वात्**। प्रकृत्यधिकरणादाविति शेषः। तथापि ब्रह्मज्ञानास्मदादिज्ञान-बाध्यत्वेन विशेषः स्यादित्यत आह **वैलक्षण्येति**।

**प्रदीपः**— सदसद्विलक्षणत्वस्य साधकत्वाभावेन न व्याप्तिरित्यत आह **सत्त्वेति**। न तस्येत्युपाध्यापा-दकयोरभेदादित्यर्थः। नन्वनिर्वचनीयभेदोऽसिद्ध इत्यत आह **तद्भङ्गस्येति**। किमत्रेत्यादि प्रागभावादेरपि विद्यमानत्वादत्यन्तासत्त्वमात्रावलम्बने द्वितीयः तत्प्रतियोगित्वेन सच्छब्दार्थविकल्पः प्रागभावादेरपि प्रपञ्चा-न्तर्गतत्वाद्विचार इति मन्तव्यम्। प्रथमेऽपि भावाभाववैलक्षण्यानां अभावाभावप्रतियोगिकभेदधर्मित्वं किं वा भावाभावत्वानाधारत्वमात्रेऽपि किं भावस्याभाववैलक्षण्यमभावस्य भाववैलक्षण्यमिति उत भावस्य भावाभाव-वैलक्षण्यम् अभावस्याप्येवमिति।





**२८९ सु०— आस्तां वा सत्त्वादिविकल्पनिरासेन दूषणाभिधानम् । प्रमाणमेव प्रपञ्चा-निर्वचनीयतायां नोपपद्यते । न हि 'नेहनाने'त्यादिश्रुतिः सदसद्वैलक्षण्यलक्षणानिर्वचनीयतां विश्वस्य वक्ति ॥**

**वा०चं०**— ननूत्तरवाक्ये उक्तानुपपादनादसङ्गतिः । न च सदसद्वैलक्षण्येऽनुमानरूपप्रमाणनिरासायोत्तर-वाक्यमिति वाच्यम् । प्रमाणसत्त्वादिविकल्पनिरासकदूषणान्यनुद्धृत्य परेण प्रमाणस्वरूपस्यानाशङ्कनीयत्वेन तन्निरासस्यानुचितत्वात् । श्रुतेरुपपत्तिविरोधकथनप्रसङ्गेऽनुमानस्यानिराकार्यत्वाच्चेत्यतोऽङ्गीकारवादेन प्रमाण-स्वरूपस्यानिराक्रियमाणत्वादनुमानस्यापि श्रुतेरर्थविशेषे पर्यवसानहेतुतया पराभिमतत्वात्तद्दूषणमप्युपपन्न-मेवेत्याशयेनोत्तरवाक्यमवतारयति **आस्तां वेति** ।

**वा०र०**— **उक्तानुपपादनादिति** । उक्तस्य प्रमाणसत्त्वासत्त्वसदसद्विलक्षणत्वपक्षनिराकरणस्यानुप-पादनादित्यर्थः । **उत्तरवाक्यमिति** । उत्तरवाक्यं प्रवृत्तमतो नासङ्गतिरित्यर्थः । **अनाशङ्कनीयत्वेनेति** । तच्छङ्कायामेव च तन्निरास उचितः । न च परस्तथा शङ्कितुमर्हति । दूषणोक्त्यनन्तरं तदुद्धारस्यैव तेन कर्तव्यतया प्रमाणस्वरूपाशङ्कनेऽसङ्गत्या निग्रहापत्तेरिति भावः । प्रकारान्तरेणानुमानस्वरूपाशङ्कनतन्निरासानुपपत्तिमाह **श्रुतेरिति** । एतत्प्रसङ्गे श्रुतिविचारस्यैव कर्तव्यतया तदर्थं च तस्याः प्रकारान्तरेण साधकत्वोपपत्तिप्रतिपादन-तन्निरासयोः सङ्गतत्वेऽपि अनुमानाशङ्कानिरासयोरयोग इत्यर्थः । **अङ्गीकारेति** । सत्यं प्रमाणसत्त्वादिपक्ष-निराकरणानन्तरं परेण तन्निरासकदूषणोद्धार एव कर्तव्य इति । किन्तु प्रतिवादिनाऽनिर्वचनीये प्रमाणमपि नास्तीति प्रतिपादिते सति दूषणोद्धारमकृत्वाऽनुमानाशङ्कनमपि युज्यत एव । न च सत्त्वादिविकल्पदूषणाभिधानेन पूर्वो तत्स्वरूपमपि नास्तीति प्रतिपादनं प्रतिवादिनो न युक्तमिति वाच्यम् । सत्त्वादिविकल्पनिरासकदूषणोक्त्यनन्तरं कथाप्रवृद्धये परस्यावकाशं दातुमङ्गीकारवादेन प्रमाणमपि नास्तीति प्रतिपादनस्यापि प्रतिवादिना कर्तुं शक्यत्वात् । ततश्च प्रतिवादिना प्रमाणाभावे उक्ते तत्सद्भावशङ्कनस्य वादिना कर्तव्यतया प्राप्तत्वात्तन्निरासोऽपि सङ्गत एवेति भावः । श्रुतिविचारप्रसङ्गे अनुमाननिरासासङ्गतिरिति प्रकारान्तरमपि निराकरोति **अनुमानस्यापीति** । तद्बलाच्छ्रुतिरपीति मूलस्याशयोऽयम् । ततश्च श्रुतिविचारप्रसङ्गे सङ्गतिरिति भावः ।

**गूढ०**— ननु नेह नानेति श्रुतिरेवात्र मानमित्यत आह **न हीति** । तत्र सदसद्वैलक्षण्यप्रत्यायकपदाभावादिति भावः ।

॥ तत्साधकस्य ज्ञानबाध्यत्वरूपस्य अनुमानस्य आभासत्वम् ॥

॥ प्रतिज्ञायाः दुष्टत्वम् ॥

**२९० सु०— अथ मन्येत "विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वाद्यदेवं तदेवं यथा शुक्तिरजतमित्यनुमानं विश्वस्य सदसद्विलक्षणत्वे मानम् । तद्बलात् श्रुतिरपि तत्रैव**





पर्यवस्यती''ति । तदसत् । अनुमानस्याऽभासत्वादित्याशयवान् ' प्रथमप्राप्तत्वात्प्रतिज्ञां तावन्निराकरोति **वैलक्षण्यं सतश्चेति** ।

**अनु०**— वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः ।
असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत् ॥

**चशब्दौ** अवधारणे । **अपिशब्दौ मिथः** समुच्चये ।

**वा०चं०**— समुच्चयस्यैकेनैव सिद्धेश्चापिशब्दयोरुभयोर्न प्रयोजनमित्यत आह **चशब्दावित्यादिना** ।

**वा०र०**— **समुच्चयस्यैकेनैवेति** । एकेन चशब्देनैव समुच्चयसिद्धेरपरचशब्दवैयर्थ्यम् । तथैकेनापि शब्देन समुच्चयसिद्धेरपरापिपदवैयर्थ्यम् । न च परस्परसमुच्चयाय द्वयमिति वाच्यम् । तथाऽप्येकेन द्विरूपात्तेन चशब्देन वाऽपिशब्देन वा समुच्चयसिद्धेस्तथैकेन चशब्देनैकेनापिशब्देन चेत्येवं द्वाभ्यां वा समुच्चयसिद्धेरुभयोर्द्विरूपात्तयोर्ग्रहणे प्रयोजनं नास्तीत्यर्थः । चशब्दावधारणस्य वाऽपिपदस्य वा नियमेन संबन्धमङ्गीकृत्यान्यतरस्यैव भिन्नक्रमतेति संमतम् । किन्त्ववधारणापिपदयोर्यथायोग्यं संबन्धस्वीकारः । तथाच क्वचित्सदेवेति क्वचिद्भावस्यैवेतीत्यादि-रूपेणावधारणस्य वैलक्षण्यमपि भावस्यापीत्यादिरूपेण चापिपदस्य तत्तत्संबन्धस्वीकारेण तत्तद्योजनाप्रवृत्तिः । क्वचिदवधारणावृत्तिरपि क्रियते । विवेकस्तु तत्तद्योजनानुसारेण स्फुट इति हृदयम् ।

**गूढ०**— ननु मास्तु तत्प्रत्यायकपदाभावस्तथापि तस्याः श्रुतेः सदसद्वैलक्षण्य एव पर्यवसानम् । तथाहि । सर्वभावो बोध्यते । तथाच सत्त्वमयुक्तं न चैवमपि । तथा पर्यवसाने न किमपि ज्ञापकमिति वाच्यम् । अनुमानस्यैव ज्ञापकस्य सत्त्वादित्याशयेन शङ्कते **अथ मन्येतेति** । सर्वपक्ष इत्युक्ते बाधसिद्धसाधने स्यातामिति विवादपर-मित्युक्तम् । हेतौ तु बाध्यत्वादित्येवोक्ते अभावप्रतियोगित्वरूपबाध्यत्वस्यासत्यपि सत्त्वेन व्यभिचारः स्यादित्यत उक्तं **ज्ञानेति** । न चैवमपि कथं व्यभिचारपरिहारः । अन्यथा ज्ञानपूर्वकसम्यग्ज्ञानविषयीकृताभावप्रतियोगित्व-मित्यर्थात् । असतश्चारोपासंभवेनान्यथाज्ञानासंभवात् । सति चारोपे अनिर्वाच्यतापत्तेरिति । **तद्बलादिति** । 'युक्तोऽयुक्तश्च यत्रार्थः आगमस्य प्रतीयते । स्यात्तत्र युक्त एवार्थ' इति न्यायादिति भावः । **प्रथमप्राप्तत्वादिति** । प्रतिज्ञायाः प्रथमप्रयोगे च निराकाङ्क्षत्वेन हेतुवाक्यप्रवृत्तिरेव न स्यादिति भावः । इदं च परमतानुसारेण ज्ञेयम् । स्वमते तु यथाकथञ्चित्साध्योपस्थितौ हेतुवाक्यप्रयोगसंभवादिति । अपिशब्देनैव समुच्चयभावाचशब्दद्वय-वैयर्थ्यमित्यत आह **चशब्दाविति** । नन्वेकेनापि शब्देन समुच्चयसंभवात् द्वितीयापिशब्दवैयर्थ्यमित्यत आह **मिथ इति** ।

**प्रदीपः**— प्रथमं प्रत्याह **सत इत्यादिना** ।





सदसद्वैलक्षण्यस्य विकल्पानां निरासः—

**२९१ सु०— अयमर्थः । किमत्र सदसच्छब्दौ भावाभाववाचिनौ, किंवा विद्यमानाविद्यमानवाचिनौ ।**

**आद्ये दूषणम् । सतो** भावात्मकस्य **विश्वस्यासतः** अभावात् **वैलक्षण्यमपि** भावाभावभेदवादिनो मम मते **स्वयं सत्** अस्त्येव । एवम् **असतः** अभावात्मकस्य **विश्वस्य सतो** भावात् **वैलक्षण्यमपि** भेदवादिनः **स्वयं सत्** एव । अतः **तेन** साधितेन **मम अनिष्टं कथं भवेत्** । किं नामैवं विभागेन सदसद्वैलक्षण्यसिद्ध्याऽपि प्रतिज्ञातार्थसिद्धेरर्थान्तरता परस्य स्यादिति ॥ १ ॥

**कं०रा०— भेदवादिनः** भावाभावभेदवादिनः । भावभेदवादिनो भावानां परस्परं भेदवादिनः । अभावभेदवादिनोऽभावानां परस्परं भेदवादिनः ।

**श्रीनिधि०— भेदवादिन इति** । भावाभावभेदवादिन इत्यर्थः । **स्वयं** सदेव । स्वाभाविकं सत्त्वं नत्वनौपाधिकमित्यर्थः । एवं सर्वत्रापि द्रष्टव्यम् । **विभागेनेति** । भावे अभाववैलक्षण्यम् । अभावे भाववैलक्षण्यमित्येवं विभागो द्रष्टव्यः ।

**वा०चं०—** सदसद्वैलक्षण्यशब्दार्थतया प्रसक्तसकलपक्षनिराकरणार्थतया मूलं व्याख्यातुमाह **अयमिति** । अस्तेर्भवतेश्च समानार्थताया भूसत्तायाम् अस भुवीत्यादिधातुव्याख्यानसिद्धत्वाद्भवतीति भाव इति भूधातुनिष्पन्नभावशब्दस्यास्तीति सदित्यस्धातुनिष्पन्नसदित्यस्य चैकार्थत्वाद्भावशब्दरूढविधिरूपार्थेनाप्येकार्थत्वमाश्रित्य सच्छब्दस्य भावार्थत्वेऽसच्छब्दस्याभावार्थत्वमित्याशयेनाद्यकल्पः । सच्छब्दस्य विद्यमानार्थकतया प्रसिद्धेरसच्छब्दस्य अविद्यमानार्थकत्वमित्याशयेन द्वितीयः । प्रथमे प्रागभावादीनामसच्छब्दार्थत्वं द्वितीये तेषामपि सच्छब्दार्थकोटिनिवेशाच्छशविषाणादीनामसच्छब्दार्थत्वमिति विवेकः । तत्र प्रथमकल्पसंभावितानेककल्पदूषणपरतया मूलं योजयितुं प्रतिजानीते **आद्य इति** । अत्र पृथिव्यब्विलक्षणतेजआदिरूपद्रव्यान्तरस्येव भावाभावातिरिक्तविश्वस्य प्रतिवादिनोऽसंमतेस्तदात्मकस्य च भावाभावविलक्षणत्वसाधनेऽनिर्वचनीयत्वसिद्धिरिति पराशयं सिद्धवत्कृत्योत्तरदूषणानां प्रवृत्तिरिति ज्ञेयम् । विजातीयमित्यादौ विशब्दस्य भिन्नार्थकतया प्रसिद्धेर्विलक्षणशब्दस्य भिन्नस्वरूपार्थकत्वादन्यारादितरर्त इत्यत्रान्या इत्यर्थग्रहणं विलक्षणो देवदत्तो यज्ञदत्तादित्यभियुक्तव्याख्यानाच्च वैलक्षण्यशब्दाद्भेदप्रसक्तिः । व्यृध्य्यर्थाभावेत्यत्र विशब्दस्याभावपरतया तद्व्याख्यानात् भावाभावविलक्षणशब्दस्य भावाभावलक्षणाभावपरत्वे लक्षणस्य च सन्निधानात्तच्छब्दोपस्थितस्यैव ग्रहणेन भावाभावत्वानधिकरणत्वस्य तच्छब्दात्प्रसक्तिः । उभयत्रापि भावाभावसमुदाये भावाभाववैलक्षण्यसाधनमुत भावात्मके उभयवैलक्षण्यसाधनमभावात्मके च विश्वस्मिन्नुभयवैलक्षण्यसाधनमिति प्रत्येकं वा । भेदपक्षे आद्यं निराकरोति **सत इति** । अस्मिन्पक्षे सतोऽसतो भेदवादिनो वैलक्षण्यं स्वयं सदेवेत्यादीनां द्विरावृत्तिः सूचिता भवति ।

वस्तुन एकं प्रति सतोऽन्यं प्रत्यसत्त्वानुपपत्तेर्भेदवादिनः स्वयं सदित्यनुपपन्नमित्यतोऽभ्युपगमाभिप्रायेणेय-मुक्तिरित्याशयेन मत इत्युक्तम् । स्वयमिति परकीयोपपादनानपेक्षामाह । भावाभाववैलक्षण्यस्य स्वमत-सिद्धत्वोपपादनायोपात्तस्य भेदवादिन इत्यस्य तेनानिष्टमित्यत्र प्रयोजनाभावात्तद्बललब्धविशेष्यस्यैवात्रान्वय इत्याशयेन ममानिष्टमित्युक्तम् । अत एव पूर्वं ममेत्यध्याहृतमिति द्रष्टव्यम् । सदसद्वैलक्षण्यसिद्धिं विना प्रतिज्ञातार्थसिद्धेस्तदभ्युपगमस्तव कथं नानिष्ट इत्याशयेन शङ्कते **किं नामेति** । यद्वा । अनुमाने दूषणा-नुक्तेर्मदिष्टसिद्धिरेव तवानिष्टमित्याशङ्कते **किं नामेति** । विभागेनेत्येतत्कल्पस्फुटीकरणम् ।

**वा०र०—** सदसच्छब्दौ भावाभाववचनौ विद्यमानाविद्यमानवचनौ चेत्येतद्विकल्पोत्थानोपपत्तये सच्छब्दस्य भाववाचित्वविद्यमानवाचित्वाद्युपयोगिप्रकारौ दर्शयति **अस्तेर्भवतेश्चेत्यादिना** । अत्र च भवतीति भाव इति भूधात्वित्यादिनैकार्थत्वादित्यन्तेन सच्छब्दभावशब्दयोर्भ्वादिधातुनिष्पन्नयोः समानार्थत्वं यदुक्तं तत्र समानार्थकधातुद्वयनिष्पन्नत्वं हेतुरित्यभिप्रेत्य धातुद्वयस्य समानार्थताया धातुव्याख्यानसिद्धताकीर्तनमस्ते-रित्यादिसिद्धत्वादित्यन्तेन कृतमिति न तस्यासङ्गतिशङ्कावकाशः । भवतीत्यस्तीति च व्युत्पत्तिप्रदर्शनेन भावसच्छब्दप्रवृत्तिनिमित्तसत्ताकर्तृत्वरूपविद्यमानत्वमेवेति प्रतिपादयता सच्छब्दस्य विद्यमानार्थकभावशब्द-समानार्थतोक्ता भवति । **अस भुवीति** । एकार्थत्वादित्यस्यैकार्थत्वेन निमित्तेनेत्यर्थकस्य आश्रित्येति ल्यब्लोपनिमित्तपञ्चम्यन्तस्य वा सच्छब्दस्य विद्यमानार्थकतयेत्युत्तरेण संबन्धादेकार्थत्वादित्यन्तं सच्छब्दस्य विद्यमानार्थकत्वोपपादनम् । यद्यपि भावशब्दरूढेत्येतदुपपादनं प्रथमतया प्राप्तं तथापि बहुत्वान्महामल्लेशभङ्ग-न्यायेनास्तेरित्यादिकमेव प्रथमं प्रवर्तितम् । यथायोग्यमन्वयस्य प्रामाणिकव्युत्पत्तिसिद्धत्वात्प्रागभावादिसाधारणस्य शशविषाणादिव्यावृत्तस्य च सत्त्वस्यैवैतदुपपादनमित्यपि ज्ञातुं सुलभम् । एतेनैकार्थत्वादित्यन्तस्य सच्छब्दे विद्यमानार्थकत्वोपपादकत्वेऽपि प्रागभावादिव्यावृत्तविधिरूपार्थकत्वोपपादकत्वाभावाद्भावशब्दरूढेत्यादेरेव वक्तव्य-तया प्रथमकल्पोपपादनावसरेऽस्तेरित्यादेरनुपयोगः । किन्तु द्वितीयकल्पोपपादनायैव तदुपयोगादुत्तरकल्प एवास्य वक्तव्यता । तथा प्रथमकल्पे एकार्थत्वादित्यन्तोक्तसत्ताकर्तृत्वरूपनिमित्तकसच्छब्दार्थत्वस्य प्रागभावादावपि तुल्यतया प्रथकल्पे तेषामसङ्ग्रहो वक्ष्यमाणो विरुद्धः । भावशब्दरूढेत्येतन्मात्रविवक्षया प्रागभावादिव्यावृत्त्यभिपाये चोत्तरकल्पसाधारणसत्ताकर्तृत्वार्थकत्वकीर्तनं व्यर्थमेवापद्यत इत्युक्तमेवेत्याशङ्का गर्भस्रावेणैवापाकृता भवति । भावशब्दरूढेत्यनेन तु भावशब्दो रूढो यस्मिंस्तादृशो यो विधिरूपोऽर्थः प्रथमप्रतीतावस्तीत्युपलभ्यमानोऽर्थ-स्तेनाप्येकार्थत्वं भावशब्दसच्छब्दयोराश्रित्य सच्छब्दस्य भावार्थकत्वमिति प्रतिपादयता सच्छब्दस्य विधिरूप-भावार्थकत्वमुपपादितम् । अस्तु नाम सच्छब्दस्य भावार्थकता । तावताऽप्यसच्छब्दस्य भावार्थकत्वं तु कुत इत्यतः भावार्थत्व इत्यनन्तरं प्राप्त तत एवेति पूरणाभिप्रायाद्वा आश्रित्य प्राप्तं यद्भावार्थत्वं तन्निमित्तमिति निमित्तसप्तमीयोजनाभिप्रायेण वोक्तं साधकस्य भावार्थत्व इत्यादि । भावप्रतियोगिको ह्यभाव इत्यसदिति । तदभावो निषेधमुखवेद्योऽर्थो लभ्यत इत्यर्थः । न तत्रोपपादनापेक्षेति भावः । एकार्थत्वादित्यन्तेन विद्यमानार्थक-भावशब्दसमानार्थकताया उक्तत्वात् तत्फलप्रदर्शनं सच्छब्दस्य विद्यमानार्थकतयेति । एकार्थत्वमाश्रित्येति पूर्वानुसारादत्राप्येकार्थत्वादित्यस्य ल्यब्लोपनिमित्तपञ्चमीत्वेन तदाश्रित्येत्येवार्थादेकार्थत्वमाश्रित्य सच्छब्दस्य





विद्यमानार्थतयेति योजना । तथाऽप्यविद्यमानार्थकत्वमसच्छब्दस्य कथमित्यत उक्तं **प्रसिद्धेरसच्छब्दस्य विद्यमानार्थकत्वमिति** । पूर्वत्र भावार्थत्व इत्यत्र भावार्थकत्वं ततश्चेति योजनावदत्रापि विद्यमानार्थकत्वात्तत एवासच्छब्दस्येति योजना । पूर्वत्रैवात्र विद्यमानप्रतियोगिकाभावग्रहणं न युज्यते । निषेधमुखवेद्यस्य विद्यमाना-भावस्य बोधापत्त्या अत्यन्ताभावप्रतियोगिशशविषाणादिबोधाभावप्रसङ्गादित्यतोऽत्र प्रसिद्धेरिति अविद्यमानार्थक-त्वोपपादनं कृतम् । असच्छब्दस्यात्यन्ताभावप्रतियोगिरूपाविद्यमानेऽर्थे प्रसिद्धेः शशविषाणादौ तच्छब्दप्रयोग-बाहुल्यादित्यर्थः । केचित्तु विद्यमानाभावोऽन्योन्याभाव इति विद्यमानान्यस्य शशशृङ्गादेरेवाविद्यमानपदात् बोधोपपत्तिरिति पूर्ववदेवासच्छब्दादविद्यमानार्थलाभ इत्याहुः । तेषां पक्षे प्रसिद्धेरिति पूर्वान्वयितयोपात्तम् । हेतुहेतुमद्भावस्पष्टत्वाय प्रसिद्धिकीर्तनमित्याश्रयणीयम् । तथा चैवं योजना । भावशब्दसच्छब्दयोर्भाव-शब्दरूढविधिरूपार्थैनैकार्थतामाश्रित्य सच्छब्दस्य भावार्थकत्वे सिद्धे तत एवासच्छब्दस्याभावार्थत्वमित्याशयेन सदसच्छब्दे भावाभाववचनावित्याद्यः कल्पः प्रवृत्तः । अस्तेर्भवतेश्चेत्याद्येकार्थत्वादित्यन्तानन्तरमर्थेनापीत्यत्र-त्यापिपदसंबन्धेन समुच्चयस्य सिद्धत्वादेकार्थत्वमप्याश्रित्य सच्छब्दस्य विद्यमानार्थत्वे असति शशविषाणादौ प्रसिध्या चासच्छब्दस्य अविद्यमानार्थत्वमित्याशयेन विद्यमानाविद्यमानवचनाविति द्वितीयः कल्पः प्रवृत्त इति । अथवैकार्थत्वादित्यन्तं भावशब्दरूढेत्युक्तैकार्थत्वसंभावकतयोक्तम् । तथाहि । भावशब्दसच्छब्दयोः समानार्थक-धातुनिष्पन्नतया समानार्थकत्वं तावदस्ति । यथा चोक्तरूपेण समानार्थकतास्ति । तथैव भावशब्दरूढेत्युक्त-प्रकारेणापि समानार्थत्वमाश्रयितुं युक्तम् । ततश्च सच्छब्दस्य भाववाचित्वं प्राप्तमिति दृष्टान्ततया संभावकोक्ति-व्याजेनैव वक्ष्यमाणविद्यमानार्थत्वमप्युपपादितं भवति । उत्तरवाक्ये वा प्रसिद्धेरित्यस्य पूर्वोत्तरसंबन्धे उभयोप-पादनलाभः । शिष्टं समानमिति यथाश्रुतैव योजनेति ज्ञेयम् । एवं पक्षयोरर्थभेदाश्रयणेन सङ्ग्राह्यासङ्ग्राह्यविवेकोऽपि लब्ध इत्याह **प्रथम इति** । भावशब्दरूढविधिरूपार्थैनैकार्थत्वमाश्रित्य भाववाची सच्छब्दोऽसच्छब्दस्त्वभाववाचीति पक्षे विधिमुखवेद्यघटादेरेव भावतया अनेवंरूपप्रागभावादीनामसच्छब्दार्थत्वमित्यर्थः । असच्छब्देन प्रागभावादिकं विवक्षितम् । न त्वत्यन्ताभावप्रतियोगिशशशृङ्गादिकमित्याशयः । **द्वितीय इति** । भ्वस्धात्वोरेकार्थत्वनिमित्तक-तद्धातुद्वयनिष्पन्नभावसच्छब्दयोरेकार्थत्वप्रयुक्तं सच्छब्दस्य विद्यमानार्थकत्वं तत एव प्रसिध्या चासच्छब्दस्य अविद्यमानार्थत्वमिति पक्ष इत्यर्थः । प्रागभावादयोऽपि हि सन्त्येवेति तेषां भवतीत्यादिव्युत्पत्त्यनुसारेण सत्ताकर्तृत्वरूपप्रवृत्तिनिमित्तेन घटादेरिव सच्छब्दार्थत्वात्पूर्वकल्प इवात्र कल्पे असच्छब्दार्थत्वाश्रयणासंभवा-दित्यर्थः । भावाभावात्मकसमस्तविश्वं सच्छब्देन सङ्गृह्यत इत्याशयः । किं तर्ह्यसच्छब्दसङ्ग्राह्यमित्यत आह **शशविषाणादीनामितीति** सकलमकलङ्कम् ॥ असदिति चेन्न प्रतिषेधमात्रत्वादिति युक्तिपादीयसूत्रानुभाष्यटीकाया-मप्युपयोगानुसारेणात्रोक्तमुपपादनं ज्ञेयम् । एवं तत्त्वोद्योतादिटीकादावपि ज्ञेयम् ॥ इत्यस्तेर्भवतेश्चेति टीकाग्रन्थार्थ-चिन्तनम् । अकारितेन संप्रीतो गुरुर्भूयाद्बुधाश्च मे ॥

ननु भावाभावविलक्षणत्वेऽपि नानिर्वचनीयताप्राप्तिः । भावत्वाभावत्वातिरिक्ततृतीयप्रकारसंभवात् । ततश्च पृथिव्यब्विलक्षणत्वेऽपि तेज आदेरनिर्वचनीयत्वाभाववत् प्रकृतेऽपि तदप्राप्तेरनिर्वचनीयत्वसाधनं परकीयं सिद्धं नेति तद्दूषणायोग इत्यतस्तृतीयप्रकारासंभवोपपादनेन अनिर्वचनीयताप्राप्तिप्रकारं पराभिमतमाह **अत्र पृथिव्यबिति** ।





पृथिव्यप्व्यतिरिक्ततेजआदिद्रव्यान्तरसत्त्वेन रूपद्वयाभावेऽनिर्वचनीयताप्राप्त्यसंभवेऽपि प्रकृते भावाभावातिरिक्त-पदार्थस्याभावात्तदात्मकत्वेन तृतीयप्रकाराश्रयणायोगात्प्रकारद्वयाधिकरण एव तदुभयनिषेधेऽनिर्वचनीयत्व-मवर्जनीयमिति पराशयमित्यर्थः । आद्ये दूषणं सतोऽभावात्मकस्येत्यारभ्य भावाभाववैलक्षण्यं नाम तत्त्वानधि-करणत्वमिति चेदित्याशङ्कापर्यन्तं सदसद्भेदपक्षो निराक्रियते । तदारभ्य च सत्त्वासत्त्वानधिकरणत्वपक्षस्तेन सदसद्वैलक्षण्यं नाम तदुभयभिन्नत्वं वा तत्त्वानधिकरणत्वं वेति विकल्पद्वयं सूचितमिति तत्सूचनं वा विकल्पद्वय-रूपेण प्रवृत्त्यभावेऽपि प्रथमं भेदपक्षनिराकरणं पश्चात्तत्त्वानधिकरणत्वपक्षमाशङ्क्य निराकरणं वा तदुभयपक्ष-प्रसक्तिमपेक्षते । न च वैलक्षण्यशब्दादुक्तकल्पद्वयप्रसक्तिरस्ति । ततस्तदा प्रतीतेरित्यतो वैलक्षण्यशब्दाद्भेदस्या-भावस्य चोपस्थितिं दृष्टान्तेनोपपादयति **विजातीयमित्यादाविति** । आदिपदेन विसदृशं विरक्तः । व्यधिकरण-मित्यादेः सङ्ग्रहः । **भिन्नस्वरूपेति** । वीत्यस्य भिन्नार्थत्वे लक्षणशब्दस्य स्वरूपार्थत्वे च विलक्षणशब्दस्य भिन्नस्वरूपार्थकत्वलाभ इत्यर्थः । भिन्नं स्वरूपं यस्येति बहुव्रीहिः । विलक्षणशब्दस्य भिन्नस्वरूपार्थकत्व एव वैय्याकरणसम्मतिं चाह **अन्येति** । अन्य इति अन्यशब्दस्यैव न ग्रहणम् । किन्त्वन्यशब्दसमानार्थशब्दानामेवेति भावेनान्य इत्यर्थग्रहणमित्यभिधायोदाहरणप्रदर्शनावसरे विलक्षणो देवदत्तो यज्ञदत्तादित्यादिकमुदाहृतम् । तेन भिन्नो रामादित्यादौ भिन्नादिपदस्येव विलक्षणपदस्याप्यन्यपदसमानार्थताप्राप्तिरिति भेदवतो विलक्षणशब्देनाभिधाने विलक्षणधर्मवाचकेन वैलक्षण्यशब्देन भेदवद्धर्मभूतभेदस्य प्रसक्तिरित्यर्थः । भावाभावपदसमभिव्याहारे च भावाभावभेदकोटेः प्रसक्तिरिति सिद्धत्वान्नोक्तम् । **तद्व्याख्यानादिति** । अभियुक्तव्याख्यानादित्यर्थः । यद्यपि विफलव्यर्थविगुणविदोषविरागादिपदेषु विशब्दस्याभावपरताऽप्युदाहर्तुमुचिता । तथापि स्पष्टत्वाच्छिष्यैरेव तदूह्यतामिति भावेनाभियुक्तव्याख्यानस्थलमेव स्वयं दर्शितमिति ज्ञेयम् । **भावाभावलक्षणाभावेति** । विलक्षण-शब्दस्य लक्षणाभावपरत्वे भावाभावपदसंबन्धे च भावाभावयोर्लक्षणस्याभावो यस्मिन्निति व्युत्पत्त्या भावाभाव-लक्षणाभावाधिकरणपरत्व इत्यर्थः । तावतापि भावाभावयोर्लक्षणपदेन विधिमुखप्रत्ययवेद्यत्वादेरेव प्राप्त्या भावत्वाभावत्वयोः प्राप्त्ययोग इत्यत उक्तं **सन्निधानादित्यादि** । **तच्छब्दौ** भावाभावशब्दौ । शक्यतावच्छेदक-स्यापि साक्षादुपस्थितिरविलम्बेन भवतीति भावाभावपदसन्निधानबलेन तदुपस्थापितं यल्लक्षणं तस्यैव प्राप्तिविवक्षायामित्यर्थः । **भावाभावत्वेति** । भावाभावलक्षणयोर्भावत्वाभावत्वयोरभावो यस्मिन्निति व्युत्पत्त्या भावाभावत्वाधिकरणत्वाभावलाभे तस्यैवार्थतो भावाभावत्वानधिकरणत्वमित्यनुवादः इति ज्ञेयम् । **तच्छब्दादिति** । भावाभावविलक्षणशब्दादित्यर्थः । एवं भेदापेक्षस्याभावपक्षस्य च प्रसक्तिमुपपाद्याद्ये दूषणं सत इत्यादिकं विकल्पमुखेन प्रवृत्तमिति दर्शयितुं विकल्पप्रकारस्य भेदाभावपक्षयोः साधारण्यादुभयसाधारण्येन विकल्पं दर्शयति **उभयत्रापीति** । उक्तरीत्या प्रसक्तयोर्भेदाभावपक्षयोरुभयोरपीत्यर्थः । विश्वस्मिन्निति वक्ष्यमाणं भावाभावसमुदाये भावात्मक इत्युभयत्रापि संयोज्यम् । वैलक्षण्यसाधनमित्यादौ वैलक्षण्यपदेन भेदाभावयोर्ग्रहणमुक्तिलाघवाय । **उत वेति** । निपातसमुदायः । पक्षान्तरत्वार्थः । प्रत्येकं वेत्यनन्तरमिति विकल्पं मनसि निधायेति शेषः । प्रसक्तिरित्येतद्द्वयस्यापि विकल्पोत्थानोपपादकतयाऽभिधानादुभयत्रापीत्यनेनैवोक्तरीत्या प्रसक्तपक्षयोरिति प्रतिपाद-नानुसारेणेति विकल्पं मनसि निधायेत्युक्त्यैव प्रसक्तिं तथोक्तविकल्पांश्च मनसि निधायेति लभ्यत इति योजनाया





अभिप्रेतत्वान्नानन्वयशङ्कावकाश इति ज्ञेयम् । **भेदपक्षे आद्यमिति** । अनेन भावाभावविलक्षणत्वं नामेत्येतत्पर्यन्तं भेदपक्षनिराकरणं तत्रापि यदि चेत्येतत्पर्यन्तं भावाभावोभयसमुदाये भावाभाववैलक्षण्यसाधनमिति प्रथमपक्ष-निराकरणमित्युक्तं भवति । **अस्मिन्पक्ष इति** । भावाभावसमुदाये भावाभावोभयभेदसाधनमिति पक्ष इत्यर्थः । अत्र हि अपिपदद्वयस्यैवकारद्वयस्य च सत्त्वात्तस्य च श्रुतत्वादावृत्त्यनाश्रयणमिति भावेनावृत्तिविषयमेव स्पष्टं दर्शयति **सतोऽसत इत्यादि** । स्वयं सदित्यादीनामिति पाठः । एवेत्यधिकं लेखकागतम् । आदिपदेन विश्वस्येत्यस्य सङ्ग्रहः । इत्यादीनामिति बहुवचनसमासावयवविवक्षयेति न दोषः । भेदवादिन इत्युक्त्या प्रतिवादिभिन्नत्वशङ्का स्यादतो **ममेति** पूरितं मूले । **वक्ष्यमाणाध्याहृतस्येति** । उपलक्षणं चेदम् । सतो भावात्मकस्येति योजनायां सत इति षष्ठी असत इति च पञ्चमी । एवमसत इति योजनायां तु विपरीतमित्यादि तत्र तत्र ज्ञेयम् । आवृत्तिपदं व्याख्यास्यते **अभ्युपगमेति** । भेदवादिना तथाऽभ्युपगम्यतेऽन्येन नेत्येवमङ्गीकारादिनिमित्तेन भेदवादिनः स्वयं सदित्युक्तत्वान्न तस्यानुपपत्तिरित्याशयेनेत्यर्थः । **स्वयमितीति** । भावात्मकविश्वस्याभावाद्वैलक्षण्यं भेदवादिनं प्रति परेणोप-पादितमित्यंतस्तस्यैतत्सदित्येवं तत्सत्त्वस्य या परकीयोपपादनसापेक्षता तदभावं वक्तुं स्वयमित्युक्तमित्यर्थः । स्वेनैवाङ्गीकृते परकीयोपपादनस्य व्यर्थत्वादिति भावः । **प्रयोजनाभावादिति** । अनेन एवमसदिति योजनायामपि भेदवादिन इत्यनन्तरं ममेति पूरणीयमिति सूचयति । **प्रतिज्ञातार्थेति** । सतो भावात्मकस्येत्याद्युक्तस्य सदसद्भिन्नत्वस्येत्यर्थः । मूले उक्तरीत्येति वक्तव्ये विभागेनेत्युक्तेर्वैयर्थ्यमित्यत आह **विभागेनेतीति** । एतत्कल्पस्यार्थान्तरतोपपादको यो निष्कर्षस्तस्य विभागेनेत्यनेन कथनेन स्फुटीकरणमित्यर्थः ।

**विठ्ठ०— स्वयं सत्** स्वत एव सत् । सदित्यनुवादे नास्तीति व्याख्यातम् । चशब्दोऽवधारणे इत्युक्तं व्यनक्ति **एवेति** । **एवं विभागेन** उक्तरीत्या भावाभावविभागेन ।

**चषकः— अर्थान्तरता परस्य स्यादिति** । प्रकृतपक्षतावच्छेदकीभूतविमतिविषयत्वसामानाधिकरण्येन भावेऽभाववैलक्षण्यमभावे च भाववैलक्षण्यमवगाहमानायाः अनुमितेः द्रव्यत्वसामानाधिकरण्येन पृथिवीत्व-तदभावविषयकप्रतीतिवदुपपत्त्यैकस्यां व्यक्तौ तादृग्वैलक्षण्यद्वयविषयकतदभिमतानुमितेरसिद्ध्या द्रव्यं पृथिवीत्व-तदभाववदित्यनुमिमानस्येवार्थान्तरतेत्याशयः । इयं च प्रथमयोजना । विमतिविषयीभूतां भावरूपामभावरूपां वैकैकां व्यक्तिं पक्षीकृत्य भाववैलक्षण्याभाववैलक्षण्योभयत्वावच्छिन्नसाधनान्न पक्षीकृतव्यक्तिभेदेन साध्यीभूत-प्रातिस्विकांशसत्त्वेन तत्पर्यवसाननियन्त्रितार्थान्तरताऽवकाश इत्याशङ्कायामेवमपि भङ्ग्यन्तरेणोक्ततादवस्थ्य-मभिधत्ते **यदि चेत्यादिना भवेदित्यन्तेन** । इयं च द्वितीया ।

**गूढ०—** नन्वत्र भेदवादिनः मम मते विश्वस्य सतो वैलक्षण्यं असतश्च वैलक्षण्यं सिद्धम् । तेनानिष्टं कथं भवेदिति सदसद्वैलक्षण्ये साध्ये सिद्धसाधनता दीयते इति प्रतिभाति तदयुक्तम् । सदसद्वैलक्षण्यस्य सिद्धान्तिना अङ्गीकारात् । किञ्चात्र सदसद्वैलक्षण्ये शब्देन भावाभाववैलक्षण्यमभिप्रेतं तददूषणात् न्यूनता । अवधारणार्थक-चशब्दद्वयान्वयोऽपि न प्रतीयते । अपिशब्दयोर्मिथः समुच्चयार्थत्वं च वर्णितम् । तदपि न प्रतिभाति । सतोऽसतश्चेति षष्ठीति च प्रतीयते । स्वयं सद्भेदवादिन इति च अनर्थकं अनुपयोगादित्यत आह **अयमर्थ इति** । किमनेन दूषणमुक्तं





भवतीत्यत आह **किं नामेति**। **एवं विभागेनेति**। भावरूपविश्वस्मिन् असद्वैलक्षण्यमभावरूपविश्वस्मिन् सद्वैलक्षण्यमित्येवं विभागेनेत्यर्थः। एवं च सतोऽसतश्चेति षष्ठीपञ्चम्यावित्युक्तं भवतीति। भेदवादिन इत्यस्य हेतुगर्भत्वान्न वैयर्थ्यमिति भावः। ननु भावाभावात्मकं विश्वे पक्षीकृत्य भावाभाववैलक्षण्यं साध्यते। येनार्थान्तरता स्यात्।

**२९२ सु०— यदि च प्रत्येकं** भावाभाववैलक्षण्यं विवक्षितम्। **तदा सतो** भावस्य **अपि विश्वस्य सतो** भावात् **वैलक्षण्यं** भावभेदवादिनो मम **स्वयं सदेव**। भावान्तरवैलक्षण्याङ्गीकारात्। **असतः** अभावात् **अपि वैलक्षण्यं** सुतरां भावाभावभेदवादिनः **स्वयं सदेव**। एवम् **असतः** अभावस्य **विश्वस्यासतः** अभावात् **वैलक्षण्यम्** अभावभेदवादिनः **स्वयं सदेव**। भावान्तरवैलक्षण्याङ्गीकारात्। **सतो** भावात् **वैलक्षण्यमपि** सुतरां **स्वयं सदेवेति तेनानिष्टं कथं भवेत्**॥ २॥

**परि०— यदि च प्रत्येकं भावाभाववैलक्षण्यमिति**। भावस्य भावादभावाच्च वैलक्षण्यमभावस्याभावाद्भावाच्च वैलक्षण्यमित्यर्थः। सत इत्यस्यासत इत्यस्य चावृत्त्या पञ्चम्यन्तत्वषष्ठ्यन्तत्वाभ्युपगमेन योजयति **तदा सतो भावस्येत्यादिना**।

**वं०प०— प्रत्येकमिति**। एकस्यैव भावरूपस्यैव प्रपञ्चस्य भावाभाववैलक्षण्यम्। एवमेकस्यैवाभावरूपस्य प्रपञ्चस्य भावाभाववैलक्षण्यं विवक्षितमित्यर्थः।

**श्रीनिधि०— यदि च प्रत्येकमित्यादि**। अत्र सर्वत्र पूर्वपूर्वपक्षेषु उक्तदोषाभावो मूलस्थपदानां योजना च द्रष्टव्या। **तेनानिष्टं कथं भवेदिति**। तथा च सिद्धसाधनं स्यादिति भावः।

**वा०चं०—** भेदपक्षे द्वितीयं निराकरोति **यदि चेति**। अस्मिंश्च पक्षे सतोऽसत इत्यस्य त्रिरावृत्तिर्भेदवादिनो वैलक्षण्यमित्यस्य चतुर्वारमिति ज्ञेयम्। भावस्य भावाद्भेद एवानुपपन्न इत्यतो हेतुमुपपादयति **भावान्तरेति**। सजातीयभाववैलक्षण्याभ्युपगमे विजातीयभाववैलक्षण्याभ्युपगमस्य कैमुत्यसिद्धतां सूचयितुं सुतरामित्युक्तम्। एवमुत्तरत्रापि द्रष्टव्यम्। अत्रोत्तरोत्तरपक्षाणां पूर्वपूर्वपक्षोक्तदोषोपमर्दन प्रवृत्तेः स्फुटमेव क्रमनिमित्तम्। अत्र तेनानिष्टं कथं भवेदित्यतःपरं दूषणोपपादनाभावस्थलेऽर्थान्तरतया निग्रहोऽभिमतो द्रष्टव्यः।

**वा०र०— भेदपक्षे द्वितीयमिति**। भावात्मके विश्वस्मिन्नुभयवैलक्षण्यसाधनं अभावात्मके च विश्वस्मिन्नुभयवैलक्षण्यसाधनमिति प्रत्येकमिति द्वितीयपक्षमित्यर्थः। भेदवादिनो वैलक्षण्यमित्यस्य चतुर्वारमिति। भेदवादिन इत्यनेन भेदवादिनः स्वयं सदित्येतावद्गृह्यते। यद्यपि सतो भावाद्वैलक्षण्यमपीति स्थले भेदवादिन इति न श्रूयत इति न तच्चतुर्वारपाठोपपादनं कर्तव्यं किन्तु त्रिवारपाठ एवोपपादनीयः। तथापि भेदवादिन इत्यस्य सतो भावस्यापीत्यादिस्थलत्रये भावभेदवादिन इत्यादिरूपेण भिन्नभिन्नव्याख्यानवत् उक्तस्थले प्रकारान्तरेण व्याख्यानस्यानुपयोगादभावभावभेदवादिन इति व्याख्यानस्य च समानन्यायतया द्वितीयस्थलोक्तव्याख्यानेनैव सूचितप्रायत्वं

वा सुतरामित्येकदेशस्मारणेन द्वितीयस्थलोक्तभावाभावभेदवादिन इत्यस्यानुवृत्या चतुर्थस्थले अभावभावभेदवादिन इत्यस्य लाभं वाऽभिप्रेत्यैव मूलप्रवृत्तिरन्यथा न्यूनतापत्तेरित्येवं चतुर्थस्थले भेदवादिन इत्यस्य संबन्धं सिद्धवत्कृत्यैव भेदवादिन इत्यस्य चतुर्वारफलोपपादनमिति न दोषः । चतुर्वारमित्यनन्तरम् आवृत्तिरिति वर्तते । अत्र च निरावृत्तिः चतुर्वारमावृत्तिरित्येतयोः त्रिः पाठो यथा स्यात्तथा आवृत्तिः । चतुर्वारं पाठो यथा स्यात्तथा आवृत्तिरित्यर्थो विवक्षितः । तेनात्र सतोऽसत इत्येतयोः श्रुतावृत्तिमेलनेन त्रिः पाठोपयुक्ततया द्विरावृत्तेरावश्यकत्वेऽपि भेदवादिनो वैलक्षण्यमित्यादेश्च श्रुतावृत्तिमेलनेन चतुर्वारं पाठोपयुक्ततया त्रिरावृत्तेरावश्यकत्वेऽपि सन्त इत्यादेस्त्रिरावृत्तेः भेदवादिन इत्यादेश्चतुर्वारमावृत्तेरनुपयोग इति शङ्कानवकाशः । एवं द्विरावृत्तिरिति पूर्वत्रापि द्विवारं पाठो यथा स्यात्तथा आवृत्तिरित्यर्थोऽवगन्तव्यः । तेन द्विवारं पाठोपयुक्ततया एकवारमावृत्तेरावश्यकत्वेऽपीत्यादिशङ्कानवकाशः । यद्वा आवृत्तिरावर्तनं प्रवर्तनं योजनमिति यावत् । तथा च द्विवारं योजनं त्रिवारं योजनं चतुर्वारं योजनमित्यर्थः । तच्च योजनं यथासंभवमावृत्त्येति सूचयितुमावृत्तिपदप्रयोग इति भाव इति न कश्चिद्दोष इति ज्ञेयम् । अत्र च टीकायामपि पदस्यैकस्यैकवारमावृत्तिः । एवमसतोऽभावस्येत्यत्रापि अपिशब्दस्याभावस्यापीत्येवं संबन्धस्य मूलाभिप्रेततया असतोऽभावस्यापीत्युत्तरमूलानुसारेण सिद्धत्वे चापिशब्दद्वयस्यैकवारमावृत्तिः एवमेवशब्दद्वयस्य सकृदावृत्तिरित्येतदपि उपलक्षणतया ज्ञातव्यमित्याशयः । **भेद एवानुपपन्न इति** । भावत्वरूपप्रतियोगितावच्छेदकस्यान्योन्याभावविरोधिनो विद्यमानत्वादिति भावः । **उपपादयतीति** । तद्भावत्वं प्रतियोगितावच्छेदकमिति भावेनेति भावः । तेनानिष्टं कथं भवेदिति पूर्वत्रोक्त्वा किं नामेति परं प्रत्युद्भावनीयनिग्रहस्थानप्रदर्शनवदेतद्योजनायां तदप्रदर्शनात् न्यूनत्वमित्यत एतत्स्थलव्याजेनैवंजातीयके सर्वत्रोपपादनप्रकारमाह **अत्र तेनेति** । अत्र प्रकरण इत्यर्थः । वक्ष्यति च लक्षणनिरासपरतया भाष्ययोजनावसरे मूलकारो यावत्तु पक्षेषु सिद्धार्थत्वपर्यवसानमिति । **अर्थान्तरतया निग्रह इति** । अर्थान्तरता परस्य स्यादित्यस्यानुवृत्तिस्तत्र कर्तव्येत्याशयः । उपपादनाभावस्थल इत्यनेनांशे सिद्धार्थतयेत्यादिस्थले नानुवृत्तिरित्युक्तं भवति ।

**विठ्ठ०— यदि च प्रत्येकमिति** । भावस्यापि भावाभाववैलक्षण्यं अभावस्याप्येवं उभयवैलक्षण्यं विवक्षितमित्यर्थः ।

**गूढ०—** किन्तु भावात्मके विश्वस्मिन् भावाभाववैलक्षण्यमभावात्मके विश्वस्मिन् भावाभाववैलक्षण्यस्य प्रत्येकं साधनान्न दोष इत्याशङ्क्याह **यदि चेति** । कथमित्यत्राह **भावान्तरेति** । तथाच पुनरप्यर्थान्तरतेति भावः । एवं च भेदवादिन इत्येतत् त्रेधा व्याख्यातं भवति । शङ्कते **भावाभावेति** । अस्य च त्वत्पक्षे सिद्धत्वान्नार्थान्तरतेति भावः । **तत्त्वानधिकरणत्वमिति** । भावत्वाभावत्वानधिकरणत्वमित्यर्थः । किमत्र भावाभावसमुदाये भावत्वानधिकरणत्वं अभावत्वानधिकरणत्वं साध्यते । उत भावाभावत्वमेकं तदनधिकरणत्वं अथवा भावे भावे भावत्वानधिकरणत्वं अभावत्वानधिकरणत्वं अभावेऽपीति ।

**प्रदीपः—** द्वितीयमनूद्य दूषयति **यदि चेत्यादिना** । द्वितीयमाशङ्कते **भावाभावेति** । अत्रापि पूर्ववत् विकल्पः ।

**२९३ सु०—** भावाभाववैलक्षण्यं नाम तत्त्वानधिकरणत्वं विवक्षितमिति चेत् । तथाऽपि **सतो** भावस्यापि **विश्वस्यासतः** अभावात् **वैलक्षण्यम्** अभावत्वानधिकरणत्वम् **अपि स्वयं सदेव । असतः** अभावस्य **विश्वस्य सतो** भावात् **वैलक्षण्यमपि** भावत्वानधिकरणत्वमपि मम **स्वयं सत्** एव । भावाभावभेदवादित्वात् । यदि हि भावेऽप्यभावत्वमभावेऽपि भावत्वमङ्गीकुर्यां कुतस्तदा भावाभावभेदवादः । तथा च **कथं तेन** साध्यमानेन **अनिष्टं मम भवेत्** ॥ ३ ॥

**वं०प०—** **तत्त्वानधिकरणत्वमिति** । भावत्वाभावत्वानधिकरणत्वमित्यर्थः । भावत्वानधिकरणत्वमभावेऽभावत्वानधिकरणत्वं च भावे स्वयं सदेवेति नानिष्टमित्याह **तथाऽपीति** ।

**श्रीनिधि०—** भावाभावभेदवादित्वे भावाभावयोरभावत्वभावत्वाङ्गीकारे किं साधकमित्यत आह **यदि हि भावेऽपीति । तेनानिष्टं कथं भवेदिति** । एवं भावत्वाभावत्वानधिकरणत्वस्य विभागेन सिद्ध्याऽपि प्रतिज्ञार्थसिद्धेरर्थान्तरतेति भावः ।

**वा०चं०—** द्वितीयं शङ्कते **भावेति** । तत्रापि समुदिते तत्त्वानधिकरणत्वमिति प्रथमे दोषमाह **तथापीति** । भावाभावभेदवादिनो भावाभावयोर्भावाभाववैलक्षण्येऽपि भावत्वाभावत्वानधिकरणत्वं कुतो धर्मिभेदेऽपि धर्मैक्यदर्शनादित्यतः प्रतिनियतविरुद्धधर्माणां धर्मिभेदहेतूनां न सामानाधिकरण्यमित्याशयेन हेतूच्छित्तिं विपक्षे बाधकमाह **यदि हीति** । अत्रापि सत इत्यादेर्द्विरावृत्तिरिति ज्ञेयम् ।

**वा०र०—** **द्वितीयमिति** । भावत्वाभावत्वानधिकरणत्वमिति द्वितीयमित्यर्थः । **प्रथम इति** । प्रागेवोभयत्रापीत्यादिनैतत्पक्षेऽपि विकल्पस्याभिहितत्वात्प्रथम इत्येवोक्तम् । एवं द्वितीयमित्युत्तरत्रापि । भावाभावभेदवादित्वमात्रं न प्रागिवात्रोपपादकं किन्तूपपादनसापेक्षमेव । अत एव पूर्वकल्पे भेदवादिनः स्वयं सदेवेत्येव योजनायां करणेऽप्यत्र कल्पे मम स्वयं सदेवेत्येव योजनानन्तरं हेतुत्वेन भेदवादिन इत्यस्य योजनां कृत्वा तदुपपादकत्वं च वर्णितम् । अथ प्रत्येकमित्यादौ तु पूर्वोपपादनं मनसि कृत्वा हेतुतयोपन्यासमात्रं कृतं मूले । अथ भावाभावाभिमतयोः सर्वथा भावत्वेत्याद्युत्तरत्र तु भेदवादिनो ममेति विशिष्टस्यापि तेनानिष्टमित्यनेनान्वय आश्रयिष्यत इत्याशयेन तदुपपादनव्यावर्त्यभूताप्रयोजकत्वशङ्काप्रदर्शनपूर्वकं तत्परिहारप्रकारं च दर्शयन्नेव तदुपपादनपरोत्तरमूलमवतारयति **भावाभावभेदेति** । भावाभावभेदवादिनो मते भावाभावयोर्भावाभावाभ्यां भिन्नत्वेऽपीत्यर्थः । **धर्मैक्येति** । घटभेदेऽपि तयोर्घटत्वरूपैकधर्माधिकरणत्वादिदर्शनादिति भावः । **प्रतिनियतेति** । प्रतिनियताश्च विरुद्धाश्च ये धर्मा इत्यर्थः । परमाणुषु न्यायमते विशेषाः प्रतिनियताः गोत्वाश्वत्वादयो विरुद्धा इति विवेकः । विरुद्धमात्रग्रहणे कर्तव्ये प्रतिनियतस्याप्यधिकस्योक्तिरन्यत्र भावत्ववत्येव भावत्वान्तरराहित्यमपि स्वमते युक्तम् । न्यायमते विशेषवदस्मन्मते सर्वधर्माणां प्रातिस्विकताया एव भिन्नाश्च भिन्नधर्माश्चेत्यादिना

वक्ष्यमाणवदिति सूचयितुम् । **अत्रापि सत इत्यादेरिति** । भेदपक्षे आद्यपक्ष इवात्रपक्षेऽपीत्यर्थः । आदिपदेन तत्रावृत्तत्वेन टीकोक्तानामसतो भेदवादिनो वैलक्षण्यं स्वयं सद्विश्वस्येत्येषां मध्ये भेदवादिन इत्येतद्विहायेतरपरिग्रहः । भेदवादिन इत्यस्य सकृदेव योजनात् । यद्वा भेदपक्षाद्यपक्ष इवैतदभावपक्षाद्यपक्षेऽपि भेदवादिन इत्यस्य प्रत्येकमेवान्वयः समानः । परन्तु पूर्वत्रोपपादनानपेक्षणादुभयत्र सिद्धवदनुवादः । अत्र तूपपादनस्यावश्यकत्वादेकयोक्त्यैवोभयोपपादनसत्त्वेन सकृदेव प्रतिज्ञाद्वये हेतूपन्यासपूर्वकं तदुपपादनं मूले । विवेककरणे तु भेदवादिन इत्यस्य स्थलद्वयसंबन्धिनो हेतुत्वेनायमुपन्यास इति ज्ञातुं शक्यम् । तथा च भेदवादिन इत्यस्यापि संग्रह इति ज्ञेयम् । द्विरावृत्तिश्च प्रागेव व्याख्याता ।

**गूढ०**— यद्वा भावानधिकरणत्वे सत्यभावत्वानधिकरणत्वमिति विशिष्टम् आहोस्विद्भावांशे भावत्वानधिकरणत्वम् अभावांशे अभावत्वानधिकरणत्वम् अभावाभावयोः सर्वथा भावत्वानधिकरणत्वम् अभावे सर्वथा अभावत्वानधिकरणत्वम् । नाद्य इत्याह **तथापीति** । **सत इति** । तत्र हेतुमाह **भावेऽपीति** । ननु भावाभावभेदवादित्वेऽपि भावे भावत्वाभावः अभावत्वे च भावत्वाभावः कथं सिध्यतीत्यत आह **यदि हीति** ।

**प्रदीपः**— आद्यं प्रत्याह **तथापीति** । भावाभावयोर्भेदेऽप्यभावभावत्वाधारत्वं किं न स्याद्धर्मिभेदेऽपि धर्मैक्यदर्शनादित्यत आह **यदि हीति** । सामान्यादिधर्माणां भिन्नधर्मिनिष्ठत्वेऽपि प्रतिनियतविरुद्धधर्माणां न तथात्वमित्यर्थः ।

**२९४ सु०— अथ प्रत्येकं भावाभावत्वानधिकरणत्वं विवक्षितमिति मन्येत । तदा सतो भावस्यापि विश्वस्य भावाभाववैलक्षण्यं भावाभावरूपत्वानधिकरणत्वं मम स्वयं सदेव । तथा असतः अभावस्य अपि विश्वस्य उक्तरूपं वैलक्षण्यं स्वयं सदेव । भावाभावभेदवादिनैकैकार्थस्योभयरूपताऽनङ्गीकारात् । 'भावे हि भावत्वमेव । नाभावत्वमपि । अभावे चाभावत्वमेव । न भावत्वमपी'त्यतः तेन साधितेन अनिष्टं मम कथं भवेत् ॥ ४ ॥**

**परि०— प्रत्येकं भावाभावत्वानधिकरणत्वं विवक्षितमिति** । अत्र पक्षत्रयं संभवति । भावाभावरूपं यत् तत्त्वानधिकरणत्वं वा एकैकस्य भावत्वानधिकरणत्वाभावत्वानधिकरणत्वरूपधर्मद्वयं वा भावत्वानधिकरणत्वविशिष्टमभावत्वानधिकरणत्वं साध्यमिति वा । तत्राद्ये दोषोक्तिपरतया योजयति **तदेति** । सत इति षष्ठ्यन्तत्वेनावृत्तस्यार्थः । **सतो भावस्यापीति** । सतोऽसतश्च वैलक्षण्यमित्यस्य प्रतिपदं भावाभाववैलक्षण्यमिति । तस्याप्यर्थः । **भावाभावत्वेत्यादि** । असत इत्यस्य षष्ठ्यन्तत्वेनावृत्तस्यार्थोऽसतोऽभावस्यापीति । **उक्तरूपं वैलक्षण्यं** भावाभावरूपत्वानधिकरणत्वलक्षणमित्यर्थः । **भावाभावभेदेति** । भावाभावयोरन्योन्यं भेदवादिनेत्यर्थः ।





**वं०प०— भावाभावत्वानधिकरणत्वमिति** । भावत्वे सत्यभावत्वं यत्तदनधिकरणत्वमित्यर्थः ।

**श्रीनिधि०— अथ प्रत्येकमिति** । अत्रापि किं भावत्वविशिष्टाभावत्वानधिकरणत्वं विवक्षितमुतैकैकस्य भावत्वानधिकरणत्वमभावत्वानधिकरणत्वं च विवक्षितमिति विकल्पं मनसि निधायाद्य आह **तदासत इत्यादि** । **मम कथं भवेदिति** । सुसाधमिति भावः ।

**वा०चं०—** द्वितीयं शङ्कते **अथेति** । भावेऽभावे च प्रत्येकं भावाभावत्वानधिकरणत्वं साधयन्प्रष्टव्यः । प्रत्येकमुभयानधिकरणत्वं साध्यमुतैकैकानधिकरणत्वमाहोस्विदेकैकानधिकरणत्वे वादिप्रतिवादिसिद्धेऽपरानधि-करणत्वं विप्रतिपन्नमधिकं साध्यते । आद्येऽपि समुदितोभयानधिकरणत्वं साध्यमुत विशकलितोभयानधि-करणत्वमिति । तत्र नाद्य इत्याह **तदेति** । इत आरभ्य सदसच्छब्दयोर्वैलक्षण्यमित्यनेनाप्यन्वयमभिप्रेत्य वा विवक्षावशादेव वा वैलक्षण्यमित्यस्य भावत्वाभावत्वानधिकरणत्वमिति व्याख्यातम् । भेदवादिन इत्यस्य प्रकृते हेतुत्वमुपपादयति **भावेति** ।

**वा०र०— द्वितीयमिति** । भावात्मके विश्वस्मिन् भावत्वाभावत्वानधिकरणत्वं साध्यते । एवमभावात्मकेऽपि तस्मिंस्तत्साध्यत इति प्रत्येकसाधनरूपमभावपक्षीयद्वितीयपक्षमित्यर्थः । **भावेऽभावे चेति** । भावात्मक इत्यादिरेवास्यार्थः । प्रष्टव्य इत्यतःपरं किमिति शेषः । **प्रत्येकमिति** । भावेऽभावे चेत्यर्थः । **उभयेति** । भावेऽभावे च प्रत्येकं भावत्वाभावत्वानधिकरणत्वमित्यस्य एकस्मिन् भावमात्रे तदुभयानधिकरणत्वं तथाऽभाव-मात्रे तदुभयानधिकरणत्वमिति पर्यवसानमाश्रित्यैकस्मिन् भावे भावत्वाभावत्वरूपोभयस्याप्यनधिकरणत्वमिति तथाऽभावेऽप्येकस्मिंस्तदिति प्रत्येकं तद्द्वयानधिकरणत्वं वेत्याद्यः कल्पः । भावे भावत्वानधिकरणत्वमात्रमभावे चाभावत्वानधिकरणत्वमात्रमित्येवं मिलित्वा प्राप्ते भावेऽभावे च तदुभयानधिकरणत्वे पर्यवसानमाश्रित्योतैवं केति द्वितीयः । भावेऽभावे चेत्युक्तस्यैकैकस्मिन् भावत्वानधिकरणत्वमात्रादेर्द्वितीयपक्ष इव साध्यत्वेऽपि वादिप्रति-वादिभ्यां भावे अभावत्वानधिकरणत्वस्याभावे च भावत्वानधिकरणत्वस्याङ्गीकारादभावत्वानधिकरणत्वेन वादिप्रतिवादिसंमते भावे भावत्वानधिकरणत्वमेवं भावत्वानधिकरणत्वेन वादिप्रतिवादिसंमतेऽभावेऽभावत्वा-नधिकरणत्वमित्येवं प्रत्येकं भावत्वाभावत्वानधिकरणत्वमिति पर्यवसानमाश्रित्याहोस्विदिति तृतीयः कल्प इति विवेचनीयम् । उतेत्यनन्तरमधिकमित्यनन्तरं च प्रत्येकमिति वर्तते । **आद्येऽपीति** । प्रत्येकमुभयानधिकरणत्व-मित्ति प्रथमपक्षेऽपीत्यर्थः । **समुदितेति** । प्रत्येकं भावाभावत्वानधिकरणत्वमिति मूलमर्यादया भावत्वे सति यदभावत्वमिति लाभोपपत्तेस्तद्भावत्वाभावत्वरूपसमुदायस्यानधिकरणत्वं प्रत्येकमिति प्रथमपक्षलाभः । तथा तन्मूलादेव भावत्वानधिकरणत्वमभावत्वानधिकरणत्वं चेति धर्मद्वयं प्रत्येकं भावेऽभावे च साध्यमिति द्वितीयकल्पलाभ इति विवेकः । इतीत्यस्येति प्रष्टव्य इति पूर्वेणान्वयः । **तत्रेति** । तेषु प्रधानाप्रधानविकल्पेषु प्रधानप्रथमकल्पस्य समुदितोभयानधिकरणत्वमित्याद्यो नेत्याहेत्यर्थः । नन्वेतदाद्यपक्षदूषणरूपसतो भावस्यापि विश्वस्य वैलक्षण्यमित्यादिमूले पूर्वोत्तरार्धयोजनाद्वयेऽपि वैलक्षण्यमित्येवानूद्य भावाभावत्वानधिकरणत्वमिति व्याख्यानं कृतम् । तत्कथं लभ्यत इत्यतो वैलक्षण्यमित्येतावन्मात्रात् तल्लाभायोगेऽपि पूर्वोत्तरार्धगत-





सदसच्छब्दयोर्योजनाद्वयेऽपि वैलक्षण्यमित्यनेन संबन्धस्य विवक्षितत्वादुक्तार्थलाभोपपत्तिरित्याह **अत्र सदसच्छब्दयोरिति** । एतद्वाक्ये अत्र सदसच्छब्दयोरित्येव पाठः । अत्रेत्येतत्स्थाने मूलपुस्तके इत आरभ्येत्यस्य केनचिद्विदुषा लिखनेन तस्यैव प्रचारात् । उत्तरयोजनासूतैकैकेत्यादिरूपोत्तरप्रथमद्वितीयपक्षनिराकरणपरासु तथापि सतो भावस्यापि विश्वस्यासत इत्यादि रूपेणेतःपूर्वतमयोजनावदेव षष्ठीपञ्चम्योराश्रयणेन योजनाकरणात्तत्रैतत्समाधानस्यानावश्यकत्वात् । अत्र तु सतोऽसत इत्येतत् द्वयं षष्ठ्यन्तमाश्रित्यैव सकृदेव योजनाकरणात् तत्स्थानद्वयगतसदसच्छब्दयोः पञ्चम्यन्ततया प्रत्येकं स्थानद्वये भावाभावत्वानधिकरणत्वलाभाय संबन्धाश्रयणमभिप्रेतमिति वक्तव्यमेवेति ज्ञेयम् । केचित्तु इत आरभ्येत्यस्यावध्यनुक्तेरेतत्कल्पीयायामेव तथा असतोऽभावस्यापीति द्वितीययोजनायामपि सदसतोः प्रतियोगित्वेनाकथनात्तदभिप्रायेणारभ्येत्युक्तम् । न तु तदुत्तरयोजनास्वप्युपयोगाभिप्रायेणेति न दोष इत्याहुः । यद्यन्वय एवाभिप्रेतस्तर्हि मुखतोऽनुक्त्ययोगः । इतरथा पूर्वोत्तरस्थलेष्वपि क्वचित्परित्यागः स्यादित्यतः पूर्वोत्तरयोजनासमभिव्याहारेणात्र वैलक्षण्यपदेन भावत्वेत्यादिविवक्षाया ज्ञातुं शक्यत्वात्तद्विवक्षया वात्र तथा व्याख्यातमिति समाधानान्तरमाह **विवक्षेति** । वैलक्षण्यं नाम भावत्वाभावत्वानधिकरणत्वं विवक्षितमित्याशय इत्यप्याहुः । यद्वा मूले अभावपक्षाद्यपक्षीययोजनायां वा तत्पूर्वयोजनासु वा सतो वाऽसतो वैकैकस्यैव प्रतियोगित्वेन वर्णनाद्यदि च प्रत्येकमिति भेदपक्षीयद्वितीये द्वयोरपि प्रतियोगित्वेन योजनेऽपि सदसत्प्रतियोगिकयोर्द्वयोर्वैलक्षण्ययोराश्रयणादत्र चोभयप्रतियोगिकवैलक्षण्यस्यैकस्यैव विवक्षेति वैलक्षण्यस्याप्रयोजकत्वात्सतो भावस्यापि सतोऽसतश्च वैलक्षण्यं भावत्वाभावत्वानधिकरणत्वमिति तथाऽसतोऽभावस्यापि सतोऽसतश्च वैलक्षण्यं तदुभयत्वानधिकरणत्वमिति योजनायाः भेदपक्षीयद्वितीयपक्षवदूह्यत्वमेवात्र वक्तुमिच्छार्थकविवक्षापदेनोच्यत इति ज्ञेयम् । **उपपादयतीति** । पूर्वयोजनासमभिव्याहारेणैकार्थस्योभयरूपतानङ्गीकाररूपार्थस्य प्रत्येतुमशक्यत्वात्पृथगुपपादनमिति भावः ।

**विठ्ठ०— अथ प्रत्येकमिति** । भावस्यापि भावाभावत्वाख्यधर्मानधिकरणत्वमेवमभावस्यापि इति प्रत्येकमित्यर्थः ।

**चषक**ः— ननु साध्यतया विवक्षितं भावाभाववैलक्षण्यं न भेदरूपं येन भावाभावरूपतत्तद्व्यक्तिवृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदमादायोक्तक्षत्यवकाशः अपि तु भावत्वाभावत्वरूपानुगतधर्माभावरूपमेवाधिकरणत्वांशनिवेशस्य मन्दप्रयोजनत्वादित्याशङ्कायां पूर्ववत्पक्षतावच्छेदकसामानाधिकरण्येन साध्यीकृ ततत्तदंशसत्त्वनियन्त्रितार्थान्तरतातादवस्थ्यमभिधत्ते **भावेत्यादि** । इयं च तृतीया ।

**गूढ०**— न द्वितीय इत्याह **अथ प्रत्येकमिति** । भावे भावत्वाभावत्वानधिकरणत्वं अभावे भावत्वाभावत्वानधिकरणत्वमिति प्रत्येकमित्यर्थः । कुत इत्यत आह **भावाभावेति** । तथाच सिद्धार्थतेति भावः ।

**प्रदीपः**— द्वितीयेऽपि किमयं निषेधः समुदायेऽपि पर्यवस्यति । अथ प्रत्येकं आद्यं दूषयत्यथेत्यादिना द्वितीयेऽपि पृथगनुमानाभ्यां अर्थद्वयं साध्यते किं वैकेन । आद्यमनूद्य दूषयति **अथेत्यादिना** । अंशे भावाभावयोः यथासङ्ख्यं अभावाभावत्वानाधारत्वसाधन इत्यर्थः । द्वितीयेऽपि समप्राधान्येनाहोस्विद्विशेषणविशेष्यभावेन ।





**२९५ सु०— अथैकैकस्य वस्तुनो भावत्वानधिकरणत्वमभावत्वानधिकरणत्वं च साध्यतया विवक्षितमिति मन्वीत। तथाऽपि सतो भावस्य अपि विश्वस्यासतः** अभावात् **वैलक्षण्यम्** अभावत्वानधिकरणत्वं **मम सत् एव**। **एवम् असतः** अभावस्य **अपि विश्वस्य सतो** भावात् **वैलक्षण्यं** भावत्वानधिकरणत्वं **स्वयं सदेव**। भावाभावभेदवादित्वात्। अतः **कथं मम तेनानिष्टं भवेत्। अंशे सिद्धार्थतया परस्य निग्रहात्। उभयसाधनाददोष इति चेन्न। असिद्धसन्निधानेऽपि सिद्धस्य तत्त्वानपायात्। विशिष्टसाधनान्नैवमिति चेन्न। तथाऽपि वैयर्थ्यानिस्तारात्॥ ५॥**

**परि०—** द्वितीयमाशङ्कते **अथैकैकस्येति**। भावे भावत्वानधिकरणत्वस्याभावे अभावत्वानधिकरणत्वस्य असिद्धत्वेऽपि अभावत्वानधिकरणत्वं भावत्वानधिकरणत्वं भावे अभावे च सिद्धमेवेति भावेनांशे सिद्धत्वोक्तिपरतया योजयति **तथापि सतो भावस्यापीति**। पूर्ववत्सदसत्पदयोरावृत्तिर्ध्येया। **अंशे सिद्धार्थतयेति**। पृथिवी इतरभिन्ना पृथिवीत्वादित्यत्र तु जलाद्यैकैकान्योन्याभावो न पृथिवीत्वोपहिते सिद्धः। अन्यथा तत्रापि दोषः स्यादेवेति भावः। तृतीयपक्षमाशङ्कते **विशिष्टेति**। साध्यताऽवच्छेदकैक्यान्नांशे सिद्धार्थतादोष इति भावः। **वैयर्थ्येति**। एकैकांशस्य सिद्धत्वेनासिद्धांशस्यैव परं प्रति साध्यत्वादिति भावः। अस्य वाक्यस्याप्रसिद्धविशेषणत्वे तात्पर्यमिति मिथ्यात्वनिरुक्तिभङ्गे न्यायामृते व्यक्तम्। अत उद्देश्यार्थत्वान्न वैयर्थ्यमित्यादिदोषानवकाशः।

**यादु०— वैयर्थ्यानिस्तारादिति**। भावेऽभावत्वानधिकरणत्वांशस्याभावे भावत्वानधिकरणत्वांशस्य च सिद्धत्वेन तत्साधने व्यर्थविशेषणत्वादिकमिति भावः।

**वं०प०— उभयसाधनादिति**। सिद्धस्याप्यसिद्धेन सहोच्चार्यमाणस्यासिद्धत्वमिति मया स्वीकारादिति भावः। **तत्त्वेति**। सिद्धत्वेत्यर्थः। **विशिष्टेति**। भावत्वानधिकरणत्वे सत्यभावत्वानधिकरणत्वमित्यर्थः। **वैयर्थ्येति**। अभावत्वानधिकरणत्वांश इत्यर्थः।

**कं०रा०— अंश इति**। भावरूपपक्षेऽभावत्वानधिकरणत्वांशेऽभावरूपपक्षे भावत्वानधिकरणत्वांशे सिद्धार्थतया परस्य निग्रहादित्यर्थः। **असिद्धेति**। असिद्धेन सहोक्तावपि सिद्धस्यांशस्य सिद्धत्वानपायात्तदंशे सिद्धसाधनं दुर्वारमिति भावः। भावत्वानधिकरणत्वविशिष्टाभावत्वानधिकरणत्वस्य साधनान्न सिद्धसाधनं विशिष्टस्यासिद्धत्वादिति शङ्कते **विशिष्टेति**। **तथाऽपीति**। सिद्धसाधनतापरिहारेऽपि विवादविषयस्यैव साध्यतया निर्देष्टव्यत्वेन विवादाविषयस्यापि विशेषणतया विशेष्यतया वा साध्यकोटावुपादाने वैयर्थ्यस्यानिस्तारादित्यर्थः।





**श्रीनिधि॰**— द्वितीयमाशङ्क्य समाधत्ते **अथैकैकस्येत्यादिना** । **अंशे सिद्धार्थतयेति** । पक्षैकदेशे साध्यसिद्धावपि न सिद्धसाधनता । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देशितत्वात् तथा च भूरितरेभ्यो भिद्यत इत्यादौ घटादीनामितरभेदे सिद्धेऽपि घटत्वाद्यवच्छेदेनैव तस्य सिद्धत्वेन पृथिवीत्वावच्छेदेन असिद्धत्वान्न सिद्धसाधनता । तथापि पक्षतावच्छेदकस्य यत्र नानात्वं तत्रैकपक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ अंशतः सिद्धसाधनता भवत्येव । एवं साध्यतावच्छेदकमपि यदा नाना तदा एकसाध्यतावच्छेदकावच्छेदेन पक्षे साध्यसिद्धावंशतः सिद्धसाधनता भवत्येवेति भावः । **वैयर्थ्यानिस्तारादिति** । एकस्यैव भावत्वाभावत्वानधिकरणत्वस्य सिद्धत्वादिति भावः ।

**वा॰चं॰**— द्वितीयं शङ्कते **अथेति** । अत्रापि पृथगनुमानाभ्यामुभयानधिकरणत्वं साध्यते **उतैकेनेति** । द्वितीयेऽपि समप्राधान्येन तत्साध्यते किंवा विशेषणविशेष्यभावेनेति विकल्पान्मनसि निधायाऽऽद्यं दूषयति **तथाऽपीति** । **अंश इति** । भावे विवक्षितानुमानद्वयेऽभावत्वानधिकरणत्वानुमानरूपस्याभावे विवक्षितानुमानद्वये भावत्वाधिकरणत्वानुमानरूपस्यांशस्य सिद्धार्थतयेत्यर्थः । द्वितीये प्रथमं शङ्कते **उभयेति** । द्वितीये द्वितीयं शङ्कते **विशिष्टेति** । यद्वा विशकलितोभयानधिकरणत्वसाधनेऽपि समप्राधान्येनोभयसाधनमभिमतं किंवा विशेषणविशेष्यभावेन । नाद्य इत्याह **तथाऽपीति** । एकांशस्य सिद्धत्वादिति भावः । ननु पक्षैकदेशे संपूर्णसाध्यसिद्धावंशतः सिद्धसाधनताया दोषत्वेऽपि सर्वस्मिन्पक्षे साध्यैकदेशसिद्ध्या तस्या अदोषत्वात्प्रकृते चोभयोर्मिलितयोः साधनान्न सिद्धार्थतेति शङ्कते **उभयेति** । उभयोर्मिलितयोः पक्षत्वेऽपि पक्षतावच्छेदकनानात्वेन क्वचिदधिकरणे पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावंशतः सिद्धसाधनतावदुभयोर्मिलितयोः साध्यत्वेऽपि साध्यताऽवच्छेदकनानात्वात्साध्यतावच्छेदकावच्छिन्नस्य पक्षतावच्छेदकावच्छेदेन सिद्धिरूपस्य सिद्धसाधनताबीजस्य सत्त्वादंशतः सिद्धसाधनत्वमेवेत्याशयेनाह **असिद्धेति** । यत् केनचित्पक्षतावच्छेदकनानात्वे वा साध्यताऽवच्छेदकनानात्वे वा नांशतः सिद्धसाधनं पक्षताऽवच्छेदकसामानाधिकरण्येन साध्यताऽवच्छेदकाक्रान्तसाध्यसिद्धावुद्देश्यायां संपूर्णमेव सिद्धसाधनम् । नांशतः सिद्धसाधनम् । पक्षताऽवच्छेदकावच्छेदेन साध्यताऽवच्छेदकावच्छिन्नसिद्धावुद्देश्यायामंशतोऽप्युद्देश्यसिद्धेरभावान्नांशतः सिद्धसाधनमिति दूषणमुक्तं तदनेनैव निरस्तं भवति । पक्षतावच्छेदकनानात्वस्थले क्वचिदधिकरणे पक्षताऽवच्छेदकावच्छेदेन साध्यसिद्धेर्जातत्वे साध्यतावच्छेदकनानात्वस्थले साध्यतावच्छेदकावच्छिन्नसाध्यैकदेशसिद्धिसद्भावे उक्तदूषकताबीजसद्भावेन पक्षांशे सिद्धसाधनताया दुर्वारत्वात्प्रयोजनसत्त्व एव च तथोद्देश्यतायाः कल्पनीयतया तदभावे स्वेच्छयैव तत्कल्पनाऽयोगाच्चेति । द्वितीयं शङ्कते **विशिष्टेति** । **वैयर्थ्येति** । न च गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यत्र तार्किकाङ्गीकृतभिन्नत्वस्यैव व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वादिह च भावत्वानाधारत्वे सत्यभावत्वानाधारत्वमिति प्रतीतेरुद्देश्यत्वान्न वैयर्थ्यमिति वाच्यम् । अभेदे सत्यपि घटः कलश इति सामानाधिकरण्यदर्शनादप्रयोजकत्वनिरासाय विशिष्टधियस्तत्रोद्देश्यत्वेऽपि प्रकृते तादृशप्रयोजनादर्शनेन विशिष्टधियं उद्देश्यत्वानुपपत्तेः । न च तुच्छे ब्रह्मणि वाऽभावत्वानाधारत्वेऽपि ज्ञानबाध्यत्वादर्शनादप्रयोजकतानिरासायैव प्रकृतेऽपि तथा धिय उद्देश्यत्वमिति वाच्यम् ।





तुच्छादावुभयानाधारत्वेऽपि ज्ञानबाध्यत्वादर्शनिन तथा धिय उद्देश्यत्वेऽप्यप्रयोजकत्वानिरासेन तन्निरासाय विपक्षबाधकान्तरस्यैवानुसर्तव्यत्वे तेनैव भावत्वानाधारत्वमात्रसाधनेऽपि तन्निराससंभवेन विशेषणवैयर्थ्यस्य दुर्वारत्वादिति भावः ।

**वा०र०— द्वितीयमिति** । विशकलितोभयानधिकरणत्वमित्याद्यकल्पीयद्वितीयमित्यर्थः । ननु पक्षैकदेशे संपूर्णसाध्येति वक्ष्यमाणटीकोक्तरीत्या सर्वस्मिन्पक्षे साध्यैकदेशसिध्यांशे सिद्धसाधनत्वस्य दोषत्वाभावादत्रांशे तदुक्तिर्न घटत इत्यतोऽत्राप्यनुमानद्वयस्याभिप्रेततयांश इत्यस्य चानुमानद्वयमध्ये एकस्मिन्ननुमान इत्यर्थाश्रयणान्न दोष इत्याशयं दर्शयितुमुभयसाधनादित्यादेश्चाभिप्रायं व्यक्तं कुर्वन् विवंक्षितविकल्पप्रकारं दर्शयन्नुत्तरवाक्यमवतारयति **अत्रापीति** । एकेनेतीत्यस्य बुध्या विवेकन विकल्पमित्युत्तरेण संबन्धः । समप्राधान्येनेत्यादि वदतैव पक्षद्वयस्याभेद उपपादितः । पृथगनुमानाभ्यामुभयसाधने कथमंश इत्युक्तिस्तत्र संपूर्णसिद्धसाधनस्यैव प्राप्तेरित्यतोंऽशे सिद्धेत्यस्य प्रसिद्धार्थं विहायार्थान्तरमाह **भाव इत्यादिना** । **द्वितीये प्रथममिति** । एकेनानुमानेनोभयानधिकरणत्वं साध्यत इति द्वितीये समप्राधान्येन साध्यत इति प्रथममित्यर्थः । **द्वितीयमिति** । द्वितीये द्वितीयं विशेषणविशेष्यभावेनेत्युक्तमित्यर्थः । अत्र पक्षे सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनतेत्येतन्मिथ्यात्वमानखण्डनव्याख्यानस्थविमतं सद्विलक्षणमसद्विलक्षणं चेति प्रतिज्ञार्थः स्यादित्याद्युक्तिविरोधः । तत्रैकानुमानपक्ष एवांशे सिद्धसाधनत्वोक्तेरित्यतस्तदप्युपपादयितुं तदुक्तप्रकारेणानुमानैक्यपक्षमेवोपादायांशपदस्वारस्यानुसारेण तत्राद्ये किं सत्त्वे सति असत्यत्वेत्यादिन्यायामृतोक्तरीत्या तत्र संभावितविकल्पप्रदर्शनपूर्वकं तथापीत्युत्तर वाक्यमवतारयति **यद्वा विशकलितेति** । उभयसाधनादित्यस्य पूर्वत्रेवेह समप्राधान्यपक्षाशङ्कात्वाभावाद्वैयर्थ्यमित्यत एतत्पक्षोज्जीवनाय शङ्कापरत्वान्न दोष इत्याशयेन तथा शङ्कापरतया तदवतारयति **ननु पक्षैकदेश इति** । पक्षतावच्छेदकावच्छेदेन साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धौ सिद्धसाधनता तावदीश्वरवादिनं प्रति क्षित्यादिसकर्तृकत्वानुमानस्याकरसिद्धा । पर्वतमग्निमत्तया निश्चितवन्तं प्रति पर्वतोऽग्निमानित्यादि च सिद्धसाधनोदाहरणं प्रसिद्धमेव । पृथिवीतरभिन्नेत्यादावुदाहृतस्थल इव पक्षतावच्छेदकैक्येन पृथिव्यैकदेशघटादौ घटादिर्न जलादिरिति जलादित्रयोदशप्रतियोगिकान्योन्याभावस्य सिद्धत्वेऽपि न सिद्धसाधनत्वम् । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेन तदभावात् । यदा पुनरयमेतत्संयोगी एतत्वादित्यादौ पक्षतावच्छेदकसामानाधिकरण्येन साध्यप्रतीतेरुद्देश्यतया बाधितांशमपहायाबाधितांशे साध्यसिद्धिवत् पृथिव्यामितरभेदानुमानेऽपि पक्षतावच्छेदकसामानाधिकरण्येन साध्यप्रतीतेरुद्देश्यता तदा तत्राप्यंशे सिद्धसाधनतैव । अत एव पृथिवीतरभेदानुमाने घटस्य दृष्टान्तत्वाश्रयणेन व्यतिरेकित्वं त्यजन्ति । तेन घटादिव्यतिरिक्त एव पक्ष इति प्रास्यांशे सिद्धसाधनता तस्यापि पक्षीकारे प्राप्नोतीति सिध्यति । यत्र चानित्ये वाङ्मनसे मूर्तत्वादित्यादौ पक्षतावच्छेदकनानात्वं तत्रांशे सिद्धसाधनता दूषणं भवत्येव । साध्यतावच्छेदकस्यैकत्वेन तदवच्छिन्नस्य पक्षतावच्छेदकावच्छिन्ने क्वचिदधिकरणे सिध्या सिद्धसाधनदूषकताबीजसद्भावात् । तदेवं पक्षतावच्छेदकैक्यस्थले वा तन्नानात्वस्थले वा पक्षैकदेशे साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धावेवांशतः सिद्धसाधनताया दोषत्वदर्शनादित्याशयः । तस्या अदोषत्वादिति पाठः ।

नञभावपाठे क्वाचित्के तु तस्येत्यनेन सिद्धसाधनतापदोपस्थापितं सिद्धसाधनत्वं सामान्येन परामृश्यते । सिद्धसाधनत्वमित्यपि वक्ष्यमाणत्वात् । साध्यतावच्छेदकावच्छिन्नस्य सिध्यभावे दूषकताबीजाभावात् । अन्यथा प्रामाण्यं परतो ज्ञायत इत्यादौ ज्ञायमानत्वमात्रादेः सिध्यांशे सिद्धसाधनतापत्तेरिति भावः । प्रकृते तु नैकदेशस्य साध्यतेत्याह **प्रकृते चेति** । मिलितयोः साधनेऽपि समप्राधान्यादेव साध्यतावच्छेदकनानात्वात् तन्नानात्वे च पक्षतावच्छेदकेत्युक्तसिद्धसाधनता दूषणताबीजप्राप्तिसंभवान्नानुपपत्तिरित्येतद्दृष्टान्तेनाह **उभयोर्मिलितयोरिति** । अनित्ये वाङ्मनसे इत्यादाविति शेषः । **क्वचिदिति** । वाग्रूप इत्यर्थः । **अवच्छेदकेति** । यत्किञ्चिदवच्छेदकावच्छेदेनेत्यर्थः । **साध्येति** । साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धावित्यर्थः । **बीजस्य सत्त्वादिति** । भावाभावरूपे पक्षेऽभावत्वानधिकरणत्वं भावत्वानधिकरणत्वयोरुभयोरपि साध्यतावच्छेदकावच्छिन्नयोर्मध्ये एकैकस्यैकैकसाध्यतावच्छेदकावच्छिन्नस्य सिध्योक्तबीजस्य सत्त्वादित्यर्थः । न्यायामृते असत्त्वात्यन्ताभावांशे सिद्धसाधनत्वाच्चेति दूषणमुक्तम् । तस्याद्वैतसिद्धिकृता खण्डनं कृतम् । नैवं पक्षतावच्छेदकावच्छेदेन साध्यैकदेशसिद्धावप्यंशे सिद्धसाधनम् । उभयाभावगोचरसमूहालम्बनानुमितेरिहोद्देश्यतया साध्यैकदेशांशे तस्याजातत्वाभावात् । उद्देश्यसिद्धावेव च सिद्धसाधनात् । यदि च प्रत्येकं साध्यतावच्छेदकावच्छिन्नसाध्यप्रतीतिरुद्देश्या तर्हि तयोरेकसाध्यस्य सिद्धौ संपूर्णमिव सिद्धसाधनं स्यान्नांशे तदित्यंश इत्ययोगः । न चैवं पक्षतावच्छेदकनानात्वेऽप्यंशतः सिद्धसाधनतोक्तरीत्या प्रत्याख्यातुं शक्येति वाच्यम् । **इष्टापत्तेरिति** । तदर्थतोऽनूद्य तद्दूषणमपि स्वोक्तसिद्धसाधनतादूषकताबीजसद्भावेन दूषणत्वोपपादनन्यायेन दुष्टमित्याद्याह **यत्केनचिदित्यादि** । यद्यप्यत्र साध्यतावच्छेदकनानात्वे अंशतः सिद्धसाधनत्वं न दोष इत्येवाशङ्कनीयम् । समप्राधान्येन धर्मद्वयसाधनपक्षत्वात् । न तु पक्षतावच्छेदकनानात्वेऽपि । तस्येहाप्रस्तुतत्वात् । प्रत्येकं भावाभावत्वेति पक्षीयैकैकस्य वस्तुन इत्येतन्मूलोक्तपक्षे अनुमानयोर्भेदस्यैव सत्त्वेन पक्षद्वयैकैकानुमानीयपक्षतावच्छेदकनानात्वस्येहाभावाच्च । तथापि परेण न चैवं पक्षतावच्छेदकेत्यादिना पक्षतावच्छेदकनानात्वस्थलेऽप्यंशतः । सिद्धसाधनत्वाभावप्रसङ्गमाशंक्येष्टापत्त्या परिहारः कृतस्तेन तदुभयस्थलेऽपि परकीयोपपादनप्रकारसाम्यमंशतः सिद्धसाधनत्वाभावसंमतिश्च लब्धेति मनसि कृत्वा स्वयमुभयमेलनेनैव तदनुवादः कृत इत्यदोषः । नांशत इति प्रतिज्ञाय तद्धि सामानाधिकरण्येनेत्युक्तोद्देश्ये वाऽवच्छेदकावच्छेदेनेत्युक्तोद्देश्ये वेति विकल्प्योभयमपि क्रमेण निराकरोति **पक्षतावच्छेदकसामानाधिकरण्येनेति** । अत्र च पक्षतावच्छेदकनानात्वपक्षमङ्गीकृत्य दूषणप्रवृत्तेस्तदैक्यस्थलीयपक्षतावच्छेदकसामानाधिकरण्यवदिह पक्षतावच्छेदकसामानाधिकरण्यं न विवक्षितम् । अपि तु समूहालम्बनरूपप्रतीतेरुद्देश्यत्वसिध्यर्थतया परेण यत्किञ्चित्पक्षतावच्छेदकावच्छेदेन साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धिपक्षस्य दूष्यतया एकैकपक्षतावच्छेदकावच्छिन्नेष्वप्यंशे सिद्धसाधनताया अत्राप्रस्तुतत्वाच्च पक्षतावच्छेदकसामानाधिकरण्येनेत्यस्य यत्किञ्चित्पक्षतावच्छेदकावच्छेदेनेत्यर्थः । साध्यतावच्छेदकाक्रान्तसाध्येत्यस्यापि यत्किञ्चित्साध्यतावच्छेदकावच्छिन्नसाध्येत्येवार्थः । साध्येऽपि साध्यतावच्छेदकनानात्वस्य प्रस्तुत्या परतो ज्ञायत इत्यत्र साज्ञानमानत्वस्यैकदेशत्ववद्भावत्वानधिकरणत्वादेरेकदेशत्वाभावात् । इदं पुनरवधेयम् । पक्षतावच्छेदकसामानाधिकरण्येनेत्यस्य पक्षतावच्छेदकनानात्वस्थलीयत्वाद्यत्किञ्चित्पक्षतावच्छेदकावच्छेदेन साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धावुद्दे-





श्यायामिति योजनीयम् । साध्यतावच्छेदकनानात्वस्थलीयत्वात्साध्यतावच्छेदकाक्रान्तसाध्यसिद्धावित्यस्य तदनुसारेण पक्षतावच्छेदकावच्छेदेन यत्किञ्चित्साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धाविति योजनीयम् । न त्विद-मुभयमेकस्थलीयमिति भ्रमितव्यम् । संपूर्णमिवेत्येतदप्युक्तपक्षद्वयानुसारेण प्रत्येकमुद्देश्यसिध्येति व्याख्येयमिति । **नांशत इति** । उक्तोद्देश्यमध्येऽप्येकदेशमात्रसिध्यभावादिति भावः । **पक्षतावच्छेदकावच्छेदेनेति** । यावत्पक्षता-वच्छेदकावच्छेदेन यावत्साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धावुद्देश्यायामित्यर्थः । यत्किञ्चित्पक्षस्य पूर्वत्र निराकरणेन यावत्पक्षस्यैव समूहालम्बनानुमितेरुद्देश्यत्वमिति वदतोऽभिप्रेततयाऽत्र निर्देशात् । **अंशतोऽपीति** । यावत्पक्षतेति विशेषणादेव पक्षतावच्छेदकनानात्वस्थलीय यत्किञ्चित्तदवच्छेदेन साध्यतावच्छेदकेत्युक्तसिद्धावपि तदुच्छेदेनोक्तोद्देश्यासिद्धेः । यावत्साध्यतेत्युक्तत्वादेव यत्किञ्चित्साध्यतेत्युक्तसिद्धावप्युद्देश्यासिद्धेरित्येवं पक्षांशे वा साध्यांशे वोद्देश्यसिद्धेरभावादित्यर्थः । अनेनैवेत्युक्तमेव दर्शयति **पक्षतावच्छेदकनानात्वस्थल इति** । अनित्ये वाङ्मनसे इत्यादावित्यर्थः । **पक्षतेति** । यत्किञ्चिदिति शेषः । **साध्येति** । साध्यतावच्छेदकावच्छिन्नेति शेषः । एतावता समूहालम्बनानुमितेरुद्देश्यत्वपक्षेंऽशे सिद्धसाधनता नायातीत्युक्तम् । प्रकृते च समप्राधान्येन विशकलितोभयानधिकरणत्वसाधनाश्रयणमिति पक्ष एवांशतः सिद्धसाधनताया दीयमानत्वेन तत्पक्षे तत्परिहारायोग एवेत्याशयः । नन्विह समूहालम्बनसिद्धावुद्देश्यायामित्यस्य तथोद्देशाश्रयणेन यत्किञ्चित्पक्षस्यानाश्रयणादित्यत्र तात्पर्यान्न पक्षान्तरस्थदोषोऽभिप्रेतपक्ष इत्यत आह **प्रयोजनेति** । विशिष्टस्योद्देश्यत्वाश्रयणे निमित्ताभावः । भाव एव भावत्वानधिकरणत्वस्याभाव एव चाभावत्वानधिकरणत्वस्य सिद्धिरेव प्रत्येकं भावत्वाभावत्वानधिकरणत्वं साधयत उद्देश्या; सा च यत्किञ्चित्साध्यतेत्युक्तरीत्या जातैव । अथ वृथा समूहालम्बनानुमितेरुद्देश्यत्वकल्पनं स्वेच्छयैवेति यदि तर्हि न तन्निरासाय वयं प्रयतामहे । स्वेच्छाकल्पितमपि च निराकरिष्यमाणविशिष्टसाधन-पक्षान्तर्भूतमिति तन्निरासेनैव लब्धनिरासत्वान्न पृथङ्निरासापेक्षेत्याशयः । समूहालम्बनरूपानुमित्युद्देश्यत्वदूषणाय तरङ्गिणीकारैस्तदुद्देश्यत्व एव तस्या असत्त्वाभावांशे पक्षतावच्छेदकावच्छेदेन सिद्धं यत्साध्यतावच्छेदकाव-च्छिन्नं साध्यं तद्विषयसिद्धिरूपत्वेन सिद्धसाधनत्वाभिधानमित्युक्तम् । तत्तु कण्टकोद्धारे उक्ततद्विषयसिद्धिरूपत्वेऽपि उद्देश्यसमूहालम्बनसिद्धेरजातत्वात् । अन्यथोक्तन्यायेन पक्षतावच्छेदकनानात्वस्थलेऽप्युक्तरीत्या समूहालम्बन-प्रतीतेरुक्तविषयसिद्धिरूपत्वेन तदुद्देश्यत्वपक्षेंऽशे सिद्धसाधनतापत्तेरिति खण्डितम् । तथा समूहालम्बनप्रतीते-रुद्देश्यत्वाभावादिति चोक्तम् । तदपि प्रयोजनसत्त्व एवेत्यादिना स्फोरितमिति ज्ञेयम् ॥ इति यत्केनचित्पक्षे-त्यादिटीकासु बोधिता । तेन प्रीता बुधाः सन्तु वाक्यार्थादरसंयुताः ॥

**द्वितीयमिति** । विशेषणविशेष्यभावेनोभयसाधनमिति द्वितीयमित्यर्थः । न्यायामृतोक्तरीत्या शङ्कते **न च गुणादिकमिति** । **समानाधिकृतत्वादिति** । शुक्लः पट इति सामानाधिकरण्यवत्त्वादित्यर्थः । यदि चाभेद इति न्यायामृतानुसारेणाह **अभेदे सत्यपीति** । गुणादिकं भिन्नाभिन्नमित्यनुमानेऽभेदरूपसाध्यवत्यपि घटकलशादा-वविद्यमानस्य समानाधिकृतत्वस्याभेदप्रयोजकत्वायोगः । तस्मिन्सत्यप्यभवतस्तेन विनापि भवतस्तदप्रयोजकत्वा-दित्युक्तत्वेन साध्यं विनापि हेतुभवनस्थल इव साध्ये सत्यप्यभवनस्थलेऽप्यप्रयोजकत्वप्राप्तेरिति भावः । तर्हीहापि





साध्ये सत्यपि हेतोरभावेनाप्रयोजकत्वप्राप्त्या विशिष्टधिय उद्देश्यत्वं संभवतीति शङ्कते **न च तुच्छ इति** । उक्तरीत्या अप्रयोजकत्वप्राप्तौ तन्निरासाय विशिष्टधिय उद्देश्यत्वमित्युक्तमसत् । भावत्वानधिकरणत्वे सत्यभावत्वानधिकरणमिति विशिष्टधिय उद्देशपक्षेऽपि तुच्छब्रह्मणोः सत्यप्युभयानधिकरणत्वे ज्ञानबाध्यत्वादर्शनेनाप्रयोजकतेति पूर्ववदप्रयोजकत्वस्य प्राप्तेरतः तस्या उद्देश्यत्वाश्रयणेऽपि तत्र तच्छङ्कानिरासाय विपक्षे बाधकान्तरमेव भवताऽनुसर्तव्यम् । तथात्वे च तेनैव बाधकान्तरेण भावत्वानाधारत्वमात्रसाधने प्राप्ताप्रयोजकत्वशङ्काया अपि निराससिध्युपपत्त्या विशिष्टधिय उद्देशकल्पनाया निर्मूलत्वेनोक्तं यद्विशेषणवैयर्थ्यं तन्न परिहृतमित्याह **तुच्छादाविति** । न चैवं न्यायामृतविरोधः । तत्रोक्तरीत्याऽप्रयोजकत्वशङ्कापरिहाराय विशिष्टधिय उद्देश्यत्वाङ्गीकारादिति वाच्यम् । तत्राप्यस्य प्रकारस्य संमतत्वेऽपि तुष्यतु दुर्जन इति न्यायेनांशे सिद्धसाधनत्वव्यर्थविशेष्यत्वाभावयोरुक्तत्वेन तदविरोधात् । एतदर्थं च नापि व्यर्थविशेष्यत्वमित्यत्र कथञ्चिदित्यनुवर्तनीयमिति भावः ।

**विट्ठ०**— न भावाभावत्वं नामैको धर्मः किन्त्वेकस्यैव भावत्वरूपाभावत्वरूपधर्मद्वयानधिकरणत्वं विवक्षितमिति शङ्कते **अथैकैकस्येति** । मिलितस्योभयस्य साध्यत्वात् एकांशस्य सिद्धत्वेऽपि अंशान्तरस्यासिद्धतया न दोष इत्याशयेन शङ्कते **उभयेति** । साध्यतावच्छेदकैक्यात् नांशे सिद्धार्थता इत्याशयेन शङ्कते **विशिष्टसाधनादिति** । **वैयर्थ्यानिस्तारादिति** । भावत्वानधिकरणत्वविशिष्टाभावत्वरूपावच्छेदकैक्येऽपि भावे अभावत्वानधिकरणत्वरूपभागस्याभावे च भावत्वानधिकरणत्वरूपभागस्य सिद्धत्वेन वैयर्थ्यानिस्तारादित्यर्थः ।

**चषक**:— विमतिविषयीकृतां भावरूपामभावरूपां वैकैकव्यक्तिं पक्षीकृत्य भावत्वाभावत्वाभावसाधनान्न व्यक्तिभेदेनोक्तक्षत्यवकाश इत्याशङ्कायामेवमपि भावत्वाभावत्वोभयवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावमादाय सिद्धसाधनता दुर्वारेत्याह **अथेति** । इयं च चतुर्थी । अथ तादृशैकैकव्यक्त्युद्देश्यकभावत्वाभावत्ववृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावविधेयकानुमितेरुद्देश्यतोपगमान्नोक्तक्षत्यवकाश इत्यतस्तथापि गुणो गुणाभाववान् क्रियाभाववान् । गुणत्वादित्यादौ समूहालम्बनानुमितेरिव प्रकृतेऽपि समूहालम्बनानुमितेरुद्देश्यताप्रतीत्या तादृशानुमितौ चाभावत्वाभाववान् भाव इत्यादिसिद्धीनां विरोधितयांशे सिद्धार्थता दुष्परिहरेत्याह **अंशे सिद्धार्थतयेति** । प्रकृते व्यासज्यवृत्तिधर्मावच्छिन्नैकविधेयतानिरूपकताकधर्मावच्छिन्नैकव्यक्तिनिष्ठोद्देश्यताकसमूहालम्बनात्मकानुमितेरुद्देश्यतोपगमेनैतस्याश्च तादृशसिद्ध्यप्रतिबध्यतया क्षत्यनवकाशादित्याशयेन आशङ्कते **उभयेति** । नव्यमते तादृशानुमितेस्तादृशसिद्ध्यप्रतिबध्यत्वेऽपि प्राचीनमते एतद्विषयकानुमितेः एतद्विषयकसिद्धेर्विरोधित्वमित्युपगमेनोक्तक्षतितादवस्थ्यमाह **असिद्धसन्निधानेऽपीत्यादि** । अथ भावरूपां तादृशीं व्यक्तिं पक्षीकृत्य, सामानाधिकरण्यप्रत्यासत्त्या अभावत्वाभावविशिष्टभावत्वाभावस्तादृशीमभावरूपां पक्षीकृत्य तादृशप्रत्यासत्त्या भावत्वाभावविशिष्टाभावत्वाभावः साध्यते । इत्थं च भावपक्षकानुमानेऽभावत्वाभावांशस्याभावपक्षकानुमाने च भावत्वाभावांशस्य साध्यतावच्छेदककोटिनिविष्टत्वोपगमेन साध्यत्वानुपगमेनोक्त-





क्षत्यनवकाशादित्याशङ्कायामेवमपि गुणकर्मान्यत्वविशिष्टसत्ताऽभाववान् गुणकर्मान्यितरत्वादित्यादौ साध्यशरीरनिविष्टविशेषणांशस्यानैकान्त्यवारकतेव प्रकृते तत्फलकतायाः दुरुपपादतया, व्यापके व्यर्थविशेषणता न दोष इति परिभाषया प्रमेयवह्निमान् धूमादित्यादाविवोपरञ्जनमात्रफलितायाश्चागतिकतयोक्तभङ्ग्यपि न श्रेयसीत्याह **विशिष्टेत्यादिना** । इयं च पञ्चमी । इदमेव प्रतीकमुपाददानाः भावेऽभावत्वानधिकरणत्वांशस्य सिद्धत्वेन तत्साधने व्यर्थविशेषणत्वादिकमिति भाव इत्यपि व्याचक्रिरे । अस्य पक्षस्याप्रसिद्धविशेषणत्वे तात्पर्यमिति मिथ्यात्वनिरुक्तिभङ्गे न्यायामृते व्यक्तमित्यपि स्थितम् ।

गूढ०— तृतीयं शङ्कते **अथैकैकस्येति** । एवं हि को दोषं उक्त इत्यत आह **अंश इति** । भावे अभावत्वानधिकरणत्वांशो अभावे भावत्वानधिकरणत्वांशो इत्यर्थः । **उभयेति** । भावत्वानधिकरणत्वाभावत्वानधिकरणत्वरूपोभयसाधनादित्यर्थः । **तत्त्वानपायादिति** । सिद्धत्वानपायादित्यर्थः । अत्र पक्षे सतो असतश्चेत्यनयोः षष्ठ्यन्ततत्वमेवेति भावः । चतुर्थं शङ्कते **विशिष्टेति** ।

प्रदीपः— आद्यमनूद्य दूषयति **उभयेत्यादिना** । द्वितीयमनूद्यापवदति **विशिष्टेत्यादिना** । विशेषणविशेष्यभावस्य नियतत्वात् विशेषणांशे विशेष्यांशे सिद्धार्थता स्यादित्यर्थः ।

**२९६ सु०— अथ भावाभिमते भावत्वानधिकरणत्वमभावाभिमते चाभावत्वानधिकरणत्वं साध्यते । अतो नोक्तदोष इति चेन्न । तथाऽपि सतो भावस्य अपि विश्वस्य सतो वैलक्षण्यं भावत्वानधिकरणत्वं मम स्वयं सदेव । कथं भावत्वभेदवादिनो नैकमेव भावत्वं सर्वभावेष्वनुगतम् । किं नाम प्रतिभावं भावत्वानि भिद्यन्ते । प्रतिपादयिष्यते चैतत् । तथा च भावोऽपि भावत्वान्तरानाधारो भविष्यति । एवम् असतः अभावरूपस्य अपि विश्वस्यासतो वैलक्षण्यम् अभावत्वानधिकरणत्वं मम स्वयं सदेव । कथम् । अभावत्वभेदवादिना अभावेऽप्यभावत्वान्तराभावस्वीकारात् । तथा च तेनानिष्टं कथं भवेत् । परस्यैव सिद्धार्थताऽनिस्तारात् ॥ ६ ॥**

परि०— सद्वेदेत्यत्र भावप्रधानत्वमुपेत्याह **भावत्वभेदवादिन इति** । नन्वनुगतधर्मस्य प्रमितस्य कथमपलापः । तादृशधर्माभावे शक्तिव्याप्तिकारणतानामग्रहप्रसङ्ग इत्यत आह **प्रतिपादयिष्यत इति** । वैशेषिकाधिकरणे 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयत' इत्यादिना । अनुगतधर्माभावस्तदभावेऽपि व्युत्पत्त्यादिग्रहश्चोपपादयिष्यत इत्यर्थः ।





**यादु०— प्रतिपादयिष्यते चैतदिति** । 'नरत्वादिकमप्येवं तत्तद्धर्मतयेष्यते । न सर्वधर्म एकोऽस्ती'-त्यत्रेत्यर्थः ।

**कं०रा०— उक्तदोषः** वैयर्थ्यरूपदोषः ।

**श्रीनिधि०— प्रतिपादयिष्यते चैतदिति** । 'न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नग' इत्यादिनेति भावः ।

**वा०चं०—** नन्वस्तु तर्हि प्रत्येकमेकैकानधिकरणत्वमिति द्वितीयः । एकैकानधिकरणत्वपक्षेऽपि भावेऽभावत्वानधिकरणत्वस्य अभावे च भावत्वानधिकरणत्वस्य साधने, उक्तरीत्या सिद्धार्थतायामपि भावे भावत्वानधिकरणत्वस्याभावे चाभावत्वानधिकरणत्वस्य साधने न सा । अन्यथासाध्यसिद्धेरसंभवेन नार्थान्तरताऽपि । एकैकानधिकरणत्वस्य साधनान्न वैयर्थ्यमपीत्याशयेन शङ्कते **अथेति** । अत्रापि भावे भावत्वानधिकरणत्वमभावे वाऽभावत्वानधिकरणत्वं च यथाकथञ्चिद्विवक्षितं सर्वथा वा । नाद्य इत्याह **तथाऽपीति** । ननु भावत्वा-भावत्वयोरुपाधित्वेऽपि परम्परासंबद्धजातेरेवोपाधित्वाज्जात्यादेश्चानुगतप्रत्ययाद्यन्यथाऽनुपपत्त्यैकत्वस्य सिद्धत्वात् कथमेतदित्यतो जातेरपि प्रतिव्यक्तिभेदेऽप्यनुगतप्रत्ययादिनिर्वाहस्य सामान्यपरीक्षायां वक्ष्यमाणत्वान्नानुपपत्ति-रित्याशयेनाह **प्रतिपादयिष्यते चैतदिति** । ननु भावत्वादिभेदाङ्गीकारमात्रेण किमुक्तं भवतीत्यतो विवक्षितार्थ-सिद्धिरुक्ता भवतीत्याशयेनाह **तथा चेति** । **सिद्धार्थतेति** । यथाकथञ्चिद्भावत्वाद्यनधिकरणत्वस्य विवक्षितस्य सिद्धत्वादिति भावः ।

**वा०र०—** अत्र पक्षे पूर्वपक्षेषूक्तसिद्धसाधनत्वार्थान्तरत्ववैयर्थ्यरूपदोषत्रयमपि नास्तीति क्रमेणाह **एकैकेति** । **न सेति** । सिद्धार्थता नेत्यर्थः । **उपाधित्वेऽपीति** । उपाधित्वेनोपाधेश्चानुगतत्वस्यानावश्यकत्वेऽपी-त्यपिशब्दार्थः । **जातेरेवेति** । कस्य वा पुरुषधौरेयस्य विशेषत्वोपाधिप्रविष्टा जातिर्ज्ञातचरेति वदता पटवर्धनेनापि तदितरत्र तदङ्गीकारेण न्यायामृते तथात्वादिति भावः । **वक्ष्यमाणत्वादिति** । वैशेषिकनये व्युत्पत्तिरपि हि सादृश्येनैव गम्यत इत्येतदनुभाष्यमूलेऽस्ति तावत्सादृश्यं नाम पदार्थान्तरमित्यादिनेति शेषः । **यथाकथञ्चिदिति** । अनेनाद्यपक्षदूषणत्वं प्रदर्शितम् ।

**स०व्र०— प्रतिपादयिष्यते चैतदिति** । न सर्वधर्म एकोऽस्तीत्यादिना ।

**विठ्ठ०— प्रतिपादयिष्यत इति** । न सर्वधर्म एकोऽस्तीत्यत्रेति शेषः । परस्यैवेत्यतःपरमनिष्टं भवेदिति शेषः ।

**चषक०—** ननु भावरूपां तादृशीं पक्षीकृत्य भावत्वाभाव एवाभावरूपां च तादृशीमभावत्वाभाव एव साध्यत इति नोक्तदोष इत्याशङ्कायामेवमपि भावत्वाभावत्वादीनामपि प्रातिस्विकतत्तद्व्यक्तित्वकल्पनायाः सिद्धान्ते





"नरत्वादिकमप्येवं तत्तद्धर्मतयेष्यत" इत्यत्र समर्थयिष्यमाणतया सिद्धसाधनतातादवस्थ्यं चालनीन्यायेन दुर्वारमित्याह **अथेत्यादिना अनिस्तारादित्यन्तेन**। इयं च षष्ठी।

**गूढ०**— पञ्चमं शङ्कते **अथेति** । हेतुं पृच्छति **कथमिति** । ननु भाव इत्यनुगतव्यवहारेण भावत्वस्यैकत्वावगमात्। कथं भेद इत्यत आह **प्रतिपादयिष्यत इति**। वैशिषिकपरीक्षायामिति शेषः।

**प्रदीपः**— उक्तदोषपरिजिहीर्षया शङ्कते **अथेति**। अभावत्वानाधारत्वं भावस्य भावत्वानाधारत्वं यथा-कथञ्चिदपि नास्तीत्युच्यते, सर्वथा वा नाद्य इत्याह **तथापीति** । सर्वभावानुगतभावत्वस्य कथं भेद इति चेन्न सत्तादिधर्माणां सर्वत्रानुगमाभावस्य सामान्यपरीक्षायां वक्ष्यमाणत्वादित्याह **लोकमिति** । अभावत्वमप्येवमेवेति बोद्धव्यम्।

**२९७ सु०— अथ भावाभावाभिमतयोः सर्वथा भावाभावत्वे न स्त इत्यर्थो विवक्षितः। तथाऽपि सत एव भावस्यैव असतो वैलक्षण्यम् अभावत्वानधिकरणत्वं स्वयं सदेव नियतं भवत्येव। एवम् असत एवाभावस्यैव सतो वैलक्षण्यं भावत्वानधिकरणत्वम् अपि स्वयं सदेव। यतस्तस्मात् विश्वस्य तेन साधितेन भेदवादिनः अनिष्टं कथं भवेत्। इदमुक्तं भवति। यदि प्रागभावादिकं पक्षीकृत्याभावत्वानधिकरणमिति साध्यते। तदा तस्य भावत्वं प्रतिज्ञातं स्यात्। भावस्यैवाभावत्वानधिकरणत्वनियमात्। द्वौ नञौ हि प्रकृतमर्थं सातिशयं गमयतः। एवं वियदादिकं पक्षीकृत्य भावत्वानधिकरणत्वे साध्यमाने तस्याभावत्वं प्रतिज्ञातं स्यात्। अभावस्यैव भावत्वानधिकरणत्वनियमात्। भावनिषेध एव ह्यभावः। तथा च विश्वस्य भावाभावविभागस्य च परेणाभ्युपगतत्वान्न भावाभावभेदवादिनो ममानिष्टं किञ्चित्। किन्तु भावाभावव्यतिकरमात्रम्। तत्साधनं च प्रकृतानुपयुक्तमिति॥ ७॥**

**परि०— सर्वथा भावाभावत्वे न स्त इति**। भावे भावत्वानां सर्वेषामभावः। भावत्व-सामान्याभाव इति यावत्। एवमभावेऽप्यभावत्वसामान्याभाव इत्यर्थः। चोऽवधारण इत्युपेत्याह **सत एवेति**। असत एवेति च। दोषोक्तेरस्फुटत्वादाह **इदमुक्तमिति**। **परेणापीति**। सत्यत्व-वादिनाऽपीत्यर्थः। **व्यतिकरमात्रमिति**। विनिमयमात्रम्। न तु भावाभाववस्तुनोरभाव इत्यर्थः। तदपि तवानभिमतमेव किलेत्यत आह **तत्साधनं चेति** । **प्रकृतेति** । अनिर्वाच्यत्वरूप-मिथ्यात्वानुपयुक्तमित्यर्थः।





**वं०प०— सर्वथेति** । यदेकं भावत्वं भावेऽस्ति यदेकमभावत्वमभावेऽस्ति तदपि नास्तीत्येवं भावे सर्वथा भावत्वं नास्ति । अभावे च सर्वथाऽभावत्वं नास्तीति साध्यंत इत्यर्थः । द्वौ नञाविति न्यायस्यात्रासंभवादाह **अभावस्यैवेति** ।

**कं०रा०— किन्त्विति** । किंतु भावाभावव्यत्यासमात्रं साधितमित्यर्थः । **तत्साधनमिति** । भावाभावव्यतिकरसाधनं च प्रकृतानिर्वचनीयसिद्धावनुपयुक्तमित्यर्थः ।

**श्रीनिधि०— द्वौ नञौ इति** । अभावत्वानधिकरणमित्यत्र अकार एको नञ् अनधिकरणमित्यत्रापर इति द्रष्टव्यम् । **व्यतिकरमात्रम्** व्यतिक्रममात्रम् । **प्रकृतानुपयुक्तमिति** । अनेनानिर्वचनीयत्वासिद्धेरिति भावः । तदा भावाभावाभिमतयोरभावत्वभावत्वानधिकरणत्वे वादिप्रतिवादिसंमते इत्यनेनाभावत्वानधिकरणत्वभावत्वानधिकरणत्वयोः पक्षतावच्छेदकत्वं विवक्षितमिति ज्ञेयम् ।

**वा०चं०—** द्वितीयं शङ्कते **अथेति** । स्वरूपार्थकस्वयंशब्दतात्पर्यकथनं नियतमिति । प्रकृतोपयुक्ततया सदित्यस्य व्याख्यानं भवतीति । एतावत्पर्यन्तं भेदवादिन इत्यत्रत्यविशेषणांशस्य हेतूपपादकत्वं ममेत्यभिप्रेतविशेष्यांशस्य तेनानिष्टमिति साध्यान्वय इत्यभिमतम् । अत्रोत्तरत्र च हेतूपपादकत्वासंभवाद्विशिष्टस्यापि तेनानिष्टमित्यनेनान्वय इत्याशयेनाह **भेदवादिनोऽनिष्टमिति** । ननु पूर्वोत्तरार्धोक्तयोर्भावस्यैवाभावत्वानधिकरणत्वमभावस्यैव भावत्वानधिकरणत्वमिति नियमयोस्तेनानिष्टमिति साध्येनान्वयः संभवतीति नियमद्वयोक्तावपि भावाभावयोः सर्वथा भावाभावत्वे न स्त इति साधनस्यानिष्टत्वानपायात् । न च तादृशनियमोक्तेर्भावाभावयोस्तथा साधनं बाधितमित्यत्र तात्पर्यात्कथं मां प्रत्यनिष्टता परं प्रति च कथं नानिष्टता तथा साधनस्येति वाच्यम् । तथा सति भावादेरेवाभावत्वाद्यनधिकरणत्वमित्यत्र प्रमाणप्रतिपादकोत्तरयोजनाऽन्तर्भावापत्त्या नियमोक्तिमात्रपरयोजनायां तथा तात्पर्यासंभवात् । नियमद्वयानुपपादनाच्च नैतद्योजना युक्तेत्यतो नैतद्धेतुद्वयं प्रति तेनानिष्टमित्युक्तस्य साक्षात्साध्यत्वमपि तु साध्यान्तरं मध्येऽभिमतम् । हेतूपपादनप्रकारश्च प्रसिद्धन्यायादिसिद्धः सुलभ एवेत्याशयेन भाष्याभिप्रायमाह **इदमुक्तमिति** । नन्वत्र भावत्वानधिकरणत्वे साध्ये भावस्य भावत्वाधिकरणत्वेन वाऽभावत्वानधिकरणत्वेन वा पक्षता एवमभावत्वानधिकरणत्वे साध्येऽभावस्य चाभावत्वाधिकरणत्वेन वा भावत्वानधिकरणत्वेन वा पक्षता उभयत्राप्याद्ये व्याघातापातेन भावत्वेऽभावत्वे च साध्यपर्यवसानानुपपत्त्या वक्ष्यमाणार्थान्तरानुपपत्तिः । अत एव च भावाभिमत इत्यादावभिमतपदोपादानम् । उभयत्रापि द्वितीये उत्तरयोजनान्तर्भावापत्त्या भावत्वाभावत्वयोः प्रतिज्ञातार्थपर्यवसानासिद्धिरेवेत्यतो नोभयथाऽपि तयोः पक्षताऽपि तु प्रागभावत्ववियदादित्वादिनेति नानुपपत्तिरित्याशयेनाह **प्रागभावादिकं वियदादिकमिति** । अत्र भाष्यपूर्वोत्तरार्धोक्तोपपादनानुसारेणाभावपक्षकोक्त्यनन्तरं भावपक्षोक्तिरिति द्रष्टव्यम् । यदीत्यारभ्य स्यादित्यन्तं साध्याध्याहारः । एवमुत्तरत्राप्येवमित्यादि स्यादित्यन्तम् । तत्र पूर्वोत्तरार्धोक्तनियमरूपहेत्वोरुक्तिर्भावस्यैवाभावस्यैवेति । अनधिकरणत्वमिति ह्यभावत्वनिषेध एव पर्यवस्यति । अत एव पूर्वं भावत्वाभावत्वे न स्त इत्युक्तम् ।





एवं च निषेधविशिष्टभावत्वनिषेधस्य विशेषणीभूतनिषेधनिषेधविषयकत्वस्य सविशेषणे हीति न्यायसिद्धत्वान्निषेधनिषेधत्वरूपातिशयलाभाय च नञ्द्वयसार्थक्यसंभवान्निषेधनिषेधे भावत्वविधिरेव सिद्धो भवतीत्याशयेनासन्न भवतीत्युक्ते च द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति सदेव भवतीति कर्मनिर्णयं मनसि निधायाह **द्वौ नञाविति**। तत्प्रतिक्षेपरूपस्य तन्निष्ठासाधारणधर्मानधिकरणत्वं प्रसिद्धमेवेत्याशयेन 'भावस्य हि निषेधे तु नाभावस्य निषेधनमि'त्यनुव्याख्यानं मनसि निधाय आह **भावनिषेध एव हीति**। ननु भेदवादिन इत्यस्यानिष्टमित्यनेन संबन्धेऽपि कथमुपयोग इत्यतः प्रतिज्ञापर्यवसानलब्धस्य विश्वस्मिन्भावाभावविभागस्य तेनानिष्टमित्युक्तसाध्ये हेतुत्वेनान्वयप्रदर्शनपूर्वकं तं घटयति **तथा चेति**। विश्वस्य, भावाभावविभागस्य वाऽभावो यदि प्रतिज्ञानबलाल्लभ्येत तर्हि भावाभावविभागवादिनो ममानिष्टप्रसङ्गेऽपि, न भावाभावविभागस्यैव प्रतिज्ञाबलाल्लाभे स इति प्रदर्शनाय भेदवादिन इत्युक्तमिति भावः। प्रागभावादेर्भावत्वादि कथं तव नानिष्टमित्याशङ्कते **किन्त्विति**। तस्यानिष्टत्वमङ्गीकरोति **भावाभावेति**। मात्रशब्दसूचितं परं प्रति दूषणं स्पष्टयति **तदिति**।

**वा०२०— अभिप्रेतेति**। प्रागध्याहृतत्वोक्तेरत्राभिप्रेतत्वमात्रमुक्तम्। ननु पूर्वोत्तरार्धयोरिति शङ्कावाक्ये साध्येनान्वयः संभवति। नियमद्वयेति पाठः। संभवतीत्यनन्तरमिति शब्दोऽधिकः। मूलकोशेऽभावात्। तेनानिष्टमिति साध्येनेत्यस्य कथं भवेदित्येतत्सहिततेनानिष्टमित्यनेनोक्तं यत्साध्यं मां प्रत्यनिष्टत्वाभावरूपं तेनेत्यर्थः। अन्वयो न संभवति। तत्साध्यं प्रति तद्धेतोः प्रयोजकत्वं न संभवतीत्यर्थः। तदप्रयोजकत्वमेवोपपादयति **नियमद्वयेति**। **कथं मां प्रतीति**। बाधितसाधने प्रतिज्ञातार्थसिध्यभावेनानिष्टाभावादित्याशयः। **परं प्रतीति**। परस्यैव बाधेन निगृहीतत्वप्राप्तेरित्याशयः। **इत्यत्रेति**। इति प्रतिज्ञायामित्यर्थः। **प्रमाणप्रतिपादकेति**। स्वयं सदेवेत्यस्य प्रमितमेवेति व्याख्यानाद्यतः सतो भावस्यैवेत्युत्तरयोजनायां भावादेरेवाभावत्वाद्यनधिकरणत्वमित्यत्र प्रमाणप्रतिपादनम्। उक्तार्थस्य प्रमाणसिद्धत्वप्रतिपादकोत्तरयोजनेति यावत्। फलतस्तु भावादेरेवाभावत्वाद्यनधिकरणत्वमित्येतन्नियमद्वयसाधकप्रमाणेन भावाभावयोः सर्वथाऽभावत्वेन भावे त्वास्त इति साधनस्य बाधितार्थत्वमित्येतत्प्रतिपादकोत्तरयोजनेति सिध्यतीति ज्ञातव्यम्। तात्पर्यासंभवान्नैतद्योजना युक्तेति संबन्धः। तदयोगे हेत्वन्तरमाह **नियमद्वयेति**। अनुपपादितस्य तस्य कार्याकारित्वादिति भावः। **साध्यान्तरमिति**। यदि प्रागभावादिकमित्यादि स्यादितीत्यन्तमित्यादिकं साध्यमित्युत्तरटीकायां व्यक्तम्। **न्यायादिसिद्ध इति**। आदिपदेन प्रसिद्धिपरिग्रहः। नन्वत्र भावत्वानधिकरणत्वे साध्य इत्यादि टीकाग्रन्थे भावाभावाभिमतयोरित्यादि पूर्वमूलानुसारेण भावाभावक्रमानुसरणेन भावत्वेत्यादेः प्रथममुक्तावपि यदि प्रागभावादिकमित्युत्तरमूलस्थपर्यवसानोपपादनक्रमानुसारेणाभावभावपक्षकक्रममनुसृत्योत्तरत्र भावत्वेऽभावत्वे चेत्यादेरुक्तिरिति न विरोधः। अत एव वक्ष्यति। **अत्र भाष्यपूर्वोत्तरार्धोक्तेत्यादि**। तथा च यथायोग्यं संबधस्य व्युत्पत्त्या अभावस्य अभावत्वानधिकरणत्वे साध्येऽभावत्वाधिकरणत्वेन पक्षतायां व्याघातेन भावत्वे पर्यवसानानुपपत्त्येति। एवं भावस्य भावत्वानधिकरणत्वे साध्ये भावत्वाधिकरणत्वेन पक्षतायां व्याघातेनाभावत्वे पर्यवसानानुपपत्त्येति योजनीयमिति ज्ञातव्यम्। उभयत्राप्याद्ये व्याघातेति। भावत्वाधिकरणत्वेन भावं पक्षीकृत्य तत्र भावत्वानधिकरणत्वे साध्ये हि भावत्वेन भावे

उपस्थिते सति तत्राभावत्वे पर्यवसानं भावो न भाव इति वक्तव्यतया प्राप्तं तत्र च व्याघातापत्त्या तथा पर्यवसानमेवायुक्तम् । एवमभावत्वाधिकरणत्वेनाभावं पक्षीकृत्य तत्राभावत्वानधिकरणत्वे साध्येऽप्यभावत्वेनाभावे उपस्थिते तत्र भावत्वपर्यवसानमपि व्याघातादयुक्तम् । ततश्च तदुभयपर्यवसानाश्रयणेनानिष्टाभावकथनमुख-प्रवृत्तार्थान्तरानुपपत्तिरित्यर्थः । उक्तरूपेण भावाभावयोः पक्षता न पूर्ववादिसंमता चेत्याह **अत एवेति** । **उभयत्रापि द्वितीय इति** । भावपक्षके भावत्वानधिकरणत्वसाधनादिपक्षयोः भावस्याभावत्वानधिकरणत्वेनाभावस्य च भावत्वानधिकरणत्वेन पक्षतेति द्वितीय इत्यर्थः । **उत्तरयोजनेति** । यतः सतो भावस्येत्याद्युत्तरयोजनेत्यर्थः । भावाभावयोर्भावत्वाभावत्वानधिकरणत्वे वादिप्रतिवादिसंमते इत्यादेः परशङ्कितस्योत्तरयोजनामूलस्यैवात्र परेण शङ्कितत्वप्राप्त्या तत्पक्षोक्तप्रमाणबाधेनैव दुष्टत्वप्राप्त्या चेत्याशयः । **भावत्वाभावत्वयोः प्रतिज्ञातार्थेति** । भावो भावत्वानधिकरणमिति प्रतिज्ञातार्थस्य यदभावत्वे पर्यवसानं तथाऽभावोऽभावत्वानधिकरणमिति प्रतिज्ञातार्थस्य यद्भावत्वे पर्यवसानं तदसिद्धिरिति पूर्वोक्तमेव क्रमव्युत्क्रिमनिमित्तं स्वीकृत्य यथायोग्यं संबन्धाश्रयणेन योजनीयम् । **प्रागभावादिकं वियदादिकमितीति** । अभावपक्षकप्रयोगदूषणोपपादनावसरे यदि प्रागभावादिकमित्यत्र प्रागभावादेः पक्षस्य प्रागभावादित्वेन कीर्तनम् । भावपक्षकोक्तप्रयोगदूषणोपपादनावसरे चैवं वियदादिकमित्यत्र वियदादेः पक्षस्य वियदादित्वेनैव कीर्तनमित्यर्थः । भावाभावाभिमतयोः सर्वथा भावत्वेन स्त इत्यादिपरशङ्कानुसारेण भावपक्षकप्रयोगस्य प्रथमत्वप्राप्त्या व्युत्क्रिमेणोपपादनायोग इत्यत आह **अत्र भाष्येति** । भावस्यैवाभावत्वा-नधिकरणत्वनियमादित्यादिमूलानुसारेण पूर्वोत्तरार्धयोरभावभावपक्षकप्रयोगदूषणपरत्वस्यैव स्पष्टत्वादिति भावः । **भावस्यैवाभावस्यैवेति** । यदीत्यादिप्रथमसाध्ये भावस्यैवाभावत्वेति हेतोरुक्तिः । एवं वियदादीति द्वितीय-साध्ये चाभावस्यैव भावत्वेति हेतोरुक्तिरिति योज्यम् । अभावत्वानधिकरणत्वोक्त्या वक्ष्यमाणरीत्या निषेध-निषेधाश्रयणेऽपि न भावत्वपर्यवसानसिद्धिः । अभावत्वाधिकरणत्वाभावस्यैव तदुक्तिलब्धत्वेन तत्र न्यायाश्रयणे भावत्वाधिकरणत्वस्यैव प्राप्ततया भावत्वाप्रातेरित्यतोऽभावत्वानधिकरणमित्यनेन पर्यवसानगत्याऽभावो नेत्येव लभ्यत इति न दोष इत्याह **अनधिकरणत्वमिति हीति** । अभावत्वानधिकरणत्वमित्येतद्रीत्येत्यर्थः । एवमेव भावत्वानधिकरणत्वमित्येतदपि भावत्वनिषेध एव पर्यवस्यतीत्यपि बोध्यमिति सूचयितुं सामान्येनानुवादो विशेषेण पर्यवसानं चोक्तमिति न दोष इति बोध्यम् । **इत्याशयेनेत्यादि** । अत्र च कर्मनिर्णयं मनसि निधाय इत्युत्तरत्रोक्तेस्तद्व्याख्यानजयतीर्थ्यनुसारेणायमाशयः कथित इति न भ्रमितव्यम् । तट्टीकायामसन्न भवतीत्युक्ते चेत्यादेः सदसन्न भवतीति वाक्यप्रतिपाद्यम् । एकेन नञर्थेन विशिष्टतया तद्वाक्यप्रतिपाद्यत्वे सति तन्नञर्थ-विशिष्टान्वयि तद्वाक्यप्रतिपाद्य नञर्थान्तरवत्वात् । अघटो न भवतीति वाक्यप्रतिपाद्यघटवदित्यनुमानेन उक्तवाक्यात् तल्लाभवर्णनपरतया योजनेन सविशेषणे हीत्यादि न्यायमूलकतयोक्तप्रकारस्य तत्रावर्णनात् । उभयनिषेधे गौरवादिति पूर्वमूलानुसारेणान्यतरस्यैव निषेधो वाच्य इत्येवं लाघवमूलकसविशेषणे हीति न्यायविषयतया न सुरां पिबेदित्यादेः प्रागुक्त्या द्वौ नञावित्युदाहृतन्यायविषयस्य प्रागुक्तन्यायविषयात् अघटो न भवतीत्यादेः भेदसिद्धेश्च । अत एव समयचरणे शून्याद्यधिकरणगतान्यत्सदसतोर्विश्वमित्यादिभाष्यमूलव्याख्यावसरे उक्तन्यायार्थतयोक्तानुमानमेव वर्णयिष्यते टीकायाम् । किन्नाम कर्मनिर्णयटीकोक्तरीत्योक्तानुमानप्रकारेणेहा-





प्यनुमानस्य भावः । अभावो नेति वाक्यप्रतिपाद्य इत्यादिरूपस्य स्पष्टत्वाच्छिष्यैरेव स प्रकार ऊह्य इत्याशयेन टीकाकृतोक्तकर्मनिर्णयवाक्यस्य सविशेषणे हीति न्यायमूलकमपरं व्याख्यानमपि कर्तुं शक्यमिति चाभिप्रेत्य स्वयं वर्णकान्तरमुक्त्वा कर्मनिर्णयवाक्योदाहरणं कृतम् । द्वौ नञावित्येतन्न्यायविषयस्य सविशेषणे हीति न्यायविषयत्वस्यापि संभवात् । उपपादनप्रकारभेदेन न्यायानर्थक्याभावश्चेति न कश्चिद्दोषः । यदि च निधाय चाहेति चशब्दयुक्तः पाठस्तदा स्वोक्तः सविशेषणे हीति न्यायमूलसमाधिः 'न सिद्धं चान्यसाधनमि'त्येतन्मूलोक्तरीत्या प्राप्त उपर्येवोक्तः । कर्मनिर्णयमित्युक्त्यैव तट्टीकोक्तानुमानस्यापि बोध्यत्वमित्याशयः सूचित इति विवेकः सुधीभिर्विज्ञेयः । एतन्न्यायस्वरूपं निषेधस्य निषेधोऽपि विधिरेवेत्यादिविचैवेत्यधिकरणीयानुभाष्यमूले अहि-कुण्डलाधिकरणमूले तट्टीकादौ च स्पष्टं भविष्यति । वैलक्षण्यं सतश्चापीत्येतन्मूलटीकादौ च प्राक् व्युत्पादितं मूलस्थहिशब्दव्याख्यानतया प्रसिद्धिं वर्णयंस्तन्मूलतया मूलाभिप्रेतं च दर्शयन्नुत्तरवाक्यमवतारयति **तत्प्रतिक्षेपेति** । भावप्रतिक्षेपस्येति वक्तव्ये सामान्येन वचनं व्याप्तिसूचनाय । तेन सन्न भवतीत्यादावपीदमुपपादनं बोध्यम् । अत एव सत्त्वप्रतिक्षेपरूपत्वादसत्त्वस्येत्युक्तं कर्मनिर्णये । अनेनैव कर्मनिर्णयोऽपि मूलत्वेन सूचित इति अनुव्याख्यानमित्यत्र कर्मनिर्णयं चेत्युपलक्षणया ज्ञातव्यमिति ज्ञेयम् । इतःपरं द्वितीयेऽप्येतदेवोत्तरमित्येत-न्मूलव्याख्यानपर्यन्तं व्याकर्तव्यमस्ति । ....... ।

**स०व्र०**— ननु भावाभावयोरभावत्वभावत्वाधारत्वासंभवात् भावत्वाभावत्वाधारत्वनिषेधेऽनिर्वाच्य-त्वसिद्धेः कथमनिष्टं न भवेदित्यत आह **इदमुक्तमिति** ।

**विठ्ठ०**— भावत्वेनाभिमतस्य सर्वथा भावत्वानधिकरणत्वम् अभावत्वे नाभिमतस्य च सर्वथा भावत्वानधिकरणत्वं विवक्षितमित्याशङ्क्य निषेधति **अथ भावाभावाभिमतयोरिति** । दोषोक्तेरस्फुटत्वादाह **इदमुक्तं भवतीति** ।

**चषक०**— अथ भावरूपायां तादृशव्यक्तौ यावन्ति भावत्वानि प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकाभावकूटवत्त्वमभावरूपायां तादृश्यां यावन्त्यभावत्वानि प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिता-काभावकूटवत्त्वमेव सिसाधयिषितमिति विशेषान्तरविरहेऽप्येकैकविशेषसमवधानेन न क्षतिरित्याशङ्कायां भावे तादृशाभावत्वाभावकूटे सिसाधयिषिते अभावरूपत्वमभावे च तादृशाभावत्वाभावकूटे तस्य भावरूपत्वमेव प्रत्यज्ञासीन्नानिर्वचनीयरूपत्वमिति भावस्याभावत्वमभावस्य च भावत्वमेव पर्यवासासीन्नानिर्वचनीयत्व-मित्यर्थान्तरता दुर्वारेत्याशयेनाह **अथेत्यादिनाऽनुपयुक्तमित्यन्तेन** । इयं च सप्तमी ।

**गूढ०**— षष्ठं शङ्कते **अथ भावाभावाभिमतयोरिति** । किमेतावता अस्मिन्पक्षे दूषणमुक्तमित्यत आह **इदमुक्तं भवतीति** ।





**प्रदीपः**— द्वितीयमनूद्य दूषयति **अथेत्यादिना** । ननु भावाभावयोरभावभावत्वाधारत्वासंभवाद्भावाभावत्वाधारत्वनिषेधे अनिर्वचनीयत्वसिद्धेः कथमनिष्टं न भवेदित्यत आह **इदमुक्तमिति** । इदानीं पूर्ववादी स्वाभिप्रायमुद्घाटयति भावाभावत्वानाधारत्वमात्रसाधनात्सर्वथेति विशेषणाच्च न वैयर्थ्यसिद्धार्थते । अभावभावत्वाधारत्वावश्यंभावान्नार्थान्तरतेत्यभिप्रायः ।

**२९८ सु०— भावाभावाभिमतयोरभावभावत्वानधिकरणत्वे वादिप्रतिवादिसंमते, भावाभावत्वानधिकरणत्वमप्यधिकं साध्यते । अतो नोक्तदोष इति चेन्न । यतः सतो भावस्यैव विश्वस्य वियदादेः असतो वैलक्षण्यम् अभावत्वानधिकरणत्वं स्वयं सदेव प्रमितमेव । यतश्च असतः अभावस्यैव विश्वस्य प्रागभावादेः सतो वैलक्षण्यं भावत्वानधिकरणत्वं स्वयं सदेव । अतो भेदवादिनः तेन विपरीतेन प्रतिज्ञातेन अनिष्टं कथं भवेत् । प्रतिज्ञातार्थासिद्धौ खल्वनिष्टं भवेत् । न हि प्रमाणबाधितोऽसौ सिद्ध्यति । व्यावहारिकभावत्वाभावगोचरं प्रमाणं तत्त्वविषयेण अनुमानेनैव बाध्यत इति चेन्न । यतोऽस्माकं तावद्भावाभावत्वविषयं प्रमाणं तत्त्वगोचरमेव । अन्यथा चक्रकादिप्रसङ्गादतिप्रसङ्गाच्चेति ॥ ८ ॥**

**परि०**— शङ्कते **भावाभावाभिमतयोरिति** । **नोक्तदोष इति** । व्यतिकरमात्रदोषो नेत्यर्थः । **भावत्वाभावत्वगोचरमिति** । भावाभावयोः क्रमाद्भावत्वाभावत्वगोचरमिति योज्यम् । तत्त्वविषयेणानुमानेनैवेति । विवादपदं सदसद्विलक्षणं बाध्यत्वादिति प्रागुक्तेनेत्यर्थः । **चक्रकादीति** । सिद्धे च भावत्वादिगोचरमानस्यातत्त्वावेदकत्वे तद्बाधाभावसिद्धिः । सिद्धे च तस्मिन्ननुमानप्रामाण्यसिद्धिः । सिद्धे च तस्मिंस्तद्बाधेन भावत्वादिगोचरप्रमाणस्य व्यावहारिकसत्त्वविषयकत्वसिद्धिरित्यर्थः । आदिपदेन सिद्धे चानुमानप्रामाण्ये भावत्वादिप्रत्यक्षाप्रामाण्यं, तत्सिद्धौ चानुमानप्रामाण्यसिद्धिरित्येवमन्योन्याश्रयादिर्गृह्यते । एवं सति बाधमात्रोच्छेदः स्यादित्याह **अतिप्रसङ्गाच्चेति** । विवृतमेतन्न्यायामृते वह्निशैत्यानुमानसाम्योक्तिवादे । इतिशब्दो भावाभावपक्षदूषणोक्तिसमाप्तौ ।

**यादु०— प्रमाणेति** । भावत्वाभावत्वगोचरप्रत्यक्षादीत्यर्थः । **अन्यथा चक्रकादिप्रसङ्गादिति** । भावत्वाभावत्वगोचरप्रमाणस्य प्रत्यक्षादिरूपस्यातत्त्वगोचरत्वसिद्धौ तस्य दुर्बलत्वेनानुमानबाधकत्वाभावः । सति च तस्मिन्ननुमानप्रामाण्यसिद्धिस्तत्सिद्धौ च तद्विरोधेनातत्त्वगोचरत्वसिद्धिरिति चक्रकप्रसङ्गात् । बाधकाभावेऽप्यतत्त्वगोचरत्वेऽनुमानस्याप्यतत्त्वविषयत्वं सुवचमित्यतिप्रसङ्गाच्चेत्यर्थः । यद्वाऽतिप्रसङ्गादित्यस्य कालात्ययापदिष्टमात्रोच्छेदप्रसङ्गादित्यर्थः ।





**वं०प०**— भावाभावव्यतिकरो नास्तीत्याशङ्कते **भावाभावाभिमतयोरिति** । **अधिकमिति** । भावेऽभावत्वानधिकरणत्वं प्रमितम् । तत्र भावत्वानधिकरणत्वमप्यधिकं साध्यते । तथा च भावत्वानधिकरणत्वे साध्येऽभावत्वं न प्राप्नोति । अभावत्वानधिकरणत्वस्य संमतत्वात् । एवमभावेऽपि द्रष्टव्यम् । अतो न व्यतिकर इति भावः । **विपरीतेति** । भावरूपस्य प्रपञ्चस्य प्रमाणविरुद्धभावत्वानधिकरणत्वप्रतिज्ञानेनेत्यर्थः । **भावत्वाभावत्वगोचरमिति** । भावाभावयोः क्रमात् भावत्वाभावत्वगोचरमिति योज्यम् । **तत्त्वविषयेणानुमानेनेति** । विवादपदं सदसद्विलक्षणं बाध्यत्वादिति प्रागुक्तेनेत्यर्थः ।

**कं०रा०**— **भावाभावेति** । भावाभिमतस्याभावत्वानधिकरणत्वेऽभावाभिमतस्य भावत्वानधिकरणत्वे च वादिप्रतिवादिसंमते सतीत्यर्थः । **नोक्तदोष इति** । भावाभावव्यतिकरमात्रसाधनं कृतं स्यात्, तच्च प्रकृतानुपयुक्तमित्युक्तदोषो नेत्यर्थः । **भावस्यैवेति** । अभावस्य तु नाभावत्वानधिकरणत्वं प्रमितं किं त्वभावत्वं प्रमितमित्येवार्थः । **अभावस्यैवेति** । भावस्य तु न भावत्वानधिकरणत्वं प्रमितं किन्तु भावत्वं प्रमितमित्येवार्थः । विपरीतेन प्रमाणबाधितेन । असौ प्रतिज्ञार्थः । शङ्कते **सांव्यावहारिकेति** । **अन्यथेति** । अनुमानबाधाद्भावत्वाभावत्वगोचरप्रमाणस्य सांव्यावहारिकविषयत्वकल्पने भावत्वाभावत्वविषयस्य प्रमाणस्य सांव्यावहारिकविषयत्वसिद्धौ तद्बाधाभावसिद्धिस्तत्सिद्धौ चानुमानप्रामाण्यसिद्धिस्तत्सिद्धौ च तद्बाधाद् भावत्वाभावत्वविषयस्य प्रमाणस्य सांव्यावहारिकविषयत्वसिद्धिरिति चक्रकस्यान्योन्याश्रयस्य च प्रसङ्गादित्यर्थः । अन्योन्याश्रय उपपादितप्रायः । **अतिप्रसङ्गाच्चेति** । वह्न्यनौष्ण्यतात्त्विकतासाधकानुमानबाधेन तदौष्ण्यग्राहि प्रत्यक्षमपि सांव्यावहारिकविषयकं स्यादित्यतिप्रसङ्गाच्चेत्यर्थः ।

**श्रीनिधि०**— **चक्रकादिप्रसङ्गादिति** । प्रत्यक्षस्य सांव्यवहारिकतावत्त्वगोचरत्वे सिद्धे भिन्नविषयत्वे नानुमानबाधकत्वाभावसिद्धिः । बाधकत्वाभावे सिद्धौ अनुमानस्य तत्त्वविषयतासिद्धिः तत्सिद्धौ प्रत्यक्षस्य सांव्यावहारिकभावत्वगोचरत्वसिद्धिरिति चक्रकम् । आदिपदेन अनवस्था । अनुमानस्य तत्त्वविषयताया अनुमानान्तरेऽप्यसाधनमिति द्रष्टव्यम् । **अतिप्रसङ्गादिति** । वह्निरनुष्णः पदार्थत्वादित्यनुमानं तत्त्वविषयं औष्ण्यग्राहिप्रत्यक्षत्वतत्त्वविषयम् । तथा च प्रत्यक्षानुमानयोर्न बाध्यबाधकभाव इति वक्तुं शक्यत्वात् उष्णत्वस्यापि मिथ्याभूतत्वादिष्टापत्तिरिति चेत्तर्हि वह्निः शीत इत्यनुमानस्यापि बाध्यत्वं न स्यादिति भावः ।

**वा०चं०**— नन्वभावत्वानधिकरणत्वावच्छिन्नं वियदादिकं भावत्वानधिकरणत्वावच्छिन्नं प्रागभावादिकं पक्षीकृत्य भावत्वानधिकरणत्वमभावत्वानधिकरणत्वं च क्रमेण साध्येते । एवं च वियदादौ भावत्वानधिकरणत्वस्य प्रागभावादावभावत्वानधिकरणत्वस्य चासिद्ध्या न सिद्धार्थता । भावत्वानधिकरणादावभावत्वानधिकरणत्वादेः साध्यमानत्वे चानिर्वचनीयमनादाय भावत्वाभावत्वविषयकतया प्रतिज्ञाया अपर्यवसानान्नार्थान्तरताऽपि । साध्यकोटौ विशिष्टस्याप्रवेशान्न वैयर्थ्यमपीत्याशयेन तृतीयं शङ्कते **भावेति** । अत्र पूर्ववत्सिद्धार्थताऽर्थान्तरयोरप्राप्त्या तेनेत्यस्य साधितेनेत्यर्थानुपपत्त्या प्रकृतोपयुक्तमर्थमाह **विपरीतेति** । अत्र प्रतिज्ञातेनेत्युक्तिसूचितप्रतिज्ञामात्रत्वमुपपादयति





**प्रतिज्ञातेति** । भावस्यैवाभावत्वानधिकरणत्वेऽभावस्यैव भावत्वानधिकरणत्वे च प्रमाणोक्त्या वह्निमत एव धूमवत्त्वं प्रमितमित्युक्ते धूमवति वह्निमत्वं प्रमितमिति यथा लभ्यते तथाऽभावत्वानधिकरणे भावत्वं भावत्वानधिकरणे चाभावत्वं प्रमितमित्युक्तं भवति । अभावत्वानधिकरणत्वभावत्वानधिकरणत्वग्राहकप्रमाणयोरेव भावत्वाभावत्व-विषयकत्वात् । तथा चाभावत्वानधिकरणे प्रमितं यद्भावत्वं भावत्वानधिकरणत्वे प्रमितं यदभावत्वं तदनधिकरणत्वस्य तत्रैव साधने बाध इत्याशयेनाह **न हीति** । भेदवादिन इत्यस्य तेनानिष्टमित्यनेनान्वितस्योपयोगं यतोऽस्माक-मित्यादिना वक्तुं तन्निवर्त्यां शङ्कां दर्शयति **व्यावहारिकेति** । भावाभावभेदवादिनो मम भावत्वादिविषयकं प्रमाणं तत्त्वगोचरमेव । अन्यथा भावाभावभेदवादित्वमेव न स्यादिति भेदवादिन इत्यनेन सूचितमिति भावः । **अन्यथेति** । भावत्वादिगोचरप्रमाणस्यातत्त्वविषयत्वसिद्धौ बाधकाभावादनुमानसिद्धिस्तत्सिद्धौ च तेन भावत्वादिगोचरप्रमाणस्य बाधसिद्धिस्तत्सिद्धौ चातत्त्वविषयत्वसिद्धिरिति चक्रकम् । भावत्वादिगोचरप्रमाणस्यातत्त्वविषयकत्वसिद्धौ बाधका-भावादनुमानसिद्धिस्तत्सिद्धौ च तद्बाधितत्वादतत्त्वविषयत्वसिद्धिरित्यन्योन्याश्रयो वाऽतत्त्वविषयकवह्निशैत्या-नुमानेन तत्त्वविषयकौष्ण्यप्रत्यक्षस्य बाधप्रसङ्गश्चेत्यर्थः ।

**स०व्र०**— प्रत्यक्षस्यातत्त्वविषयत्वे बाधकमाह **अन्यथेति** । अनुमानस्य तत्त्वविषयत्वे सति प्राबल्यं तेन प्रत्यक्षस्यातत्त्वविषयत्वम् । ततश्च तस्य दौर्बल्येऽनुमानस्य तत्त्वविषयत्वमिति चक्रकम् । प्रबलप्रमाणविरोधादेव प्रत्यक्षस्यातत्त्वावेदकत्वं वक्तव्यम् । तथाच प्रत्यक्षस्यातत्त्वावेदकत्वेऽनुमानस्य तत्त्वावेदकत्वं तत्सिद्धौ च तत्सिद्धिरिति अन्योन्याश्रयश्चेत्यर्थः । **अतिप्रसङ्गादिति** । अनुमानस्याप्यतत्त्वावेदकत्वं सुवचमित्यतिप्रसङ्गादि-त्यर्थः । वह्निरनुष्णः पदार्थत्वादित्यनुमानेन प्रत्यक्षस्य बाधः स्यादित्यतिप्रसङ्गादित्यप्याहुः ।

**विठ्ठ०— नोक्तदोष इति** । सिद्धार्थतेत्युक्तदोष इत्यर्थः । भावे अभावत्वानधिकरणत्वस्य प्रत्यक्षादिना प्रमितत्वेन भावत्वस्यैव निश्चयात् भावत्वानधिकरणतासाधने बाध इत्युक्तं प्रत्यक्षादेर्व्यवहारमात्रविषयत्वे-नातत्त्वावेदकत्वे दौर्बल्यात् प्रकृतानिर्वचनीयतासाधकानुमानस्य तत्त्वविषयतया प्राबल्यादेतेनैव प्रत्यक्षबाधमाशङ्कय निराकरोति **व्यावहारिकेति** । **अन्यथेति** । भावाभावविषयप्रमाणस्य तत्त्वगोचरत्वाभावे । भावाभावयोः व्यावहारिकत्वे सिद्धे प्रत्यक्षस्य तत्त्वविषयत्वाभावेन दौर्बल्यं तत्सिद्धावेव बाधकाभावादनुमानप्रामाण्यसिद्धिः तत्सिद्धौ च तयोः व्यावहारिकत्वसिद्धिः इति चक्रकप्रसङ्गादित्यर्थः । अथवा भावत्वगोचरस्य प्रत्यक्षस्यातत्त्वावेदकत्वगोचरस्य प्रत्यक्षस्यातत्त्वावेदकत्वसिद्धौ तस्य दुर्बलत्वेनानुमानबाधकत्वाभावः सति च तस्मिन् अनुमानप्रामाण्यसिद्धिः तत्सिद्धौ च तद्विरोधेनातत्त्वावेदकतासिद्धिरिति चक्रकप्रसङ्गः । बाधकाभावेऽप्यतत्त्वगोचरत्वे अनुमानस्याप्यतत्त्व-गोचरत्वं सुवचमित्याद्यतिप्रसङ्गाच्चेत्यर्थः ।

३०० **चषक**:— अथ तार्णदहनशून्यत्वविशिष्टं भौमदहनशून्यत्वविशिष्टं वा ह्रदादिकं पक्षीकृत्य तार्णदहन-शून्यत्वस्य भौमदहनशून्यत्वस्य वा साधने तादृग्दहनद्वयविनिर्मुक्तता यथा सेत्स्यति तद्वत्प्रकृतेऽप्यभावत्वा-नधिकरणत्वविशिष्टभावरूपां भावत्वानधिकरणत्वविशिष्टाभावरूपां वा तादृशीं पक्षीकृत्य भावत्वानधिकरणत्वस्या-भावत्वानधिकरणत्वस्य च साधने तादृग्धर्मद्वयवैधुर्यरूपानिर्वचनीयतैव सेधिष्यतीत्यद्वैतवादिमनोरथद्रुमो-





ऽफालीदेवेत्याशङ्कायां 'मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । वन्ध्यासुतः समायाति शशशृङ्गधनुर्धरः' इत्यादिवत्प्रमाणबाधिततया न कस्यापि सिद्धिरित्याशयेनाह **भावेत्यादिकप्रसङ्गाच्चेत्यन्तेन** । इयं चाष्टमी योजना । इत उत्तरः द्वितीयेऽप्येतदेवेत्यादिः परकीयतर्काणामद्यापि गहननिविष्टत्वादित्यन्तो ग्रन्थ उक्तदिशा दर्शितयोजनाऽवसेयः ।

**गूढ०**— ननु भावत्वानाधारत्वेन सिद्धमभावम् अभावत्वानाधारत्वेन सिद्धं भावं पक्षीकृत्य भावाभावत्वानाधारत्वं साध्यते । तथाचाभावे सर्वथा अभावत्वं नास्ति भावे च सर्वथा भावत्वं नास्तीत्युक्तेन पूर्वोक्तसिद्धसाधनं वार्थान्तरं व्यतिकरस्याभावादिति शङ्कते **भावाभावाभिमतयोरिति** । भावाभावयोः प्रत्यक्षादिना भावाभावत्वाध्यवसायाद्विपरीतसाधनं कालात्ययापदिष्ट इति परिहरति **यत इत्यादिना** । भावत्वगोचरप्रमाणस्य व्यावहारिकभावत्वाभावत्वविषयत्वानुमानस्य च तात्त्विकं तन्निषेधविषयत्वादनुमानेनैव तद्बाध इत्याशङ्कते **व्यावहारिकेति** । **तावत्** अनिर्वचनीयत्वसिद्धेः पूर्वम् । **अन्यथेति** । भावत्वाभावत्वविषयप्रमाणस्य तत्त्वगोचरत्वभाव इत्यर्थः । **चक्रकादिप्रसङ्गादिति** । सिद्धेऽनुमानेनानिर्वचनीयत्वे भावत्वादिगोचरप्रमाणस्य व्यावहारिकविषयत्वसिद्धिः सत्यां च तस्यां बाधाभावसिद्धिः ततश्च बाधाभावादनुमानेनानिर्वचनीयत्वसिद्धिरिति चक्रकाश्रयप्रसङ्गादित्यर्थः । आदिशब्देनान्योन्याश्रयपरिग्रहः । सिद्धे निर्वचनीयत्वे प्रमाणस्य व्यावहारिकविषयत्वसिद्धिस्तत्सिद्धौ तत्सिद्धिरितरेतराश्रयत्वं स्यादित्यर्थः । **अतिप्रसङ्गादिति** । वह्न्यनौष्ण्यग्राह्यनुमानस्यापि तात्त्विकौष्ण्यनिषेधपरत्वेन प्रत्यक्षस्य च व्यावहारिकौष्ण्यपरत्वेन तेनाप्यनुमानबाधो न स्यादित्यर्थः ।

**प्रदीपः**— सिद्धान्ती भावाभावयोः प्रत्यक्षादिना भावाभावत्वाध्यवसायाद्विपरीतसाधनं कालात्ययापदिष्टमित्याह **यत इत्यादिना** । भिन्नविषयत्वेन विरोधाभावान्न बाध्यबाधकता किन्तु विपरीतं बलाबलमिति शङ्कते **सांव्यावहारिकेति** । प्रत्यक्षस्यापि सत्त्वात्प्रबलेन प्रत्यक्षेणानुमानं बाध्यत इत्याह **न यत इति** । प्रत्यक्षस्यातत्त्वविषयत्वे बाधकमाह **अन्यथेति** । प्रबलप्रमाणविरोधादेव प्रत्यक्षस्यापि तत्त्वावेदकत्वं वक्तव्यं तथाच प्रत्यक्षस्यातत्त्वावेदकत्वेऽनुमानस्य तत्त्वावेदकत्वं तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयः अनुमानस्य तत्त्वविषयत्वे सति प्राबल्यं तेन प्रत्यक्षस्यातत्त्वविषयत्वं ततश्च तस्य दौर्बल्येऽनुमानस्य तत्त्वविषयत्वमिति चक्रकं वा । अनुमानस्याप्यतत्त्वविषयत्वं सुवचमित्यतिप्रसङ्गश्चेत्यर्थः ।

**२९९ सु०**— द्वितीयेऽप्येतदेवोत्तरम् । **विश्वस्य सतः** सत्यात् **वैलक्षण्यमपि मम स्वयं** सम्मतमेव । तथा **असतः** अविद्यमानात् **अपि वैलक्षण्यं स्वयम्** एव अतः **तेन** साधितेन **मम अनिष्टं कथं भवेत्** । भवतु विश्वस्यासतः शशविषाणादेर्वैलक्षण्यं स्वमतम् । सतो वैलक्षण्यं तु कथम् । सत्त्वाङ्गीकारादिति चेन्नैवम् । **सतो** विद्यमानस्यापि **असतो** भेदं वदतो मम यथा **विश्वस्यासतो वैलक्षण्यं स्वयम्** एव । तथा **सतोऽपि विश्वस्य सतो वैलक्षण्यं** सतां भेदवादिनः **स्वयम्** एव । सदन्तरवैलक्षण्यात् ॥ ९ ॥





**परि०— द्वितीयेऽपीति** । सदसच्छब्दौ भावाभाववचनौ किं वा विद्यमानाविद्यमानवचनाविति प्रागुक्तद्वितीयपक्षेऽपीत्यर्थः । शङ्कते **भवत्विति** । **स्वयमेवेति** । स्वमतमेवेत्यर्थः ।

**वं०प०— द्वितीयेऽपीति** । सदसच्छब्दौ भावाभाववाचिनौ वा विद्यमानाविद्यमानवाचिनौ वेति प्रागुक्तद्वितीयपक्षेऽपीत्यर्थः । **सत्यात्** विद्यमानात् । **भेदवादिन इति** । सतां भेदवादिन इत्यर्थः ।

**श्रीनिधि०— द्वितीयेऽपीति** । सदसत् शब्दो विद्यमानाविद्यमानवचनाविति पक्ष इत्यर्थः ।

**वा०चं०—** द्वितीयपक्षसंभावितकल्पदूषणपरतयापीदमेव भाष्यं योजयितुं प्रतिजानीते **द्वितीयेऽपीति** । स्वयंशब्दयोः पर्यायत्वं मतमित्यध्याहारं च मनसि निधाय स्वमतमिति व्याख्यानम् । अत्र सत एव पक्षत्वेन पूर्ववत् प्रत्येकसमुदायविकल्पासंभव इति बोध्यम् । पूर्वत्र भावाभावात्मकविश्वस्य पक्षत्वात् कथं तत्र भावाभाववैलक्षण्यमित्याशङ्कायामुभयोपपादकतया भेदवादिन इत्यस्य संबन्धेऽपि प्रकृते सत एव पक्षत्वेन तत्र चासद्वैलक्षण्यस्योभयवादिसंमत्या तदंशस्योपपादननिरपेक्षत्वात्सद्वैलक्षण्यमात्रस्यैव चोपपादनीयत्वात्सदित्यस्य च भेदवादिन इत्येतत्संबन्धे स्पष्टतदुपपादनलाभात्स्वयमित्येव पूर्वेण संबद्ध्य सद्भेदवादिन इत्यस्य सद्वैलक्षण्ये हेतुत्वमसद्वैलक्षण्यदृष्टान्तेन प्रतिपादयितुं तथैव तन्निवर्त्यां शङ्कामुत्थापयति **भवत्विति** । सतोऽपि वक्ष्यमाणरीत्या सदसत्त्वात्सत्त्वासत्त्वसमुदायानधिकरणत्वमादाय सिद्धसाधनादेः पूर्ववदसंभवात्तदनभिधाय विशकलितसत्त्वा-सत्त्वानाधारत्वपक्षमेव शङ्कित्रभिप्रेततया सिद्धवत्कृत्य तद्दूषणपरतया भाष्यं योजयति **सतोऽपीति** । अत्र सतोऽपि सत्त्वाधिकरणस्यापीत्यनेनांशे सिद्धसाधनतां स्फोरयति ।

**वा०र०— द्वितीयपक्षेति** । भावाभावशब्दौ विद्यमानाविद्यमानवचनाविति द्वितीयपक्षेत्यर्थः । संभावितेत्यनेन प्रागुक्ता अनेके विकल्पप्रकारा उत्तरग्रन्थानुसारेण यथायोग्यं द्रष्टव्याः । न तु सर्वेऽपीत्याचष्टे । इदमेव भाष्यम् । वैलक्षण्यं सतश्चापीत्ययं श्लोक इदमा परामृश्यते । सत्यशब्दस्य सत्तायोगित्वार्थतया सत्यादित्यनेन विद्यमानादित्यर्थप्राप्तिः संभवतीत्याशयेन मूले सत इत्यनूद्य सत्यादिति व्याख्यातम् । स्वयमित्येतन्मात्रस्य स्वमतमिति व्याख्यानं कथमित्यतस्तत्तात्पर्यमाह **स्वयंशब्देति** । स्वयमित्यव्ययस्यानेकार्थत्वादिति भावः । अत एव स्वयंक्तेनेति सूत्रे स्वयमित्यव्ययमात्मनेत्यर्थे वर्तत इति तत्सूत्रीयग्रन्थेषूक्तिः । स्वयमेव पच्यते ओदन इत्यत्र स्वयमात्मना स्वेन करणेन चेति व्याख्यानम् । स्वयंभूः समभूदज इत्येतत्तत्त्वोद्योतटीकाव्याख्याने स्वयंशब्द-पर्यायस्वशब्दः स्वातन्त्र्यवाचीति विजयीन्द्रीयं चेति ज्ञेयम् । मन एवेति पूर्वत्र भावाभावयोरुभयोरप्यनिर्वचनीयत्वं साध्यमिति भावत्वाभावत्वावच्छिन्नस्यापि पक्षतया प्रत्येकसमुदायविकल्पस्यास्त्यवकाशः । सदसद्वैलक्षण्यं भावाभावसमुदाये साध्यते उत प्रत्येकं भावाभावयोरिति । विकल्पदूषणावकाश इति यावत् । इह तु सच्छब्दार्थत्वेन प्रतिवादिसम्मतमात्रस्य पक्षतया विद्यमानस्यैकस्यैव पक्षतावच्छेदकतया प्राप्तिरिति तदनवच्छिन्नशशविषाणादेः पक्षत्वाश्रयणाभावः । तथा सत इवासतोऽप्यनिर्वचनीयत्वानङ्गीकारेण तस्य पक्षत्वाप्राप्तेः पूर्वोत्तरार्धोक्तसदसतोः





पक्षताङ्गीकारायोगात्समुदायप्रत्येकविकल्पानवकाशः । ततः पूर्वत्रैवात्र सत्यसद्वैलक्षण्यं सिद्धमिति सिद्धसाधनतावदसति सद्वैलक्षण्यं सिद्धमिति सिद्धसाधनेत्यादिदूषणमपि न प्रसज्यत इति ज्ञेयम् । **उभयोपपादकतयेति** । भावभेदवादिन इत्यभावभेदवादिन इत्यर्थकतया भेदवादिन इत्यस्याभावाभावयोर्भावाभाववैलक्षण्यमित्येतदुपपादकत्वमित्याशयः । **स्वयमित्येवेति** । पूर्वत्र तु स्वयं सदित्येतयोरेकान्वय आश्रितः । भेदवादिन इत्येतत्तु योग्यतानुसारेण भावाभावभेदवादिन इत्यादिरूपेण व्याख्यातम् । अत्र तु सद्भेदप्रतिपादनस्यैव कर्तव्यतया स्पष्टम् । तल्लाभाय सदित्यस्य भेदवादिन इत्यनेन संबन्धस्यावश्यकतया स्वयमित्येव मतमिति पूरणेनार्थान्तरतासमर्पकतयाश्रितमिति भावः । सद्भेदवादिन इत्यस्य सतोऽसतः सकाशाद्भेदवादिन इत्यप्यर्थमभिप्रेत्य सति असतो वैलक्षण्यहेतुत्वमाश्रित्यासद्वैलक्षण्यदृष्टान्तोपपादनं कर्तव्यमित्याशयेनासद्वैलक्षण्यदृष्टान्तेनेत्येवोक्तम् । **तथैवेति** । तन्निवर्त्यां सद्भेदवादिन इत्येतन्निवर्त्या शङ्कां तथैवोत्थापयतीति संबन्धः । तथैवेत्यस्य यथा भावाभावयोर्भावाभावभेदः कथमिति शङ्का तथैव सतः सतो भेदः कथमित्येवमित्यर्थः । यद्वाऽसद्वैलक्षण्यस्योभयवादिसम्मत्या तदंशस्येत्युक्तानुसारेणैवेत्यर्थः । अथवा दृष्टान्ततया करिष्यमाणासद्वैलक्षण्यसिद्धवत्कारेणैवेत्यर्थः ।

**विठ्ठ०— द्वितीयेऽपीति** । सदसच्छब्दौ विद्यमानाविद्यमानपराविति पक्षे इत्यर्थः । स्वयमेवेत्यस्य स्वमतमेवेत्यर्थः ।

**गूढ०— द्वितीयेऽपीति** । सदसच्छब्दौ विद्यमानाविद्यमानवचनाविति द्वितीय इत्यर्थः । **विश्वस्येति** । अत्र पक्षे सतः असतः इत्यनयोः पञ्चम्यन्तत्वमेवेति भावः । **तेनेति** । सिद्धार्थत्वादिति भावः । शङ्कते **भवत्विति** । परिहरति **मैवमिति** । **सतां भेदवादिन इति** । एवं च सद्भेदवादिन इत्येकं पदमिति भावः । किमत्र सत्त्वासत्त्वमेकं तदनधिकरणत्वमिति वा सत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वं वा सत्त्वाधिकरणत्वं असत्त्वानधिकरणत्वं वा सत्त्वानाधारत्वं वा नाद्यः । सत्त्वैकस्वभाववादिना सदसत्त्वानधिकरणत्वस्य स्वीकृतत्वेन सिद्धसाधनत्वात् । न द्वितीयः वैय्यर्थ्यात् ।

**प्रदीपः**— सदसच्छब्दयोर्विद्यमानाविद्यमानवाचित्वेऽपि किं सदसत्प्रतियोगिकभेदधर्मित्वं साध्यते सत्त्वासत्त्वानाधारत्वं वा । सदन्तरवैलक्षण्यावलम्बेनाद्यं दूषयति **विश्वस्येति** । एतदेवाशङ्कापूर्वमाह **भवत्वित्यादिना** । अत्यन्तासतः प्रपञ्चबहिर्भावाय विचार इति ज्ञातव्यम् । द्वितीयमनूद्य सत्त्वानाधारत्वसाधनांशेन दोषोऽसत्त्वानाधारत्वांशसाधने सिद्धसाध्यता स्यादित्याह **सत्त्वेत्यादिना** ।

**३०० सु०— सत्त्वासत्त्वानधिकरणत्वं सदसद्विलक्षणत्वमिति चेत् । तदाऽपि सतो विश्वस्यासतो वैलक्षण्यं सदसद्भेदवादिनः स्वयं सदेव । अतः तेन साधितेन मम अनिष्टं कथं भवेत् । परस्यैवांशतः सिद्धार्थता भवेत् । तर्हि सत्त्वानाधारत्वमेव साध्यत इति चेन्न । असत एव हि सतो वैलक्षण्यं सत्त्वानधिकरणत्वं भेदवादिनो मम स्वयं सदेव नियमेन भवति । तथा च**

**विश्वस्य तेन सत्त्वानधिकरणत्वेन साधितेनासत्त्वापत्त्या परस्यैवानिष्टं भवेत्। अनिष्टप्रसङ्गेन परं निगृहीतवतो मम अनिष्टं कथं भवेत्॥ १०॥**

**परि०— सत्त्वासत्त्वानधिकरणत्वमिति** । सत्त्वानधिकरणत्वमसत्त्वानधिकरणत्वं चेति धर्मद्वयमित्यर्थः। **असतो वैलक्षण्यमिति**। असत्त्वानाधारः सत्त्वानाधारः सदसदिति सदसतोरन्योन्यं भेदवादिन इत्यर्थः । **अनिष्टेति** । असत्त्वापत्तिरूपानिष्टेति वा व्याहत्या कस्यापि सिद्धिर्नेति वा अनिष्टानिस्तारादित्यर्थः।

**वा०चं०—** अत्र सत्त्वान्तरानाधारतयाऽर्थान्तरपरतया योजनायां भाष्येऽसत इत्यस्य वैयर्थ्यापत्त्या तदनुगुणदूषणपरतया योजयति **असत एव हीति**।

**विठ्ठ०— परस्यैवानिष्टमिति** । अनिर्वचनीयवादिनः परस्यासत्त्वसिध्याऽपसिद्धान्तलक्षणमनिष्टं भवेदित्यर्थः।

**गूढ०—** तृतीयं शङ्कते **सत्त्वासत्त्वेति**। अस्मिन्पक्षे भेदवादिन इति पदच्छेद इति भावः। चतुर्थेऽपि यत्किञ्चित्सत्त्वानाधारत्वं सर्वथा सत्त्वानाधारत्वं वा। नाद्यः सिद्धसाधनत्वात्। द्वितीयं शङ्कते **तर्हीति**। अनिष्टं अपसिद्धान्तरूपम्। न चात्र दूषितस्यास्य पक्षस्याग्रेऽपि कल्प्यदूषणेन पौनरुक्त्यमिति वाच्यम्। अत्राप्यपसिद्धान्तेन दूषितस्य दूषणान्तरेणापि पुनर्दूषणार्थं विकल्पकरणान्न दोष इति भावः।

**प्रदीपः—** सिद्धांशत्यागेऽर्थान्तरता स्यादित्याह **तर्हीत्यादिना**। असत एव हीति व्याप्तिरुक्ता।

**३०१ सु०—** अथासत्त्वानधिकरणत्वे वादिप्रतिवादिसिद्धे सत्त्वानधिकरणत्वमप्यधिकं साध्यत इति चेन्न। अनिष्टानिस्तारात्। किञ्च, न सत्त्वं नामैकमनुगतं किन्तु प्रतिवस्तु सत्त्वानि भिद्यन्ते । तत्र वियदादेरसद्वैलक्षण्ये सति सत्त्वानधिकरणत्वं साध्यमानं किमेकसत्त्वानधिकरणत्वम्, उतानेकसत्त्वानधिकरणत्वम्, अथ सर्वसत्त्वानधिकरणत्वम्, किंवा अविशेषितसत्त्वानधिकरणत्वम्, अथवा सर्वथा सत्त्वानधिकरणत्वं विवक्षितम्॥ नाद्यः **विश्वस्य सतोऽपि वैलक्षण्यं तावन्मम स्वयम्** एव **सतोऽपि वैलक्षण्यं** सत्त्वानधिकरणत्वमपि **स्वयम्** एव। कथम्। सत्त्वभेदवादिनो मम सतोऽपि सत्त्वान्तरानधिकरणत्वाङ्गीकारात्। तथा च सिद्धेन **तेन** साध्यमानेन मम **अनिष्टं कथं भवेत्**॥ एवमेव चतुर्थनिराकरणमपि व्याख्येयम्॥ न द्वितीयतृतीयौ। **विश्वस्यासतो वैलक्षण्यम्** असत्त्वानधिकरणत्वं तावन्मम





**स्वयम्** एव । **सतो वैलक्षण्यम्** अनेकसत्त्वानधिकरणत्वम् **सर्वसत्त्वानधिकरणत्वम् अपि स्वयं सदेव** । कथम् । भेदवादिनैकैकस्यार्थस्यानेकसर्वसत्त्वास्वीकारात् । स्वीकारे च भेदभङ्गः स्यात् । ततश्च **तेनानिष्टं कथं भवेत्** ॥ न पञ्चमः । यतः **सत एव असतो वैलक्षण्यं स्वयं सदेव** नियतमेवास्ति । यतश्च **असत एव सतो वैलक्षण्यमपि** नियतमेवातः **तेन** साध्यमानेन **विश्वस्य** सदसत्त्वापत्त्या भेदवादिनः **कथमनिष्टं भवेत्** ।

**परि०— चतुर्थेति** । अविशेषितसत्त्वेतिपक्षेत्यर्थः । स्वोपाधौ स्वाश्रये भूतलैकदेशादौ । **अयं विप्रतिषेध इति** । सत्त्वासत्त्वयोस्तदभावयोर्वा एकत्रानवस्थानरूपविरोध इत्यर्थः । **अस्मादेवेति** । बाध्यत्वाच्छुक्तिरूप्यवदिति प्रागुक्तहेतोरित्यर्थः । **वक्ष्यमाणेति** । माता वन्ध्येति प्रतिज्ञाता पुरुषः प्रतिज्ञाऽनन्तरं स्त्रीत्वादित्यादिकं यं हेतुं स्वविवक्षितं वक्ष्यति तेन हेतुनेत्यर्थः । **सममिति** । विवादपदं सदसद्विलक्षणमिति प्रतिज्ञायामपि सममित्यर्थः । **असतोऽपि वैलक्षण्यमिति** । न केवलं सदन्तरादित्यपेरर्थः ।

**यादु०— सिद्धे** सतीति शेषः । **अधिकं साध्यत इति** । तथा चोभयसाधनान्न पूर्वोक्तदोष इति भावः । **अनिष्टानिस्तारादिति** । असिद्धसन्निधानेऽपि सिद्धस्य तत्त्वानपायेन पूर्वोक्तसिद्धसाधनतारूपानिष्टानिस्तारादित्यर्थः ।

**वं०प०— भेदभङ्गादिति** । घटस्य पटादिनिष्ठसत्त्वाङ्गीकारे पटाद्यैक्यापत्त्या भेदभङ्गादित्यर्थः । **यतः सत एवेति** । तथा चासत्त्वानधिकरणत्वस्य सिद्धत्वात्तस्मिन् साध्ये सद्रूपत्वं प्राप्तमित्यर्थः । **यतश्चासत इति** । तथाच सर्वथा सत्त्वानधिकरणत्वे साध्येऽसद्रूपत्वं प्राप्तमिति सदसत्त्वं प्राप्तमित्यर्थः ।

**कं०रा०— अनिष्टेति** । सत्त्वानधिकरणत्वे साध्यमानेऽसत्त्वापत्त्या परस्यैवानिष्टमित्युक्तस्यानिष्टस्यानिस्तारादित्यर्थः । यद्वा । असत्त्वानधिकरणत्वे वादिप्रतिवादिसिद्धे सत्त्वस्यैवावगतत्वेन सत्त्वानधिकरणत्वसाधने बाधरूपानिष्टानिस्तारादित्यर्थः । सांव्यावहारिकसत्त्वविषयोऽवगमस्तत्त्वविषयेणानुमानेन बाध्यत इति तु निरस्तम् । **चतुर्थेति** । अविशेषितसत्त्वानधिकरणत्वमिति चतुर्थपक्षनिराकरणमप्येवमेव पूर्वोक्तरीत्या व्याख्येयमित्यर्थः । **स्वीकार इति** । एकस्मिन्ननेकसर्वसत्त्वस्वीकारे एकस्यानेकसर्वसत्त्वाश्रयत्वं तत्तत्सत्त्वाश्रयवस्त्वैक्यं विना न संभवतीति तदैक्यापत्त्या भेदभङ्गादित्यर्थः ।

**श्रीनिधि०— अनिष्टानिस्तारादिति** । बाधप्रसङ्गादिति भावः । **सर्वसत्त्वानधिकरणत्वमपि** मिलितसर्वसत्त्वानधिकरणत्वमपि ।





**वा०चं०—** अत्र यथाकथञ्चित्सत्त्वानाधारतामादाय दूषणानुक्त्या सर्वथेत्यादिपक्षानुत्थानादुक्तदूषण-निवर्तकतया पराभिमतं पक्षमुत्थापयति **अथेति** । अस्त्वसत्त्वानधिकरणत्वस्य पक्षताऽवच्छेदककोटिनिवेश-स्तावता प्रतिज्ञाया असत्त्वे पर्यवसानासंभवेऽप्युक्तदूषणस्यापरिहार एव । न हि पूर्वत्र भावत्वाभावत्वानधिकरणत्वे साध्ये भावत्वमभावत्वं वा प्रतिज्ञातं स्यादितिवदसत्त्वं स्यादिति दूषणमत्रोक्तम् । किन्त्वसत एव सत्त्वानधि-करणत्वनियमात्तदनधिकरणत्वे साध्येऽसत्त्वापत्त्या प्रतितर्कपराहतानुमानमित्यर्थान्तरमिति वा । नैतत्परिहार-सत्त्वानधिकरणत्वस्य पक्षतावच्छेदककोटिनिवेशमात्रेण सिध्यति । असत एव सत्त्वानधिकरणत्वनियमस्य प्रबलत्वेन सत्त्वानधिकरणत्वे साध्येऽसत्त्वप्रसङ्गस्यावर्जनीयत्वादित्याशयेनाह **अनिष्टेति** । नन्वत्रासद्वैलक्षण्यस्य साध्यकोटिनिवेशो ममाभिमतः । पूर्वत्र तु भावत्वाभावत्वानधिकरणत्वयोर्विशिष्टे साध्ये वैयर्थ्यानिस्तारेण पक्षतावच्छेदककोटावेव निवेशः । न चात्रापि वैयर्थ्यं तदवस्थमिति वाच्यम् । सत्त्वानाधारत्वस्य तुच्छे सद्भावेऽपि ज्ञानबाध्यत्वादर्शनेन प्राप्ताप्रयोजकत्वस्यासद्वैलक्षण्यविशेषणेन परिहारसंभवेन वैयर्थ्याभावेन पूर्ववैलक्षण्यात् । अत एव न्यायामृते व्यर्थविशेष्यत्वं नेत्युक्तम् । एवं चासत्त्वस्यापि निषेधेन तदप्राप्त्या नोक्तानिष्टमिति चेन्न । एवमप्यसत एव सत्त्वानधिकरणत्वनियमेनासत्त्वप्राप्तेरपरिहारेण तन्निषेधस्य च वक्ष्यमाणरीत्या व्याहत्यादिनाऽत्रानाशङ्कनीयत्वे-नानुपपन्नतयोक्तानिष्टस्य तदवस्थत्वात् । अत एव विशिष्टसाध्यपक्षेऽपि सदसत्त्वापत्तिं प्रसञ्जयिष्यतीत्याशयात् । सर्वथा सत्त्वानधिकरणत्वादिपक्षाणामवश्यनिराकरणीयत्वात् पूर्ववत्पूर्वपूर्वकल्पदूषणोपमर्दकतयोत्थापयितुमशक्य-त्वात् सत्त्वानधिकरणत्वमात्रसाध्यपक्षे च मूलोक्तासत्पदस्यासत्त्वापादनेन सार्थक्येऽपि तस्य वैयर्थ्यापत्त्या वक्ष्यमाणरीत्याऽर्थान्तरपरतया योजनायां तदसंभवेनाव्यवहितनिरस्तपक्षस्य चासत्त्वानधिकरणत्वस्य पक्षविशेष-त्वाभिप्राये पर्यवसानगत्या साध्यविशेषणत्वाभिप्राये च साक्षादेव विशिष्टविषयकत्वादुक्तदूषणानिस्तारेण तं प्रदूष्य विशिष्टसाध्यपक्ष एव दूषणान्तरपरतां भाष्यस्याभिप्रेत्य संभावितकल्पानुत्थापयितुं दूषणान्तरं प्रतिजानीते **किञ्चेति** । यद्वैवं सर्वथा सत्त्वानधिकरणत्वे पराभिमतिं सिद्धवत्कृत्यानिष्टानिस्तारादित्युक्तम् । अधुना परमुखेनैव तदभिप्रायं निश्चित्य दूषयिष्याम इत्याशयेन विकल्पयति **किञ्चेति** । कल्पानामसंभावनानिरासाय पीठिकामारचयति **न सत्त्वं नामेति** । सत्त्वविशेषणस्याविशेषितत्वस्य विशेषनिरूप्यत्वात्तत्पक्षानन्तर्यमविशेषितत्वपक्षस्य । सर्वथेत्यस्या-नधिकरणत्वविशेषणत्वान्मुख्यतः पराभिप्रेतत्वाच्च तत्पक्षस्यान्यत्वम् । **असतोऽपि वैलक्षण्यमिति** । अत्रोत्तरत्र च यथास्थितमूलानुवादः । असतो वैलक्षण्यमपीत्येवं चार्थः । अत्र पदार्थभेदवादिन इत्येतावतैव संभवेन सदित्यस्य हेतुशरीरप्रवेशस्यानावश्यकत्वादाह **भेदभङ्गादिति** । **भेदवादिन इति** । सत्त्वासत्त्वव्यवस्थाङ्गीकारिण इत्यर्थः । यद्वा त्वया साध्यमानं सदसत्त्वपर्यवसन्नं यत्सदसद्वैलक्षण्यं तदङ्गीकारिण इत्यर्थः ।

**स०व्र०—** **अनिष्टानिस्तारादिति** । असत्त्वापत्तिरूपानिष्टानिस्तारादित्यर्थः । असत्त्वानधिकरणत्वे वादिप्रतिवादिसिद्ध इत्युक्तत्वात्कथमसत्त्वमादाय पर्यवसानमिति न वाच्यम् । असत्त्वानधिकरणत्वरूप-विशेषणस्योभयसंमतत्वेऽपि तदुपादानस्य प्रतिज्ञार्थे धर्मिणि साध्ये वा अविवक्षितत्वेनासत्त्वमादाय पर्यवसान-स्याप्रत्यूहत्वात् न ह्युभयसंमतं सर्वं प्रतिज्ञार्थे प्रविशत्यतिप्रसङ्गादिति भावः । अथ प्रतिज्ञार्थे साध्यविशेषणत्वेन





तदुपादीयते अतो नासत्त्वापत्तिरूपमनिष्टमिति, तत्रांशतः सिद्धसाधनताया उक्तत्वात् । अपरं च दोषं तत्र वक्तुमाह **किञ्चेत्यादिना** । **एवमेवेति** । अविशेषितसत्त्वं नाम सन्मात्रत्वं तदनाधारत्वमेकसत्त्वानाधारत्वेऽपि भवतीत्यर्थः । **भेदभङ्गप्रसङ्गादिति** । अनेकसर्वगतसत्त्वानां स्वस्वाधारद्रव्याभिन्नानामेकत्राङ्गीकारे तेनाप्यभिन्नत्वापत्त्या यद्येनाभिन्नं तत्तदत्यन्ताभिन्नेनाप्यभिन्नमिति व्याप्त्या एकस्य सर्वात्मकत्वापत्त्या भेदभङ्गप्रसङ्गादित्यर्थः ।

**विठ्ठ०— अनिष्टानिस्तारादिति** । असत एव सत्त्वानधिकरणत्वं प्रमितमिति सतोऽपि तत्साधने प्रमाणबाधरूपानिष्टानिस्तारादित्यर्थः । **एवं चतुर्थनिराकरणमिति** । एकत्वानेकत्वविशेषमपहाय सत्त्वानधिकरणत्वं नाम विवक्षितयत्किञ्चित्सत्त्वानधिकरणत्वमित्युक्तं स्यात् तथाच सत्त्वभेदवादिना सत्त्वेऽपि किञ्चित्सत्त्वान्तरानधिकरणत्वोरीकरणेन सिद्धसाधनतापत्तेरिति व्याख्येयमित्यर्थः । **स्वीकारे चेति** । घटे घटसत्ता पटे पटसत्तेत्येवमेकैकस्मिन्नेकैकसत्ताङ्गीकारार्हा एकस्मिन्नेव घटे घटपटाद्यनेकसत्तास्वीकारे पदार्थभेदप्रसङ्गादित्यर्थः । **अतस्तेनेति** । यत एवं नियमो अतस्तेन सत्त्वानधिकरणे सर्वथा सत्त्वानधिकरणत्वेन साध्यमानेन असत्त्वानधिकरणत्वेन साध्यमानेन असत्त्वानधिकरणत्वे सत्त्वं सत्त्वानधिकरणत्वे चासत्त्वमिति सदसत्त्वापत्त्या वैवक्षिकसदसत्त्वाङ्गीकारात् कथमनिष्टं भवेदित्यर्थः ।

**गूढ०— अनिष्टानिस्तारादिति** । अपसिद्धान्तरूपानिष्टापरिहारादित्यर्थः । दूषणान्तरमाह **किञ्चेति** । **अविशेषितेति** । एकानेकसर्वसर्वथेत्यादिविशेषणाविशेषितेत्यर्थः । **विश्वस्येति** । अत्र च सद्भेदवादिन इत्येकं पदम् । सदित्यस्य भावप्रधानत्वमुक्तमिति भावः । एवं च सत्त्वानां भेदवादिन इति विग्रहः । **एवमेवेति** । सत्त्वानेकत्वस्याङ्गीकृतत्वेन सतो विश्वस्य सत्त्वानधिकरणत्वं भवेदेव सत्त्वानधिकरणत्वस्वीकारादसतो वैलक्षण्यमपि संमतमेवेति । तेन साधितेन ममानिष्टं कथं भवेदिति व्याख्येयमित्यर्थः । **भेदवादिनेति** । एकसत्त्वानधिकरणत्ववादित्वेऽपि द्वित्वावच्छिन्नाभावमादायानेकसर्वसत्त्वानधिकरणत्वमुपपन्नमिति भावः । **स्वीकारे चेति** । अनेकसर्वसत्त्वानधिकरणत्वस्वीकार इत्यर्थः । **भेदभङ्गादिति** । कस्य सर्वात्मकत्वापत्या भेदभङ्गः स्यादित्यर्थः ।

**प्रदीपः**— असत्त्वानाधारत्वावश्यंभावेऽपि अनुमानस्यार्थान्तरता दुर्वारेत्याह **अथेत्यादिना** । **विशिष्ट-साधनेऽप्यंशे** वैयर्थ्यमित्युक्तं अङ्गीकृत्यापि सार्थक्यमाह **किञ्चेत्यादिना** । **एवमेवेति** । अविशेषितसत्वं नाम सामान्याश्रयत्वं तदनाधारत्वमेकसत्त्वाधारत्वेऽपि भवतीत्यर्थः । **यत इति** । व्याप्तिप्रदर्शनम् ।

**३०२ सु०— मया ह्येकस्यैव सदसत्त्वमङ्गीकृतम् । स्वोपाधौ प्रतिषेधाप्रतियोगित्वात्परोपाधौ च तत्प्रतियोगित्वात् । द्वयोरपि सर्वथा प्रतिषेधात्कथं सदसत्त्वप्रसङ्ग इति चेत्तर्हि असत एव सतो वैलक्षण्यं स्वयं सत् नियतमेव । सतः सद्वैलक्षण्यम् उक्त्वा पुनः असतोऽपि**

**वैलक्षण्येन व्याहतेन प्रतिज्ञातेन भेदवादिनः कथमनिष्टं भवेत्। एवं सत एव असतोऽपि वैलक्षण्यं नियतमित्यसद्वैलक्षण्यमुक्त्वा पुनर्विश्वस्य सद्वैलक्षण्यप्रतिज्ञा व्याहता द्रष्टव्या। न ह्यनिर्वाच्यसिद्धेः प्रागयं विप्रतिषेधो निवारयितुं शक्यः। अस्मादेव हेतोस्तत्सिद्धिरिति चेत्तर्हि 'माता वन्ध्ये'ति प्रतिज्ञा कुतो विप्रतिषिद्धा। वक्ष्यमाणहेतुनैव प्रतिज्ञातार्थसिद्धेस्तत्रापि सुवचत्वात्। 'संभावितः प्रतिज्ञाया अर्थः साध्येत हेतुने'ति न्यायात्तत्र हेत्वाकाङ्क्षैव नास्तीति चेत्समम्।**

**यादु०**— नन्वेकस्यैव सदसत्त्वं विरुद्धं कथमङ्गीकृतमित्यत आह **स्वोपाधाविति। परोपाधाविति।** स्वस्य घटस्योपाधिराश्रयो भूतलादिस्तस्मिन् घटो नास्तीति निषेधाप्रतियोगित्वात्सत्त्वं घटस्याङ्गीकर्तव्यम्। एवं परस्य पटस्योपाधावाश्रये घटो नास्तीति निषेधप्रतियोगित्वादसत्त्वमप्यङ्गीकार्यमिति नैकस्य सदसत्त्वं विरुद्धमित्यर्थः। तथा च घटादेः स्वोपाधौ सर्वथाऽसत्त्वानधिकरणत्वं परोपाधौ सर्वथा सत्त्वानधिकरणत्वं चास्तीति सिद्धसाध्यतेति भावः। न हि, सर्वथेति विशेषणमहिम्ना प्रतिषेधस्य सर्वाधिकरणसंबन्धिता विवक्षिताऽतो नोक्तसिद्धसाध्यतेत्याशयेन शङ्कते **द्वयोरपीति।** सत्त्वासत्त्वयोरित्यर्थः। **वक्ष्यमाणहेतुनैवेति।** मे माता वन्ध्येति प्रतिज्ञा येन कृता तेन वक्ष्यमाणो यः स्त्रीत्वादिर्हेतुस्तेनेत्यर्थः।

**वं०प०**— **सर्वथेति।** स्वोपाधौ चेत्यर्थः। तथाऽप्येतद्विशेषणसामर्थ्यात्सदसत्त्वं न प्राप्नोतीत्याशयः। अस्माद्बाध्यत्वादिति हेतोः सकाशादेव। शङ्कते **संभावित इति।**

**कं०रा०**— **स्वोपाधौ** स्वाधिष्ठाने। **परोपाधौ** स्वाधिष्ठानादन्यत्र। **तत्प्रतियोगित्वात्** निषेधप्रतियोगित्वात्। यद्यपि स्वाधिष्ठाने विद्यमानस्य घटादेः परोपाधौ न तावत्प्रागभावप्रध्वंसरूपप्रतिषेधौ संभवतस्तयोः प्रतियोगिसत्तादशायामनुपपत्तेः। नाप्यत्यन्ताभावरूपः प्रतिषेधः प्रामाणिकप्रतियोगिकस्य तस्यानङ्गीकारात्। तथा च परोपाधौ तत्प्रतियोगित्वादित्यनुपपन्नम्। तथाऽपि परोपाधौ तत्संसर्गनिषेधस्य सत्त्वेन परोपाधौ तत्प्रतियोगित्वादित्यस्य परोपाधिनिष्ठनिषेधप्रतियोगिसंसर्गकत्वादित्यर्थो द्रष्टव्यः। असद्वैलक्षण्ये सति सत्त्वानधिकरणत्वं वदता मया सत्त्वासत्त्वयोर्द्वयोः सर्वथा प्रतिषेधात्कथं विश्वस्य सदसत्वप्रसङ्ग इति शङ्कते **द्वयोरिति।** विप्रतिषेधो व्याघातस्तत्सिद्धिरनिर्वाच्यसिद्धिः। तथा चास्मादेव हेतोः सदसद्विलक्षणरूपानिर्वाच्यसिद्धौ विप्रतिषेधनिवारणं शक्यमिति भावः। **वक्ष्यमाणेति।** माता वन्ध्येति प्रतिज्ञातार्थे साधकत्वेन वक्ष्यमाणो यो हेतुस्तेनैव प्रतिज्ञातार्थसिद्धेः सुवचत्वात् तत्रापि प्रतिज्ञायां विप्रतिषेधो न स्यादित्यर्थः।

**श्रीनिधि०**— **स्वोपाधौ** स्वाधिकरणे। **परोपाधौ** परस्यैवाधिकरणे। **प्रतिषेधो निवारयितुं शक्य इति। प्रतिषेधो** विरोधः। **अस्मादेव हेतोरिति।** ज्ञानबाध्यत्वरूपहेतोरित्यर्थः। **विप्रतिषिद्धा** विरुद्धा। **वक्ष्यमाण-**





**हेतुनैवेति**। प्रतिज्ञापेक्षया वक्ष्यमाणेति द्रष्टव्यम्। स चानुपलभ्यमानपुत्रत्वादिर्भविष्यति। **हेत्वाकाङ्क्षैव नास्तीति**। असंभावितत्वादिति भावः।

**वा०चं०**— ननु कथं नानिष्टं तस्य सदसत्त्वापादकतयैव सत्त्ववादिनं प्रत्यनिष्टत्वादित्यत आह **मया हीति**। तर्हि विरोध एवमपि त्वां प्रत्यनिष्टत्वाभावे मां प्रत्यपि नानिष्टत्वमित्यत आह **स्वोपाधाविति**। त्वया तु स्वोपाधावपि निषेधाङ्गीकारादिति भावः। ननु सत्त्वानधिकरणत्वोक्तावसत्त्वापत्तिस्तदा स्याद्यद्यसद्वैलक्षण्यमिति तन्न निषिध्येत। असत्त्वानधिकरणत्वोक्तौ सत्त्वापत्तिस्तदा स्याद्यदि सद्वैलक्षण्यमिति तन्न निषिध्येत तथा चैकैकनिषेधे सत्त्वादिलाभेऽपि उभयनिषेधस्थले सत्त्वादिपर्यवसानानुपपत्त्या उभयनिषेधमात्रस्य सिद्ध्याऽनिर्वचनीयसिद्धिरित्याशङ्कते **द्वयोरपीति**। असत एव सद्वैलक्षण्यं सत एवासद्वैलक्षण्यमिति नियमप्राप्तसत्त्वासत्त्वयोर्निवारणस्याशक्यतया पुनस्तन्निषेधे च व्याहतिप्रसङ्गेन निषेधस्यैवानुपपत्तिरित्याह **तर्हीति**। ननु नियमवशान्निषेधानुपपत्तौ निषेधान्यथाऽनुपपत्त्या नियम एव किं न परित्याज्य इत्यत उभयनिषेधस्य नियमस्येव प्रमाणान्तरेणासिद्ध्या न तद्बलेन नियमभङ्ग इत्याह **न हीति**। तथा च निषेधद्वयसिद्धौ नियमभङ्गसिद्धिस्तत्सिद्धौ च व्याहत्यभावसिद्धिस्तत्सिद्धौ च निषेधद्वयसिद्धिरिति चक्रकम्। निषेधद्वयसिद्धौ नियमभङ्गेन व्याहत्यभावसिद्धिस्तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयो वेति भावः। ननु निषेधद्वयसाधकज्ञानबाध्यत्वादिहेतोर्व्याप्तिपक्षधर्मतोपेततया निषेधद्वयं विनाऽपर्यवसानात्तत्साधनाय च हेतौ प्रवृत्ते व्याहतिः प्रमाणसिद्धेऽर्थेऽकिञ्चित्करैवेति हेतुबलायत्तसाध्यसिद्धेर्व्याहत्यभावसिद्ध्यनधीनत्वान्न चक्रकादीत्याशयेन शङ्कते **अस्मादेवेति**। हेतौ प्रवृत्ते साध्यसिद्धिसंभवेऽपि सति व्याघाते हेतुप्रवृत्तिरेव न संभवति। अन्यथा व्याघातवार्तैवोच्छिद्येतेत्याशयेन व्याहतेर्दूषणत्वं परमुखेनैवानेतुं प्रतिबन्दीमुखेनाह **तर्हीति**।

**स०व्र०**— ननु सदसत्त्वाभ्युपगमस्य विरोधेन दूषितत्वात्कथं सिद्धार्थतेत्यत आह **स्वोपाधाविति**। स्वस्य घटस्योपाधिराश्रयो भूतलादिः तस्मिन्नास्तीति निषेधप्रतियोगित्वाभावात्सत्त्वं परस्य पटस्योपाधावाश्रये निषेधप्रतियोगित्वादसत्त्वमित्येकस्य देशभेदात्सदसत्त्वे न विरुद्धे इत्यर्थः। ननु सर्वथा सत्त्वानधिकरणत्वं नाम तदितरसर्वसत्त्वानधिकरणत्वे सति तदीयसत्त्वस्याप्यनधिकरणत्वम्। घटे घटीयसत्ताया अपि प्रतिषेध इति यावत्। एवं च सत्यवादिमतेऽपि घटे परोपाध्यवच्छेदेन घटीयसत्ताप्रतिषेधः सिद्ध एव तन्तुषु घटो नास्तीति प्रतीतेरिति न तु तदीयसत्ताप्रतिषेधोऽपि सर्वथेति विशेषणमहिम्नैव सर्वाधिकरणसंबन्धी विवक्षितः। अतः कथं परोपाधिमात्रगतनिषेधमादाय पर्यवसानम्। एवमसत्त्वप्रतिषेधोऽपि सर्वथैव विवक्षितः। तेन सर्वाधिकरणसंबन्ध्यसत्त्वप्रतिषेधलाभे कथं स्वोपाधावेव सत्त्वमादाय पर्यवसानम्। अतो नोक्तसिद्धसाधनतेत्याशङ्कते **द्वयोरपि सर्वथेति**। तदीयसत्त्वासत्त्वयोरित्यर्थः।

**वि०ठ०**— परस्परविरुद्धं सदसत्त्वं कथमेकस्मिन्नङ्गीक्रियते इत्यत आह **स्वोपाधाविति**। स्वस्योपाधौ घटे घटत्वप्रकारेण निषेधाप्रतियोगित्वात् सत्त्वं परोपाधौ पटे घटत्वप्रकारेण निषेधप्रतियोगित्वात् असत्त्वमित्यर्थः। यद्वा स्वस्य घटस्योपाधिः आश्रयभूतो भूतलादिः तत्र घटो नेति प्रतिषेधप्रतियोगित्वाभावात् सत्त्वं परस्य पटस्य उपाधौ

आश्रये भूतलादौ प्रतिषेधप्रतियोगित्वात् असत्त्वमिति नैकस्य सदसत्त्वं विरुद्धमित्यर्थः । तथा चैकस्यैव घटादेः स्वोपाधौ सर्वथा सत्त्वानधिकरणत्वं परोपाधौ च सत्त्वानधिकरणत्वं चास्तीति सिद्धसाधनता इति भावः । ननु सर्वथेति विशेषणमहिम्ना प्रतिषेधस्य सर्वोपाधिसंबन्धिता विवक्षिता अतो नोक्तसिद्धसाधनता इति शङ्कते **द्वयोरपीति** । सत्त्वासत्त्वयोरित्यर्थः । ननु सद्वैलक्षण्योक्त्या असत्त्वलाभे सति पुनरसद्वैलक्षण्येनोक्तेन व्याहतिः स्यात् सद्वैलक्षण्योक्त्या अनिर्वचनीयलाभोपपत्त्या सत्त्वाप्राप्तेर्न व्याहतिरित्यत आह **न हीति** । उक्तादेव बाध्यत्वादिहेतोः अनिर्वचनीयत्व-सिद्धेः न व्याहतिरिति शङ्कां निषेधति **अस्मादिति** । मे माता वन्ध्येत्यत्रापि वक्ष्यमाणेन स्त्रीत्वादिति हेतुनैव प्रतिज्ञातार्थसिद्धेर्वक्तुं शक्यते इति न तत्रापि व्याहतिः स्यादिति समाधत्ते **तर्हीति** ।

**गूढ०**— सत्त्वैकस्वभाववादिनः सदसत्त्वं कथमनिष्टमित्यत आह **मया हीति** । **तत्प्रतियोगित्वादिति** । प्रतिषेधप्रतियोगित्वादित्यर्थः । **द्वयोरपीति** । सत्त्वासत्त्वयोरित्यर्थः । ननु अनिर्वाच्यविषयेणैवं व्याहतिरित्यत आह **न हीति** । तस्यैवासिद्धेरिति भावः । **अस्मादेवेति** । बाध्यत्वादेवेत्यर्थः । ननु तत्र प्रतिषेधनिवारणं केन कर्तुं शक्यमित्यत आह **वक्ष्यमाणेति** । स्त्रीत्वादिहेतुनेत्यर्थः । शङ्कते **संभावित इति** ।

**प्रदीपः**— ननु सदसत्त्वाभ्युपगमस्य विरोधदूषितत्वात् कथं सिद्धार्थतेत्यत्राह **स्वोपाधाविति** । स्वस्य घटस्योपाधिराश्रयो भूतलं तस्मिन्नास्तीति निषेधप्रतियोगित्वाभावात् सत्त्वं परस्य घटस्योपाधावाश्रयनिषेध-प्रतियोगित्वादसत्त्वमित्येकस्य घटस्य देशभेदात्सदसत्त्वे न विरुद्धे इत्यर्थः । सिद्धार्थतापरिहारमाशङ्क्य व्याहत्या दूषयति **द्वयोरपीत्यादिना** । यथोक्तं विलक्षणं सदसतोरिति व्याहतं **सत इति** ।

**३०३ सु०— किञ्च सत एव विश्वस्यासतो वैलक्षण्यं स्वयं सत् एव साक्षिप्रमित-मस्ति । अतस्तेन बाधितेन सर्वथा सत्त्वानधिकरणत्वेन प्रतिज्ञातेन भेदवादिनः कथमनिष्टं भवेत् । अमुख्यसत्त्वावेदकं प्रमाणं तदिति चेत् । मम तावन्मुख्यमेव तत्सत्त्वमित्युक्तम् । परकीयप्रमाणतर्काणामद्यापि गहने निविष्टत्वादिति ।**

**परि०**— **इत्युक्तमिति** । यतोऽस्माकं तावद्भावाभावत्वविषयं प्रमाणं तत्त्वगोचरमेवेत्यादि-ग्रन्थेनेति भावः । **प्रमाणतर्काणामिति** । नेहनानेत्यादिप्रमाणानां बाध्यत्वादित्यादितर्काणामित्यर्थः ।

**वं०प०**— **किं च सत एवेति** । सत्त्वेन प्रत्यक्षादिना प्रमितस्यैवेत्यर्थः । **तत्** प्रत्यक्षादिप्रमाणम् । ननु नेह नानेति श्रुत्या दृश्यत्वाद्यनुमानैश्च विश्वमिथ्यात्वसिद्धेस्तदन्तर्गतप्रत्यक्षादिप्रमाणं विश्वस्यातत्त्वावेदकमेव भविष्यतीत्यत आह **परकीयेति** । नेह नानेत्यादि प्रमाणानां बाध्यत्वादितर्काणाम् । तथाच श्रुत्यादिप्रामाण्ये सिद्धे विश्वमिथ्यात्वसिध्या तदन्तर्गतस्य प्रत्यक्षादिप्रमाणस्यामुख्यसत्त्वावेदकत्वसिद्धिस्तस्तिद्धौ च तद्विरोधाभावेन श्रुत्यादिप्रामाण्यसिद्धिरित्यन्योन्याश्रय इति भावः ।





**वा०चं०**— भेदवादिन इत्येतद्बललब्धं समाधानं वक्तुं तन्निवर्त्यां शङ्कां दर्शयति **अमुख्येति** । सदद्वैतवादिनः सदद्वैतभङ्गेन प्रपञ्चेऽपि मुख्यसत्त्वस्यानङ्गीकार्यत्वेऽपि सद्भेदवादिनो मम प्रपञ्चेऽपि मुख्यसत्त्वाङ्गीकारो नानुपपन्न इत्याशयेन भेदवादिन इत्युक्तिरिति भावः । प्रमाणं श्रुतिस्तर्को ज्ञानबाध्यत्वानुमानं दृश्यत्वादिकं चाभिमतम् । अत एव हेत्वन्तराभिधानेऽपीति वक्ष्यति । यद्वा प्रमाणे, प्रकृते श्रुत्यनुमानरूपे, तर्को, विश्वस्य सत्यत्वे ज्ञानबाध्यत्वं न स्यादित्यादिस्तदनुग्राहकोऽथवोक्तवक्ष्यमाणानां प्रमाणतदनुग्राहकतर्काणामित्यर्थः ।

**विठ्ठ०**— न केवलं सदसतोः सर्वथा सत्त्वासत्त्वानाधारत्वसाधने प्रतिज्ञाव्याहतिः किन्तु बाधितापि स्यात्प्रतिज्ञेत्याह **किञ्चेति** । असतोऽपीत्यत्र न केवलं सदन्तरादित्यपेरर्थः । **कथमनिष्टमिति** । प्रबलप्रमाणाबाधितप्रतिज्ञायाः अनिष्टानाधायकत्वादिति भावः । असद्विलक्षणस्य सत्त्वावेदकं प्रमाणम् अतत्त्वावेदकत्वात् दुर्बलमिति शङ्कते **अमुख्यमिति** । **इत्युक्तमिति** । यतोऽस्माकं भावत्वविषयं प्रमाणं तत्त्वगोचरमेवेत्यर्थः । नेहेत्यादिप्रमाणेन बाध्यत्वादिति तर्केण चामुख्यत्वं साधयामीत्यत आह **परकीयेति** ।

**गूढ०**— व्याहतिमुक्त्वा बाधमाह **किञ्चेति** । ननु परोपन्यस्तप्रमाणतर्कैः सत्त्वावगाहिप्रमाणस्यातत्त्वावेदकत्वं सेत्स्यतीत्यत आह **परकीयेति** ।

**प्रदीपः**— असत्त्वानाधारत्वेन सत्यस्य प्रमितत्वात्सत्त्वानाधारत्वसाधनं बाधितं चेत्युपपादयति **किञ्चेत्यादिना** ।

**२०४ सु०— केचित् ते तव अनिष्टं कथं न भवेत् इति व्याचक्षते । तत्र 'न पादादावि'ति प्रतिषेधस्य नञा निर्दिष्टमनित्यमिति समाधानमवसेयम् ।**

**बिन्दुः**— **नञा निर्दिष्टमनित्यमिति** । यद्यपि नञा निर्दिष्टमनित्यमिति परिभाषासु न कण्ठतः पठितं तथापि क्वचिदपवादविषयेषूत्सर्गो निविशत इति परिभाषाया अयमर्थः प्रसूतो भवति । तथाहि अपवादविषये हि उत्सर्गशास्त्रस्य प्रवृत्तिरपवादशास्त्रस्य नित्यत्वे न संभवत्यतो यत्रोत्सर्गशास्त्रं प्रवर्तते तत्रापवादो न प्रवर्तत इत्युक्ते तस्यानित्यतैव फलिता । नञा निर्दिष्टं च निषेधशास्त्रं निषेधस्य च प्राप्तिपूर्वकत्वनियमात्प्रापकशास्त्रमेव उत्सर्गः । निषेधशास्त्रं चापवादः एवं चानया परिभाषया निषेधविषये उत्सर्गप्रवृत्तौ सत्यां नञा निर्दिष्टमनित्यमिति सिद्धं भवति । यथा निषेधशास्त्रस्य प्राप्तिपूर्वकत्वादपवादत्वं नियतमेवास्ति न तथा नञ्विनिर्मुक्तस्यापवादत्वनियमः । न हि भावविधानेऽपि विरोधिप्रसक्तिः

अपेक्षितैवेति नियमः आतोऽनुपसर्गे क इत्यादेरपवादस्य कर्मण्यणित्याद्युत्सर्गपूर्वकत्वेऽपि इको यणचि कर्मण्यणित्यादेस्तत्पूर्वकत्वाभावात् । फलं चास्याः परिभाषायाः, प्रदीयतां दाशरथाय मैथिलीत्यादौ दशरथस्यापत्यमित्यर्थविवक्षायामपि अत इञित्यपवादशास्त्रेण विहितमिञं परित्यज्यापि तस्यापत्य-मित्युत्सर्गसिद्धोऽणेव भवति । नृपः पुरस्थैः प्रतिरुद्धवर्त्मा पश्चात्तनैः कैश्चन नुद्यमान इत्यत्र पश्चात्तनै-रित्यभियुक्तप्रयोगोऽपि सिद्धो भवति । अन्यथा हि सायंचिरमित्यस्यापवादेन दक्षिणापश्चात्पुरसस्त्यक् इत्यनेन त्यका पाश्चात्यैरिति स्यात् । अत एव कार्ये व्युत्पत्तिः पश्चात्तनीति टीकाकारैः प्रयुक्तम् । एवमेव मार्ष्टीत्यादाविव मृष्ट इत्यादौ मृजेर्वृद्धिरिति प्राप्ते इग् लक्षणावृद्धिः क्ङिति चेति निषेधशास्त्रेणा-पोद्यते तस्य नञा निर्दिष्टस्यानित्यत्वान्मृजन्तीत्यत्र पाक्षिकी प्राप्तिस्तेन मार्जन्तीत्यपि रूपं भवत्येव । एवं च मृजेरजादौ संक्रमे विभाषावृद्धिरिति न वक्तव्यम् । ज्ञापकं चात्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति भविष्यदकप्रयोगः । तद्धि तदा स्याद्यदि अण् कर्मणि चेत्यपवादविषयेऽपि तुमुन् ण्वुलौ क्रियायामित्युत्सर्गविहितो ण्वुल्प्रवर्तते । न कटं कारको व्रजतीत्यत्र कर्मणि षष्ठीनिषेधः संभवति । नव्यास्तु इकोऽचीत्यज्ग्रहणेन नलुमतेति निषेधस्यानित्यत्वं ज्ञापितं तच्च ज्ञापकं न तन्मात्रविषयं विशेषापेक्षं किन्तु नञा निर्दिष्टमनित्यमिति सामान्यापेक्षम् । तेन यूस्त्र्याख्यौ नदीति नदीसंज्ञानिषेधस्य नेयङुवङ्स्थानावस्त्रीत्यस्याप्यनित्यत्वम् । तेन हे सुभ्रु इत्यत्र नदीसंज्ञायां अम्बार्थनद्योर्ह्रस्व इति ह्रस्वो भवति । अत एव विमानना सुभ्रु कुतः पितुर्गृहे इति कालिदासः । हापितः क्वासि हे सुभ्रु इति भट्टिश्च । 'तव सुभ्रुकटाक्षतो भ्रुवोः पदमैन्द्रं च बिभर्ति वासव' इत्याद्यभियुक्तप्रयोगाः समञ्जसा भवन्ति इति ।

**परि०**— 'तेमयावेकवचनस्येति' विहितादेशस्य पादादौ निषेधात्तवानिष्टमिति निर्देशः स्यादित्यत आह **तत्र न पादादाविति** । अष्टमस्याद्यपादे 'अनुदात्तं सर्वमपादादावि'ति सूत्रादपादा-दावित्यनुवर्तमाने तेमयावेकवचनस्येति युष्मदस्मदोस्ते मे इत्यादेशविधायके सूत्रे अपादादौ पादादौ न भवत इति निषेधादत्र त इति कथमिति शङ्कायां 'नञा निर्दिष्टमनित्यमि'त्यादेशनिषेधोऽनित्य इत्यदोष इत्युत्तरं ज्ञेयमित्यर्थः । अनित्यत्वं च इदमस्थमुरित्युकारेण ज्ञाप्यते । नविभक्तौ तुस्मा इति नञा निर्दिष्टस्य नित्यत्वे हि निषेधादेव प्राक् दिशो विभक्तिरिति विभक्तिसंज्ञकथमुप्रत्ययस्थमकारस्य हलन्त्यमिति-लोपाप्रसक्तेर्मकाररक्षणार्थकोकारो नोच्येतेति ज्ञापकत्वमुकारस्य ज्ञेयमित्येके । 'इकोचिविभक्तावि'-त्यत्राज्ग्रहणेन ज्ञाप्यत इत्यन्ये । 'नलुमताङ्गस्ये'ति नञानिर्दिष्टस्य नित्यत्वे हि हे वारीत्यत्र विभक्ति-निमित्तनुमोऽप्राप्तेस्तत्र नुमभावार्थमज्ग्रहणमदोऽनर्थकमिति नलुमतेति नञा निर्दिष्टमनित्यमिति ज्ञायत इति । अपादादावित्यस्यार्थोक्तिर्न पादादाविति ।





**यादु०— न पादादाविति । प्रतिषेधस्येति ।** तेमयावेकवचनस्येत्यत्रानुदात्तं सर्वमपादादावित्यनुवर्तत इत्यर्थः । न पादादावित्यपादादावित्यस्यार्थानुवाद इति ज्ञातव्यम् ।

**कं०रा०— तत्रेति ।** असंभाविते माता वन्ध्येत्यर्थे हेत्वाकाङ्क्षैव नास्ति । तेन तत्सिद्धिस्तु दूरनिरस्तेति भावः । **तत्** साक्षिरूपम् । तत्सत्वं साक्षिप्रमितं सत्त्वम् । नन्वनिर्वाच्यत्वसाधकप्रमाणतर्कबलात्सदसद्विलक्षणत्वरूपानिर्वाच्यत्वे सिद्धे विश्वसत्त्वग्राहकप्रमाणस्यामुख्यसत्त्वावेदकत्वं कल्प्यत इत्यत आह **परकीयेति । न पादादाविति ।** यद्यपि तेमयावेकवचनस्येत्यत्रानुदात्तं सर्वमपादादावित्यनुवर्तनादपादादावित्येवास्ति । तथाप्यपादादावित्यस्यार्थतो ग्रहणं कृतमिति द्रष्टव्यम् । **नञा निर्दिष्टमिति ।** नञा निर्दिष्टस्यानित्यत्वं च इदमस्थमुः इत्युकारोच्चारणाज्ज्ञापकात्सिद्धम् । नञा निर्दिष्टस्य नित्यत्वे हि न विभक्तौ तुस्मा इत्यस्य नित्यं प्रवृत्तेः प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञकस्थमुप्रत्ययमकारस्येत्संज्ञाया अप्रसक्तेस्तत्परित्राणार्थस्योकारोच्चारणस्य वैयर्थ्यं स्यात् । तस्य च सामान्यज्ञापकत्वाङ्गीकारादपादादावित्यस्यापि अनित्यत्वोपपत्तेरभियुक्तप्रयोगानुसारेण अनित्यत्वस्य व्यवस्थिततयाऽङ्गीकारेऽतिप्रसङ्गाभावादिति ।

**श्रीनिधि०— केचित्त्विति ।** नरहरितीर्थश्रीमच्चरणाः । ननु ते मयावेकवचनस्य पदात् परयोः षष्ठी चतुर्थ्येकवचनान्तयोर्युष्मदस्मदोर्यथाक्रमं ते मे इत्यादेशौ स्त इत्यस्य न पादादाविति प्रतिषेधात् कथं ते तवेति व्याख्यानमित्यत आह **तत्र न पादादाविति ।** अल्पमतयोऽपि मनुष्याधमा अपि त्रियंबकं संयमिनं ददर्शेत्यादि प्रयुञ्जते । किमनाद्यनंतकालमनन्तवेदान् सकलपौरुषेयग्रन्थांश्च करतलामलकवत् पश्यतः सर्वज्ञशिखामणेः वैदिकाग्रेसरस्य रुद्रादिसर्वदेवतामौळिरत्नपरिघट्टितपादपीठस्य भगवतो मध्वदेवस्य महाव्याकरणरीतिमवलम्ब्य लौकिके वैदिकं प्रयुञ्जानस्य प्रयोग इति । तथापि मन्दमतिष्वनुग्रहाय एवं समाधानमुक्तमिति ज्ञेयम् ।

**वा०र०— "इतःपरं द्वितीये दूषणान्तरमाह यद्युच्यत इति । अपिशब्द इती"**त्येतन्मूलव्याख्यानपर्यन्तं टीका व्याकर्तव्यास्ति । तन्मूलात्प्राक् **नञा निर्दिष्टमनित्यमितीति** मूलम् । नञा निर्दिष्टमनित्यमिति परिभाषया तन्निषेधस्य यदनित्यत्वं तन्निमित्तकं समाधानं प्रकृते तस्य प्रवृत्त्यभावरूपमवधेयमित्यर्थः । नञा निर्दिष्टस्यानित्यत्वे विचारस्तु न लोकेति निषेधस्तु नञा निर्दिष्टमनित्यमित्यनित्य इति गीताभाष्यटीकावाक्यविचारावसरे द्वितीयाध्याये दद्माद्युवाकवः क्षेत्रजेष्टमघवन् इति ऋग्भाष्यटीकास्थतद्वाक्यविचारावसरे चास्माभिः कृतोऽवसेयः । अवकाशतोऽत्रापि लेख्योस्ति ।

**स०व्र०— केचिदिति ।** ते मयावेकवचनस्येत्यत्र अनुदात्तं सर्वमपादादाविति प्रतिषेधस्येत्यर्थः ।

**विट्ठ०—** ननु अनुदात्तं सर्वमपादादाविति सूत्रात् अपादादौ इत्यनुवर्तमाने ते मयावेकवचनस्येति अपादादौ पादादित्वाभावे एव युष्मदस्मच्छब्दगतषष्ठ्येकवचनान्तस्य ते मे इत्यादेशौ क्रमाद्भवतः पादादित्वे तु





न भवत इति ते इत्यादेशनिषेधात्तवानिष्टमिति निर्देशः स्यात् तथा चेदं व्याख्यानं कथमित्यत आह **तत्र न पादादाविति** । अपादादावित्यस्यार्थानुवादो न पादादाविति ज्ञेयम् ।

**चषकः— न पादादाविति** । 'अनुदात्तं सर्वमपादादावि'ति सूत्रघटकस्यापादादावित्यस्य 'ते मया-वेकवचनस्ये'त्यादावनुवर्तनादिति भावः ।

**गूढ०—** स्वयूथ्यानां मतमुपन्यस्यति **केचिदिति** । ननु ते तवेति व्याख्यानमयुक्तम् । ते मयावेकवचनस्येति सूत्रेण पादादावविद्यमानयोरेव युष्मदस्मदोस्तेमे इत्यादेशविधानात् । प्रकृते च तवेत्यस्य पादादावेव सत्त्वेन ते इत्यादेशायोगादित्यत आह **तत्रेति** । तथा चास्माद्वचनात् पादादौ सतः ते इत्यादेशप्रतिषेधस्यानित्यत्वावगमान्न युक्तमेतदिति भावः ।

**प्रदीपः— केचिदिति** । ते मयावेकवचनस्येत्यत्रानुदात्तं सर्वमपादादाविति वर्तत इत्यर्थः ।

**३०५ सु०— द्वितीये दूषणान्तरमाह यद्युच्यत इति ।**

## अनु०— यद्युच्यतेऽपि सर्वस्मादिति सद्भेदसंस्थितिः ॥

**अपि**शब्दो दूषणसमुच्चये । सर्वस्मादपीत्यभिविधौ वा । यदीति श्रवणात्तर्हीति ग्राह्यम् । **सर्व**शब्दोऽनेकार्थः । यदि **अनेकस्मात्** सतो **वैलक्षण्यम्** अनेकसत्त्वानधिकरणत्वं विश्वस्य साध्यमित्युच्यते तर्हि **सतां भेदसंस्थितिः** ततश्चापसिद्धान्तः । इदमुक्तं भवति । विश्वमनेक-सत्ताऽनधिकरणमिति प्रतिजानता अनेकसत्त्वान्यङ्गीक्रियन्ते न वा । द्वितीयेऽनेकविशेषणं व्यर्थम् । आद्येऽप्येकस्मिन्नेवार्थेऽनेकानि सत्त्वान्युताधारभेदेन । नाद्यः वैयर्थ्यात् । द्वितीये त्विदमुपतिष्ठते **सद्भेदसंस्थितिरिति** । अनेकसत्त्वाधिकरणताप्रतिषेधसामर्थ्याद् एकैकसत्त्व-स्वीकारापत्तेरिति वा ।

**परि०— द्वितीय इति** । अनेकसत्त्वानधिकरणत्वमिति पक्ष इत्यर्थः । **दूषणसमुच्चय इति** । प्रागुक्तसिद्धसाधनत्वरूपदूषणेन सहोच्यमानदूषणसमुच्चय इत्यर्थः । विकल्पपूर्वकं योजनां विनैव प्रकारा-न्तरेण तद्धेतुत्वमाह **अनेकसत्त्वानधिकरणताप्रतिषेधेति** ।





**यादु०— अनेकविशेषणेति** । त्वन्मत इति शेषः । तेन तत्त्ववादिमते सिद्धसाधनतापरिहारार्थत्वान्न वैयर्थ्यमिति शङ्काऽनवकाशः । न च प्रतिवादिनः सिद्धसाधनतापरिहारस्यापि मत्प्रयोजनत्वान्न वैयर्थ्यमिति वाच्यम् । सद्भ्यामभावो निरूप्यत इति भाट्टमतानुसारिणा त्वयाऽसतां प्रतिषेध्यानामनेकसत्त्वानां परप्रसिद्धिमात्रेण प्रतिषेधस्य साधयितुमशक्यत्वादित्यभिप्रायात् । अत एवास्वरसात्प्रकारान्तरमाह **अनेकसत्त्वाधिकरणताप्रतिषेधेति** ।

**वं०प०— द्वितीये** अनेकसत्त्वानधिकरणत्वपक्षे । **दूषणसमुच्चये** । प्रागुक्तसिद्धसाधनत्वरूपदूषणेन सहोच्यमानदूषणसमुच्चय इत्यर्थः ।

**कं०रा०— द्वितीय इति** । अनेकसत्त्वानधिकरणत्वमिति द्वितीये दूषणान्तरमाहेत्यर्थः । **वैयर्थ्यादिति** । इदं सदिति प्रतीतिव्यवहारयोरेकेनैव सत्त्वेनोपपत्तेरेकस्मिन्ननेकसत्त्वाङ्गीकारस्य व्यर्थत्वादित्यर्थः । **अनेकेति** । विश्वमनेकसत्त्वानधिकरणमित्युक्ते एकैकसत्त्वाधिकरणत्वं विश्वस्य स्वीकृतं स्यात् । तथा च सद्भेदसंस्थितिरिति वा मूलस्य तात्पर्यमित्यर्थः ।

**श्रीनिधि०— द्वितीय इति** । अनेकसत्त्वानधिकरणत्वलक्षणद्वितीयपक्ष इत्यर्थः । **अनेकसत्त्वाधिकरणतेति** । अनेकत्वस्य एकैकमन्तरानुपपत्तेरिति भावः । **स्वीकारापत्तेरिति** । इति वा यद्युच्यत इति मूलस्य द्वितीयपक्षदूषकत्वमूह्यमिति शेषपर्यवसानैक्येऽपि उपपादने मुखभेदेऽपि द्रष्टव्यम् ।

**वा०चं०—** पक्षान्तरसमुच्चायकापिशब्दबलात्पक्षान्तरदूषणपरमुत्तरवाक्यमित्येव प्रतीयते । तत् न वक्ष्यमाणरीत्या तावदेवापि तु पूर्वत्र दूषणान्तरपरमपीत्याशयेनाह **द्वितीय इति** । तर्ह्यपिशब्दानुपपत्तिरित्यतो भिन्नक्रमतया तद्योजनेत्याशयेन तदर्थं समुच्चयं घटयति **अपीति** । अस्मिन्पक्षे व्यवहितान्वयप्रसङ्गा-दनन्तरान्वयेनार्थान्तरमाह **सर्वस्मादिति** । एवं चानेकत्वावच्छिन्नसर्वसङ्ग्रहेऽपि नैकस्यात्र पक्षे सङ्ग्रहः । सर्वसत्त्वानधिकरणत्वपक्षे तु तस्यापि सङ्ग्रह इति भेदः । अस्यैव वाक्यस्य पक्षपरिग्रहतत्तद्दूषणपरतया योजनाय तदनुकूलमध्याहरति **यदीतीति** । द्वितीयपक्षदूषणत्वं घटयितुमाह **सर्वेति** । एवमपि सर्वस्मादित्युक्तिमात्रेण न द्वितीयपक्षपरिग्रहस्य सिद्धिर्नापि तद्दूषणस्येत्यतः पूर्ववाक्यात्सतो वैलक्षण्यमित्यस्यानुवृत्तिमपसिद्धान्त इत्यस्याध्याहारं चाभिप्रेत्योभयं घटयति **यदीति** । नन्वनेकसत्त्वाधिकरणत्वसाधने सद्भेदप्राप्तावपि न तदनधिकरणत्वसाधने सा, अनेकसत्त्वानङ्गीकारेणाङ्गीकारेऽप्येकस्मिन्ननेकसत्त्वाङ्गीकारेण वा तदनधिकरणता-साधनसंभवादित्यतो भाष्यकारस्य विकल्पाभिप्रायं स्फुटत्वादेकपक्षदूषणानभिधानं चाभिप्रेत्य द्वितीयपक्षदूषण-परतया भाष्यं योजयितुमाह **इदमिति** । भाष्यस्य विकल्पतदाद्यपक्षदूषणानुक्तिप्रयुक्तन्यूनतामसहमानः प्रकारा-न्तरेण भाष्याशयमाह **अनेकेति** । एकैकस्मिन्नेकैकसत्त्वस्याप्यभावे सत्त्वमात्रस्य प्रतिषेध्यतयाऽनेकपदवैयर्थ्या-पातेनानेकसत्त्वानधिकरणताप्रतिषेधोऽनुपपन्न इत्येकैकसत्त्वप्राप्तिरिति वा उक्तं भवतीत्यन्वयः ।

**वा०र०— पक्षान्तरेति** । पूर्वप्रमेयातिरिक्तप्रमेयान्तरेत्यर्थः । **वक्ष्यमाणरीत्येति** । अथवा किमिदं सत्त्वमिति वक्ष्यमाणेत्यर्थः । **पूर्वत्रेति** । पूर्वविकल्पितपक्ष इत्यर्थः । **अपिशब्दानुपपत्तिरिति** । पक्षान्तर-

समुच्चायकापिशब्दस्य तत्समुच्चयार्थानङ्गीकारे अनुपपत्तिरित्यर्थः । **तदर्थमिति** । अपिशब्दार्थं समुच्चयमित्यर्थः । अप्युच्यत इत्यनेनान्वितापिशब्दार्थसमुच्चयस्य घटना पक्षान्तरसमुच्चयाङ्गीकार एव भवति नान्यथेत्यतो नापिशब्दस्य यथाश्रुतान्वयक्रमोऽपि तु भिन्नक्रमतया सद्भेदसंस्थितिरपीति । तथा चाप्यर्थसमुच्चयघटना भवत्येवेत्याशयेनोक्तभिन्नक्रमतया तद्योजनेत्याशयेनेति । समुच्चयघटना त्वनेकसत्त्वानधिकरणत्वमित्यत्र द्वितीये अर्थान्तरतारूपप्रागुक्तदूषणस्यात्रोक्तापसिद्धान्तदूषणस्य च समुच्चयेऽपिशब्दो वर्तत इति मूले प्रकृतेति ज्ञातव्यम् । **अनन्तरेति** । अपि सर्वस्मादित्युत्तरेणान्वयेनेत्यर्थः । अव्यवधानस्योत्तरान्वयेऽप्यविशेषादिति भावः । उत्तरान्वयेनेति वक्तव्ये तदुत्तरव्यवहितमिति न व्यवहितान्वयरूपः प्रागिवात्र दोष आयातीति भावेनान्तराहित्यप्रतिपादनमनन्तरे- त्यनेन कृतम् । **अभिविधौ वेति** मूलम् । सर्वस्मादपि वैलक्षण्यं न तु सर्वत्वेन संमतेषु कस्यचिदपि परित्याग इत्येवं व्यापकत्वे इत्यर्थः । प्रागनेकसत्त्वेति सर्वसत्त्वेति च पक्षौ विकल्पितौ । तयोर्हि भेद एवं वाच्यः । न एकमनेकमितिपदात्तावदेकभिन्नद्वितीयतृतीयचतुर्थादिकानामुपस्थितिरस्ति । दशादिसंख्याकानां गणनावसरे एवं द्वेत्रीणिचत्वारिपञ्चेत्यादिसंख्येयप्रयोगेऽपि द्व्यादिपदेभ्य एकभिन्नद्वितीयतृतीयचतुर्थादीनामेव बोधात् । क्वचिदयमेको रथोऽस्य द्वे चक्रे त्रयो नेमयश्चत्वारोऽश्वा इत्यादावेकत्वेन विवक्षितरथभिन्नेष्वेव द्वित्वादिकं तत्तत्सजातीयापेक्षया व्यवह्रियते । तदप्यनेकमेव क्वचिद्दशसंख्याकेष्वेवापेक्षाबुद्धिनिमित्तकमेकस्मिन्नेव द्वितीय- सहकारेण द्वित्वं द्वयोरेव तृतीयसहकारेण त्रित्वमित्यादिरूपेणोत्तरोत्तरसंख्यापूर्वसंख्यामादायैव व्यवह्रियते । तत्राप्यनेकत्वव्यवहारोऽस्त्येव । क्वचिदेतेऽनेके पदार्था इत्यादावेकत्वसंख्याव्यवच्छेदमुखेनैकत्वसंख्याभिन्न- संख्यान्तरयोग एव प्रतिपाद्यते । एवं चानेकशब्दाद्बहुविधबोधस्य तत्तत्प्रकरणानुसारेण जायमानतया प्रकृते चोक्तप्रकाराणां प्रसक्तौ सर्वसत्त्वेत्युत्तरविकल्पेनासङ्कराथमेकभिन्नद्वितीयादिसत्त्वानां वैकभिन्नद्व्यादिसत्त्वानां वा ग्रहणेऽवश्यं व्याख्येयेऽनेकसत्त्वानधिकरणत्वमित्यनेनैकभिन्नद्वित्रिचतुरादिसत्त्वानामेव प्राप्तिरिति प्रकृतैकभिन्न- सर्वस्य सङ्ग्रहः सिध्यति । सर्वसत्त्वेत्यनेन तु सर्वान्तःपातितया द्वित्रिचतुरादीनामिवैकस्यापि ग्रहणमिति न सङ्कोच इति । तमेतं पक्षभेदमभिप्रेत्याभिविधिरूपाप्यर्थस्य पक्षद्वययोगेऽर्थाविशेषशङ्कानिरासाय तत्पक्षयोर्भेदोपपादकतया तद्विशेषलाभप्रकारं दर्शयति **एवं चानेकत्वेति** । एवं चाभिविध्यर्थत्वे । अयमर्थः । यद्यप्यभिविध्यर्थकापि- शब्दयोगस्तथापि सर्वस्मादपीत्यनेन सर्वशब्दोऽनेकार्थ इति वक्ष्यमाणरीत्याऽनेकस्मादपीत्यर्थकेन यथाश्रुत- सर्वस्मादपीत्येतत्तृतीयपक्षस्थपदादिव न सर्वप्रत्ययः संभवति । तृतीये सर्वस्मादित्युक्ते कतिपयसङ्कोचशङ्काया- मपिपदेन परिहृतायां सर्वत्वावच्छिन्नबोधस्यैवानेकस्मादित्यत्रोक्तरीत्यैकभिन्नसर्वस्योपस्थितौ तत्र सङ्कोचशङ्काया- मपिपदेन परिहृतायामपि यावदनेकपदोपस्थापितमेकभिन्नं तावत एव द्वित्रिचतुरादिरूपस्यानेकत्वावच्छिन्नसर्वस्य ग्रहणप्राप्त्यैकत्वेनोक्तस्य ग्रहणालाभ एवेति न सर्वपदादि वा सङ्कुचितसर्वोपस्थितिरित्यतोऽनेकसत्त्वानधिकरणत्व- मित्यत्राभिविध्यर्थकापिपदयोगेन सर्वसत्त्वेत्युत्तरत्रापिपदयोगेन च भिन्न एवार्थः प्रतीयत इति । यद्यपि सर्वपदा- दिवदेकपदान्न सर्वत्वप्रकारकबोधो नियतः । यत्रैकत्वसंख्याव्यवच्छेदमुखेन द्वित्वादिष्वन्यतमस्य प्रतिपादन- मात्रेण कृतार्थत्वं तत्र द्वयोरेव त्रयाणामेवेत्येवमादिरूपेण द्वित्वादिमात्रप्रकारकबोधस्यैव जननात् । तथा चाभिविध्यर्थकापिपदयोगेऽनेकपदोपस्थितद्व्यादिष्वेव व्याप्तिप्रतिपादनप्राप्त्या अनेकस्मात्सत इत्यनेन द्वाभ्यामपि





सङ्ख्यां त्रिभ्योऽपि सञ्च इत्यादिरूपेण दशपञ्चदशाद्यवधिकसंख्याबोधेऽपि सर्वबोधो न प्रसज्यत इति सर्वसत्त्वेति पक्षभेदः स्पष्ट इत्यपि वक्तुं शक्यं तथापि तत्स्पष्टत्वाच्छिष्यैरेवोह्यमिति भावेन न केवलमेकं भगवद्रूपं गुणपूर्त्यादिमत्किन्त्वनेकान्यपीत्यादावनेकपदात्सर्वप्रत्ययदर्शनात् प्रकृतेऽप्यनेकपदात्सर्वप्रत्ययोऽपि यदा जातस्तदा पक्षभेदोपपादनायोक्तप्रकाराश्रयणमेवावश्यकमिति मनसि निधायैतत्प्रकारेणोभयत्रापि पदसंबन्धानन्तरमर्थलाभवर्णनं कृतमित्यदोषः । मूलस्थविकल्पनिमित्तमपि सर्वेत्यनेनेवानेकेत्यनेन शीघ्रगामिनी सर्वोपस्थितिर्न भवति । किन्तु विलम्बेनाद्वित्रिचतुरादीनां तु शीघ्रमुपस्थितिरित्युपस्थितौ तारतम्यादेकसत्त्वकोटिप्रतियोगित्वेन द्व्यादीनामेव प्रथमत उपस्थितिक्रमेण पर्यायेण चैकभिन्नसर्वोपस्थितिर्भवन्ती चरमोपस्थितिरित्यनेकपदेन नानाकोटिकोपस्थितिं हृदि कृत्वाऽनेकसत्त्वानधिकरणत्वमिति पक्षमुत्थाप्य शीघ्रमेव सर्वत्वप्रकारकबोधाश्रयणेन सर्वसत्त्वेति पक्षः पश्चात्प्रवर्तित इत्येवं रूपम् । तेन द्विसत्त्वानधिकरणत्वादिपक्षा अपि विकल्पिता लभ्यन्ते । तथाऽनेकसत्त्वान्यङ्गीक्रियन्ते न वेति विकल्पदूषणान्यपि द्व्यादिसत्त्वपरमनेकपदमाश्रित्य यथासंभवं योज्यानि । प्रागुक्तद्वितीयादिसत्त्वस्वीकारेऽपि सतां भेदसंस्थितिरविशिष्टैवेत्यादिकं सुधीभिराकलनीयम् । **अनेकसत्त्वानङ्गीकारेणेति** । तदनधिकरणता साधन-संभवादिति संबन्धः । न ह्यनेकसत्त्वाधिकरणत्वसाधन इव तदनधिकरणत्वसाधनेऽपि तावन्त्यङ्गीकार्याण्येवेति नियमः । तावन्त्यनङ्गीकृत्यापि तदनधिकरणत्वसाधनसंभवादित्याशयः । अस्तु वा तावतामङ्गीकारोऽपि । तथापि न सद्भेदप्राप्तिरित्याह **अङ्गीकारेऽपीति** । **विकल्पाभिप्रायमिति** । विकल्पद्वयाभिप्रायमभिप्रेत्येति संबन्धः । **एकपक्षेति** । प्रथमविकल्पे द्वितीयः । द्वितीयविकल्पे प्रथमश्चेत्येतावत्रैकपक्षतयाऽभिमताविति ज्ञातव्यम् । पक्षद्वय-दूषणानभिधानमिति फलति । **द्वितीयेति** । द्वितीयविकल्पद्वितीयपक्षेत्यर्थः । विकल्पतदाद्येत्यत्र द्वितीयविकल्प-पूर्वाद्येत्येवार्थोऽभिमत इति न न्यूनता । यद्वा विकल्पपदेन तद्द्वयमाद्येत्यतःपूर्वं द्वितीयेति शेषः । तथा च विकल्पद्वयानुक्तितद्द्वितीयाद्यदूषणानुक्तिप्रयुक्तेति सिध्यति । तद्द्वितीयाद्येत्यत्र प्रथमीयद्वितीयद्वितीयीयाद्येति संबन्ध इति न दोषः । **प्रकारान्तरेण भाष्याशयमिति** । इति प्रतिजानताऽनेकसत्त्वान्यङ्गीक्रियन्ते न वेत्यादि विकल्प्य प्रथमीयद्वितीयद्वितीयीयप्रथमयोरुपर्येव निरासे सिद्धे द्वितीयीयद्वितीयनिरासाशयातिरिक्तप्रकारेणेत्यर्थः । अनेवे त्यनेन पूर्वत्रोक्तविकल्पादिमुखपरित्यागेन यद्यनेकस्मात्सतो वैलक्षण्यमनेकसत्त्वानधिकरणत्वं विश्वस्य साध्यमित्युच्यते तर्हि सद्भेदसंस्थितिरनेकसत्त्वाधिकरणताप्रतिषेधसामर्थ्यादेकैकसत्त्वस्वीकारापत्तिस्तथा चापसिद्धान्त इति भाष्याशयः सूचितो भवतीति भावः । तद्वाक्यार्थमाह **एकैकस्मिन्निति** । **प्रतिषेध्यतयेति** । प्रतिषेधापत्त्येत्यर्थः । अत्र च प्रतिषेधोऽनुपपन्न इतीत्यनन्तरं सविशेषणे हीति न्यायेन विशेषणीभूतानेकत्वस्यैव प्रतिषेधे चैकैकसत्त्वेति पाठः । मूलकोशे उपरि शोधितत्वात् उपयुक्तत्वाच्चेति ज्ञेयम् । अनुपपन्न इतीत्यत्रेतिशब्दस्येत्यत इत्यर्थः । इति वेत्यस्य पूर्वान्वयमाह **इति वोक्तं भवतीत्यन्वय इति** । इदमुक्तं भवतीति पूर्वेणान्वयः । इतीदं वोक्तमिति योज्यमित्याशयः ।

**स०व्र०— अपसिद्धान्तादिति** । व्यावहारिकसत्त्वानधिकरणत्वसाधनेऽपसिद्धान्तादित्यर्थः । अंशे अपसिद्धान्तादिति पाठे पारमार्थिकसत्त्वानङ्गीकारेऽपि व्यावहारिकसत्त्वस्य प्रपञ्चेऽङ्गीकृतत्वेन तदुभयाभावे साध्यमानेंऽशेऽपसिद्धान्तादित्यर्थः ।





**विट्ठ०— द्वितीय इति** । अनेकसत्त्वानधिकरणत्वपक्ष इत्यर्थः । **दूषणान्तरमिति** । प्रागुक्त-सिद्धसाधनतादिदूषणेन सहास्य दूषणस्य समुच्चय इत्यर्थः । अनेकसत्त्वानधिकरणत्वसाधने कथं सद्भेद इत्यतः तदुपपादयितुमाह **इदमुक्तं भवतीति** । **अनेकेति** । विशेषणवैयर्थ्यादिपरिहाराय यदि आधारभेदेन अनेकानि सत्त्वानि स्वीक्रियन्ते तर्हि सद्भेदसंस्थितिरित्युक्तम् । अथवा चैत्रमैत्रयोः अयं न चैत्र इत्युक्ते मैत्रत्वलाभव-दम्बरादीनां अनेकसत्तानधिकरणतानिषेधे एकैकसत्ताधिकरणतालाभात् अम्बरादीनां पृथक् पृथक् सत्ताप्राप्तेः सद्भेद इत्याह **अनेकसत्त्वाधिकरणतेति** ।

**गूढ०— द्वितीय इति** । किञ्चेत्यादिना विकल्पितेषु पक्षेषु अनेकसत्त्वानधिकरणत्वमिति द्वितीय इत्यर्थः । **दूषणसमुच्चय इति** । सिद्धसाधनत्वरूपदूषणसमुच्चय इत्यर्थः । अतिव्याप्तिरूपमपि शब्दस्यार्थान्तरमाह **सर्वस्मादपीति** । **यदीतीति** । यदि तद्धर्मोश्च नित्यं संबन्धादिति भावः । **सर्वशब्द इति** । अत एव यस्मिन् ग्रामे द्वौ त्रयो वा ब्राह्मणास्तेषु आगतेषु सर्वे आगता इति प्रयोग इति भावः । एवं सति सिद्धवाक्यार्थमाह **यदीति** । ननु मया अनेकेषां सत्त्वानामङ्गीकारेण सत्तानां भेदस्याङ्गीकृतत्वात्कथं सद्भेदसंस्थितिस्तथा चापसिद्धान्त इत्युक्तेरित्यत आह **इदमुक्तं भवतीति** । **द्वितीय इति** । व्यावर्त्याभावादिति भावः । **द्वितीये त्विति** । तथा चापसिद्धान्त इति भावः । ननु अनेकसत्त्वान्येवाङ्गीक्रियन्त इति द्वितीयपक्ष एव स्वीक्रियते । न च तर्हि व्यावर्त्याभावेनानेकेति विशेषणवैय्यर्थ्यमित्युक्तमिति वाच्यम् । मया अनेकसत्त्वाङ्गीकारेऽपि परेणानेक-सत्त्वानङ्गीकारात् तन्मतानुसारेण सत्त्वान्तरव्यावृत्त्यर्थत्वान्नानेकेति विशेषणवैयर्थ्यमित्यत आह **अनेकेति** । अनेकेनामन्त्रिता इत्युक्ते एका मन्त्रणसिद्धिवत् प्रकृतेऽप्यनेकसत्त्वानधिकरणत्वे प्रतिषिद्धे एकैकसत्त्वस्वीकार एव सिध्यतीत्यपसिद्धान्तः स्यादेवेति भावः ।

**प्रदीपः— अनेकेति** । निषेधसामर्थ्यात् निषेध्यानेकसत्त्वाक्षेप इत्यर्थः । अनेकसत्त्वाधिकरणत्व-निषेधेऽनैकेषामेकनिष्ठत्वे वैयर्थ्यमेकस्यानेकनिष्ठत्वं वा संभवीत्यनेकग्रहणसामर्थ्यात् सत्त्वानेकत्वायत्तो तदा-धारत्वमित्येतदपेक्षया वाशब्दः । तदनधिकरणत्वेऽपि परमार्थसत्सर्वसत्त्वानाधारत्वसाधने तदाधारेषु परमार्थसत्सु तदनाधारत्वभावेन द्वैतहानिः स्यादिति ।

**३०६ सु०— तृतीयस्य वेदं दूषणान्तरम् । यदि सर्वस्मात्सतो वैलक्षण्यं सर्वसत्त्वा-नधिकरणत्वं विश्वस्य साध्यतयोच्यते तर्हि सद्भेदसंस्थितिः । न ह्यनेकसदनङ्गीकारे सर्वशब्दस्य प्रयोजनमस्ति । सन्त्येवानेकानि सन्ति पारमार्थिकं त्वेकमेवेति चेन्न । तत्सिद्ध्यर्थमेवाद्यापि भवता प्रयतनात् । तदनधिकरणत्वसाधने चांशेऽपसिद्धान्तात् ।**

**परि०— तृतीयस्य वेति** । सर्वसत्त्वानधिकरणत्वपक्षस्येत्यर्थः । **'अनेकानि सन्तीति** । अनेकसत्यवस्तूनीत्यर्थः । **अंशेऽपसिद्धान्तादिति** । असत्त्वानधिकरणत्वांशेऽपसिद्धान्ताभावेऽपि व्यावहारिकसत्त्वानधिकरणत्वांशेऽपसिद्धान्तः । तादृशसत्त्वस्य जगति त्वया स्वीकारादिति भावः।

**गु०दी०— सद्भेदसंस्थितिः** इति साध्यनिर्देशात्सतां पदार्थानां भेदप्रापकमनेकाश्रितं सत्तासामान्यमेवेति भावेनोक्तम्।

**यादु०— पारमार्थिकं त्वेकमेवेति**। तथा च नाद्वैतहानिरिति भावः।

**वं०प०— सन्त्येवानेकानि सन्तीति**। व्यावहारिकाणीत्यर्थः। **तदनधिकरणत्वेति**। व्यावहारिक-सत्त्वानधिकरणत्वेत्यर्थः।

**कं०रा०— तृतीयस्य** सर्वसत्त्वानधिकरणत्वमिति तृतीयपक्षस्य । **सन्ति** अमुख्यसन्ति । **तदिति** । मुख्यामुख्यसत्त्वसाधारण्येन यदि सर्वसत्त्वानधिकरणत्वं साध्यते तदा प्रपञ्चे स्वस्वगतामुख्यसत्त्वस्य विद्यमानतया तदनधिकरणत्वांशे अपसिद्धान्तः स्यादित्यर्थः।

**श्रीनिधि०— अंशे अपसिद्धान्तादिति**। पारमार्थिकसत्त्वानङ्गीकारेऽपि व्यावहारिकसत्त्वस्याङ्गीकृतत्वेन तदभावे साध्यमाने अपसिद्धान्तः तत्राप्यन्यनिष्ठसत्त्वानाश्रयत्वांशे अपसिद्धान्ताभावात् स्वनिष्ठसत्त्वानाश्रयत्वांश एव अपसिद्धान्तादंश इत्युक्तम्। तस्मात् कारणात् तस्मात्सतो ब्रह्मण इति। तस्मादित्यस्य ब्रह्मण इत्यस्य चावृत्तिः कृता।

**वा०चं०—** सर्वशब्दस्वारस्याय तृतीयपक्षदूषणपरतयाऽपि भाष्यं योजयति **तृतीयस्य वेति** । पूर्व-मनयोरेव पक्षयोर्न द्वितीयतृतीयावित्येकोक्तिवदत्रापि द्वितीयतृतीययोर्दूषणान्तरमाहेति वक्तव्ये योगविभागो-ऽप्येतत्स्वारस्यज्ञापनायेति । अत्रापि पूर्ववदेव सर्वशब्दवैयर्थ्यानुपपत्त्या सद्भेदप्राप्त्याऽपसिद्धान्त इत्याह **न हीति** । अनेकसत्प्राप्तावपि पारमार्थिकानेकाप्राप्त्या नापसिद्धान्त इति कल्पद्वयेऽप्यपसिद्धान्तरपरिहारमाशङ्कते **सन्त्येवेति** । अनिर्वचनीयसिद्धेः पूर्वमनेकसर्वनिषेधान्यथाऽनुपपत्त्या पारमार्थिकानामेव प्राप्तेस्तत्पारमार्थिकत्वाभावस्या-निर्वचनीयसिद्ध्यधीनतयाऽन्योन्याश्रयादिकमित्याशयेनाह **तदिति** । अस्तु वाऽपारमार्थिकानेकप्राप्तिस्तथाऽपि पारमार्थिकापारमार्थिकसर्वसत्त्वानधिकरणत्वे साध्ये पारमार्थिकसत्त्वानधिकरणत्वस्य त्वत्सिद्धान्तत्वेऽपि विश्व-स्मिन्नपारमार्थिकसत्त्वस्य त्वदभिमततया तदनधिकरणत्वांशेऽपसिद्धान्तः । अपारमार्थिकसर्वसत्त्वानधिकरणत्व-साधने वाऽन्यगतापारमार्थिकसत्त्वानङ्गीकारेऽपि तत्तद्गतापारमार्थिकसत्त्वस्य तस्मिंस्त्वयाऽप्यङ्गीकारात् तदनधि-करणत्वांशेऽपसिद्धान्तः स्यादेवेत्याह **तदनधिकरणत्वेति**।

**वा०र०— स्वारस्यायेति** । पूर्वत्रानेकार्थत्वाश्रयणेन स्वारस्यापायादिति भावः । पक्षभेदनिमित्तं तु प्रागेव उक्तम् । **इति वक्तव्य इति** । इत्येकयोक्त्या निर्देशे कर्तव्य इत्यर्थः । **योगविभागोऽपीति** । द्वितीये दूषणान्तरमाह तृतीयस्य वेदं दूषणान्तरमित्येवं वाक्यभेदोऽपीत्यर्थः । **एतत्स्वारस्यम्** । सर्वपदस्वारस्यम् । टीकायां ज्ञापनाये-तीत्यतःपरं ज्ञेयमिति शेषः । अनेकत्वसर्वत्वरूपप्रकारभेदेन द्वितीयतृतीयपक्षयोर्भेदेऽपि दूषणं समानमेवेति भावेनाह **अत्रापीति** । सर्वसत्त्वानामेवानङ्गीकारे सर्वशब्दवैयर्थ्यापत्त्या तदङ्गीकारे कर्तव्ये सद्भेदप्राप्तिरित्यर्थः । सर्वसत्त्वान्यङ्गीक्रियन्ते न वेति विकल्पः तद्द्वितीयदूषणं तदाद्यदूषणं चानेन सूचितम् । सर्वसत्त्वाङ्गीकारेऽप्याधार-भेदेनेति पक्षपरिशेषायैकस्मिन्नेवार्थे सर्वसत्त्वाङ्गीकारपक्षेऽपि वैयर्थ्येन न निराकार्य इत्याशयेन पूर्ववदेवेत्युक्तम् । मूले सन्त्येवेत्यत्र सन्तीति क्रियापदम् । उत्तरं सन्तीति सुबन्तम् । **अनेकसर्वेति** । पूर्वत्रानेकसर्वसत्त्वास्वीकारादिति मूले अल्पाच्तरशास्त्रप्रवृत्त्यभावाश्रयणेन प्रकृतेऽपि तथैवानुवादः । अत एव यद्युच्यत इत्यत्राप्युक्तरीत्येति वक्ष्यमाणमूलव्याख्यावसरे मूलकाराशयस्फोरणाय स्वयं क्वचिदनेकसर्वेति सवनिकेति च सङ्क्षेण व्यवहरिष्यत इति ज्ञेयम् । **पारमार्थिकापारमार्थिकेति** । अनेन तदनधिकरणत्वेति मूले तच्छब्देनापारमार्थिकसत्त्वपरामर्शोपपत्त्यर्थ-मुभयसत्त्वोपस्थितिप्रकारो दर्शितो भवति । तदनधिकरणत्वेति मूले तच्छब्दस्यापारमार्थिकसत्त्वपरत्वमाश्रित्य अपसिद्धान्तकथनपरत्वेन योजयित्वाऽपारमार्थिकसत्त्वेष्वप्यवान्तरविशेषाश्रयणेन तत्पदस्य तत्तदपारमार्थिकसत्त्व-परत्वमाश्रित्याप्यपसिद्धान्तकथनपरतया योजयति **अपारमार्थिकसर्वेति** ।

**विठ्ठ०— पारमार्थिकमिति** । ननु पारमार्थिकसद्भेदाङ्गीकार एव अपसिद्धान्तो न तु व्यावहारिकसद्भेदस्वीकारे इत्याशयेन शङ्कते **सत्येवेति** । **तत्सिध्यर्थमिति** । व्यावहारिकसद्भेदसिध्यर्थमेव सन्तु व्यावहारिकसत्त्वानि बहूनि तथापि सतो विश्वस्य तदनधिकरणत्वसाधने स्यादेवापसिद्धान्त इत्याह **तदनधिकरणत्वेति** ।

**गूढ०— तृतीयस्येति** । सर्वसत्त्वानधिकरणत्वमिति तृतीयस्येत्यर्थः । एवमपि सद्भेदसंस्थितिः कुत इत्यत्राह **न हीति** । ननु व्यावहारिकानेकसत्त्वस्वीकारान्नापसिद्धान्तः । पारमार्थिकसत्त्वानधिकरणत्वस्य साध्यमानत्वान्मिथ्यात्वमसिद्धमिति शङ्कते **सन्त्येवेति** । **तत्सिध्यर्थमेवेति** । पारमार्थिकमेकमित्यस्य सिध्यर्थमेवेत्यर्थः । व्यावहारिकानेकसत्त्वसिद्धावपसिद्धान्ताभावेनानिर्वचनीयत्वसिद्धिस्तत्सिद्धौ व्यावहारिक-सत्त्वसिद्धिस्तथा च पारमार्थिकमेकमेवेत्यस्य सिद्धिरिति परस्पराश्रय इति भावः । ननु व्यावहारिक-पारमार्थिकसकलसत्त्वानधिकरणत्वं साध्यत इत्याह **तदनधिकरणत्व इति** । अंशे व्यावहारिकसत्त्वानधि-करणत्वांशे व्यावहारिकसत्त्वस्यैव प्रपञ्चे अङ्गीकृतत्वेन अपसिद्धान्तः स्यादिति भावः ।





३०७ सु०— चतुर्थे दूषणान्तरमाह **सन्मात्रत्वमिति**।

**अनु०— सन्मात्रत्वं ब्रह्मणोऽपि तस्मात्तदपि नो भवेत् ॥**

**अविवक्षितविशेषं सत्त्वं यस्माद् ब्रह्मणोऽप्यस्ति । तस्मात्कारणात्तस्मात्सतो ब्रह्मणस्तद्वैलक्षण्यम् । तत्सत्त्वानधिकरणत्वमपि विश्वस्य नोऽस्माकं मतं भवेत् । तथाच सिद्धत्वात्तदपि साध्यं नो भवेत् । अविवक्षितविशेषसत्त्वानधिकरणत्वे साध्ये ब्रह्मगत-सत्त्वानधिकरणतयाऽपि प्रतिज्ञातार्थोपपत्तेरर्थान्तरतेति ।**

**परि०**— **चतुर्थ इति**। अविशेषितसत्त्वेतिपक्ष इत्यर्थः। तस्मादित्यस्यावृत्तिमुपेत्यार्थमाह **तस्मात्सतो ब्रह्मण इति**। तस्मात्तदपि नो भवेदित्यस्यार्थान्तरमाह **सिद्धत्वात्तदपीति**। 'अमानोनाः प्रतिषेध' इति निषेधार्थो नोशब्दः।

**कं०रा०**— **चतुर्थे** अविशेषितसत्त्वानधिकरणत्वमिति चतुर्थपक्षे । तस्मादित्यस्यावृत्तिमभिप्रेत्य व्याख्याति **तस्मात्कारणात्तस्मात्सत इति** ।

**श्रीनिधि०**— **नोऽस्माकं नो भवेदिति**। नो इत्यस्यावृत्तिः। पूर्वत्र षष्ठी बहुवचनान्तत्वमाश्रितम् उत्तरत्र प्रतिषेधार्थकाव्ययत्वं चेति ज्ञेयम् ।

**वा०चं०**— अस्मिन्वाक्ये सतो वैलक्षण्यमित्यस्य नानुवृत्तिस्तस्मात्तदित्यनेनैव तदर्थलाभो, विश्वस्ये-त्यनुवृत्तिर्द्वितीयपादस्य चानुवृत्तिरित्याशयेनाह **तस्मादिति**। एवं सति सिद्धं दूषणमाह **अविवक्षितेति**।

**वा०र०**— यद्यनेकस्मादित्यादि पूर्वयोजना यद्युच्यत इत्यत्र सतो वैलक्षण्यमित्यस्यानुवृत्त्याश्रयणेनेति प्राक्प्रतिपादितम् । ततस्तदनुसारेण तस्मात्तदपीत्येतद्वाक्ययोजनापि न्यूनतापरिहाराय सतो वैलक्षण्यमित्यस्यानु-वृत्तिमाश्रित्य प्रवृत्तेति भ्रान्तिवारणाय मूलाभिप्रायं दर्शयति **अस्मिन्वाक्य इति** । सन्मात्रत्वमित्येतस्मिन्वाक्य इत्यर्थः । यदि नावृत्तिस्तर्हि तदर्थप्राप्तिः कथमित्यत आह **तस्मात्तदित्यनेनैवेति** । अनेन तस्मात्सतो ब्रह्मण इत्यादिमूले तस्मादित्यनूद्य सत इति तद्व्याख्याय ब्रह्मण इति पर्यवसानमुक्तम् । तदित्यनूद्य वैलक्षण्यमिति व्याख्याय तत्सत्त्वानधिकरणत्वमिति विशिष्टं योजयित्वाऽपिपदं च तदनन्तरं योजितमिति मूलाशयो दर्शितो भवति । उपलक्षणं चेदमपसिद्धान्त इत्यस्य नावृत्तिः दूषणान्तरमेव विवक्षितमित्यपि ज्ञेयम् । **आवृत्तिरिति** श्रुते नो भवेदित्यत्र न इति षष्ठी। आवृत्ते तु नो इत्यव्ययं निषेधार्थमिति तु स्फुटत्वान्नोक्तम्।

**विट्ठ०— सदसद्विलक्षणमिति**। प्रतिज्ञायामसत्त्वानधिकरणत्वांशे अपसिद्धान्ताभावात् अंश इत्युक्तम्।

**गूढ०— चतुर्थ इति**। अविशेषितसत्त्वानधिकरणत्वचतुर्थ इत्यर्थः।

**प्रदीपः— अविवक्षितेति**। अविशेषितसत्त्वाधारत्वनिषेधे सिद्धार्थतार्थान्तरता च स्यात्। सत्तेति विश्वस्य सत्तासामान्यनिषेधे च स्वरूपसत्त्वानाधारत्वमपि न स्यात्। सत्तासामान्यविधुरस्यापि ब्रह्मणः स्वरूपसत्त्वसंभवादिति। एतेन ब्रह्मस्वरूपसत्त्वनिषेधे सिद्धार्थतेत्यर्थः।

**३०८ सु०— अथवा किमिदं सत्त्वं नाम यदनधिकरणत्वं विश्वस्य साध्यते । किं सामान्यसत्त्वमुत स्वरूपसत्त्वम्। आद्यं दूषयति यद्युच्यत इति। सर्वस्मात्** सर्वार्थानुगतात् **सामान्यात् वैलक्षण्यं** तदनाधारत्वमिति यावत्। साध्यतया **यद्युच्यते** तदा **सद्भेदसंस्थितिः। यदि सत्तैव नास्ति तदा तदनधिकरणत्वप्रतिज्ञा व्यर्था स्यात् । नेदं शशविषाणाधिकरणमितिवद् विप्रतिपत्तेरेवानुदयात् । सत्तासामान्याङ्गीकारे च सद्भेदो दुर्वार एव । न ह्येकाश्रयं सामान्यमस्ति । सन्ति सत्ताधिकरणानि सन्तीति चेत्तर्हि कानीति वक्तव्यानि । द्रव्यादीनीति चेत्कथं तर्हि तेषामेव तदनधिकरणत्वसाधनम् । व्यवहारतः सर्वमस्ति । परमार्थतस्तु नेति चेन्न । उक्तोत्तरत्वात् । एतच्च परमतेनोत्तरमुक्तं वेदितव्यम् । स्वमतेन तु सिद्धसाधनत्वं द्रष्टव्यम् । द्रव्याद्यतिरिक्तानुगतसत्त्वसामान्यस्यैवानङ्गीकारात् ।**

**परि०—** 'जात्यङ्गीकारे सद्भहुत्वमित्यादितत्त्वोद्योतरीत्या योजयति **अथवेति** । सत्ताऽनधिकरणत्वं प्रतिजानता सत्ताऽङ्गीक्रियते न वेति विकल्पौ हृदि कृत्वा द्वितीये दोषोक्तिपूर्वमाद्यकल्पे मूलं योजयति **यदि सत्तैवेत्यादिना** । शङ्कते **सन्तीति** । एकं क्रियापदम् । अपरं शतृप्रत्ययान्तं कारकपदम् । **उक्तोत्तरत्वादिति** । तत्सिध्यर्थमेव भवता प्रयतनादित्यादिग्रन्थेनेत्यर्थः ।

**यादु०—** सामान्यानधिकरणत्वमित्यत्र सत्तासामान्याधिकरणताप्रतिषेधः किं सत्तासामान्यनिषेधमादाय पर्यवस्यतीत्यभिप्रेतमुताधिकरणत्वप्रतिषेधमादायेति विकल्पं मनसि निधायाद्यं दूषयति **यदि सत्तैव नास्तीति** । द्वितीयं दूषयति **सत्तासामान्याङ्गीकारे चेत्यादिना** । तथा चास्मिन्पक्षे द्वैतापत्तिर्बाधश्चेति दूषणद्वयमुक्तमित्यवधेयम्। अर्थक्रियाकारित्वं चेत्सत्त्वं तर्हि तदनधिकरणत्वं विशिष्टाभावरूपं द्वेधा पर्यवसति।

**श्रीनिधि०— सामान्यसत्त्वमिति**। जातिरूपं सत्त्वमित्यर्थः। **कानीति वक्तव्यानीति**। कानि कानीति प्रश्ने इमानीति वक्तव्यानीत्यर्थः। **परमतेनेति**। नैयायिकमतेनेत्यर्थः। परमतेनानुसृतेन निमित्तेनोक्तमित्यर्थः।





**वा०चं०**— अपिशब्दस्वारस्यात्पक्षान्तरनिराकरणपरतया यद्युच्यत इति श्लोकं योजयति **अथवेति** । न च सत्त्वं भावत्वं विद्यमानत्वं वा सत्तासामान्यं वा स्वरूपसत्त्वं वेति पूर्वमेव विकल्प्याद्यद्वयदूषणपरतया वैलक्षण्यं सतश्चेति वाक्यमवतार्य तृतीयचतुर्थदूषणपरतयैतच्छ्लोकः कुतो नावतारित इति वाच्यम् । सर्वलोकाभिधानादिप्रसिद्ध्याश्रयेण प्रवृत्तयोर्भावत्वविद्यमानत्वकल्पयोर्वादिप्रसिद्धविभागाश्रयेण प्रवृत्तसत्तासामान्यस्वरूपसत्त्वकल्पाभ्यां न समकक्षतेत्याशयात् । सर्वशब्दस्य सर्वार्थानुगतलक्षणामभिप्रेत्यैतत्कल्पं भाष्यारूढं करोति **सर्वस्मादिति** । सर्वस्माद्वैलक्षण्यं लक्षणतया यद्युच्यत इत्यपि योजयति **साध्यतयेति** । अत्र सत्ताया अनङ्गीकारेऽपि तदनधिकरणत्वस्य सुसाधत्वान्न सद्भेदसंस्थितिरिति दूषणमुपपन्नमित्यतोऽनङ्गीकारपक्षं बहिरेव प्रदूष्याङ्गीकारपक्षं परिशेष्य भाष्यान्तरपरत्वेन योजयितुमनङ्गीकारपक्षदूषणस्य पूर्वत्र सर्वशब्दवैयर्थ्यस्यानधिकरणत्वमात्रसाधने बाधेनानुपपन्नत्वात्प्रकारान्तरेण तं दूषयति **यदीति** । **नेदमिति** । 'अलीके सुमनसां मूकतैवे'ति न्यायेनाप्रसिद्धप्रतिषेधायोगादिति भावः । अन्यथा नित्यमेकमनेकसमवेतं सामान्यमिति तल्लक्षणव्याघातः । उपदेशादिनैकस्मिन्नेव सङ्गतिग्रहणाद्युपपत्तये वैयर्थ्यं चेत्यभिप्रेत्याह **न हीति** । ततश्चापसिद्धान्त इति भावः । सत्ताऽधिकरणानेकाङ्गीकारेऽपि नापसिद्धान्त इति गूढाभिसन्धिराशङ्कते **सन्तीति** । अत्र कथं तर्हीत्यादिना व्याहर्तिं वक्तुमन्यस्य सत्तासामान्याधिकरणत्वे विश्वस्य तदनधिकरणत्वसाधनेऽपि न व्याघात इति स्वयमन्याभावे प्रतिपादनीये किं तेन, परमुखेनैव व्याघातं व्युत्पादयिष्यामीत्याशयेनाशयमजानान इव पृच्छति **तर्हीति** । शङ्किता स्वाशयमुद्घाटयति **व्यवहारत इति** । **उक्तेति** । तत्सिद्ध्यर्थमेवाद्यापीत्यादिनेत्यर्थः । स्वमतसिद्धदूषणप्रायेणास्यापि तथात्वभ्रान्तिं निवारयति **एतच्चेति** । एतेनानङ्गीकारपक्षे स्वोक्तदूषणमपि परमतेनेति सूचयति । अत एव तत्त्वोद्योतेऽत्राप्यर्थान्तरमेवोक्तमिति ध्येयम् । कुतोऽस्य न स्वमतसिद्धत्वमत्राह **द्रव्यादीति** । अनुगतग्रहणेन न ह्येकाश्रयमित्युपपादनस्य स्वासिद्धत्वं दर्शयति । कुतो नानुगताङ्गीकार इत्यतो द्रव्यातिरिक्तत्वपक्षेऽपि तत्संभवेऽप्यनुगतस्य द्रव्याद्यभेदे द्रव्यादेरप्यभेदापत्त्या न मत्पक्षे तत्संभव इति सूचयितुं द्रव्यातिरिक्तेत्युक्तम् । यद्वा स्वमतेन तु सिद्धसाधनत्वमित्युक्तमुपपादयति **द्रव्यादीति** ।

**वा०र०**— **अपिशब्दस्वारस्यादिति** । यथाश्रुतान्वितापिपदस्वारस्यादित्यर्थः । अत एव पूर्वत्र यथाश्रुते स्वारस्याभावं मत्वा भिन्नक्रमतामाश्रित्य दूषणसमुच्चयार्थतया व्याख्यानं कृतम् । एतेन प्रागपिशब्दस्वारस्यायैव भिन्नक्रमत्वाद्युक्तेः कथमनेन प्रागस्वारस्यसूचनमिति शङ्कानवकाशः । न च सत्त्वं भावत्वं विद्यमानत्वं वेति पाठः । भावत्वविद्यमानत्वकल्पयोरित्युत्तरवाक्यानुसाराच्च । भावशब्दो भावप्रधान इति यथाश्रुत एव पाठ इत्यप्याहुः । लक्षणतया यद्युच्यत इत्यपि योजनायाम् इति । अथवा निर्वचनीयममुख्यं सदित्यादिरूपभाष्ययोजनायामिति शेषः । **न सद्भेदेति** । नञा नोपपन्नमिति संबन्धः । **प्रकारान्तरेण तं दूषयतीति** । अनङ्गीकारपक्षदूषणस्येत्यतो बुध्या विवेकेनानङ्गीकारपक्षस्य तदा परामर्शः । प्रकारान्तराश्रयणे निमित्तकथनमनङ्गीकारपक्षेत्यादि । पूर्वत्रेत्यस्य सर्वसत्त्वानधिकरणत्वमिति पक्ष इत्यर्थः । सर्वशब्दवैयर्थ्यवदिति पाठः । सत्त्वेति लेखकागतम् । वदित्यनन्तरं वक्तव्यतया प्राप्तस्येति शेषः । अयमाशयः । सर्वसत्तानधिकरणत्वमिति पक्षे हि सर्वसत्त्वानङ्गीकारे सर्वशब्दवैयर्थ्य-





मुक्तं तथात्रापि सत्ताङ्गीकारानङ्गीकारविकल्पोत्तरं सत्तानङ्गीकारदूषणाय सत्तानभ्युपगमे सत्तानधिकरणत्वमित्यत्र सत्तापदवैयर्थ्यमिति प्रतिपादयितुमशक्यम् । तत्पदपरित्यांगेऽनधिकरणत्वमात्रसाधनस्य वाच्यत्वेन तत्र च यत्किञ्चिदधिकरणत्ववति पक्षेऽनधिकरणत्वमात्राभावेन बाधप्रसक्त्या तत्पदवैयर्थ्यस्य दूषणतयोद्भावनस्यानुपपन्नत्वादिति । **अलीक इति** । एदपि परमतेनेति वक्ष्यमाणरीत्या स्पष्टम् । **स्वमतसिद्धदूषणेति** । स्वमतेन सिद्धानि यानि दूषणानि तत्प्रायेण तत्प्रक्रमेणेत्यर्थः । तत्प्रायपाठेनेति यावत् । **तत्त्वोद्योतेऽत्रापीति** । जात्यङ्गीकारे सद्धेतुत्वमित्येतत्तत्त्वोद्योतटीकायां जात्यनङ्गीकारपक्षेऽपीत्यर्थः । द्रव्यातिरिक्तत्वपक्षेऽपीत्यपिपदं लेखकागतम् । मूलकोशे पक्षे तत्संभवेऽपीत्येव पाठात् । यदि द्रव्यातिरिक्तत्वपक्षोऽप्यस्माभिरङ्गीक्रियेत तदा तत्संभवेऽपीति योजनात्र पूर्वापिपदवैयर्थ्यमित्यपि केचिदाहुः । न मत्पक्षे तत्संभव इत्येतदुपपादयितुमुक्तमनुगतस्येति । गया तस्यानुगतत्वेनाङ्गीक्रियमाणस्य द्रव्याद्यभेदाङ्गीकारादिति भावः । **द्रव्यादेरपीति** । यद्येनात्यन्ताभिन्नं तत्तेन अत्यन्ताभिन्नेनात्यन्ताभिन्नमिति व्याप्तिबलात् द्रव्याद्यन्यतमस्य सामान्येनात्यन्ताभिन्नत्वे सामान्यात्यन्ता-भिन्नगुणाद्यत्यन्ताभेदापत्त्येत्यर्थः ।

**विठ्ठ०**— सद्भेदस्थितिरित्येतदुपपादयितुं सत्तासामान्यानधिकरणत्वं नाम किं सत्तासामान्याभावमादाय पर्यवस्यतीत्यभिप्रेत्य किंवा सामान्यसद्भावेऽपि तदनधिकरणत्वमादायेति विकल्पं मनसि निधायाद्यं दूषयति **यदि सत्तैवेति** । **यदि सत्तासामान्येति** ।

**चषकः**— **सामान्यसत्त्वमिति** । सामान्यरूपं सत्त्वमित्यर्थः । परमतेन सत्तासामान्याङ्गीकर्तृनैयायिकदिशा ।

**गूढ०**— ननु सन्मात्रमिति मूले मात्रशब्दस्य कात्स्न्र्यमर्थ इति प्रतीयते । तत्प्रकृतानुपयुक्तम् । तस्मादित्यस्यार्थो न प्रतीयते । नो इत्यस्य निषेधार्थत्वमेव प्रतीयते । अतो मात्रशब्दस्याविवक्षितविशेषार्थत्वं यस्मादित्यध्याहारः तस्मादित्यस्यावृत्तिं तत्रैकस्य हेत्वर्थत्वं द्वितीयस्य ब्रह्मपरत्वं नो इत्यस्य अस्मदादेशत्वं निषेधार्थत्वं चाभिप्रेत्य वाक्यं योजयति **अथवेति** । ननु सत्तारूपसामान्यानाधारत्वे साध्यमानसद्भेदसिद्धिः कथमत्राह **यदीति** । एवमपि प्रतिज्ञावैयर्थ्यं कुत इत्यत्राह **नेदमिति** । सत्यां हि विप्रतिपत्तौ अनुमानप्रवृत्तिः सत्ताया एवाभावे विप्रतिपत्तेरेवाभावान्नानुमानप्रवृत्तिः स्यादिति भावः । ननु सत्तासामान्यमङ्गीक्रियत इत्यत आह **सत्तेति** । **कथं तर्हीति** । सत्ताधिकरणान्यनेकानि सन्त्यङ्गीकृत्य सत्तानधिकरणत्वे साध्येऽपसिद्धान्त इति भावः । **उक्तोत्तरत्वादिति** । इतरेतराश्रयत्वादित्यर्थः । ननु सत्ताया भावे सत्त्वानधिकरणत्वप्रतिज्ञा व्यर्था स्यादित्युक्तमयुक्तम् । मया सत्तासामान्यस्यानङ्गीकारेऽपि परेणाङ्गीकृतत्वेन तदनधिकरणत्वस्य साधयितुं शक्यत्वात् । शशविषाणस्य च केनाप्यनङ्गीकृतत्वे तदनधिकरणत्वप्रतिज्ञायोगात् । न च क्वचित्प्रमितस्यैवान्यत्र निषेध इति नियमात् त्वन्मते च क्वापि सत्तायाः अप्रमितत्वात् । कथं तन्निषेध इति वाच्यम् । नियमस्याप्रयोजकत्वात् । प्रसक्तिमात्रस्यैव निषेधोपयुक्तत्वात् । यदि च शशविषाणस्यापि केनचिच्छब्दाभ्यासादिना प्रसक्तिस्तदा अस्तु नाम तन्निषेध इत्यत आह **एतच्चेति** । सिद्धसाधनत्वमेव विशदयति **द्रव्यादीति** ।





**३०९ सु०—** द्वितीयं दूषयति **सन्मात्रत्वमिति** । सत्तानपेक्षं सत्त्वं **सन्मात्रत्वं** स्वरूपसत्त्वमिति यावत् । तत् **ब्रह्मणोऽपि** अस्ति यतः **तस्मात्** कारणात् **तस्मात्** ब्रह्मणः **तत्** वैलक्षण्यमब्रह्मत्वम् **अपि** विश्वस्य **नो भवेदिति** ।

**परि०—** **द्वितीयमिति** । स्वरूपसत्त्वपक्षम् । तस्मात्तदपीत्यादेरर्थः । तस्मात्सतो वैधुर्यस्येत्यादि ।

**श्रीनिधि०—** **नो भवेदिति** । अस्माकं भवेदित्यर्थः ।

**वा०चं०—** **नो भवेदिति** । तथा च स्वरूपसत्त्वानधिकरणत्वे साध्ये विश्वस्याब्रह्मत्वसिद्ध्याऽपि प्रतिज्ञार्थोपपत्तेरर्थान्तरमित्युक्तं भवति ।

**वा०र०—** अविवक्षितविशेषेत्यादिपूर्वमूलन्यायेनात्रोपपाद्यदूषणं मूलाभिप्रेतं दर्शयति **तथा चेति** ।

**गूढ०—** ननु त्वया प्रपञ्चे स्वरूपसत्त्वाङ्गीकारात्कथं तदनधिकरणत्वे साध्यमाने अर्थान्तरत्वं दीयत इत्यतोऽपिशब्दं योजयति **तद्ब्रह्मणोऽपीति** । तथा च सत्त्वानधिकरणत्वे साध्ये ब्रह्मत्ववत्तयापि प्रतिज्ञातार्थोपपत्तेरर्थान्तरतेति भावः ।

**३१० सु०—** अथवा सामान्यसत्तापक्षे दोषान्तरमनेनोच्यते । तथा हि सत्तासामान्यविधुरस्य **अपि ब्रह्मणः सन्मात्रत्वं** स्वरूपसत्त्वं तावदस्ति । न पुनः सत्त्ववैधुर्यादसदनिर्वाच्यं वा ब्रह्म । **तस्मात्** सत्तावैधुर्यस्यासत्त्वाद्यहेतुत्वात् **तत्** सत्तानधिकरणत्वम् **अपि** विश्वस्य **नो भवेदिति** ।

**एतेन 'ब्रह्मस्वरूपं सत्त्वमि'ति पक्षोऽपि निरस्तः ।**

**कं०रा०—** **एतेनेति** । ब्रह्मस्वरूपभूतसत्त्वानधिकरणत्वस्यासत्त्वाद्यनापादकतया प्रपञ्चेऽस्मत्संमतत्वेन ब्रह्मस्वरूपं सत्त्वमिति पक्षोऽपि निरस्त इत्यर्थः ।

**श्रीनिधि०—** **एतेनेति** । ब्रह्मत्वस्य अस्माकं सिद्धत्वेनेत्यर्थः ।

**वा०चं०—** अस्मिन्पक्षे स्वमतेन सत्तासामान्यानधिकरणत्वपक्षदूषणं यत्सिद्धसाधनत्वादि तद्भाष्यानारूढमिति तदारूढतायै सन्मात्रत्वमिति वाक्यं प्रकारान्तरेण योजयति **अथवेति** । तथात्वे प्रथमपादोऽसङ्गत





इत्यतस्तं सङ्गमयितुमाह **तथा हीति** । **एतेनेति** । स्वरूपसत्त्वानधिकरणत्वपक्षनिराकरणेनेत्यर्थः । ब्रह्मस्वरूपत्वाभावस्येष्टत्वादिति भावः ।

**वा०र०— अनारूढमिति** । अनारूढमित्यापद्यत इत्यत इत्येवमिति शब्दवृत्त्या योज्यम् ।

**विठ्ठ०— एतेनेति** । ब्रह्मस्वरूपस्य सत्तानधिकरणत्वस्य अस्माकं सिद्धत्वेनेत्यर्थः ।

**गूढ०— एतेनेति** । ब्रह्मस्वरूपत्वाभावरूपस्य सत्त्वानधिकरणत्वस्य प्रपञ्चेऽप्यङ्गीकृतत्वेनेत्यर्थः ।

**३११ सु०— 'अर्थक्रियाकारित्वं ज्ञानाबाध्यत्वं वा सत्त्वमि'ति पक्षद्वयं स्फुटदोषत्वान्न दूषितम् । अर्थक्रियावैधुर्यसाधने हि बाधः स्फुट एव । 'परमार्थतो नास्ती'त्यप्युक्तोत्तरम् । 'सत्यस्य नार्थक्रिये'ति वदता मिथ्याभूतस्यैवार्थक्रिया अङ्गीकृतेति सिद्धान्तविरोधश्च । अर्थक्रियाविधुरस्यापि ब्रह्मणः सत्त्वात्तद्वैधुर्यं नासत्त्वादिहेतुः । अर्थक्रियाऽनधिकरणतामात्रसाधनं प्रकृतानुपयुक्तं तद्विरुद्धं च । ज्ञानाबाध्यत्ववैधुर्यं च तद्बाध्यत्वमेव । तच्च हेत्वर्थान्न भिद्यत इति स्फुटमेव । हेत्वन्तराभिधानेऽपि वक्ष्यमाणन्यायेन बाधसिद्धार्थताद्यापत्तिः स्फुटैव ।**

**परि०—** प्रागुक्तपक्षान्तरं च निराह **उक्तोत्तरमेवेति** । तत्सिद्धवर्थमेवेत्यादिनेति भावः । नासत्त्वादिहेतुरित्यादिपदेन अनिर्वाच्यत्वग्रहः । तथा च तद्वैधुर्यसाधनेऽर्थान्तरतेति भावः । अर्थक्रियाकारित्वरूपसत्त्वानधिकरणत्वपक्षस्य भाष्ये अत्र चानिरासे हेतुद्वयं चाधिकमाह **अर्थक्रियाऽनधिकरणतामात्रेति** । मिथ्याभूतस्यापि साधकत्वस्य निर्वहणं हि प्रकृतं, तस्यानुपयुक्तं प्रत्युत साधकत्वविरुद्धं चातोऽत्र भाष्ये तदाशङ्क्य न निरस्तमिति भावः । **हेत्वर्थादिति** । विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वादिति प्रागुक्तहेत्वर्थादित्यर्थः । तथा च साध्याविशिष्टतेति भावः । **हेत्वन्तरेति** । दृश्यत्वजडत्वादिहेत्वन्तरेत्यर्थः । **वक्ष्यमाणेति** । विवादपदं असत्त्वानधिकरणं ज्ञानाबाध्यत्वरूपसत्त्वानधिकरणं दृश्यत्वादित्याद्युक्तावपि 'ज्ञानबाध्यत्वमपि तु' इत्यत्र वक्ष्यमाणव्याघाताद्यनिस्तार इत्यर्थः ।

**गु०दी०— अर्थक्रियाकारित्वम्** इत्यादि । शब्दानां कामदुघत्वादर्थक्रियाकारित्वस्य सत्त्वस्वरूपत्वमुपेत्य जगति तदनधिकरणत्वसाधने सतां विद्यमानानां मनुष्यपशुपक्ष्यादीनां उपभोज्यान्नपानादीनां अर्थक्रियाकारित्वाभावे भेदस्य स्वरूपनाशस्य संस्थितिरिव स्यात् । न मिथ्यात्वम् । ज्ञानबाध्यत्वसाधने अन्यथाविज्ञातस्य सम्यग्ज्ञानं बाध





इति पक्षे सतां प्रमितानां शुक्त्यादीनामारोपिताद्भेदेन संस्थितिरेव स्यात् न तु मिथ्यात्वम् । ज्ञानेन त्रिकाल-नास्तितावगाहनं बाध इति पक्षे तदनधिकरणत्वं नाम ज्ञानबाध्यत्वमेवेति सतोऽप्रमिताद्धेतोः सकाशात्साध्यस्य भेदसंस्थितिः भेदनाशः स्यात् । हेतोः साध्यावैशिष्ट्यमिति यावत् । अतो न तेन जगन्मिथ्यात्वसिद्धिरिति त्रिशरीरविकल्पद्वयदूषणस्य तेन च विकल्पद्वयसूचनस्यापि कथञ्चिन्मूलवचनादेव संग्रहोऽपि शक्यसाधन इति ज्ञेयम् ।

**यादु०**— अर्थक्रियारूपविशेषणवैधुर्येण वोत तस्य सत्त्वेऽप्यधिकरणत्वरूपविशेष्याभावेन वेति विकल्पं मनसि निधायाद्यं दूषयति **अर्थक्रियावैधुर्यसाधन इति** । अर्थक्रियारूपपदार्थस्यैवाभावसाधन इत्यर्थः । **अङ्गीकृतेति** । अर्थक्रियारूपं वस्त्वङ्गीकृतमेवेति हेतोरित्यर्थः । **नासत्त्वादिहेतुरिति** । तथा चार्थान्तरतेति भावः । नार्थक्रियारूपवस्त्वभावः साध्यते येनोक्तबाधाद्यवकाशः किं त्वर्थक्रियारूपं वस्तुप्रपञ्चनिरूपितजन्यजनक-भावसंबन्धवत्त्वेनैवाङ्गीकृत्य प्रपञ्चे तदाधारतामात्रं प्रतिषिध्यत इति द्वितीयं पक्षमनूद्य दूषयति **अर्थक्रिया-ऽनधिकरणतामात्रसाधनमिति** । मात्रपदेन जगतो जन्यजनकभावसंबन्धेनार्थक्रियाङ्गीकारं सूचयति **प्रकृतेति** । प्रकृते यन्मिथ्यात्वसमर्थनाय सद्वैलक्षण्यं तदुपयुक्तं न भवतीत्यर्थः । अत्र हि मिथ्यात्वसमर्थनायार्थक्रियाऽनधि-करणत्वरूपसदसद्वैलक्षण्यसाधनं क्रियते । प्रपञ्चस्य सदसद्विलक्षणत्वादुपपन्नं श्रुत्यादिना मिथ्यात्वसमर्थन-मित्युक्तत्वात् । न चार्थक्रियायाः प्रपञ्चनिरूपितजन्यजनकभावसंबन्धवत्त्वेन विद्यमानतामङ्गीकृत्य प्रपञ्चस्य तदनधिकरणतामात्रसाधने मिथ्यात्वमुपपादितं भवति किन्तु ब्रह्मवत्सद्रूपत्वमेवेति भावः । **तद्विरुद्धं चेति** । विद्यमानार्थक्रियाजनकत्वस्य सत्यत्वव्याप्तत्वादिति भावः । हेत्वन्तरं दृश्यत्वादि । **वक्ष्यमाणन्यायेनेति** । ''ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन'' इत्यनुपदमेव वक्ष्यमाणन्यायेन ज्ञाननिवर्त्यत्वस्य वा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य वा बाध्यत्वस्य विवक्षितत्वे बाधः । अन्यथाविज्ञातस्य सम्यग्विज्ञानविषयत्वरूपत्वे सिद्धार्थतेत्यर्थः । आदिपदेन दृष्टान्ते साध्यवैकल्यादिकं ग्राह्यम् ।

**वं०प०**— **तद्विरुद्धं चेति** । अर्थक्रियानिरूपितजन्यजनकभावसंबन्धम् अङ्गीकृत्य तदनधिकरणत्वरूपं सद्विलक्षणत्वम् ।

**कं०रा०**— स्फुटदूषणत्वमेव दर्शयति **अर्थक्रियेत्यादिना** । अर्थक्रियाकारित्वं सत्त्वमिति पक्षे साध्यमानं सत्त्वानधिकरणत्वमर्थक्रियावैधुर्यमेव । तत्साधने चार्थक्रियायाः प्रपञ्चे प्रमाणसिद्धत्वाद्बाधः स्फुट एवेत्यर्थः । नन्वर्थ-क्रियायाः प्रपञ्चे परमार्थतोऽसत्त्वात्तद्वैधुर्यसाधने न बाध इत्यत आह **परमार्थ इति** । आदिपदेनानिर्वाच्यत्वपरिग्रहः । तथा चार्थक्रियावैधुर्यसाधने तस्य ब्रह्मवत्सत्त्वेऽप्युपपत्त्याऽर्थान्तरमिति भावः । किं चार्थक्रियाकारित्वं सत्त्वमिति पक्षेऽर्थक्रियारूपसत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वरूपविशिष्टसाधने सत्त्वानधिकरणपदेनार्थक्रियावैधुर्य-स्यासत्त्वानधिकरणपदेनार्थक्रियासत्त्वस्य च प्राप्तेः परस्परव्याघातापत्त्या सत्त्वानधिकरणत्वमात्रसाधनं कर्तव्यम् । तत्तु न संभवति । अर्थक्रियारूपसत्त्वानधिकरणत्वमात्रसाधनस्यानिर्वाच्यविश्वान्तर्गतप्रमाणादेः साधकत्वं संभवतीति प्रकृतप्रमेयेऽनुपयोगात्प्रत्युत तद्विरुद्धत्वाच्चेत्याह **अर्थक्रियानधिकरणतामात्रेति** । **ज्ञानेति** । ज्ञानाबाध्यत्वं सत्त्वमिति





पक्षे सत्त्वानधिकरणत्वं ज्ञानाबाध्यत्ववैधुर्यम्। तच्च ज्ञानबाध्यत्वमेवेति विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वादित्यत्र यो हेत्वर्थस्तस्मान्न भिद्यत इत्यर्थः। तथा च हेतोः साध्यावैशिष्ट्यमिति भावः। यद्यपि सद्विलक्षणत्वांशस्य ज्ञानबाध्यत्वरूपतया हेत्वर्थभेदेऽपि सदसद्विलक्षणत्वरूपविशिष्टसाध्यस्य तदभावान्न हेतोः साध्यावैशिष्ट्यम्। तथाऽपि साध्यवद्धेतोरपि सन्दिग्धत्वात्साध्यावैशिष्ट्यमिति द्रष्टव्यम्। **बाधेति**। साध्यमानं बाध्यत्वं यदि स्वोपादानाज्ञाननिवृत्तिद्वारकज्ञानजन्यनिवृत्तिप्रतियोगित्वं वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा विवक्षितं तदा प्रपञ्चे तदभावेन बाधः। यदि चान्यथाविज्ञातस्य सम्यग्विज्ञातत्वं वा ज्ञानजन्यनिवृत्तिप्रतियोगित्वमात्रं वा तद्विवक्षितं तदाऽऽद्ये क्षणिकत्वादिना विज्ञातस्य प्रपञ्चस्य स्थायित्वादिना सम्यग्विज्ञातत्वात्सिद्धार्थता। द्वितीये नित्ये प्रकृत्यादौ पक्षैकदेशे बाधः, ईश्वरज्ञानजन्यध्वंसप्रतियोगिन्यनित्यप्रपञ्चांशे सिद्धार्थता च स्यादिति दूषणं स्फुटमेवेत्यर्थः।

**श्रीनिधि०**— दूषणान्तरमाह **अर्थक्रियानधिकरणतामात्रसाधनं तु इति**। एवमपि मिथ्यात्वासिद्ध्या प्रकृतानुपयुक्तं मिथ्यात्वं अस्य साधकत्वं नेति। प्रकृतविरुद्धं वेत्यर्थः। साधकत्वमर्थक्रियाकारित्वं चेत्यनर्थान्तरत्वात् यद्वा मिथ्याभूतस्यार्थक्रियाकारित्वं न संभवतीत्युक्ते व्यावहारिकत्वात् संभवतीत्युपक्रम्य पुनरर्थक्रियानधिकरणतासाधने प्रकृतानुपयोगस्तद्विरोधश्चेति भावः। **हेत्वन्तरेति**। दृश्यत्वादिरूपहेत्वन्तरेत्यर्थः। **वक्ष्यमाणन्यायेनेति**। ज्ञाननिवर्त्यत्वं चेत् बाधः, अन्यथाविज्ञातस्य सम्यक् विज्ञानगोचरत्वं चेत् सिद्धार्थतेत्यादि द्रष्टव्यम्।

**वा०चं०**— भाष्ये न्यूनतां परिहरति **अर्थेति**। **स्फुटत्वादिति**। बाधापसिद्धान्तार्थान्तरादीनां प्रकृतानामुपपादनप्रकारस्यात्र स्फुटत्वादित्यर्थः। एवेत्युपपादनानपेक्षत्वं दर्शयति। अपसिद्धान्तस्योपपादनसापेक्षत्वेऽप्युपपादनप्रकारस्य मिथ्यायाः साधकत्वं चेत्याद्युक्तिबललब्धतामाह **सत्यस्य नार्थक्रियेति**। सन्मात्रत्वमित्येतद्वितीयव्याख्यासमानन्यायेनार्थान्तरमुपपादयति **अर्थेति**। नन्वर्थक्रियावैधुर्यस्यासत्त्वानिर्वचनीयत्वाहेतुतायामपि नार्थान्तरता। स्वरूपेणैव तस्य त्वां प्रत्यनिष्टत्वेन तत्साधनसंभवादित्यत आह **अर्थेति**। तस्य मां प्रत्यनिष्टत्वेऽप्यनिर्वचनीयत्वाहेतुत्वे प्रमाणादीनां साधकत्वमिति प्रकृतप्रमेये तत्साधनस्यानुपयोगादर्थान्तरमेव। प्रमाणादीनां साधकत्वमिति प्रकृतविरुद्धता च तद्वैधुर्यसाधनस्येति भावः। दृश्यत्वादिरूपहेत्वन्तराभिधानेऽपि ज्ञाननिवर्त्यत्वतन्नाश्यत्वप्रतिपन्नोपाधौ त्रैकालिकसत्तानिषेधरूपत्वदभिमतज्ञानबाध्यत्वस्य ज्ञानबाध्यत्वमिति वाक्यार्थतया वियदादेः सत्त्वेन नित्यत्वेन चाविद्योपादानकत्वाभावादिति लक्षणासंभवादिप्रतिपादकवक्ष्यमाणन्यायेन संपूर्णबाधांशबाधापत्त्याऽसाधनीयत्वान्मदभिमतस्य च विज्ञातस्येत्यादिवक्ष्यमाणसिद्धसाधनार्थान्तरव्यर्थविशेषणत्वादिनाऽसाधनीयत्वान्न काऽप्यनुपपत्तिरित्याशयेनाह **हेत्वन्तरेति**।

**वा०र०**— **स्फुटत्वादितीति**। स्फुटत्वान्न दूषितमिति मूलपाठानुसारेणेदं प्रतीकोपादानम्। तत्र कस्य स्फुटत्वमित्यतो व्याख्यानं बाधापसिद्धान्तेत्यादि प्रकारस्येत्यन्तम्। यदि तु मूले स्फुटदोषत्वादिति पाठः। तदा स्फुटा दोषा यस्मिन्नित्यनेन दोषाणां स्फुटतोक्ता। तत्र दोषपदस्य तदुपपादनप्रकारोपलक्षणतामाश्रित्य स्फुटेति बुद्ध्या





विभक्तस्य च स्फुटत्वादिति पञ्चम्यन्तत्वप्रत्ययसंबन्धमङ्गीकृत्य प्रकारस्य स्फुटत्वादिति योजनीयमिति सूचयितुं स्फुटत्वादितीति प्रतीकमुपात्तमिति न दोषः । स्फुटेतीति प्रतीकोपादानं तु सुगममेवेति ज्ञेयम् । स्फुट एवेति उक्तोत्तरमेवेति चैवकारद्वयस्यार्थमाह **एवेत्युपपादनेति** । उभयप्रयोजनकीर्तनलाभायैवान्यतरप्रतीकानुपादानेन सामान्यत एवेतीत्युक्तम् । **सत्यस्य नार्थेति** मूलम् । सत्यस्य क्रियावेशादिप्रसक्त्या अर्थक्रियाकारित्वं नास्तीति वदता परेण विकारोपेतमिथ्याभूतस्यैवार्थक्रियाऽङ्गीकृतेति तामङ्गीकृत्येदानीं सत्त्वस्यार्थक्रियाकारित्वरूपत्वा-ङ्गीकारे सत्य एवार्थक्रियास्वीकारापत्त्याऽपसिद्धान्त इत्याशयः । तत्र बाध इवापसिद्धान्ते स्फुटत्वं नोक्तं तन्निमित्ततयोपपादनसापेक्षताङ्गीकारसूचनपूर्वकं तर्हि कथं तदुपपादनमित्यतस्तदुपपादनप्रकारस्य प्राचीन-भाष्योक्तिलब्धत्वान्नात्र पृथगनुक्तिर्दोषायेत्याह **अपसिद्धान्तस्येति** । सिद्धान्तविरोधपदोक्तापसिद्धान्तस्य मिथ्यायाः साधकत्वं चेत्याद्युक्तिलभ्यत्वाभावादुक्तमुक्तिबलेति । मया मिथ्याभूतस्यैव साधकत्वाभ्युपगमादिति परेण शङ्किते किल मिथ्यायाः साधकत्वं चेति वाक्यप्रवृत्त्या तद्दूषणं प्रवृत्तिबलेनैव मिथ्याभूतस्यैव साधकत्वमिति परेणाङ्गीकृतमित्येषोऽर्थः सिद्ध इति सत्यस्यार्थक्रियाङ्गीकारेऽपसिद्धान्त इत्येवं तदुपपादनसिद्धेः पृथगत्रोप-पादनाभाव इत्याशयः । **असत्त्वानिर्वचनीयत्वेति** । असत्त्वादीत्यादिपदार्थोऽनेनोक्तो भवति । तस्य मां प्रत्यनिष्टत्वेऽप्यनिर्वचनीयत्वाहेतुत्वे प्रमाणादीनां साधकत्वमिति प्रकृतेति वाक्यपाठः । न तत्साधनसंभवा-दित्येतत्तूपरितनपंक्तिस्थशोधतयाऽधःपंक्तौ लिखितं हंसपदस्थलेऽनिष्टत्वेन तत्साधनसंभवादिति लिखितमपि तत्पंक्तिलेखनावसरे समभिव्याहृततत्पंक्तिस्थशोधान्तरवत्पुनर्लिखितं लेखकैरित्यवधेयम् । **अनिर्वचनीयत्वाहेतुत्वे प्रमाणादीनामिति** । असत्त्वस्यापि प्रकृतत्वेऽपि पराभिमतत्वादनिर्वचनीयत्वमात्रग्रहणम् । **प्रमाणादीनां साधकत्वमिति** हि प्रकृतप्रमेयं तदुपयोगाय ह्यर्थक्रियानधिकरणत्वं साधनीयम् । तदर्थक्रियानधिकरणत्वं च सत्त्वेनाङ्गीकृते ब्रह्मण्यपीत्यनिर्वचनीयत्वहेतुर्न भवतीति नानिष्टम् । यदि चानिर्वचनीयत्वहेतुत्वाभावेऽपि स्वरूपेणानिष्टतया तत्साधयामीति मन्यसे तर्हि तत्स्वरूपेणानिष्टं यद्यपि भवति तथापि तत्साधनं प्रकृतानुपयोगि । मिथ्याभूतप्रमाणादीनां साधनत्वानुपपत्तावुक्तायामनिर्वचनीयरूपामुख्यसत्साधनायैव परेण प्रयत्नकरणेन तदर्थं च प्रपञ्चेऽनिर्वचनीयता यथा लभ्यते तथा साधनस्यैवौचित्यात्प्रपञ्चो नार्थक्रियाकारीति साधनमनिर्वचनीयत्वाहेतुत्वे प्रकृतानुपयोगादर्थान्तरग्रस्तमित्यर्थः । **तद्विरुद्धता चेति** । प्रपञ्चान्तर्गतप्रमाणादीनामप्यर्थक्रियावैधुर्यापत्त्या साधकत्वाभावस्यैव प्राप्त्या साधकत्वविरुद्धमेतत्साधनमिति भावः । हेत्वन्तराभिधानेऽपीत्येतद्वाक्यं व्याकुर्वन्नेवावतारयति **दृश्यत्वादिहेत्वन्तरेति** । बाधसिद्धार्थताद्यापत्तिस्तत्तत्पक्षेषु मिलित्वेति दर्शयितुं विवेकः कृतः । **ज्ञाननिवर्त्यत्वेत्यादि** । सत्तानिषेधा एव रूपाणि यस्य तत्तथा । तथा च निषेधरूपं यत्त्वदभिमतं ज्ञानं बाध्यत्वं तस्येति योज्यम् । वक्ष्यमाणन्यायेनेत्येतदपि नैकार्थमिति भावेनैतत्पक्षनिरासानुगुणतया वक्ष्यमाण-न्यायेनेत्येतद्योजयति **ज्ञानबाध्यत्वमितीति** । इत्येतद्वाक्यार्थतया वक्ष्यमाणो यो न्यायस्तेनेत्यर्थः । तथाविधो न्यायः दूषणप्रतिपादकोऽपि भवतीति तं व्यावर्तयितुं विशेषणमुपात्तं **लक्षणासंभवादिप्रतिपादकेति** । ज्ञानबाध्यत्वलक्षणस्यासंभवः आदिपदेनाव्याप्तिश्चेत्येतदुभयप्रतिपादकेत्यर्थः । चरमयोजनायां तद्वाक्यार्थतया असंभवादेः प्रतिपादकवाक्येषु वियदादेः सत्त्वेनेत्यस्याज्ञानोपादानकत्वाभावादित्युत्तरेण संबन्धात् । नित्यत्वेने-





त्यनन्तरमुक्तस्याप्यज्ञानोपादानकत्वाभावादित्यस्य सत्त्वेनेत्यनन्तरं योजना कार्येति प्रतीयते नित्यत्वेनेत्यनेनापि तदन्वयायोगात् । विनाश्यत्वमात्रपक्षनिराकरणावसरे तदुपन्यासाभावात् । वस्तुतस्तु पक्षत्रयदूषणपरं त्रयमेतत् । तत्र ज्ञाननिवर्त्यत्वपक्षस्य सत्त्वेनेत्येव दूषणम् । तद्विनाश्यत्वपक्षस्य तु नित्यत्वेनेत्येव । प्रतिपन्नोपाधौ सत्ता-निषेध इत्यस्य वियदादौ न सिद्धमिति मूलार्थतयाऽभिप्रेतस्य विद्योपादानकत्वाभावस्याविद्योपादानत्वाभावादिति दूषणमिति त्रयानुवादस्यात्र कृतत्वादिति ज्ञेयम् । नित्यत्वेन चेति चशब्दोऽसंभवादित्यनन्तरं योज्यः अनुवर्तते वा । **संपूर्णबाधेति** । सत्त्वयुक्त्याऽज्ञानोपादानकत्वाभावाद्वियदादीत्यादिपदोक्तनित्यानित्यसमस्तप्रपञ्चे ज्ञाननिवर्त्यत्वा-भावात्संपूर्णबाधः । उत्तरयोजनायां शुक्तिरजतादेरपि लक्ष्यतया तन्मेलनेनासंभवप्रतिपादनेऽपि दृश्यत्वाद्यनुमाने तस्य दृष्टान्ततया संपूर्णबाधे तन्मेलनायोगात् । प्रतिपन्नोपाधाविति तृतीयेऽपि संपूर्णबाध एवमेव । अंशबाधस्तु वियदादीत्यादिपदेन प्रकृत्यादिनित्यप्रपञ्चमात्रग्रहणेन तत्र ज्ञाननाश्यत्वमात्रस्याभावादिति प्रकारेणोपपाद्यः । एवं पराभिमतत्रिविधज्ञानबाध्यत्वदूषणानां त्रयाणां ज्ञानबाध्यत्वमित्येतच्चरमयोजनायां वक्ष्यमाणत्वार्थतया वक्ष्यमाणे-त्येतद्व्याख्यातम् । अधुना स्वाभिमतज्ञानबाध्यत्वसाधनस्य परेण कर्तुमशक्यत्वे विज्ञातस्येत्यस्य .............. योजनायां वक्ष्यमाणेत्येतदर्थकतयापि व्याख्याति **मदभिमतस्येवेति** । यद्यपि हेतुदूषणपरतया योजनायामेव पराभिमतस्वाभिमतयोर्ज्ञानबाध्यत्वयोरसाधनीयत्वं पूर्णबाधादिना लब्धमिति वक्ष्यमाणदोषोक्तिस्थलतयैत-द्योजनैवाव्यवहिता ग्रहीतुं शक्या तथापि चरमयोजनादावुक्तार्थसङ्ग्रहतदूषणयोर्मूले स्पष्टमुक्तिसत्त्वे आर्थिक-लाभाश्रयणेन किं हेतुदूषणपरयोजनायां वक्ष्यमाणेत्यर्थकल्पनयेत्याशयेनार्थान्तरमेवोक्तमिति ज्ञातव्यम् ।

**स०व्र०**— अर्थक्रियाकारित्वं चेत्सत्त्वं तर्हि तदनधिकरणत्वं विशिष्टाभावरूपं द्वेधा पर्यवस्यति । अर्थक्रियारूपविशेषणवैधुर्येण वा अर्थक्रियारूपविशेषणस्य विद्यमानत्वेऽपि तदधिकरणत्वरूपविशेष्याभावेन वेति । तत्राद्यं दूषयति **अर्थक्रियावैधुर्येति** । द्वितीयं दूषयति **अर्थक्रियाऽनधिकरणेति** । अर्थक्रियाऽधिकरण-त्वस्यैवाभावसाधनमित्यर्थः । **प्रकृतानुपयुक्तमिति** । प्रकृतं यन्मिथ्यात्वसमर्थनं तदुपयुक्तं न भवतीत्यर्थः । अत्र हि मिथ्यात्वसमर्थनायार्थक्रियाऽनधिकरणत्वरूपसद्वैलक्षण्यं साधनीयम् । प्रपञ्चस्य सद्विलक्षणत्वादुपपन्नं श्रुत्यादिना मिथ्यात्वसमर्थनमित्युक्तत्वात् । न चार्थक्रियाया विद्यमानतामङ्गीकृत्य प्रपञ्चस्य तदनधिकरणतामात्रसाधनेन मिथ्यात्वमुपपादयितुं हि परस्यायं प्रयत्नः । ततश्च प्रमाणादिप्रपञ्चे साधकत्वमर्थक्रियाऽधिकरणत्वरूपं प्रस्तुतमित्युक्तं स्यात् । तदनधिकरणतासाधने तु प्रकृतविरोध इत्यर्थः । बाधसिद्धार्थताद्यापत्तिः स्फुटैवेति । ज्ञाननिवर्त्यत्वस्य वा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य वा बाध्यत्वस्य मिथ्याशब्दार्थत्वेन विवक्षितत्वे बाधः । अन्यथा-विज्ञातस्य सम्यग्विज्ञानगोचरत्वरूपत्वे सिद्धसाध्यतेत्यर्थः । आदिपदेन दृष्टान्ते साध्यवैकल्यादिकम् ।

**विठ्ठ०**— स्फुटदोषत्वमेव व्यनक्ति **अर्थक्रियेत्यादिना** । अर्थक्रियाकारित्वं सत्त्वं तदनधिकरणत्वं द्वेधा अर्थक्रियास्वरूपस्यैवाभावेन वाऽर्थक्रियासत्त्वेऽपि जगतः तदनधिकरणत्वेन वेति विकल्पं हृदि निधायाद्यं दूषयति **अर्थक्रियावैधुर्येति** । तत्तदुचितार्थक्रियायाः प्रत्यक्षसिद्धत्वादिति भावः । अङ्गीकृतेत्यतःपरं तदनधिकरणतासाधन इति शेषः । नासत्त्वादिहेतुरित्यत्रादिपदेनानिर्वाच्यग्रहणं तथाचार्थान्तरत्वमिति भावः । द्वितीयं दूषयति





**अर्थक्रियानधिकरणतामात्रेति** । यद्यप्यर्थक्रियास्वरूपमस्ति तत्र जगज्जन्यतया जन्यजनकभावसंबन्धेनैव जगत्संबन्धि च तथापि जगतस्तदधिकरणत्वं नास्तीत्यर्थक्रियानधिकरणतासाधनमिति मात्रशब्दार्थः । तत्तु प्रकृतसाधनस्यानुपयुक्तं प्रपञ्चस्य विद्यमानार्थक्रियानाधारत्वमात्रेण मिथ्यात्वासिद्धेः प्रत्युतार्थक्रियाजनकत्वेन सत्यत्वस्यैव सिद्धेः प्रकृतमिथ्यात्वसाधनविरुद्धं चेत्यर्थः । यद्वा मिथ्याभूतस्यार्थक्रियाकारित्वं न संभवतीत्युक्ते व्यावहारिकत्वात् तत्संभवतीत्युपक्रम्य पुनस्तदनधिकरणतासाधने प्रकृतानुपयोगस्तद्विरुद्धता च स्यादित्यर्थः । **हेत्वर्थादिति** । सदसद्वैलक्षण्यरूपमिथ्यात्वसाधनाय बाध्यतारूपहेतोरेवोक्तेरिति भावः । **हेत्वन्तरेति** । दृश्यत्वादिहेत्वन्तराभिधाने । अत्र सदसद्वैलक्षण्यं खलु साध्यं तत्र सत्त्वं ज्ञानाबाध्यत्वं चेत् तद्वैलक्षण्यं च ज्ञानबाध्यत्व एव पर्यवसन्नं तत्तु ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन इति वक्ष्यमाणन्यायेन बाधितम् । ज्ञानबाध्यत्वं नाम न ज्ञानेनोत्पाद्यत्वं येन बाधः किन्तु अन्यथाविज्ञातस्य सम्यग्ज्ञानगोचरत्वं चेत् सिद्धार्थता । आदिपदेन दृष्टान्ते साध्यवैकल्यादिकं स्यादित्यर्थः।

**गूढ०**— नन्वर्थक्रियाकारित्वज्ञानबाध्यत्वरूपविकल्पद्वयं आचार्यैर्विकल्प्य कुतो न दूषितमित्याह **अर्थेति** । स्फुटदोषत्वमेव विवृणोति **अर्थक्रियेति** । ननु परमार्थतोऽर्थक्रियाकारित्ववैधुर्यं वा साध्यते । उतार्थक्रियानधिकरणत्वं नाद्य इत्याह **अर्थक्रियेति** । ननु परमार्थतोऽर्थक्रियाकारित्ववैधुर्यं साध्यत इत्यत आह **परमार्थत इति** । अस्यानिर्वचनीयसिध्युत्तरकालीनत्वेनाद्याप्यसिद्धत्वादित्युत्तरमुक्तमित्यर्थः । अपसिद्धान्तमप्याह **सत्यस्येति** । अस्तु वार्थक्रियावैधुर्यं तथापि न सत्त्वानधिकरणत्वमापद्यते । ब्रह्मवदित्याह **अर्थक्रियेति** । द्वितीयं प्रत्याह **अर्थक्रियेति** । प्रकृतानुपयुक्तमिति ब्रह्मण्यपि तस्य सत्त्वेन प्रकृतानिर्वचनीयसिद्धावनुपयुक्तमित्यर्थः । **तद्विरुद्धं चेति** । प्रकृतानिर्वचनीयविरुद्धं चेत्यर्थः । परेणानिर्वचनीयस्यार्थक्रियाकारित्वाङ्गीकारेण तदनधिकरणत्वसाधनं सिद्धान्तविरुद्धमित्यर्थः । **तच्चेति** । तथाच हेतुदूषणेनैव तस्यापि दूषितत्वान्न तदर्थं पुनः प्रयतितव्यमिति भावः । दृश्यत्वादिहेत्वन्तरेणैवानिर्वचनीयसाधनान्न ज्ञानबाध्यत्वस्य हेत्वभेद इत्यत आह **हेत्वन्तरेति** । **वक्ष्यमाणन्यायेनेति** । ज्ञानबाध्यत्वमिति वक्ष्यमाणन्यायेनेत्यर्थः ।

**प्रदीपः**— अर्थक्रियाकारित्वनिषेधे बाधसिद्धान्तविरोधसत्त्वाभावेनाह **अर्थक्रियेति** । विद्यमानार्थक्रियाधारत्वनिषेधस्त्वत्यन्तायुक्तः ज्ञानेति ज्ञानबाध्यत्वनिषेधे ज्ञानबाध्यत्वहेतुश्चेत्साध्याविशिष्टता भ्रमविषयत्वादिकं चेद्बाधादिकं स्यादिति ।

**३१२ सु०— यदत्रोक्तम् । त्वयाऽपि द्वे तत्त्वे सदसदिति तत्त्वं व्यवस्थापयता यदेव सत्त्वेन व्यवस्थापितं तस्यैव मयाऽप्यङ्गीकारान्न सच्छब्दार्थानिरुक्तिरिति । तदतीव मन्दम् । मया हि क्वचित्सदिति भावो व्यवह्रियते । क्वचिच्च प्रतिपन्नोपाधौ निषेधाप्रतियोगि । क्वापि मूर्तमित्यादि । तत्सर्वं च निरस्तमिति ।**





**परि०— क्वापि मूर्तमिति**। 'नासदासीन्नोसदासीदि'त्यत्र सत्पदेन पृथिव्यप्तेजोरूपं मूर्तमुच्यत इत्यर्थः। आदिपदेन 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्यादौ कर्माद्युच्यते। सदेव सोम्येत्यादौ स्वातन्त्र्याद्युच्यत इत्यादि ग्राह्यम्। **निरस्तमिति**। भावस्यापि भावान्तरवैलक्षण्यभावत्वानधिकरणत्वादेः सिद्धत्वाद्युक्त्येति भावः।

**यादु०— क्वचिद्भाव इति**। इदं च ''द्वे तत्त्वे सदसदि''त्यत्रैव द्रष्टव्यम्। एवं चात्रासच्छब्देना-भावरूपतत्त्वस्यैव विवक्षितत्वात् असतो नृशृङ्गादेः कथं तत्त्वविशेषरूपतेति शङ्काऽनवकाशः। **क्वचित्प्रतिपन्नेति**। 'ब्रह्म सदि'त्यादावित्यर्थः। **क्वापि मूर्तमिति**। ''नासदासीन्नोसदासीदि''त्यत्रेत्यर्थः। आदिपदेन ''ब्रह्मैव सदि''त्यादावुक्तम्। ''सच्छब्द उत्तमं ब्रूयादित्यादेरि''ति द्रष्टव्यम्। **तत्सर्वं निरस्तमिति**। अत्र किञ्चिन्निरस्तं किञ्चिन्निरस्तप्रायमित्यर्थः। मूर्तवैलक्षण्यादेः पूर्वमनिरस्तत्वात्। मूर्तवैलक्षण्यस्य मूर्ते बाधितत्वेनामूर्ते सिद्धार्थत्वेन निरासो ज्ञातव्यः।

**कं०रा०— तत्सर्वमिति**। सच्छब्देन भावं विवक्षित्वा भावविलक्षणत्वमनिर्वाच्यत्वमित्युक्ते भाव-स्यापि भावान्तरविलक्षणत्वस्वीकारेण सिद्धसाधनत्वोक्त्या सच्छब्देन प्रतिपन्नोपाधौ निषेधाप्रतियोगिनं गृहीत्वा तद्विलक्षणत्वरूपं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमनिर्वाच्यत्वमित्युक्ते स्वोपाधौ निषेधाप्रतियोगित्वादित्यनेन बाधस्योक्तप्रायतया सच्छब्देन मूर्तमुपादाय मूर्तविलक्षणत्वमनिर्वाच्यत्वमित्युक्ते मूर्तस्यापि मूर्तान्तरविलक्षणत्व-स्वीकारात्सिद्धसाधनमित्यस्यार्थस्योक्तप्रायतया च तत्सर्वं निरस्तमित्यर्थः।

**श्रीनिधि०— द्वे तत्त्वे इति**। सदसच्छब्दौ यदा भावाभावपरौ मूर्तामूर्तादिपरौ वा तदा न विरोधः। यदा प्रसिद्धसदसत्परौ तदा तत्त्वशब्देन प्रमाविषयमात्रमुच्यते असतोऽपि निषेधप्रमागोचरत्वात्। अतो न तत्त्व-सङ्ख्यानादिग्रन्थविरोध इति ज्ञेयम्।

**वा०चं०— मूर्तमित्यादीति**। अत्रादिपदेन सीदतीति व्युत्पत्त्याऽनित्यं क्वचिदित्यादेर्ग्रहणम्। **तत्सर्वमिति**। एवं चास्मिन्पक्षे सकलपक्षोक्तदूषणप्रसङ्गः। अन्यपक्षेषु तु तत्तत्पक्षोक्तदूषणमेवेति भावः। अत एव पूर्वमतीव मन्दमित्युक्तमिति ज्ञेयम्।

**वा०र०— इत्यादेर्ग्रहणमिति**। आदिपदेन 'सच्छब्द उत्तमं ब्रूयात्। सद्भावे साधुभावे चे'त्याद्युक्ते-रुत्तमादिकं क्वचिदित्यस्य ग्रहणम्। **अस्मिन्पक्ष इति**। द्वे तत्त्वे इति व्यवस्थापयतो यदेवेत्युक्तपक्ष इत्यर्थः।

**स०व्र०— क्वाऽप्यमूर्तमिति**। मूर्तं सदिति संप्रोक्तमित्युक्तेः। आदिपदात् काप्युत्तमम्। 'सच्छब्द उत्तमं ब्रूयादित्यादे'रिति ज्ञातव्यम्। **तत्सर्वं निरस्तमिति**। निरस्तप्रायमित्यर्थः।

**विट्ठ०— क्वचिदिति । भावो व्यवह्रियत इति । प्रतिपन्नोपाधाविति ।** इदं रजतमिति रजतत्वेन ज्ञाते अधिष्ठाने नेदं रजतमिति रजतस्य निषेधप्रतियोगित्ववत् ब्रह्म सत् विश्वं सदिति सत्त्वेन प्रतिपन्ने ब्रह्माद्युपाधावेव नेदं सदिति निषेधाप्रतियोगित्वमित्यर्थः । **क्वापीति ।** नासदासीदित्यादाविति भावः । मूर्तं सदिति संप्रोक्तमित्युक्तेरिति ज्ञेयम् । आदिपदेन 'स आसाद्यस्तु सन्नामा वासुदेवोऽभवत्प्रभुः । सच्छब्द उत्तमं ब्रूयादि'त्यादि द्रष्टव्यम् । प्रपञ्चे भाववैलक्षण्यं प्राक् निरस्तं मूर्तवैलक्षण्यादेः मूर्तादौ बाधे मूर्तादौ सिद्धार्थतेति निरस्तप्रायमित्यर्थः ।

**गूढ०— सदिति । भाव इति ।** तथाच भावत्वमेव सत्त्वमिति भावः । मूर्तं सदिति प्रोक्तमिति श्रुत्यनुसारेण आह **क्वापि मूर्तमित्यादीति ।** अस्त्वेतदिदमेव मयोच्यत इत्यत आह **तत्सर्वं च निरस्तमिति ।** घटादिप्रपञ्चे भावत्वनिषेधाप्रतियोगित्वमूर्तत्वादीनां प्रत्यक्षादिसिद्धत्वेन न बाधादिना दूषितमित्यर्थः ।

**प्रदीपः— तत्सर्वमिति ।** यावन्तः सच्छब्दार्थाः ते सर्वे त्वन्मते न संभवन्तीत्यर्थः ।

॥ हेतोः दुष्टत्वम् ॥

अन्यतरासिद्धिः—

३१३ **सु०— एवं प्रतिज्ञां निराकृत्य हेतुमप्यपाकरोति ज्ञानबाध्यत्वमिति ।**

## अनु०— ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः ॥

**न केवलं प्रतिज्ञा दुष्टा, किं नाम हेतुभूतं ज्ञानबाध्यत्वमपि इत्यर्थः । तुशब्दः सिद्धान्त्यभिमताद् ज्ञानबाध्यत्वाद् व्यवच्छिनत्ति । ज्ञानबाध्यत्वं हि ज्ञाननिवर्त्यत्वं वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा हेतुत्वेन परस्याभिमतम् । न च प्रपञ्चे तत् प्रतिवादिनो मम सिद्धम् । अतोऽन्यतरासिद्धो हेतुरिति ।**

**परि०— प्रतिज्ञामिति ।** विवादपदं सदसद्विलक्षणमितिप्रतिज्ञां वैलक्षण्यं सतश्चेत्यादिना निराकृत्येत्यर्थः । **सिद्धान्त्यभिमतादिति ।** अन्यथाविज्ञातस्य सम्यग्विज्ञाततत्वरूपस्य वा वक्ष्यमाणदिशेश्वरज्ञाननाश्यत्वरूपस्य वा सिद्धान्त्यभिमतबाध्यत्वस्य पक्षे सत्त्वान्न सिद्धमित्ययुक्तं स्यादतः पराङ्गीकृतम् ज्ञानबाध्यत्वं त्वित्युक्तमिति भावः । 'अज्ञानस्य स्वकार्येण, वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध' इति विवरणोक्तेराह **ज्ञाननिवर्त्यत्वं वेति ।** 'प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्ये'ति विवरणोक्तेः । 'तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नासीदस्ति भविष्यती'ति सुरेश्वरोक्तेश्चाह **प्रतिपन्नेति ।**





**यादु०— सिद्धान्त्यभिमतादिति** । 'विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतमि'ति वक्ष्यमाणत्वादित्यर्थः ।

**कं०रा०— व्यवच्छिनत्ति** । पराभिमतं ज्ञानबाध्यत्वमिति शेषः ।

**श्रीनिधि०—** ननु मूलहेत्वन्तरस्यासिद्धिर्न निरूपिता । प्रतिज्ञायाश्चासिद्धिर्न दूषणम् । तत् कथमत्र समुच्चयार्थो अपिशब्द इत्यत आह **न केवलं प्रतिज्ञेति** ।

**वा०चं०—** अपिशब्दस्वारस्यानुरोधाज्ज्ञानबाध्यत्वरूपसाध्यान्तरनिराकरणपरमुत्तरवाक्यमित्याभाति । तथात्वे च साध्ये प्रतिवाद्यसिद्धत्वस्य भूषणत्वेन दूषणासङ्गतिरित्यतस्तत्तात्पर्यमाह **एवमिति** । यद्यपि परेण सदसद्विलक्षणत्वस्येव ज्ञानबाध्यत्वस्याप्यनिर्वचनीयतयोक्तत्वात्सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं निरस्य ज्ञानबाध्यत्वरूपं तन्निराकरोतीति साध्यान्तरनिराकरणपरतयाऽपीदं व्याख्यातुं शक्यं तथाऽपि साधकत्वमिथ्यात्वोपपादनोपयोगितया सदसद्वैलक्षण्यस्यैव प्रस्तुततयाऽनिर्वचनीयत्वसामान्यस्याप्रस्तुतत्वेन तस्य साध्यतया निर्देशात् 'न सिद्धं प्रतिवादिन' इत्यस्यास्वारस्याच्च तथा न व्याख्यातमिति ध्येयम् । ननु तर्ह्यपिशब्दानुपपत्तिः । न केवलं प्रतिज्ञाऽसिद्धा किन्तु हेतुरपीति व्याख्यानेऽप्यसिद्धेर्भूषणत्वेन प्रतिज्ञादूषणत्वाभावात्पूर्वं प्रतिज्ञायां तस्य अनुक्तेश्चानुपपत्तिरेवेत्यतो दुष्टत्वरूपसामान्ये समुच्चयमभिप्रेत्य तदर्थमाह **नेति** । ननूत्तरवाक्ये ज्ञानबाध्यत्वस्य प्रतिवादिसंमतत्वोक्त्या तद्विरोधोऽसिद्धत्वोक्तेरित्यत आह **तुशब्द इति** । शुक्तिरजतादौ पराभ्युपेतयोर्ज्ञाननिवर्त्यप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपयोर्बाध्यत्वयोः यथा एकस्य वस्तुतः असिद्धावपि नापरस्यासिद्धिर्न तथा प्रकृते किन्तु प्रपञ्चे पराभिमतयोरुभयोरप्यसिद्धिरित्याशयेन तुशब्दलब्धविशेषस्वरूपं दर्शयन्नेवासिद्धिमुपपादयति **ज्ञानेति** ।

**वा०र०— दूषणासङ्गतिरिति** । साध्यान्तरनिरासस्य बहिः कृतत्वोक्तिविरोधस्तु भाष्यस्वारस्यस्य भाष्यकारोक्तिविरोधस्य चोद्भावनप्रसङ्गेनोद्भावयितुं युक्त इति तस्य परित्यागः । अत एव मूलकाराचातुर्री पृथगेव परिहरति **यद्यपि परेणेति । अनिर्वचनीयतयोक्तत्वादिति** । अनिर्वचनीयत्वतयेति भावप्रधानो निर्देशः । **साधकत्वमिथ्यात्वोपपादनेति** । साधकत्वोपपादनोपयोग्यसद्विलक्षणत्वम् । सद्विलक्षणत्वं तु मिथ्यात्वोपपादनोपयोगीति स्पष्टम् । निर्देशमभ्युपेत्याह **असिद्धमिति** । न सिद्धमित्येतदेव हेतुदूषणत्वेन प्रसिद्धासिद्धिपरतया स्फुटीकर्तुं सिद्धमित्यनूदितम् । असिद्धेर्हेतुदूषणतया साध्यदूषणत्वाभावादिति भावः । **ननु तर्हीति** । हेतुदूषणपरतया योजना चेत्तर्हीत्यर्थः । **इति व्याख्यानेऽपीति** । इत्येवमसिद्धत्वांशे समुच्चयस्यापिशब्दार्थतया व्याख्यानस्य संभवेऽपीत्यर्थः । दूषणत्वाभावात् । तथाच न केवलं प्रतिज्ञाऽसिध्या दुष्टा किन्तु हेतुरप्यसिद्ध्या दुष्ट इत्यसिद्धत्वस्य दूषणत्वसमुच्चयो न युक्त इति भावः । प्रागसिद्धिः प्रतिज्ञायामुक्ता चेत्स्यात्तर्हि तत्समुच्चयो घटेत । न चैवमित्यतोऽप्यपिशब्दानुपपत्तिरित्याह **पूर्वमिति । दुष्टत्वरूपसामान्य इति** । न सिद्धमित्युक्तासिद्धत्वमपुरस्कृत्यासिद्धत्वप्रयुक्तदुष्टत्वांश एव न केवलं प्रतिज्ञा दुष्टेति समुच्चयमित्यर्थः । **उत्तरवाक्य इति** ।





विज्ञातस्यान्यथेत्युत्तरभाष्य इत्यर्थः । शुक्तिरजतादौ बाध्यत्वासिद्धिप्रतिपादनेन साधनवैकल्यं वक्ष्यते । तत्र च तद्धि ज्ञाननिवर्त्यत्वं परस्याभिमतमिति सिद्धवत्कृत्य तत्पक्ष एव साधनवैकल्यं मूले प्रतिपादितम् । न तथाऽत्र सङ्कोच इत्याह **शुक्तिरजतादाविति** । एकस्य ज्ञाननिवर्त्यत्वस्य प्रातिभासिकस्य ज्ञानेन निवृत्त्ययोगादिति भावः । अपरस्य प्रतिपन्नोपाधावित्यादेः । वस्तुत इत्युक्त्या प्रतिपन्नत्वादेरप्यसिद्धिरस्त्येव । अत एव तथा सत्यसत्त्व-प्रसङ्गादिति वक्ष्यति । किन्तु परीत्या स्वारसिकी सा न भवतीति सूचितम् । इत्याशयेनासिद्धिमुपपादयतीति संबन्धः । प्रतिवादिनो ममेत्यधिकोक्तिं घटयति **तुशब्दलब्धेति** । प्रष्टव्य इत्यनन्तरं हेतुत्वेनेत्यतः प्राक् किमिति पूरणीयम् । **त्वयाऽपीष्यत** इत्यपिपदलब्धाशयस्य द्वेधापि संभवाद्विकल्पद्वयप्रसक्तिरिति ज्ञेयम्।

**विठ्ठ०— सिद्धान्त्यभिमतादिति** । विज्ञातस्यान्यथेति वक्ष्यमाणत्वादित्यर्थः ।

**गूढ०**— ननु समुच्चेयाभावात्तदर्थापिशब्दवैयर्थ्यमाशङ्क्याह **न केवलमिति** ।

**३१४ सु०— नन्वीश्वरज्ञानेन प्रपञ्चनिवृत्तिस्त्वयाऽपीष्यत एव । अन्यथा तस्य संहार-कर्तृत्वानुपपत्तेः । ज्ञानादिमत एव कर्तृत्वात् । सत्यम् । नैवं ज्ञाननिवर्त्यत्वं परस्याभिप्रेतम् । अपि तर्ह्यज्ञानोपादानकस्य समाने विषये विरोधिना ज्ञानेनोपादाने निवृत्ते स्वयमेव विलपनम् । यथाऽऽह । 'अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः' इति । न चायं प्रपञ्चेऽस्माकं संमतः । किन्तु मुद्गरप्रहारादिना घटस्येवेश्वरस्य ज्ञानेच्छाप्रयत्न-व्यापारैर्विनाश एव । स एव हेतुरस्त्विति चेन्न । तथाविधम् अपि ज्ञानबाध्यत्वं** पक्षैकदेशे **प्रकृत्यादौ न सिद्धं प्रतिवादिन** इति भागासिद्धत्वात् ।

**परि०— यथाऽऽहेति** । विवरणकार इत्यर्थः । भागासिद्धिपरत्वेनापि योजयितुमाह **स एवेति** ।

**यादु०— स्वकार्येण वर्तमानेनेत्यादि** । घटाज्ञानस्य घटाज्ञानेन निवृत्तिदर्शनाद्धटज्ञानमपि बाधः स्यादित्यत उक्तं **स्वकार्येणेति** । किं वार्तमानिककार्यसहिताज्ञानस्य निवृत्तिर्बाध उत प्रविलीनकार्यसहिताज्ञानस्य । नाद्यः । विपर्ययोत्पत्त्यनन्तरकाले मनसो विषयान्तरसञ्चारः । समयान्तरे च शुक्तिलोचनसंयोगजाधिष्ठान-ज्ञानेनाज्ञाननिवृत्तौ तदभावेनाव्याप्तिः । न द्वितीयः । वर्तमानकार्यसहिताज्ञाननिवृत्तौ तदभावादित्याशङ्क्य कार्याकारेण परिणताज्ञाननिवृत्तिर्बाध इत्यनुगतलक्षणमुभयत्राप्यस्तीत्याह **वर्तमानेनेत्यादि** । न च प्रविलीनस्य कथं पुनर्ज्ञानिन निवृत्तिरिति वाच्यम् । अधिष्ठानज्ञानात्प्राक् कार्यस्य कारणाकारेण नात्यन्तिकनिवृत्तिः किन्तु कारणे प्रविलयमात्रं क्रियते । तथा च प्रविलीनस्यापि कार्यस्य कारणात्मना सत्त्वादधिष्ठानयाथात्म्यज्ञानेनात्यन्तिकी निवृत्तिरुपपन्ना । अत एव मुद्गरप्रहरणादिना निवृत्ते घटादौ ब्रह्मज्ञानेन निवृत्तिर्न संभवतीति कथं तस्य बाध्यत्वमिति शङ्काऽनवकाश इत्यभिप्रायात् । **अन्यथेति** । वेदान्तजनितवृत्तिविषयत्वाभाव इत्यर्थः ।





**श्रीनिधि०— अज्ञानस्य स्वकार्येणेति** । स्वकार्येण सह निवृत्तिर्बाध इत्युक्ते ब्रह्मज्ञानपूर्वं मुद्गर-प्रहारादिना नष्टघटादेर्ज्ञाननिवर्त्यत्वं न स्यादित्यत उक्तं **प्रविलीनेनेति** । मुद्गरादिना नाशोऽपि सत्कार्यवादे सूक्ष्मरूपेण कार्यसत्त्वाङ्गीकारादिति भावः ।

**वा०चं०—** ज्ञानेन प्रपञ्चनिवृत्तिस्त्वयाऽपीष्यत एवेति वदन्प्रष्टव्यः । हेतुत्वेन मदभिमतस्यैव त्वदभिमतत्वान्नान्यतरासिद्धिरित्याशयः । उत स्वाभिमतज्ञाननिवर्त्यत्वस्य वैलक्षण्येऽपि यथाकथञ्चिज्ज्ञान-निवर्त्यत्वस्य त्वदभिमतत्वात्तस्यैव च मया हेतुत्वेनोपन्यासान्न प्रतिवाद्यसिद्धिरिति । नाद्यः । त्वदभिमतस्य हेतुतयोपन्यस्तस्य न मदभिमतत्वमतः प्रतिवादिनं मां प्रत्यसिद्धिरेवेत्याह **नैवमिति** । **स्वयमेवेति** । ज्ञानस्य पृथक् तत्र व्यापाराभावमाह । उपादाननिवृत्तिद्वारा प्रयोजकत्वमस्त्येवेति ज्ञाननिवर्त्यत्वमक्षतमेवेति भावः । अथवा ईश्वरव्यापारनिवृत्त्यर्थमेतदिति ज्ञेयम् । विवरणकारेण बाधलक्षणान्तरनिराकरणेनाज्ञानस्य ज्ञानेन निवृत्तिर्बाध इति तल्लक्षणमभिप्रेत्योक्तमज्ञानस्येति । तदत्र संमतितयोदाहरति **यथाऽऽहेति** । घटादिज्ञानेन जायमानाया घटाद्यज्ञाननिवृत्तेरपि बाधत्वापत्तेराह **स्वकार्येणेति** । वार्तमानिककार्यसहिताज्ञाननिवृत्तेर्बाधत्वे विपर्ययोत्पत्त्यनन्तरं मनसो विषयान्तरसञ्चारे समयान्तरे शुक्तिलोचनसंयोगजाधिष्ठानज्ञानेनाज्ञाननिवृत्तौ वार्तमानिककार्यध्वंसा-भावेनाव्याप्त्यापत्त्या प्रविलीनकार्यसहिताज्ञाननिवृत्तेर्बाधत्वे च वार्तमानिककार्यसहिताज्ञाननिवृत्तौ तदभावेना-व्याप्त्याऽऽपत्त्या नैतल्लक्षणमित्यतः कार्यान्तराकारेण परिणताज्ञाननिवृत्तिर्बाध इत्यनुगतमुभयत्राप्यस्तीत्याशयेन वर्तमानेन प्रविलीनेन वेत्युक्तम् । अविद्यानिवृत्तिरूपपराभिमतद्वारप्रतियोगितयेच्छाप्रयत्नग्रहणमिति बोध्यम् । द्वितीयं शङ्कते **स एवेति** । यद्यप्यत्रैतादृशस्य तवासिद्धेरन्यतरासिद्धितादवस्थ्यमित्यपि दूषणं वक्तुं युक्तं तथाऽपि प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वमङ्गीकुर्वताऽपि स्वरूपेण ध्वंसस्येवाज्ञाननिवृत्तिप्रयुक्तविलयनं वदताऽपि मया स्वरूपेण ध्वंसोऽभ्युपगम्यत इत्यपि परेण वक्तुं शक्यत्वात्प्रतिवादिशब्दोपेतभाष्यवाक्यारूढतयाऽस्य वक्तुमशक्यत्वाच्च तदारूढं दूषणमाह **तथेति** । अनेनात्र तुशब्दो वाद्यभिमतज्ञानबाध्यत्वव्यवच्छेदार्थः । अथवा प्रतिवादिन इत्यस्य ज्ञानबाध्यत्वमित्यनेनापि संबन्धः । पक्ष इति योग्यतया संबद्धेन तुशब्दसंबन्धः । एवं च पक्षविशेष इति सिध्यति । अपिशब्दस्य ज्ञानबाध्यत्वमित्यनेन संबन्ध इत्यभिप्रेत्य भाष्यं योजितं भवति ।

**वा०र०— नैवमितीति** प्रतीकोपादानपाठः । स्वयमेवेति विशेषणकृत्यमाह **स्वयमेवेतीति** । इतीत्यस्य इत्यनेनेत्यर्थः । **तत्र व्यापारेति** । कार्यस्य नाशे व्यापारेत्यर्थः । तदभावे कार्यस्य ज्ञाननिवर्त्यत्वं च नास्तीत्यापन्नमिति मिथ्यात्वप्रतिपादनायोग इत्यत आह **उपादानेति** । परम्परया तन्निवर्त्यत्वमस्त्येवेति भावेनाज्ञाननिवृत्तिकारणस्य ज्ञानस्याज्ञानकार्यनिवृत्तिं प्रति योजकत्ववचनम् । कार्यस्य यत् तद्व्यतिरेकप्रयुक्त-व्यतिरेकप्रतियोगित्वं तद्रूपं कारणतत्कारणसाधारणं प्रयोजकत्वमिति भावः । **ईश्वरव्यापारेति** । तथा च स्वयमेवेत्यस्येश्वरव्यापारं विनैवेत्यर्थ इति भावः । **विवरणकारेणेत्यादि** । तत्त्वदीपनाद्यनुसारेण लक्षणान्तर-निराकरणत्वतल्लक्षणत्वादेरुक्तिरित्यादिकं व्याकर्तव्यमस्ति । ............ । ईश्वरज्ञानेच्छेत्यादाविच्छा-





प्रयत्नग्रहणाभिप्रायमाह **अविद्यानिवृत्तीति** । केचित्तु किं त्वितीति प्रतीकोपादानपाठं कल्पयन्ति । **द्वितीयमिति** । उत स्वाभिमतेति प्रागुक्तद्वितीयमित्यर्थः । **अन्यतरासिद्धितादवस्थ्यमिति** । प्रागुक्तान्यतरासिद्धिपरिहारो यथा स्यात्तथैव परेण शङ्कनीयत्वादिति परनिग्रहस्य सिद्धेरिति भावः । **अङ्गीकुर्वतापीति** । मयेति वक्ष्यमाणमाकृष्यते । **प्रतिवादिशब्दोपेतेति** । एतादृशस्य तवासिद्धचेति योजनायां वादिन इति प्रतिपादनात्तस्य प्रतिवादिपदोपेत-भाष्यवाक्यानारूढत्वमित्यर्थः । तथाविधमपि ज्ञानबाध्यत्वमित्येतस्यार्थस्य ज्ञानबाध्यत्वमपि त्वित्येतद्भाष्या-ल्लाभप्रकाराप्रतीतेराह **अनेनात्रेति** । तथाविधमपीत्येतत्प्रतिवाद्यभिमतमित्यर्थकं कथं लब्धमित्यतस्तुशब्दस्य ज्ञानबाध्यत्वमित्यनेन संबन्धे पक्षान्तरव्यावृत्त्यर्थकतुशब्दयोगेन पराभिमतज्ञानबाध्यत्वव्यवच्छेदः सिध्यतीत्याह **तुशब्द इति** । तुशब्दयोगेनैतदर्थप्रतिपादनाङ्गीकारे प्रतिपत्तिगौरवमाश्रयणीयं भवतीत्यपरितोषाल्लघुपक्षान्तरमाह **अथवेति** । तथा च प्रतिवादिनो यज्ज्ञानबाध्यत्वमिति संबन्धात्पराभिमतव्यवच्छेदसिद्धिः सुलभेति भावः । प्रतिवादिन इत्यस्य न सिद्धमित्यनेनान्वयात्कथमत्रान्वय इत्यत उभयत्र संबन्धमभिप्रेत्योक्तम् **अनेनापीति** । पक्षैकदेशे इत्येतल्लाभाय पक्षविशेष इत्येतत्समानार्थकत्वात्तस्य पक्षविशेष इत्येतल्लाभं दर्शयति **पक्ष इतीति** । **अपिशब्दस्येति** । अपि ज्ञानबाध्यत्वमित्येवमपिशब्दस्य ज्ञानबाध्यत्वमित्यनेन पूर्वतया संबन्ध इत्यर्थः । तेन तथाविधमपि ज्ञानबाध्यत्वमित्येतल्लब्धं भवति । संबन्धमात्रस्य स्वत एव सत्त्वेन तत्प्रतिपादनस्य पूर्वतयेत्यत्रैव तात्पर्यात् । **इत्यभिप्रेत्य भाष्यमिति** । नन्वनेनेत्यस्य तथाविधमपीत्यादिपरतया तथाविधमपीत्यादिना ज्ञानबाध्यत्वमपि त्वित्येतद्भाष्यं यद्योजितं तदित्यभिप्रेत्येति योजनायां भवतीत्यस्यास्वारस्यम् । यथाश्रुत-योजनायामनेनेति भाष्यं योजितं भवतीत्येव स्वरसतयाऽभिप्रेत्यैतद्विधानस्य योजितमित्यनुवादेन संबन्धोपपत्त्यर्थं योजनाभवनस्य विधेयतया स्वरसतः प्रतीयमानस्यानुवाद्यत्वस्वीकारायोगपरिहाराय चोक्तयोजनाया एवाश्रयणसिद्धेः। तत्कथमेतद्योजनेति चेत्सत्यम् । नात्राभिप्रेत्य सत्यस्य योजितमित्यनेन संबन्धो येनोक्तकुसृष्टिप्रसङ्गः । अपि तु भाष्यमित्यनेन संबन्धः । ततश्चानेन तुशब्द इत्याद्यभिप्रेत्य प्रवृत्तं यद्भाष्यं तद्योजितं भवतीति लभ्यते । अनेकाभिप्रायप्रवृत्तैतद्भाष्यीयो य उक्ताभिप्रायस्तदनुसारेणेयं योजनेति फलति । तेनाभिप्रेत्येत्येतस्य भवतीत्यस्य च स्वारस्यमेवेति न दोष इति ज्ञेयम् ।

स०व्र०— **प्रविलीनेन वेति** । मुद्गरपातानन्तरं घटस्य नात्यन्तिकनिवृत्तिः, किन्तु प्रविलयमात्र-मित्यभ्युपगमादतीतघटादेरपि ज्ञानादेव निवृत्तिरित्यर्थः ।

विठ्ठ०— **नैवं ज्ञाननिवर्त्यत्वमिति** । ज्ञानपूर्वमीश्वरे एव विनाश्यत्वमिति । **समाने विषये इति** । समानग्रामावयवमितिवदेकत्वपरः तथाच यथा शुक्त्यवच्छिन्नचैतन्याश्रिताज्ञानोपादानकस्य रजतस्य इदमिति प्रतीयमाने विषये जातेनाज्ञानविरोधिना शुक्तितत्त्वज्ञानेन रजतोपादानभूताज्ञाने निवृत्ते निरुपादानकार्यव-स्थानाभावात्स्वयमेव रजतविलयनं ज्ञाननिवर्त्यत्वमित्यर्थः । अत्र विवरणसंमतिमाह **यथाहेति** । अज्ञानस्य ज्ञानेन निवृत्तिर्बाध इति संबन्धः । अत्र घटाज्ञानस्य घटज्ञानेन निवृत्तिदर्शनात् तस्यापि ज्ञानबाध्यत्वं स्यात् न च तदुचितं





तथात्वे ब्रह्मज्ञानेतरबाध्यत्वेन शुक्तिरूप्याज्ञानकार्यवत् प्रातिभासिकत्वं स्यात् अत उक्तं **स्वकार्येण सहेति** । स्वोपादानककार्येण सहेत्यर्थः । स्वकार्यं च द्विविधं वर्तमानं प्रलीनं च तत्र स्वकार्येणेत्येवोक्ते ज्ञानकाले वर्तमानेन स्वकार्येण सह स्वस्योपादानस्य निवृत्तिर्बाध इत्येतावन्मात्रलाभेन सर्वप्रपञ्चबाधकब्रह्मज्ञानात्पूर्वं मुद्गरप्रहारादिना प्रविलीनकपालद्वयसहितघटादीनां ब्रह्मज्ञाननिवर्त्यत्वं न स्यात् अतः **प्रविलीनेन** चेत्युक्तम् । प्रविलीनेन स्वकार्येण सह निवृत्तिरित्येवोक्तौ ज्ञानकाले वर्तमानकार्याणां शुक्तिरूप्यादीनां ज्ञाननिवर्त्यत्वं न स्यात् अतः परस्पराव्याप्तिरित्यतो वर्तमानेन प्रविलीनेन चेत्युक्तम् । प्रविलीनस्य कथं निवृत्तिरिति चेत् इत्थम् । पूर्वं मुद्गरादिना घटादिकार्यध्वंसेऽपि न तस्यात्यन्तिकी निवृत्तिः प्रध्वस्तस्यापि कार्यस्य कारणात्मना सत्त्वात् । ब्रह्मज्ञानेन मूलकारणस्याज्ञानस्य निवृत्तौ आत्यन्तिकी निवृत्तिरिति ।

**गूढ०**— ननु ज्ञानबाध्यत्वं प्रतिवादिनो न सिद्धमित्ययुक्तम् । ज्ञाननिवर्त्यत्वस्य प्रपञ्चे त्वयापि स्वीकारादित्याशङ्क्ते **नन्विति** । **अन्यथेति** । ज्ञानेन प्रपञ्चानिवृत्तावित्यर्थः । कुत इत्यत आह **ज्ञानादिमत एवेति** । तथाच ज्ञानविशिष्टस्य कारणत्वे विशेषणीभूतज्ञानस्यापि तत्सिध्यतीति भावः । **अपि तर्हीति** । अज्ञानोपादानकस्य स्वयमेव विलयनमित्यन्वयः । भिन्नविषयकज्ञानेन निवृत्त्यसंभवात् समाने विषये इत्युक्तम् । इदमेव ज्ञाननिवर्त्यत्वं पराभिप्रेतमित्यत्र तदभियुक्तसङ्गतिमाह **यथाहेति** । अज्ञाननिवृत्तिर्बाध इत्युक्ते घटादिज्ञानमपि बाधः स्यात् । तेनाप्यज्ञाननिवृत्तेर्जायमानत्वादित्यत उक्तम् **स्वकार्येणेति** । किं वार्तमानिकत्वकार्यसहिताज्ञाननिवृत्तिर्बाधः, उत प्रलीनकार्यसहिताज्ञानस्य । नाद्यः । विपर्ययोत्पत्त्युत्तरकालं मनसो विषयान्तरसञ्चारे समयान्तरे च शुक्तिलोचन-संप्रयोगजाधिष्ठानज्ञानेनाज्ञाननिवृत्तौ वार्तमानिककार्यध्वंसाभावेनाव्याप्तेः । न द्वितीयः । वर्तमानकार्यसहिता-ज्ञाननिवृत्तौ तदभावादित्याशङ्क्य कार्याकारेण परिणताज्ञाननिवृत्तिर्बाध इत्यनुगतलक्षणमुभयत्राप्यस्तीत्याह **वर्तमानेनेति** । किमत्रानित्यमेव प्रपञ्चं पक्षीकृत्य तस्यानेन हेतुना निर्वचनीयत्वं साध्यते उत नित्यानित्यं सर्वमपि । नाद्यः । तथा सति नित्ये सन्दिग्धानैकान्तिकत्वापत्तेः । निश्चितसाध्याभाववति हेतुसन्देहसत्त्वात् । न च पक्ष-तुल्यत्वान्न सन्दिग्धानैकान्तिकत्वमिति वाच्यम् । तथापि पक्षातिरिक्तत्वेन तदपरिहारात् । न द्वितीय इत्याह **तथाविधमपीति** ।

प्रदीपः— **वृत्तिरिति** । नेदं बाधकमित्यर्थः ।

**३१९ सु०—** किञ्च सत्यस्यापि ज्ञानविनाश्यत्वमस्तु । न च विपक्षे किञ्चिद्बाधकमस्तीत्यतः अप्रयोजकत्वाद् **ज्ञानबाध्यत्वं न सिद्धमपि** व्याप्यत्वासिद्धमपीति यावत् । **प्रतिवादिनो** मतेनेति गुडजिह्विकामात्रम् । बाधकानुपन्यासे वादिनोऽपि व्याप्यत्वासिद्धेरावश्यकत्वात् । सतो विनाशे चैतन्यस्यापि विनाशप्रसङ्ग इति चेत् । तर्हि विनाशमात्रस्य साध्यप्रयोजकत्वेन **ज्ञानबाध्यत्वमसिद्धमपि** व्यर्थविशेषणासिद्धमपि स्यात् । नाश्यत्वमात्रं हेतुः, **ज्ञान** इति





**स्वरूपकथनमात्रम् । स चोक्तबाधकसानाथ्येन नाप्रयोजक इति चेन्न । सत्त्वसाम्येऽपि विनाशकारणसदसद्भावेन विशेषस्योक्तत्वात् ॥ ननु च 'नेह नानाऽस्ती'तिप्रतिपन्नोपाधौ श्रौतनिषेधात्मा बाधः प्रपञ्चेऽस्तीति चेन्न । श्रुत्यर्थनिर्णयोत्तरकालमेवैतत् । स एव तूपपत्तिविरोधादशक्य इत्युच्यमानत्वात् ।**

**परि०**— अपिपदं भिन्नक्रममुपेत्य व्याप्यत्वासिद्धिपरत्वेनापि योजयति **किञ्चेत्यादिना** । **गुडजिह्विकेति** । गुडयुक्तजिह्वा सैव गुडजिह्विका । बालानां कट्वादि ग्रासयितुमास्यव्यादानार्थं जिह्वायां गुडं यथा स्थापयन्ति तद्वदिदमित्यर्थः । विपक्षे बाधकमाशङ्कते **सतो विनाश इति** । **तर्हीति** । आत्मनो विनाशित्व इत्यर्थः । प्रकारान्तरेण मूलार्थमाह **असिद्धमपीत्यादिना** । **उक्तत्वादिति** । ज्ञानिनां मोक्षदश्च स इत्यत्रेति भावः । **स एवेति** । श्रुत्यर्थ एव । 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत्' इत्यादिनोपपत्तिविरोधादशक्य इत्युच्यमानत्वादित्यर्थः ।

**वं०प०**— **व्यर्थविशेषणासिद्धम्** । ज्ञानबाध्यत्वमस्तु मिथ्यात्वं मास्तु सत्त्वमेवास्त्वित्यप्रयोजकत्वे शङ्किते नाशमात्रस्यैव मिथ्यात्वप्रयोजकत्वप्राप्त्या ज्ञानविशेषणं व्यर्थमित्यर्थः । **उक्तबाधकेति** । सतो विनाश इत्युक्तबाधकेत्यर्थः । **उक्तत्वादिति** । तथा चोक्तबाधकतर्कोऽयुक्त इत्याशयः ।

**कं०रा०**— **स चेति** । नाश्यत्वमात्ररूपो हेतुरुक्तबाधकेन सतो विनाशे चैतन्यस्यापि नाशप्रसङ्ग इत्युक्तबाधकेनानिर्वचनीयत्वरूपसाध्यं प्रति नाप्रयोजक इत्यर्थः । उक्तबाधकसानाथ्य इति पाठे उक्तबाधकसाचिव्ये सतीत्यर्थः । **प्रपञ्चेऽस्तीति** । तथा च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं बाध्यत्वमिति पक्षे न प्रतिवादिनोऽसिद्धिः । श्रुतिप्रतिपन्नस्य तस्य प्रतिवादिनाऽप्यङ्गीकर्तव्यत्वादिति भावः ।

**श्रीनिधि०**— **गुडजिह्विकेति** । जिह्वायां गुडं प्रक्षिप्य विषप्रक्षेपवत् । **व्यर्थविशेषणासिद्धमपीति** । विशेषणस्य व्यर्थत्वे न तद्विशिष्टस्यापि असिद्धिर्ज्ञापकत्वासिद्धिरिति भावः । **उक्तबाधकसानाथ्येति** । सतो विनाशे चैतन्यस्यापि नाशप्रसङ्ग इत्युक्तसाधकरूपनियामके सतीत्यर्थः । **विशेषस्योक्तत्वादिति** । इत्युक्तेर्बन्धमिथ्यात्वमित्यस्य व्याख्यानावसर इति भावः ।

**वा०चं०**— ननु चतुर्विधनाशेषु यस्य कस्यचिदपीश्वरातिरिक्ते त्वयाऽङ्गीकारान्न भागासिद्धिरित्यतस्तथात्वेऽप्यप्रयोजकत्वं स्यादेवेत्याशयेनाह **किञ्चेति** । तन्निष्ठासिद्धव्युक्तेस्तद्धर्मभूतव्याप्यसिद्धिविषयकत्वविवक्षामभिप्रेत्य तात्पर्यमाह **व्याप्यत्वासिद्धमिति** । अन्यतरासिद्ध्यादिवदन्यतराप्रयोजकत्वमपि दूषणमिति भ्रान्तिं निवारयति **प्रतिवादिन इति** । **तर्हीति** । यद्यपि सत्त्वसाम्येऽपीत्यादिना । वक्ष्यमाणदूषणमादावेव वक्तुं युक्तं तथाऽपि परोक्तहेतोर्व्यर्थविशेषणासिद्धिमपि दर्शयितुं प्रकारान्तरेण भाष्यं योजितमिति ध्येयम् । तर्के विशेषव्याप्ते-

रभावादविशेषप्रयुक्तसामान्यव्याप्तेश्चोक्तरीत्याऽविशेषासिद्धेरनुपपत्त्या व्याप्तिशून्योऽयं तर्काभास इत्याह **सत्त्वेति** । असिद्धत्वेन प्रतिज्ञातबाध्यत्वयोर्मध्ये ज्ञाननिवर्त्यत्वरूपस्य तस्यासिद्धिमुपपाद्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपस्य बाध्यत्वस्यापि तामुपपादयितुं, नन्वस्तु ज्ञाननिवर्त्यत्वरूपस्य तस्यासिद्धिर्न तु प्रतिपन्नोपाधौ निषेधरूपस्य तस्य नेह नानेति निषेधस्य जागरूकत्वात्तस्यैव च हेतुतयोपन्यास इत्याशङ्क्ते **नन्विति** । तस्याप्यसिद्धिरेव । श्रुतेरर्थान्तरपरत्वेन तत्परत्वाभावात् । अन्यथाऽन्योन्याश्रयाद्यापत्तेरित्याशयेनाह **श्रुत्यर्थेति** ।

**वा०र०— चतुर्विधनाशेष्विति** । 'अनित्यत्वं देहहानिर्दुखावाप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदे'ति द्वितीयाध्यायगीतातात्पर्योदाहृतवचनोक्तचतुर्विधेत्यर्थः । **अङ्गीकारादिति** । तदङ्गीकारस्य ............... धिकरणीयभाष्याद्युक्तरीत्या स्पष्टत्वादित्याशयः । बाध्यत्वमसिद्धमित्यतो बाध्यत्वं व्याप्यत्वासिद्धमित्येतदर्थलाभकथनेन तथार्थप्रतिपादनं घटयति **तन्निष्ठासिद्धीति** । व्याप्यत्वासिद्धमितीति प्रतीकोपादानपाठः । त्वप्रत्ययोऽधिको लेखकागतः । अप्रयोजकत्वस्यान्यतररीत्या शास्त्रकारानङ्गीकाराद्भ्रान्तिमित्युक्तम् । अनेनैव वादिनोऽपि व्याप्यत्वासिद्धमिति प्रतिपादनस्यानुपयोगाद्वैयर्थ्यमिति मूले गुडजिह्विकात्वाश्रयणमयुक्तमिति शङ्का च निरस्ता भवति । **प्रकारान्तरेणेति** । अनेन वक्ष्यमाणं सत्त्वसाम्येऽपीत्येतदप्यत्र दूषणमिति सूचितम् । **अविशेषप्रयुक्तेति** । विशेषसामान्यभेदभिन्नव्याप्तिमध्ये सामान्यव्याप्तेरपि यदिन्द्रियं रूपादिष्वेत्येतत्प्रकारादविशेषलक्षणव्याप्तिर्भिन्ना तस्या इदमभिधानमविशेषप्रयुक्तेति । अनादेः कथं निवृत्तिरिति पूर्वमूलटीकायामुत्तरत्र च वैशेषिकनयादौ तत्र तत्राविशेषलक्षणसामान्येत्यादिव्यवहारादप्यविशेषो लक्षणं ज्ञप्तिप्रयोजको यस्येति व्युत्पत्त्याऽविशेषप्रयुक्तेत्यभिप्राया एवेति ज्ञातव्यम् । **उक्तरीत्येति** । बन्धमिथ्यात्वं नैवेति भाष्यव्याख्यानमूले हन्त तर्हि विरोधिसद्भाव एव निवृत्तौ प्रयोजक इति कुत आत्मनिवृत्तिरित्युक्तरीत्येत्यर्थः । **असिद्धत्वेन प्रतिज्ञातेति** । सिद्धान्त्यभिमतबाध्यत्वातिरिक्तज्ञाननिवर्त्यत्वादिरूपोभयविधबाध्यत्वयोरसिद्धत्वप्रतिज्ञापरत्वेन प्राक् मूले व्याख्यानादिति भावः । निषेधरूपस्य तस्येत्यस्य बाध्यत्वस्येत्यर्थः । असिद्धिरिति वर्तते । तस्य तु नासिद्धिरिति योज्यम् । कुतो नासिद्धिरित्यतस्तत्साधकप्रमाणसद्भावादित्याह **नेहेति** । तर्हि ज्ञाननिवर्त्यत्वसाधकाभावात्तदसिद्धिर्दुर्वारैवेत्यतो यस्यासिद्धिर्न तद्धेतूक्रियते । हेतुक्रियमाणं तु नासिद्धमित्याह **तस्यैव चेति** ।

**विट्ठ०— व्याप्यत्वासिद्धमिति** । ज्ञानविनाश्यत्वरूपबाध्यत्ववत्यपि सत्यत्वाङ्गीकारेण तत्र मिथ्यात्वरूपसाध्याभावेन व्याप्यत्वासिद्धमित्यर्थः । **गुडजिह्विकेति** । गुडयुतजिह्वा गुडजिह्वा सैव गुडजिह्विका । बालानां कट्वादि पाययितुं आस्यव्यादानार्थं जिह्वायां गुडं स्थापयन्ति तद्वत्प्रतिवादिसंमतमेव वादिनाऽप्यङ्गीकारयितुमादौ प्ररोचनामात्रमिति भावः । **बाधकेति** । बाधकानुपन्यासे पक्षस्यापि विपक्षतुल्यत्वादिति भावः । सत्यस्य ज्ञानविनाश्यत्वे बाधकमस्तीति शङ्क्ते **सतो विनाश इति** । विनाशप्रसङ्गादित्यतःपरं ततश्च मिथ्यात्वं स्यादिति शेषः । **सत्त्वसाम्येऽपीति** । प्रपञ्चचैतन्ययोः सत्त्वे समानेऽपि अनित्यप्रपञ्चस्य, विनाशकारणसद्भावाद्विनाशः चैतन्यस्य तु तदभावादभाव इत्यस्य किन्तु विरोधिसन्निपातासन्निपातावेवेत्यत्रोक्तत्वादित्यर्थः । विनाशकारणसद्भावादि आशङ्क्ते **ननु चेति** ।





**गूढ०**— ज्ञानविनाश्यत्वं हेतुरित्यत्रैवाप्रयोजकत्वादिदूषणान्तरपरतया वाक्यं योजयति **किञ्चेति**। नन्वत्र पक्षे प्रतिवादिन इत्येतदनर्थकमत आह **प्रतिवादिन इति**। तथाचोभयमतेऽपि हेतुरसिद्ध इति भावः। ननु वादिनो मम मते हेतोः सिद्धत्वादुभयासिद्ध इत्ययुक्तमित्यत आह **बाधकेति**। बाधकं शङ्कते **सत इति**। **तर्हीति**। एतच्चाभ्युपेत्योक्तम्। तथाहि। सतो विनाशे चैतन्यस्यापि विनाश इति विशेषव्याप्तिसत्त्वादेवमापाद्यते, उत यस्य यद्भवति तत्तदविशिष्टस्य भवतीति सामान्यव्याप्तिर्वा। नाद्यः, दृष्टान्ताभावात्। न द्वितीयः विनाशकारणसदसद्भावाभ्यां विशेषादिति शङ्कते **नाश्यत्वमात्रमिति**। **उक्तबाधकेति**। सतो विनाश इत्युक्तबाधकेनेत्यर्थः। ननु प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वस्य श्रुत्यैव प्रपञ्चे बोधनान्नासिद्धिरिति शङ्कते **ननु चेति**। **श्रुत्यर्थेति**। तथाच सर्वाभावरूपश्रुत्यर्थनिर्णये बाधसिद्धिः तत्सिद्धौ च युक्तिसहकारेण श्रुत्यर्थनिर्णय इत्यन्योन्याश्रय इति भावः।

**प्रदीपः**— न श्रुत्यर्थेति प्रतिपन्नोपाधाविह ब्रह्मणि नास्तीति निषेधप्रतियोगित्वं प्रपञ्चस्य न परेणाङ्गीकृतमिति अन्यतरासिद्धो हेतुः श्रुत्यर्थासंभवस्योच्यमानत्वात् स्वरूपासिद्धश्चेत्यर्थः।

व्याप्तिवैधुर्यम्—

**३१६ सु०— अथवा ज्ञानबाध्यत्वं त्वसिद्धं व्याप्तिरहितम् अपि इति योज्यम्। तथा हि। किं त्वदभिमतं ज्ञानबाध्यत्वमत्र हेतूक्रियते किं वाऽस्मदभिमतमिति वाच्यम्। आद्यं चेदुक्तन्यायेन न सिद्धं प्रतिवादिनः। द्वितीये व्याप्तिवैधुर्यमिति। तत्कथमित्यत आह विज्ञातस्येति।**

## अनु०— विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम्॥

**हि यस्मात् अन्यथाविज्ञातस्य सम्यग्विज्ञानमेव बाधस्तद्विषयत्वमेव तद्बाध्यत्वं मतम् अस्माकम्। तच्चात्मनि विपक्षे गतमिति व्याप्तिविकलमिति वाक्यशेषः। सत्योऽप्यात्मा देहाद्यात्मना विज्ञातो वेदान्तवाक्यजनितसम्यग्विज्ञानवृत्तिविषय इति परेणाप्यङ्गीकार्यम्। अन्यथा अविद्यानिवृत्त्यनुपपत्तेरिति।**

**परि०**— **परेणाप्यङ्गीकार्यमिति**। अन्यथा विज्ञातत्वमात्राङ्गीकारांशसमुच्चय एवापिपदं ज्ञेयम्। सिद्धान्तिना देहात्मैक्यारोपानङ्गीकारात्। **अन्यथेति**। सम्यग्ज्ञानरूपवृत्त्यविषयत्वे तद्विषया-विद्यानिवृत्तिर्न स्यात्। समानविषयकत्वेनैव ज्ञानाज्ञानयोरालोकान्धकारयोरिव विरोधादिति भावः।

**श्रीनिधि०**— **अन्यथा अविद्यानिवृत्त्यनुपपत्तेरिति**। आत्मनो वेदान्तवाक्यजनितवृत्तिविषयतानङ्गीकारे स्वरूपज्ञानस्य नित्यसिद्धत्वेन तन्निवर्तकत्वमन्यथा नादिसंसारानुपपत्तिरिति भावः।





**वा०चं०**— ननूत्तरवाक्यमसङ्गतम् । प्रपञ्चबाध्यत्वस्य शुक्तिरजतादिवल्लोकव्यवहारासिद्धतया तदुपपादकतयोत्तरत्रैवात्र योजयितुमशक्यत्वादिति चेन्न । तस्यास्मदभिमतज्ञानबाध्यत्वहेतुविवक्षायां व्यभिचार-प्रदर्शकत्वेन सङ्गतत्वात् । न च पूर्ववाक्यमेव पराभिमतज्ञानबाध्यत्वव्यभिचारप्रदर्शकतया किं न व्याख्यायत इति वाच्यम् । शुक्तिरजतादेर्दृष्टान्ततयाऽसतश्च ज्ञाननिवर्त्यताया उभयासम्मतत्वेन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्य च परं प्रत्युपपादनीयत्वेन ब्रह्मणश्चोभयविधज्ञानबाध्यत्वस्योभयासम्मत्या परोक्तज्ञानबाध्यत्वस्य व्यभिचारस्थलाभावेन स्वाभिमतज्ञानबाध्यत्वस्य हेतुत्वविवक्षायामेव व्यभिचारस्य वक्तव्यतयोत्तरवाक्येन तदुपपादनाय पूर्ववाक्ये ज्ञानबाध्यत्वं न सिद्धमपीत्यंशमसिद्धव्याप्तिरूपदूषणद्वयप्रतिज्ञापरत्वेन योजयित्वा ततो विकल्पान्विधाय विशेषार्थकतुशब्दं ज्ञानबाध्यत्वमित्यनेन योजयित्वा ज्ञानबाध्यत्वमसिद्धमित्यंशमावर्त्य पराभिमतो ज्ञानबाध्यत्व-विशेषो हेतुश्चेदसिद्धः प्रतिवादिनः, स्वाभिमतस्तद्विशेषश्चेद्व्याप्तिवैकल्यमिति योजयित्वा तदुपपादकतयोत्तरवाक्यं योजनीयमित्याशयेनाह **अथवेति** । अथवा प्रतिज्ञां विकल्पांश्च मनसि निधाय दूषणोक्तिमात्रपरं भाष्यमित्याशयेनाह **अथवेति** । अस्मिन्पक्षेऽपिशब्दोऽनुक्तव्याप्तिवैधुर्यसमुच्चयार्थः । **अन्यथेति** । वेदान्तजन्यसम्यग्ज्ञानरूपवृत्तेरात्म-विषयकत्वाभावे तस्याः आत्मविषयकाविद्यानिवर्तकत्वानुपपत्त्या चैतन्यमात्रस्य चाविद्याविरोधित्वाभावेनाविद्या-निवृत्त्यनुपपत्तेरित्यर्थः ।

**वा०र०**— **शुक्तिरजतादिवदिति** । षष्ठ्यर्थेऽयं वतिः । बाध्यत्वस्येति बुध्या विविच्य संबध्यते । शुक्तिरजतादिपदं तद्बाध्यत्वोपलक्षणमिति वा । तथा च शुक्तिरजतादिबाध्यत्वस्येवेत्युक्तं भवति । अयमर्थः । दृष्टान्ततदर्थं चासिद्धिप्रतिज्ञा तदुपपादनपरत्वेनापि पूर्ववाक्यं मूलकृता योजितमित्यवश्यं वाच्यत्वादिति ज्ञेयम् । प्रपञ्चबाध्यत्वस्य लोकव्यवहारासिद्धत्वेन तदनङ्गीकारे तद्विरोधशङ्काया अप्रसरेण तन्निवर्तकतया स्वाभिमत-बाध्यत्वसद्भावप्रतिपादनस्यानर्थकत्वादिति । तथोत्तरत्रैवेत्यस्योत्तरत्र शुक्तिरजतादिबाध्यत्वोपपादकतया योजना-वदित्यर्थः । उत्तरयोजनायामिव लोकव्यवहारोपपादकतया योजनाया असंभवेऽपि प्रकारान्तरेण उत्तरवाक्यस्य सङ्गतिरस्तीत्याह **तस्येति** । **हेतुविवक्षायामिति** । ज्ञानबाध्यत्वस्य हेतुत्वविवक्षायामित्यर्थः । अत एव तथैव वक्ष्यति **व्यभिचारप्रदर्शकत्वेनेति** । वक्ष्यमाणरीत्या स्वाभिमतज्ञानबाध्यत्वस्य पूर्ववाक्ये प्रतिज्ञातं यद्व्याप्तिवैकल्यं तदुपपादनाय उत्तरवाक्ये व्यभिचारप्रदर्शनमिति भावः । ननु स्वाभिमतज्ञानबाध्यत्वस्य हेतुत्वविवक्षायामिव पराभिमतज्ञानबाध्यत्वस्य हेतुत्वविवक्षायामपि व्यभिचारस्य वक्तुं शक्यत्वेनैतद्विवक्षायामसिद्धिपरत्वेनैव व्यभिचारपरत्वेनापि ज्ञानबाध्यत्वमित्येतन्मूलयोजना कुतो न क्रियत इति शङ्कते **न च पूर्वेति** । स्वाभिमत-ज्ञानबाध्यत्वस्य व्याप्तिवैकल्यमन्तरैवेत्येवकारार्थः । पराभिमतज्ञानबाध्यत्वस्यासिद्धिपरत्वेन योज्यते यत्पूर्ववाक्यं तदेवेति वार्थः । **पराभिमतज्ञानबाध्यत्वव्यभिचारेति** । पराभिमतज्ञानबाध्यत्वस्य व्याप्तिवैकल्यप्रतिज्ञापरत्वं चाङ्गीकृत्य तदुपपादनाय व्यभिचारप्रदर्शकतयाऽपीत्यर्थः । स्वाभिमतस्य हेतुत्वविवक्षायां उत्तरवाक्यं व्याप्ति-वैकल्योपपादकं पराभिमतस्य तद्विवक्षायां तु तदुपपादकमपि तदेव वाक्यमित्याशयः । एतदर्थमपि पूर्ववाक्य-मेवेत्युक्तम् । तत्र च पराभिमतव्याप्तिवैकल्यप्रतिज्ञापरमपीत्येवकारार्थः । पराभिमतस्य तस्य हेतुत्वविवक्षायां व्यभिचारप्रसक्तौ किल तत्परत्वेनापि योजनायाः कर्तव्यत्वं शङ्कनीयम् । न चासौ प्रसज्यते इत्याशयेन व्यभिचारस्थलं

भवत् शुक्तिरजतादिकं च । असद्वा ब्रह्म वेति विकल्पान् मनसि निधायाद्यं निराकरोति **शुक्तिरजतादेरिति** । **दृष्टान्ततया** साध्यसाधनवत्त्वेन संमततया । ततश्च तत्र साध्याभावानुपपत्तेर्न व्यभिचारस्थलत्वमिति भावः । असदिति द्वितीयेऽपि ज्ञानबाध्यत्वपदेन ज्ञाननिवर्त्यत्वं वा विवक्षितं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **असतश्च ज्ञानेति** । **उभयासंमतत्वेनेति** । वाद्यसंमतत्वेन प्रतिवाद्य-संमतत्वेन चेत्यर्थः । द्वितीयं दूषयति **प्रतिपन्नेति** । **परं प्रतीति** । अनिर्वचनीयत्ववादिनं प्रतीत्यर्थः । तेनासति अनिर्वचनीयत्वाभावमङ्गीकुर्वता प्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्याप्यनङ्गीकारेण तद्व्यभिचारोपपादनाय तत्र तं प्रति तस्यास्माभिरुपपादनीयत्वादिति भावः । ब्रह्मदृष्टान्तस्थलमिति तृतीयं निराकरोति **ब्रह्मणश्चेति** । उभयासंमत्येति पूर्ववत् । **स्थलाभावेनेति** । ततश्च व्यभिचारस्याप्रसक्त्या परोक्तज्ञानबाध्यत्वव्यभिचारपरत्वेन पूर्ववाक्ययोजनां विहायेति शेषः । **व्यभिचारस्य वक्तव्यतयेति** । वक्ष्यमाणरीत्यात्मरूपतत्स्थललाभेन वक्तु-मर्हतयेत्यर्थः । **तदुपपादनायेति** । तदुपपादनप्रवृत्त्युपयोगितदाकाङ्क्षोत्थापनं यथा स्यात् तथेत्यर्थः । योजयित्वेति वक्ष्यमाणेनान्वयः । **असिध्यव्याप्तिरूपेति** । अनेन पूर्वयोजनायामसिद्धमित्यनूद्य व्याप्यत्वासिद्धमिति व्याख्यानवत् एतद्योजनायामसिद्धमित्यनूद्य व्याप्तिरहितमिति व्याख्यानमिति न भ्रमितव्यम् । न सिद्धमिति भाष्यस्यैव धर्मिविवक्षयाऽसिद्धमिति धर्मविवक्षया च व्याप्तिरहितमिति योजनाद्वयकरणादिति सूचयति । अनेनैवोत्तरवाक्ये व्याप्तिवैकल्यस्यैवोपपादनात् पूर्ववाक्येऽपि व्याप्तिवैकल्यमेव प्रतिज्ञातव्यम् । पराभिमतज्ञानबाध्यत्वस्य असिद्धिस्तु पक्षान्तरनिरासप्रयुक्तभाष्यकारीयन्यूनतापरिहाराय मूलकृता बहिरेवोक्ता । तथा पक्षान्तरनिरासस्य मूलकृता बहुलं क्रियमाणत्वादित्यपि न भ्रमितव्यमित्यपि सूचितम् । **विकल्पान्विधायेति** । बहुवचनमविवक्षितम् । विकल्पौ कृत्वेत्यर्थः । यद्वाऽत्रोक्तन्यायेनासिद्धमिति मूलानुसारेणोक्तन्यायशरीरान्तर्गततया पराभिमते ज्ञानबाध्यत्वेऽपि ज्ञाननिवर्त्यत्वप्रतिपन्नेत्यादिरूपेण द्विरूपता । ज्ञाननिवर्त्यत्वेऽपि प्रागाशङ्कितेश्वरज्ञाननिवर्त्यत्वसाधारणज्ञान-निवर्त्यत्वमुपादाननिवृत्तौ स्वयमेव विलयनं चेति द्विरूपतास्तीति तामभिप्रेत्यासिध्युपपादकविकल्पाव्याप्त्युपपादक-विकल्पक्रोडीकारेण बहुत्वं विवक्षित्वा विकल्पानिति बहुवचनमिति न कश्चिद्दोष इति ज्ञेयम् । अत्र विधायेत्यतः प्राक् भाष्यसूचिता नेति शेषः । अत एवोत्तरयोजनायां विकल्पान्मनसीति वक्ष्यति । तच्च सूचनविशेषार्थकेत्यादि-वक्ष्यमाणरीत्या दूषणनिष्कर्षानुसारेणेत्यवगन्तव्यम् । प्रतिवादिनस्त्वित्येतन्मात्रेणासिध्यव्याप्तिरूपदूषणद्वयस्य पक्षविशेषाश्रयतयाऽभिधानालाभ इत्यत आह **विशेषार्थकेत्यादि** । योजयित्वा आवर्त्येत्यनेन ज्ञानबाध्यत्वं सिद्धमिति योजनपूर्वकमावृत्तिर्मूले कृता भवतीति सूचयति । तेन चावृत्तेनासिद्धिव्युत्पादनस्य प्रागेव कृततया आद्यपक्षनिराकरणम् । अस्मदभिमतमिति द्वितीयपक्षनिराकरणं तु वक्ष्यमाणरीत्यैवेति पूर्ववाक्ये पक्षविशेषे व्याप्ति-वैकल्यमिति संबन्धमात्रप्रदर्शनमिति विवेकः । तुशब्दसंबन्धलब्धमर्थं दर्शयन्विकल्पदूषणप्रकारं व्यनक्ति **पराभिमत इत्यादि** । **असिद्ध इति** । उक्तन्यायेनेति मूलोक्तं सिद्धत्वान्नोक्तम् । **इति योजयित्वेति** । आवृत्तं ज्ञानबाध्यत्वं त्वसिद्धमित्येतत्प्रतिज्ञाद्वयोपपादकत्वेन योजयित्वेत्यर्थः । **तदुपपादकतयेति** । व्याप्तिवैकल्योपपादकतयेत्यर्थः । प्राक्पक्षविशेषे व्याप्तिवैकल्यमित्येवोपपादनेऽपि तत्प्रकारानिरूपणादुत्तरवाक्य एव तन्निरूपणादिति भावः । एतत्पक्षेऽसिध्यव्याप्तिप्रतिज्ञात्वादिसिध्यर्थं न सिद्धमित्यादेर्धर्मिधर्मप्राधान्याश्रयणावृत्त्यादिना असिद्धमित्यादि





योजनामूल इति कल्पनीयमित्यपरितुष्यन् पक्षान्तरमाह **अथवा प्रतिज्ञामिति** । तथा चासिध्यादिप्रतिज्ञाविकल्पोत्तरं ज्ञानबाध्यत्वं तु प्रतिवादिनोऽसिद्धमित्येतद्भाष्यं पराभिमतज्ञानबाध्यत्वस्य हेतुत्वनिराकरणमात्रपरतया आद्यं चेदुक्तन्यायेनेत्यादिना मूले योजितमिति वा व्याख्येयमित्यर्थः । ननु विकल्पद्वयस्यापि निराकरणं भाष्यान्न लभ्यत इति कथं तदुभयनिरासकं भाष्यं स्यादित्यतोऽत्र पक्षेऽपि पदस्यास्मदभिमतज्ञानबाध्यत्वहेतुत्वविवक्षायां दूषणभूतं यद्व्याप्तिवैधुर्यं तत्समुच्चायकत्वाश्रयणाद्भाष्यादेव पक्षान्तरनिरासोऽपि सिध्यत्येवेत्यभिप्रायेणाह **अस्मिन्पक्ष इति** । इदं चासंभावितितया पक्षान्तरमुत्प्रेक्षितम् । न तु पूर्वपिक्षयात्र स्वारस्यम् । आवृत्त्याद्याश्रयणस्यात्राप्रसरेऽपि असिद्धं व्याप्तिरहितमपीति योज्यमिति मूलेऽसिध्यव्याप्तिप्रतिज्ञापरत्वेन भाष्ययोजनायाः स्पष्टत्वे सति प्रतिज्ञायाः मानसिकत्ववचनायोगात् । अत एवात्राथवेत्यनास्थायाम् । वस्तुतस्तु पूर्वयोजनैव टीकाकृतोऽभिप्रेतेति मन्तव्यम् । प्रतिज्ञाया भाष्यारूढत्वप्रदर्शनबलादेवावृत्त्यादिकमपि मूलं संमतमेवेति न तदस्वारस्यापादकमिति सूरयो विदांकुर्वन्तु । मास्तु अविद्यानिवृत्तिश्चैतन्येनैव सा स्यादित्यत आह **चैतन्यमात्रस्य चेति** । तस्याज्ञानप्रकाशकत्वादिति भावः ।

**विट्ठ०**— उक्तरूपं बाध्यत्वं विपक्षगतमिति परसंमतमपीत्याह **सत्योऽपीति** । **अन्यथा विनिवृत्तीति** । अन्यथाविज्ञातस्यात्मनः वेदान्तवाक्यजनितसम्यग्ज्ञानविषयत्वानङ्गीकारे आत्माश्रिताविद्यानिवर्तकोपायाभावेन तदनिवृत्तिः ततश्च मोक्षानुपपत्तिश्च स्यादिति भावः ।

**गूढ०**— प्रयोजकत्वपरतया वाक्यं व्याख्याय व्याप्तिवैधुर्यपरतयापि वाक्यं योजयति **अथवेति** । **आद्यं चेदिति** । माप्यभिमतं चेदित्यर्थः । न च व्याप्तिवैधुर्यपरतया पूर्वं व्याख्यातत्वात्पुनरिदानीं तथा व्याख्याने पौनरुक्त्यमिति वाच्यम् । पूर्वमप्रयोजकत्वमुखेन तस्योक्तत्वादिदानीं त्वनैकान्तिकत्वमुखेन तदुपपादनमिति न पौनरुक्त्यमिति भावः । ननु बाध्यत्वं बाधविषयत्वं तथाच विज्ञानबाध्यत्वमित्ययुक्तमत्राह **तद्विषयत्वमेवेति** । ननूक्तं बाध्यत्वं विपक्षे नास्त्येव तस्यावेद्यत्वादित्यत आह **सत्योऽपीति** । देहादि यदन्यत्तदात्मनेत्यर्थः । **अन्यथेति** । वेदान्तजन्यवृत्तिविषयत्व इत्यर्थः ।

॥ दृष्टान्तदूषणम् ॥

साध्यसाधनवैकल्यम्—

**३१७ सु०— अथवा दृष्टान्तं प्रत्याचष्टे ज्ञानबाध्यत्वमिति । अपिपदेन सदसद्विलक्षणत्वलक्षणं साध्यमनिर्वाच्यत्वं समुच्चिनोति । तुशब्दो ज्ञानबाध्यत्वमनभिमताद् व्यवच्छिनत्ति ॥ न सिद्धं शुक्तिरजतादाविति शेषः । शुक्तिरजतादेरनिर्वचनीयत्वं तावत् प्रतिवादिनो ममासिद्धम् । मयाऽत्यन्तासत्त्वेनाङ्गीकृतत्वात् । अत एव ज्ञानबाध्यत्वं मम तत्रासंमतम् । तद्धि ज्ञाननिवर्त्यत्वं परस्याभिमतम् । न चासतस्तत्संभवति । तस्य नित्यनिवृत्तत्वात् । अतः साध्यसाधनविकलोऽयं दृष्टान्ताभासः ।**

**परि०**— **अनभिमतादिति** । मायावाद्यनभिमतात्सिद्धान्त्यभिमतादित्यर्थः । क्वचिदभिमतादित्येव पाठः । व्याहतिनिरासाय दृष्टान्त इत्येवानुक्त्वा, दृष्टान्तत्वेन तवाभिमत इति भावेनोक्तम् **दृष्टान्ताभास इति** ।

**यादु०**— **अनभिमतादिति** । सिद्धान्त्यनभिमतादित्यर्थः ।

**वं०प०**— **व्यवच्छिनत्तीति** । तथा च मायावाद्यभिमतमित्यर्थः ।

**आनन्दः**— . . . . । ननु निषेधप्रतियोगित्वरूपज्ञानबाध्यत्वस्य शुक्तिरूप्ये सत्त्वेऽप्यसत्त्वं कुत इत्यत आह **शुक्तीति** । **अत एवेति** । अत्यन्तासत्त्वेनाङ्गीकृतत्वादेवेत्यर्थः ।

**कं०रा०**— **तुशब्द इति** । तुशब्दः पराभिमतं ज्ञानबाध्यत्वं सिद्धान्त्यभिमताज्ज्ञानबाध्यत्वाद्व्यवच्छिनत्तीत्यर्थः ।

**वा०चं०**— दृष्टान्तदूषणानुक्त्या न्यूनतां भाष्ये परिहर्तुमिदमेव भाष्यं तद्दूषणपरतयाऽपि योजयति **अथवेति** । नन्वत्र शुक्तिरजतादौ साध्यवैकल्यासंभवे साधनवैकल्यमपि न स्यात् । अत्यन्तासत्त्वेन तत्र साधनवैकल्यसंभवे च साध्यवैकल्यमपि तत एव संभवति । साध्यवैकल्यसंभवे च साधनवैकल्यमात्रोक्तिर्भाष्यकारीया न्यूनतेति न दृष्टान्तदोषो भाष्याभिमत इत्यतोऽनुक्तसमुच्चयार्थापिपदेन तस्याप्युक्तेर्न न्यूनतेत्याशयेनाह **अपिपदेनेति** । ननु वक्ष्यमाणस्य वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपस्य वा बाध्यत्वस्य दृष्टान्ते प्रतिवादिनोऽपि संमत्या न तद्वैकल्यमित्यत आह **तुशब्द इति** । **अभिमतादिति** । दृष्टान्ते प्रतिवादिनोऽभिमतादित्यर्थः । अनभिमतादिति पाठे दृष्टान्तेऽसत्त्वेनानभिमतादित्यर्थः । अस्य दृष्टान्तदूषणपरत्वं घटयितुं योग्यमध्याहरति **शुक्तीति** । असद्विलक्षणज्ञप्त्यै इत्याद्युत्तरानुव्याख्यानेऽसत्त्वेपि शुक्तिरजतादेः प्रतीत्युपपादनादिना लब्धमत्र प्रतिवादिन इत्युक्तिसूचितमत्यन्तासत्त्वं साध्यवैकल्यादौ हेतुतया योजयति **शुक्तीति** । नात्र ज्ञानबाध्यत्वपदेन प्रपञ्च इव शुक्तिरजतादावुभयविधमपि तुशब्देनाभिप्रेयते किन्तु ज्ञाननिवर्त्यत्वमात्रम् । तस्यैव तत्र प्रतिवादिनाऽनभ्युपगमादित्याशयेनाह **तद्धीति** । 'निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यत' इत्यनुव्याख्यानं मनसि निधायाह **तस्येति** । ज्ञानप्रयोज्यतिरोभावादिरूपनिवृत्तेः प्रादुर्भावादिरूपप्रवृत्तिसापेक्षतयाऽसतश्च तदसंभवादिति वाऽविद्योपादानकस्य ज्ञानेन तिरोभावादिरूपनिवृत्तेरसत्त्वेन निरुपादानकतया नित्यनिवृत्ते असंभवादिति वाऽभिप्रायः ।

**वा०र०**— अस्तु साध्यवैकल्यस्यापि संभवः । किं तत इत्यत आह **साध्यवैकल्यसंभवे चेति** । **भाष्याभिमत इति** । यदि भाष्यकारस्य दृष्टान्तदूषणं संमतं स्यात्तर्हि साध्यवैकल्यमपि ब्रूयादुक्तरीत्या तदसंभवाभावेनासंभवादेवावचनमित्यस्य वक्तुमशक्यत्वात् । तस्मादर्धजरतीयायोगाद्भाष्यकारस्य दृष्टान्तदूषण-





परतयेदं भाष्यं न संमतमित्यर्थः । **वक्ष्यमाणस्य वेति** । शुक्तिरजतादेरसतः सत्त्वादिना विज्ञातस्य पुनरसत्त्वादिना सम्यग्विज्ञानं बाधस्तद्विषयत्वरूपस्य वेत्यर्थः । **प्रतिपन्नेति** । त्रिकालसर्वदेशीयनिषेधप्रतियोगिताया अध्यस्ते सिद्धान्तिना अङ्गीकारादिति भावः । दृष्टान्ते प्रतिवादिसंमतज्ञानबाध्यत्वमुपादाय हि तद्वैकल्पाभावश्चोदितः । तुशब्देनोक्तसंमतातिरिक्तं ज्ञानबाध्यत्वमिति ज्ञापनात्तस्य च वक्ष्यमाणरीत्या ज्ञाननिवर्त्यत्वादिरूपस्य तत्राभावाद्युक्तं साधनवैकल्यमित्याशयं सूचयंस्तुशब्दो ज्ञानबाध्यत्वमभिमतादिति पाठं प्रकृतानुगुणतया योजयति **दृष्टान्ते प्रतिवादिन इति** । सत्त्वेनेति शेषः । अनभिमतादिति पाठे सिद्धान्त्यनभिमताद्यवच्छेद उक्तोतः प्रत्याख्यानपरतया क्रियमाणोत्तरयोजनायां हि शुक्तिरजतादेर्बाध्यत्वस्य लोकव्यवहारसिद्धत्वात् तदनङ्गीकारे लोकव्यवहारविरोधप्रसङ्ग इत्याशङ्कायां त्वदभिमतस्याभावेऽप्यस्मदभिमतस्य तत्र विद्यमानत्वादित्येवं तदुपपादकतया विज्ञातस्येति भाष्ययोजना संभवति । न च तद्वाक्यस्यात्र तथा योजनासंभवः । प्रतिवादिनस्त्वित्यादिपदस्वारस्यानुरोधेन भाष्यादेव लब्धस्य पक्षान्तरनिरासस्य मूलकृताभिधानमित्यस्य स्पष्टं प्रतीयमानत्वे भवतीत्यभिमतस्य प्राप्तेस्तस्य च सिद्धान्तिना अङ्गीकारेण प्रतिवादिनो ममासंमतमिति व्याख्यानायोग इत्यतस्तं पाठमपि घटयति **अनभिमतादितीति** । **दृष्टान्तदूषणेति** । पक्षे इति पूरणे तत्परत्वायोगादिति भावः । **लब्धमित्यादि** । अनेनास्य हेतोरुद्भाष्यता नास्तीति सूचितम् । **साध्यवैकल्यादाविति** । शुक्तीति वाक्येन साध्यवैकल्यं विविच्य मयेत्युत्तरवाक्येन हेतुतया योजयति । तथाऽत एव ज्ञानेत्यादिना साधनवैकल्यं विविच्य न चासत इत्यादिना हेतुतया योजयतीत्यर्थः । **प्रपञ्च इवेति** । प्रपञ्चे निषेध्यत्वेनेति शेषः । तत्र यथोभयमपि सिद्धान्त्यभिमतविज्ञातस्येत्याद्युक्ताद्यवच्छिन्नतया तुशब्देनाभिप्रेत्य तत्र प्रतिवादिनोऽसंमतमिति प्राग्व्याख्यातं तथेत्यर्थः । **तस्यैवेति** । प्रतिपन्नोपाधाविति द्वितीयस्य प्रतिवादिना-ऽप्यभ्युपगमादित्येवकारार्थः । **इत्यनुव्याख्यानमिति** । पृथगधिकरणीयमनुव्याख्यानमित्यर्थः । **इति वेति** । प्रथमस्याभिप्राय इत्युत्तरेण संबन्धः । **अविद्योपादानकस्येति** । अविद्योपादानकं यत्तस्य यज्ज्ञानेन तिरोभावादिरूपा निवृत्तिरिति निवर्त्यनिवर्तकविशिष्टनिवृत्तिस्वरूपकीर्तनम् । उक्तनिवृत्तेः शुक्तिरजतादावसंभवे हेतुतया मूलोक्तं नित्यनिवृत्तत्वमुपपादितमसत्त्वेन निरुपादानकतयेति ।

**स०व्र०— नासत इति** । यथोक्तम् । 'विषयस्य कुतो बाधो विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो वध्यो देवदत्तो हि वध्यत' इति । 'कश्चायं बाध उद्दिष्टो न हि नाशोऽसतो भवेत् । निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यत' इति च ।

**विठ्ठ०— अभिमतादिति** । अन्यथाविज्ञातस्य सम्यग्विज्ञानगोचररूपत्वादित्यर्थः ।

**गूढ०—** स्वरूपभागासिद्ध्यप्रयोजकत्वादिपरतया वाक्यं व्याख्याय प्रकारान्तरेण व्याख्याति **अथवेति** । ननु मूले दृष्टान्ते साधनवैकल्यमात्रस्योक्तत्वात् साधनवैकल्यस्यानुक्तत्वात् दृष्टान्तदूषकमेतदित्ययुक्तमित्यत आह **अपिपदेनेति** । नन्वत्र तुशब्दो न युक्त इत्यत आह **तुशब्द इति** । ननु ज्ञानबाध्यत्वस्य दृष्टान्ते भवत्पक्षेऽपि सत्त्वान्न सिद्धमित्ययुक्तमित्यत आह **तुशब्द इति** । **अनभिमतादिति** । अन्यथाविज्ञातस्येत्यादिरूपमप्यनभिमत-ज्ञानबाध्यत्वादित्यर्थः । फलितमाह **शुक्तीति** । **अत एवेति** । अत्यन्तासत्त्वेनाङ्गीकृतत्वादेवेत्यर्थः ।

**प्रदीपः— न चासत इति** । उक्तं च— "विषयस्य कृतो बाधो विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो वध्यो देवदत्तो हि वध्यते ॥" इति "कश्चायं बाध उद्दिष्टो न हि नाशोऽसतो भवेत् । निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यते ॥" इति च । वक्ष्यते च "नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदा सत्त्वं तेनैवाङ्गीकृतं पुनः ॥" इति ।

**३१८ सु०— ननु प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं बाध्यत्वमस्त्येव शुक्तिरजतादौ । मैवम् । तथा सत्यसत्त्वप्रसङ्गात् । वक्ष्यते चैतत् । यदि तर्हि न बाध्यत्वं शुक्तिरजतादेः । (बाढम् । ननु) सकललोकविरोधादिप्रसङ्गः । मैवम् । त्वदभिमतस्याभावेऽप्यन्यस्य बाध्यत्वस्य तत्र विद्यमानत्वात् । किं तदित्यत आह विज्ञातस्येति । बाध्यत्वमिति प्रकृतप्रकृत्यर्थं बाधं तत् इति सामान्येन परामृशति ।**

**बिन्दुः— प्रकृतप्रकृत्यर्थमिति** । तच्छब्दस्य सर्वनाम्नो बुद्धिस्थपरामर्शकत्वेन विशेषणीभूतस्यापि प्रकृत्यर्थस्य बुद्धिस्थत्वेन परामर्शो युज्यत एव । यत्तु केषां शब्दानामित्यत्र कैयटीयव्याख्यानम् । अथशब्दानुशासनमिति पूर्ववाक्ये विशेषणीभूतानां शब्दानां केषामित्यनेन परामर्शायोगात् शब्दानामिति विशिष्य निर्देश इति । तत्तु 'स्थितस्य गतिश्चिन्तनीये'त्यभिप्रेत्य । अन्यथा केषां शब्दानामिति प्रश्नस्यैव प्रकृतशब्दविषयत्वानुपपत्तेः । उक्तप्रश्नवाक्ये हि शब्दानामित्यनुवादेन केषामिति विशिष्टनिर्देशात् । तद्विशेषजिज्ञासाऽवगम्यते अत एव लौकिकानां वैदिकानां चेति उत्तरं वाक्यं सङ्गच्छते । तथाच यच्छब्दानामनुशासनमित्युक्तं तत्केषामनुशासनकर्मीभूताः शब्दाः के इति प्रश्नवाक्यस्य फलितोऽर्थः । तत्र च पूर्ववाक्ये तुल्यवित्तिवेद्यत्वेन बुद्धिसन्निहिततया तादृशशब्द एव परामृश्यत इति तादृशव्याख्यानं पाण्डित्यप्रदर्शनमात्रमिति । ननु तर्हि प्रकृत्यर्थस्य बाधस्याङ्गत्वेन कथं तदिति नपुंसकेन परामर्श इत्यत उक्तं **सामान्येनेति** । लिङ्गविशेषप्रतिपिपादयिषाभावे पदार्थस्वरूपनिर्देशे नपुंसकनिर्देशः । तस्य लिङ्गसर्वनामत्वात् अत एव सिद्धे शब्दार्थसंबन्ध इति वार्तिकव्याख्यानावसरे पतञ्जलिरुदाजहार शक्यं च यत्किञ्चिदश्नतापि क्षुदुपहन्तुमिति भावः ।

**परि०— वक्ष्यते चैतदिति** । 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनरि'ति वियत्पादे 'पृथगुपदेशादि'त्यधिकरण इति भावः । नपुंसकत्वनिर्वाहाय आह **सामान्येन परामृशतीति** ।

**यादु०**— ननु ज्ञानबाध्यत्वं नाम न ज्ञाननिवर्त्यत्वं किन्तु नास्ति नासीन्न भविष्यतीति बोध्यमानाभावप्रतियोगित्वम् । तच्चास्ति शुक्तिरजतादावतो न साधनविकलतेत्याशङ्क्ते **ननु प्रतिपन्नेति** । नोक्तप्रतिषेधप्रतियोगित्वमसत्त्वं किन्तु निरुपाख्यत्वादिकमन्यदेवातो नोक्तदोष इत्यत आह **वक्ष्यते चैतदिति** । 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः । प्रतीतिर्नासत इति वदन्नङ्गीकरोति तामि'त्यादिना निरुपाख्यत्वादेरसंभवित्वादुक्तनिषेधप्रतियोगित्वमेवासत्त्वमङ्गीकार्यमिति वक्ष्यत इत्यर्थः ।

**आनन्दः**— फलित इत्यत आह **वक्ष्यत इति** । इदमेवासत्त्वमितोतिरिक्तमसत्त्वं नेति 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयते'त्यादिना वक्ष्यत इत्यर्थः । **त्वदभिमतस्येति** । तथाच तदादाय सकललोकव्यवहार इति भावः । नन्वत्र तदिति कस्य परामर्श इत्यत आह **बाध्यत्वमितीति** । **प्रकृतप्रकृत्यर्थमिति** । प्रकृतो यः प्रकृत्यर्थः । तमित्यर्थः । बाधृ लोडन इत्यस्माद्यप्रत्यये बाध्यमिति सिध्यति । तथाच तच्छब्देन प्रकृत्यर्थभूतबाधपरामर्श इति भावः । तर्हि स इति वक्तव्ये तदिति कथमुक्तमित्यत उक्तं **सामान्येनेति** । सामान्ये नपुंसकमिति वचनादिति भावः ।

**कं०रा०**— ननु प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं बाध्यत्वमिति पक्षे न शुक्तिरजतादौ साध्यवैकल्यम् । नास्त्यत्र रजतं किं तु मिथ्यैव रजतमभादित्युत्तरकालानुसन्धानेन तस्य तत्रासत्त्वादिति शङ्कते **नन्विति** । **तथा सतीति** । शुक्तिरजतादेः स्वाधिष्ठानादन्यत्राविद्यमानस्य स्वाधिष्ठानेऽपि निषेधप्रतियोगित्वे सार्वकालिकसार्वदेशिकनिषेधप्रतियोगित्वस्यापतितत्वेनात्यन्तासत्त्वप्रसङ्गादित्यर्थः । **यदीति** । शुक्तिरजतादेर्यदि न बाध्यत्वं तर्हि सकललोकविरोधादिप्रसङ्ग इत्यर्थः । बाढं ननु सकललोकविरोधादिप्रसङ्ग इति पाठे शुक्तिरजतादेर्यदि न बाध्यत्वं तर्हि बाढं सकललोकविरोधादिप्रसङ्गो नन्वित्यर्थः । ननु 'विज्ञातस्यान्यथासम्यग्विज्ञानं ह्येव तन्मतमि'त्यत्र तच्छब्देन बाध्यत्वपरामर्शोऽन्वयानुपपत्तिः । अन्यथा विज्ञातस्य यत्सम्यग्विज्ञानं तस्य बाधरूपतया बाध्यत्वरूपत्वाभावात् । बाधपरामर्शे च तस्याप्रकृतत्वम् । बाध्यत्वमिति पूर्वत्र प्रकृत्यर्थतया (त्वप्रत्ययप्रकृत्यर्थान्तर्गततया ) बाधस्य प्रकृतत्वेऽपि तत्परामर्शे तदिति नपुंसकलिङ्गानुपपत्तिरित्याशङ्क्य व्याचष्टे **बाध्यत्वमिति** । प्रकृतेत्यनेन बाधस्य अप्रकृतत्वात् कथं परामर्श इति शङ्का, सामान्येनेत्यनेन बाधपरामर्शे नपुंसकलिङ्गानुपपत्तिरिति शङ्का च निरस्ता ।

**श्रीनिधि०**— **वक्ष्यते चैतदिति** । नासीदस्ति भविष्यच्च इत्यादिनेति भावः । **यदि तर्हीति** । यदि शुक्तिरजतादेर्ज्ञाननिवर्त्यत्वं तर्हि न बाध्यत्वमिति शङ्का । बाढमित्युत्तरम् । **लोकविरोधादीति** । लोकव्यवहारविरोध इत्यर्थः । आदिपदेनात्मीयबाधानुभवो गृह्यते । **त्वदभिमतस्येति** । ज्ञाननिवर्त्यत्वस्येत्यर्थः ।

**वा०चं०**— अत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं दृष्टान्ते प्रतिवादिसंमतमिति 'न सिद्धं प्रतिवादिन' इति वाक्यार्थतया तद्वैकल्यप्रतिपादनमशक्यमिति ततः पृथक्कृत्य साधनवैकल्यकथनावसरे तद्वैकल्यस्यावश्यप्रतिपादनीयत्वात्तद्वैकल्यं प्रतिपादयितुं शङ्कते **नन्विति** । 'नासीदस्ति भविष्यच्चे'त्याद्यनुव्याख्यानं मनसि निधायाऽऽह **तथा सतीति** । त्रैकालिकसत्तानिषेधस्य बाधत्वे सत्ताविरहव्यतिरेकेणासत्त्वस्य दुर्निरूपतया अपसिद्धान्तप्रसङ्गात्





साधनवैकल्यं तदवस्थमेवेति भावः । ननु रजतादेः प्रतीतत्त्वेनासत्त्वानुपपत्तौ निषेधस्य सत्त्वोत्सारण एव पर्यवसानम् । न च सत्ताविरहव्यतिरेकेणासत्त्वं दुर्निरूपमिति वाच्यम् । निरुपाख्यत्वमसत्त्वमिति तन्निरूपणात् । तथा चासत्त्वानापातेनापसिद्धान्ताभावान्न साधनवैकल्यमित्यत आह **वक्ष्यते चैतदिति** । असतः प्रतीत्यभावे हि सर्वमिदं भवेदिति शेषः । न चैवमिति 'असद्विलक्षणज्ञप्त्यै' 'निषेधो ह्यप्रतीतस्ये'त्याद्यनुव्याख्याने वक्ष्यत इत्यर्थः । नन्वियता दृष्टान्तदूषणस्य पर्यवसानात्प्रकृताननुगुणं दृष्टान्ते बाध्यत्वस्योपपादकमुत्तरवाक्यमनुपपन्नमित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **यदीति** । आदिपदेनापसिद्धान्तसङ्ग्रहः । यदि प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमेवासत्त्वं तर्हि सतोऽपि बाध्यत्वमस्त्विति वदता त्वयाऽसत्त्वमेव न बाध्यत्वं वक्तुं शक्यत इति सदसत्साधारणबाध्यत्वव्यवहारस्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनानिर्वाह्यत्वात्सकललोकानुगतव्यवहारादिप्रयोजकबाध्यत्वमन्यदेव वाच्यम् । तदेव दृष्टान्तेऽहमपि प्रतिपादयिष्यामीत्याशयः । अत्र विज्ञानविषयत्वमिति निर्देष्टव्ये यद्विज्ञानमिति निर्दिशति यच्चाभावघटिततया विरोधिभावान्तरघटिततया वा निर्देष्टव्येऽन्यथाविज्ञातस्य सम्यगिति सामान्येन निर्दिशति तेन ज्ञायते उभयसाधारण्येनैव बाधलक्षणनिष्कर्षो द्रष्टव्य इत्यपि भाष्यकारस्याभिमतमिति मनसि निधाय प्रकृत्यर्थभूतोभयविधबाधस्य तदिति सामान्येन परामर्शे नपुंसकं तद्विषयत्वं बाध्यत्वमिति शेषपूरणेन च वाक्यं योजनीयमित्याह **बाध्यत्वमितीति** । न चैतट्टीकाकाराशयज्ञापकाभाव इति वाच्यम् । प्रकृतप्रधानबाध्यत्वस्य तदिति परामर्शेन विज्ञानशब्दस्य च पूर्ववत्तद्विषयत्वलक्षणामात्राभ्युपगमेन व्याख्यानोपपत्तौ बाध्यत्वशब्देनोपसर्जनतया प्रकृतबाधसामान्यपरामर्शो शेषपूरणादेव तद्गमकत्वात् । न चैवमस्मिन्व्याख्याने कुसृष्टिरिति वाच्यम् । अधिकार्थलाभेन तस्या आदरणीयत्वात् । अत्र प्रकृत्यर्थबाधनिर्देशेन तदिति नपुंसकोपपत्तावपि वस्त्वभावबोधो बाधो विरोधिभावान्तरज्ञानं बाध इत्यनेकभिन्नलिङ्गनिर्दिष्टयोः सामान्येन परामर्शेन व्याख्याने उभयोरपि लक्ष्यत्वसूचनेन परोक्तलक्षणयोरव्याप्तिसूचनमपि सिध्यतीत्येवं व्याख्यातमिति द्रष्टव्यम् ।

**वा०र०**— ननु द्विरूपज्ञानबाध्यत्वस्यापि दृष्टान्तेऽभावप्रतिपादनेन तद्वैकल्यं प्रतिपाद्य तयाऽत्र विवक्षितं भवत्येव । सति चैवं ज्ञाननिवर्त्यत्वमात्रस्य वैकल्यं प्रथमतोऽभिधाय पश्चात्प्रतिपन्नेत्यादेर्वैकल्याभिधानमिति तयोः पृथक्करणे निमित्ताभाव इत्यतस्तन्निमित्तं कथयंस्तयोः पृथक्करणमुपपादयन्नवतारयति **अत्र प्रतिपन्नेति** । यद्यपि द्वयोरपि वैकल्यमत्र विवक्षितम् । तथापि ज्ञाननिवर्त्यत्ववैकल्यं न सिद्धं प्रतिवादिन इत्येतद्वाक्यार्थतया वर्णयितुं शक्यं भवतीति प्राक्तदर्थत्वेन तद्वर्णनं कृतम् । प्रतिपन्नेत्यादिरूपज्ञानबाध्यत्ववैकल्यं तु न तद्वाक्यार्थतया वर्णयितुं शक्यम् । तथाविधबाध्यत्वस्य प्रतिवादिना दृष्टान्तेऽङ्गीकारात् । ततो हेतोर्वाक्यार्थतया वर्णनीयवैकल्यप्रतियोगित्वतदभावरूपविशेषेण प्रतिपन्नेत्यादिरूपबाध्यत्वज्ञाननिवर्त्यत्वात् पृथक्कृत्य तद्वैकल्यं युक्त्यन्तरेणात्र प्रतिपाद्यते । न च तर्हि तत्प्रतिपादनमेव मास्त्विति वाच्यम् । साधनवैकल्यप्रतिपादनावसरे तद्वैकल्यप्रतिपादनाभावे साधनवैकल्यसंपूर्तिर्न स्यात् । तस्माद्वाक्यार्थतया वर्णनानुपपत्तेर्ज्ञाननिवर्त्यत्वात्पृथक्कृतम् । अवश्यप्रतिपादनीयवैकल्यप्रतियोगित्वरूपेण तु प्रतिपन्नेत्यादिकमिदानीमाशङ्क्य तस्यापि वैकल्यं प्रतिपादयतीत्यर्थः । **इत्यादीति** । आदिपदेन "तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः ॥" इति





पादत्रयसङ्ग्रहः । कथमसत्त्वापत्तिरित्यतस्तामुपपादयन् अस्तु असत्त्वमपीत्यतस्तत्रेष्टापत्तिं च परिहरति **त्रैकालिकेति** । असत्त्वापत्त्युपपादनमाक्षिपन् असत्त्वप्रयुक्तदोषाभावं चाशङ्क्य तत्परिहारकतयोत्तरवाक्यमवतारयति **ननु रजतादे-रिति** । **सर्वमिदमिति** । भवेदिति शेषः । प्रतीतत्वेनासत्त्वानुपपत्त्यादिकं सर्वमसतः प्रतीत्यभावे हि भवेन्न चैवमस्तीत्येतदित्यर्थः । **उत्तरवाक्यमिति** । विज्ञातस्येत्युत्तरभाष्यमित्यर्थः । तद्वाक्यस्य वक्ष्यमाणरीत्या बाध्यत्वाभिमते सर्वत्र बाध्यत्वोपपादनमुखेन दृष्टान्तेऽपि बाध्यत्वोपपादकतयेदानीं योजयिष्यमाणत्वमभिप्रेत्य दृष्टान्ते बाध्यत्वस्योपपादकमित्युक्तिरिति ज्ञेयम् । **आदिपदेनापसिद्धान्त इति** । अयमत्र यदि तर्हीत्यादिमूलस्य टीकाकृत्संमतोऽर्थः । यदि शुक्तिरजतादिदृष्टान्ते साधनवैकल्योपपादनाय प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं बाध्यत्वमसत्त्वप्रसङ्गेन नास्तीत्युच्यते तर्हि बाध्यं बाध्यमिति सकललोकव्यवहारविषये तत्र तत्र पदार्थे तद्व्यवहारस्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनासत्त्वप्रसक्त्या निर्वाहानुपपत्तिसाम्यात् बाध्यं बाध्यमिति सर्वलोकव्यवहार-विरोधः । व्यवहारानुपपत्तिरिति यावत् । तथा सिद्धान्तेऽपि तत्र तत्र पदार्थे बाध्यत्वस्याङ्गीकृतत्वेन तस्य च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपताया एव वाच्यत्वात्तत्प्रतियोगित्वस्यासत्त्वापादकत्वेन निराकरणस्य तत्रापि प्राप्त्याऽपसिद्धान्त इति । यत्तु शुक्तिरजतादेर्बाध्यत्वाभावे तदंश एव सकललोकविरोध इत्यादि व्याख्यानम् । तद-सत् । असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्येतत्तत्त्वनिर्णयमूलकरजतत्वादिना विज्ञातस्य । एवमसत इत्यादि सदसत्साधारणोत्तरमूलविरोधात् । तस्मादुक्त एवार्थः । तस्मिंश्चार्थे एवं शङ्कोदेति । बाध्यं बाध्यमिति व्यवहारेऽपि प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमेव लोकसिद्धान्तयोः प्रयोजकत्वेन संमतम् । तथाच शुक्तिरजतादौ पररीत्या तत्प्रतियोगित्वस्याङ्गीकर्तुमनुचितत्वेऽपि लोकसिद्धान्तयोर्बाध्यत्वाभिमते तत्र तत्र तदङ्गीकारे बाधकाभावेन तत्प्रतियोगित्वेनैव तत्र तत्र तद्व्यवहारोपपत्त्या लोकविरोधाप्रसङ्गोऽपसिद्धान्तप्रसङ्गश्चेति । एतां शङ्कां परिहर्तुं टीकाकारो मूलाशयमाह **यदि प्रतिपन्नेत्यादिना** । लोके सिद्धान्ते च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनैव बाध्यत्वव्यवहार इत्यभ्युपगन्तुं न शक्यं तत्प्रतियोगित्वस्यासत्त्वापादकतया बाध्यत्वाभिमतेऽसत्त्वस्य तत्प्रतियोगित्वाङ्गीकारे लोकसिद्धान्तयोरपि प्राप्तेः । अथ तत्प्रतियोगित्वेनासत्त्वापत्तिरेव कुत इति चेत् । अत्रेदमुपतिष्ठते । यदि प्रतिपन्नो-पाधौ निषेधप्रतियोगित्वमेवासत्त्वं तर्हीति । तदर्थस्तु यदि शुक्तिरजतादौ साधनवैकल्योपपादनाय तत्प्रतियोगित्व-मेवासत्त्वमित्युच्यते तर्हि तन्न्यायेनैव लोकसिद्धान्त्यभिमतबाध्येऽपि तत्प्रतियोगित्वेऽसत्त्वप्राप्तेरिति शेष इति । ननु परेण शुक्तिरजतादावसत्त्वस्यापसिद्धान्तभयेनाङ्गीकर्तुमनुचितत्वेऽपि लोकसिद्धान्तयोर्बाधकाभावेन बाध्यत्वा-भिमते असत्त्वस्याप्यङ्गीकर्तुमुचिततया तत्प्रतियोगित्वेनैव बाध्यत्वव्यवहारोपपत्तिरित्यत उक्तं **सतोऽपि बाध्य-त्वमित्यादि** । तदर्थस्तु बाध्यत्वव्यवहारस्यासतीव सत्यपि सतोऽपि बाध्यत्वमस्त्विति वदता त्वयाऽङ्गीकारेण तत्प्रयोजकासत्त्वरूपप्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्यासति विद्यमानत्वेऽपि व्याघातापत्त्या सत्यभावेनासत्त्वमेव बाध्यत्वम् । अनुगतबाध्यत्वव्यवहारप्रयोजकम् । **न तु वक्तुं शक्यत इति** । न बाध्यत्वं वक्तुं शक्यत इति वाक्यात् परं सदसत्साधारणे बाध्यत्वव्यवहारस्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनानिर्वाह्यत्वादित्येतावान् ग्रन्थस्तदुत्तर-मिति सकलेत्यादि पाठः । मूलकोशानुसारात् । तद्ग्रन्थस्यायमर्थः । प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं बाध्यत्व-व्यवहारप्रयोजकमङ्गीकुर्वता तत्प्रयोजकवत्यसति तद्व्यवहारनिर्वाहकरणेऽपि न सार्वत्रिकतद्व्यवहारनिर्वाहस्तेन





संभवति । व्यवहारस्य सतीवासत्यपि विद्यमानत्वेन तत्प्रयोजकस्य चासत्येव सत्त्वेन सत्यविद्यमानेन तेन तन्निर्वाहानुपपत्तेरिति । अनेन वक्तुमशक्यत्वं प्रागुक्तमुपपादितं भवति । **इति सकलेति** । इतिशब्दो हेतौ । तस्मादित्यर्थः । यस्मादुक्तरीत्या लोकविरोधादिप्रसङ्गो मूलोक्तोऽवर्जनीयस्तस्मात् । तद्विरोधादिप्रसङ्गवारणायेति यावत् । व्यवहारादीत्यादिपदेन सैद्धान्तिकाभ्युपगमपरामर्शः । **अन्यदेवेति** । असत्त्वरूपतत्प्रतियोगित्वादन्यदेव सदसत्साधारणमित्यर्थः । **तदेवेति** । तदेव दृष्टान्ते शुक्तिरजतादौ विद्यमानं साधनत्वेन विवक्षितमिति भावः । यदुक्तं लोकव्यवहारविरोधादिप्रसङ्गवारणायान्यदेव बाध्यत्वं वाच्यमिति तत्तथैवोच्यत इति समाधत्ते मूले **त्वदभिमतस्येति** । तत्रेति वक्ष्यमाणस्यात्रापि संबन्धः । तथा च तत्र सदसत्साधारणे बाध्यत्वव्यवहारविषये सर्वत्र त्वदभिमतस्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपबाध्यत्वस्याभावेऽपीति योज्यम् । **अन्यस्य बाध्यत्वस्य तत्रेति** । न च तत्र सर्वत्र यदेव बाध्यत्वं भवतोच्यते तदेवाहं दृष्टान्ते प्रतिपादयिष्यामीति मदाशय इति वाच्यम् । वक्ष्यमाणरीत्या सदात्मादिसाधारणस्य तस्यानिर्वचनीयत्वरूपसाध्यं प्रति हेतुत्वेनोपन्यासे व्यभिचाराप्रयोजकत्वयोरापातादित्याशयादिति सूरयो विदांकुर्वन्तु ॥ यदि तर्हीत्यादि मूलटीकागततदाशयौ । योजितौ सूक्ष्मबुद्धिस्तत्सावधानोऽवलोकयेत् ॥ नन्वेतत्प्रकरणेऽन्यथाविज्ञातस्येत्यादिरूपबाध्यत्ववचनं व्यर्थम् । शुक्तिरबाध्या तदारोपितं रजतं बाध्यमिति हि सर्वसंमतो व्यवहारः । न चानेन बाध्यत्वनिर्वचनेनोक्तव्यवहारनिर्वाहः । प्रत्युत शुक्तेरपि बाधापादकतया व्यवहारविरोध्ये वा कयाचिद्विवक्षया भ्रमाधिष्ठानमात्रस्य बाध्यत्वसंपादनमात्रमेवैतत् । सत्यत्वप्रतियोगित्वेन प्रसक्तं बाध्यत्वमेव तु वक्तव्यम् । अन्यथाविज्ञातस्येत्येतत्तु न तादृशम् । असतः सत्त्वप्रतीतिरिति तत्त्वनिर्णयानुसारि एवमसत इति मूलवाक्यादसतोऽप्युक्तविधबाध्यत्वोपपादनप्राप्तावपि न मिथ्यात्वव्याप्यतया तत्प्राप्तिः । बाध्यं बाध्यमिति लोकव्यवहारोऽपि अधिष्ठानतया बाधविषयत्वं परित्यज्य निषेध्यत्वेन बाधविषयत्वमादायैवोपपाद्यः । सदसत्साधारणबाध्यत्वप्रसक्तिस्तु सिद्धान्तिना वृथा कार्या । मिथ्यात्वसाधकभूतस्यैव बाध्यत्वस्य प्रसक्तिप्रतीतेरित्यादि शङ्का परिहरणीयास्ति । **इति निर्देष्टव्य इति** । प्रकृतप्रधानबाध्यत्ववाचि तदिति तच्छब्दार्थेन सामानाधिकरण्योपपत्तय इति शेषः । **वा निर्देष्टव्य इति** । तथा सत्येवान्यथेत्युक्तप्रकारवैपरीत्यस्य स्पष्टत्वलाभेन सम्यगित्यनुक्त्वाऽध्यस्तवस्त्वभावविज्ञानं विरोधिशुक्तित्वादिभावान्तरविज्ञानमित्येवमेव वक्तव्यत्वादिति भावः । **सम्यगिति सामान्येनेति** । विज्ञानमित्यस्यापि संबन्धे सत्येव सम्यग्विज्ञानमिति संपूर्णार्थप्राप्तावपि तदंशस्यात्र व्यावर्त्यकथनाभावादग्रहणम् । वक्ष्यमाणवादिद्वयरीत्या बाधरूपत्वेन प्राप्तयोरध्यस्तवस्त्वभावबोधविरोधिभावान्तरभावयोरुभयोरप्यन्यथाविज्ञातस्य सम्यग्ज्ञानरूपत्वेनान्यथाविज्ञातस्य सम्यग्विज्ञानमित्ययं निर्देशस्तदुभयसाधारण इति भावः । **तेनेति** । भाष्यकारीयनिर्देशद्वयेनेत्यर्थः । **उभयसाधारण्येनैवेति** । अध्यस्तेत्यादिनोक्तोभयविधबाधसाधारण्येनैवेति द्वितीयनिर्देशज्ञाप्यकथनम् । विज्ञानमिति प्रथमनिर्देशज्ञाप्यव थनं **बाधेति** । तथा च बाधलक्षणं अध्यस्तेत्यादिप्रकारेण द्विरूपं प्राप्तम् । तदुभयं वक्ष्यमाणरीत्या प्रत्येकमव्याप्तमित्यतोऽन्यथाविज्ञातस्य सम्यग्विज्ञातत्वरूपेणानुगतीकर्तव्यं तदा चान्यथाविज्ञातस्य सम्यग्विज्ञानं बाधेत्युक्ते अध्यस्तवस्त्वभावबोधो विरोधिभावान्तरज्ञानं वोक्तरूपं भवतीति सर्वत्रैकरूप एव बाधः सिद्धो भवतीत्येवं निष्कर्ष इत्यर्थः । इति मनसीत्यत्रेति शब्दस्तन्त्रेणोपात्तः पूर्वत्रोत्तरत्र च संबध्यते । निधायेत्यस्येत्याहेति वक्ष्यमाणेनान्वयः ।





**सामान्येन परामर्शो नपुंसकमिति** । भिन्नलिङ्गतयोपस्थितानेकसाधारणपरामर्शो नपुंसकमित्यर्थः । वक्ष्यति च । अनेकभिन्नलिङ्गनिर्दिष्टयोः सामान्येनेत्यादि । शिष्टं तच्चाविशेषमानेनेत्यनुभाष्यमूलटीकायां प्रागुपपादितं द्रष्टव्यम् । **शेषपूरणेन चेति** । एतच्चोजनान्ते मूले तत्पूरणादिति भावः । **एतट्टीकाकारेति** । एष चासौ टीकाकाराशयश्चेति विग्रहः । उभयसाधारण्येनैवेत्याद्युक्ताशयेत्यर्थः । ननूपसर्जनतया प्रकृतबाधसामान्यपरामर्शादिकं प्रकारान्तरेण व्याख्यानसंभवादेव कृतमिति किन्न स्यात् । तथा च न तज्ज्ञापकमित्यत उक्तं **प्रकृतप्रधानेत्यादि** । प्रकृतप्रधानपदोपादानेन अप्रकृताप्रधानबाधपरामर्शापेक्षया बाध्यत्वपरामर्शः स्वरस इति सूचयति । पूर्ववत् । पूर्वत्र विज्ञानमेव तद्विषयत्वेन वेति योजनादिति भावः । लक्षणामात्रेत्यनेन शेषपूरणादि व्यावर्तयति । उपपत्ता-वित्यनन्तरं तद्विहायेति शेषः । **अस्मिन्व्याख्यान इति** । लक्षणाश्रयणेन प्रवृत्तव्याख्याने तदाश्रयणमात्रम् । सामान्येन परामर्शाश्रयणेतु ब्रह्माश्रयणीयमिति मूलोक्तयोजनायां कुसृष्टिरित्यर्थः । **अधिकार्थेति** । बाधलक्षणलाभादिरूपेत्यर्थः । ननु बाधस्वरूपनिरूपणाभिप्रायेऽपि तदित्यनेन नपुंसकेन परामर्शोपपत्त्यर्थं तद्विषयतया प्रकृत्यर्थबाधनमेवोच्यताम् । किं पुन्नपुंसकशब्दनिर्दिष्टयोरुभयोः साधारणबाध इति पुलिङ्गोक्तयोः सामान्येन परामर्श इत्यङ्गीकारेण । तथा च यथास्थिते नपुंसकपरामर्शलाभात्सामान्येन तत्परामर्शकुसृष्टिर्नास्तीत्याशङ्कां परिहरति **अत्र प्रकृत्यर्थेति** । **उभयोरपि लक्ष्यत्वेति** । न स्थाणुः पुरुषोऽयमित्युभयोरध्यस्तवस्त्वभावबोधविरोधिभावान्तरज्ञानरूपबाधत्वेन संमतयो-र्लक्ष्यत्वेत्यर्थः । तयोरुभयोरपि प्रामाणिकानां बाध इति व्यवहारसत्त्वेन तल्लक्ष्यतायाः सूचनं युक्तमिति भावः । **अव्याप्तीति** । न स्थाणुरित्यादिरूपबाधयोर्लक्ष्यभूतयोरध्यस्तेत्यादिनोक्तलक्षणद्वयस्य प्रत्येकमव्याप्तीत्यर्थः । **सूचनमपीति** । अनेन तदुभयमव्यापकमिति मूलकारोक्तिर्भाष्यमूलिकेति ध्वनितम् । **इत्येवमिति** । एवं बाध इति पुलिङ्गनिर्देशेनोपस्थाप्यत्वमाश्रित्य तदिति सामान्येन व्याख्यानमित्यभिप्रायेणेति योज्यम् ।

**स०व्र०**— वक्ष्यते चैतत् । 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनरि'त्यनेन द्वितीयस्य तृतीये ।

**विठ्ठ०**— ननु ज्ञानबाध्यत्वं नाम न ज्ञाननिवर्त्यत्वं किन्तु इदमिति प्रतिपन्नेऽर्थे नास्ति नासीत् न भविष्यति इति त्रैकालिकनिषेधप्रतियोगित्वमेव तच्च शुक्तिरूप्यादावस्तीति कथं साधनविकलतेति शङ्कते **ननु प्रतिपन्नेति** । नोक्तनिषेधप्रतियोगित्वमसत्त्वं किन्तु निरुपाख्यत्वमन्यदेवेत्यत आह **वक्ष्यते चैतदिति** । 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं भवेदि'त्यादिनोक्तनिषेधप्रतियोगित्वमेव सत्त्वमङ्गीकरणीय-मिति वक्ष्यते इत्यर्थः । दृष्टान्ते शुक्तिरजतादौ बाध्यत्वरूपसाधनवैकल्याभावं शङ्कते **यदि तर्हीति** । ननु यदि बाध्यत्वं शुक्तिरजतादेः तर्हि सकललोकविरोधप्रसङ्गोऽपसिद्धान्तश्च बाढं भवतीति संबन्धः । बाढं नन्विति वा क्वचित् बाढमिति पाठो न दृश्यते । ननु तदित्यस्य प्रकृतं बाध्यत्वपरामर्शकत्वं अयुक्तं अस्य बाधलक्षणत्वेन तद्विषय-लक्षणत्वायोगात् बाधस्य च नपुंसकलिङ्गनिर्देशायोगाच्चेत्यत आह **बाध्यत्वमिति** । **प्रकृतेति** ।

**चषकः**— **वक्ष्यति चैतदिति** । पृथगुपदेशादिति नये 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनरि'त्यभिधास्यतीत्यर्थः ।





**गूढ०**— ननु निषेधप्रतियोगित्वरूपबाध्यत्वस्य शुक्तिरूप्ये सत्त्वेऽपि असत्त्वं कुत इत्यत आह **वक्ष्यत इति**। 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयते'त्यादिना इदमेवासत्त्वमित्यतोऽतिरिक्तं असत्त्वं नेति वक्ष्यत इत्यर्थः। **त्वदभिमतस्येति**। तथाच तदादाय सकललोकव्यवहार इति भावः। नन्वत्र तदिति कस्य परामर्श इत्यत आह **बाध्यत्वमितीति**। **प्रकृतप्रकृत्यर्थमिति**। प्रकृतो यः प्रकृत्यर्थः तमित्यर्थः। बाधृ लोडन इत्यस्माद्यत्प्रत्यये बाध्यमिति सिध्यति। तथाच तच्छब्देन प्रकृत्यर्थभूतबाधपरामर्श इति भावः। तर्हि स इति वक्तव्ये तदिति कथमुक्तमित्यत उक्तं **सामान्येनेति**। सामान्ये नपुंसकमिति वचनादिति भावः।

**३१९ सु०— केचिन्नेदं रजतमिति ह्यध्यस्तवस्त्वभावबोधं बाधमाहुः। अपरे तु शुक्तिरियमिति विरोधिभावान्तरज्ञानम्। तदुभयं प्रत्येकमव्यापकम्। शाब्दादौ द्वयोरपि बाधत्वप्रसिद्धेः। तस्मादुभयानुगतमेतदुच्यते।**

**बिन्दुः— शाब्दादौ द्वयोरपीति**। प्रत्यक्षे हि अन्यतरज्ञानकाले अपरज्ञानस्यावर्जनीयतया तदेव बाधज्ञानमस्त्विति कलहमात्रप्रसक्त्या शब्दपर्यन्तं धावनम्। तत्र च इयं शुक्तिरिति शब्दान्नेदं रजतमिति ज्ञानस्यासंभवात्। शब्दानुपस्थितार्थस्य शाब्दबोधाविषयत्वादिति भावः। **उभयानुगतमेतदिति**। यद्यप्यन्यथात्वस्य वा ज्ञानसम्यक्त्वस्य वा तत्तत्पदार्थभेदेनानन्त्यादिदमप्यननुगतमेव। तथापि उक्तविधनिर्वचनस्य सर्वत्रापि योजयितुं शक्यत्वादनुगतत्वोक्तिः। यथा तार्किकमते यत्समानाधिकरणेत्यादिव्याप्त्यादिलक्षणं वह्निमान् धूमात्, अनित्यः कृतकत्वादित्यादावनुगतं तद्वत् न हि तत्रापि यत्तदादिवाच्यं व्याप्यतावच्छेदकादिकमेकमस्ति। एवं प्रकृतेऽपि लक्ष्यलक्षणयोरननुगमान्नाव्याप्त्यादिदोष इति ध्येयम्।

**परि०— शाब्दादाविति**। अग्निना सिञ्चेदित्यादिशाब्दबोधस्थले तदभावबोधनस्य वह्निः शीतः पदार्थत्वादित्यनुमाने च तद्विपरीतभावान्तरज्ञानस्य च बाधत्वदर्शनादित्यर्थः।

**गु०दी०— शाब्दादौ** इत्यत्र नेदं रजतं किन्तु शुक्तिरेवेत्यादिरूपेण शृङ्गग्राहकतया बाधबोधकशिष्टव्यवहारः शब्दः। तत्र नेदं रजतमिति निषेध्यतया रजतस्य "किन्तु शुक्तिरिति" विधिगोचरतया शुक्तेश्चेत्युभयोरपि बाधव्यवहारगोचरता दृश्यते। अनेन च व्यवहारेण "अर्थं बुद्ध्वा शब्दरचना" इति न्यायेन व्यवहारमूलभूतो बाधप्रत्ययोऽप्यनुमीयते। अतः परचित्तवृत्तेरप्रत्यक्षत्वात् लोकानुभवमात्रकथनेऽनुभवकलहः स्यात्। अतो ज्ञानकार्याभिलापस्यैव प्रथमतो ग्रहणम्। तस्माच्छिष्टाभिलापरूपशब्दबलात्तदुन्नीतानुभवबलाच्च उभयोरपि बाधप्रतीतिविषयत्वरूपं बाध्यत्वमिति समुदायार्थः।





**यादु०**— ननु यदि न बाध्यत्वं शुक्तिरजतादेस्तर्हि सकललोकविरोधादिप्रसङ्ग इत्यन्वयः । नन्विदं रजतमिति प्रत्यक्षस्येयं शुक्तिरिति ज्ञानं न साक्षाद्बाधरूपं ग्राह्याभावानवगाहित्वात् । किन्तु ग्राह्यविरह-व्याप्यावगाहित्वेनानुमानतयैव न चानुमानस्य प्रत्यक्षबाधकता क्वापि दृष्टेष्टा वा । 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'ति वक्ष्यमाणत्वात् । अतो विरोधिभावान्तरज्ञानस्यालक्ष्यत्वान्न तत्राव्याप्तिर्दोषायेत्यत आह **शाब्दादाविति** । भ्रम इति शेषः । तथाच प्रबललिङ्गज्ञानस्य प्रत्यक्षाबाधकत्वेऽपि शाब्दानुमिति-रूपभ्रमबाधकताऽस्त्येव । अत एव मीमांसायां निरवकाशलिङ्गस्य श्रुत्यादिबाधकता प्रसिद्धेति भावः । यद्वा विरोधिभावान्तरज्ञानमध्यस्तवस्त्वभावज्ञानं वा यदि प्रत्यक्षरूपं तदा तयोरन्योन्यविषयविषयकत्वं भविष्यति उल्लेखाभावेऽपि सन्निकर्षादिरूपसामग्रीसत्त्वे तज्ज्ञानसंभवात् । न हि प्रात्यक्षिके ज्ञाने यावद्विषयीक्रियते ताव-दुल्लिख्यत इति नियमोऽस्ति । अत उक्तयोरुभयोरपि ज्ञानयोरुभयविधबाधलक्षणसंभवान्नाव्याप्तिरित्यत आह **शाब्दादाविति** । शाब्दयोरनुमितिरूपयोर्वोक्तज्ञानयोरपि प्रसिद्धिबलाद्बाध्यत्वं तावदस्ति । तत्र च नान्योन्य-विषयविषयकत्वं संभावितम् । शब्दानुपस्थितस्य व्यापकतावच्छेदकताऽनवच्छिन्नस्य च शाब्दे बोधेऽनुमितौ चाभानात् । अतस्तत्राव्याप्तिः स्यादेवेति भावः ।

**वं०प०**— नन्वियं शुक्तिरिति ज्ञानं न लक्ष्यम् । साक्षाद् ग्राह्याभावानवगाहित्वेन । यदीदं बाधकं तर्हि तस्येदं न रजतं शुक्तित्वादिति ग्राह्याभावव्याप्यशुक्तित्वावगाहित्वेनानुमानिकतया इदं रजतमिति प्रत्यक्षबाधकत्वं न संभवति । 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'ति वक्ष्यमाणत्वात् । तथा चेयं शुक्तिरिति ज्ञानस्येदं रजतमिति ज्ञानबाधकत्वायोगेनालक्ष्यत्वान्न तत्राव्याप्तिर्दोष इत्यत आह **शाब्दादाविति** । भ्रम इति शेषः । तथा चेयं शुक्तिरिति ज्ञानस्येदं रजतमिति प्रात्यक्षिकभ्रमबाधकत्वाभावेऽपि इदं रजतमिति शब्देन चाकचक्यादिसादृश्यलिङ्गकानुमित्या वा भ्रमो जातस्तत्रेयं शुक्तिरिति ग्राह्याभावव्याप्यावगाहित्वेनानुमान-रूपस्यापीयं शुक्तिरिति ज्ञानस्य शाब्दानुमानिकभ्रमबाधकत्वं प्रसिद्धमिति लक्ष्यत्वात्तत्राव्याप्तिर्भविष्यत्येवेत्यर्थः । अत्र द्वयोरिति पदं न स्वरसम् । अथवा नन्विदं लक्षणद्वयं कथं प्रत्येकमव्यापकम् । यथा नेदं रूप्यमिति प्रात्यक्षिकं बाधकज्ञाने शुक्तित्वमपि प्रतीतमेव । तथेयं शुक्तिरिति प्रात्यक्षिके बाधकज्ञाने रजताभावोऽपि प्रतीत एवेत्यन्योन्यविषयविषयकत्वमस्ति । न चोल्लेखप्रसङ्ग इति वाच्यम् । प्रात्यक्षिकज्ञाने यावत्प्रतीयते तावतः सर्वस्योल्लेखनियमाभावात् । अत एवोभयोरपि बाधकज्ञानयोरन्योन्यविषयविषयकत्वात्कथं प्रत्येकमव्यापकमिदं लक्षणमित्यत आह **शाब्दादाविति** । इदं रजतमिति भ्रमान्तरं नेदं रूप्यमित्याप्तवाक्यरूपशब्दतो दाहच्छेदा-नुमानेन बाधकज्ञानं जायते । तथेयं शुक्तिरिति शब्दतोऽनुमानेन वा बाधकज्ञानं जायते । तदा शाब्दादौ शब्देनानुमानेन वा जायमानेनेदं रूप्यमियं शुक्तिरिति ज्ञानद्वये द्वयोरपि बाधकत्वं प्रसिद्धम् । न चोक्तरीत्या शाब्दानुमानिकज्ञानयोरप्यन्योन्यविषयविषयकत्वेनोक्तदोष इति वाच्यम् । शाब्दज्ञानस्य शक्यतावच्छेदक-मात्रप्रकारकत्वनैयत्येनानुमितेश्च व्यापकताऽवच्छेदकप्रकारकत्वनैयत्येन तदधिकस्य तत्राभासमानत्वेनान्योन्य-विषयविषयकत्वाभावेन प्रत्येकमव्यापकं भवत्येवेति भावः ।





**आनन्दः**— ननु विज्ञानमेव बाध्यत्वमित्यवधारणमयुक्तं व्यावर्त्याभावादित्यतो व्यावर्त्यमाह **केचिदित्यादिना** । अध्यस्तं यद्वस्तु तस्य यो भावस्तद्बाधमित्यर्थः । **प्रत्येकमव्यापकमिति** । नेदमिति बाधे उत्तरलक्षणस्येयं शुक्तिरिति बाधे पूर्वलक्षणस्याभावेनाव्याप्तिरित्यर्थः । अस्तु तर्ह्युभयोर्मध्ये एकमेव वा बाधलक्षणमित्यत आह **शाब्दादाविति** । शब्द आदिः कारणं यस्य तस्मिन् शब्दजन्ये ज्ञान इत्यर्थः । उपलक्षणं चैतत् । अनुमानेन्द्रियजन्येऽपीति ग्राह्यम् । तर्हि उभयानुगतलक्षणं वक्तव्यमत आह **तस्मादिति** ।

**कं०रा०**— **विरोधीति** । अध्यस्तस्य रजतत्वादेर्विरोधि यद्भावान्तरं शुक्तित्वादि तज्ज्ञानमित्यर्थः । ननु प्रत्येकमव्यापकत्वं तदा स्याद्यदि एकस्थलेऽपरस्याभावः स्यात् । न चैवम् । प्रत्यक्षेणाध्यस्तवस्त्वभावावबोधेऽध्यस्तविरोधिभावान्तरस्य शुक्तित्वादेः स्फुरणावश्यंभावात्प्रत्यक्षेणाध्यस्तविरोधिभावान्तरज्ञाने वा अध्यस्तवस्त्वभावभानावश्यंभावाच्चेत्यत आह **शाब्दादाविति** । शाब्दे अनुमानिके वा नेदंरजतमित्यध्यस्तवस्त्वभावज्ञाने बाधत्वेन प्रसिद्धेऽध्यस्तवस्तुविरोधिभावान्तरज्ञानत्वाभावाच्छाब्देऽनुमानजन्ये वाऽध्यस्तवस्तुविरोधिभावान्तरविषयके इयं शुक्तिरिति ज्ञाने बाधत्वेन प्रसिद्धेऽध्यस्तवस्त्वभावबोधत्वाभावात्प्रत्येकमव्यापकमेवेति भावः । **तस्मादिति** । पूर्वोक्तयोर्लक्षणयोः प्रत्येकमव्यापकत्वादुभयानुगतमध्यस्तवस्त्वभावबोधेऽध्यस्तविरोधिभावान्तरज्ञानेच्छानुगतमन्यथाविज्ञातस्य सम्यग्विज्ञानं बाध इत्येतल्लक्षणमुच्यत इत्यर्थः ।

**श्रीनिधि०**— ननु सामान्येन परामृशतीत्युक्तं सामान्यं चानेकविशेषनियतमित्यतः साधकप्रभेदं दर्शयति **केचिदित्यादिना** । **तदुभयं प्रत्येकमव्यापकं शाब्दादाविति** । प्रत्यक्षस्थले विरोधिभावान्तरज्ञान-अध्यस्तवस्त्वभावज्ञानयोश्च समनियतत्वाच्छाब्दादावित्युक्तम् । **शाब्दादाविति** । देशान्तरपाठः । आदिपदेनानुमानमुच्यते । शाब्दो भ्रमः यदा शब्देन निवर्तते तदा कदाचित् रूप्यं नास्तीति शब्दजनितेनाध्यस्तरूप्याभावज्ञानेन कदाचित् सा शुक्तिरिति शब्दजनितेन विरोधिभावान्तरज्ञानेन । तथा चोभयं प्रत्येकमव्यापकमिति भावः । द्वयोर्बाध्यत्वमेव त्यज्यतामित्यत आह **द्वयोरपि बाधत्वप्रसिद्धेरिति** । शाब्दादावित्यस्य द्वयोरित्यत्र वा संबन्धः । अभिप्रायस्त्वेक एव । प्रसिद्धेर्व्यवहारगम्यायाः । रजतत्वादिना विज्ञातस्य पुरोवर्तिनः शुक्तित्वादिनेत्यादि । अन्यथा विज्ञातस्य सम्यक् विज्ञानविषयत्वमेव बाध्यत्वमित्युक्तम् । न हि शुक्तिका बाध्यते । किं नाम रजतम् । तत्कथं द्वितीयकल्पः इति चेदित्थम् । शुक्तेरपि रजतत्वेन बाधसंभवात् । इयं शुक्तिरित्यत्र रजतत्वाभावो न विषयीक्रियत इति चेन्न । शुक्तित्वरजतत्वे हि परस्परविरुद्धे । तत्र रजतत्वप्रसक्तौ तदपवादेन शुक्तित्वस्य च निश्चये बाध्यते खलु इत्यादि वक्ष्यमाणस्य येन पूर्वप्रसञ्जितान्यथाकारस्य बुद्ध्यचनारोहेण बाधसंभवादिति ।

**वा०चं०**— ननु बाधस्यैकप्रकारत्वेनानेकप्रकारतया कस्याप्यभ्युपगमो नापि भिन्नलिङ्गतया निर्देश इत्यतो वादिविप्रतिपत्तिमाह **केचिदिति** । ननु तैस्तैरपरस्यालक्ष्यत्वाङ्गीकारान्नाव्याप्तिरित्यतः स्थाणुरयं शब्दो द्रव्यमित्येतद्बाधकतया न स्थाणुर्न द्रव्यमिति वाक्यानुमानयोरपि पुरुषोऽयं शब्दो गुण इति वाक्यादेरपि बाधकत्वप्रसिद्ध्या





प्रत्यक्षस्थले चाध्यस्तवस्त्वभावबोधे विरोधिभावान्तरभाननियमेन निर्णयासंभवेऽपि समानन्यायतया तत्रापि उयुभयोरपि बाध्यत्वनिश्चयसंभवात्पराङ्गीकारस्य चाग्रहमात्रमूलत्वादव्याप्तिः स्यादेवेत्याह **शाब्दादाविति** ।

**वा०र०**— अनेनोपपत्तावपीत्युक्तव्याख्यानं परित्यज्येति लभ्यते । **कस्यापीति** । तथा च तदुभय-सङ्ग्रहाय सामान्येन वचनं न कार्यमिति भावः । **निर्देश इति** । तथा च सामान्येन परामर्शोऽपि व्यर्थ इति भावः । **तैस्तैरपरस्येति** । अध्यस्तवस्त्वभावबोधो बाध इति बाधलक्षणं वदद्भिस्तादृशत्वेनाङ्गीकृत न स्थाणुरित्यादेरेव लक्ष्यत्वाङ्गीकारेऽपि विरोधिभावान्तरज्ञानरूपपुरुषोऽयमित्यादेरनेवंरूपस्य लक्ष्यत्वं नाङ्गीक्रियत इति तत्राध्यस्तेति लक्षणस्याभावेऽपि नाव्याप्तिरेवं द्वितीयलक्षणेऽपि न स्थाणुरित्यस्य लक्ष्यत्वाङ्गीकारो व्याख्येयः । न त्वेकलक्षण-स्यापरलक्षणेऽव्याप्तिपरिहाराय तस्यालक्ष्यत्वाङ्गीकार इति भ्रमितव्यम् । लक्षणस्य लक्षणान्तरसङ्गृहीतेऽव्याप्तेरेव व्याख्येयत्वेऽपि लक्षणान्तरे तद्प्रसक्त्या तत्परिहाराय यत्नासङ्गतिप्रसङ्गात् । एवमेव साधनाश्रययोरन्यतरत्वमित्यादौ परस्पराव्याप्तिर्व्याख्येयेति ज्ञेयम् । **शाब्दादाविति** मूले शाब्दबाधस्थले आनुमानिकबाधस्थले चेत्यर्थः । तत्र च शब्दानुमानस्थले उभयोर्बाधत्वं यथोपपादनानपेक्षमेवास्ति । नैवं प्रत्यक्षेऽस्ति । तत्राध्यस्तवस्त्वभावबोधे विरोधिभावान्तरभानयोर्बाधतया सिद्धत्वेन तन्न्यायेन प्रत्यक्षेऽपि तयोरुभयोस्तत्स्वीकार्यमित्युपपादनसापेक्षमेव तयोः प्रत्यक्षेऽपि बाधत्वकल्पनम् । एतदाशयेनैव मूले प्रत्यक्षपरिग्रहो न तु शब्दानुमानसमकक्ष्यतयेति । मूलाशयं स्पष्टयितुमध्यस्तेत्यादिद्विरूपबाधस्य शाब्दादौ संभवं तावत्प्रतिपादयति **स्थाणुरयमित्यादि** । स्थाणुरयमित्येत-द्बाधकतया न स्थाणुरिति वाक्यस्येव पुरुषोऽयमिति वाक्यस्यापि बाधत्वेत्यादिरूपेण योजना । न द्रव्यमि-त्यनुमानस्येति योजनायां बहिरिन्द्रियव्यवस्थाहेतुत्वं हेतुर्द्रष्टव्यः । शब्दो गुण इत्यनुमानेऽपि स एव हेतुः । सामान्यवत्त्वे सति अस्मदादिबाह्यैकेन्द्रियग्राह्यत्वादिति हेत्वन्तरं वा ज्ञेयम् । **समानेति** । शब्दादिस्थलीयबाधाभ्यां प्रत्यक्षस्थलीयबाधयोः साम्यादित्यर्थः । एकेनान्योक्तापरस्यालक्ष्यत्वाङ्गीकारमन्यथयति **परेति** ।

**स०व्र०**— ननु प्रत्यक्षरूपबाधज्ञाने उभयोरपि नियतत्वात्कथं प्रत्येकमव्यापकत्वमित्यत आह **शाब्दादाविति** । **आजानसिद्धे** स्वभावसिद्धे । बाधशब्दो लक्ष्यवाचकः । स च यौगिकः । तदर्थ एव लक्षणवाक्येन विव्रियते ।

**विठ्ठ०**— बाधरूपज्ञानस्य द्विप्रकारत्वात् किमनुसृत्येदं लक्षणकथनमित्यतो अन्यतरमात्रानुसरणेऽव्याप्ते-रुभयानुगतमिदमिति वक्तुं प्रकारद्वयं पक्षभेदेन दर्शयति **केचिदिति** । ननु तदुभयमव्यापकमिति कथमुच्यते इदं रजतमित्यपरोक्षभ्रमानन्तरम् । नेदं रजतं किन्तु शुक्तिरेवेति ज्ञानमुत्पद्यते तत्राध्यस्तवस्त्वभावबोधविरोधिभावान्तर-ज्ञानयोरुभयोरपि सत्त्वात् । न शुक्तिं तत्त्वतः पश्यतोऽन्यतरमेवोत्पद्यते इति शक्यते वक्तुमित्यत उक्तम् **शाब्दादाविति** । अपरोक्षस्थले तयोः समानविषयत्वेऽपि यत्र शब्देनानुमानेन वा तत्रस्थं रजतमिति विभ्रमो जायते तत्र पुनः शब्दादिनैव तत्रस्थं रजतं नेत्यध्यस्तवस्त्वभावरूप एव बाधो जायते न तु विरोधिभावान्तरज्ञानमपि





तदुपस्थापकाभावात् तत्र द्वितीयमव्याप्तम् । क्वचित्तु शुक्तिरेवेति विरोधिभावान्तरज्ञानमेवोत्पद्यते न त्वध्यस्तवस्त्वभावबोधोऽपि तत्राद्यमव्याप्तम् । तथाच द्वयोः परस्परपरिहारेण बाधत्वप्रसिद्धेः प्रत्येकमव्यापकत्वमुपपद्यते इति भावः ।

**गूढ०—** ननु विज्ञानमेव बाध्यत्वमित्यवधारणमयुक्तं व्यावर्त्याभावादित्यतो व्यावर्त्यमाह **केचिदित्यादिना** । अध्यस्तं यद्वस्तु तस्य यो भावः तद्बाधमित्यर्थः । **प्रत्येकमव्यापकमिति** । नेदमिति बाधे उत्तरलक्षणस्य इयं शुक्तिरिति बाधे पूर्वलक्षणस्याभावेनाव्याप्तिरित्यर्थः । अस्तु तर्ह्युभयोर्मध्ये एकमेव वा बाधलक्षणमित्यत आह **शाब्दादाविति** । शब्दः आदिः कारणं यस्य तस्मिन् शब्दजन्ये ज्ञान इत्यर्थः । उपलक्षणं चैतत् । अनुमानेन्द्रियजन्येऽपीति ग्राह्यम् । तर्ह्युभयानुगतं लक्षणं वक्तव्यमत आह **तस्मादिति** ।

**३२० सु०—** रजतत्वादिना विज्ञातस्य पुरोवर्तिनः शुक्तित्वादिना विज्ञानं खल्वन्यथाविज्ञातस्य सम्यग्विज्ञानं भवति । एवमसतो रजतस्य सत्त्वादिनाऽवगतस्यासत्त्वादिना विज्ञानमपि **अन्यथाविज्ञातस्य सम्यग्विज्ञानं** भवत्येव । सम्यग्विज्ञानं बाध इत्येवोक्ते सर्वमपि सम्यग्ज्ञानं बाधः प्रसज्येत । न च तथा व्यवहारः । तन्निवृत्त्यर्थम् **अन्यथाविज्ञातस्येत्युक्तम्** । अन्यथाविज्ञातस्य ज्ञानमित्येवोक्ते धारावाहिकभ्रमे रजतत्वेनावगतस्य शुक्तिकाशकलस्य पुनर्नागवङ्गत्वादिज्ञानेऽपि प्रसङ्गः । तन्निरासाय **सम्यगित्युक्तम्** । **अन्यथेति** तत्स्वरूपापेक्षया । तेन घटस्यैव, पटाद्यपेक्षया **अन्यथा** घटत्वेन ज्ञातस्य, पुनर्घटत्वेन ज्ञाने प्रसङ्गो निरस्तः । छलप्रसङ्गात् । तथाऽपि रजतत्वेनावगतस्य शुक्तिकाशकलस्य शुक्लत्वादिज्ञाने प्रसङ्गः तदवस्थः । एवमेकेनान्यथाविज्ञातस्य पुरुषान्तरसंबन्धिनि तस्यैव वा पुरुषस्य कालान्तरभाविन्याजानसिद्धे सम्यग्विज्ञाने प्रसङ्गोऽपीति चेन्मैवम् । बाधतिः खलु लोडने पठ्यते । तच्च ज्ञानस्यार्थस्य वाऽस्तु । न तावद् ज्ञानस्य । तस्य क्षणिकत्वेन स्वत एव लोडितत्वात् । सम्यग्विज्ञानस्याप्युत्तरज्ञानविनाश्यस्य बाधितत्वव्यवहारप्रसङ्गात् । नाप्यर्थस्य । शुक्तिशकलादेस्तादवस्थ्यात् । रजतादेर्नित्यलोडितत्वात् । अतः पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिवेति वक्तव्यम् । तथा च सति कोऽतिप्रसङ्गः । तत्किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं ज्ञास्यते । अन्यथाविज्ञातस्येति वचनसामर्थ्यात् । अन्यथा सम्यग्विज्ञानमित्येवावक्ष्यत् । किमनेनेति । तद्विषयत्वं बाध्यत्वमिति शेषः ।

**बिन्दुः**— अत एव निर्वचनस्योभयसाधारणत्वं दर्शयति **रजतत्वादिनेति**। ननु स्वरूपापेक्षया अन्यत्वस्य लक्षणे प्रवेशाभावादुक्तदोषस्तदवस्थ एवेत्यत आह **छलप्रसङ्गादिति** । शाब्दव्यवहारे निष्णातबुद्धीनां हि ससंबन्धिकपदार्थवाचकशब्दस्थले प्रतियोगिविशेषानुक्तावपि तादृशशब्दानुसरणे सति विशिष्टबोधस्यैवानुभवसिद्धत्वात्। तथैव व्युत्पत्तेः। अन्यथा पितुर्धनं पुत्रो गृह्णीयादित्यादावप्यतिप्रसङ्गः स्यात् । परस्त्रीपरद्रव्याभिलाषप्रयुक्तप्रायश्चित्तविधयोऽपि सर्वसाधारणाः (अव्यवस्थिताः) प्रसज्येरन् । न हि तत्र विधिषु स्वापेक्षया यः परः तदीयद्रव्याभिलाषीत्याद्युक्तिरस्ति। उक्ता.... त्येव कथमुक्तदोष-निस्तारः। परस्यापि स्वत्वात् तदपेक्षत्वात्स्वस्यापि परत्वात्तथाच स्वस्वद्रव्याद्युपभोगेऽपि प्रायश्चित्त-मापद्येत। यस्मात्तादृशव्युत्पत्तिबलादेव ईदृशी शङ्का नावतरतीति तदुपादानमनर्थकमिति यदि तदेतदत्रापि तुल्यम्। तथाच सार्वलौकिकव्युत्पत्तिमर्यादामवमत्य दूषणे प्रकृतस्य छलप्रसङ्ग इति भावः। **आजान-सिद्धे इति**। भ्रमानुत्तरप्रमाणमित्यर्थः। **पूर्वज्ञानप्रसञ्जिताकारस्येति**। पूर्वज्ञानेन प्रसञ्जितः आरोपितो य आकारः रजतत्वादिः। असत एव हि प्रसञ्जनम्। तस्यालोडनमित्यर्थः। ननूक्तं तस्य नित्यलोडित-त्वादित्यत उक्तं **लोडनमिवेति**। तदा तस्य लोडितत्वात् तद्विषये लोडितत्वोक्तिरौपचारिकीत्यर्थः। ननु च तत्राप्युक्तक्षणिकत्वमुपादीयत इत्यतोऽप्याह **लोडनमिवेति**। निवृत्तेऽपि तस्मिन् ज्ञाने उत्तर-ज्ञानेनाप्रामाण्यावेदनेन संस्कारादिद्वारापि प्रवृत्त्याद्यजनकत्वेन कार्याक्षमीकरणमेव गौण्या वृत्त्या लोडन-शब्दार्थ इत्यर्थः। यद्वा पूर्वज्ञानेन प्रसञ्जितस्य मनस्यात्मनि वोत्पादितस्य अन्यथाकारस्य रजतत्वप्रकार-कस्य संस्कारविशेषस्य लोडनमिव स्वजन्यस्मृतिद्वारा प्रवृत्त्याद्यजनकत्वरूपकार्याक्षमत्वं उत्तरज्ञानेन पूर्वज्ञाने अप्रामाण्यावेदनद्वारा क्रियत इत्यर्थः। लोके हि विद्यमानोऽपि कार्यासमर्थोऽविद्यमानत्वव्यपदेशं लभते । कार्याक्षमीकरणं नाम वह्नेर्मण्यादिसमवधानमिव अप्रामाण्यज्ञानरूपप्रतिबन्धकसमवधानमेव । न हि बाधोत्तरकालं भ्रान्तिप्रतिपन्नं तद्रजतमिति स्मरतोऽपि तत्र प्रवृत्तिर्भवति। एवं च अन्यदीयान्यथा-ज्ञाने अन्यदीयसम्यग्ज्ञानेन अप्रामाण्यवेदनाभावान्न बाधत्वम् । तस्याप्याजानसिद्धकालान्तरीयस्य सम्यग्ज्ञानकाले पूर्वज्ञानप्रतिसन्धानाभावादप्रामाण्यानावेदकत्वेन न बाधकत्वम्। प्रतिसन्धाने वा तस्य तत्त्वनिष्ठमेव तथैव तत्र व्यवहारात् इति भावः। नन्विदमुपपादनमसङ्गतमिव प्रतिभाति । तथाहि । यदेतद्बाधतिर्हीत्यादिना लक्ष्यस्वरूपमुक्तं तत् उक्तविधज्ञानद्वये नास्तीत्यत .......... तथापीत्यादिग्रन्थेन पूर्वपक्षेऽतिव्याप्तिः शङ्किता। मैवमित्यादिना सिद्धान्ते न च तत्र बाधत्वाभावव्युत्पादनेन सैव दृढीकृतेति महान्विरोध इति चेत् मैवम् । आशयानवगमात् । तथाहि । शास्त्रकारैर्हि लोकसिद्धं लक्ष्यस्वरूप-मङ्गीकृत्य तदनुगुणा लक्षणोक्तिर्विधातव्या। तत्र स्वोक्तलक्षणानुसारेण लक्ष्योपमर्दोऽपि लोके बाधशब्द-





व्यवहारविषयीभूतपदार्थो हि तस्य .... तत्र तच्छब्दव्यवहारसिध्यर्थं लक्षणं ज्ञापनीयम् । पद्धतौ हि यावदन्यतो व्यावर्तनीयं यावति चैकःशब्दो व्युत्पादनीयस्तदुच्यते लक्ष्यमिति परमतसिद्धान्तस्वमत-सिद्धान्तयोः क्रमेणोपन्यासात् । अन्यथा वृत्तिरूपान्योन्याभावस्य सिद्धान्ते धर्मिस्वरूपानतिरेकेण तदर्थं केवलव्यतिरेकिहेतुरूपलक्षणज्ञानानपेक्षणात् । तथाच लोके बाधशब्दव्यवहारो नेदं रजतमिति ज्ञाने शुक्तिरियमिति ज्ञाने च वरीवर्ति । तत्र चाथशब्दप्रवृत्तिनिमित्तान्वेषणे शक्तिग्राहकान् बाधृ विलोडन इति धातुव्याख्यानरूपाद् व्याकरणादवगतस्य विलोडनशब्दवाच्यनिवर्तकत्वरूपस्य मुख्यस्य प्रवृत्ति-नियम(निमित्त)स्याभावात् देवदत्ते सिंहशब्दस्येव उक्तविधज्ञानद्वये बाधशब्दस्य गौणं तदास्थीयते । देवदत्ते पुच्छकेशादेरिव उक्तज्ञानद्वयेऽप्युक्तविधयार्थज्ञानरूपभ्रमनिवर्तकत्वासंभवात् । तच्च देवदत्ते क्रौर्यादिकमिव प्रकृते पूर्वज्ञानप्रसञ्जितान्यथाकारस्य कार्याक्षमीकरणरूपम् । अस्ति च तत् घटादिनिवर्तकत्वेनाभिमते मुद्गरप्रहारादाविति तादृशगुणयोग एवात्र बाधशब्दव्यवहारे निमित्तमिति तदेव लक्षणं वक्तुमुचितमित्याशयेनैतद्ग्रन्थावतारात् । तदिदमाह **विलोडनमिवेति** । अत एव एतदुपपादयितुं तत्किं वक्तव्यमेतदिति प्रश्नः । शब्दाधिक्ये अर्थाधिक्यमित्यभिप्रेत्य समाधानं च युज्यते । भास्करमतेन तात्कालिकः शुक्ते रजताकारपरिणामोऽन्यथात्वं तस्यावगतिः अन्यथाख्यातिः ।

**परि०**— उभयानुगतमेतदुच्यत इत्येतद्व्यनक्ति **रजतत्वादिनेति** । **छलेति** । अन्यथे-त्यस्य तत्स्वरूपापेक्षयेत्यस्य विवक्षितत्वादभिप्रायान्तरकल्पनेनातिव्याप्तिं कथयतः छलोत्तराख्यदूषणं स्यादित्यर्थः । **आजानसिद्ध इति** । भ्रान्तिपूर्वकत्वं विना स्वभावसिद्ध इत्यर्थः । अतिव्याप्तिं निराकर्तुमुपोद्घातमाह **बाधति**रित्यादिना **अत** इत्यन्तेन । बाधृ विलोडन इति धातुपाठादिति भावः । **क्षणिकत्वेनेति** । आशुविनाशित्वेनेत्यर्थः । परमतेन चैवमुक्तिः । **नित्यलोडितत्वादिति** । असत्त्वादिति भावः । **कोऽतिप्रसङ्ग इति** । तथापि रजतत्वेनेत्यादिना शङ्कितस्थलद्वयेऽतिव्याप्तिरूपदोषो नेत्यर्थः । शङ्कते **तत्किमिति** । तदेतत्पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिव यज्ज्ञानमस्ति स बाध इत्येतत् विज्ञातस्येत्यादिमूलवाक्ये शेषतया प्रक्षेप्तव्यं किमित्यर्थः । पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडन-मिवेत्यंशबोधकपदस्य मूलवाक्येऽनुपलब्धेः । यथा पाणिनीयसूत्रेषु विवक्षितार्थस्याशेषस्याप्राप्तिस्थले वार्तिककृता तत्रतत्र इदं वक्तव्यमिदमुपसङ्ख्येयमित्युच्यते तथेति भावः । सिद्धान्ती परिहरति **न हीति** । तदेतन्नहि वक्तव्यमित्यर्थः । शङ्कते **कथमिति** । तस्योत्तरमाह **अन्यथेत्यादि** । इति वचनसामर्थ्या-दनुच्यमानमपि गम्यत इत्यन्वयः । **अन्यथेति** । अन्यथा विज्ञातस्येत्यंशेन प्राग्विवक्षितार्थस्यालाभे सम्यग्विज्ञानमेव तन्मतमित्येवं ब्रूयात्किमन्यथाविज्ञातस्येत्यंशेनेत्यर्थः ।





**गु०दी०— अन्यथा विज्ञातस्य** इत्यत्र **अन्यथा विज्ञातस्य** अन्यथा रजतत्वादिना विज्ञातस्य शुक्तिशकलादेरेवेत्यर्थः । **बाधतिः खलु लोडने पठ्यत** इत्यत्र ''इक्श्तिपौ धातुनिर्देश'' इति वचनाद्बाधतिः बाधृ इति धातुः ''बाधृ विलोडन'' इति व्याख्यानाल्लोडने वर्तत इत्यर्थः ।

**यादु०—** विरोधिभावान्तरज्ञाने स्वबाधलक्षणमुपपाद्याध्यस्तवस्त्वभावबोधेऽपि तदुपपादयति **एवमसतो रजतस्येति** । **नागः** सीसम् । **वङ्गं** रङ्गम् । **आजानसिद्धे** स्वभावसिद्धे । न तु पूर्वज्ञानबाधकत्वेन प्रवृत्त इत्यर्थः । **बाधतिरिति** । बाधृ विलोडन इति धातुव्याख्यानादिति भावः । **अस्त्विति** । अङ्गीक्रियत इत्यर्थः । उत्तरज्ञानेन लोडनं विवक्षितमिति चेत्तत्राह **सम्यग्ज्ञानस्यापीति** । अर्थोऽपि किं शुक्ती रजतं वेति विकल्प्योभयत्रापि दोषमाह **शुक्तिशकलादेरित्यादिना** । अन्यथाऽऽकारस्य रजतस्य । **लोडनमिवेति** । नित्यनिवृत्तत्वेन तस्य मुख्यलोडनासंभवाद्गौणमेव लोडनमत्र विवक्षितम् । परित्यागरूपगुणस्य मुख्यार्थे भ्रमविषये च साम्यादिति भावः । **तत्किं वक्तव्यमेतदिति** । लक्षणवाक्य इति शेषः । उत्तरमाह **न हीति** ।

**वं०प०—** विरोधिभावान्तरज्ञाने स्वबाधलक्षणमुपपादयति **रजतत्त्वेनेत्यादिना** । असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादित्युक्तत्वादिति भावः । अध्यस्तवस्त्वभावबोधेऽपि स्वबाध-लक्षणमुपपादयति **एवमिति** । **छलेति** । अन्यथेत्यस्य तत्स्वरूपापेक्षयेत्यस्य विवक्षितत्वादभिप्रायान्तर-कल्पनेनातिव्याप्तिं कथयतः छलोत्तरत्वदूषणं स्यादित्यर्थः । शङ्कते **तत्किं वक्तव्यमेतदिति** । तदेतत्पूर्वप्रसञ्जित-स्यान्यथाकारस्य लोडनमिवेत्येतदवश्यं वक्तव्यमेव, अतो विज्ञातस्येति लक्षणवाक्ये, किं किमर्थमाचार्यैः कण्ठतो नोक्तमित्यर्थः । उत्तरमाह **न हीति** । एतदवश्यं लक्षणवाक्ये कण्ठतो न हि वक्तव्यमित्यर्थः । पुनः शङ्कते **नन्विति** । कण्ठतोऽनुक्तत्वेऽप्यर्थादुक्तमेवेत्याह **अन्यथेति** । **अनेन** अन्यथेति वचनेन ।

**आनन्दः— नागं** सीसकं **वङ्गं** त्रपु । **अन्यथा** इत्यस्य स्वरूपापेक्षयेत्यर्थः । तद्व्यावर्त्यमाह **तेनेति** । **छलप्रसङ्गादिति** । यद्यन्यथेत्यस्य स्वरूपापेक्षयेत्यनङ्गीकृत्य पटत्वाद्यपेक्षया अन्येन प्रकारेण घटत्वेन ज्ञातस्य पुनर्घटत्वादिना ज्ञानेऽतिप्रसङ्गो दीयते । तर्हि छलं स्यादित्यर्थः । छलद्वयेऽतिव्याप्तिं शङ्कते **तथापीति** । क्षणिकत्वे-ऽप्यस्तु ज्ञानस्यैव लोडनमत्राह **सम्यग्ज्ञानस्येति** । अर्थस्यापि किं शुक्तिरूपस्य रजतस्य वा नाद्य इत्याह **शुक्तीति** । द्वितीयं निराह **रजतादेरिति** । एवं च लक्षणार्थमाह **अत इति** । ननु पूर्वज्ञानप्रसञ्जितस्येत्याद्युक्तार्थस्य मूलेऽभावात् एतदपि लक्षणान्तर्गतत्वेन वक्तव्यं किमिति पृच्छति । तत्किं वक्तव्यमेतदिति परिहरति **न हीति** । लक्षणान्तर्गतत्वेन वक्तव्यमित्यर्थः । अनुक्तौ कथं तज्ज्ञास्यत इति शङ्कते **कथमनुच्यमानं ज्ञास्यत इति** । परिहरति **अन्यथेति** । एतद्विशेषणसामर्थ्यदेवोक्तार्थलाभान्न तदन्तर्भावोऽत्रेति भावः । **अन्यथेति** । एतद्विशेषणसामर्थ्यादित्यस्यावचन इत्यर्थः । विज्ञानस्य बाध्यत्वरूपत्वासंभवादपूर्णत्वाच्च शेषपूरणेन व्याख्याति **तद्विषयत्वमिति** ।

**कं०रा०—** उभयानुगतत्वमेव दर्शयति **रजतत्वादिनेत्यादिना सम्यग्विज्ञानं भवत्येवेत्यन्तेन** । **सर्वमिति** । प्रागन्यथाज्ञानं विनैवायं घटोऽयं पट इत्यादिसम्यग्ज्ञानं यज्जायते तदपि बाधः प्रसज्यत इत्यर्थः ।





अस्तु तादृशज्ञानस्यापि बाधत्वमित्यत आह **न चेति** । **तस्यैवेति** । अन्यथाविज्ञानवत एव पुरुषस्य कालान्तरभाविबाधकप्रमानन्तरभावि यत्स्वभावसिद्धं भ्रमोपमर्दकत्वेनानवतीर्णं सम्यग्विज्ञानं तत्र बाधत्वप्रसङ्ग इत्यर्थः । **पूर्वज्ञानेति** । ननु पूर्वज्ञानप्रसञ्जितान्यथाकारविलोडनात्मकत्वं नाम तन्निवर्तकत्वं वा तदभावावगाहित्वं वा तद्विरोधिभावान्तरविषयत्वं वा । नाद्यः । पूर्वज्ञानप्रसञ्जितान्यथाकारस्य नित्यं विलोडितत्वेन सम्यग्ज्ञानस्य तन्निवर्तकत्वायोगात् । न द्वितीयतृतीयौ । बाधत्वेन प्रसिद्धे पूर्वोक्तशाब्दादावव्यापनादिति चेन्मैवम् । पूर्वज्ञानप्रसञ्जितान्यथाकारविलोडनशब्देनान्यथाकारप्रसञ्जके पूर्वज्ञानेऽप्रामाण्यबुद्ध्यापादकत्वस्य विवक्षितत्वात् । भवति खलु नेदं रजतमित्यध्यस्तवस्त्वभावबोधे इयं शुक्तिरिति तद्विरोधिभावान्तरज्ञाने वाऽन्यथाकारप्रसञ्जके पूर्वज्ञानेऽप्रामाण्यबुद्धिः । एवं च न पूर्वोक्तातिप्रसङ्गः । शुक्तौ रजतत्वावगत्यनन्तरं जातस्य शुक्लत्वादिज्ञानस्य पुरुषान्तरीयशुक्तित्वादिज्ञानस्य च पूर्वज्ञाने अप्रामाण्यबुद्ध्यनापादकत्वात् । तत्पुरुषीयबाधकप्रमानन्तरभाव्याजानसिद्धशुक्तित्वादिगोचरसम्यग्विज्ञानस्य चान्यथाकारप्रसञ्जके पूर्वज्ञाने पूर्वोत्पन्नबाधकप्रमयैवाप्रामाण्यबुद्धेरापादितत्वेन तदनापादकत्वादिति । ननु पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमित्येतत्प्रमेयं भाष्यकारैः किमिति नोक्तमित्यत आह **तत्किमिति** । तदेतत्पूर्वोक्तं प्रमेयं वक्तव्यं किं न हीत्यन्वयः । शङ्कते **कथमिति** । अनुच्यमानमपीदं प्रमेयमन्यथाविज्ञातस्येति वचनसामर्थ्याद्विज्ञास्यत इत्यभिप्रेत्य परिहरति **अन्यथेति** । पूर्वज्ञानप्रसञ्जितान्यथाकारस्य विलोडनमित्यर्थतात्पर्याभावेऽन्यथाविज्ञातस्येतिवचनस्य पूर्वोक्तातिप्रसङ्गानिवारकत्वेन वैयर्थ्यात् सम्यग्विज्ञानमित्येवावक्ष्यदित्यर्थः ।

**श्रीनिधि०— तत्स्वरूपापेक्षया इति** । ज्ञानविषयधर्म्यपेक्षयेत्यर्थः । **छलप्रसङ्गादिति** । ज्ञानविषयधर्म्यपेक्षया अन्यथेत्यभिप्रायेण प्रयुक्तस्यान्यथेत्यस्य पटाद्यपेक्षया अन्यथेत्यभिप्रायेण दूषण इत्यर्थः । **आजानसिद्धे** । स्वभावसिद्धे । बाधशब्दो लक्ष्यवाचकः स च यौगिकः अतः लक्ष्यवाचिशब्दार्थ एव लक्षणशब्दार्थः । तथा च लक्ष्यशब्दार्थविचारे नातिप्रसङ्ग इत्याशयेन उक्तातिप्रसङ्गं तदर्थकथनेन परिहरति **बाधतिः खल्वित्यादिना** । बाधृविलोडन इति धातुव्याख्यानादिति भावः । **लोडनमिवेति** । वस्तुतो लोडनाभावादिवेत्युक्तम् । असत्त्वज्ञापनेन बुद्धावनारोपणं लोडनसदृशं ज्ञेयम् । लोडनम् च निवर्तनम् । पूर्वज्ञानस्याप्रामाण्यज्ञापनं बाध इति नैयायिकाः । पूर्वज्ञानप्रसञ्जिताकारस्य लोडनमिवेत्यस्य लक्ष्यवाचिशब्दार्थत्वे लक्षणवाक्येऽपि तस्याध्याहारः । विज्ञातस्यान्यथाकारस्य लोडनमिव यत् ज्ञानं स बाध इति कार्यः । किमिति पृच्छति **तत्किमिति** । नेत्याह **न हीति** । अवक्तव्यत्वे कथमस्य लाभ इति पृच्छति **कथमिति** । अनिर्वचनीयं किं निरुक्तिविरह इति, निर्वचनविषयो निर्वचनीयं तस्य भावः निर्वचनीयत्वं निरुक्तिरेव तद्विरहोऽनिर्वचनीयत्वमित्यर्थः ।

**वा०चं०—** अन्यथाविज्ञातस्येतद्व्याख्यानरूपम् 'असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादि'ति तत्त्वनिर्णयवाक्यं मनसि निधायोक्तोभयानुगममुपपादयति **रजतत्वादिनेत्यादिना** । नन्वस्य लक्षणत्वे पूर्वविशेषणाधिक्यम् । न च घटादिज्ञानानां बाधत्वनिवृत्त्यर्थं तदिति वाच्यम् । द्रव्यादिवत् बाधत्वजात्याक्रान्तस्य कस्यचिदभावात्तस्य लक्ष्यत्वेऽप्यदोषादित्यतः परीक्षकैर्लोकव्यवहारानुसारेणैव लक्षणस्य





प्रणेतव्यत्वात्सम्यग्ज्ञानमात्रस्य चातथात्वाद्युक्तं विशेषणमित्याशयेन पूर्वविशेषणव्यावर्त्यं दर्शयति **सम्यगिति** । विरोधिविषयत्वविवक्षायामप्यतिव्याप्तिरेवेत्याह **रजतत्त्वेनेति** । **नागं** सीसम् । **वङ्गं** त्रपु । **तन्निरासायेति** । न च पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनरूपतया तस्यापि बाधत्वेन लक्ष्यत्वात्तन्निरासो युक्त इति वाच्यम् । भ्रमविषयत्वेन शुक्तिरजतादितुल्यस्य नागवङ्गत्वादिरूपस्यान्यथाऽकारमात्रस्यान्यथाविज्ञातस्येत्यनेन ग्राह्यतया तल्लोडनरूपत्वस्य सम्यग्ज्ञान एव संभवेन तस्यैव लक्ष्यत्वेन विवक्षणीयतया भ्रमनिरासस्यावश्यकत्वात् । (अन्यथाऽकारलोटनरूपस्येति । लुटविलोडने भ्वादिः । अयं दिवादावपि । भाषार्थश्चुरादौ । प्रतिघाते द्युतादौ । डान्तोऽयमित्येके । ततश्च टवर्गप्रथमान्तपाठस्तृतीयान्तपाठोऽपि साधुरेवेति बोध्यम्) । ननु तथाऽपि न्यूनताऽतिप्रसङ्गान्तरनिरासाय विशेषणान्तरस्याप्यावश्यकत्वादित्यत आह **अन्यथेति** । ननु स्वरूपापेक्षयेत्यविशेषणेनातिप्रसङ्गानिरास इत्यतः शब्दसमभिव्याहारबललब्धार्थादर्थान्तरकल्पनया दूषणस्य छलप्रसङ्गेनानुपपत्त्या समभिव्याहारबलेनैवातिप्रसङ्गाप्रसक्तौ तदर्थं विशेषणस्यानावश्यकत्वादित्याह **छलेति** । ननु तथाऽपि न्यूनतैव स्थलान्तरेऽतिप्रसङ्गतादवस्थ्यादित्यतो बाधशब्दार्थनिर्वचनपरेणानेन वाक्येन बाधशब्दार्थपरधातुसूत्रपर्यालोचनायां पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनरूपस्य सम्यग्ज्ञानस्य लक्षणत्वेन लाभान्न दोष इत्याशयेन धातुसूत्रमुदाहरति **बाधतिरिति** । नन्वस्तु लोडनं तदर्थस्तद्यथाकथञ्चिदतिप्रसङ्गविषयेऽप्यस्तीत्यतस्तन्निष्कर्षं दर्शयति **तच्चेति** । **स्वत एवेति** । बाधकानवतारेऽपि व्यासङ्गादित एवेत्यर्थः । अन्यथोत्तरक्षण एव बाधकावतारनियमात्क्षणिकत्वानुपपत्तिः । एवं च बाधकज्ञानस्य न तत्र प्रयोजकतेत्याशयः । ज्ञाननाशप्रयोजकज्ञाने बाधकत्वं नास्त्यपि । न चात्र विवादः । व्यवहाराभावेन निश्चयोपपत्तेरित्याशयेनाह **सम्यगिति** । **नापीति** । बाधोत्तरमप्यनुवृत्तेरित्याशयः । तर्हि स्मृत्यर्थ एवानुपपन्न इत्यत आह **अत इति** । नन्वन्यथाकारस्यासत्त्वान्न लोडनमित्यत उक्तमिवेति । पूर्वज्ञानप्रसञ्जितान्यथाकारस्यासत्त्वेऽपि तदसहनतया ज्ञायमानत्वात्तज्जनितप्रवृत्त्यादिफलपरंपराविघटकतया तन्निवर्तकसाम्यमिवार्थ इत्याशयः । अत एव निबन्धे उदयने 'नाप्ययमेव विषयापहारो यत्तद्विषयाधिक्षेपस्वभावसमुत्पादः स च तत्फलप्रवाहप्रतिक्षेपपर्यन्त' इत्युक्तमिति ध्येयम् । नन्वेवं स्मृत्यर्थनिष्कर्षेऽपि न शुक्लत्वज्ञानादावतिप्रसङ्गपरिहार इत्यतो लक्षणेऽस्यार्थस्याभिप्रेततया नातिप्रसङ्ग इत्याशयेनाह **तथा चेति** । लक्षणे तद्वाचकपदाभावे कथमेतल्लाभ इत्याशङ्क्ते **तदिति** । अन्यथाविज्ञातस्येत्यत्र कर्मणि भूतप्रत्ययेन पूर्वत्वस्य प्रसञ्जितत्वस्य च लाभः । अन्यथेत्यनेनान्यथाकारस्य लोडनमित्यस्य लाभं दर्शयति **अन्यथाविज्ञातस्येतीति** । न च सर्वसम्यग्ज्ञानस्य बाधत्वप्रसक्तौ तद्व्यावृत्तये तद्विशेषणमिति वाच्यम् । तेन तद्व्यावृत्तावपि शुक्लत्वज्ञानाद्यव्यावृत्त्याऽतिप्रसङ्गापरिहारेणैकदेशमात्रव्यावृत्तेरप्रयोजकतया वैयर्थ्यानिस्तारात् । न चान्यथाज्ञानपूर्वकत्वाच्छुक्लत्वादिज्ञानादेः सङ्ग्राह्यत्वमेव भाष्याभिमतं किं न स्यादिति वाच्यम् । बाधत्वेन व्यवह्रियमाणत्वस्यैव लक्ष्यतयाऽन्यथाज्ञानपूर्वकेऽपि शुक्लत्वादिज्ञानादौ बाधत्वेन व्यवहाराभावेन तस्याप्यसङ्ग्राह्यत्वात् । एवमपि सङ्ग्राह्यत्वेऽविशेषात् सर्वसम्यग्ज्ञानस्यापि सङ्ग्राह्यतापत्तौ तद्व्यावृत्त्यर्थमन्यथाविज्ञातस्येति विशेषणानुपादानप्रसङ्गादित्याह **अन्यथेति** । तथा च तद्विशेषणबलेन षष्ठ्यर्थतया लोडनरूपसंबन्धलाभान्न लक्षणे तद्वाचकपदप्रक्षेप इति भावः । किं तद्बाध्यत्वमिति प्रश्नस्य व्यधिकरणमेतदुत्तरमित्यत आह **तदिति** ।

**वा०२०— व्याख्यानरूपमिति** । तत्त्वनिर्णये विस्तरेण प्रतिपादितस्यात्र सङ्कोचकरणेनैव तद्भाष्यं तद्व्याख्येयमिति भावः । **अस्य लक्षणत्व इति** । सम्यग्ज्ञानत्वमात्रमस्येत्यनेन परामृश्यते **घटादिज्ञानानामिति** । सर्वमपि सम्यग्ज्ञानमित्येतन्मूलस्य विवरणमेतत् । घटादिज्ञानलक्षणसम्यग्ज्ञानमात्रस्येत्यर्थः । अत एव तस्य लक्ष्यत्वेऽपीत्यत्र तस्येति सम्यग्ज्ञानत्वेनैव परामर्शः । सम्यग्ज्ञानमात्रस्य चेत्युत्तरत्रोक्तिश्चेति ज्ञेयम् । व्यवहाराभावपर्यन्तगमने निमित्तकथनं **द्रव्यादीति** । **विरोधिविषयत्वेति** । धारावाहिकस्थलेऽन्यथाविज्ञातस्य ज्ञानत्वे सत्यपि विरोधिविषयकज्ञानत्वस्याभावान्न तत्रातिव्याप्तिरिति भावेन तद्विवक्षायामपीत्यर्थः । **अतिव्याप्तिरेवेति** । रजतत्वेन ज्ञातस्य पुनर्नागत्वेन ज्ञाने नागत्वेन ज्ञातस्य पुनर्वङ्गत्वेन ज्ञानेति व्याप्तिः स्यादेवेत्याहेत्यर्थः । **पूर्वज्ञानेति** । रजतत्वेन विज्ञानं नागत्वज्ञानात्पूर्वजातम् । नागत्वज्ञानं च वङ्गत्वज्ञानात्पूर्वमिति विवेकः । **लोडनरूपतयेति** । तल्लोडनस्यैव बाधपदार्थत्वात् । रजतत्वेन ज्ञानोत्तरनागत्वादिज्ञानानां पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनत्वरूपलक्ष्यतावच्छेदकावच्छिन्नतया लक्ष्यत्वेन तत्रातिव्याप्तिवचनायोगात्तन्निरासाय सम्यगिति पदोपादानं न युक्तमित्यर्थः । लक्ष्यतावच्छेदकेऽन्यथाकारपदं हि अन्यथाविज्ञातस्येत्यत्रान्यथेति थाल्प्रत्ययोक्तानुसारेण । तथाच यावान् भ्रमविषय आकारः स सर्वोऽप्यन्यथेति थालोक्त एवेति लक्ष्यतावच्छेदकशरीरप्रविष्टान्यथाकार एव नागवङ्गत्वादिर्भवतीत्यतो नागवङ्गत्वादिज्ञानमन्यथाकारज्ञानमेवेति तल्लोडनरूपं न भवति । तादृशं हि भवत्सम्यग्ज्ञानमेव भवेत् । तस्यैव यावदन्यथाकारविरोधिविषयतया तल्लोडनत्वसंभवात् । न तु यत्किञ्चिदन्यथाकारविषयकमाकारान्तरावभासविरोधमात्रमपीति भावेनाह **भ्रमविषयत्वेनेति** । **तस्यैवेति** । पूर्वप्रसञ्जितान्यथाकारत्वावच्छिन्नलोडनरूपस्यैवेत्यर्थः । उक्तलोडनत्वमेव लक्ष्यतावच्छेदकमिति तदनवच्छिन्नतया भ्रमस्यालक्ष्यत्वेन तत्रातिव्याप्तिनिरास एव कर्तव्यो न तु तल्लक्ष्यत्वाभ्युपगमेन तन्निरासः । बाधकबाध्यव्यवस्थायाः सर्वैरङ्गीकारेण नागत्वादिज्ञानस्थले चोक्तरीत्या बाधकत्वप्रसङ्गेन तन्निराकरणाय वैवक्षिकबाध्यस्य लक्ष्यतया वाच्यतया तादृशबाध एव लक्षणसत्त्वस्यातिव्याप्तिरूपत्वाभावेऽप्यतादृशतत्सत्त्वमतिव्याप्तिरूपमेवेति भावः । **अतिप्रसङ्गान्तरेति** । घटस्यैव पटाद्यपेक्षयेति वक्ष्यमाणातिप्रसङ्गेत्यर्थः । तर्हि स्वरूपापेक्षयेति विशेषणीयम् । तदभावेऽतिप्रसङ्गनिरासायोगादित्याशङ्क्यान्यथाविज्ञातस्य पदार्थस्येतिशब्दसमभिव्याहारेण पदार्थस्य यत्स्वरूपं ततोऽतिरिक्तप्रकारेणेत्येवान्यथेत्यनेन गम्यमानत्वात् विशेषणानुपादानेऽपि तदर्थलाभादतिप्रसङ्गनिवृत्त्युपपत्त्या न दोष इत्यादिरूपमुत्तरवाक्याशयमाह **ननु स्वरूपेति** । अर्थान्तरकल्पनयेत्यनेनैव परोक्तस्य तदभिप्रेतादर्थादर्थान्तरं परिकल्प्य तद्दूषणेन तद्भङ्गः छलमिति छललक्षणानुगमो दर्शित इति ज्ञेयम् । **स्थलान्तर इति** । रजतत्वेनावगतस्य शुक्तिकेत्याद्युक्तस्थलत्रय इत्यर्थः । अनेनैव प्रसङ्गोऽपीत्यतःपरं तदवस्थ इत्यनुवर्तत इत्यपि सूचितम् । अनेनेति चेदित्यन्तं मूलं तात्पर्यतो विवृतम् । कालान्तरपुरुषान्तरभाविज्ञानयोर्यदि प्राचीनभ्रान्त्युन्मूलनायैव पुरुषोत्पाद्यत्वं तर्हि तयोर्बाधत्वमिष्टमेवेत्यत उक्तं मूले **आजानसिद्ध इति** । स्वभावसिद्धे शुक्तिकेन्द्रियसंप्रयोगादिसामग्रीसद्भावमात्रेणोत्पन्न इति यावत् । तथाच तस्य पूर्वभ्रान्त्युन्मूलनेन प्रवृत्त्यभावान्न लक्ष्यत्वमित्याशयो ज्ञेयः । मैवं बाधतिरित्यादेः तात्पर्यमाह **बाधशब्दार्थेत्यादि** । **अनेन वाक्येनेति** । विज्ञातस्यान्यथेति लक्षणवाक्येनेत्यर्थः । **बाधशब्दार्थपरेति** । लक्ष्यतावच्छेदकरूपप्रदर्शकधातुसूत्रेत्यर्थः । **लोडनरूपस्येति** । लक्ष्यतावच्छेदकानुसारेणैव लक्षणगतसम्यग्ज्ञानपदार्थस्य वाच्यत्वादिति भावः । **धातुसूत्र-**





**मुदाहरतीति**। अनेन **बाधतिरिति** मूले बाधृविलोडन इति धातुसूत्रमर्थतोऽनूदितमिति सूचितम्। **यथाकथञ्चिदिति**। उत्तरज्ञानेन पूर्वज्ञाननिवृत्तिरेव भवतीति तस्य तल्लोडनत्वम्। पुरुषान्तरकालान्तरभाविज्ञानयोस्तु विरोधिविषयकत्वेन लोडनत्वमित्येवं कथञ्चिदित्यर्थः। मूले अस्त्वित्यस्य वक्तव्यमित्यर्थः। **अन्यथेति**। बाधकेनैव विनाशो न तु तदन्यव्यासङ्गादिनापीत्यङ्गीकार इत्यर्थः। **तत्रेति**। पूर्वज्ञाननिवृत्तावित्यर्थः। अनेन स्वत एव ज्ञानस्य नाशो नाम स्वकारणक इत्यादिरर्थोऽनुपपन्न इत्यतो व्यासङ्गादिना नाशेऽपि बाधकेन नाशाभाव इत्यभिप्रायेणैव स्वत इत्येतद्योज्यमित्युक्तं भवति। अत एवोत्तरक्षण एवेत्यनेन क्षणिकत्वमुत्तरक्षणे बाधावतारनियमपक्षे संभवतीति वदता क्षणिकत्वनिर्वाहायोत्तरक्षणे विनाशकसमवधानं कथञ्चित्स्वीकार्यमिति प्रतिपादितमिति ज्ञेयम्। **नास्त्यपीति**। अनेन व्यवहारप्रसङ्गाच्चेति चशब्दार्थान्तर्भाविन मूले योजनीयमिति सूचयति। बाधविचारावसरे बाध्यत्वव्यवहारापादन-मसङ्गतमित्यपि न शङ्कनीयम्। अर्थविशेषाभावेन व्यवहारस्योभयथाऽप्युपपत्तेरित्याशयेन मूलोक्तबाधितत्वव्यवहारं परित्यज्य स्वयं बाधकत्वव्यवहारपुरस्कारः कृत इति ज्ञेयम्। **तर्हीति**। यदि ज्ञानार्थयोर्लोडनाभावस्तर्हीत्यर्थः। इहेति शेषः। **स्मृत्यर्थ इति**। पाणिनिस्मृतिरूपधातुसूत्रार्थ इत्यर्थः। **तदसहनतयेत्यादि**। तदुपमर्दने जायमानत्वसहिता चासौ तज्जनितप्रवृत्त्यादिफलपरम्पराविघटकता चेति शाकपार्थिवादित्वान्मध्यमपदलोपीसमासः। द्वन्द्वैकवद्भाव-माश्रित्य .................. दाविव नपुंसकलिङ्गाभाव इत्यप्याहुः। निबन्धे उदयनेनापीति। ....................त्यर्थः। **स्मृत्यर्थनिष्कर्षेऽपीति**। तावता लक्ष्यतावच्छेदकनिष्कर्षलाभेऽपीत्यर्थः। **भूतप्रत्ययेनेति**। क्तप्रत्ययेनेत्यर्थः। **अन्यथेत्यनेनेति**। प्रकारार्थकथाल्प्रत्ययान्तेनेत्यर्थः। सम्यग्विज्ञानमित्येवानुक्त्वा अन्यथाविज्ञातस्येत्यधिक-विशेषणोपादानसामर्थ्यात्पूर्वसंप्रयोजितेत्यादि विशेषलाभ इत्युक्तमाक्षिपति **न च सर्वसम्यगिति**। **तद्विशेषणं** अन्यथाविज्ञातस्येति विशेषणम्। **भाष्याभिमतं किमिति**। भाष्यकाराभिमतमिति किं न स्यादित्यर्थः। तथाच तद्वारणस्य भाष्याभिमतत्वकल्पनायोगान्नान्यथाविज्ञातस्येति विशेषणोपादानसामर्थ्यं कल्पनीयमित्याशयः। **बाधत्वेनेति**। धातुस्मृत्यनुसारेण पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनत्वस्यैव लक्ष्यतावच्छेदकतया तद्रूपबाधत्वेन व्यवह्रियमाणस्यैवेत्यर्थः। स्मृत्युक्तलोडनस्य भाष्यात्कथं लाभस्तद्वाचकपदाभावादित्यत आह **षष्ठ्यर्थतयेति**।

**स०व्र०**— तदर्थे च विचार्यमाणेऽतिप्रसङ्गो नास्तीत्याह **बाधतिः खल्विति**। ननु ज्ञानस्यापि लोडनमेव बाधो भविष्यतीत्यत आह **सम्यग्ज्ञानस्यापीति**। आत्मविशेषगुणानामुत्तरोत्तरेण पूर्वपूर्वस्य विनाश्यत्वनियमादिति भावः। **लोडनमिवेति**। तथाच गौणमेवात्र लोडनं विवक्षितं परित्यागरूपगुणस्य मुख्यार्थे भ्रमविषये च साम्यादिति भावः। अत्र अन्यथाप्रतीतिपूर्वकं तदुन्मूलनेन सम्यग्बोधो बाध इति निष्कृष्टं लक्षणम्। तत्र तदुन्मूलनं नाम तस्याः भ्रमत्वख्यापनं वा। तद्विषयस्यासत्त्वावेदनं वा। एवञ्च 'भ्रमोऽन्यदन्यथा ज्ञानं विषयीकुर्वदिष्यते। भ्रमप्रसञ्जिताकारलोडनं बाधसंज्ञितमि'ति सङ्ग्रहश्लोकः। पूर्वज्ञानप्रसञ्जितस्यान्यथा-कारस्य लोडनमिवेत्येतदपि भाष्ये वक्तव्यं किमिति पृच्छति **तत्किमिति**। नेत्याह **न हीति**। अवक्तव्यत्वे कथमस्य लाभ इति पृच्छति **कथमनुच्यमानमिति**। अन्यथाविज्ञातस्येति वचनसामर्थ्येनापि कथमिदं लभ्यत इत्यत आह **अन्यथेति**।





**विठ्ठ०**— विरोधिभावान्तरज्ञाने एतल्लक्षणानुगतिं दर्शयति **रजतत्वादिनेति** । अध्यस्तवस्त्वभावबोधेऽपि तद्दर्शयति **एवमसत इति** । **नागं** सीसम् **वङ्गं** त्रपु । **अन्यथेति** । वस्तुतः पुरोवर्तिनो यत्स्वरूपं तदपेक्षया प्रकारान्तरेणेत्यर्थः । एवं व्याख्यानस्य बीजं दर्शयति **तेनेति** । विशिष्टलक्षणस्यातिव्याप्तिमाशङ्क्य निराकरोति **तथापीत्यादिना** । आजानसिद्धे स्वभावसिद्धे न तु परीक्षादिना पूर्वज्ञानबाधकत्वेन प्रवृत्ते इत्यर्थः । अतिव्याप्तिं परिहर्तुमुपोद्घातमाह **बाधतिरिति** । बाधृ लोडने इति धातुव्याख्यानादिति भावः । **लोडनं** विलोपः । **तच्चेति** । शुक्तिरजतस्य बाधमङ्गीकुर्वता तच्च लोडनं ज्ञानस्यास्त्वित्युच्यते वा रजतरूपार्थस्यास्तु वेत्यर्थः । क्षणिकत्वेनाशुतरविनाशित्वेन स्वत एव लयात् न बाधकसापेक्षेति भावः । किञ्चिज्ज्ञानलोडनस्यैव बाधत्वे धारावाहिकासम्यग्ज्ञाने पूर्वपूर्वज्ञानस्याप्युत्तरोत्तरज्ञाननाश्यतया तत्रापि बाधितत्वव्यवहारः स्यादित्यत आह **सम्यग्विज्ञानस्येति** । अर्थस्येत्यत्रापि इदमिति ज्ञानविषयस्याधिष्ठानस्य शुक्तिकाशकलादेः लोडनं बाधः तस्योल्लेख्यस्य रजतादेर्वा इति विकल्पं मनसि निधायाद्यं दूषयति **शुक्तीति** । बाधोत्तरकालमप्यविलीनतया तादवस्थ्यादित्यर्थः । द्वितीये आह **रजतादेरिति** । स्वरूपत एवासत्त्वेन विलयानुपपत्तेरिति भावः । एवं ज्ञानार्थयोः बाधानुपपत्तौ कस्य तर्हि बाधशब्दार्थभूतं लोडनमित्यत आह **अत इति** । अतः पक्षद्वयस्याप्यनुपपन्नत्वात् भ्रमरूपपूर्वज्ञानेन प्रसञ्जितो योऽन्यथाकारो अत्यन्तासति रजते सत्त्वाकारः तस्याप्यसत्त्वेन विलयासंभवात् असत्त्वज्ञापनमेव लोडनं विवक्षितमिति वक्तव्यमित्यर्थः । अस्त्वेवं ततः किमित्यतो नोक्तस्थलद्वयेऽप्यतिप्रसङ्गः पक्षद्वयेऽपि पूर्वज्ञानप्रसञ्जितान्यथाकारस्य विलोडनाभावादित्याशयेनाह **तथा सति कोऽतिप्रसङ्ग इति** । ननु तर्हि लक्षणवाक्ये अन्यथाकारस्य लोडनमित्यर्थकं पदमध्याहार्यं किमिति पृच्छति **तत्किमिति** । उत्तरमाह **न हीति** । न वक्तव्यमित्यर्थः । तर्हि सोऽर्थः कथं लभ्यते इति शङ्कते **कथमिति** । समाधत्ते **अन्यथेति** । सत्यं अत्यन्तासतो रजतादेरन्यथा अन्याकारेण विज्ञातस्येत्यर्थस्यान्यथाविज्ञातस्येति पदसामर्थ्येन लब्धत्वमेव दर्शयति **अन्यथा सम्यग्विज्ञानमित्येवावक्ष्यत् इति** । सम्यग्ज्ञानमित्यनेनैव अध्यस्तवस्त्वभावादिरूपबाधलाभे सत्यपि अन्यथाविज्ञातस्येति विशेषोक्त्या पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनमित्यर्थो लभ्यत इति भावः । किं तद्बाध्यत्व-मित्याकाङ्क्षायां मूले बाधनिरूपणमसङ्गतमित्यत आह **तद्विषयत्वमिति** ।

**चषकः**— **विज्ञातस्येतीति** । स्वाधिकरणावृत्तिधर्मोऽन्यपदेन, तदुत्तरप्रत्ययेन प्रकारवचने थालित्यनु-शासनादभेदेन तदर्थान्वितप्रकारस्तदुत्तरलुप्तसुपा च निरूपकतया धात्वर्थान्वयिन्याधेयतया प्रकृत्यर्थविशेषिता प्रकारता । लुप्तविभक्त्यननुसन्धानपक्षे तु अभेदेन धात्वर्थान्वयिप्रकारतानिरूपकमेव लक्षणयोपस्थाप्यते । तदेकदेशप्रकारतायामाधेयतया प्रकृत्यर्थोऽन्वेति । भूताधिकारीयकर्मसाधननिष्ठान्तेन धात्वर्थनिरूपितविषयता-रूपकर्मताऽऽपन्नं तदुत्तरविभक्त्या च विशेष्यतानिरूपकत्वं प्रत्याय्यते । तदेकदेशविशेष्यताऽन्वितं स्वसमा-नाधिकरणधर्मनिष्ठप्रकारतानिरूपितत्वं सम्यगित्यनेन । तथा च स्वाधिकरणावृत्तिधर्मनिष्ठप्रकारतानिरूपिता या सांप्रतिकध्वंसप्रतियोगित्वरूपातीतत्वविशेषितज्ञानीयविशेष्यता तदापन्ननिष्ठा या स्वसमानाधिकरणधर्म-प्रकारतानिरूपितविशेष्यता तन्निरूपकज्ञानं बाध इति समुदितार्थः । वाद्यन्तरोक्तलक्षणद्वयमनूद्य प्रतिविधत्ते





**केचिदित्यादि प्रत्येकमव्यापकमिति** । अध्यस्तवस्त्वभावविषयकबोधत्वमियं शुक्तिरिति ज्ञाने विरोधिभावान्तरविषयकत्वं नेदं रजतमिति ज्ञाने अव्यापकमित्यर्थः । नन्विदं रजतमिति प्रत्यक्षं प्रतीयं शुक्तिरितिज्ञानस्य न साक्षाद्बाधरूपता सङ्गच्छते ग्राह्याभावानवगाहित्वादित्याशङ्कायां तदभावानवगाहित्वेऽपि तदभावव्याप्यवत्ताज्ञानमुद्रया तद्वत्ताज्ञानविरोधितायास्तादृशज्ञानदशायां तादृशानुमितिशाब्दबोधापत्तिवारणाय सर्वोपेततया तल्लक्ष्यताध्रौव्यादव्याप्तिः सुस्थेत्याह **शाब्दादाविति** । तस्मात् वाद्यन्तरोक्तलक्षणद्वयस्याप्यव्यापकत्वात् उभयानुगतं दर्शितबाधद्वयसाधारणमेतत् उक्तदिशा परिष्कृतम् । विशेष्यावृत्तिरजतत्वादिना विज्ञातं यच्छुक्तिशकलं शुक्तित्वेन तदवगाहिज्ञानं, सत्त्वरूपतादृशधर्मोपरागेण ज्ञानगोचररजतादिकमसत्त्वेन विषयीकुर्वत् ज्ञानं च परिष्कृतलक्षणविशेषितं भवतीति सङ्ग्राह्यसङ्ग्रहः वारणीयवारणं तु व्यक्तमेव । पूर्वदलप्रयोजनं स्फुटयति **सम्यगित्यादिना उक्तमित्यन्तेन** । सम्यक्पदप्रयोजनं दर्शयति **अन्यथेत्यादिना उक्तमित्यन्तेन** । **नागं** सीसम्, **वङ्गं** त्रपु । समुदितस्याप्यविरोधिधर्मान्तरप्रकारकज्ञाने पुरुषान्तरसंबन्धिनि तदीय एव कालान्तरभाविनि चातिप्रसङ्गमाशङ्कते **तथाऽपीत्यादिना चेदित्यन्तेन** । **आजानसिद्धे** निसर्गसिद्धे । विज्ञातस्यान्यथेति भाष्यकारीयनिर्देशस्यैवोक्तातिप्रसङ्गनिरासकतां प्रतिपिपादयिषयति **बाधतिरित्यादिना** । 'इक्श्तिपौ धातुनिर्देश' इति स्मृतेर्भवतेर इत्यादाविव बाधृधातुरित्यर्थः । लोडने ध्वंसानुकूलव्यापारे वर्तते । तादृशव्यापारवाचकः स धातुरित्यर्थः । नकुलोऽहिं बाधते अहेर्नकुलो बाधक इत्यादावहिप्रतियोगिकध्वंसानुकूलव्यापारकर्ता नकुल इति बोधोदयात् । तथा चेदं रजतमिति ज्ञानस्य नेदं रजतमित्यादिज्ञानं बाधकमिति वाक्यादपि तादृशज्ञानप्रतियोगिकध्वंसत्वावच्छिन्नजन्यतानिरूपकव्यापारकर्त्रित्यर्थो भायात् । तथा भाने च लक्ष्यासङ्ग्रहः । अत्रोत्तरक्षणे बाधकानवतारेऽपि तदुत्तरोत्पन्नकामिनीजिज्ञासादिनाऽपि पूर्वोत्पन्नभ्रमविनाशोत्पत्त्या तादृशभ्रमनाशत्वावच्छिन्नं प्रति तदुत्तरोत्पन्नबाधकज्ञानत्वावच्छिन्नस्य केनापि हेतुतायाः अनङ्गीकारात् । यदि च जन्यतायां तादृशध्वंसत्वावच्छिन्नत्वमनिवेश्य ध्वंसवृत्तित्वमात्रं निवेश्यते तदा यद्यपि आत्मविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यतोपगत्या तत्सङ्ग्रहो भवति तथाऽपि घटज्ञानोत्तरपटज्ञानेनोक्तविधया घटज्ञाननाशोत्पादादतिप्रसङ्ग इत्याह **सम्यग्विज्ञानस्येत्यादि** । षष्ठ्यन्तज्ञानपदस्य कर्मसाधनल्डन्तताऽऽश्रयेण ज्ञेयपरत्वेऽपि ज्ञाननिरूपितविशेष्यतारूपविषयताऽऽपन्नपरता तादृशप्रकारताऽऽपन्नपरता वेति कल्पद्वयीमभिप्रेत्य आद्ये तादृशशुक्तिप्रतियोगिकध्वंसस्य तदानीमनुत्पादेन द्वितीये तस्यालीकत्वेन तत्प्रतियोगिकध्वंसस्य गगनकुसुमायमानतया कल्पद्वयेऽपि सङ्ग्राह्यासङ्ग्रहो दुर्वार इत्याह **नापीत्यादि** । दर्शितदिशा मुख्यार्थोरीकृतेः प्रकृतेऽयोगेन कर्तृसाधनप्रत्ययान्तबाधकपदस्य प्रवृत्तिप्रतिबन्धकत्वावच्छिन्ने लक्षणाऽऽश्रयणीया । षष्ठ्यन्तज्ञानपदस्य तादृशप्रकारताऽऽपन्नपरतैव । इत्थं च पूर्वज्ञानीयप्रकारतारूपप्रसञ्जितत्वविशेषितालीकाकारविषयकप्रवृत्तिप्रतिबन्धकमुत्तरज्ञानमिति वाक्यार्थपर्यवसानात् । विज्ञातस्यान्यथेत्यत्रापि षष्ठ्यन्तस्य थालन्तविशेषणतया 'अव्ययादाप्सुप' इति थालन्तोत्तरलुप्तषष्ठ्याश्च प्रवृत्तिप्रतिबन्धकत्वावच्छिन्नलक्षकतया तदर्थस्यान्योत्तरपदार्थान्वये तादृशार्थस्यैव पर्यवसानेन सङ्ग्राह्याखिलसङ्ग्रहस्य वारणीयज्ञानानां च तादृशप्रवृत्तिप्रतिबन्धकताविरहेण वारणं च संभवतीत्याशयेनाभिधत्ते **अत इति** । इत्थं च लक्षणवाक्ये दर्शितातिप्रसङ्गनिरासकपदान्तरपूरणमन्तरेणापि सामञ्जस्यान्न तदावश्यकमित्याह **सामर्थ्यादित्यन्तेन** । अत्र च

द्विष्टसाधनीभूतार्थगोचरभ्रमोत्तरबाधसङ्ग्रहाय प्रवृत्तिनिवृत्त्यन्यतरप्रतिबन्धकतानिवेशोऽपि उपेक्षणीयार्थगोचरभ्रमोत्तरबाधकज्ञानस्य, इष्टसाधनताज्ञानाभावकालीनतत्साधनार्थगोचरभ्रमोत्तरतादृशज्ञानस्य चासङ्ग्रहप्रसङ्गो दुर्वारः । तत्रेष्टसाधनताज्ञानरूपकारणविरहादेवाप्रवृत्त्युपपत्तौ तत्र प्रवृत्तिप्रतिबन्धकस्याकल्पनादिति परीक्षकाणां समयादिति यदि वैयात्येनोच्यते तदा न्यायनयदिशा भङ्ग्यन्तरमपि दर्शयिष्यामः । तथाहि विज्ञातस्यान्यथा सम्यगिति प्रतीकार्थपरिष्कृतौ स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वाधिकरणवृत्तित्वस्याद्यदलनिविष्टदर्शितातीतत्वस्थानाभिषिक्तत्वोपगमेनाद्यज्ञानद्वयस्योत्तरनिविष्टप्रकारतायां स्वावच्छेदकधर्मावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपितत्वतदभावनिरूपितव्याप्त्यवच्छिन्नत्वप्रतियोगितासंसर्गावच्छिन्नतद्व्यापकविषयतानिरूपितत्वान्यतमविशेषितत्वस्य निवेशनेनोत्तरस्य च निरासात् । अत्र स्वपदेनाद्यदलनिविष्टप्रकारतोपादेया । ग्राह्याभाववत्तातदभावव्याप्यवत्तातद्व्यापकाभाववत्ताज्ञानानां सङ्ग्रहायान्यतमपर्यन्तानुधावनम् । अथ तद्वत्ताज्ञानं प्रति तदभावनिरूपितव्याप्त्यवच्छिन्नप्रकारताशालिज्ञानत्वेन तद्व्यापकवृत्तिप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताभावप्रकारताशालिज्ञानत्वेन प्रतिबन्धकतायां निर्धूमत्वव्याप्यनिर्वह्नित्वमिति ज्ञानसमवहितस्य निर्वह्निश्चायमिति ज्ञानस्य धूमव्यापको वह्निरिति ज्ञानसमवहितस्य वह्न्यभाववांश्चायमिति ज्ञानस्य समवधानदशायां च धूमवत्ताज्ञानोत्पादप्रसङ्गेन दर्शितज्ञानद्वयविशिष्टज्ञानोभयसाधारणनिर्वह्नित्वधर्मिकनिर्धूमत्वव्याप्यत्वज्ञानविशेषितनिर्वह्नित्वज्ञानत्वेन, वह्निधर्मिकधूमव्यापकताज्ञानविशेषितवह्न्यभाववत्ताज्ञानत्वेन च प्रतिबध्यप्रतिबन्धकभावस्याकरे स्थिततया दर्शितज्ञानद्वयासङ्ग्रहो दुर्वार इति चेत् । मैवम् । स्वाश्रयवृत्तिनिष्ठप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रतियोगितासंसर्गावच्छिन्नस्वाश्रयावृत्तिधर्मप्रकारताघटितधर्मज्ञानवैशिष्ट्यान्यतरविशेषितज्ञानत्वविवक्षया सामञ्जस्यात् । न चैवं समूहालम्बनमादाय घटादावपि तत्तद्विषयत्वरूपबाध्यत्वलक्षणस्य अतिव्याप्तिर्दुवारेति वाच्यम् । यादृशयादृशविषयतात्वं दर्शितान्यतरसमानाधिकरणाभावप्रतियोगिताऽवच्छेदकं तत्तदवच्छिन्नविषयिताशून्यत्वस्य ज्ञाने निवेशेनाक्षतेरित्यलं प्रपञ्चेन ।

**गूढ०— नागं** सीसकं **वङ्गं** त्रपु । **अन्यथा** इत्यस्य स्वरूपापेक्षयेत्यर्थः । तद्व्यावर्त्यमाह **तेनेति** । **छलप्रसङ्गादिति** । यद्यन्यथेत्यस्य स्वरूपापेक्षयेत्यनङ्गीकृत्य पटत्वाद्यपेक्षया अन्येन प्रकारेण घटत्वेन ज्ञातस्य पुनर्घटत्वादिना ज्ञानेऽतिप्रसङ्गो दीयते । तर्हि छलं स्यादित्यर्थः । स्थलद्वये अतिव्याप्तिं शङ्कते **तथापीति** । क्षणिकत्वेऽप्यस्तु ज्ञानस्यैव लोडनमत्राह **सम्यग्विज्ञानस्येति** । अर्थस्यापि किं शुक्तिरूपस्य रजतस्य वा नाद्य इत्याह **शुक्तीति** । द्वितीयं निराह **रजतादेरिति** । एवं च लक्षणार्थमाह **अत इति** । ननु पूर्वज्ञानप्रसञ्जितस्येत्याद्युक्तार्थस्य मूले अभावादेतदपि लक्षणान्तर्गतत्वेन वक्तव्यं किमिति पृच्छति । तत्किं वक्तव्यमेतदिति परिहरति **न हीति** । लक्षणान्तर्गतत्वेन वक्तव्यमित्यर्थः । अनुक्तौ कथं तज्ज्ञास्यत इति शङ्कते **कथमनुच्यमानं ज्ञास्यत इति** । परिहरति **अन्यथेति** । एतद्विशेषणसामर्थ्यादिवोक्तार्थलाभान्न तदन्तर्भावोऽत्रेति भावः । **अन्यथेति** । एतद्विशेषणसामर्थ्यादित्यस्यावचन इत्यर्थः । विज्ञानस्य बाध्यरूपत्वासंभवादपूर्णत्वाच्च शेषं पूरणेन व्याख्याति **तद्विषयत्वमिति** ।

**प्रदीपः**— लक्षणस्योभयत्रानुगतिं दर्शयति **रजतत्वादिनेति**। विशेषणव्यवच्छेद्यानाह **सम्यगिति**। **नागं** सीसकं **वङ्गं** रङ्गम्। ननु ज्ञानस्याविलोलनमेव बाधो भविष्यतीत्यत आह **सम्यगिति**। **नापीति**। बाधोत्तरकालमपि शुक्त्यादेरनुवर्तनान्न बाध इत्यर्थः। **अत इति**। ''भ्रमोऽन्यदन्यथाज्ञानं विषयीकुर्वदिष्यते। भ्रमप्रसञ्जिताकारलोलनं बाधसंज्ञितम्'' इति सङ्ग्रहश्लोक्तः। **न हीति**। ग्रन्थारम्भतदज्ञानस्य साक्षिचैतन्यस्येत्यर्थः।

**मायावाद्युक्तादन्येन रूपेण सिद्धान्ते ज्ञानबाध्यत्वस्य विद्यमानत्वम्—**

**३२१ सु०— अथवाऽनिवर्चनीयममुख्यं सदित्युक्तम्। तत्र किमिदमनिर्वचनीयत्वम्। किं निरुक्तिविरहः, किंवा निरुक्तिनिमित्तविरहः। नाद्यः। अनिर्वचनीयमित्यादिनिरुक्तेः सत्त्वेनासंभवित्वात्। द्वितीयेऽपि निरुक्तिनिमित्तं ज्ञानमर्थो वा स्यात्। नाद्यः ज्ञानस्योभयवादिसिद्धिसद्भावात्। न द्वितीयः यथा प्रतिभासमर्थस्यालौकिकस्य रजतादेर्मायावादिना अभ्युपगतत्वादित्याशङ्क्य परेणानिर्वचनीयस्य लक्षणद्वयमभिहितम्। सदसद्विलक्षणत्वम् अनिर्वचनीयत्वं ज्ञानबाध्यत्वं चेति।**

**परि०**— पूर्वमनिर्वचनीयत्वप्रमाणखण्डनपरतया व्याख्यातं 'वैलक्षण्यं सतश्चापी'त्यादिश्लोकत्रयम्। तल्लक्षणखण्डनपरतयाऽपि व्याख्यातुमाह **अथवेति**। **उक्तमिति**। 'सत्त्रैविध्यं च मानेने'त्यत्रोक्तमित्यर्थः।

**गु०दी०**— **यथाप्रतिभासमर्थस्य** इत्यत्र रजतावयवं विना केवलमविद्योपादानकं रजतमलौकिकरजतम्। आदिपदेन अलौकिकसर्पादिकं गृह्यते। एवं चार्थस्य प्रातिभासिकेऽप्यङ्गीकारादन्यत्र सुतरामर्थस्य सत्त्वादर्थरूपनिमित्ताभावे लक्षणस्यासङ्गतत्वेन सत्त्वस्यैव लक्षणं ममानुकूलमिति घटादिकमेव सन्तं कृत्वा तत्रैव लक्षणस्थितेरीति व्याप्तिरुक्ता वेदितव्या।

**यादु०**— **निरुक्तिनिमित्तेति**। निर् पूर्वकात् वच परिभाषण इत्यस्मात् भावेऽनीयर्प्रत्यये आद्यपक्षस्य, निर्वचनशब्दात्तस्येदमित्यर्थे छप्रत्यये तस्येयादेशे निमित्तनैमित्तिकभावस्य संबन्धत्वविवक्षायां द्वितीयपक्षस्य प्रसक्तिरित्याहुः। **ज्ञानस्येति**। मायिमते ज्ञाने ज्ञेयस्याध्यासाङ्गीकारेणाधिष्ठानरूपज्ञानस्य सत्यत्वादिति भावः। यथा चैतत्तथोक्तमधस्तात्। खण्डनेऽप्युक्तम्। 'विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिनः सङ्गिरन्त' इति। **अलौकिकेति**। प्रातिभासिकरजतादेर्लौकिकरजताद्युचितार्थक्रियाऽभावादेवालौकिकत्वमित्यवगन्तव्यम्। बाधादीत्यादिपदेन व्याहतिसङ्ग्रहः। **अव्याप्तिरिति**। इदं च दृष्टान्ते लक्षणसद्भावमभ्युपेत्योक्तम्। अन्यथाऽसंभव एवेति ज्ञातव्यम्।

**वं०प०**— पूर्वमनिर्वचनीयत्वप्रमाणखण्डनपरतया 'वैलक्षण्यं सतश्चापी'त्यादि श्लोकत्रयं व्याख्यातम् । इदानीं तल्लक्षणखण्डनपरतया व्याकरोति **अथवेति** । निरुक्तिर्व्यवहारः । अलौकिकस्य व्यावहारिकभिन्नस्य प्रातिभासिकस्येत्यर्थः । **अव्याप्तिरिति** । सद्विलक्षणत्वस्याभावे सत्त्वेऽपि वियदादावभावेनाव्याप्तिरित्यर्थः । एवमसद्विलक्षणत्वेऽपि द्रष्टव्यम् । प्रमाणबाधितत्वोपपादनाय सत एव सत्त्वेन प्रमितस्येत्याद्युक्तम् । सन्घट इत्यादिना सत्त्वेन प्रमितस्यैवेत्यर्थः ।

**आनन्दः**— एवं प्रतिज्ञाहेतुदृष्टान्तदूषणपरतया एतानि वाक्यानि व्याख्यायाधुना अनिर्वचनलक्षण-निराकरणपरतया वैलक्ष्यण्यमित्यादिवाक्यानि व्याख्यातुमाह **अथवेति** । **अनिर्वचनीयत्वमिति** । अनिर्वचनीयमेव अनिर्वचनीयमिति भावे, निरुच्यतेऽनेनेति निर्वचनीयमिति करणे वा अनीयर् । न च भावकर्मणोरेव तद्विधानात् कथं करणे स इति वाच्यम् । कृत्यल्युटो बहुलमिति बहुलग्रहणात्करणेऽपि तदुपपत्तिः । तथाच निरुक्तिविरहो निरुक्तिनिमित्तविरह इत्युभयमपि पदारूढमिति भावः ।

**श्रीनिधि०**— **निरुक्तिनिमित्तविरह इति** । निर्वचनसंबन्धि निर्वचनीयम् । संबन्धार्थे छप्रत्ययः । निरुक्तिनिमित्तं ज्ञानं वा । अर्थो वा । निर्वचनीयविरहि अनिर्वचनीयम् । अनिर्वचनीयस्य भावः अनिर्वचनीयत्वं निरुक्तिनिमित्तविरह एवेति भावः ।

**वा०चं०**— एवं लक्षणप्रमाणाभ्यां वस्तुसिद्धावपि लक्षणस्येतरव्यावृत्तवस्तुस्वरूपोपस्थितिमात्रहेतुत्वेन प्रमाणस्यैव च तत्सत्तानिश्चायकतया प्राधान्यात्तत्क्रममनुसन्धाय सदसद्विलक्षणत्वरूपानिर्वचनीयत्वे साक्षात्प्रमाणस्य निरासाज्ज्ञानबाध्यत्वरूपे तस्मिन्हेतुनिरासन्यायेन प्रमाणनिरासलाभेनानिर्वचनीयत्वप्रमाणनिराकरणस्य वैलक्षण्यं सतश्चापीति श्लोकत्रयेण लाभाल्लक्षणानिरासप्रयुक्तभाष्यन्यूनतापरिहारायानिर्वचनीयलक्षणनिरासपरतयाऽपि तत् व्याख्याति **अथवेति** । ननु मिथ्यात्वसाधकत्वोभयोपपादकतया सदसद्वैलक्षण्यप्रसक्तावपि नानिर्वचनीयत्व-प्रसक्तिरिति तल्लक्षणनिरासपरतया व्याख्यानमनुपपन्नमिति चेन्न । प्रमाणनिराकरणपरतयेव लक्षणनिराकरणपरतयाऽपि भाष्यकारस्वारस्यलाभाद्भाष्ये लक्षणनिरासोऽप्यभिप्रेत एव । स च पूर्वत्र सामान्याभिप्रायाकल्पनेऽनुपपन्न इति पूर्वत्र सामान्याभिप्रायेऽवश्यं कल्पनीयेऽनिर्वचनीयत्वमपि प्रसक्तमेवेति नानुपपत्तिरित्याशयेन पूर्वं स्वयमेव दर्शितामनिर्वचनीयत्वसामान्यप्रसक्तिं सूचयति **अनिर्वचनीयमिति** । ननु तथाऽपि भाष्ये न्यूनतैव । लक्षणद्वय-निराकरणेऽप्यनिर्वचनीयशब्दार्थभूतलक्षणान्तरानिराकरणादित्यतः परेण लक्षणान्तराण्याशङ्क्य निराकृत्यैतल्लक्षण-द्वयस्यैव व्यवस्थापिततयाऽन्येषां परानभिप्रेततया तदभिप्रेतयोश्च दूषणान्न न्यूनतेत्याशयेन भाष्यमवतारयति **तत्रेति** । अत्र निरुक्तिर्निर्वचनीयं भावेऽनीयर् । न विद्यते निर्वचनीयं यत्र तदनिर्वचनीयं निरुक्तिविरह एवेत्याशयेन आद्यः कल्पः । निर्वचनसंबन्धिनिर्वचननिमित्तमिति यावत् निर्वचनीयमिदमर्थे छः । न विद्यते निर्वचनीयं यत्रेत्य-निर्वचनीयम् । निर्वचननिमित्तरहितं तस्य भावो निमित्तविरहोऽनिर्वचनीयत्वमित्याशयेन द्वितीय इति ज्ञेयम् । शब्दप्रयोगे करणतया ज्ञानस्य विषयतयाऽर्थस्य च निमित्तत्वाद्विकल्पयति **द्वितीयेऽपीति** । विषयज्ञानं हि

शब्दप्रयोगे कारणम् । तच्च त्वयाऽप्यभ्युपेयत एवेत्याह **नाद्य इति** । **यथा प्रतिभासमिति** । ननु रजताभ्युपगमे तदुचितार्थक्रियाप्रसङ्ग इत्यतोऽर्थक्रियानर्हत्वरूपालौकिकत्वेन रजतादिकं विशेषितम् । ननु तर्हि तदभ्युपगमो व्यर्थ इत्यतोऽसतः प्रतिभासासंभवादस्य च प्रतिभासादाविद्यकतदभ्युपगम इत्याशयेन यथाप्रतिभासमित्युक्तम् । यद्वा तत्तदुचितार्थक्रियानर्हत्वे कुतस्तस्य रजतादित्वमित्यतस्तथा तथा प्रतिभासनादित्याशयेन तदुक्तम् । अथवाऽर्थक्रियानर्हत्वरूपालौकिकत्वोपपादकत्वहेतुसूचनाय तदुक्तिरिति ध्येयम् ।

**वा०र०**— एवं बाधलक्षणपदकृत्यकथनमूलटीकायां लक्ष्यत्वादित्याद्युक्तितात्पर्यविषयतया लक्ष्यतावच्छेदकधर्मस्य तत्र तत्र व्याख्यानेन तद्बाधत्वोपपादनेन लक्ष्यत्ववचनादेरुपपत्तेः कृतत्वाल्लक्ष्यतावच्छेदकपरतया तत्र तत्र क्रियमाणव्यवहारस्य लक्षणव्यवहारस्य चाविवेकमूलाव्याप्तिपरिहाराद्यसाङ्गत्यशङ्का गर्भस्रावेण गतेति सूरयो विदांकुर्वन्तु । वैलक्षण्यं सतश्चापीत्यादिश्लोकत्रयमनिर्वचनीयत्वप्रमाणनिरासपरत्वेन योजयित्वा पश्चात्तल्लक्षणनिरासपरतया योज्यते मूले । तत्कथम् । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिस्तत्रापि लक्षणविशिष्टे प्रमाणाकाङ्क्षा । तथैव जन्माधिकरणमूले प्रतिपादयिष्यमाणत्वात् । ततो निर्वचनीयत्वं निराकुर्वता प्रथमप्राप्ततल्लक्षणनिरासपरतयोक्तभाष्यं योजयित्वा नन्तरं तत्प्रमाणनिरासपरतया तद्योजनायाः कर्तव्यत्वादित्याशङ्कां परिहरन् पूर्वग्रन्थार्थकथनपूर्वकं तत्सङ्गतत्वेनोत्तरग्रन्थमवतारयति **एवं लक्षणप्रमाणाभ्यामित्यादिना** । अत्रैवमनिर्वचनीयत्वप्रमाणनिराकरणस्य वैलक्षण्यं सतश्चापीति श्लोकत्रयेण लाभादित्यादि व्याख्यातीत्यन्तं प्रथमतो योज्यम् । तत्र च लाभादित्यस्य लाभमुपवर्ण्येत्यर्थकत्वं पञ्चम्या ल्यबन्तलोपनिमित्तकत्वाल्लभ्यते । अन्ये तु लाभादित्यनन्तरं तेन तत्प्रमाणनिरासेऽपीति पूरणीयम् । लक्षणानिरासेत्यस्य च लक्षणानिरासात्तत्प्रयुक्तेति योजना कार्येत्याहुः **तद्व्याख्यातीति** । तत्पदेन श्लोकत्रयपरामर्शः । अस्य प्रमाणनिरासकत्वे च नैकप्रकारमिति दर्शयितुं तद्विवेकमाह **सदसद्विलक्षणत्व इत्यादि** । **हेतुनिरासन्यायेनेति** । तन्निरासरूपोपायेन प्रमाणनिरासलाभेनेत्यस्यार्थतः प्रमाणनिरासादित्यर्थः । प्रमाणनिरासपरतयोपवर्णनानन्तर्यलक्षणनिरासस्य कथमित्यत उक्तं **लक्षणप्रमाणाभ्यामित्यादि** । अत्र सिद्धावपीत्यन्तेन जन्माधिकरणे तत्क्रिमोपादानं सहेतुकमस्तीति सूचयतात्र शङ्काबीजमुक्तम् । क्रममनुसन्धायेत्यस्यानिर्वचनीयत्वप्रमाणेत्यादिसंबन्धः । **मिथ्यात्वसाधकत्वेति** । मिथ्यात्वं च साधकत्वं चेत्येतदुभयेत्यर्थः । मिथ्यात्वोपपादकतया सद्वैलक्षण्यस्य साधकत्वोपपादकतया चासद्वैलक्षण्यस्येति विवेकः । **नानिर्वचनीयत्वेति** । अनिर्वचनीयत्वस्य प्रसक्तिर्नेत्यर्थः । ननु नामुख्यं सदसदित्याशङ्काग्रन्थे किन्त्वनिर्वचनीयमित्यनिर्वचनीयत्वस्यैवोत्त्यनन्तरं न च तदपि दुर्वचमित्याशङ्कापरिहारायैव सदसद्विलक्षणत्वस्य तत्त्वादित्युक्तत्वेन वैलक्षण्यं सदसतोरित्येतद्व्यावर्त्यशङ्काग्रन्थादेवानिर्वचनीयत्वस्य प्रसक्तिसत्त्वात्कथं तदभावोक्तिरिति चेत्सत्यम् । मिथ्यात्वसाधकत्वोभयनिर्वाहाय सदसद्विलक्षणत्वस्यैव वाच्यत्वेऽनिर्वचनीयत्वमुखेन तत्रापि तस्यावाच्यत्वादित्यभिप्रायात् । अत एव पूर्वत्र सामान्याभिप्रायकल्पनमुपपादयिष्यत इति ज्ञेयम् । **प्रमाणेति** । सदसद्विलक्षणत्वे प्रमाणेत्यर्थः । वस्तुतस्तु वैलक्षण्यं सतश्चापीत्यादिश्लोकत्रयस्य प्रमाणलक्षणयोर्मध्ये प्रमाणनिरासपरतयेति संमुग्ध एवार्थः । लक्षणेत्यत्रापि संमुग्धेनार्थः । तच्च लक्षणमनिर्वचनीयत्वस्येति सिद्धमेव । **पूर्वत्रेति** । वैलक्षण्यं सदसतोरित्येतदवतारशङ्काया-





मनिर्वचनीयत्वरूपसामान्यमुखेन प्रवृत्त्यभिप्रायाकल्पने भाष्यकारस्य विशिष्य सदसद्वैलक्षण्यस्यैवाशङ्काभिप्राय-कल्पने चेत्यर्थः । **पूर्वमिति** । अनेन तदुपपादनं च प्राकृतं स्मारितम् । उक्तं च प्राङ् नामुख्यमित्येतद्व्याख्यावसरे । यद्यप्यत्रेत्यादि किन्तु सदसद्विलक्षणमित्युक्तौ लाघवमित्यन्तमिति ज्ञेयम् । **नानुपपत्तिरिति** । अप्रसक्तलक्षण-निरासपरतया व्याख्यानानुपपत्तिर्नास्तीत्यर्थः । **परेणेति** । तत्त्वप्रदीपिकाकृता चित्सुखेनेत्यर्थः । किन्निरुक्ति-विरहः । निरुक्तिनिमित्तविरहो वेति विकल्पद्वयस्यानिर्वचनीयपदात्कथमुपस्थितिरित्यतो द्वितीयेऽपि निरुक्तिनिमित्त-मित्येतदुपपादनस्य नयनप्रसादिन्यां कृतत्वेऽपि प्रथमविकल्पस्य तत्रानुपपादनात्तत्त्वप्रदीपिकानुवादमूलाभिमत-तयोक्तविकल्पप्रवृत्तिमाह **अत्र निरुक्तिरिति** । भावेऽनीयरिति दीर्घनीकारपाठः । तव्यत्तव्यानीयर इति सूत्रेण निरुपसृष्टाद्वचपरिभाषण इत्यस्मादनीयरप्रत्यय इत्यर्थः । **तदनिर्वचनीयमिति** । निर्वचनीयपदार्थनिरुक्तेर्विरहव-दित्यर्थः । **निरुक्तिविरह एवेति** । निरुक्तिविरहवतो भाव इत्युक्ते तद्विरहस्यैव प्राप्तत्वादित्याशयः । निर्वचनसंबन्धि हि निर्वचनीयम् । तच्च निमित्तमपि भवतीति नयनप्रसादिनीमप्युपपादयन्नाह **निर्वचनसंबन्धीति** । **इदमर्थ इति** । यज्ञदत्तीयं प्रयोजकीयमित्यादाविव वा नामधेयस्येति सूत्रेण निर्वचनशब्दस्य वृद्धसंज्ञायां वृद्धाच्छ इति सूत्रेण तस्येदमित्यर्थे छप्रत्यये तस्य ईयादेशे यस्येति चेत्यकारलोपे च निर्वचनीयमिति सिध्यतीति भावः । **निमित्तरहितमिति** । निमित्तविरहवदित्यर्थः । **ज्ञानस्येति** । निमित्तत्वादित्युत्तरेण संबन्धः । यद्यपि तत्त्वप्रदीपिकाया-मर्थस्यापि सतो विरहेऽसत्ख्यात्यापत्तिरसतो विरहे सत्ख्यात्यापत्तिरित्यादिकमाद्यपक्षदूषणविस्तरेणोक्तं तथापि ग्रन्थगौरवभयेन मूले यथा प्रतिभासमर्थस्येत्यादिना तन्निष्कर्ष एवोक्तः । तत्रालौकिकपदव्यावर्त्यप्रदर्शनपूर्वकं तत्तात्पर्यं प्रकृतानुगुणतया दर्शयति **ननु रजतेत्यादिना** । **आविद्यकं तदिति** । आविद्यकस्य तस्य रजतादेरभ्युपगमः क्रियत इति शेषः । अनेन प्रतिभासरूपान्निमित्तादभ्युपगतत्वादित्यभ्युपगमविशेषणतया यथाप्रतिभासमित्येतद्योजितं भवति । **तथा तथेति** । रजतत्वोरगत्वादिना प्रतिभासनादित्यर्थः । अनेन रजतत्वोरगत्वादिना प्रतिभासाद्रजतादेः रजतत्वादिकं प्राप्तस्येत्येवं यथा प्रतिभासादित्यस्य रजतादेरित्यनेन संबन्धो दर्शितो भवति । **हेत्विति** । अनेन यथाप्रतिभासं प्रातिभासिकत्वादलौकिकमिति यथाप्रतिभासमित्यस्यालौकिकेत्यनेन संबन्ध इति सूचयति **द्वयमभिहितमिति** मूलम् । यद्यपीदमपि द्वयं परेण शङ्कावसर एव निराकृतम् । तथापि अत्रोच्यते । 'प्रत्येकं सदसत्त्वाभ्यां विचार-पदवीं नयत् । ग्राह्यते तदनिर्वाच्यमाहुर्वेदान्तवादिन इत्यादिसिद्धान्तग्रन्थे विशिष्योपपादितैतल्लक्षणद्वयमभिप्रेत्य तदभिहितत्वोक्तिः । अत एवोत्तरत्र सत्त्वेनासत्त्वेन च विचारासहत्वमिति प्रतिपन्नोपाधाविति च तन्निष्कर्ष-मप्याशंक्य निराकरिष्यति । अधिकं सत्त्वेनेत्येतट्टीकाव्याख्यावसरे स्पष्टयिष्याम इति ज्ञेयम् ।

**स०व्र०**— **निरुक्तिविरह इति** । निर्वचनमेव निर्वचनीयमितिभावेऽनीयर्प्रत्यये अनिर्वचनीयपदेन निरुक्तिविरहो लभ्यत इति भावः । **निरुक्तिनिमित्तेति** । कर्मकारक एवानीयरप्रत्ययविधानेऽपि निर्वचनं प्रति कर्मकारकगतकर्मत्वविवक्षया कारकत्वमात्रविवक्षया निर्वचनसंबन्धिनिर्वचनीयमिति लभ्यते । तच्च निमित्तमपि भवति । कारणतया तत्संबन्धित्वात् । तथा विषयतया अर्थोऽपि । तयोर्विरहोऽनिर्वचनीयपदेन लभ्यत इति भावः । **अलौकिकरजतादेरिति** । लौकिकरजतोचितार्थक्रियाकारित्वशून्यरजतादेरित्यर्थः ।

**विठ्ठ०**— पूर्वं विश्वस्य निर्वचनीयत्वे प्रमाणं नास्तीति प्रमाणखण्डनपरतया व्याख्यातं वैलक्षण्यं सतश्चापीति श्लोकत्रयमनिर्वचनीयलक्षणदूषणपरतयाऽपि व्याचष्टे **अथवेत्यादिना**। अनिर्वचनीयत्वं निर्वचनानर्हत्वं तच्च वचनाभावेन वा निर्वचननिमित्ताभावेन वेत्यभिप्रेत्य विकल्पयति **किमिदमिति**। **निरुक्तिरिति**। नितरामुक्तिः निरुक्तिः तत्प्रतिपादकवचनमिति यावत्। असंभवित्वादित्यतःपरमुक्तलक्षणस्येति शेषः। निर्वचने निमित्ताभावश्च निर्वाच्यस्य ज्ञानाभावो वा तत्स्वरूपस्यैवाभावो वा इति विकल्पयति **द्वितीयेऽपीति**। **ज्ञानस्येति**। मायिना ज्ञानसत्यत्वाङ्गीकारप्रकारस्तु ज्ञानं ब्रह्मैव परमार्थसदित्यत्र दर्शितम्। **यथा प्रतिभासमिति**। प्रतिभासमनतिक्रम्य प्रातिभासिकत्वेनेति यावत्। प्रातिभासिकत्वेऽपि अर्थक्रियानर्हत्वेन लौकिकरजतवैलक्षण्यादलौकिकेत्युक्तिः सत्त्वाविरोधित्वेनेत्यत्र अस्मदभिमतसत्त्वाविरोधित्वेनेत्यर्थः। बाधादीत्यादिपदेन सदसद्विलक्षणमिति प्रतिज्ञावाक्ये व्याहतिग्रहणम्।

**गूढ०**— एवं प्रतिज्ञाहेतुदृष्टान्तदूषणपरतया एतानि वाक्यानि व्याख्यायाधुना अनिर्वचनलक्षण-निराकरणपरतया वैलक्ष्यण्यमित्यादिवाक्यानि व्याख्यातुमाह **अथवेति**। **अनिर्वचनीयत्वमिति**। अनिर्वचनमेव अनिर्वचनीयमिति भावे, निरुच्यते अनेनेति निर्वचनीयमिति करणे वा अनीयर्। न च भावकर्मणोरेव तद्विधानात् कथं करणे स इति वाच्यम्। कृत्यल्युटो बहुलमिति बहुलग्रहणात्करणेऽपि तदुपपत्तिः। तथाच निरुक्तिविरहो निरुक्तिनिमित्तविरह इत्युभयमपि पदारूढमिति भावः।

**३२२ सु०**— तत्राद्यं तावन्निराकरोति **वैलक्षण्यं सतश्चेति**। व्याख्यानानि तु पूर्ववदेव। तत्र यावत्सु पक्षेषु सिद्धार्थत्वपर्यवसानं तावत्स्वनिर्वचनीयत्वस्य सत्त्वाविरोधित्वेन न सन् प्रपञ्चः किन्त्वनिर्वचनीय इत्यारम्भासङ्गतिर्दोषोऽवगन्तव्यः। यत्र पुनर्बाधादिपर्यवसानं तत्र अव्याप्तिरवगन्तव्या। अथवाऽनिर्वचनीयत्वेन वियदादिकं शुक्तिरजतादिकं च परस्य अभिमतम्। तत्र **सत** एव सत्त्वेन प्रमितस्यैव वियदादेः **विश्वस्य असद्विलक्षणत्वमेव स्वयं सत्**। एवम् **असत** एवासत्त्वेन प्रमितस्यैव शुक्तिरजतादेः **विश्वस्य** सर्वस्याप्यारोपितस्य **सद्विलक्षणत्वमेव स्वयं सत्**। वियदादावसद्विलक्षणत्वमेवास्ति। सद्वैलक्षण्यं तु प्रमाण-बाधितम्। तथा शुक्तिरजतादौ सद्विलक्षणत्वमेवास्ति। असद्वैलक्षण्यं तु प्रमाणविरुद्धम्। अतोऽसंभविना तेन लक्षणेनोक्तेन **कथं तेऽनिष्टं** निग्रहस्थानं **न भवेत्** इत्यादियोजना द्रष्टव्या। भेदवादिन इत्यनेन मायावादिनो वियदादौ सद्वैलक्षण्याङ्गीकारः शुक्तिरजतादौ चासद्विल-क्षणत्वाभ्युपगतिराग्रहमात्रमूलैवेत्यभिप्रैति ॥ 'यद्युच्यत' इत्यत्राप्युक्तरीत्याऽसंभवित्वादिकं ज्ञातव्यम्। 'सन्मात्रत्वमि'त्यनेनातिव्याप्तिरुच्यते। तथा हि। **ब्रह्मणोऽपि सन्मात्रत्वं** सत्त्वा-नधिकरणत्वमिति यावत्। 'मायावादिनाऽभ्युपगतमि'ति शेषः। निर्धर्मकत्वाङ्गीकारात्।





**असत्त्वानधिकरणत्वं तु निश्चितमेव । तस्मात्तदपि ब्रह्मापि सन् नो भवेत् किन्त्वनिर्वाच्यं प्रसज्येतेति । सत्त्वेनासत्त्वेन च विचारासहत्वम् अनिर्वचनीयत्वं न पुनः सत्त्वासत्व-धर्मानधिकरणत्वम्, ब्रह्म तु सत्त्वेन विचारसहं कथमनिर्वचनीयं स्यादिति चेन्न । सत्त्वेनेति त्वप्रत्ययार्थस्यानभ्युपगमात् । किञ्च यो वियदादौ विचारः स ब्रह्मण्यपि समान इति कथं न तस्यानिर्वचनीयत्वम् । यथोक्तम् । 'सर्ववैलक्षण्याङ्गीकारादि'त्यादि । निराकरिष्यते चासौ दुर्विचारस्तत्र तत्रेति ।**

परि०— **आरम्भासङ्गतिः** । उपक्रमानानुगुण्यम् । आद्यपद्यं प्रकारान्तरेणाद्यलक्षणस्या-संभवोक्तिपरतया व्याचष्टे **अथवेति** । चोऽवधारण इति भावेन सत एवेत्यनुवादः । सत्त्वेन प्रमितस्यैवेति व्याख्या । असतश्च वैलक्षण्यमित्यस्यार्थोऽसद्विलक्षणत्वमेवेति । असत एवेत्यनुवादो ध्येयः । विश्वस्ये-त्यनुवादः । सर्वस्यारोपितस्येति व्याख्या । सतश्च वैलक्षण्यमित्यावृत्तस्यार्थः **सद्विलक्षणत्वमेवेति** । तात्पर्यमाह **वियदादाविति** । चतुर्थपादं व्याचष्टे **अत इति** । इत्यादीत्यादिपदेन सतो घटादेः सतो वैलक्षण्यं च सदन्तरपटादिवैलक्षण्यमेव स्वयं सत् न तु सर्वात्मना सद्वैलक्षण्यम् । एवमसतोऽसत्त्वेन प्रमितशुक्तिरूप्यादेरसदन्तरवैलक्षण्यमेव प्रमितं न सर्वात्मनाऽसद्वैलक्षण्यम् । अतोऽसंभविना तेन लक्षणेनेत्यादियोजनाग्रहः । 'यद्युच्यतेऽपि सर्वस्मादि'तीत्यर्धश्लोकस्यापि लक्षणखण्डनपरत्वं लेशेन दर्शयति **यद्युच्यत इत्यत्रापीति** । **उक्तरीत्येति** । मानखण्डनपरतया कृतयोजनायामुक्तरीत्येत्यर्थः । यद्वा सत्त्वेन प्रमितस्य वियदादेः असद्विलक्षणत्वमेवेत्युक्तरीत्येत्यर्थः । तथाच सर्वस्मात्सतो वैलक्षण्यं सर्वसत्त्वानधिकरणत्वादिरूपसद्वैलक्षण्यं यद्युच्यते तर्हि सद्भेद एव प्राप्त इति वियदादौ लक्षणमसंभवि । शुक्तिरूप्यादौ सर्वसद्वैलक्षण्यभावेऽपि वियदादावभावादव्याप्तिरित्येवं ज्ञेयमिति भावः । **इत्यनेनेति** । इत्यर्धेनेत्यर्थः । शङ्कते **सत्त्वेनेति** । अनभ्युपगमात् । ब्रह्मणीति योज्यम् । काल्पनिकं तदस्तीति मन्वानं प्रत्याह **किञ्चेति** । **यो विचार इति** । सत्त्वेनासत्त्वेन नित्यत्वानित्यत्वादिना केनापि रूपेण विचारसहं नेति विचारासह इत्यर्थः । **यथोक्तमिति** । तत्त्वोद्योते । 'दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वे वा नानिवर्चनीयसिद्धिरि'ति पूर्ववाक्ये प्रमाणसिद्धेऽर्थे तर्कविरोधोऽकिञ्चित्कर इत्युक्ते तत्कथमित्याकाङ्क्षायां 'सर्ववैलक्षण्याङ्गीकारात् दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव । जगतो भिन्नमभिन्नं वेत्यादि विकल्पस्तत्रापि युज्यत' इत्यादिना जगतः सत्त्वादिदौर्घट्यवत् ब्रह्मणोऽपि दौर्घट्यमुक्तमित्यर्थः । **असौ दुर्विचार इति** । सत्त्वेनासत्त्वेन वा विचारासहत्वरूपो दुर्विचारः 'प्रकृतिश्च', 'नाभाव उपलब्धेः', 'पृथगुपदेशादि'त्याद्यधिकरणव्याख्याऽवसरे तत्र तत्रेत्यर्थः ।

**गु०दी०— यत्र पुनर्बाधादिपर्यवसानम्** इत्यत्र भावे भावत्वमेव प्रमितं तत्र पुनर्भावत्वस्यैवाभावसाधने बाधः। अभावेऽभावत्वमेव प्रमितम्। तत्र पुनरभावत्वस्यैवाभावसाधने बाध इत्यनुमानपक्षे अंशद्वयस्य स्थानद्वये बाध उक्तः लक्षणपक्षेऽव्याप्तिः तयोर्विशेषणयोः परस्पराव्याप्तिरित्यर्थः। आदिपदेन सत्त्वनिषेधेऽसत्त्वमेव प्राप्तं पुनस्तस्यापि निषेधे व्याहतिरिति यो व्याघात उक्तस्तस्य ग्रहणम्। तस्यापि लक्षणपक्षे एकैकांशस्यासत्त्वेनापरांशस्य बाधितत्वेन परस्पराव्याप्तावेवान्तर्भावः। उभयत्रापि मिलितस्य लक्षणस्यासंभव एव दोष इत्याह **अथवेति**।

**यादु०—** आरम्भासङ्गतिर्न लक्षणदोष इत्यरुचेराह **अथवेति**। **उक्तरीत्येति**। अनेकसत्त्वानधिकरणत्वसर्वसत्त्वानधिकरणत्वसत्तासामान्यानधिकरणत्वरूपलक्षणानां सद्भेदसंस्थितिरित्युक्तसद्भेदाङ्गीकारप्रसङ्गभीत्या कुत्रापि परेणोपपादयितुमशक्यत्वादसंभव इत्यर्थः। आद्यलक्षणद्वये एकैकसत्तास्वीकारापत्तेरित्युक्तत्वेन तृतीयलक्षणे चातिरिक्तानुगतसामान्यानङ्गीकारादित्युक्त्या सिद्धसाधनताया उपपादितत्वात् आरम्भासङ्गतिरत्रादिशब्दार्थतया ज्ञातव्या। **यथोक्तमिति**। तत्त्वोद्योत इति शेषः। सर्ववैलक्षण्याङ्गीकारादित्यस्य चेतनाचेतनादिभावस्य परेण निर्धर्मके ब्रह्मण्यनङ्गीकारेण ब्रह्माप्यनिर्वचनीयं स्यादित्यर्थः।

**वं०प०— एवमसत्त्वेन प्रमितस्यैवेति**। असदेव रजतं प्रत्यभादित्युत्तरकालीनानुभवादित्यर्थः। अस्यां योजनायां त इति षष्ठ्या निर्दिष्टस्य मायावादिनो विशेषणम्। भेदवादिन इति तदभिप्रायमाह **भेदवादिन इत्यनेनेति**। सदसतोः प्रत्येकं भेदवादिन इत्यर्थः। सत्त्वेन प्रमितस्यापि वियदादेः सद्विलक्षणत्वाङ्गीकारेऽसत्त्वापत्त्या-ऽसत्त्वेन प्रमितस्यापि शुक्तिरजतादेरसद्विलक्षणत्वाङ्गीकारे सत्त्वापत्त्या सदसद्भेदवादित्वं न स्यादित्याशयः। **विचारासहत्वमिति**। 'प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्। गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिन' इति वचनादिति भावः। **अनभ्युपगमादिति**। सत्त्वेन विचारसहत्वं नाम सत्त्वप्रकारकविचारगोचरत्वम्। तत्र विचारसहत्वस्याङ्गीकृतत्वेऽपि त्वप्रत्ययार्थभूतसत्त्वप्रकारकत्वरूपधर्मस्यानभ्युपगमादित्यर्थः। **विचार इति**। निरुक्तानिर्वचनीयत्वप्रतिपादनायेत्यर्थः। **समान इति**। तथा च ब्रह्मणोऽप्यनिर्वाच्यत्वं स्यादित्यर्थः। कथं समान इत्यतस्तत्र तत्त्वोद्योतसंमतिमाह **यथोक्तमिति**।

**आनन्दः—** नन्वस्मिन्पक्षे कथं व्याख्यानमित्यत आह **व्याख्यानानि त्विति**। ननु पूर्वं हि सिद्धसाधनत्वबाधादिदूषणमुक्तम्। न च तल्लक्षणपक्षे संभवति। अव्याप्त्यादेरेव तद्दूषणत्वादित्यत आह **तत्र यावत्स्विति**। नन्वतिव्याप्त्यादेरेव लक्षणदोषत्वादारम्भासङ्गतिः। कथं न दोषे इति चेत् न। उक्तविधा-निर्वचनीयत्वस्य सत्त्वाविरोधित्वात् सति ब्रह्मण्यपि सत्त्वेनातिव्याप्तावस्य तात्पर्यमिति ज्ञेयम्। अत एव यत्र बाधादिपर्यवसानं तत्राव्याप्तिरित्युक्तम्। असंभवप्रदर्शनपरत्वेनापि योजयति **अथवेति**। इत्यादीत्यत्रादिपदेन सतो ब्रह्मणोऽपि सतो विश्वस्य सकाशात् वैलक्षण्यमसतोऽपि वैलक्षण्यं स्वयं सदेव अतोऽस्य ब्रह्मण्यपि सत्त्वादतिव्याप्तेन तेनोक्तलक्षणेन तेऽनिष्टं निग्रहस्थानं कथं न भवेदिति योजना ग्राह्या। नन्वस्मिन्पक्षे भेदवादिन इति अनर्थकमत्राह **भेदवादिन इति**। यद्युच्यत इत्येतदनर्थकमत्राह **यद्युच्यत इति**। **उक्तरीत्येति**। एकसत्त्वा-





नधिकरणत्वमित्याद्युक्तरीत्येत्यर्थः । तत्रोक्तपञ्चमपक्षदूषणानुसारे संभवित्वम् । आद्यपक्षचतुष्टयदूषणानुसारेण तु अतिव्याप्तिरिति ज्ञातव्यम् । अतिव्याप्तिं परिहर्तुं शङ्कते **सत्त्वेनेति** । सत्त्वरूपधर्मस्य ब्रह्मण्यनङ्गीकारादिति भावः । **किञ्चेति** । सत्त्वासत्त्वे ब्रह्मणो लोकवैलक्षण्यं न स्यादित्यादिविचारस्य ब्रह्मण्यपि साम्यादित्यर्थः ।

**कं०रा०— आग्रहमूलेति** । मायावादिमते भेदमात्रस्याभावेन वियदादौ शुक्तिरजतादौ च सद्विलक्षणत्वा-सद्विलक्षणत्वाभ्युपगतेरनुचितत्वादिति भावः । **असंभवित्वादिकमिति** । सर्वस्मात्सर्वानुगतात् सत्तासामान्याद् वैलक्षण्यं सत्तासामान्यानधिकरणत्वं यद्यनिर्वाच्यत्वमित्युच्यते तदा सत्तासामान्यस्यैवाभावे तदनधिकरणत्ववचनस्य वैयर्थ्यापत्त्या तदङ्गीकारावश्यंभावात् । तस्य च सत्तासामान्यस्यानेकाश्रयत्वनियमेन द्रव्यादीनामेव तदधिकरणत्वेन वक्तव्यत्वात् तदनधिकरणत्वस्यासंभवित्वम्, अनुगतसत्तासामान्यानधिकरणत्वस्य स्वरूपसत्त्वाविरोधित्वेन प्रपञ्चो न सन् किं त्वनिर्वचनीय इत्युपक्रमासाङ्गत्यं च ज्ञातव्यमित्यर्थः । **त्वप्रत्ययेति** । त्वप्रत्ययार्थस्य सत्त्वरूपधर्मस्य ब्रह्मण्यनभ्युपगमात्सत्त्वेन विचारासहत्वं ब्रह्मण्यस्त्येवेति भावः ।

**श्रीनिधि०— आरंभासङ्गतिः दोषो अवगन्तव्य इति** । नन्वत्र लक्षणदोषः क इति चेन्न । न हि लक्षणं दूषणीयमेवेति छलधर्मः । किं नाम यथाकथञ्चिदपि परकीयप्रतिपादनस्यायुक्तता प्रतिपादनीया । सा चासङ्गतिप्रदर्शनेनापि इति । **बाधादिपर्यवसानमिति** । आदिपदेन भावाभावव्यतिकरमात्रादिकं गृह्यते । तत्र चासंभवो द्रष्टव्यः । **अव्याप्तिरवगन्तव्येति** । भावत्वाभावत्वानि हि प्रतिनियतानि । तथा च प्रपञ्चे भावत्वा-भावत्वानधिकरणत्वे साध्यमाने घटतदभावनिष्ठभावत्वाभावत्वयोः घटतदभावाधिकरणत्वाभावेन तत्राव्याप्तिः । तत्रापि तदभावसाधने असंभवो द्रष्टव्यः । यद्वा अव्याप्तिरव्यापनं हि असंबन्धः असंभव इति यावत् इति वा । **असंभवित्वादिकमिति** । आदिपदेन व्याघातः । **किञ्चेति** । वियदादेस्सत्त्वस्वीकारे यो भेदादेर्भिन्नत्वादिविचारः स ब्रह्मण्यपि समान इत्यर्थः । ननु परेण ब्रह्मणि भेदादेरनङ्गीकारात्कथं भिन्नत्वादिविचारः संभवतीत्यत आह **यथोक्तमिति** । तत्त्वोद्योतमूले उपपादितमिति भावः । **तत्र तत्रेति** । पृथगुपदेशात् । सन्ध्ये सृष्टिराह हीत्याद्यनुव्याख्यावसर इति भावः ।

**वा०चं०—** यदि पूर्ववदेव व्याख्यानं तर्हि तद्बोधितानां सिद्धसाधनत्वादीनामलक्षणदोषत्वाल्लक्षण-निरासकत्वासिद्धिरित्यत आह **तत्रेति** । **आरम्भासङ्गतिरिति** । न ह्यत्र लक्षणदूषणं प्रधानप्रयोजनं किन्तु न सन्प्रपञ्चः किन्त्वनिर्वचनीयः । एवं च साधकत्वाद्युपपत्तिरिति परोक्तखण्डनम् । तच्च द्वेधा संभवति । एवंलक्षणकेऽनिर्वचनीयत्वे तस्य सत्त्वाविरोधित्वान्न सन्प्रपञ्चः किन्त्वनिर्वचनीय इति वदता च सत्त्वविरोधिन एव तस्य कथनीयत्वादुक्तासिद्धि-रिति प्रतिपादनेन । अव्याप्त्यादिना लक्षणस्यासंभवेनानिर्वचनीयत्वानुपपत्त्योक्तानुपपत्तिरिति वा प्रतिपादनेन । तत्र सिद्धसाधनतादिपर्यवसाने द्वितीयप्रकारेण खण्डनासंभवेऽपि प्रथमप्रकारेण खण्डनमक्षतमेवेति भावः । बाधादी-त्यत्रादिपदेन व्याहतिपरिग्रहः । पूर्वव्याख्यानाभ्युपगमे सिद्धसाधनतापर्यवसानपक्षेऽसाधारणलक्षणदोषालाभा-द्बाधादिपर्यवसाने पूर्वव्याख्यानरीत्याऽव्याप्तिलाभेऽप्यसंभवालाभात्तल्लाभाय प्रकारान्तरेण भाष्यं योजयति **अथवेति** ।

नन्वत्र वियदादौ सद्वैलक्षण्याभावप्रतिपादनमात्रेण नासंभवः। शुक्तिरजतादौ लक्षणसंभवेन यावल्लक्ष्यावृत्तित्वाभावात्। न च विश्वशब्देन शुक्तिरजतादेरारोपितस्य सर्वस्यापि विवक्षिततया तत्र सद्वैलक्षण्यसत्त्वेऽप्यसद्वैलक्षण्याभावेन तत्राप्यनेनैव लक्षणाभावः प्रतिपाद्यत इति वाच्यम्। तथाऽपि यावल्लक्ष्यावृत्तित्वाप्रतिपादनेनासंभवप्रतिपादकत्वायोगादित्यतो व्यावहारिकवियदादेः प्रातिभासिकशुक्तिरजतादेरेव च परस्यानिर्वचनीयत्वेनाभिमतत्वात्तदुभयत्र लक्षणासंभवप्रतिपादनेऽसंभवसिद्धिरित्याशयेनाह **अनिर्वचनीयत्वेनेति**। एवं योजनाबललब्धं तत्तल्लक्ष्ये व्यवस्थिततत्तदंशाभावप्रयुक्तलक्षणासंभवं प्रदर्शयति **वियदादाविति**। **इत्यादीति**। यतोऽसत एव सद्वैलक्षण्यमेव स्वयं सदतः सद्वैलक्षण्योक्तावसत्त्वमुक्तं स्यात्। पुनस्तस्यासद्वैलक्षण्योक्तिर्व्याहता। एवं यतः सत एवासद्वैलक्षण्यमेव स्वयं सदतोऽसद्वैलक्षण्योक्तौ सत्त्वमेवोक्तं स्यात्। पुनस्तस्य सद्वैलक्षण्योक्तिर्व्याहता। ततश्च व्याहतेनात एवासंभविना तेन लक्षणेनोक्तेन कथं तेऽनिष्टं न भवेदिति व्याहतिपक्षेऽप्यसंभवपरत्वेन योजना, बाधपक्षेऽस्मदुक्तयोजना वा द्रष्टव्येत्यर्थः। ननु यदस्ति यच्च बाधितं तस्य भेदवादिनं प्रतीव मायावादिनं प्रत्यपि सत्त्वाद्बाधितत्वाच्च भेदवादिन इत्युक्तेर्न फलमित्यतः सदपि बाधितमपि भेदवादिनं प्रति सद्बाधितमित्युक्त्या सदपि मायावादिनं प्रति न सद्बाधितमपि मायावादिनं प्रति न बाधितमिति मायावादिनस्तदनङ्गीकारस्य प्रमाणविरुद्धाङ्गीकारस्य च सूचनात्सतोऽप्यनङ्गीकारस्य प्रमाणविरुद्धाङ्गीकारस्य च प्रमाणमूलकत्वासंभवेनाग्रहमात्रमूलकत्वं ज्ञापयितुं तदुक्तिरित्याशयेनाह **भेदवादिन इति**। **उक्तरीत्येति**। वियदादौ सर्वनिकसत्त्वानधिकरणत्वस्य साध्यत्वपक्षे पूर्वोक्तयोजनानुसारेणापसिद्धान्तव्याहतिपर्यवसानेऽव्याप्तिः। वैलक्षण्यं सतश्चेत्यधुनोक्तयोजनान्यायेन वियदादिशुक्त्यादिविषयकतया यद्युच्यत इत्यस्य योजनान्तरे त्वसंभवः। योजनान्तरं तु वियदादीनां शुक्तिरजतादीनां चानिर्वचनीयत्वेन तवाभिमतत्वात्तयोश्च सर्वस्मादनेकस्मात्सर्वस्माच्च वैलक्षण्यम्। सर्वनिकसत्त्वानधिकरणत्वमिति यावत्। लक्षणतया यद्युच्यते तर्ह्युक्तरीत्याऽनेकसर्वसत्त्वानभ्युपगमेऽनेकेत्यादिविशेषणवैयर्थ्यापत्त्या सद्भेदसंस्थितिः। अनेकसर्वसत्त्वाधिकरणान्यभ्युपेयानि। तेषां च वियदादिशुक्तिरजतादिव्यतिरिक्तानामभावात्तेषामेव च तदनधिकरणत्वासंभवात्सद्वैलक्षण्यासंभवेन वियदादावसद्वैलक्षण्यसंभवेऽपि विशिष्टासंभवाच्छुक्तिरजतादौ चोक्तरीत्या सद्वैलक्षण्यस्य वस्तुगत्याऽसद्वैलक्षण्यस्याप्यभावेनोभयाभावाद्विशिष्टासंभव इति द्रष्टव्यमित्यर्थः। **सन्मात्रत्वमित्यनेनेति**। अतिव्याप्तिरप्युच्यत इति पाठे पूर्ववाक्योक्तासंभवादिसमुच्चयो वा सन्मात्रत्वमित्यस्य पूर्वव्याख्यानानुसारेण सिद्धसाधनपर्यवसाने आरम्भासङ्गत्या समुच्चयो वाऽप्यर्थो द्रष्टव्यः। अत्र सन्मात्रत्वमिति ब्रह्मणि लक्षणप्रतिपादके पादेऽसद्व्यावृत्तसत्त्वस्य सन्मात्रपदेन विवक्षायां तस्य ब्रह्मणि सत्त्वात्तद्वैलक्षण्यानुपपत्तिः। सत्त्वानधिकरणत्वं सन्मात्रत्वमिति विवक्षायामपि ब्रह्मणोऽपि लक्षणान्तःप्रविष्टसत्त्वाधिकरणतयाऽनुपपत्तिरेव। परमतानुसारेण तथोक्तौ च तदीयतयाऽङ्गीकारे ज्ञापकाभावः। असत्त्वानधिकरणत्वानुपपादनान्न्यूनता च तस्मात्तदपीति द्वितीयपादस्य ब्रह्मालक्ष्यत्वप्रतिपादकता च न स्फुटेत्यत आह **तथा हीति**। भाष्योक्तातिव्याप्तेः सत्त्वासत्त्वानधिकरणत्वपक्ष एवोपपन्नत्वात्तमेव पक्षं शेषयित्वा परप्रसञ्जितपक्षान्तरं निराकर्तुं शङ्कते **सत्त्वेनेति**। एवं परिशेषाभिप्रायेण भाष्यं व्याख्यातम्। अधुनैतत्पक्षदूषणमपि भाष्यारूढमेव सन्मात्रत्वं सत्त्वेन विचारासहत्वं ब्रह्मणोऽपीति योजनोपपत्तेरित्याशयेनाह **किञ्चेति**। ननु भिन्नत्वाभिन्नत्वसत्त्वासत्त्वादिविकल्पेन विशिष्टादिनिरासकतर्काणां वियदादौ प्रवृत्त्या तस्य विचारासहत्वेऽपि

न ब्रह्मणस्तथात्वमित्यतस्तेषां जगतीव ब्रह्मण्यपि प्रवृत्तिप्रत्यूहा । 'सर्ववैलक्षण्याङ्गीकाराद् दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव । जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यत' इत्यादिना तत्त्वोद्योते भगवत्पादैरेवास्यार्थस्य निपुणतरं प्रतिपादितत्वादित्याशयेनाह **यथोक्तमिति** । ननु सच्चेन्न बाध्येतासच्चेन्न प्रतीयेतेत्यादिविचारस्य वियदादाविव न ब्रह्मणि संभवः । ब्रह्मणो बाधाभावेन सत्त्वनिश्चयसंभवादित्यतो बाधायोगात्सत इति बाधाभावत एव हि प्रतीतिर्नासत इति वदन्नित्याद्यनुव्याख्याने वियदादावपि बाधाभावादेः प्रतिपादयिष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह **निराकरिष्यते चेति** ।

**वा०र०—** **व्याख्यानमिति** जातावेकवचनम् । व्याख्यानानीति यावत् । **तद्बोधितानां** तत्तद्व्याख्यानैर्बोधितानाम् । उक्तरीत्या पर्यायेण बोधितानामित्यर्थः । आदिपदेनांशे सिद्धार्थत्वादिग्रहणम् । **अलक्षणेति** । लक्षणदोषान्यत्वादित्यर्थः । यद्वाऽतच्छब्दादित्यादाविव नञर्थस्योपरिसंबन्धाल्लक्षणदोषत्वाभावादित्यर्थः । आरम्भासङ्गतेरपि कथं लक्षणदोषत्वम् । अव्याप्त्यादिरूपत्वाभावात् । तद्रूपत्वाभावेऽपि तदुद्भावने वा लक्षणदूषणं कथं सिध्येदित्यतोऽभिप्रायमाह **न ह्यत्रेति** । साधकत्वादित्यादिपदेन श्रुत्यादिना मिथ्यात्वप्रतिपादनपरिग्रहः । सत्त्वाभावान्मिथ्यात्वप्रतिपादनोपपत्तिः । अनिर्वचनीयत्वोक्त्याऽसद्विलक्षणत्वलाभात्साधकत्वोपपत्तिरिति यत्परोक्तं तस्य खण्डनं प्रधानप्रयोजनमिति योज्यम् । **एवंलक्षणक इति** । अनिर्वचनीयत्वे प्रोच्यमाने उक्तासिद्धिर्न सन्नित्यादेरसिद्धिः । तत्र हेतुः सत्त्वाविरोधित्वादिति योज्यम् । सत्त्वाविरोधिभूतमपि कुतो न कथनीयमित्यत आह **न सन्प्रपञ्च इत्यादि** । **लक्षणस्यासंभवेनेति** । तदनुपपन्नत्वेनेत्यर्थः । उक्तपदं मुक्तार्थम् । इति वा प्रतिपादनेनेत्यस्येति शब्दाध्याहारेणेति द्वेधाऽपीति पूर्वेण संबन्धः । **प्रथमप्रकारेणेति** । एवं लक्षणक इति प्रथमप्रकार एवारम्भासङ्गतिपदोक्त इति भावः । **असाधारणलक्षणदोषेति** । सत्त्वाविरोधित्वादुक्तासिद्धिरूपदूषणस्य लक्षणदूषणत्वमप्यस्ति । उक्तासिद्धिर्यत्र यत्रायाति तावत्प्रमेयदूषणत्वादुक्तासिद्धेः । किन्तु लक्षणमात्रदोषत्वेन प्रसिद्धो दोषो न लभ्यत इत्यर्थः । तल्लाभपरतयाऽपि योजनासंभवे त्यागायोगादिति भावः । वियदादिवच्छुक्तिरजतादेरपि लक्ष्यत्वकीर्तनस्य तथा तदुभयस्यैव लक्ष्यत्वकीर्तनस्य चायोगं वक्तुं तदुभयव्यावर्त्यशङ्कामाह **नन्वत्रेति** । **सद्वैलक्षण्याभावेति** । वियदादेर्विश्वस्य सद्विलक्षणत्वमेव सदित्युक्ते सद्विलक्षणत्वस्य प्रमाणबाधिततया तदभावप्रतिपादनादिति भावः । **लक्षणसंभवेनेति** । सद्विलक्षणत्वासंभवेन हि वियदादौ लक्षणाभाव उक्तस्तच्च सद्विलक्षणत्वं शुक्तिरजतादौ संभवत्येवेति तत्र लक्षणाभावानुपपत्तेर्यत्किञ्चिल्लक्ष्यावृत्तित्वमात्रेण चासंभवाख्यलक्षणदोषायोगादित्यर्थः । सद्विलक्षणत्वासद्विलक्षणत्वरूपलक्षणे विश्वशब्दरूढवियदादिविवक्षयैव सद्विलक्षणत्वासंभवमुखेन लक्षणाभावप्रतिपादनं कृतम् । शुक्तिरजतादिविवक्षायां तु सद्विलक्षणत्वांशं विहायासद्विलक्षणत्वांशासंभवप्रयुक्तलक्षणाभावप्रतिपादनमेव विवक्षितम् । तथा च शुक्तिरजतादावप्यंशान्तराभावाप्रयुक्तो लक्षणाभाव एवेति विशिष्टलक्षणस्य सकललक्ष्यवृत्तित्वाभावः प्राप्त एवेत्याशङ्क्ते **न च विश्वेति** । वियदादिप्रपञ्चवाचिविश्वशब्दस्य शुक्तिरजतादिवाच्य सत इत्यनेनान्वयायोगं परिहर्तुं मूले सर्वार्थकतया विश्वशब्दं व्याख्याय शुक्तिरजतादेरित्यादिपदसङ्ग्राह्यकथनायारोपितस्येत्युक्तम् । तदनुवादोऽयं **शुक्तिरजतादेरित्यादि** । सर्वस्यापी-

त्यपिपदेन वियदादिकं समुच्चिनोति । न केवलं विश्वशब्देन वियदादिकं विवक्षितम् । किन्तु शुक्तिरजतादिकमारोपितं सर्वमपीत्यर्थः । **अनेनैवेति** । लक्षणासंभवप्रतिपादकश्लोकेनैव तदुत्तरार्धेनेति यावत् । लक्षणाभावप्रतिपादनं च सद्विलक्षणत्वमेवेत्यवधारणासंभवप्रतिपादकं श्लोकेनैव तदुत्तरार्धेनेति यावत्सलक्षणाभावप्रतिपादनं च सद्विलक्षणत्वमेवेत्यवधारणलभ्यम् । **तथापि यावल्लक्ष्येति** । वियदादिशुक्तिरजतादिसमस्तारोपिताभ्यामन्यस्यापि लक्ष्यतायां तत्र लक्षणासंभवप्रतिपादनोपायाप्रतीतेस्तत्र लक्षणाभावासिध्याऽसंभवाख्यदोषाप्राप्तेरवर्जनीयत्वात् इत्याशयः । **लक्षणासंभवप्रतिपादन इति** । लक्षणस्य तत्र च सत्त्वायोगप्रतिपादन इत्यर्थः । **असंभवसिद्धिरिति** । तदुभयातिरिक्तलक्ष्यान्तरसद्भावे हि तत्र लक्षणसद्भावशङ्कयाऽसंभवासिद्धिः स्यादिति भावः । **तत्तदंशाभावेति** । अनेन मूले विशिष्टलक्षणाभाव उभयत्र नैकप्रकार इति स्पष्टीकृतं भवति । **तेऽनिष्टमिति** । ते तवेति न पादादाविति निषेधानित्यत्वेनोपपन्नमिति केचिन्मतानुसारीदम् । **अस्मदुक्तेति** । अथवा निर्वचनीयत्वेनेतीदानीमेवोक्तेत्यर्थः । **यदस्ति यच्चेत्यादि** । अत्र यदस्ति तस्य सत्त्वात् । यच्च बाधितं तस्य बाधितत्वादिति क्रमेण संबन्धः । सत्प्रतियोगि बाध्यमित्यसदित्यस्य बाधितमित्यनुवादः । सतोऽसद्विलक्षणत्वमस्तीत्यस्य फलतः कीर्तनं सत्त्वादिति । एवमसतः सद्वैलक्षण्यमस्तीत्यस्य फलतोऽभिधानं बाधितत्वादिति । **न फलमिति** । वस्तुनो द्वैरूप्यायोगात्सर्वान्प्रति सदेव । बाधितं च बाधितमेव । ततो व्यावर्त्याभावाद्भेदवादिन इत्येतद्व्यर्थमित्यर्थः । **सदपीत्यादि** । सदपि भेदवादिनं प्रत्येव सत् । असद्रूपं बाधितमपि भेदवादिनं प्रत्येव बाधितमित्युक्तेत्यर्थः । तथा च न सर्वान्प्रति वस्तुन एकप्रकारतेति व्यावर्त्यसद्भावादित्युक्तं भवति । **तदनङ्गीकारस्येति** । सति सत्त्वानङ्गीकारस्य बाधिते चासत्त्वरूपबाधितत्वानङ्गीकारस्येत्यर्थः । **प्रमाणविरुद्धेति** । सति सत्त्वाभावस्य बाधिते च बाधितत्वाभावस्य प्रमाणविरुद्धतया तदङ्गीकारः प्रमाणविरुद्धाङ्गीकार इति ज्ञेयम् । **सतोऽपीति** । विद्यमानस्यापीत्यर्थः । वस्तुतो यद्विद्यमानं तदङ्गीकार एव कर्तव्यः । प्रमाणमूलकत्वात्तदनङ्गीकारस्तु न प्रमाणमूलक इति योज्यम् । अनेन सद्वैलक्षण्येत्यादि मूलं सत्त्वानङ्गीकारादेरुपलक्षणमिति सूचितम् । मूलकत्वमिति ज्ञापयितुमिति पाठः स्वरस एव । इतिशब्दाभावे तु तदर्थान्तभविन व्याख्येयम् । मूलकत्वमित्यस्य मूलकतयाऽनुपपन्नत्वमित्यर्थः । अत्र वैकल्यशङ्कानिरासाय सतोऽपीत्यादि तदुक्तिरित्यन्तेन फलवत्वकीर्तनम् । ज्ञापनप्रकारनिरूपणं सदपीत्यादीति विवेकः । **सर्वान्नेकेति** । अनेकसर्वेति वक्तव्ये सर्वपदस्याल्पाच्तरतया पूर्वप्रयोग इति प्रागेवोक्तम् । **पूर्वयोजनेत्यादि** । द्वितीये दूषणान्तरमाहेति योजनायामपसिद्धान्ते पर्यवसानम् । अथवा किमिदं सत्त्वमित्येतद्योजनायां तु कथं तर्हि तेषामेव तदनधिकरणत्वसाधनमित्युक्तव्याघाते पर्यवसानमिति योज्यम् । **अव्याप्तिरिति** । यद्युच्यत इत्यस्योक्तयोजनाद्वयेऽपि विश्वपक्षीकारेणैव प्रवृत्त्या तदनुसारेणात्र लक्ष्यतया वियदादिविश्वस्यैव प्राप्तेस्तत्राव्याप्तिरित्यर्थः । **सतश्चेत्यधुनोक्तेति** । वैलक्षण्यं सतश्चेत्यस्याधुनोक्ता या योजना लक्षणदूषणपरतया अथवाऽनिर्वचनीयत्वेन वियदादिकमित्यादिरूपा तन्न्यायेन यद्युच्यत इत्यस्य यद्योजनान्तरं तस्मिन्निति संबन्धः । प्रागुक्तयोजनाद्वये विश्वमात्रविषयत्वमत्र तु विश्वशब्दोक्तवियदादेरिव शुक्तिरजतादेरपि विषयत्वमिति विशेष इति युक्तं योजनान्तरत्वे असंभवप्रापणमित्याशयेन योजनान्तरत्वविशदीकरणं वियदादिशुक्तिरजतादिविषयतयेति । क्वचिच्छुक्त्यादीति पाठस्तत्र रजतपदाभावो लेखकागतः । शुक्तिरजतादीनां चेत्याद्युत्तरवाक्यानुसारेण रजतपदोपेतपाठस्यैव टीकायां





सिद्धत्वात् । **असंभव इति** । पराभिमतलक्ष्ये वियदादौ शुक्तिरजतादौ च लक्षणाभावे यावल्लक्ष्यावृत्तित्वलाभादित्याशयः । किं तद्योजनान्तरमित्यतस्तत्स्वयं दर्शयति **योजनान्तरं त्विति** । **सर्वस्मादनेकस्मादिति** । सर्वशब्दोऽनेकार्थ इति विवक्षित्वा सर्वस्मादित्यनूद्यानेकस्मादिति व्याख्यानम् । तेनानेकसत्त्वानधिकरणत्वमिति पक्षलाभः । सर्वस्माच्चेत्यनेन तु यथाश्रुतानुवादः । तेन सर्वसत्त्वानधिकरणत्वमित्येतत्पक्षलाभः । तदेतदाह **सर्वानेकसत्त्वानधिकरणत्वमिति यावदिति** । प्रागल्भ्यात्तरशास्त्रानुसरणेऽपि दूषणक्रमव्यक्त्यर्थमत्रानेकसर्वसत्त्वेत्येव वक्तव्यमित्याशयेनोक्तमुक्तरीत्याऽनेकसर्वेति । रजतमिदमिति द्वे विज्ञाने स्मृत्यनुभवरूपे इत्युत्तरमूले प्रकारद्वयसंमतेष्टीकायामुपपादनस्य करिष्यमाणत्वात्सांव्यावहारिकमेतदिति न दोषः । इदमुक्तं भवति । विश्वमनेकसत्त्वानधिकरणमिति प्रतिजानताऽनेकसत्त्वान्यङ्गीक्रियन्ते न वेत्यादि प्रागुक्तरीत्या कथं तर्हि 'तेषामेव तदनधिकरणत्वमित्युक्तरीत्या चेत्यर्थः । वियदादौ शुक्तिरजतादौ च सद्वैलक्षण्यासंभावकमभिधाय विशिष्टलक्षणस्याभावप्रतिपादने भेदसत्त्वाद्वेदेन लक्षणासंभवं प्रतिपादयति **सद्वैलक्षण्यासंभवेनेत्यादिना** । अत्र च वियदादौ सद्वैलक्षण्यासंभवेनासद्वैलक्षण्यसंभवेऽपि विशिष्टासंभवादिति योज्यम् । सद्वैलक्षण्यासंभवे च तेषामेव तदनधिकरणत्वासंभवादित्युक्त एव हेतुः । शुक्तिरजतादौ त्वेतद्धेतुना सद्वैलक्षण्याभावं पृथगेव वक्ष्यति **उक्तरीत्या सद्वैलक्षण्यस्येत्यादिना** । तथा च तेषामेवेति वियदादेः शुक्तिरजतादेश्च प्रक्रमेऽपि विशिष्टाभावोपपादनावसरे पृथगेव सद्वैलक्षण्याभावप्रतिपादनात्सद्वैलक्षण्यासंभवेन वियदादावित्यत्र वियदादेरेव तदसंभवप्रतिपादनमिति ज्ञातव्यम् । **शुक्तिरजतादौ चोक्तेति** । तेषां च वियदादिशुक्तिरजतादीत्युक्तरीत्येत्यर्थः । तद्वैलक्षण्यस्याभावेनेत्युत्तरेणान्वयः । **वस्तुगत्याऽसद्वैलक्षण्यस्यापीति** । तस्य वस्तुतोऽसत्त्वेन तद्वैलक्षण्यस्य तत्राभावादित्यर्थः । अतिव्याप्तिरपीति क्वाचित्कापिपदोपेतपाठमपि घटयति **अतिव्याप्तिरप्युच्यत इति पाठ इति** । अत्रेति पाठ इति वदता तथा पाठः स्वरसः । अर्थाधिक्यलाभादिति सूचितम् **असंभवादिसमुच्चयो वेति** । अप्यर्थ इत्युत्तरेण संबन्धः । अनेन न केवलं वैलक्षण्यं सतश्चेत्यादि पूर्ववाक्योक्तासंभवादिकं किं त्वतिव्याप्तिरपीत्युच्यत इति योजनीयमित्युक्तं भवति । वाक्यान्तरोक्तिदूषणसमुच्चयार्थेऽरुचिं मत्वा तद्वाक्योक्तदूषणान्तरसमुच्चयार्थतामाह **सन्मात्रत्वमित्यस्येति** । **सिद्धसाधनेति** । अब्रह्मत्वरूपसद्वैलक्षण्यसाधने सिद्धसाधनतेति प्रागुक्तिलाभादिति भावः । **आरम्भासङ्गत्येति** । न सन्प्रपञ्चः किन्त्वनिर्वचनीय इत्यारम्भेत्यर्थः । उपपादनं च प्रागेव सिद्धत्वान्न कृतम् । **अप्यर्थ इति** । अपिशब्दार्थ इत्यर्थः । **सन्मात्रत्वमितीति** । ब्रह्मणोऽपीत्यन्तपाद इत्यर्थः । **लक्षणेति** । अलक्ष्ये लक्षणसत्त्वस्यैवातिव्याप्तिरूपतया तत्सिध्यर्थं लक्षणसद्भावालक्ष्यत्वयोरुपपादनीयतया पादद्वयेन चात्र क्रमेण तदुपपादनमिति सिद्धं कृत्वा लक्षणप्रतिपादक इत्यादिरनुवाद इति ज्ञेयम् । **असद्व्यावृत्तेति** । ब्रह्मणोऽपि सन्मात्रत्वमस्तीत्यनेन यद्यसद्व्यावृत्तं सत्त्वं ब्रह्मणोऽप्यस्तीति प्रतिपादितं भवेत् न तर्हि तेनातिव्याप्तिप्रतिपादनम् । तादृशसत्त्वस्य ब्रह्मणि सत्त्वादेव सत्त्वाधिकरणत्वस्यैव तेन प्रतिपादितत्वप्राप्त्या सत्त्वानधिकरणत्वरूपसद्वैलक्षण्यस्य लक्षणभूतस्य अनुपपत्तिः ब्रह्मणि तेन प्रतिपादनानुपपत्तिः । तत्प्रतिपादनाभाव इति यावत् । अनेन पादेन ब्रह्मणि लक्षणप्रतिपादनाय प्रवृत्तेनासद्व्यावृत्तसत्त्वसद्भावमात्रप्रतिपत्तिप्रतिपादनेऽपि सत्त्वानधिकरणत्वरूपसद्वैलक्षण्याख्यलक्षणसद्भावप्रतिपादनाभाव एवेत्यतिव्याप्तिलाभाभावादसङ्गतिरित्याशयः । अत एवोक्तं **लक्षणप्रतिपादकेति** । एतेन पादाश्रितदूषणा-

लाभशङ्कानवकाशः । अनेन सत्त्वानधिकरणत्वमिति व्याख्यानबीजमुक्तम् । मायेत्यादिशेषपूरणनिमित्तमाह **इति विवक्षायामपीति** । यदि ब्रह्मणोऽपि सन्मात्रत्वं सत्त्वानधिकरणत्वमस्तीति प्रतिपादितं स्यात् तदाऽनेनालक्ष्ये लक्षणप्रतिपादनमुखेनातिव्याप्तिलाभात्पूर्ववदसङ्गतिशङ्कानवकाशेऽपि तल्लक्षणप्रतिपादनं न संभवतीत्यनुपपत्ति-रस्त्येव । सत्त्वानधिकरणत्वरूपलक्षणान्तर्गतं पदभावप्रतियोगिसत्त्वं तदधिकरणत्वस्यैव ब्रह्मणि सत्त्वेन तदभावाधिकरणत्वायोगात् । यद्वा अभावप्रतियोग्यधिकरणत्वनिरूपकसत्त्वाधिकरणतया तदधिकरणत्वाभावा-नुपपत्तिरिति व्याख्येयम् । अस्मन्मते ब्रह्मणि सत्त्वाधिकरणत्वसद्भावेऽपि मायावादिना सत्त्वानङ्गीकारात्तन्मतरीत्या सत्त्वानधिकरणत्वोपपत्तेरत्र च पादे तद्रीत्यैव तत्प्रतिपादनाद्युक्तमतिव्याप्तिफलकलक्षणसद्भावप्रतिपादकत्व-मस्येत्याशंक्य परिहरति **परमतेति** । **ज्ञापकाभाव इति** । येन निमित्तेन परस्य तथाङ्गीकारस्तस्यात्रानुक्तेरिति भावः । निर्धर्मकत्वाङ्गीकारादित्येतद्व्यावर्त्य शङ्काऽनेन दर्शिता । **असत्त्वेति** । विशिष्टलक्षणप्रतिपादन एवातिव्याप्ति-लाभादेतत्पादेन च लक्षणैकदेशभूतसद्विलक्षणत्वोपपादनेऽप्यसद्विलक्षणत्वांशस्योपपादनाभावात् न्यूनतेत्यर्थः । निश्चितमेवेत्येतद्व्यावर्त्यमिदम् । **न स्फुटेति** । अनिर्वाच्यं भवेदित्यनुक्तेरिति भावः । अनिर्वाच्यं प्रसज्येतेत्येत-द्व्यावर्त्यमिदम् । **तमेव पक्षमिति** । तत्पक्षावलम्बनेनैवातिव्याप्तेरभिधानं भाष्ये इत्येतत्स्पष्टं कृत्वा तदुपयुक्ततया तमेव शेषयित्वा शेषयितुं यत्पक्षेऽतिव्याप्तिर्नायाति तं पक्षं परप्रसञ्जितं निराकर्तुमाशङ्कत इत्यर्थः । यद्यपि अत्रोच्यते प्रत्येकं सदसत्त्वाभ्यां विचारेत्यादिना विचारासहत्वमेव लक्षणत्वेन परेणोक्तम् । तस्यैव च प्राङ्निराकरणमुप-क्रान्तम् । लक्षणद्वयमभिहितमिति पूर्वमूलात् । तथापि सत्त्वासत्त्वानधिकरणत्वस्यैवानिर्वचनीयपदार्थतया तत्र प्रतिपादनं परसंमतम् । विचारपर्यन्तं गमनं तु ब्रह्मव्यावृत्त्यर्थमेवेति पराशयं स्पष्टयितुं सत्त्वासत्त्वेति लक्षणे ब्रह्मण्य-तिव्याप्तिं योजयित्वा तदुपमर्देन विचारासहत्वं प्रकारान्तरतयाशङ्क्य तन्निराकरणं क्रियत इति मूलाभिप्रायात् । एवमेवानिर्वचनीयख्यातिसाधकानुमाननिरासस्थलीययन्नसदित्येतदवतारटीकास्थं सत्त्वादिना विचारासहत्वमनिर्वच-नीयत्वमिति तत्त्वेत्याद्युक्तिरपि व्याख्येयेति ज्ञेयम् । **अधुनेति** । परप्रसञ्जितपक्षान्तरनिराकरणं बहिरेवेत्याश्रित्य परिशिष्टशिष्टपक्षनिरासाभिप्रायेण भाष्यं प्रवृत्तमित्याश्रयणापेक्षया तत्पक्षनिराकरणमपि भाष्य एवास्तीति स्वीकरणं स्वरसमित्याशयेन तथा योजनान्तरमाहेत्यर्थः । विचारासहत्वं ब्रह्मणोऽपीति वदता यद्विचारासहत्वं प्रपञ्चे त्वयोच्यते स विचारो यो यादृशो वियदादौ स तादृशो ब्रह्मण्यपि समानस्तद्विचारासहत्वं ब्रह्मण्यपीति यावदिति मूलं योजनीय-मिति सूचयति **इत्यादीति** । मूलस्थादिपदार्थविवरणं दुर्घटमपीत्यादि युक्तिच्छलकर्त्रोरभिधानं **तत्त्वोद्योत इत्यादि** । तदुपपादनमत्रानावश्यकम् । तस्य तद्ग्रन्थ एव बाहुल्येन कृततयाऽत्र सङ्कोचेन कथनस्य वैयर्थ्याद्विस्तरस्य च प्रस्थानभेदेनात्र करणानुपपत्तेः । अन्यथा ग्रन्थयोर्गतार्थत्वप्रसङ्ग इत्याशयेनोक्तं **निपुणतरमिति** । प्रकरणत्वादेव तत्र स्वल्पप्रतिपादनादत्र तद्विस्तरस्यावश्यकत्वमित्यत उक्तं निपुणतरमितीत्यप्याहुः । **इत्याद्यनुव्याख्यान इति** । पृथगधिकरणीयानुव्याख्याने आदिपदोक्त......................अधिकरणीये चानुव्याख्यात इत्यर्थः ।

**स०व्र०—** बाधादीत्यादिपदेन व्याघातपरिग्रहः । आरम्भासङ्गतेरव्याप्त्याद्यन्यतरत्वाभावान्न लक्षणदोष-त्वमिति तत्राह **अथवेति** । **उक्तरीत्येति** । अनेकसत्त्वानधिकरणत्वसर्वसत्त्वानधिकरणत्वयोरनेकसत्त्वसापेक्षत्वेन





परेण कुत्रापि वक्तुमशक्यत्वादसंभवः । सर्वथा सत्त्वानधिकरणत्वस्यानिर्वचनीयैकदेशो शुक्तिरजतादौ सत्त्वेऽपि प्रपञ्चेऽभावादव्याप्तिरित्यर्थः । **निर्धर्मकत्वाङ्गीकारादिति** । भावरूपधर्मानङ्गीकारादित्यर्थः ।

**विठ्ठ०**— **अव्याप्तिरिति** । अनुमानपक्षे दृष्टान्तीकृतशुक्तिरजतादौ साध्यवत्वमभिगम्य लक्षणपक्षे अव्याप्तिरित्युक्तं वस्तुतस्तु असंभव एवेति ज्ञातव्यम् । लक्षणदोषकथनप्रसङ्गे आरंभासङ्गतिर्न दोष इत्युक्त्या प्रकारान्तरेण व्याचष्टे **अथवेति** । चोऽवधारणे इति भावेन सत एवेत्यनुवादः तस्य व्याख्यानं **सत्त्वेन प्रमितस्यैवेति** । एवमुत्तरत्रापि । सत्त्वेन प्रमितस्य सद्वैलक्षण्यादिकं प्रमाणबाधितमित्युक्तं प्रमाणबाधितं नोभयोरप्यङ्गीकार्यं तत्कथं भेदवादिन इति विशेषोक्तिरित्यतो आग्रहेणैव परोऽभ्युपैतीत्यत आह **भेदवादिन इत्यनेनेति** । **उक्तरीत्येति** । अनेकसत्तानधिकरणत्वसर्वसत्तानधिकरणत्वसत्तासामान्यानधिकरणत्वरूपविशेषणानां सद्भेदसंस्थितिरित्युक्तभेदाङ्गीकारप्रसङ्गभयेन कुत्रापि परेणोपपादयितुमशक्यत्वादसंभवः । आद्यलक्षणे च एकैकसत्तास्वीकारापत्तेरित्युक्तत्वेन तृतीयलक्षणे च अतिरिक्तानुगतसामान्यानङ्गीकारादित्युक्त्या च सिद्धसाधनतायाः उपपादितत्वात् आरम्भासङ्गतिश्च स्यादित्यर्थः । शङ्कते **सत्त्वेनासत्त्वेन चेति** । काल्पनिकं सत्त्वं ब्रह्मण्यस्तीति मन्वानं प्रत्याह **किञ्चेति** । वियदादावपि काल्पनिकसत्त्वस्यैव परेणाङ्गीकृतत्वादिति भावः । सर्ववैलक्षण्याङ्गीकारात् दुर्घटमपि ब्रह्मप्रमाणादङ्गीक्रियत एवेत्यादिना तत्त्वोद्योते जगति सत्त्वादिदौर्घट्यवत् ब्रह्मण्यपि तद्दौर्घट्यमभिहितमित्यर्थः । अङ्गीकृत्येदमुक्तं वस्तुतस्तु दुर्विचारः सत्त्वेनासत्त्वेन च विचारानर्हत्वं जगति ब्रह्मणि च प्रकृत्यधिकरणादिषु निराकरिष्यते इत्याह **निराकरिष्यत इति** ।

**गूढ०**— नन्वस्मिन्पक्षे कथं व्याख्यानमित्यत आह **व्याख्यानानि त्विति** । ननु पूर्वं हि सिद्धसाधनत्वबाधादिदूषणमुक्तम् । न च तल्लक्षणपक्षे संभवति । अव्याप्त्यादेरेव तद्दूषणत्वादित्यत आह **तत्र यावत्स्विति** । नन्वतिव्याप्त्यादेरेव लक्षणदोषत्वादारम्भासङ्गतिः कथं न दोष इति चेन्न । उक्तविधानिर्वचनीयस्य सत्त्वाविरोधित्वात् । सति ब्रह्मण्यपि सत्त्वेनातिव्याप्तावस्य तात्पर्यमिति ज्ञेयम् । अत एव यत्र बाधादिपर्यवसानं तत्राव्याप्तिरित्युक्तम् । असंभवप्रदर्शनपरत्वेनापि योजयति **अथवेति** । इत्यादीत्यत्रादिशब्देन सतो ब्रह्मणोऽपि सतो विश्वस्य सकाशात् वैलक्ष्यण्यम् असतोऽपि वैलक्ष्यण्यं स्वयं सदेव अतोऽस्य ब्रह्मण्यपि सत्त्वादतिव्याप्तेन तेनोक्तलक्षणेन तेऽनिष्टं निग्रहस्थानं कथं न भवेदिति योजना ग्राह्या । नन्वस्मिन्पक्षे भेदवादिन इत्यनर्थकमत्राह **भेदवादिन इति** । यद्युच्यत इत्येतदनर्थकमित्यत आह **यद्युच्यत इति** । **उक्तरीत्येति** । एकसत्त्वानधिकरणत्वमित्याद्युक्तरीत्येत्यर्थः । तत्रोक्तपञ्चमपक्षदूषणानुसारे संभवित्वम् । आद्यपक्षचतुष्टयदूषणानुसारेण त्वतिव्याप्तिरिति ज्ञातव्यम् । अतिव्याप्तिं परिहर्तुं शङ्कते **सत्त्वेनेति** । सत्त्वरूपधर्मस्य ब्रह्मण्यङ्गीकारादिति भावः । **किञ्चेति** । सत्त्वासत्त्वे ब्रह्मणो लोकवैलक्ष्यण्यं न स्यादित्यादिविचारस्य ब्रह्मण्यपि साम्यादित्यर्थः ।

**प्रदीपः**— नन्वनुमानदोषाणां सिद्धार्थत्वबाधार्थान्तरत्वादीनां कथं लक्षणदूषणतयातिदेश इत्यत आह **तत्र यावत्स्विति** ।





"अन्यथाविज्ञातस्य सम्यग्विज्ञानम्" एव बाधः—

**३२३ सु०—** द्वितीयमपि लक्षणं निराकरोति **ज्ञानबाध्यत्वमिति** ॥ यदि ज्ञानबाध्यत्वं नामोक्तविधया ज्ञाननिवर्त्यत्वं तदा वियदादौ शुक्तिरजतादौ च न सिद्धम् । वियदादेः सत्त्वेन शुक्तिरजतादेश्चासत्वेनाविद्योपादानकत्वाभावात् । ततश्चासंभवित्वं लक्षणदोषः । यदि पुनर्ज्ञानविनाश्यत्वमात्रम् । तथाऽपि वियदादौ नित्ये नित्यत्वादेव, शुक्तिरजतादौ चासत्त्वान्न सिद्धमित्यव्याप्तिः । यदि च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं तदपि वियदादौ न सिद्धमित्यव्याप्तिरेव । उपपत्तयस्तूक्ता वक्ष्यमाणाश्चानुसन्धेयाः ॥ ननु भवताऽपि बाध्यत्वं किमप्यङ्गीकरणीयमेव । पदस्य निरर्थकत्वायोगात् । तदेवास्माकमनिर्वचनीयलक्षणं भवत्वित्यत आह **प्रतिवादिनो विज्ञातस्येति** ॥ **प्रतिवादिनो मम मतम्** इति संबन्धः । तच्चात्मन्यनिर्वचनीयेऽप्यस्तीत्यतिव्याप्तमिति शेषः । अत्र 'अन्यथाविज्ञानमेव भ्रान्तिः । तत्प्रसञ्जितान्यथाऽऽकारलोडनं सम्यग्विज्ञानमेव बाध' इत्यवधारयता मतान्तराणि निरस्तानि वेदितव्यानि । हिशब्देन तत्र प्रमाणप्रसिद्धिं सूचयति ॥

**परि०—** **उक्तविधयेति** । पूर्वयोजनायां उक्तविधयाऽज्ञानलक्षणोपादाननिवृत्तिद्वारा निवर्त्यत्वं यदीत्यर्थः । ननु वियदादेः सत्त्वे शुक्तिरूप्यादेरसत्त्वे चोपपत्तयो वाच्या इत्यत आह **उपपत्तयस्त्विति** । मिथ्यात्वमपि बन्धस्येत्यादिना उक्ताः साक्षिविरुद्धत्वं नेहनानेत्यादेर्मिथ्यात्वाप्रतिपादकत्वं तद्वादिनां कथकत्वाभावः इत्यादयः, प्रकृतिनयादौ वक्ष्यमाणाः विश्वभ्रान्त्यादेः ब्रह्माद्यधिष्ठानत्वायोगः अर्थक्रिया-कारित्वायोगः श्रुत्यादिविरोध इत्यादयो ज्ञेयाः ।

**वं०प०—** **उक्तविधयेति** । 'ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव नश्यती'त्युक्तविधयेत्यर्थः । ननु वियदादेः सर्वस्याप्यविद्योपादानकत्वेन ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव निवर्तत इत्युक्तविधया ज्ञाननिवर्त्यत्वं सिद्धमेवेत्यत आह **वियदादेरिति** । **यदि पुनरिति** । ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव निवर्तत इत्येवंरूपं ज्ञाननिवर्त्यत्वं नाभिप्रेतं किं नाम घटस्य मुद्गरप्रहारादिवज्ज्ञानजन्यध्वंसप्रतियोगित्वमात्रमित्यर्थः । **तदपीति** । तथात्वेऽसत्त्वप्राप्तेरित्यर्थः ।

**आनन्दः—** **उक्तविधयेति** । ज्ञानेनाज्ञाने निवृत्ते तदुपादानकं स्वयमेव नश्यतीत्युक्तप्रकारेणेत्यर्थः । ज्ञानबाध्यत्वस्य त्रेधापि विकल्पं हृदि निधायाद्यं निराह **ज्ञाननिवर्त्यत्वमिति** । द्वितीयं निराह **यदि पुनरिति** । तृतीयं निराह **यदि चेति** । नन्वत्र पक्षे प्रतिवादिनो विज्ञातस्येत्यनर्थकमित्यतस्तन्निवर्त्याशङ्कामाह **नन्विति** । अस्तु तर्हि तदेव मया लक्षणत्वेनोच्यत इत्यत आह **तच्चेति** । ननूक्तविधबाधस्वरूपस्य सर्वैरप्यङ्गीकारेण व्यावर्त्या-भावात् एवकारवैयर्थ्यमित्यत आह **अत्रेति** । **तत्रेति** । अन्यथा विज्ञानमेव भ्रान्तिः सम्यग्विज्ञानमेव बाध इत्यत्रेत्यर्थः ।



**कं०रा०—— तच्चात्मनीति** । आत्मनो देहाद्यात्मना विज्ञातस्य ततो विविक्तत्वेन सम्यग्विज्ञातत्वादिति भावः ।

**श्रीनिधि०—— वियदादौ** न सिद्धमित्यव्याप्तिरेवेति । शुक्तिरजतादौ सिद्धत्वेनैवमुक्तं **तत्र प्रमाणसिद्धिमिति** । तत्र अलक्षणे बाधे प्रमाणसिद्धिम् । अनुभवादि प्रमाणप्रमितत्वम् ।

**वा०चं०——** अत्र स्वपराभिमतज्ञानबाध्यत्वपक्षदूषणानामेकप्रकारत्वाभावात्तत्तत्पक्षदूषणं विविच्य दर्शयति **यदीत्यादिना** । अत्राविद्यानिराकरणेनाविद्योपादानकत्वाभावस्य वियदादेर्वियत्पादे स्वरूपनाशाभावस्य न हि नाशोऽसतो भवेदित्यादिनाऽसतो नाशाभावस्योपपादयिष्यमाणत्वान्नेहनानेतिवाक्यस्योपपत्तिविरुद्धत्वेन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाप्रतिपादकत्वस्योक्तत्वात् 'नासीदस्ति भविष्यच्चे'त्यादिना वक्ष्यमाणत्वाच्च नानुपपत्तिरित्याह **उपपत्तय इति** । नन्वत्र शुक्तिरजतादाविव वियदादौ बाध्यत्वव्यवहाराभावेन पूर्वत्रेव व्यवहारविरोधादेरभावादुत्तरवाक्यवैयर्थ्यमित्यतः सतोऽपि बाध्यत्वमस्त्विति वदता त्रैकालिकनिषेधप्रतियोगित्वादेर्बाध्यपदार्थतया वक्तुमशक्यतया वियदादिशुक्तिरजतादिसाधारणस्यैव वक्तव्यत्वात्तस्य चानिर्वचनीयलक्षणत्वेनोक्तौ नाव्याप्त्यादिकमित्याशयेन प्राप्तशङ्कापरिहारकत्वेन तत्सङ्गमयति **नन्विति** । तदेव लक्षणमस्त्विति शङ्कापरिहारो मूलान्न प्रतीयतेऽतः शेषं पूरयति **तच्चेति** । ननु टीकाकारीयोऽख्यात्यादिपक्षनिरासो न सङ्गतः । भाष्यव्याख्यानं प्रतिज्ञायोद्भाष्यं बहुप्रमेयप्रतिपादनानौचित्यादित्यतो भाष्यकारेणैव ह्येवशब्दो प्रयुञ्जानेन सूचितप्रमेयस्य व्युत्पादनीयतया तदर्थोत्तरग्रन्थस्यातिसङ्गतत्वादित्याशयेन तच्छब्दद्वयस्य सूचितमर्थं दर्शयति **अत्रेति** ।

**वा०र०—— स्वपराभिमतेति** । प्रथमतो दूष्यस्य विशिष्टज्ञाननिवर्त्यत्वरूपबाध्यत्वस्य पराभिमततया परस्वाभिमतयोरिति वक्तव्येऽल्पाच्तरतया स्वपरेत्युक्तम् । अत्र विशिष्टं ज्ञाननिवर्त्यत्वं पराभिमतं ज्ञानविनाश्यत्वमात्रं स्वाभिमतम् । प्रतिपन्नोपाधावित्येतत्तु स्वपराभिमतमिति विवेकः । स्वाभिमतत्वं च न ज्ञानबाध्यत्वरूपतया स्वाङ्गीकृतत्वमपि तु ज्ञानबाध्यत्वरूपतया परेणोक्तस्य स्वमते वस्तुतोऽङ्गीकारसत्त्वमात्रमिति द्रष्टव्यम् । मूले **उक्तविधयेति** । अज्ञानोपादानकस्य समाने विषये विरोधिना ज्ञानेनोपादानेऽज्ञाने निवृत्ते स्वयमेव विलपनमित्युक्तविधयेत्यर्थः । असिद्धत्वे हेतोरेकस्याभावात्तद्योग्यहेतुकथनेनासिद्धत्वमुपपादयति **वियदादेः सत्त्वेनेत्यादि** मूलम् । त्रिरूपज्ञानबाध्यत्वनिराकरणमुपपत्तिसापेक्षं तत्र कास्ता उपपत्तय इत्यतो मूले उपपत्तयस्त्विति प्रवृत्तम् । तत्रोक्तत्ववक्ष्यमाणत्वे व्यवस्थया दर्शयति **अत्राविद्येति** । अविद्याप्रमाणाद्यभावोपपादनेन अविद्यानिराकरणस्य करिष्यमाणतया तेनैव अत्रैवाधिकरणेऽविद्योपादानकत्वाभावस्योपपादयिष्यमाणत्वादिति संबन्धः । उक्तविधया ज्ञाननिवर्त्यत्वं वा ज्ञानबाध्यत्वमित्यस्योक्तं यदसंभवित्वं तत्रोपपत्तिरियम् । ज्ञानविनाश्यत्वमात्रस्योक्ताव्याप्त्युपपादकोपपत्तिमाह **वियत्पाद इत्यादि** । तत्र स्वरूपनाशाभावस्येत्यन्तेन वियदादौ न हीत्यादिना चासति नाशाभावोपपादनमिति विवेकः । वियत्पादे वियदादेः स्वरूपनाशाभावस्योपपादयिष्यमाणत्वादिति संबन्धः । न हि नाश इत्यादिकं यथाश्रुतम् । तत्र नाशाभावस्य चेति चशब्दार्थान्तभविन व्याख्येयम् । वियत्पाद





इति वर्तते । उक्तत्वस्य प्रथमोक्तावप्युपपादयिष्यमाणत्वस्योक्तेऽर्थेऽपि सत्त्वेन बह्वर्थविषयत्वेन चोक्तोपपादयिष्यमाणत्वयोः क्रमोल्लङ्घनेन प्रदर्शनमिति न दोषः । **पूर्वत्रेवेति** । दृष्टान्तप्रत्याख्यानपरतया योजनायां बाध्यं बाध्यमित्यनुगतव्यवहारविरोधोऽपसिद्धान्तश्चेति दूषणद्वयपरिहाराय व्यवहारसंपादकस्वाभिमतबाध्यत्वस्वरूपनिरूपणाय विज्ञातस्येत्येतद्योजना यथा कृता तथाऽत्र व्यवहाराद्युपपादकतया स्वाभिमतबाध्यत्वस्वरूपनिरूपणपरतया योजनाया असंभवात् तद्वाक्यवैयर्थ्यमित्यर्थः । **इति वदतेति** । सत्यत्ववादिनेति शेषः । प्रतियोगित्वादेरित्यादिपदेन प्रागुक्तासत्त्वपरिग्रहः । सदसत्साधारणबाध्यत्वव्यवहारस्य प्रतिपन्नेत्यादिना निर्वाहायोगादित्याशयः । **वक्तव्यतयेत्यादि** । तथा च यदेव भवता तादृशव्यवहारनिर्वाहकं बाध्यत्वमुच्यते तदेवाहं लक्षणत्वेन प्रतिपादयिष्यामि । तस्य च सकललक्ष्यवृत्तितायास्त्वत्संमतेर्नाव्याप्त्यादिकं त्वयोद्भावयितुं शक्यमित्यर्थः । अत्र च यथाश्रुत एव वाक्यार्थः स्पष्टः । न तु दृष्टान्तप्रत्याख्यानस्थलीयविज्ञातस्येत्येतदवतारतद्व्याख्यानटीकावत् योजनीयोंऽश इति ज्ञेयम् ।

अख्यात्यादिमतान्तरनिरासादेर्भाष्यस्थैवशब्दहिशब्दसूचितत्वकथनं मूले कुतः क्रियत इत्यतः स्वयं करिष्यमाणतन्मतनिरासस्योद्भाष्यत्वशङ्कापरिहाराय तत्कथनमिति मूलाशयं स्पष्टयितुं तत्कथनपरोत्तरवाक्यव्यावर्त्यशङ्कामुत्थाप्य तन्मतनिरासपरोत्तरग्रन्थप्रवृत्त्युपयोगितया तन्मतनिरासस्य व्युत्पादनसापेक्षतां च वदन् उत्तरवाक्यं तच्छङ्कानिरासपरत्वेनावतारयति **ननु टीकाकारीय इति** । अस्याः शङ्कायाः टीकाकारं प्रत्येव प्रवृत्तेर्भवदीय इत्यपरोक्षतया व्याख्येयम् । अन्यथा मूलकारेण यत्र भाष्यघटना क्रियते तत्र भाष्यकारीयमित्यादि परोक्षव्यवहारदर्शनिनान्यदीयग्रन्थस्यान्यं प्रत्यसङ्गतिशङ्कायां तेन सा परिह्रियत इति भ्रान्तिः स्यात् । तथाविधस्थल एव परोक्षनिर्देशस्वारस्यात् । टीकाकारीय इत्युक्तिस्तु भवदीयपदार्थस्पष्टीकरणायैवेति न दोषः । अत एवोत्तरग्रन्थस्यातिसङ्गतत्वादिति वक्ष्यति । तथा च भाष्यव्याख्यानं प्रतिज्ञायेत्यादियुक्त्या भवदीयाख्यात्यादिपक्षनिरासपरोत्तरग्रन्थो न सङ्गत इत्याशङ्कापरिहाराय टीकाकारो भाष्यसूचितप्रमेयव्युत्पादनपरोत्तरस्वकीयग्रन्थस्यातिसङ्गतत्वमित्याशयेनेति योजनीयम् । फलतस्तु टीकाकारोऽख्यात्यादिमतनिरासपरस्वकीयोत्तरग्रन्थस्य भाष्यव्याख्यानत्वाभावप्रयुक्तासङ्गतिशङ्का न कार्या । व्युत्पादनसापेक्षभाष्यसूचितप्रमेयव्युत्पादनपरत्वेनातिसङ्गतत्वादित्याशयेनोत्तरग्रन्थव्युत्पाद्यप्रमेयं भाष्यस्थह्येवशब्दसूचितार्थतया दर्शयतीति सिध्यतीति ज्ञेयम् । **उद्भाष्यमिति** क्रियाविशेषणम् ।

**स०व्र०— वियदादौ नित्य इति** । परेण कल्पमात्रावस्थायित्वरूपनित्यत्वस्यैव अभ्युपगमेऽपि ब्रह्मवत्तस्यापि नित्यत्वमुपपाद्य तत्राव्याप्तिकथनाददोषः । **रजतादौ चासत्त्वादिति** । इदमप्युपपाद्यदूषणम् । **पदस्य निरर्थकत्वायोगादिति** । अन्यथा पदत्वमेव न स्यादिति भावः । नन्वसदादिपदानामिव निरर्थकत्वेऽपि पदत्वं किं न स्यात् । न चासत्पदस्यात्यन्ताभावप्रतियोगित्वार्थकत्वान्न निरर्थकत्वमिति वाच्यम् । अत्यन्ताभावप्रतियोगित्वमेव नासत्पदार्थः । तथा सति शशविषाणमसदित्यत्र शशविषाणमत्यन्ताभावप्रतियोगित्वमित्यर्थापत्त्याऽनन्वितार्थापत्तेः । किन्त्वत्यन्ताभावप्रतियोगित्ववदेव । तच्चासदेवेति निरर्थकत्वेऽपि पदत्वमावश्यकमेवेति चेन्न । असदादिशब्दानां





नीलादिशब्दवद्गुणशब्दत्वात् । तेषां च स्वतो गुणमात्रप्रतिपादकत्वेऽपि पदान्तरसमभिव्याहारेण तदुक्तविशेष्ये गुणसंसर्गबोधकत्वेन विशेष्यस्य तन्मुख्यार्थत्वाभावेन तस्यासत्त्वेऽपि गुणरूपमुख्यार्थस्य सत्त्वेन निरर्थकत्वा-भावादिति भावः ।

**विठ्ठ०— अव्याप्तिरेवेति** । शुक्तिरजतादावुक्तलक्षणासद्भावात् अव्याप्तिरित्युक्तम् । **उपपत्तय इति** । वियदादेः सत्त्वे ज्ञाननिवर्त्यत्वाभावादौ शुक्तिरजतादेः अत्यन्तासत्त्वादौ च उपपत्तयः मिथ्यात्वमपि बन्धस्येत्यादिना प्रागुक्ताः प्रकृत्यधिकरणादौ च वक्ष्यमाणा अनुसन्धेया इत्यर्थः । **विज्ञातस्येति** । मूलवाक्यगत'एव'शब्दाभिप्रायं व्यनक्ति **अन्यथाविज्ञानमेवेति** ।

**चषव**:— अथानुव्याख्याव्याख्यां प्रतिजानानां ग्रन्थकृतां तदप्रत्याख्याताख्यात्यादिकल्पप्रत्याख्यान-विस्तृतेरनौचितीत्याशङ्कायां ह्येवेति निपातद्वयं प्रयुञ्जानैर्मूलकारैस्तत्प्रतिविहितेर्ध्वनिततया न क्षतिरित्याशयेन तादृशार्थं दर्शयति **अत्रेति** ।

**गूढ०— उक्तविधयेति** । ज्ञानेनाज्ञाने निवृत्ते तदुपादानकं स्वयमेव नश्यतीत्युक्तप्रकारेणेत्यर्थः । ज्ञानबाध्यत्वस्य त्रेधा विकल्पं हृदि निधायाद्यं निराह **ज्ञाननिवर्त्यत्वमिति** । द्वितीयं निराह **यदि पुनरिति** । तृतीयं निराह **यदि चेति** । नन्वत्र पक्षे प्रतिवादिनो विज्ञातस्येत्यनर्थकमित्यतस्तन्निवर्त्याशङ्कामाह **नन्विति** । अस्तु तर्हि तदेव मया लक्षणत्वेनोच्यत इत्यत आह **तच्चेति** । ननूक्तविधबाधस्वरूपस्य सर्वैरप्यङ्गीकारेण व्यावर्त्याभावात् एवकारवैयर्थ्यमित्यत आह **अत्रेति** । **तत्रेति** । अन्यथा विज्ञानमेव भ्रान्तिः सम्यग्विज्ञानमेव बाध इत्यत्रेत्यर्थः ।

## ॥ अथ पञ्चाख्यातिवादः ॥

### ॥ तत्रादौ प्राभाकराख्यातिवादः ॥

प्राभाकराख्याति-अनुवादः—

**३२४ सु०— अथ पञ्चाख्यातिवादः ॥ ॥ इह खलु केचित् 'यथार्थमेव सर्वं विज्ञानमि'ति मन्यमाना नान्यथाख्यातिं सहन्ते । तथा हि । केयमन्यथाख्यातिर्नाम ।**

**यदि तावत् 'अन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिः' । तदा घटादिप्रत्ययाः सर्वेऽप्यन्यथाख्यातित्वाद्विभ्रमाः प्रसज्येरन् ।**

**किञ्च शुक्तिकाया रजताकारपरिणामः किं सकारण उताकारणः । न तावदकारणः कादाचित्कत्वानुपपत्तेः । आद्ये कारणं वाच्यम् ।**

**करणदोष इति चेन्न । तस्य करणसंबन्धिनः शुक्तिकापरिणामहेतुत्वानुपपत्तेः । अन्यथा तदैव सकलार्थानां रजतरूपपरिणामप्रसङ्गात् ।**

**बिन्दुः**— नैयायिकमतेन त्वन्यत्र विद्यमानस्यैव रजतादेरन्यत्र शुक्त्यादौ भानमन्यथाख्यातिरिति तदुभयं प्राभाकरमुखेन दूषयित्वाऽख्यातिरूपं तदीयसिद्धान्तं प्रतिक्षेप्तुमुपक्षिपति **इहेति । कादाचित्कत्वेति** । सादित्वस्येत्यर्थः । **अन्यथा तदैवेति** । परिणामित्वाभिमतेनासंबद्धस्य तटस्थस्यैव तत्परिणामहेतुत्व इत्यर्थः ।

**परि०**— स्वोक्तरूपभ्रान्तिबाधौ प्रपञ्चयाम इति भावेनाख्यातिपक्षं तावदपाकर्तुमनुवदति । **इह खलु केचिदि**त्यादिना **अत्रोच्यत** इत्यन्तेन । केचित्प्राभाकरा इत्यर्थः । अन्यथाख्यातिर्नामान्यथापरिणते वस्तुनि ख्यातिरुतान्यवस्तुनोऽन्यात्मनाऽवभासः असंबद्धविशेषणविशिष्टप्रतीतिर्वाऽन्यथाकारं ज्ञानं वा अन्याकारोल्लेख्यन्यालम्बनं ज्ञानं वा । तत्राद्यं परिणामपक्षं तावन्निराह **यदि तावदि**त्यादिना **तस्मान्न परिणामपक्षो युक्त** इत्यन्तेन । **अन्यथा परिणत इति** । शुक्त्यादिके रजताद्यात्मना परिणते या ख्यातिः प्रतीतिः सेत्यर्थः । कारणमिन्द्रियादिकरणदोषो वा दुष्टेन्द्रियसंबन्धो वा दुष्टेन्द्रियसंप्रयोगजन्यं विज्ञानं वा । आद्यमाशङ्क्य निराह **करणदोष इति चेन्नेति** ।

**यादु०**— **अन्यथाख्यातित्वादिति** । अन्यथापरिणतवस्तुविषयकत्वादित्यर्थः । **शुक्तिपरिणामेति** । शुक्त्यसन्निकृष्टत्वादिति भावः ।

**वं०प०**— **अन्यथेति** । अधिष्ठानापेक्षयाऽन्यथा परिणते रजतादिरूपे वस्तुनि विषये ख्यातिर्ज्ञानमन्यथाख्यातिरित्यर्थः । अन्यथापरिणतवस्तुविषयकं ज्ञानमन्यथाख्यातिरिति यावत् । **घटादीति** । घटादिज्ञानानामपि मृदाद्यपेक्षयाऽन्यथा पृथुबुध्नोदराकारवत्तया परिणतघटादिवस्तुविषयकत्वादन्यथाख्यातित्वं स्यादित्यतिव्याप्तिरित्यर्थः । **तदैवेति** । रजताकारपरिणामहेतोः करणसंबन्धिनो दोषस्य सत्त्वादित्यर्थः ।

**आनन्दः**— अन्यथाविज्ञानमेव भ्रान्तिरित्यवधारणेन मतान्तरव्यावृत्तिः कृतेति उक्तम् । तत्र कानि तानि मतान्तराणीत्यतस्तान्यनुवदन्ति **इति खलु केचिदित्यादिना । अन्यथाख्यातिमिति** । अन्यथा ज्ञानरूपामित्यर्थः । अन्यथा गृहीतासंसर्गज्ञानद्वयरूपान्यथाख्यातेः परेणापि स्वीकारान्न सहन्त इत्ययुक्तं स्यादिति भावः । **अन्यथा परिणत इति** । अत्र परिणत इत्यध्याहृत्यायमन्यथाख्यातिपदार्थ इति भावः । **तदेति** । यत्स्वरूपापेक्षयान्यथा पृथुबुध्नोदराकारेण परिणते वस्तुनि घटे ख्यातिर्घटोऽयमित्यादिरूपा तस्या अप्यन्यथाख्यातित्वं स्यादित्यर्थः । अतिव्याप्तिमुक्त्वा असंभवमप्याह **किञ्चेति** । तद्धि कारणं किं करणदोषो वा दुष्टकरणसंसर्गो वा दुष्टकरणजन्यविज्ञानं वा । तत्राद्यं शङ्कते **करणेति** । **अन्यथेति** । करणसंबन्धिनोऽपि शुक्तिपरिणामहेतुत्वमित्यर्थः ।

**कं०रा०**— **कादाचित्कत्वेति** । कार्यकादाचित्कत्वस्य सामग्रीनियतत्वेन रजताकारपरिणामस्याकारणकत्वे तदभावात्कादाचित्कत्वानुपपत्तिरिति भावः ।

**श्रीनिधि०**— अन्यथाख्यातिरित्यत्रान्यथात्वं विषयापेक्षया वा ज्ञानापेक्षया वेति विकल्पं मनसि निधायाद्ये दूषणमाह **केयमित्यादिना । विभ्रमाः प्रसज्येरन्निति ।** स्वोपादानापेक्षया यत्किञ्चिदपेक्षया नान्यथा परिणामो घटादेरस्तीति भावः । **अन्यथेति ।** शुक्तिसंबन्धिनोऽपि तथा रजताकारपरिणामहेतुत्व इत्यर्थः ।

**वा०चं०**— ॥ **अथ पञ्चाख्यातिवादः** ॥ अन्यथाज्ञानस्वरूपे सिद्धे तद्विशेषचिन्ताऽवसर इति तत्स्वरूपमनङ्गीकुर्वतामख्यातिवादिनां मतमनूद्य निराकर्तुं प्रसञ्जयति **इहेति ।** ननु बाधकाभावेन साधकसद्भावेन च सिद्धतत्स्वरूपासहनमनुचितमित्यतो बाधकसद्भावं साधकाभावं च व्युत्पादयन्नत्युल्बणत्वात्तदभिमतं बाधकं तावदाह **तथा हीति ।** ख्यातिर्हि ज्ञानम् । तच्चार्थावभासिप्रकाशस्तत्रान्यथात्वमर्थविशेषणम् । अन्यथाभूतेऽन्यथापरिणत इति यावत् । अर्थे ख्यातिरिति विवक्षितम् । आहोस्विदन्यथात्वमवभासविशेषणम् । तथा चान्यमर्थमन्यथाऽन्यात्मना वा तदसंसृष्टमन्यथा सद्विशेषणसंसृष्टतया वाऽवभासयज्ज्ञानमिति वाऽथवाऽन्यथात्वं ज्ञानविशेषणं तस्य चान्यथात्व-मथपिक्षयाऽन्याकारत्वेन वाऽऽलम्बनापेक्षयाऽन्याकारोल्लेखितया वेति शब्दार्थानुसारेणान्यथापरिणते वस्तुनि ख्यातिरिति वा (इति शब्दार्थानुसारेणेति । ख्यातिर्हि ज्ञानमित्यादिनाऽन्याकारोल्लेखितया वेत्यन्तेनोक्तान्यथा-ख्यातिपदार्थपर्यालोचनया प्राप्तान्पञ्चविकल्पान्मनसि निधायेत्यन्वयः ।) वस्तुनो वस्त्वन्तरात्मनाऽवभासो वाऽसंबद्धविशेषणविशिष्टप्रतीतिर्वाऽन्याकारं ज्ञानं वाऽन्याकारोल्लेख्यन्यालम्बनं ज्ञानं वाऽन्यथाख्यातिरिति विकल्पान्मनसि निधायान्यथाख्यातिवाद्यभिमतान्तिमपक्षे संविद्विरोधप्राप्तेस्तमन्ते निधाय दुर्बलक्रमेण निराचिकीर्षुः परिणामपक्षं तावन्निराकर्तुमुत्थापयति **यदीति ।** अत्र प्रथमकल्पो भास्करमतानुसारेण द्वितीयतृतीयौ नैयायिकमतेन, चतुर्थो विज्ञानवादिमतेन पञ्चमो नैयायिकाभिनवान्यथाख्यातिवादिसाधारण्येनेति द्रष्टव्यम् । घटादीत्यादिपदेन परिणामिवस्तुमात्रग्रहणम् । ननु शुक्तिकाया रजताकारपरिणामस्य घटादिपरिणामापेक्षया विलक्षणत्वात्तादृशस्यैवा-न्यथाख्यातिलक्षणप्रविष्टत्वान्न घटादिप्रत्ययेष्वतिव्यातिरित्यत आह **किञ्चेति ।** घटादिपरिणामवैलक्षण्यं, शुक्ते रजताकारपरिणामस्य, किमकारणकत्वेनोत सकारणकत्वेऽपि तत्कारणस्य प्रसिद्धरजतपरिणामकारणवैलक्षण्येनेति प्रश्नाभिप्रायः । भावत्वेन सकारणकत्वपक्षस्यादौ निर्देशेऽपि तद्दूषणस्य बहुत्वात्सूचीकटाहन्यायेन द्वितीयमादौ निराकरोति **नेति ।** शुक्तिपरिणामरूपरजतस्याकारणत्वेऽनादित्वेन शुक्तेस्तद्रजतस्य च कादाचित्कत्वानुपपत्ते-रित्यर्थः । प्रथमे कारणविशेषो वाच्य इति पृच्छति **आद्य इति ।** यद्वाऽस्त्वयं परिणामो विलक्षणस्तथापि शुक्तिव्यतिरिक्तागन्तुककारणनिरपेक्षो वा तत्सापेक्षो वेति प्रश्नाभिप्रायः । शुक्तिमात्रनिबन्धनत्वे शुक्तौ सत्यामपि परिणामस्य कादाचित्कत्वमनुपपन्नमित्याशयेन निरपेक्षपक्षत्वं निराकरोति **नेति ।** आगन्तुककारणं पृच्छति **आद्य इति ।** एवं च परिणामित्वं स्वीकृत्य सकारणकत्वादिविकल्पोऽनुपपन्न इति दूषणमलग्नकं द्रष्टव्यम् । आगन्तुककारणविशेषोऽपि भवन्पूर्वं पश्चाच्चासतो रजतपरिणामस्य तत्प्रतीतिरूपो वा तत्प्रतीतिकारणरूपो वा संभावितः । तत्प्रतीतितत्कारणयोर्दोषासहितयोर्हेतुत्वेऽतिप्रसङ्गाद्दोषोऽपि कारणकोटौ निवेश्यः । तस्य च प्राधान्यं वा सहकारित्वमात्रं वा वाच्यम् । एवं च करणदोषो वा दुष्टकरणसंसर्गो वा दुष्टकरणजन्यप्रतीतिर्वा आगन्तुककारणविशेष इति पक्षाः प्रादुर्भवन्तीत्याशयेनाद्यमुत्थापयति **करणेति ।** ननु शुक्त्यसंबन्धिनोऽपि





रजतप्रतीतिकारणसंबन्धितया रजतरूपपरिणामहेतुत्वं करणदोषस्य स्यादेवेत्यतस्तर्हि सर्वपदार्थानां शुक्तितुल्यतया शुक्ते रजताकारपरिणामदशायां सर्वेषामपि स स्यादित्याह **अन्यथेति** ।

**वा०र०**— सिद्धमेतत् शुक्तौ रजतत्वेनावभासत इत्युत्तरग्रन्थे विपर्ययस्वरूपसिद्धेर्विशेषविचारार्थताया उक्तत्वात् तद्ग्रन्थमनुसन्धाय प्रथमतोऽख्यातिमतनिराकरणं सङ्गमयति **अन्यथाज्ञानेति** । अख्यातिवादिनां मतमित्यनन्तरं तावदिति शेषः । साधकाभावकथनानन्तरमेव बाधकव्युत्पादनस्य परपक्षदूषणाय कर्तव्यतया कथाप्रवृत्तिमार्गानुसारेण प्राप्तावपि निमित्तविशेषाद्बाधकथनस्यैव प्राथम्यं युक्तमित्याह **अत्युल्बणत्वादिति** । केयमन्यथाख्यातिर्नामेत्यन्यथाख्यातिपदार्थविकल्पनिराकरणं क्रियते । तत्र यदि तावदन्यथापरिणते वस्तुनि ख्यातिः नापि वस्तुनो वस्त्वन्तरात्मनाऽवभासः । एतेनासंबद्धविशेषणेत्यादिनोक्तानां पक्षाणामन्यथाख्यातिपदेन कथं प्राप्तिर्येनान्यथाख्यातिपदार्थतया विकल्पपूर्वकनिराकरणं युक्तं स्यादित्यतोऽन्यथाख्यातिपदार्थाक्षरार्थतया तेषां पक्षाणां प्रसक्तिप्रदर्शनपूर्वकं तद्विकल्पाभिप्रायेण प्रवृत्तोऽयं ग्रन्थ इति चाह । ख्यातिर्हि ज्ञानमित्यादिना ख्यातिपदार्थज्ञानविशेषणतयोपात्तान्यथेत्यस्यान्याकारमिति अन्याकारोल्लेखीति च पक्षद्वयसमर्पकत्वोपपत्तावपि प्रथमपक्षत्रयसमर्पकत्वायोगात् तत्समर्पणोपयोगितया ज्ञानपदार्थमाह **तच्चार्थेति** । तत्रेत्यतःपरं किमिति शेषः । अर्थे ख्यातिरित्यत्र ख्यातिपदमवभासिप्रकाशमात्रपरं मूलानुसारेण प्रयुक्तम् । ख्यातिपदार्थज्ञानपदार्थान्तर्गतार्थपदस्य पूर्वत्रान्वयादिति स्पष्टम् । **इति विवक्षितमिति** । एतत्पक्षानुसारेण मूलस्थ यदितावदन्यथापरिणतइत्याद्यपक्षस्य लाभः । अन्यथा अवभासयतीत्युक्ते अन्यथेत्यत्रत्यथाला अन्यप्रकारेणेति प्रतिपादनादन्यत्वस्य च सापेक्षत्वा-दतथाभूतमिति लभ्यत इति सिद्धवत्कृत्य तादात्म्यारोपाभिप्रायेणोक्तम् **अन्यमन्यात्मना वेति** । संसर्गारोपाभि-प्रायेणोक्तं **तदसंसृष्टमित्यादि** । एतदवभासविशेषणत्वपक्षीयारोपद्वयानुसारिपक्षद्वयानुसारेण वस्तुनो वस्त्वन्तरेति असंबन्धेति च मूलस्थपक्षद्वयलाभः । अन्यात्मना वा अवभासयज्ज्ञानमित्युत्तरेण संबन्धः । अर्थप्रकाशपदस्य ज्ञानव्यापारपुरस्कारेण प्रवृत्तत्वेऽपि ज्ञानपदानतिभिन्नार्थत्वमित्याशयेन ज्ञानपदप्रयोगः । अन्यथाऽवभासयन्प्रव ाश इति वेत्येवावक्ष्यत् । उक्ताभिप्रायेणोत्तरकल्पेऽपि ज्ञानविशेषणमित्युक्तिः । यद्वाऽर्थावभासिप्रकाश इत्यत्र प्रकाशपदं धर्मिपरं अर्थावभासीति व्यापारपरम् । तत्र व्यापारांशे पक्षद्वयमभिधाय प्रकाशरूपधर्म्यंशेऽन्यथात्वं विशेषणमिति प्राप्तेरित्यादिरूपेण व्याख्येयमस्ति ॥ ......................... ॥

न्यायमकरन्दतट्टीकाद्वयतत्त्वप्रदीपिकातन्नयनप्रसादिनीभामतीविवरणतट्टीकान्यायदीपावलीतट्टीका-कुसमाञ्जलिन्यायभाष्यादीन्यनुसृत्य मूलतट्टीकयोः प्रवृत्तेः तत्र तत्र तत्तदनुसारेण अख्यात्यादिपक्षनिराकरणटीका व्याकर्तव्यास्ति ।

**किमकारणकत्वेनेति** । क्रमव्यत्यासनिमित्तं ग्रन्थकृदेव विभावयिष्यति । **प्रतीतिरूपो वेति** । प्रतीतिपक्षस्यान्ते निराकरणेऽपि प्रतीतिनिरूप्यत्वात् तत्करणस्य पाश्चात्यमित्यभिप्रेत्य क्रमोल्लङ्घनम् । **करणसंबन्धिन इति** मूले करणसंबन्धित्ववचनेन विषयसंबन्धिता नास्तीति सूचनेन विषयभूतशुक्त्यसंबन्धित्वान्न

शुक्तिपरिणामहेतुत्वमिति लब्धमित्याशयेनोक्तं **ननु शुक्त्यसंबन्धिनोऽपीति** । तथा च दोषस्य शुक्तिसंबन्धित्वाभावेऽपि रजतप्रतीतिकरणसंबन्धित्वमात्रेण तादृशादेव तस्माद्रजतजन्मेत्यङ्गीक्रियत इत्यर्थः ।

**विठ्ठ०**— तत्र तावत् अन्यथाख्यातिरेव नास्तीति वादिनां प्राभाकराणां मतमनुवदति **इह खलु केचिदित्यादिना** । अन्यथाख्यातिर्नाम अन्यथापरिणते वस्तुनि ख्यातिर्वा अन्यस्य अन्यात्मना अवभासो वा असंबद्धविशेषणविशिष्टप्रतीतिर्वा अन्याकारं ज्ञानं वा अन्याकारोल्लेखि अन्यावलम्बनं ज्ञानं वा इति विकल्पान् मनसि निधाय आद्यं तावन्निराकरोति **यदि तावदित्यादिना** । शुक्तिकायाः रजताकारेण परिणतिरित्याशयेन अन्यथापरिणते वस्तुनीत्युक्तम् । **अन्यथाख्यातित्वादिति** । मृत्पिण्डत्वादिप्रकारं विहाय अन्यथापरिणतवस्तुविषयकख्यातित्वादिति । **कारणं वाच्यमिति** । किं तत्कारणं करणदोषो वा दुष्टकरणसंसर्गो वा दुष्टकरणजन्यविज्ञानं वेति विकल्पान्मनसि निधायाद्यमाशङ्क्य निषेधति **करणदोष इति** । **अन्यथेति** । करणसंबन्धिनोऽपि दोषस्य रजताकारपरिणामकारणत्वे शुक्तिकाया एव रजताकारपरिणाम इत्यत्र विनिगमकाभावात् सकलपदार्थानां रजतरूपपरिणामप्रसङ्ग इत्यर्थः ।

**चषव**:— अन्यथाख्यातिस्वरूपस्यैवालीकतया तद्विशेषविचारस्यानवसरदुस्स्थतेति प्राभाकराणामाशङ्कां प्रतिविधित्समानस्तन्मतमनुवदति **इहेत्यादिना तस्मादख्यातिपक्ष एव श्रेयानित्यन्तेन** । अन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिरिति अन्यस्यान्यात्मताऽवभासः, सेति, असंबद्धविशेषणविशिष्टप्रतीतिः सेति अन्याकारं ज्ञानं सेति अन्याकारोल्लेख्यन्यालम्बनज्ञानं सेति पञ्चकल्पीमभिप्रेत्य भास्कराभिमताद्यकल्पं तावत्प्रतिविधत्ते **यदीति** । **प्रसज्येरन्निति** । पटाद्याकारापेक्षयाऽन्यथापरिणतवस्तुविषयकत्वाविशेषादिति भावः । परिणामस्य शुक्तिव्यतिरिक्तकारणसापेक्षत्वतदनपेक्षत्वगोचरकल्पद्वयीमभिप्रेत्य द्वितीयस्यानतियत्नसाध्यनिरसनतया तमादितः प्रत्याख्याति **न तावदिति** । एतेन परिणामत्वस्य स्वकारणकत्वव्याप्यतया तद्दर्शने कल्पान्तरानुत्थितिशङ्काऽनवकाशः । आद्येऽपि शुक्त्यतिरिक्तपरिणामकारणत्वेन करणदोषोऽभिप्रेयते, दुष्टकरणसंसर्गो वा, दुष्टकरणजन्यं विज्ञानं वेति कल्पत्रयीमनुसन्दधान आद्यं प्रत्याचष्टे **करणसंबन्धिन इति** । **हेतुत्वानुपपत्तेरिति** । कार्याभिमतवैयधिकरण्यादिति भावः । अन्यथा, तद्वैयधिकरण्येऽपि तद्धेतुत्वोपगमे ।

**गूढ०**— अन्यथाविज्ञानमेव भ्रान्तिरित्यवधारणेन मतान्तरव्याहृतिः कृतेत्युक्तम् । तत्र कानि तानि मतान्तराणीत्यतस्तान्यनुवदन्ति **इह खलु केचिदित्यादिना** । **अन्यथाख्यातिमिति** । अन्यथाज्ञानरूपामित्यर्थः । अन्यथागृहीतासंसर्गज्ञानद्वयरूपान्यथाख्यातेः परेणापि स्वीकारान्न सहन्त इत्ययुक्तं स्यादिति भावः । **अन्यथापरिणत इति** । अत्र परिणत इत्याध्याहृत्यायमन्यथाख्यातिपदार्थ इति भावः । **तदिति** । यत्स्वरूपापेक्षया अन्यथा पृथुबुध्नोदराकारेण परिणते वस्तुनि घटे ख्यातिर्घटोऽयमित्यादिरूपा तस्या अप्यन्यथाख्यातित्वं स्यादित्यर्थः । अतिव्याप्तिमुक्त्वा असंभवमप्याह **किञ्चेति** । तद्धि कारणं किं करणदोषो वा दुष्टकरणसंसर्गो वा दुष्टकरणजन्यविज्ञानं वा । तत्राद्यं शङ्कते **करणेति** । **अन्यथेति** । करणसंबन्धिनोऽपि शुक्तिपरिणामहेतुत्वमित्यर्थः ।





**प्रदीपः**— अत्र प्रसङ्गात् पराभिमतख्यातिनिरासेन स्वाभिमतख्यातिदृढीकरणार्थमख्यातिमतमुपस्थापयति तावत् **इह खलु केचिदित्यादिना** । कुतो न सङ्गतं इत्यतो यथार्थमित्याद्युक्तं भ्रान्तित्वेन प्रसिद्धानां शुक्तिरजतादिज्ञानानां कथं याथार्थ्यं भ्रान्तेः दुर्निरूपत्वादित्याह **तथा हीति** । वक्ष्यमाणपक्षानपेक्ष्य एकमिति किंशब्दप्रयोगः (?) । **यदि तावदिति** । परिणामवादिमते घटादीनामपि मृत्परिणामत्वाद्घटादिज्ञानानां भ्रमत्वं स्यादित्यर्थः । **कादाचित्कत्वानुपपत्तेरिति** । यदि कारणाभावेऽपि कार्यमुत्पद्येत ततोऽपेक्षणीयाभावात् इतःपूर्वमप्युत्पद्येत । एवं ततःपूर्वमपीति कादाचित्कत्वं न स्यादित्यर्थः ।

**३२५ सु०— दुष्टकरणसंसर्गो हेतुरिति चेत्तथाऽपि किं शुक्तित्वापगमेन रजतरूपपरिणामः किं वा तदनपगमेन । आद्ये पुरुषान्तरेणापि तदा शुक्तित्वं न प्रत्येतव्यम् । द्वितीये भ्रान्तेनापि तत्प्रत्येतव्यम् ॥ किञ्च शुक्तित्वापगमे बाधेऽपि न तद्भायात् ॥ अथ पुनः शुक्त्याकारेण रजतं परिणतमिति चेन्न । करणदोषस्य कारणस्याभावात् । बाधोऽप्येवं सति भ्रमः स्यात् ॥ अपि चैतत्समस्तप्रतिपत्तृसाधारणमपि कुतो न भवेत् । यत्करणपरिणतं तेनैव गृह्यत इति चेन्न । घटादेरपि कुलालादिमात्रवेद्यतापातात् । सुखादिवदिति चेन्न । बाह्यान्तरत्वेन विशेषात् । अन्यथोक्तातिप्रसङ्गानिस्तारात् ।**

**बिन्दुः**— ननु शुक्तिरूपकार्योत्पत्त्यन्यथानुपपत्त्या करणदोषोऽपि कल्प्यत इति चेत्तत्राह **बाधोऽप्येवं सतीति** ।

**परि०**— द्वितीयमाशङ्क्य निराह **दुष्टेति** । **सुखादिवदिति चेदिति** । सुखादिकं तत्पुरुषप्रयत्नसाध्यमपि न सर्वैरुपलभ्यते किन्तु तेन तेनैव तथा शुक्त्यादिपरिणामोऽपीति चेदित्यर्थः । आन्तरत्वात्सुखादेरस्तु तथात्वम् । बाह्यत्वाच्छुक्त्यादिपरिणामस्य न तथात्वमित्याह **बाह्येति** । **अन्यथेति** । बाह्यपरिणामत्वेऽपि तत्तन्मात्रवेद्यत्वोपगमे घटादेरपि कुलालादिमात्रवेद्यताऽऽपातादित्यर्थः ।

**यादु०**— **भ्रान्तेनापीति** । यथा मृत्वानपगमेन जाते घटलक्षणपरिणामे मृत्वमुपलभ्यते तथेत्यर्थः । **बाधोऽप्येवं सतीति** । पुना रजतस्य शुक्त्याकारेण परिणामाङ्गीकारे इयं शुक्तिरिति बाधोऽपि भ्रमः स्यात् । अन्यथापरिणतवस्तुविषयकत्वादित्यर्थः । **समस्तप्रतिपत्तृसाधारणमिति** । मृत्पिण्डपरिणामस्य घटस्य सर्वप्रतिपत्तृसाधारण्यदर्शनाद्रजतस्यापि शुक्तिपरिणामत्वे तत्स्यादिति भावः । **अन्यथोक्तातिप्रसङ्गेति** । अन्यथा बाह्यान्तरत्वेन विशेषानङ्गीकारे । शुक्तिरजतादेरपि सुखादिवत्पुरुषकरणनिमित्तत्वेन आन्तरत्वाङ्गीकार इति यावत् । घटादेरप्यान्तरत्वापत्त्या कुलालमात्रवेद्यताऽऽपातादित्युक्तातिप्रसङ्गानिस्तार इत्यर्थः । केचित्तु अन्यथा बाह्यान्तरत्वेन विशेषानङ्गीकारे सुखादेरपि बाह्यत्व इति यावत् । सर्वप्रतिपत्तृसाधारण्यलक्षणस्यातिप्रसङ्गस्य सुखादावपि न निस्तारः स्यादित्यर्थ इत्याहुः ।





**वं०प०**— **कुलालमात्रेति** । तद्वस्तरूपकरणपरिणतत्वादित्यर्थः । **सुखादिवदिति** । सुखादिकं तत्तत्पुरुषप्रयत्नसाध्यमपि न सर्वैरुपलभ्यते किन्तु तेन तेनैव । तथा शुक्त्यादिपरिणामोऽपि चेदित्यर्थः । आन्तरत्वात्सुखादेरस्तु तथा । बाह्यत्वाच्छुक्त्यादिपरिणामस्य न तथात्वमित्याह **बाह्येति** । **अन्यथेति** । बाह्यपरिणामत्वेऽपि तन्मात्रवेद्यत्वोपगमे घटादेरपि कुलालमात्रवेद्यत्वाऽऽपातादित्यर्थः ।

**आनन्दः**— द्वितीयं शङ्कते **दुष्टेति** । **आद्ये पुरुषान्तरेणेति** । रजतरूपपरिणामेन शुक्तेरपगमादिति भावः । **द्वितीय इति** । इदानीं शुक्तित्वस्यापगमादिति भावः । शुक्तित्वस्यापगमेन रजतरूपपरिणाम इत्यत्र दूषणान्तरमाह **किञ्चेति** । करणभूतदोषाभावेनायं परिणामो नोपपद्यत इत्याह **करणदोषस्येति** । **बाधोऽप्येवं सतीति** । शुक्त्या-द्याकारेण रजतं परिणतमिति चेदुच्यत इत्यर्थः । शुक्त्याद्याकारेण परिणते रजते रूपे वस्तुनि ख्यातिर्भवती-त्यन्यथाख्यातिलक्षणसद्भावादिति भावः । किञ्चायं रजतरूपपरिणामः सकलप्रतिपत्तृसाधारणोऽपि स्यादित्याह **अपि चेति** । तथाच सर्वेषामपि शुक्तौ रजतप्रतीतिः स्यादिति भावः । **यत्करणपरिणतमिति** । यत्करणसंसर्ग-परिणतमित्यर्थः । **घटादेरपीति** । तस्य कुलालकरणसंसर्गपरिणतत्वादिति भावः । ननु सुखादि यत्करणपरिणतम् । तेनैव यथा गृह्यते तथा रजतमपीति शङ्कते **सुखादिवदिति** । वैषम्येण परिहरति **बाह्येति** । सुखादेरन्तरत्वाद्रजतस्य च बाह्यत्वेन विशेषसद्भावान्न तत्रायं नियम इति भावः । **अन्यथेति** । उक्तविशेषमनङ्गीकृत्य यत्करणपरिणतं तेनैव ग्रहाङ्गीकार इत्यर्थः । **उक्तेति** । घटादेरपीत्यनेनोक्तेत्यर्थः ।

**कं०रा०**— बाधकाले रजतस्य शुक्त्याकारेण परिणतत्वाद्बाधे शुक्तित्वभानं संभवतीत्याशयेन शङ्कते **अथेति** । **कारणस्येति** । रजतस्य शुक्त्याकारपरिणामकारणस्येत्यर्थः । न च वाच्यं तदा करणदोषाभावोऽसिद्ध इति । तत्सत्त्वे बाधकप्रमाऽनुदयप्रसङ्गादिति भावः । **बाध इति** । एवं सति रजतस्य शुक्त्याद्याकारेण परिणतत्वे नेदं रजतं किन्तु शुक्तिरिति बाधोऽपि भ्रमः स्यात् । अन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिरिति तल्लक्षण-लक्षितत्वादित्यर्थः । **एतदिति** । शुक्तिपरिणामरूपं रजतं सकलप्रतिपत्तृवेद्यं कुतो न भवेदित्यर्थः । **बाह्येति** । सुखादिकमान्तरं शुक्तिपरिणामरूपं रजतं तु बाह्यमिति विशेषाद्रजतस्य सुखादिवत्प्रतिपत्त्रसाधारण्यं न संभवतीति भावः । **अन्यथेति** । रजतस्य बाह्यत्वेऽपि तत्तत्प्रतिपत्तृमात्रवेद्यत्वे घटादेरपि कुलालमात्रवेद्यतापातादित्युक्तानिति-प्रसङ्गस्यानिस्तारादित्यर्थः ।

**श्रीनिधि०**— विषयसंबन्धिनं कारणं शङ्कते **दुष्टकरणेति** । करणदोषस्य कारणस्याभावादिति विद्यमानस्य तस्य शुक्ते रजतरूपपरिणामेऽपि विनियोगादिति भावः । **बाधोऽप्येवं सतीति** । रजतपरिणामाङ्गीकारे बाधः । नेदं रजतमिति ज्ञानं सुखादिवदिति सुखादिकं हि यत्करणपरिणतं तेनैव गृह्यते । तद्वत् रजतादिकमपि घटादेस्तदभावेऽपि वैचित्र्यादित्यर्थः । **अन्यथेति** । अन्तरं यत्करणपरिणतं तेनैव गृह्यते । बाह्यं तु न तथेत्येवं विशेषमनङ्गीकृत्य करणसंबन्धिन एव विषयस्य वेद्यताभ्युपगम इत्यर्थः । **उक्तेति** । घटादेरपि कुलालमात्रेत्याद्युक्तेत्यर्थः । बाह्यत्वाविशेषेण वैचित्र्याभावादिति भावः ।

**वा०चं०**— एतद्दोषपरिजिहीर्षया संसर्गहेतुत्वेन विवक्षन्नेव द्वितीयमुत्थापयति **दुष्टेति** । एवं सति पूर्वोक्तदोषपरिहारेऽपि दोषान्तरं स्यादेवेत्याह **तथाऽपीति** । क्षीरादौ क्षीरत्वाद्यपगमेन दध्याकारपरिणामस्य, सुवर्णादौ तत्त्वानपगमेन कुण्डलत्वादिपरिणामस्य, दर्शनात् प्रश्नः । **पुरुषान्तरेण** दोषशून्येन । कुण्डलादिकारणस्येव दोषस्य परिणाममात्रहेतुतया कुण्डलादि पश्यता सुवर्णत्वादिकमिव शुक्तित्वं सदोषेणापि प्रत्येतव्यमेवेत्याह **द्वितीय इति** । ननु विलक्षणत्वादस्य परिणामस्य यदीयदुष्टकरणसंसर्गजन्योऽयं रजताकारपरिणामस्तं प्रत्येव शुक्तित्वापगमोऽतो न पुरुषान्तरीयशुक्तित्वप्रत्ययविरोध इत्यतस्तर्हि भ्रान्तं प्रति शुक्तित्वं न भायादित्याह **किञ्चेति** । **बाधोऽपीति** । शुक्ते रजताकारपरिणामस्येव रजतस्यापि शुक्त्याकारपरिणामाभ्युपगमेऽन्यथापरिणते ख्यातित्वाविशेषाद्भ्रान्तिरिव बाधोऽपि भ्रमः स्यादित्यर्थः । यद्वा ननु तत्रापि करणदोषोऽङ्गीक्रियत एवेति चेत्तर्हि दुष्टकरणजन्यत्वाविशेषान्न भ्रम एव केवलं भ्रमः किन्तु बाधोऽपि भ्रम एव स्यादित्याह **बाधोऽपीति** । अथवा माऽस्तु करणदोषस्तथाऽपि रजतस्य शुक्त्याकारपरिणामे कारणान्तरमेव कल्पयिष्यामीत्यतस्तर्हि प्रसिद्धपरिणामविलक्षणेऽपि परिणामे दुष्टकरणसंसर्गस्याभावेन तस्य व्यभिचारितया कार्यसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयग्रस्ततया शुक्ते रजताकारपरिणामेऽपि तस्याहेतुतयाऽन्यथा परिणते ख्यातित्वस्यैव भ्रमत्वप्रयोजकत्वापातेन बाधस्यापि तथात्वाद् भ्रमत्वं स्यादित्याह **बाधोऽपीति** । पुरुषविशेषं प्रत्येव रजताकारपरिणाम इत्यङ्गीकृत्येदमभिहितम् । वस्तुतस्तु शुक्तित्वमपगच्छतु वा मा वा मृदादिपरिणामघटादेरिव शुक्तिपरिणामरजतादेरपि परिणामत्वाविशेषाद्भ्रान्तस्येव सर्वेषामपि रजतत्वाकारभानं स्यादेवेत्याह **अपि चेति** । ननु न परिणामाविशेषो, भ्रान्तकरणपरिणतत्वस्यैव विशेषत्वादित्याशङ्क्ते **यदीति** । **घटादेरिति** । घटादिरूपपरिणामं प्रति कुलालादिकरणस्यैव निमित्तत्वादित्याशयः । नन्वेवं घटादिवत्सुखादेरपि परिणामत्वाविशेषात्सर्वप्रतिपत्तृसाधारण्याऽऽपत्त्या पदार्थवैचित्र्यस्य त्वयाऽप्यनुसरणीयतया ममापि तत एवातिप्रसङ्गपरिहार इत्याशयेन सुखादिवत्तत्तत्करणपरिणतस्य तत्तद्ग्राह्यत्वोपपत्तिरित्याशङ्क्ते **सुखादिवदिति** । परप्रत्यक्षायोग्यतत्तदान्तरोपादानकसुखादेस्तत्तद्ग्राह्यत्वेऽपि सर्वप्रत्यक्षयोग्यबाह्यशुक्त्याद्युपादानकरजतादेर्घटादेरिव सर्वप्रतिपत्तृसाधारण्यमेवोचितमित्याह **नेति** । बाह्योपादानकत्वाविशेषेऽपि रजतादेस्तद्ग्राह्यत्वे घटादेरपि कुलालादिमात्रवेद्यत्वप्रसङ्गो दुर्वारः । बाह्येऽप्यवान्तरवैचित्र्यस्य रजतादेः शुक्त्यादिपरिणामत्वादिसिद्ध्यधीनतयाऽन्योन्याश्रयादनुपपत्तिरित्याशयेनाह **अन्यथेति** ।

**वा०र०**— दोषस्य सहकारित्वपक्षे दुष्टकरणलाभेऽपि तत्संसर्गालाभादाह **संसर्गहेतुत्वेनेति** । अनिवर्त्यान्यथा भव इत्याद्यनुव्याख्यानमूलानुसारेण परोक्तरीत्या च प्रश्नमूलमाह **क्षीरादाविति** । परिणामस्य च दर्शनादिति पाठः ।

**स०व्र०**— **बाधोऽपीति** । शुक्तेः रजताकारत्वेन परिणतत्वेन तद्विषयकेदंरजतमिति ज्ञानस्य भ्रमत्ववत् रजतस्य पुनः शुक्त्याकारेण परिणामादन्यथापरिणते वस्तुनि ख्यातित्वान्नेदं रजतमिति बाधस्यापि भ्रमत्वं स्यादित्यर्थः । **अन्यथोक्तातिप्रसङ्गेति** । अन्यथा बाह्यान्तरत्वेन विशेषानङ्गीकारे शुक्तिरजतादेरपि सुखादिव-





त्पुरुषकरणनिमित्तत्वेनान्तरत्वाङ्गीकार इति यावत् । तथा सति घटादेरप्यान्तरत्वोपपत्त्या कुलालमात्रवेद्यताऽऽपातात् इत्युक्तातिप्रसङ्गानिस्तार इत्यर्थः । केचित् बाह्यान्तरत्वेन विशेषानङ्गीकारे सुखादेरपि बाह्यत्व इति यावत् । सर्वप्रतिपत्तृसाधारण्यलक्षणस्यातिप्रसङ्गस्य सुखादावपि न निस्तारः स्यादित्यर्थ इत्याहुः ।

**विठ्ठ०**— द्वितीयमाशङ्क्य परिहरति **दुष्टकरणसंसर्ग इति** । **तत्प्रत्येतव्यमिति** । यथा मृत्वानपगमेन परिणते घटे मृत्वप्रतीतिरेवमनपगतशुक्तित्वं प्रत्येतव्यमित्यर्थः । **करणदोषस्येति** । दुष्टकरणसंसर्गस्येति यावत् । एतेन द्वितीयपक्षदूषणमुपक्रम्य प्रथमपक्षे दूषणोक्तिरसङ्गतेति परास्तम् । पक्षद्वयसाधारणमिदं दूषणमिति सूचयितुं करणदोषस्येत्युक्तमिति ज्ञेयम् । **बाधोऽपीति** । शुक्त्याद्याकारेण रजतस्य परिणामे अन्यथापरिणतवस्तुख्यातित्वात् शुक्तिरेवेयमिति बाधरूपज्ञानमपि भ्रमः स्यादित्यर्थः । **समस्तप्रतिपत्तृसाधारणमिति** । मृत्पिण्डपरिणामे घटे घटत्वप्रकारस्य समस्तप्रतिपत्तृसाधारण्यदर्शनादिहापि रजतत्वेन दर्शनं तथा सति स्यादित्यर्थः । **घटादेरपीति** । मृत्पिण्डादेः कारणस्य कुलालसंबन्धत्वादिति भावः । यद्यत्करणपरिणतं तत्तेनैव गृह्यत इति नियमस्य सुखदुःखादौ दृष्टत्वात् शुक्त्यादिपरिणामेऽपि तथा स्यादिति शङ्कते **सुखादिवदिति** । वैषम्यादिति समाधत्ते **बाह्येति** । बाह्यान्तरानङ्गीकारे बाधकमाह **अन्यथेति** । सुखादेरिव घटादेरपि कुलालमात्रवेद्यतापातादित्युक्तातिप्रसङ्गा-निस्तारादित्यर्थः ।

**चषक**:— द्वितीयमपाकुरुते **दुष्टेति** । उक्तक्षत्यनवकाशेऽपि क्षत्यन्तरमाह **तथाऽपीति** । क्षीरादौ क्षीरत्वापगमेन दध्याकारपरिणामस्य सुवर्णादौ तत्त्वानपायेन कुण्डलाकारपरिणामस्य च दर्शनाद्विकल्पोत्थितिः । **भ्रान्तेनापीति** । घटे मृत्ववदिदमंशशुक्तित्वानपगमादिति भावः । **बाधोऽपीति** । अन्यथापरिणतवस्तुविषयत्वा-विशेषादिति भावः । **सुखादिवदिति** । प्रथमान्ताद्वतिः यत्करणपरिणतमित्युपमेये प्रथमादर्शनात् । स्थानिवदादेशा इति निर्देशात् । **अन्यथा** । बाह्यान्तरत्वनियन्त्रितविशेषानुपगमे । **अतिप्रसङ्गानिस्तारादिति** । घटादेरित्यादिना समनन्तरोक्तातिप्रसङ्गानिरासादित्यर्थः ।

**गूढ०**— द्वितीयं शङ्कते **दुष्टेति** । **आद्ये पुरुषान्तरेणेति** । रजतरूपपरिणामेन शुक्तेरपगमादिति भावः । **द्वितीय इति** । इदानीं शुक्तित्वस्यापगमादिति भावः । शुक्तित्वापगमेन रजतरूपपरिणाम इत्यत्र दूषणान्तरमाह **किञ्चेति** । कारणभूतदोषाभावेनायं परिणामो नोपपद्यत इत्याह **करणदोषस्येति** । **बाधोऽप्येवं सतीति** । शुक्त्याकारेण रजतं परिणतमिति चेदुच्यत इत्यर्थः । शुक्त्याद्याकारेण परिणते रजतरूपवस्तुनि ख्यातिर्भवती-त्यन्यथाख्यातिलक्षणसद्भावादिति भावः । किञ्चायं रजतरूपपरिणामः सकलप्रतिपत्तृसाधारणोऽपि स्यादित्याह **अपि चेति** । तथाच सर्वेषामपि शुक्तौ रजतप्रतीतिः स्यादिति भावः । **यत्करणपरिणतमिति** । यत्करणसंसर्ग-परिणतमित्यर्थः । **घटादेरपीति** । तस्य कुलालकरणसंसर्गपरिणतत्वादिति भावः । ननु सुखादि यत्करणपरिणतं तेनैव यथा गृह्यते तथा रजतमपीति शङ्कते **सुखादिवदिति** । वैषम्येण परिहरति **बाह्येति** । सुखादेरान्तरत्वाद्रजतस्य च बाह्यत्वेन विशेषसद्भावान्न तत्रायं नियम इति भावः । **अन्यथेति** । उक्तविशेषमनङ्गीकृत्य यत्करणपरिणतं तेनैव ग्रहाङ्गीकार इत्यर्थः । **उक्तेति** । घटादेरपीत्यनेनोक्तेत्यर्थः ।





**प्रदीपः— दुष्टेति** । ततश्च न कार्यकारणयोर्भिन्नाधिष्ठानत्वेनासंबन्ध इत्यर्थः । **अपि चेति** । यथा मृत्परिणामस्य घटस्य प्रतिपत्तृसाधारण्यं तथा शुक्तिपरिणामस्य रजतस्यापि स्यादित्यर्थः । **अन्यथेति** । बाह्यान्तरत्वेन विशेषानङ्गीकारे सर्वप्रतिपत्तृसाधारण्यलक्षणस्यातिप्रसङ्गस्य सुखादावपि न निरास इत्यर्थः ।

**३२६ सु०— किञ्च दोषवशाद्रजताकारेण परिणता चेच्छुक्तिस्तदा दोषापगमेऽपि तथैव कथं नावतिष्ठते । न हि निमित्तकारणनाशात्कार्यनाशो दृष्टः । कमलकुड्मलविकासनिमित्त-सावित्रतेजोऽपगमस्य विकासनिवृत्तिहेतुता दृष्टेति चेत् । मैवम् । दलविभागो हि विकासो नाम । स च क्षणिकत्वात्सत्येव सावित्रतेजसि निवृत्तः । संयोगप्रध्वंसस्तु न कदाऽपि निवर्तते । पुनःसंयोगलक्षणो मुकुलीभावस्तु शीतादिनोदनजन्य एव । स्थायित्वेऽपि विभागस्यान्यदेव तन्नाशे निमित्तमिति यत्किञ्चिदेतत् । परत्वादिवत् स्यादिति चेन्न । विप्रतिपत्तेः ॥ किञ्चोत्पन्नं चेद्रजतं विनष्टं तदा तथैव प्रतीतिः स्यात् । न पुनर्नेदं रजतमिति बाधबुद्धिः ।**

**बिन्दुः— दलविभाग इति** । अत्र दर्शनद्वयं केचित् कर्मपदार्थं पृथक् न मन्यन्ते अश्व-श्चलतीत्यादौ संयोगविभागपरम्परैव कर्मपदार्थः । संयोगविभागयोश्च कर्मस्थानाभिषिक्तत्वेन क्षणिक-त्वात् । विभागात्पूर्वदेशसंयोगनाशः पुनरुत्तरदेशसंयोगेन तद्विभागनाश इति परम्परातिरिक्तं किमिति कर्माभ्युपेयम् । एवं च कर्मवादिनो यत्कर्मजनकत्वेनाभिमतं तदेव संयोगविभागजनकमस्तु तद्धेतोरिति न्यायात् इति तेषामभिसन्धिः । तन्मताभिप्रायेणाह **क्षणिकत्वादिति** । संयोगविभागयोः स्थायितां मन्यमानेन नैयायिकादिना सह वादान्तरप्रसक्तिभयादाह **स्थायित्वेऽपीति** । **अन्यदेव तन्नाशे इति** । उक्तविधमुकुलीभावरूपसंयोगादिरेवेत्यर्थः । **परत्वादिवदिति** । तस्य अपेक्षाबुद्धिनाशनाश्यत्वादिति भावः । आदिशब्दादपेक्षा बुद्धिनाशनाश्यद्वित्वादिपरिग्रहः । **विप्रतिपत्तेरिति** । अवध्यपेक्षा बुद्ध्यादे-स्तज्ज्ञानं प्रत्येव हेतुत्वादिति भावः ।

**परि०— परत्वादिवत्स्यादिति चेदिति** । यथा दूरदेशसंबन्धनिमित्तकं परत्वं समीपदेश-संबन्धनिबन्धनं त्वपरत्वं च तादृग्देशसंबन्धनाशादपैति तथेह शुक्त्यादिपरिणामभूतरजतादिरपि निमित्तनाशादपैत्वित्यर्थः । **विप्रतिपत्तेरिति** । अपरत्वादिजन्मनैव तन्नाशोपपत्तेरिति भावः ।

**गु०दी०— दलविभाग** इत्यत्र विभागो विभजनं क्रियेति पक्षे दोषमाह **दलविभाग** इति । गुणत्वपक्षे दोषमाह **स्थायित्व** इति । **तन्नाशे** दलविभागाख्यगुणनाशे । **परत्वादिवत्स्यादिति चेत्** इत्यत्र यथा परत्वमेकमेवं

बाह्यमपि वस्तु दूरस्थं परं प्रति परं, समीपस्थं प्रत्यपरमिति प्रतिपुरुषं नियतं तथा शुक्तिरजतमपीति भावः । **विप्रतिपत्तेः** इत्यस्य दूरस्थदशपुरुषाणां सर्वेषामपि परत्वेनैव प्रतीत्या प्रतिपुरुषनियतत्वस्य विप्रतिपत्तेरित्यर्थः ।

**यादु०— स च क्षणिकत्वादिति** । आशुतरविनाशित्वादित्यर्थः । उत्तरसंयोगावधेर्विभागस्याशुतरविनाशित्वस्य प्रत्यक्षसिद्धत्वात् । संयोगस्य तु चिरकालमनुवृत्तिरेव प्रत्यभिज्ञाबलात् । तत्कर्तव्यकार्यान्तरदर्शनाच्च । विभागे तु न प्रत्यभिज्ञा । नापि तेन कर्तव्यं कार्यान्तरमस्ति । कार्यं च विभागस्योत्तरविभागशब्दौ पूर्वसंयोगनिवृत्तिरित्येतावदेव । न ह्येतदतिरिक्तमप्यस्य प्रदेशान्तरे कर्तव्यमस्ति यदर्थं तदवस्थानमतो विभागस्य क्षणिकतैवाङ्गीकार्येति गुणकिरणावल्यामेतदुपपादितम् । ननु विकासो नाम न विभागः । किन्तु दलसंयोगप्रध्वंस इत्यत आह **संयोगध्वंसस्त्विति** । अथैवमुच्यते । विकासो नाम पूर्वसंयोगध्वंसविशिष्टभाविदलसंयोगप्रागभावः । स च सावित्रतेजोनिमित्तकः । ध्वंसवैशिष्ट्यस्य तेन जननात् । उक्तविकासनिवृत्तिश्च विशिष्टाभावरूपा प्रागभावनिवृत्तिरूपपुनःसंयोगलक्षणमुकुलीभाव एव पर्यवस्यति । ध्वंसनिवृत्तेरसंभवेन विशेषणवति विशिष्टाभावस्य विशेष्याभावमात्रपर्यवसायित्वात् । प्रागभावनिवृत्तिरूपमुकुलीभावे च सावित्रतेजोनिवृत्तिरेव कारणमित्याशङ्कायामाह **पुनःसंयोगलक्षण इति** । विभागेऽपि प्रत्यभिज्ञाबलादुक्तक्षणिकतोपपादनेऽरुचिमतां मतमवलम्ब्याह **स्थायित्वेऽपीति** । **अन्यदेवेति** । सावित्रतेजोऽपगमव्यतिरिक्तं दलसमवेतमामीलनकर्मैवेत्यर्थः । **परत्वादिवदिति** । परत्वापरत्वादीनां स्वनिमित्तकारणापेक्षाबुद्धिनाश्यत्वं यथा, तथा प्रकृतेऽपि निमित्तकारणदोषनाशाद्रजताकारपरिणामनाशः स्यादित्यर्थः । **विप्रतिपत्तेरिति** । अपेक्षाबुद्धेः परत्वादिज्ञानं प्रत्येव जनकता न परत्वादिकं प्रतीत्यङ्गीकारादिति भावः । यद्वा । आदावपेक्षाबुद्धिस्तया च परत्वोत्पत्तिरनन्तरं परत्वत्वसामान्यनिर्विकल्पकं तेन चाग्रिमक्षणेऽपेक्षाबुद्धिनाशः परत्वत्वसामान्यविशिष्टपरत्वसविकल्पकं चैकदा भवतः तदग्रिमक्षणे च परत्वगुणस्य नाशः अयं पर इति परत्वविशिष्टद्रव्यज्ञानं च युगपद्भवत इति हि परप्रक्रिया । तत्र चायं पर इति परत्वविशिष्टद्रव्यज्ञानस्य भ्रमत्वप्रसङ्गेन तज्ज्ञानोत्पत्तिकाले परत्वनाश इत्यस्यासंमतेः । न हि विशेषणनाशदशायां तद्विशिष्टप्रत्ययः प्रमेति युक्तम् । तथा चापेक्षाबुद्धिनाशाव्यवहितोत्तरक्षणे परत्वनाशासंभवाद्व्यभिचारेण तस्य तत्र कारणत्वं विप्रतिपन्नमित्यर्थः । विशेषणनाशदशायामप्यतद्व्यावृत्तिरूपवैशिष्ट्यस्य सत्त्वात्तज्ज्ञानं प्रमेति तु समाधानमतीव तुच्छम् । अन्योन्याभावस्य व्याप्यवृत्तित्वेन तस्यां दशायां तस्यातत्त्वेनातद्व्यावृत्तेरप्यभावात् । अन्यथा पाकरक्ते घटे श्याम इति बुद्धेरपि प्रमात्वप्रसङ्ग इत्यलं पल्लवेन ।

**वं०प०**— निमित्तकारणनाशे न कार्यनाशो दृष्ट इत्याशङ्कते **कमलेति** । कमलकुड्मलविकासे निमित्तं यत्सावित्रं तेजस्तदपगमस्येत्यर्थः । **सत्येवेति** । तथा च विभागस्य क्षणिकत्वेन स्वत एव सावित्रतेजस्सद्भावदशायामेव निवृत्ततया न तन्निवृत्तौ सावित्रतेजोऽपगमः कारणमित्यर्थः । ननु विकासो नाम न विभागः । किन्तु दलसंयोगप्रध्वंस इति चेत्तर्हि तस्य नित्यत्वेन विकासनिवृत्तेरभावान्न सावित्रतेजोऽपगमेन तन्नाश इत्याह **संयोगप्रध्वंसस्त्विति** । ननु सायंकाले पुनः कमलदलानां पुनःसंयोगलक्षणो यो मुकुलीभावः स सावित्रतेजोऽपगमजन्यः । तथाच





पुनः प्रातस्तदपगमस्य तन्निवृत्तिहेतुता दृष्टेति चेत् तत्राह **पुनःसंयोगेति** । **शीतादिनोदनेति** । सावित्रतेजोऽपगमे सति शीतस्पर्शोपेतहिमादिरूपद्रव्यजन्य एव, न सावित्रतेजोऽपगमजन्यः । तथाच निमित्तकारणनाशेन कार्यनाशो नेदमुदाहरणमिति भावः । ननु विकासो नाम विभाग एव । स च स्थायीत्यङ्गीक्रियते । तन्निवृत्तिश्च सत्येव सावित्रतेजसि न संभवति । अतस्तदपगम एव तत्र कारणमिति निमित्तकारणनाशात्कार्यनाशः प्राप्त एवेत्यत आह **स्थायित्वेऽपीति** । सावित्रतेजोऽपगमनानन्तरं सायंकाले प्राप्ते दलेषु शनैरामीलनरूपं कर्मोत्पद्यते । तेनैव दलविभागध्वंसो जायतेऽतः सावित्रतेजोऽपगमव्यतिरिक्तस्य कर्मण एव विभागप्रध्वंसजनकत्वान्निमित्तकारणनाशेन कार्यनाशो नेदमुदाहरणमिति भावः ।

**आनन्दः— तथैवेति** । रजताकारेणैवेत्यर्थः । ननु रजताकारपरिणामदोषस्य निमित्तकारणत्वात्तदपगमे तस्याप्यपगम इत्यत आह **न हीति** । निमित्तकारणनाशेनापि कार्यनाशो दृष्ट इत्याशङ्क्ते **कमलेति** । अत्र विकासनिवृत्तिर्नाम दलविभागो विकासस्तन्निवृत्तिरिति वा संयोगप्रध्वंसो विकासस्तन्निवृत्तिरिति वा अथवा पुनःसंयोगलक्षणमुकुलीभावो विकासनिवृत्तिः । नाद्य इत्याह **दलविभाग इति** । तथाच न सावित्रतेजोपगमस्य तत्र हेतुत्वमिति भावः । द्वितीयं प्रत्याह **संयोगप्रध्वंसस्त्विति** । तस्य नित्यत्वादिति भावः । तृतीयं प्रत्याह **पुनरिति** । **अन्यदेव तन्नाश इति** । शीतादिनोदनमेव विभागनाश इति भावः । **परत्वादिवत्स्यादिति चेदिति** । सन्निकृष्टबुद्धिनिमित्तकस्य परत्वादेस्तन्नाशे नाशवद्रजतस्यापि निमित्तनाशेन नाशः स्यादित्यर्थः । **विप्रतिपत्तेरिति** । सन्निकृष्टबुद्धिनाशेन परत्वादिनाश इत्यत्र विप्रतिपत्तेरित्यर्थः । तस्यैकत्वनित्यत्वाभ्युपगमादिति हृदयम् ।

**कं०रा०— कमलेति** । कमलकुड्मलस्य विकासे निमित्तं यत्सवितृसंबन्धितेजस्तदपगमस्य तद्विकासनाशहेतुता दृष्टेत्यर्थः । कैरवकुड्मलविकासे सावित्रतेजसो निमित्तत्वाभावात्कमलेत्युक्तम् । **सत्येवेति** । तथा च विकासनिवृत्तौ न सावित्रतेजोऽपगमः कारणमिति भावः । यदि च दलसंयोगध्वंसो विकासशब्दार्थस्तदा तस्य निवृत्तिरेव नेति सावित्रतेजोऽपगमस्य विकासनिवृत्तिहेतुता दृष्टेत्युक्तिरेव न संभवतीत्याह **संयोगप्रध्वंस इति** । ननु पूर्वेद्युस्थितस्य संयोगस्य ध्वंसोऽद्य मुकुलीभावावस्थायामस्तीति दलसंयोगध्वंसमात्रस्य विकासशब्दार्थत्वे तदाऽपि तत्प्रतीतिव्यवहारापत्त्या दलसंयोगध्वंसस्य यत्कालावच्छेदेन दलसंयोगासामानाधिकरण्यं तत्कालावच्छिन्नतद्ध्वंसस्यैव विकासशब्दार्थत्वेन वक्तव्यतया तस्य च विशिष्टस्य विशेषणनाशेन निवृत्तिसंभवात् संयोगप्रध्वंसस्तु न कदाऽपि निवर्तत इत्ययुक्तमिति चेत् । मैवम् । विशेषणाभावप्रयुक्तविशिष्टात्यन्ताभावसत्त्वेऽपि विशेषणनाशप्रयुक्तविशिष्टनाशस्यासत्त्वात् । अन्यथा प्रतिक्षणं पूर्वपूर्वक्षणनाशेन तद्विशिष्टघटादेरपि नाशापत्त्या क्षणभङ्गवादप्रसङ्गात् । विशिष्टनाशप्रतीतिस्तु स्वर्गी ध्वस्त इत्यादिवद्विशेषणनाशमात्रविषयेति न किञ्चिदनुपपन्नम् । ननु सावित्रतेजोऽपगमजन्यकमलमुकुलीभावस्य विकासनिवृत्तिरूपतया विकासशब्दितदलविभागस्य क्षणिकत्वं नोपपद्यते । तथात्वे प्रतिक्षणं विकासनिवृत्तेः सत्त्वेन तदात्मकमुकुलीभावव्यवहारप्रसङ्गादित्याशङ्क्य न विकासनिवृत्तिर्मुकुलीभावो नापि सावित्रतेजोऽपगमजन्य इत्याह **पुनःसंयोगेति** । **परत्वेति** । परत्वा-





परत्वयोर्यथापेक्षाबुद्धिरूपनिमित्तकारणनाशान्नाशस्तथा प्रकृतेऽपि दोषरूपनिमित्तापगमाद्रजताकारपरिणामनाशः स्यादित्यर्थः । **विप्रतिपत्तेरिति** । 'अपेक्षाबुद्धिसंयोगद्रव्यनाशात्पृथक् पृथक् । द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधा तयोरि'ति तार्किकोक्तस्यापेक्षाबुद्धिनाशप्रयुक्तपरत्वादिनाशस्यासंमतत्वादित्यर्थः ।

**श्रीनिधि०—** **विभागः** किं विभजनक्रिया उत गुणः । आद्ये तूक्तं **स च क्षणिकत्वादिति** । द्वितीये त्वाह **स्थायित्वेऽपि** । इत्येके आहुः । अपरे तु विभागः किं गुणः उत संयोगप्रध्वंसः उत मुकुलीभावप्रागभावः आद्येऽपि स किं क्षणिकः उत स्थायीति विकल्पं मनसि निधायाद्य आह **स चेति** । सत्येव तेजसि निवृत्त इति । तथा च न तेजोपगमस्य विकासनिवृत्तिहेतुतेति भावः । द्वितीय आह **संयोगप्रध्वंसस्त्विति** । येन तेजोपगमस्य तत्र हेतुता संभाव्येतेति भावः । तृतीय आह **पुनःसंयोगलक्षण इति** । **नोदनजन्य एवेति** । नोदनं बलवदन्यसंयोगः । येन मुकुलीभावलक्षणां तद्रूपविकासनिवृत्तिं प्रति सावित्रतेजोपगमस्य हेतुता स्यादिति भावः । नोदनं बलवद्द्रव्यसंयोगः । आद्यद्वितीय आह **स्थायित्वेऽपीति** । चिरकालावस्थायित्वेऽपीत्यर्थः । अन्यदेव पुनःसंयोगादिकमेवेत्याहुः । न त्वपेक्षा बुद्धिरूपनिमित्तकारणनाशाद्दिगादिकृतपरत्वादिनाशादृष्ट इत्याशङ्क्य समाधत्ते **परत्वादिवदित्यादिना** । **विप्रतिपत्तेरिति** । अपेक्षा बुद्धिलक्षणनिमित्तकारणं यद्यजन्यं वेत्यादि विप्रतिपत्तेरित्यर्थः । ज्ञानं च स्वत एव निवर्तते तेन न तत्रापि अपेक्षाबुद्धिनाशप्रयुक्ततेति भावः ।

**वा०चं०—** ननु बाह्योपादानकत्वाविशेषेऽपि तत्तद्दोषसहकृतबाह्योपादानकत्वेन घटादिवैलक्षण्याद्रजतादेस्तत्तन्मात्रग्राह्यत्वमुपपन्नमित्यत आह **किञ्चेति** । ननु दोषापगमेन तदपगमान्नावस्थानमित्यत आह **न हीति** । **कमलेति** । अन्यथा मुकुलीभावानुपपत्तेरिति भावः । विकासो विभागो वा तज्जन्यसंयोगप्रध्वंसो वा । नाद्यः । तस्योदाहरणत्वानुपपत्तेरित्याह **दलेति** । नामेत्युदयनादिप्रसिद्धिं सूचयति । यत्किञ्चिदुत्तरसंयोगावधित्वाद्विभागस्याशुतरविनाशित्वम् । न च यत्किञ्चिद्विभागमात्रावधित्वेन संयोगस्यापि तथात्वापत्तिः । यत्किञ्चिद्विभागात्संयोगनाशेऽवयवसंयोगस्यापि यत्किञ्चिद्विभागेन नाशाद्द्रव्यानुत्पत्तिप्रसङ्गेन ययोरेव संयोगः तयोरेव विभागात्सत्याश्रये संयोगनाश इति स्थितिः । तथा चान्तराविनाशकारणाभावात्संयोगान्तरोत्पादकारणाभावात् तत्कार्यदर्शनाच्चानन्यथासिद्धसंयुक्तप्रत्ययानुवृत्तिबलेन न संयोगस्याशुतरविनाशित्वम् । विभागे च विभक्तप्रत्ययानुवृत्तेरभावाद्भावे वा संयोगाभावविषयकत्वेनान्यथासिद्धत्वाद्युक्तं यत्किञ्चिदुत्तरसंयोगावधित्वेन क्षणिकत्वम् । न च बाधकाभावान्नान्यथासिद्धिरिति वाच्यम् । कार्यस्य कर्तव्यपुरुषार्थापेक्षयोत्पादादवस्थानाच्चोत्तरविभागशब्दपूर्वसंयोगनिवृत्तिरूपविभागकार्यनिष्पत्त्यनन्तरमपि तदवस्थानानौचित्यस्यैव बाधकत्वात् । तथा च प्रयोगः । विवादाध्यासितो विभाग उत्तरसंयोगान्तस्तावतैव कृतकृत्यत्वात्कर्मवत् । कृतकृत्यस्याप्यवस्थाने प्रायणानुपपत्तिरित्युदयनोक्तक्षणिकत्वोपपादनप्रकारं मनसि निधायाह **क्षणिकत्वादिति** । द्वितीयेऽपि नोदाहरणत्वमस्येत्याह **संयोगेति** । ननु विकासनिवृत्तिरूपो मुकुलीभावस्तावत्सावित्रतेजोऽपगमे भवतीति प्रसिद्धम् । विकासस्योभयरूपस्योक्तरीत्या सावित्रतेजोऽपगमेन निवृत्त्यभावे तदनुपपत्तिरित्यतो न विकासनिवृत्तिर्मुकुलीभावः किन्तु दलानां





पुनःसंयोग एव । सोऽपि न सावित्रतेजोपगमजन्योऽपि तु शीतपार्थिवावयवसंयोगजन्य एवेति नोक्तानुपपत्तिरित्याशयेनाह **पुनरिति** । ननु प्रायणानुपपत्तिरूपबाधकवशात्कर्मणः कृतकार्यस्यावस्थानानुपपत्तावपि विभागस्य कृतकार्यस्याप्यवस्थाने न बाधकमिति विभक्तप्रत्ययानुवृत्तेः संयोगाभावविषयकत्वानुपपत्तेस्तद्बलेन विभागस्यापि स्थायित्वादुक्तमनुपपन्नमित्यत आह **स्थायित्वेऽपीति** । प्राथमिकमुकुलहेत्वाप्यपार्थिवकमलावयवसंयोगजन्यमुकुलीभावरूपावस्थानान्तरापत्तेरेव विकासनिवृत्तिहेतुत्वेन तेजोऽपगमस्य तदहेतुत्वात् । न च विनिगमकाभावः । तादृगवयवरहिते म्लाने कमले रात्रौ विकासानपगमस्यैव तन्नियामकत्वादिति भावः । अत एवान्यदेवेत्युक्तम् । **यत्किञ्चिदिति** । अनुदाहरणानामेवायमुपन्यास इति सूचयति । 'अपेक्षाबुद्धिसंयोगद्रव्यनाशात्पृथक् पृथक् । द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधाऽनयोरि'त्युदयनोक्तरीत्या परत्वादिनाशस्यापेक्षाबुद्धिनाशजन्यत्वात्तद्वदत्रापि स्यादित्याशङ्कते **परत्वादिवदिति** । द्वित्वादिबुद्धेरिव परत्वादिबुद्धेरपेक्षाबुद्धिजन्यत्वेऽपि न परत्वादेरपेक्षाबुद्धिजन्यत्वं नापि तन्नाशस्य तन्नाशनिमित्तत्वमित्यङ्गीकुर्वाणं मां प्रति तदसंमतेरित्याह **विप्रतिपत्तेरिति** । ननु परत्वादेः पूर्वं पश्चाच्च सत्त्वे प्रमाणाभावादपेक्षाबुद्धिजन्यत्वतन्नाशनाश्यत्वमेवाङ्गीकार्यमित्यत आह **किञ्चेति** । यद्वाऽस्तु वा दृष्टान्ते यथा तथा तथाऽपि तत्र विकसितमेव मुकुलमासीदितिवच्छुक्तिपरिणामभूतरजतमेव पुनः शुक्तिरासीदिति प्रतीतिरवर्जनीयेत्याह **किञ्चेति**।

**स०व्र०**— ननु विकासो नाम पूर्वसंयोगध्वंसविशिष्टभाविदलसंयोगप्रागभावः । स च सावित्रतेजोनिमित्तकः । ध्वंसवैशिष्ट्यस्य तेन जननात् । विकासनिवृत्तिविशिष्टाभावरूपप्रागभावनिवृत्तिरूपपुनःसंयोगलक्षणमुकुलीभाव एव पर्यवस्यति । ध्वंसनिवृत्तेरसंभवेन विशेषणवति विशिष्टाभावस्य विशेष्याभावमात्रपर्यवसायित्वात् । प्रागभावनिवृत्तिरूपमुकुलीभावे च सावित्रतेजोनिवृत्तिरेव कारणमित्याशङ्कायामाह **पुनःसंयोगलक्षण इति** । **अन्यदेवेति** । सावित्रतेजोपगमव्यतिरिक्तं दलसमवेतं संमीलनकर्मैवेत्यर्थः । केचित्तु शीतादिनोदनजन्यसंयोगेनैव विभागनाश इत्यर्थ इत्याहुः । ननु परत्वादेरपेक्षाबुद्धिरूपनिमित्तनाशाद्वा आदिकुपिण्डसंयोगरूपासमवायिनाशाद्वा, निमित्तसमवायनाशाभ्यां वा, समवाय्यसमवायिनाशाभ्यां वा, असमवायिनिमित्तनाशाभ्यां वा, समवाय्यसमवायिनिमित्तनाशेभ्यो वा । 'अपेक्षाबुद्धिसंयोगद्रव्यनाशात् पृथक् पृथक् । द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधाऽनयोरि'त्युदयनोक्तरीत्या सप्तधा नाशसंभवेन निमित्तनाशेनापि कार्यनाशः किं न स्यादित्याशङ्कते **परत्वादिवदिति** । **विप्रतिपत्तेरिति** । उक्तप्रक्रियाया अप्रामाणिकत्वादिति भावः ।

**वि्ठ०**— निमित्तकारणनाशादपि क्वचिन्नाशो दृश्यत इति शङ्कते **कमलेति** । कुड्मलविकासो नाम दलानां विभागो वा संयोगध्वंसो वेत्यभिप्रेत्य विभागपक्षे दोषमाह **दलविभागो हीति** । विभागस्य जन्यक्रियात्वेन आशुतरविनाशित्वादिति भावः । द्वितीये दोषमाह **संयोगप्रध्वंसस्त्विति** । संयोगप्रध्वंसस्य नित्यत्वे पुनर्मुकुलीभावानुपपत्तिरित्यतो प्रध्वंसनित्यत्वेऽपि कारणान्तरेण संयोगान्तरोत्पत्तेरित्याह **पुनरिति** । न दलविभागो विभजनक्रिया किन्तु विभागाख्यसामान्यगुण एव तस्याशुतरविनाशित्वाभावात्तद्विनाशः सावित्रतेजोपगमनिमित्त





एवेत्यत आह **स्थायित्वेऽपीति** । अयमस्मात्पर इत्यपेक्षाबुद्धिरूपनिमित्तकारणनाशात् परत्वादिगुणनाशः तथा दोषनाशात् रजतनाशोऽपि स्यादिति शङ्कते **परत्वादिवदिति** । परत्वादिज्ञानस्यैवापेक्षाबुद्धिजन्यत्वेन परत्वादेस्तज्जन्यत्वे तन्नाशेन नाश्यत्वे च विप्रतिपत्तेरित्यर्थः ।

**चषकः**— विकासस्य दलविभागरूपता तज्जन्यदलसंयोगप्रध्वंसरूपता वोपेयत इति कल्पद्वयमभिप्रेत्याद्ये तस्य नोदाहरणीयतेत्याह **दलेति** । गुणकिरणावल्यां विभागस्योत्तरसंयोगमात्रावधितया आशुतरविनाशित्वं, संयोगस्य तु असमवायिकारणनाशेन द्रव्यनाशापत्त्या न तथात्वमिति निरूढमेवेत्याशयेनाह **क्षणिकत्वादिति** । आशुतरविनाशित्वादित्यर्थः । द्वितीयेऽपि नोदाहरणीयतेत्याह **संयोगेति** । ननु विकासस्योक्तोभयरूपतायामुक्तदिशा सावित्रतेजोपगमस्य तादृशविकासनिवृत्तिप्रयोजकत्वाभावेन विकासनिवृत्तिरूपमुकुलीभावधर्मिकसावित्रतेजोपगमनिरूपितान्वयव्यतिरेकानुविधायित्वानुभवविरोधप्रसङ्ग इत्याशङ्कामपनिनीषति **पुनरिति** । तथाच न विकासनिवृत्तिर्मुकुलीभावः किन्त्वेकैकदलानुयौगिकदलान्तरप्रतियोगिकसंयोगकूटमेव । तत्तु न सावित्रतेजोपगमजन्यमपि तु शीतहिमांशुकरादिसंयोगजन्यमेवेति नोक्तक्षत्यवकाश इति भावः । अथैवमुच्यते । विकासो नाम पूर्वसंयोगध्वंसविशिष्टभाविदलसंयोगप्रागभावः । स च सावित्रतेजोनिमित्तकः ध्वंसवैशिष्ट्यस्य तेन जननात् । उक्तविकासनिवृत्तिश्च विशिष्टाभावरूपा प्रागभावनिवृत्तिरूपपुनःसंयोगलक्षणमुकुलीभाव एव पर्यवस्यति । ध्वंसनिवृत्तेरसंभवेन विशेषणवति विशिष्टाभावस्य विशेष्याभावमात्रपर्यवसायित्वात्प्रागभावनिवृत्तिरूपमुकुलीभावे च सावित्रतेजोनिवृत्तिरेव कारणमित्याशङ्कायामाह पुनःसंयोगलक्षण इतीत्यप्यवतारयन्ति । विभक्तत्वप्रतीतेरनुवर्तमानायाः प्रतियोगिप्रतीत्यसमवधानकालीनायाः संयोगध्वंसविषयत्वं दुरुपगममिति तदनुरोधेन विभागस्य स्थायितामुपगच्छतां मतमाश्रित्याह **स्थायित्वेऽपीति** । तत्तद्दलानां दलान्तरसंयोगोपधायकं सावित्रतेजोपगमादतिरिच्यमानतत्तद्दलसमवेतमामीलनाख्यं कर्मैवेत्यर्थः । किरणावल्यामुदयनेन परत्वादेः स्वनिमित्तकारणीभूतापेक्षाबुद्धिनाशजन्यनाशप्रतियोगित्वस्य समर्थिततया तद्दिशा प्रकृतेऽपि स्यादित्याशङ्कते **परत्वादिवदिति** । सिद्धान्ते द्वित्वादिबुद्धाविव परत्वादिबुद्धावेवापेक्षाबुद्धेरुपयोगो न तत्तद्विषयांश इत्यूरीकारात् तादृशार्थस्योत्तरवाद्यसंप्रतिपन्नतामाह **विप्रतिपत्तेरिति** । यथा दूरदेशसंबन्धनिमित्तकं परत्वं समीपदेशसंबन्धनिमित्तकमपरत्वं च तादृशसंबन्धनाशादपैति तथेह शुक्त्यादिपरिणामहेतुभूतरजतादिरपि निमित्तनाशादपैतीत्यर्थः । **विप्रतिपत्तेरिति** । अपरत्वादिजन्मनैव तन्नाशोपपत्तेरिति भाव इत्यपि व्याकुर्वते ।

**गूढ०**— **तथैवेति** । रजताकारेणैवेत्यर्थः । ननु रजताकारपरिणामदोषस्य निमित्तकारणत्वात्तदयोगे तस्याप्यपगम इत्यत आह **न हीति** । निमित्तकारणनाशेनापि कार्यनाशो दृष्ट इत्याशङ्कते **कमलेति** । अत्र विकासनिवृत्तिर्नाम दलविभागो विकासस्तन्निवृत्तिरिति वा संयोगप्रध्वंसो विकासस्तन्निवृत्तिरिति वा अथवा पुनः संयोगलक्षणमुकुलीभावो विकासनिवृत्तिः । नाद्य इत्याह **दलविभाग इति** । तथाच न सावित्रतेजोपगमस्य तत्र हेतुत्वमिति भावः । द्वितीयं प्रत्याह **संयोगप्रध्वंसस्त्विति** । तस्य नित्यत्वादिति भावः । तृतीयं प्रत्याह **पुनरिति** ।

**अन्यदेव तन्नाश इति** । शीतादिनोदनमेव विभागनाश इत्यर्थः । **परत्वादिवत्स्यादिति चेदिति** । सन्निकृष्ट-बुद्धिनिमित्तकस्य परत्वादेस्तन्नाशे नाशवद्रजतस्यापि निमित्तनाशेन नाशः स्यादित्यर्थः । **विप्रतिपत्तेरिति** । सन्निकृष्टबुद्धिनाशेन परत्वादिनाश इत्यत्र विप्रतिपत्तेरित्यर्थः । तस्यैकत्वनित्यत्वाभ्युपगमादिति हृदयम् ।

**प्रदीपः— परत्वादीति** । परत्वादीनां निमित्तकारणापेक्षाबुद्धिनाश्यत्वं दृश्यत इत्यर्थः । परत्वादीनां एकत्वनित्यत्वाभ्युपगमयोः अभ्युपगतत्वात् नाश एव नास्ति कुतो निमित्तकारणनाश्यत्वम् इत्याशयेनाह **न विप्रतिपत्तेरिति** ।

**३२७ सु०— एतेन दुष्टकरणजन्याद्विज्ञानाद् रजतजन्मेत्यपि परास्तम् । का चैवं सति दोषवाचो युक्तिः । न हि मृदो घटाकारपरिणामस्य निमित्तं दण्डचक्रादिकं दोषत्वेन मन्यन्ते । किञ्च यस्याः प्रतीतेस्तदालम्बनं तत एव तज्जन्म, किंवा प्रतीत्यन्तरात् ॥ नाद्यः । परस्पराश्रयप्रसङ्गात् । उत्पन्ने हि रजते तदालम्बनायाः प्रतीतेर्जन्म, तस्यां जातायां रजतोत्पत्तिरिति । न खलु निरालम्बना प्रतीतिरुत्पद्यते ॥ द्वितीयेऽपि किं तत्प्रतीत्यन्तरं शुक्तिकाऽऽलम्बनम्, उत शुक्तिकारजतान्तरालम्बनम्, अथवाऽर्थान्तरालम्बनम् । नाद्यः । सर्वत्र शुक्तिप्रतीत्यनन्तरं रजतोत्पादप्रसङ्गात् । शुक्तिरजतप्रतीतेः प्राक् शुक्तिरिति प्रतीतिनियमाभावाच्च । दुष्टकरणालोचितशुक्तिसाधारणाकारप्रतीते रजतजन्मेति चेन्न । साधारणाकारमात्रदर्शनानन्तरं रजतप्रतीतिनियमाभावात् । कारणवैकल्यं तत्र कल्प्यत इति चेत् । स्यादेतदेवम् । यदि रजतजन्म प्रमितं स्यात् । प्रतीतिं तु प्रकारान्तरेणोप-पादयिष्यामः । न द्वितीयः । पूर्वरजतस्यापि तदेव कारणमिति रजतप्रतीतिप्रवाहा-विच्छेदप्रसङ्गात् । न तृतीयः । अतिप्रसङ्गात् ।**

**तदेवं भ्रान्तिबाधयोरनुपपत्तेर्न परिणामपक्षो युक्तः ।**

**परि०**— तृतीयं परिणामहेतुं निराह **एतेनेति** । तथा प्रतीत्यभावेनेत्यर्थः । वाचोयुक्तिरित्येकं पदम् । वाग्व्यवहार इत्यर्थः । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वि'त्यलुक्समासः । निर्विषयतया प्रागुत्पन्ना प्रतीतिः पश्चाद्रजतं जनयत्वित्यत आह **न खल्विति** । ननु रजतजन्मनोऽभावे इदं रजतमिति कथं प्रतीतिरित्यतः प्राभाकरः पूर्वपक्षी समाधत्ते **प्रतीतिं त्विति** । 'ननु तर्हीदं रजतमित्यादिप्रत्ययानां का गतिरि'त्यादिना ग्रन्थेन ग्रहणस्मरणाद्यात्मकतयोपपादयिष्याम इत्यर्थः । शुक्तिकारजतान्तरालम्बनमिति पक्षं निराह **न द्वितीय इति** ।





**यादु०**— **एतेनेति** । निमित्तकारणनाशेन कार्यनाशाभावाद्रजतज्ञानापगमेऽपि रजतं तथैवावतिष्ठेतेत्यादि-दूषणेनेत्यर्थः । **का चैवं सतीति** । काचादेः साक्षाद्रजताद्यजनकत्वादिति भावः । ननु तर्हि ज्ञानमेव दोषोऽस्त्वित्यत आह **न हीति** । **उपपादयिष्याम इति** । इदं रजतमिति द्वे विज्ञाने इत्यादिनेति शेषः ।

**वं०प०**— **का चैवं सतीति** । रजतस्य विज्ञानादुत्पन्नत्वेऽङ्गीकृते सति सत्त्वप्राप्त्या रजतविज्ञान-जनकेन्द्रियादिकारणसमुदायान्तर्गतस्य काचादिदोषत्वोक्तिरयुक्ता । यदि रजतमयथार्थं स्यात्तदा तन्निमित्तस्य काचस्य दोषत्वोक्तिः सङ्गता स्यात् । न चैवम् । तस्य विज्ञानादुत्पन्नत्वेन सत्त्वात् । अतः काचादेर्दोषत्ववाचोयुक्तिर्योगो घटना का । न काऽपीत्यर्थः । तदुपपादयति **न हीति** । उत्पन्ने रजते तदालम्बनायाः प्रतीतेर्जन्मेत्ययमंशो नाङ्गीक्रियतेऽतो न परस्पराश्रयप्रसङ्ग इत्यत आह **न खल्विति** । नन्विदं रजतमिति प्रतीतिरेवात्र रजतजन्मप्रमापिकेत्यत आह **प्रतीतिं त्विति** । **उपपादयिष्याम इति** । रजतमिदमिति द्वे विज्ञाने इत्यादिनेति शेषः । **प्रवाहाविच्छेदेति** । अनवस्थेत्यर्थः ।

**आनन्दः**— तृतीयमतिदेशेन दूषयति **एतेनेति** । तर्हि रजतमुत्पन्नविशिष्टं रजतमिति प्रतीतिः स्यान्न पुनर्नेदं रजतमिति प्रतीतिः इत्येतेनेत्यर्थः । किञ्च यदि कारणदोषादे रजतकारणत्वे तस्य दोषवर्णनं न स्यादित्याह **का चेवमिति** । अस्मिन्नेव पक्षे दोषान्तरमाह **किञ्चेति** । ननु रजतप्रतीते रजतोत्पत्तिकारणत्वात्तस्यां सत्यां तदुत्पत्तिरित्यस्तु रजते उत्पन्ने तदालम्बनाप्रतीतिरित्येतत्तु कुत इत्यत आह **न खल्विति** । **निरालंबना** निर्विषया । **प्रतीतिः** प्रत्यक्षप्रतीतिः । प्रत्यक्षप्रतीतौ विषयस्य कारणत्वेन विषयासत्त्वे प्रत्यक्षप्रतीतिरेव नोत्पद्यत इत्यर्थः । एतच्छुक्तिरजतालंबनत्वे पूर्ववदितरेतराश्रयः स्यादिति भावः । **अन्तरं** ग्रहणम् (?) । आद्येऽपि किं येनकेनचित्प्रकारेण शुक्तिकावलंबनमिति वा शुक्तित्वेन रूपेण शुक्तिकालम्बनमिति वा । नाद्य इत्याह **सर्वत्रेति** । प्रमेयत्वादिना शुक्तिप्रतीत्यनन्तरमपि रजतोत्पादः स्यादित्यर्थः । द्वितीयं प्रत्याह **शुक्तीति** । तथाप्रतीतेरसंभवादित्यर्थः । दोषद्वयं परिहर्तुं शङ्कते **दुष्टेति** । दुष्टकारणालोचित इत्युक्त्या सर्वत्रेति दूषणं परिहृतम् । प्रमेयत्वादिना ज्ञाने दुष्टकारणा-लोचनाभावात् । साधारणाकारेत्युक्त्या द्वितीयपक्षदोषे परिहर इति ज्ञातव्यम् । **साधारणेति** । व्यासङ्गादित्वेति भावः । **कारणवैकल्यमिति** । व्यासङ्गादिरूपमित्यर्थः । तर्हि रजतप्रतीतेः का गतिरित्यत आह **प्रतीतिमिति** । **पूर्वरजत-स्यापीति** । यच्छुक्तिकारजतान्तरालम्बनं प्रतीत्यन्तरं तत्पूर्वरजतस्यापीत्यर्थः । एवं तस्य तस्यापीत्यनवस्थेति भावः । **अतिप्रसङ्गादिति** । घटाद्यालम्बनप्रतीतेरपि रजतोत्पादः स्यादित्यर्थः ।

**कं०रा०**— **एतेन** रजतमुत्पन्नं विनष्टमित्येव प्रतीतिः स्यादित्युक्तदूषणेन । **एवं सति** । दोषस्य रजताकारपरिणामहेतुत्वे । दुष्टकरणजन्याद्विज्ञानाद्रजतजन्मेति पक्षं विकल्प्य दूषयति **किञ्चेत्यादिना** । रजतप्रतीत्यन्यथाऽनुपपत्त्या रजतजन्म प्रमितमित्यत आह **प्रतीतिमिति** । **तदेवेति** । शुक्तिकारजतान्तरालम्बनं प्रतीत्यन्तरमेव पूर्वरजतस्यापि कारणमिति रजतप्रतीतिपरम्परापत्त्याऽनवस्थाप्रसङ्गादित्यर्थः ।

**श्रीनिधि०**— **एतेन** निमित्तकारणनाशात् कार्यनाशाभावेन । **एवं सति** । रजतजन्माङ्गीकारे सति । **आलम्बनं** विषयः । **तदेव कारणमितीति** । रजतान्तरालम्बनं ज्ञानमेवेत्यर्थः । पूर्वरजतजनकप्रतीतिविषयरजतम् । **अतिप्रसङ्गादिति** । यत्किञ्चिज्ज्ञानानन्तरमपि रजतप्रतीतिप्रसङ्गादिति भावः ।

**वा०चं०**— शुक्ते रजताकारेण परिणामसंभवेऽपि दुष्टकरणजन्या रजताकारसंविदेव रजताकारेण परिणमत इत्यन्यथाख्यात्येकदेशिमतं प्राग्विकल्पितं तृतीयपक्षं निषेधति **एतेनेति** । अर्थस्य रजताकारेणापरिणामाच्छुक्तित्वापगमानपगमप्रयुक्तदूषणस्य संविद एव तथापरिणामाभ्युपगमात्समस्तप्रतिपत्तृसाधारण्यस्य संविदोऽपगमेन रजताकारापगमसंभवाद्दोषाभावेऽपि तथैवावस्थानदोषस्य चाभावेऽप्युत्पन्नविनाशे तथैव प्रतीतिः स्यान्न तु बाधबुद्धिरिति दूषणस्यापरिहार एवास्मिन्नपि पक्षे इत्यतिदेशाभिप्रायो द्रष्टव्यः । ननु दोषजन्यत्वादेव रजतपरिणामस्य तद्वशादिदं रजतमिति भ्रमबुद्धिविशेषोऽत एव नेदं रजतमिति बाधबुद्धिविशेषोऽप्युपपद्यत एवेत्यतः स्यादिदं दोषबलात्त्वदीयसमाधानं यदि दोषत्वमुपपद्येत अस्मिन्परिणाममते न चैवं विपरीतकार्यकारिणो दोषत्वेन लोके व्यवहारेऽपि न स्वकार्यकारिणि तथा व्यवहारोऽतिप्रसङ्गादित्याह **का चैवमिति** । नन्वर्थक्रियासमर्थघटाद्याकारपरिणामवैलक्षण्याद्रजताकारपरिणामस्य तद्धेतौ दोषत्वव्यवहार इत्यरुचेराह **किञ्चेति** । ननु भविष्यदर्थालम्बनानुमित्यादिवदनुत्पन्नेऽपि रजते तदालम्बनप्रतीतिसंभवान्नान्योन्याश्रय इत्यतः प्रकृतरजतेऽपरोक्षत्वप्रत्ययात् तत्प्रतीतेरनुत्पन्नविषयकत्वानुपपत्तिरेवेत्याशयेनाह **न खल्विति** । निरालम्बनप्रतीत्यनुपपत्त्या निरालम्बनपक्षाप्रसक्तेः प्रतीत्यन्तरग्रहणेनैव एतच्छुक्तिकारजतालम्बनत्वपक्षव्यावृत्तेः शुक्तिकातद्रजतान्तरार्थान्तरालम्बनत्वपक्षाणामेव प्राप्तेः प्राधान्यक्रमेण विकल्पयति **किं तदिति** । आद्येऽपि शुक्तिकालम्बनत्वं शुक्तित्वेनासाधारणाकारेण वा इदन्त्वादिशुक्तिसाधारणाकारेण वा विवक्षितम् । नाद्यः । अन्वयव्यतिरेकव्यभिचारादित्याह **सर्वत्रेत्यादिना** । शुक्तित्वाऽनवभासनिमित्तकथनपूर्वं द्वितीयं शङ्कते **दुष्टेति** । तत्रापि व्यभिचारमाह **नेति** । व्यभिचारस्यान्यथासिद्धिं शङ्कते **कारणेति** । अन्योन्याश्रयतया तां परिहरति **यदीति** । इदं रजतमिति प्रतीत्यन्यथाऽनुपपत्तिसिद्धत्वाद्रजतजन्मनो नान्योन्याश्रयतेत्यतो रजतजन्मानभ्युपगमेऽपि प्रतीत्युपपत्तिरुच्यते, 'रजतमिदमिति द्वे विज्ञाने' इत्यादिना कथयिष्यतेऽतो नानुपपत्तिरित्याह **प्रतीतिं त्विति** । **तदेवेति** । शुक्तिरजतान्तरालम्बनप्रतीत्यन्तरमेवेत्यर्थः । समानन्यायत्वादिति भावः । **अतिप्रसङ्गादिति** । अर्थान्तरज्ञानस्य सर्वसाधारण्यात्सर्वेषामपि तदनन्तरं रजतप्रतीत्यापत्तेरित्यर्थः । उपपादितं दूषणं कण्ठतो दर्शयन्नेव परिणामपक्षनिराकरणमुपसंहरति **तदेवमिति** ।

**वा०र०**— **अर्थस्य रजतेति** । परिणामानङ्गीकारादित्यर्थः । दूषणस्येत्यस्याभावेऽपीत्युत्तरेण संबन्धः । साधारण्यस्येत्यस्याभावेनेत्युत्तरेण संबन्धः । **उत्पन्नेति** । किञ्चेत्यनन्तरितोक्तदोषाभिप्रायेणातिदेशो न तत्पूर्वदोषान्तराभिप्रायेणेत्यभिप्रायः सूचितोऽनेनेति ज्ञेयम् । **दोषजन्यत्वादेवेति** । रजतपरिणामस्य दोषजन्यत्वसत्त्वादेतद्दोषवशादिति योज्यम् । **वाचो युक्तिरिति** मूलम् । 'वाक्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वि'ति सूत्रेण षष्ठ्या अलुक् । **अर्थान्तरान्यतरेति** । अन्यतरशब्दस्य साधुत्वं योज्यमस्ति ।

**स०व्र०**— **एतेन दुष्टकरणेति** । दुष्टकरणजन्यविज्ञानेनापि शुक्तित्वापगमेन परिणामे पुरुषान्तरस्य तदानीं शुक्तित्वप्रतीत्यभावापत्तेः तदनपगमेन परिणामे च भ्रान्तस्यापि तत्प्रतीत्यापत्तेरित्यादिपूर्वोक्तदूषणेनेत्यर्थः । **सर्वत्र शुक्तिप्रतीत्यनन्तरमिति** । न च कारणान्तरवैकल्यात्तदनुत्पादः । रजतजन्मप्रमितौ तत्कल्पनमिति वक्ष्यमाणत्वादिति





भावः । ननु रजतप्रतीतिरूपकार्यान्यथाऽनुपपत्त्या तज्जन्मनः प्रमितत्वात्कारणान्तरवैकल्यकल्पनमुपपन्नमित्यत आह **प्रतीतिमिति** । उच्यते इदं रजतमिति द्वे विज्ञाने इत्यादिनेति शेषः ।

**विट्ठ०— एतेनेति** । निमित्तकारणनाशात् कार्यनाशासंभवात् रजतज्ञानापगमेऽपि रजतं तथैवावतिष्ठेतेत्यादिदूषणेनेत्यर्थः । किञ्च दुष्टकरणजन्यविज्ञानस्य रजताकारपरिणामनियतत्वे कारणस्य दोषत्वानुपपत्तेर्भ्रमो दोष इति वाचो युक्तिः योगः कथं स्यादित्याह **का चैवं सतीति** । तदुपपादयति **न हीति** । यद्वा एवं सति काचकामलादेः साक्षाद्रजताद्यजनकत्वात् दुष्टेन्द्रियेति दोषवाक्प्रवृत्तिः केत्यर्थः । तर्हि रजतजनकं ज्ञानमेवास्य जनकेन्द्रियदोषोस्तु इत्यत आह **न हीति** । विज्ञानाद्रजतजन्मेत्येतदयुक्तं चेत्याह **किञ्चेति** । निर्विषयतया प्रागुत्पन्ना प्रतीतिः पश्चाद्रजतं न जनयेदित्यत आह **न खल्विति** । **रजतोत्पादप्रसङ्गादिति** । रजतजन्मनः शुक्तिप्रतीतिः हेतुरिति शुक्तिरजतप्रतीतेः पूर्वं नियमेन शुक्तिरिति प्रतीत्या भाव्यं तदभावाच्च न शुक्तिकालम्बनं ज्ञानं रजतोत्पादकमिति भावेनाह **शुक्तिरजतप्रतीतेरिति** । न शुक्तित्वप्रकारकं ज्ञानं रजतोत्पादकमित्युच्यते किन्तु तत्साधारणाकारप्रतीतिरेव तादृशप्रतीतिश्च करणदोषादुत्पद्यते तथाच न शुक्तित्वप्रतीतिनियमाभावो दोष एवेत्याशङ्क्य शुक्तिसाधारणाकारप्रतीतिमात्रस्य रजतोत्पादकत्वे नियमेन साधारणाकारदर्शनान्तरात् रजतोत्पादसंभवेन तत्प्रतीतिः स्यादिति परिहरति **दुष्टकरणालोचितेति** । **तत्र कल्प्यत इति** । यत्र साधारणाकारदर्शनेऽपि रजतप्रतीत्यभावः तत्रेत्यर्थः । रजतप्रतीतिरेव तज्जन्मप्रमापिकेत्यत आह **प्रतीतिमिति** । इदंरजतमिति द्वे विज्ञानेत्यादौ ग्रहणस्मरणात्मकत्वेनोपपादयिष्याम इत्यर्थः ।

**चषकः— तृतीयकल्पं प्रतिविधत्ते एतेनेति** । निमित्तकारणनाशस्य कार्यनाशकत्वाभावसमर्थनेनेत्यर्थः । **का चैवमिति** । विपरीतकार्यकारिण्येव दोषत्वव्यवहारः न तस्य कार्यकारिणीति भावः । काचादेः साक्षाद्रजतादिजनकत्वाभावादिति भाव इत्यपि स्थितम् । 'वाक्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग्वक्तव्य' इति स्मृतेर्वाचो युक्तिरिति समस्तम् । **साधारणाकारेति** । इदन्त्वमात्रदर्शनानन्तरमित्यर्थः । **उपपादयिष्याम इति** । विशिष्टगोचरविपर्ययसत्त्वानुपगमेन प्राभाकरदिशा ग्रहणस्मरणात्मकज्ञानद्वयरूपतैव तस्येत्युपपादयिष्याम इत्यर्थः ।

**गूढ०— तृतीयमतिदेशेन दूषयति एतेनेति** । तर्हि रजतमुत्पन्नं विनष्टं रजतमिति प्रतीतिः स्यान्न पुनर्नेदं रजतमिति प्रतीतिरित्यनेनेत्यर्थः । किञ्च करणदोषादे रजतकारणत्वे तस्य दोषत्वेन वर्णनं न स्यादित्याह **का चैवमिति** । अस्मिन्नेव पक्षे दोषान्तरमाह **किञ्चेति** । ननु रजतप्रतीते रजतोत्पत्तिकारणत्वात् तस्यां सत्यां तदुत्पत्तिरित्यस्तु रजते उत्पन्ने तदालम्बनाप्रतीतिरित्येतत्कुत इत्यत आह **न खल्विति** । **निरालम्बना** निर्विषया । **प्रतीतिः** प्रत्यक्षप्रतीतिः । प्रत्यक्षप्रतीतौ विषयस्य कारणत्वेन विषयासत्त्वे प्रत्यक्षप्रतीतिरेव नोत्पद्यत इत्यर्थः । एतच्छुक्तिरजतालम्बनत्वे पूर्ववदितरेतराश्रयः स्यादिति भावः । अन्तरं ग्रहणम् (?) । आद्येऽपि किं येन कारणेन शुक्तिकालम्बनमिति वा शुक्तित्वेन रूपेण शुक्तिकालम्बनमिति वा । नाद्य इत्याह **सर्वत्रेति** । प्रमेयत्वादिना शुक्तिप्रतीत्यनन्तरमपि रजतोत्पादः स्यादित्यर्थः । द्वितीयं प्रत्याह **शुक्तीति** । तथाप्रतीतेरसंभवादित्यर्थः । दोषद्वयं





परिहर्तुं शङ्कते **दुष्टेति** । दुष्टकरणालोचित इत्युक्त्या सर्वत्रेति दूषणं परिहृतम् । प्रमेयत्वादिना ज्ञाने दुष्टकरणालोचनाभावात् । साधारणाकारेत्युक्त्या सर्वत्रेति दूषणं परिहृतम् । प्रमेयत्वादिना ज्ञाने दुष्टकरणालोचनाभावात् । साधारणाकारेत्युक्त्या द्वितीयदोषपरिहार इति ज्ञातव्यम् । **साधारणेति** । व्यासङ्गादिनेति भावः । **कारणवैकल्यमिति** । व्यासङ्गादिरूपमित्यर्थः । तर्हि रजतप्रतीतेः का गतिरित्यत आह **प्रतीतिमिति** । **पूर्वरजतस्यापीति** । यच्छुक्तिकारजतान्तरालम्बनं प्रतीत्यनन्तरं तत्पूर्वरजतस्यापीत्यर्थः । एवं तस्य तस्यापीत्यनवस्थेति भावः । **अतिप्रसङ्गादिति** । घटाद्यालंबनप्रतीतेरपि रजतोत्पादः स्यादित्यर्थः ।

**प्रदीपः**— ननु अन्यस्यान्यात्मत्वे सत्यपि न तथा प्रतीतिः सहकारिणो दोषस्याभावादित्यत आह **न हीति** । दोषस्य तथार्थे ज्ञानसहकारित्वे संस्कारत्वमेव स्यान्न दोषत्वमित्यर्थः ।

**३२८ सु०— नापि 'वस्तुनो वस्त्वन्तरात्मनाऽवभासोऽन्यथाख्यातिरि'ति युक्तम् ॥ तथा हि किं वस्तुनो वस्त्वन्तरात्मता सती उतासती । आद्ये न भ्रान्तिर्नापि बाधः । सर्वेषां च सर्वं सर्वात्मना प्रतीयेत । न हि दोषः करणसंस्कारः । तथा सत्यदुष्टकरणेन न किञ्चिदुपलभ्येत । किञ्चैवं सति रजतसंवित्समीचीना शुक्तिरेवेयमिति चासमीचीनेत्यापद्येत । न द्वितीयः । असतः प्रतीत्यनुपपत्तेः । उपपत्तौ वा किं रजतस्यापि वस्तुत्वग्रहणेन ।**

**एतेन 'असंबद्धविशेषणविशिष्टप्रतीतिरन्यथाख्यातिरि'ति निरस्तम् । असतो विशेषणसंबन्धस्य प्रतीत्यनुपपत्तेः । उपपत्तौ वा किमसत्ख्यातिवादिभिरपराद्धम् ।**

**अथ ब्रूषे 'अन्याकारं ज्ञानमन्यथाख्यातिरि'ति । तदसत् । समीचीनज्ञानस्याप्यान्तरबाह्यत्वादिना अर्थविलक्षणाकारत्वेन विभ्रमत्वापत्तेः ।**

**बिन्दुः— दोषः करणसंस्कार इति** । दोषस्य संस्कारत्वं वदन् प्रष्टव्यः किं परत्वं परात्मताप्रदर्शनरूपकार्यविशेषजननशक्त्याधायकत्वं, तत् यथा चक्षुरादेः अञ्जनविशेषस्य निखातनिधिप्रदर्शकत्वे, एवं च तस्य तादृशज्ञानरूपकार्यविशेषजनन एवापेक्षा न तु सर्वत्रेति । आहोस्वित् अतिमलिनस्यादर्शस्य कर्मारनिर्मितपरिमार्जनादिकर्मणो बिम्बप्रतिफलनरूपतत्कार्यमात्रजननशक्त्याधायकत्वमिव स्वकार्यरूपज्ञानमात्रजनने शक्त्याधायकत्वम् । तथाच सर्वत्र तत्कार्यमात्रजनने तदपेक्षा । न हि असंस्कृत आदर्शः कस्यापि बिम्बप्रतिफलनस्येष्टे इति । तत्र नाद्यः । स्यादेतदेवं यदि रजतात्मता प्रमिता स्यात् इत्युक्तन्यायेन उक्तोत्तरत्वात् । तावन्मात्रेण हि वस्त्वन्तरात्मताप्रदर्शनमस्तु न तु तस्याः सत्तापि सिध्यति, निखातनिधिसद्भावस्तु खननोत्तरमुपलम्भादास्थीयत इति वैषम्यम् । प्रतीतेश्चान्यथैवोपपादयिष्यमाण-





त्वात् । एतेन संस्कारत्वं नाम सहकारित्वमात्रमित्यपि परास्तम् । द्वितीये दोषमाह **तथा सतीति** । **असद्विलक्षणविशिष्टेति** । विशिष्टेति भावप्रधानो निर्देशः । असच्च तद्विशिष्टत्वलक्षणविशिष्टं चेति कर्मधारयः । असत् यत् विलक्षणप्रतियोगिकं वैशिष्ट्यम् । तत्प्रतीतिरित्यर्थः । क्वचित् **असंबद्ध-विशेषणविशिष्टप्रतीतिरिति** पाठः । तत्र संबद्धं यद्विशेषणं रजतत्वादि तत्प्रतीतिरित्यर्थः । **अन्यथाकारमिति** । शुक्त्यादिविषयापेक्षया रजतादिरूपान्याकारमित्यर्थः । **समीचीनेति** । रजतादेर्बाह्यत्वात् ज्ञानस्य चान्तरत्वाद्विषयापेक्षया अन्यथाकारत्वेनातिव्याप्तेरित्यर्थः ।

**परि०**— अन्यस्यान्यात्मनाऽवभासोऽन्यथाख्यातिरिति द्वितीयं निराह **नापीति । किं रजतस्यापीति** । आपणादिस्थरजतस्यापीत्यर्थः । असत्त्वेऽपि रजतमितिप्रतीतेरुपपत्तेरिति भावः । तृतीयं निराह **एतेनेति** । असंबद्धस्याविद्यमानसंबन्धवतो विशेषणस्य विशिष्टप्रतीतिः संबन्ध-प्रतीतिरित्यर्थः । चतुर्थमाशङ्कते **अथ ब्रूष इति** ।

**यादु०**— **नापि वस्तुन इति** । तादात्म्यारोपाभिप्रायेणेदमित्यवधेयम् । ननु यथा भूम्यन्तर्गतं धनमञ्जनादिसंस्कृतनयनानामेव दृश्यते नेतरेषां तथा सर्वस्य सर्वात्मता न सर्वेषां प्रतीयते किन्तु दोषसंस्कृत-करणानामेवेत्यत आह **न हि दोषः करणसंस्कार इति** । ननु न किञ्चिदुपलभ्येतेत्युक्तमयुक्तम् । दोषस्य कार्यविशेष एव करणसंस्कारत्वाभ्युपगमात् । अन्यथाऽञ्जनाद्यसंस्कृतकरणेन घटादिकमपि नोपलभ्येतेत्यस्वरसादाह **किञ्चैवं सतीति** । **एतेनेति** । संसर्गारोपाभिप्रायेणेदम् । **समीचीनेति** । अर्थस्य बाह्यत्वाज्ज्ञानस्याऽऽन्तरत्वादिति भावः । असन्यः संबन्धः समवायस्तेन संबद्धं यद्विशेषणं रजतत्वमित्यर्थः ।

**वं०प०**— **सर्वं सर्वात्मनेति** । सर्वस्य सर्वात्मतायाः सत्त्वादित्यर्थः । **रजतसंविदिति** । दोषस्य करणसंस्कारत्वे न रजतसंविदः संस्कृतकरणजन्यत्वाद्रजतसंविदेव समीचीना स्यादित्यर्थः । तार्किकं कटाक्षीकृत्याह **उपपत्तौ वेति** । असतः प्रतीत्यनुपपत्त्यैव खलु रजतस्य वस्तुत्वमन्यत्र सत्त्वमङ्गीकृतम् । असतोऽपि प्रतीत्युपपत्तौ किमर्थं रजतस्यान्यत्र सत्त्वरूपं वस्तुत्वमङ्गीकार्यमित्यर्थः ।

**आनन्दः**— निर्वचनान्तरं दूषयितुमाह **नापीति** । एकेन प्रकारेण सतो वस्तुनो वस्त्वन्तरात्मना प्रतीतिरित्युक्त्या घटादिप्रतीतीनां भ्रमत्वं वारितम् । दूषणान्तरं चाह **सर्वेषां चेति** । सर्वं वस्तु सर्वात्मकत्वेन सर्वेषां प्रतीयेत । वस्त्वन्तरात्मकतायाः सत्त्वादिति भावः । किञ्चात्र दोषस्योपयोगो न स्यात् । ननु करणसंस्कारत्वेन तदुपयोग इत्यत आह **न हीति** । एतेनेत्यस्यार्थमाह **असत इति** । असंबद्धविशेषणेत्यस्यासद्विशेषणसंबन्धेत्यर्थः । **उपपत्तौ वेति** । भ्रमे भासमानस्य सर्वस्याप्यसत्त्वमेवास्त्विति भावः । अन्यथाकारं ह्यर्थविशेषणम् । तथाच समीचीनज्ञानेऽतिव्याप्तिः । तस्यार्थान्तरत्वेनार्थविलक्षणाकारत्वादित्याह **समीचीनेति** ।

**कं०रा०—** **किञ्चेति** । शुक्तिकाशकलस्य रजतात्मतायाः सत्त्वे शुक्तित्वमसदित्यागतम् । एकस्योभयरूपत्वायोगात् । तथा चेदं रजतमिति संवित्प्रमा शुक्तिरियमितिं संविचाप्रमेत्यापद्यत इत्यर्थः । यद्वा । एवं सति शुक्ते रजतात्मतायाः सत्त्वे रजतसंवित्प्रमा शुक्तिरेवेयमिति प्रतीतिश्चाप्रमेत्यापद्यते । शुक्तिरेवेत्यवधारणेन रजतात्मताया असत्वभानादिति भावः । **असदिति** । असन्[१] संबन्धो यस्य तदसत्संबन्धम् । तच्च तद्विशेषणं च । तद्विशिष्टप्रतीतिरित्यर्थः । अन्याकारं ज्ञानमन्यथाख्यातिरित्यनेनार्थापेक्षया विलक्षणाकारं ज्ञानमन्यथाख्यातिरित्युक्तं भवति । तच्च समीचीनज्ञानेऽतिव्याप्तम् । तस्यान्तरत्वेनार्थस्य च बाह्यत्वेनार्थापेक्षया विलक्षणाकारत्वादित्याह **तदसदिति** । आदिपदेनार्थप्रकाशत्वतदभावादिपरिग्रहः । (१. असंबद्धेति प्र.पाठः सुधायाम् ।)

**श्रीनिधि०—** द्वितीयमाशङ्क्य दूषयति **नापि वस्तुनो वस्त्वन्तरात्मनेत्यादिना** । **सर्वेषां च सर्वमिति** । सर्वेषामपि सर्वत्र सर्वात्मना अवभासप्रसङ्गादिति भावः । ननु संस्कृतमेव करणं क्रियां जनयति नासंस्कृतम् । करणसंस्कारश्च दोषः । तथा च तदभावेन नोक्तप्रतीतिप्रसङ्ग इत्याह **न हि दोष इत्यादिना** । **न किञ्चिदुपलभ्येतेति** । भ्रान्तिस्थले करणस्य दोषः संस्कारः इति चेन्न । वस्त्वन्तरात्मतायाः सत्त्वे भ्रान्तित्वायोगस्योक्तत्वात् । **किञ्चैवं सतीति** । शुक्तिशकलस्य रजतात्मता सती चेत् घटात्मना परिणते मृत्पिण्डे घट इति प्रतीतिः समीचीना । मृत्पिण्ड इति प्रतीतिरसमीचीनेति वा स्यादिति भावः । **वस्तुत्वग्रहणेन** सत्त्वप्रकारकप्रमाग्रहणेन । एतेन असम्बद्धं विशेषणं यस्य तत् तथोक्तम् । तच्च तद्विशिष्टं चेति समासः । अनेन संसर्गारोपपक्षनिरास इति ज्ञेयम् । **अन्याकारमिति** । विषयापेक्षया अन्यः विलक्षण आकारो धर्मो यस्य तदन्याकारं इत्यर्थं मत्वा दूषयति **समीचीनेति** । अन्याकारो लघुरिति पुरोवर्तिनिष्ठाकारापेक्षया अन्याकारोल्लेखीत्यर्थः । अन्यालम्बनं आकारविशिष्टापेक्षया अन्यविषयकं ज्ञानमन्यथाख्यातिरित्यर्थः ।

**वा०चं०—** अन्यथात्वमवभासविशेषणमिति द्वितीयकल्पं निषेधति **नापीति** । ननु परिणामपक्षोक्तदूषणाप्राप्तेः कथमयुक्ततेत्यतस्तत्रोक्तभ्रान्तिबाधानुपपत्तिमत्राप्युपपादयति **तथा हीति** । ननु विद्यमानाऽपि सर्वस्य सर्वात्मता करणदोषाभावान्न प्रतीयत इत्यतो विद्यमानसर्वात्मताप्रतीतौ करणदोषस्य प्रयोजकत्वं वदता करणदोषस्य यथार्थज्ञानजनककरणशक्त्युपोद्बलकत्वरूपं तत्संस्कारकत्वमभिप्रेतं स्यात् । तच्च तस्य करणसंबन्धियथार्थज्ञानजननशक्तिप्रतिबन्धकत्वप्रसिद्धिविरुद्धमित्याह **न हीति** । ननु प्रसिद्धिर्निर्मूलत्वादनादरणीयेत्यतस्तर्ह्यसंस्कृतकरणस्याकिञ्चित्करत्वाददुष्टकरणेनान्यात्मतावच्छुक्तित्वाद्यपि न प्रतीयेतेत्याह **तथा सतीति** । नन्वन्यात्मताप्रतीतौ करणेन जननीयायां दोषः संस्कारो न तु प्रतीतिमात्रे । एवं च प्रतिनियतसंस्कारकल्पनायां नानुपपत्तिरित्यतो भ्रान्तिबाधविपर्यासापत्तिरूपं युक्त्यन्तरमाह **किञ्चेति** । नन्वसत्प्रतीतिनिरासान्यथाऽनुपपत्त्यैव तत्प्रतीतिः सिद्धेत्यतस्तर्हि रजतस्याप्यवस्तुत्वे बाधकाभावेन तदङ्गीकारापत्तावसत्ख्यातिपक्षप्रवेश इत्याह **उपपत्तौ वेति** । अन्यथात्वस्यावभासविशेषणत्वे द्वितीयं कल्पमतिदेशेन दूषयति **एतेनेति** । तत्र तादात्म्यमसत् । अत्र च संसर्गोऽसन्नित्येतावानेव विशेषः । असत्प्रतीत्यनुपपत्तिरुभयत्र समानेत्याशयेनातिदेशार्थमाह **असत इति** । अन्यथात्वं ज्ञानविशेषणमिति कल्पे आद्यमाशङ्कते **अथेति** ।

**स०व्र०**— तादात्म्याभिप्रायेणाह **नापि वस्तुन इति**। न चान्यस्यान्यात्मत्वे सत्यपि न तथा प्रतीतिः। सहकारिणो दोषस्याभावादित्यत आह **न हीतिं**। दोषस्य यथार्थज्ञानसहकारित्वे संस्कारत्वमेव स्यात् न दोषत्वमित्यर्थः। **किं चेति**। यदि सर्वात्मत्वं सत्यं स्यात्तदेदं रजतमित्युभयविषयज्ञानस्य याथार्थ्यं शुक्तिरेवेयमिति रजतव्यावृत्तशुक्तिमात्रविषयस्यायाथार्थ्यमिति वैपरीत्यं च स्यादित्यर्थः। संसर्गारोपाभिप्रायेणाह **एतेन संबद्धेति**।

**विट्ठ०**— अन्यस्यान्यात्मनावभासोऽन्यथाख्यातिरिति द्वितीयं पक्षमपाकरोति **नापीति**। ननु अन्यस्य अन्यात्मतायाः सत्यत्वेऽपि न सर्वेषां सर्वप्रतीतिः दोषस्य प्रत्यायकसंस्काररूपत्वात् सर्वेषां तदभावादित्यत आह **न हीति**। **किञ्चैवं सतीति**। दोषस्य करणसंस्कारत्वे सतीत्यर्थः। **समीचीना** संस्कारसहितकरणजन्यत्वादिति भावः। तृतीयपक्षमपाकरोति **एतेनेति**। असंबद्धविशेषणेत्यत्राविद्यमानः संबन्धो यस्य विशेषणस्येति बहुव्रीहिः। विशेषणीभूतरजतत्वसंबन्धो इदन्तावद्विशेषोऽसन्निति भावः। असत्संबन्धेति पाठे तु असन् संबन्धो यस्य तदसत्संबन्धं तच्च तद्विशेषणं चेति विग्रहः। चतुर्थमाशङ्कते **अथ ब्रूषे इति**।

**चषक**:— नैयायिकाभिमतौ द्वितीयतृतीयकल्पौ। तत्र तावत् द्वितीयं पराचष्टे **नापीति**। तादात्म्य-संसर्गावच्छिन्नवस्त्वन्तरनिष्ठप्रकारतानिरूपितैकवस्तुनिष्ठविशेष्यतानिरूपकावभास इत्यर्थः। **करणसंस्कार इति**। भूतलान्तर्वर्तिधनादिगोचरसाक्षात्कारे चक्षुरादिना जननीये अञ्जनादेः स्वासमवधाननियन्त्रितफलानुत्पादकत्व-रूपसहकारित्वस्येव प्रकृते सर्वात्मताप्रतीतौ दोषस्य तथा भावानुपगमादिति भावः। **तथा सतीति**। सहकार्यभावाच्छुक्तित्वादिकमपि न प्रतीयेतेति भावः। अथाञ्जनादेरिव विषयविशेषावगाहिज्ञानजनन एव दोषस्य सहकारित्वोपगमान्नोक्तक्षतिरित्यरुचेराह **किं चैवं सतीति**। नैयायिकाभिमततृतीयकल्पं पराकुरुते **एतेनेति**। तादात्म्यान्यसमवायादिसंसर्गावच्छिन्ना या विशेष्यता व्यधिकरणरजतत्वादिनिष्ठप्रकारता तन्निरूपकज्ञानमित्यर्थः। विज्ञानवाद्यभिमततुरीयकल्पं प्रत्याख्याति **अन्याकारमिति**।

**गूढ०**— निर्वचनान्तरं दूषयितुमाह **नापीति**। एकेन प्रकारेण सतो वस्तुतो वस्त्वन्तरात्मना प्रतीतिरित्युक्त्या घटादिप्रतीतीनां विभ्रमत्वं निवारितम्। दूषणान्तरं चाह **सर्वेषां चेति**। सर्वं वस्तु सर्वात्मकत्वेन सर्वेषां प्रतीयेत। वस्त्वन्तरात्मकायाः सत्त्वादिति भावः। किञ्चात्र दोषस्योपयोगो न स्यात्। ननु करणसंस्क ारत्वेन तदुपयोग इत्यत आह **न हीति**। एतेनेत्यस्यार्थमाह **असत इति**। असंबद्धविशेषणेत्यस्यासद्विशेषणसंबन्धेत्यर्थः। **उपपत्तौ वेति**। भ्रमे भासमानस्य सर्वस्याप्यसत्त्वमेवास्त्विति भावः। अन्याकरणं ह्यर्थविशेषणम्। तथाच समीचीनज्ञानेऽतिव्याप्तिः। तस्यार्थान्तरत्वेनार्थविलक्षणाकारत्वादित्याह **समीचीनेति**।

**प्रदीपः**— दोषाभावे चेन्द्रियाणामसंस्कृतत्वाद्रजताग्रहणाच्छुक्तिग्रहणमपि न स्यादन्यताग्रहणमेव वा स्यादित्याह **तथा सतीति**। किञ्चिच्छुक्तिरूप्यं नोपलभ्येत किन्त्वन्यदेवोपलभ्येतेत्यपि योज्यं **किञ्चेति**। यदि सर्वात्मत्वं सत्यं स्यात् तदेदंरजतमित्युभयविषयज्ञानस्यायाथार्थ्यं शुक्तिरेवेयमिति रजतव्यावृत्तशुक्तिमात्रविषयस्य

अयाथार्थ्यमिति वैपरीत्यं च स्यादित्यर्थः । **उपपत्तौ वेति** । अन्यत्र स्थितस्यान्यत्र प्रतिभास इति वदतोऽसत्ख्यात्यभ्युपगमोऽनुचित इत्यर्थः । अन्यत्र स्थितस्य पुरोवर्तिविषयेदमंशावच्छेदेन प्रतीतिर्भ्रान्तिरिति पक्षं निरस्यति **एतेनेति** । असत इत्येतच्छब्दार्थं विशदयति । अन्यथाख्यातित्वाविशेषात् विज्ञानख्यातिमुपन्यस्य दूषयति **अथेत्यादिना** । **अर्थविलक्षणाकारत्वेनेति** । घटाद्याकारभेदेनेत्यर्थः ।

**३२९ सु०— 'अन्याकारोल्लेखिज्ञानमन्यालम्बनमन्यथाख्यातिरि'ति तु विरुद्धम् । तथा हि । न तावत्सदसद्भावमात्रेणालम्बनं सद्भावमात्रस्य सर्ववस्तुप्रत्ययसाधारण्येन सर्वप्रत्ययानां सर्वार्थालम्बनत्वापत्तेः । सर्वसर्वज्ञता चैवं सति स्यात् । अतीतादिविषयस्य निरालम्बनतापातश्च ॥ एतेन पुरोदेशे सद्भावेनालम्बनत्वमपि प्रत्युक्तम् ॥ न च कारणत्वेनालम्बनम् । रूपादिज्ञानस्य चक्षुराद्यपि कारणमिति तदालम्बनत्वप्रसङ्गात् । अतीतानागतविषयत्वं च ज्ञानस्य न स्यात् । अतीतानागतयोरसत्त्वेन कारणत्वानुपपत्तेः ॥ एतेन विषयतया कारणत्वमित्यपि निरस्तम् । आत्माश्रयत्वं चैवं सति स्यात् । विषयत्वस्यैव निरूप्यमाणत्वात् । किञ्चैवं विषयत्वमित्येवास्तु, किं कारणतया व्यर्थयाऽनर्थजनन्या ।**

**बिन्दुः— अन्याकारोल्लेखीति** । शुक्त्याद्यपेक्षयाऽन्यो रजतादिराकारस्तदुल्लेखित्वे सति अन्यच्छुक्त्याद्यालम्बनं विषयो यस्येत्येतादृशमित्यर्थः । तदुल्लेखित्वं च तद्व्यवहारजनकत्वम् । तच्च योग्यतारूपम् अतो बालमूकादिविज्ञाने कारणान्तराभावात्प्रतिबन्धकसद्भावाद्वा व्यवहाराभावेऽपि न दोष इति ध्येयम् । **एतेन पुरोदेश इति** । पुरोदेशे विद्यमानानन्तपदार्थज्ञानापत्तेरित्यर्थः ।

**परि०**— पञ्चमं निराह **अन्याकारेति** । अन्याकारमुल्लिखतो ज्ञानस्यान्यालम्बनत्वं किमन्यस्य सत्त्वमात्रेण पुरोदेशे सद्भावेन वा कारणत्वेन निमित्तेन वा विषयतया कारणत्वेन निमित्तेन वा । आद्यं निराह **न तावदिति** । द्वितीयं निराह **एतेनेति** । अतीतादिज्ञानस्य निरालम्बनत्वापातेनेत्यर्थः । तृतीयं निराह **न चेति** । चतुर्थं निराह **एतेनेति** । अतीतादेरकारणत्वकथनेनेत्यर्थः । **कारणत्वमिति** । निमित्तमन्यस्यान्याकारोल्लेखिज्ञानालम्बनत्व इति योज्यम् । आलम्बनत्वं विषयत्वमेकमेवेति भावेनोक्तम् । **विषयत्वस्यैवेति** । आत्माश्रयादबिभ्यतं प्रत्याह **किं चैवमिति** ।

**गु०दी०— अन्यथाकारोल्लेख्यन्यालम्बनम्** इत्यत्र अन्यथाकारः पुरोवर्तिनि शुक्तिशकलेऽन्यथा वैपरीत्येन वर्तमान आकारः रजताकारः तस्योल्लेखमात्रं कुर्वन्न तु तदालम्बनम् । अन्यत् शुक्तिशकलमालम्बनं विषयो यस्य तदन्यालम्बनं रजतमुल्लिखदेव न तु तद्विषयं विषयलक्षणायोगात् । शुक्तिशकलं तु विषयलक्षणसंभवाद्विषयी-

कुर्वदित्यर्थः । **इति तु विरुद्धम्** इत्यस्य विषयत्वं नास्ति विषयित्वमस्तीत्येतद्विरुद्धम् (?) । उल्लेख्यत्वातिरिक्तस्य विषयत्वस्य दुर्निरूपत्वादिति भावः । विरोधमेव स्फोरयितुं पराभिमतविषयलक्षणानि दूषयितुमुपक्रमते **तथा हीत्यादिना** ।

**यादु०— अन्याकारोल्लेखीति** । रजतकारोल्लेखिज्ञानं वस्तुगत्या शुक्त्यालम्बनमित्यर्थः । **सद्भावमात्रेणेति** । सद्भाव एवालम्बनत्वरूपं विषयत्वमित्यर्थः । एवं पुरोदेशसद्भावेनेत्यत्र कारणत्वेन चेत्यत्र च पुरोदेशसद्भाव एव विषयत्वं कारणत्वमेव विषयत्वमित्यत्र तात्पर्यम् । विषयत्वस्यैव निरूप्यमाणत्वादित्याद्युत्तरग्रन्थानुगुण्यादिति द्रष्टव्यम् । **अनर्थजनन्येति** । अतीताद्यव्याप्तिहेतुभूतयेत्यर्थः ।

**वं०प०— एतेन** । अतीतादिज्ञानस्य निरालम्बनतापातेन ।

**आनन्दः— सद्भावमात्रस्येति** । अर्थानामिति शेषः । **एवं सतीति** । सद्भावमात्रेणार्थस्य ज्ञानावलंबनत्व इत्यर्थः । **अतीतादीति** । तत्रार्थस्य सद्भावाभावादिति भावः । **एतेनेति** । अतीतादिविषयस्य निरालंबनत्वापातेनेत्यर्थः । **एतेनेति** । अतीतानागतविषयत्वं च न स्यादित्यनेनेत्यर्थः । **आत्माश्रयत्वं चैवं सतीति** । विषयाकारत्वमेव विषयत्वलक्षणं चेद्विषयत्वलक्षणे विषयत्वप्रवेशादात्माश्रयः स्यादित्यर्थः । **अनर्थेति** । अतीताद्यव्याप्तिरूपानर्थजनन्येत्यर्थः ।

**कं०रा०— विरुद्धमिति** । स्तम्भाकारोल्लेखिज्ञाने स्तम्भ एवावभासते । कुम्भाकारज्ञाने कुम्भ एवावभासत इत्येवंरूपसंवित्स्वभावस्यानुभवसिद्धत्वात्तद्विरुद्धमित्यर्थः । **सर्वेति** । सद्भावमात्रेणालम्बनत्वे देशान्तरीयवस्तूनामपि सद्भावेनास्मदादिज्ञानं प्रत्यालम्बनत्वापत्त्या सर्वेषां सर्वज्ञता स्यादित्यर्थः । **एतेनेति** । अतीतादिविषयकज्ञानस्य निरालम्बनत्वापातेनेत्यर्थः । **अनर्थेति** । अतीतादिज्ञानस्य निर्विषयत्वापत्तिरिति योऽनर्थस्तज्जन्येत्यर्थः ।

**श्रीनिधि०— इति तु विरुद्धमिति** अन्याकारोल्लेखिज्ञानस्यान्यविषयकत्वं विरुद्धमित्यर्थः । विरुद्धमित्युक्तं न केवलं विरुद्धं किन्तुं अन्यविषयकत्वे कारणमपि नास्तीति भावेन संभावितानि कारणानि आशङ्क्य दूषयति **न तावदित्यादिना** । सद्भावमात्रेण निमित्तेन । **एतेनेति** । अतीतादिज्ञानस्येत्युक्तेनेत्यर्थः । **प्रत्युक्तमिति** । तथा चातीतादिविषयिणि अन्यथाख्यातिर्न स्यादिति भावः । **एतेनेति** । अतीतानागतयोरित्याद्युक्तेनेत्यर्थः । **एवं सतीति** । आत्माश्रयग्रस्तस्यापि पक्षस्योपादेयत्व इत्यर्थः । **विषयत्वं** विषयत्वमित्यविषयत्वेन विषयत्वमित्यर्थः । **अनर्थजनन्येति** । अतीतानागतयोर्विषयत्वाभावसंपादिकयेत्यर्थः ।

**वा०चं०—** द्वितीयमाशङ्कते **अन्येति** । **विरुद्धमिति** । भासमानत्वातिरिक्तालम्बनत्वाभावादन्यावभासिज्ञानेऽन्यावभासनं संविद्विरुद्धमित्यर्थः । ननु नालम्बनमवभासित्वमपि त्वन्यदेवेति न संविद्विरोध इत्यतः पक्षान्तरप्रतिषेधेन तदेव परिशेषयितुमाह **तथा हीति** । अत्र सत्त्वस्याविषयरजतादिव्यावृत्तत्वात्सर्वविषयानुगतत्वाच्च सत्त्वपक्षस्य, ज्ञानकरणत्वस्य विषयविशेषनिष्ठतया कैश्चिदन्यथाख्यातिवादिभिरभ्युपगमात्तत्पक्षस्य, ज्ञानसंब-

न्यतिशयत्वेन तृतीयस्य, ज्ञानकरणसंबन्धसंबन्धत्वेन चतुर्थस्य प्रसक्तिरिति द्रष्टव्यम् । सद्भावेऽपि यत्र कुत्रचिदेव वा पुरोदेशे यदा कदाचिद्वा ज्ञानकाल एव वेति विकल्पान्मनसि निधायाद्यं तावन्निराकरोति **न तावदिति** । न चेष्टापत्तिः । अनुभवविरोधानभ्युपगमाच्च । दूषणान्तरं चाह **सर्वेति** । आद्ये द्वितीयं निराकरोति **अतीतादीति** । द्वितीयं निराकरोति **एतेनेति** । आद्यदूषणपरिहारेण शङ्कायामाधिक्यं चेत्यतिदेशः । एवमुत्तरत्रापि । पुरोदेशवर्तिसर्वपदार्थालम्बनत्वापत्तिरत्रापि दूषणत्वेन बोध्या । हेतुत्वेनालम्बनत्वं निषेधति **न चेति** । हेतुत्वं यथाकथञ्चिद्विवक्षितम् । तथा च रजतसदृशशुक्ते रजतसंस्कारोद्बोधहेतुत्वादालम्बनत्वं वा विषयतया कारणत्वेन वा । नाद्य इत्याह **रूपादीति** । **एतेनेति** । रूपादीत्युक्तातिप्रसङ्गपरिहारकत्वमात्रमभिप्रेत्य वा विषयत्वमालम्बनत्वातिरिक्तमिति शङ्कितुर्भ्रमेण वेदमुक्तमत एव परिहारेऽपि विषयत्वस्यैव निरूप्यमाणत्वादिति वक्ष्यतीति ध्येयम् । कारणत्वस्य लक्षणकोटावधिकस्य प्रवेशेऽपि स्वज्ञाने स्वज्ञानापेक्षाऽनपायादात्माश्रयः स्यादेवेत्याह **विषयत्वस्यैवेति** । न केवलं कारणत्वविशेषणस्यातीतादिविषयाव्याप्तिसंपादकतयाऽनर्थजनकत्वमात्रं किन्तु वैयर्थ्यमपि तदनुपादानेऽतिप्रसङ्गाभावात् । तथा च विषयत्वस्यैव लक्षणत्वे वक्तव्ये सुलभ एवात्माश्रय इत्याह **किञ्चेति** ।

**वा०र०**— अन्यालम्बनमन्यथाख्यातिरिति तु विरुद्धमिति मूलस्थविरुद्धपदं तत्त्वोद्योतटीकास्थसंविद्विरुद्धमित्यस्य विचार्य संविद्विरुद्धमित्यर्थकतायाः सिद्धत्वात् । तदनुसारेण व्याचष्टे **भासमानत्वातिरिक्तेति** । **ननु नावलम्बनमवभासित्वमिति** । ज्ञानस्य यदालम्बनमित्युच्यते तदवलम्बनं ज्ञानधर्मः । ततश्च विषयावलम्बनं नाम तदवभासित्वं यत्प्राप्तं तन्निषेधोऽयमिति ज्ञेयम् । अतदर्थिनो व्यवहारेत्येतन्मूलटीका........अनुसारेण व्याख्येयास्ति ।

**स०व्र०**— **एतेन पुरोदेश इति** । अतीतादिविषयज्ञानस्य निरालम्बनत्वापातेनेत्यर्थः । **एतेन विषयतयेति** । अतीतानागतयोर्विषयतया कारणत्वाभावेनेत्यर्थः । **अनर्थजनन्येति** । अतीतादावव्याप्तिहेतुभूतयेत्यर्थः ।

**वि०ट०**— पञ्चमं संविद्विरोधोपपादनेनापाकरोति **अन्याकारेति** । रजताकारोल्लेखिशुक्तिकावलम्बनमित्यर्थः । अन्याकारमुल्लिखतोऽपि ज्ञानस्यान्यविषयत्वं किमन्यस्य सत्त्वमात्रेण उत पुरोदेशे सद्भावेन आहोस्वित् कारणत्वेन किंवा विषयतया कारणत्वेनेति विकल्पान् मनसि निधाय क्रमेणापाकरोति **न तावदित्यादिना** । **एवं सतीति** । यत्रकुत्रचित् पदार्थसत्त्वमात्रेण ज्ञानगोचरत्वे इत्यर्थः । **निरालम्बनतापत्तेरिति** । अतीतादेः ज्ञानकाले सत्त्वाभावादिति भावः । **एतेनेति** । अतीतानागतयोरसत्त्वेन कारणत्वानुपपत्तेरित्यनेनेत्यर्थः । **अनर्थजनन्येति** । अतीतादेः कारणत्वासंभवेन अविषयत्वं स्यादिति अनर्थहेतुभूतयेत्यर्थः ।

**चषक**:— नैयायिकैकदेशाभिमताभिनवान्यथाख्यातितात्पर्यकपञ्चमकल्पं निरस्यति **अन्याकारोल्लेखीति** । रजताकारोल्लेखीत्यर्थः । अन्यालम्बनं शुक्त्यालम्बनम् । **विरुद्धमिति** । प्रतीयमानत्वातिरेकेणालम्बनत्वस्याभावेनान्यप्रतीतावन्यस्यालम्बनत्वं संविद्विरुद्धमित्यर्थः । सद्भावमात्रपदोत्तरा सद्भावपदोत्तरा कारणत्वपदोत्तरा च तृतीयालम्बनत्वान्विताऽभेदार्थिका । आद्यतृतीययोः पदार्थतावच्छेदकान्विततदर्थकत्वं द्वितीयस्या-





स्तस्या उत्तरपदार्थान्विततदर्थकत्वमेव । विषयत्वस्यैव निरूप्यमाणत्वादित्यग्रिमग्रन्थार्जवानुरोधात् । विषयतायां निबन्धनस्याजिज्ञासिततया निमित्तत्वार्थकत्वस्य दुरुपपादत्वात् । अनर्थजनन्या आत्माश्रयाद्यापादिकया तथा चात्माश्रय सुप्रतिपद इति भावः ।

**गूढ०**— **सद्भावमात्रस्येति** । अर्थानामिति शेषः । **एवं सतीति** । सद्भावमात्रेणार्थज्ञानालम्बनत्वे इत्यर्थः । **अतीतादीति** । तत्रार्थस्य सद्भावाभावादिति भावः । **एतेनेति** । अतीतादिविषयस्य निरालम्बनत्वापातेनेत्यर्थः । **एतेनेति** । अतीतानागतविषयत्वं च न स्यादित्येतेनेत्यर्थः । **आत्माश्रयत्वं चैवं सतीति** । विषयाकारत्वमेव विषयत्वलक्षणं चेत् विषयत्वलक्षणे विषयत्वप्रवेशादात्माश्रयः स्यादित्यर्थः । **अनर्थेति** । अतीताद्यव्याप्ति-रूपानर्थजनन्येत्यर्थः ।

**प्रदीपः**— ननु यत्रकुत्रचित्सत्तामात्रेणालम्बनत्वाभावेऽपि रजतज्ञाने शुक्तिः पुरोदेशसत्तामात्रेणालम्बनं किं न स्यादत आह **एतेनेति** । पुरोवर्तिलोष्टादीनामप्यालम्बनत्वप्रसङ्गेनेत्यर्थः । अथ रजतसदृशशुक्ते रजतज्ञानहेतु-संस्कारोद्बोधकत्वेनालम्बनत्वं नेत्याह **न चेति** । चक्षुरादीनां करणत्वेन कारणत्वेऽपि विषयत्वेनाकारणत्वाद्विषयतया कारणत्वस्यैवालम्बनशब्दार्थत्वान्नातिव्याप्तिरिति नेत्याह **एतेनेति** । अतीतादिविषयत्वाभावप्रसङ्गेनेत्यर्थः । ननु विषयतया कारणत्वस्य विषयत्वमात्रत्वाभावान्नात्माश्रयत्वमिति तत्राह **किञ्चेति** । **अनर्थजनन्येति** । अतीता-द्यव्याप्तिहेतुभूतयेत्यर्थः ।

**३३० सु०— किं चेदं विषयत्वम् । येन यस्यातिशय उत्पद्यते स तस्य विषय इति चेत् । अतिशयो हि ज्ञातता वा स्याद् व्यवहारो वा । नाद्यः । अनभ्युपगमात् । अभ्युपगमेऽप्यती-तादिज्ञानस्य निर्विषयत्वापातात् । न ह्यसति धर्मिणि धर्मोत्पादो युज्यते । न द्वितीयः । अतदर्थिनो व्यवहारानुत्पत्तावविषयत्वापत्तेः । व्याघ्रचोरादिज्ञानानन्तरमादीयमानस्य दण्डा-देरपि तद्विषयत्वप्रसक्तेश्च ॥ यद्विज्ञानं यदाकारं तत्तदालम्बनमिति तु तथागतमतमनुधावति ॥**

**परि०**— अस्तु तर्हि तथैवेति वदन्तं प्रत्याह **किं चेदं विषयत्वमिति** । तथागतमतमिति बौद्धमतमनुकरोति । बौद्धा हि ज्ञानमर्थाकारमिति वदन्तीति यद्विज्ञानं यदाकारमित्युक्तौ बौद्धमतप्रवेशः प्राप्नोतीत्यर्थः ।

**यादु०**— व्यवहारपदेनाभिलपनं वोपादानादिकं वेति विकल्पं मनसि निधायाद्यं दूषयति **अतदर्थिन इति** । द्वितीये त्वाह **व्याघ्रचोराऽऽदीति** ।

**वं०प०**— **व्याघ्रेति** । व्याघ्रचोरादिज्ञानेन दण्डादावुपादानरूपातिशयस्योत्पद्यमानत्वेन दण्डादेरपि व्याघ्रादिज्ञानविषयत्वं स्यादित्यर्थः ।





**आनन्दः**— अव्याप्तिमुक्त्वा अतिव्याप्तिमाह **व्याघ्रेति** । येन व्याघ्रादिज्ञानेन यस्य दण्डादेरतिशय आनयनादिरुत्पद्यते इति दण्डादिरपि व्याघ्रादिज्ञानविषयः स्यादित्यर्थः । **यद्विज्ञानमिति** । ज्ञानस्य साकारवादापत्तेरिति भावः ।

**कं०रा०**— **व्याघ्रेति** । व्याघ्रचोरादिज्ञानानन्तरं तन्निवृत्त्यर्थमादीयमानदण्डादेरपि व्याघ्रचोरादिज्ञानजन्यादानलक्षणातिशयभाक्त्वेन तद्विषयत्वप्रसङ्गादित्यर्थः । ननु व्याघ्रचोरादिज्ञानानन्तरमसति दण्डादिदर्शने तदुपादानाभावात्सति च तस्मिंस्तद् भावाद्दण्डाद्यादानस्य तद्दर्शनजन्यतया व्याघ्रचोरादिज्ञानजन्यत्वाभावान्नोक्तातिप्रसङ्ग इति चेत् । मैवम् । घटादिज्ञानानन्तरमसति तत्पदज्ञाने तत्पदप्रयोगलक्षणव्यवहाराभावात्तस्मिंश्च सति तद्भावाद्व्यवहारस्य पदज्ञानजन्यतया घटादिरूपार्थज्ञानजन्यत्वाभावेन घटादेरपि तज्ज्ञानाविषयत्वापत्तेः । यदि च घटज्ञानानन्तरं पदज्ञानलक्षणसहकारिणि सति व्यवहारदर्शनात्तस्य घटादिज्ञानजन्यत्वमिति मन्यसे तदा व्याघ्रचोरादिज्ञानानन्तरं दण्डादिदर्शने सति तदादानदर्शनात्तस्यापि व्याघ्रचोरादिज्ञानजन्यत्वमिति समम् ।

**श्रीनिधि०**— द्वितीयेऽपि व्यवहारः अभिलापो वा आदानादिर्वा । उभयोर्दोषमाह **अतदर्थिन इति** । व्यवहारानर्थिन इत्यर्थः । द्वितीये दोषान्तरमाह **व्याघ्रेति** । **तथागतो** बोधः ।

**वा०चं०**— **येनेति** । ज्ञानजन्यातिशयाधार इत्यर्थः । तार्किकादीन्प्रत्याह **अनभ्युपगमादिति** । भट्टं प्रत्याह **अभ्युपगमेऽपीति** । प्रतियोगित्वादिवदतीतादौ ज्ञातताऽप्यस्त्वित्यतो ज्ञाततावादिना तस्या धर्मिसत्तासापेक्षत्वाभ्युपगमान्नैवमित्याशयेनाह **न हीति** । व्यवहारोऽप्यभिलपनं हानादिर्वा । द्वयमपि निराकरोति **अतदर्थिन इति** । हानादिपक्षे दूषणान्तरं चाह **व्याघ्रेति** । ननु ज्ञानजन्यातिशयाश्रयत्वरूपविषयत्वासंभवेऽपि ज्ञाने स्वाकाररूपातिशयसमर्पकत्वरूपं विषयत्वं संभवत्येवेत्याशङ्क्य तथा सति साकारविज्ञानख्यात्यापत्त्या नान्यथाख्यातिवादः समर्थितः स्यादिति भावेनाह **यदिति** ।

**स०ना०**— अन्यथाख्यातिग्रन्थे विषयलक्षणनिरूपणसुधावाक्यार्थः । **आलम्बनलक्षणनिराकरणं कृतमिति** । विषयत्वज्ञापकहेतुनिराकरणं कृतमित्यर्थः । **यद्विज्ञानमिति** । यत्सन्निकृष्टेन यद्विषयकेणेत्यर्थः । तथाचेदमनुमानमुक्तं भवति । इदं रजतमिति ज्ञानं शुक्तिविषयकं शुक्तिविषयकरणजन्यत्वात् । करणफलयोरेकविषयत्वनियमात् । तदुक्तं किमप्यविषयीकुर्वन्ति करणानि ज्ञानं जनयन्तीत्युक्तं भवति । ज्ञेयविषयीकारित्वं च साक्षाद्वा साक्षान्मोक्ष(ज्ञेय)विषयीकारिसाधनत्वेन वा विवक्षितमिति च । अवश्यं चैतदेवं विज्ञेयं यद्विषयेण करणेन यज्ज्ञानं जन्यते स तस्य विषय इति । अन्यथा इदंरजतमिति भ्रमस्ये(रजत)दंतादात्म्यं विषयो न स्यात् । अत्यन्ता(असतां)सन्निकर्षायोगात् । तदेकप्रमाणके तदभावे अभावनियमात् । न चातीते । न संस्कारवत् दोष एव (अत्यन्ता)असतां सन्निकर्ष इति वाच्यम् । संस्कारस्यातीतविषयत्वे(न) विषयविषयिभावस्य धर्मिसत्तानिरपेक्षत्वेन अतीतविषयकसंस्कारस्य प्रत्यासत्तित्वसंभवेऽपि दोषस्य तदयोगात् । शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तामेव अत्यन्तासद्रजतात्मनावगाहमानं ज्ञानं जनयतीत्यभिधानाच्च । अन्यथा दोष एव सन्निकर्ष इत्यवक्ष्यत् ।





**विठ्ठ०**— अत्र तदालम्बनत्वं न ततोऽतिरिक्तमिति चेत् कोऽसौ विषयो नाम येन यस्य अतिशय उत्पद्यते स तस्य विषय इति वा यद्विज्ञानं यदाकारं स तस्य विषय इति वा यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते तत् तद्विषय इति वेति विकल्प्याद्यं दूषयति **येन यस्येति**। **निर्विषयतापातादिति**। अतीतादौ ज्ञानविषयतोत्पादायोगात् इति भावः। ज्ञाततानुत्पादमेवोपपादयति **न ह्यसतीति**। अव्याप्तिमुक्त्वाऽतिव्याप्तिमप्याह **व्याघ्रेति**। विषयस्य लक्षणान्तरमाशङ्कते **यद्विज्ञानमिति**। ज्ञानगत एवाकारो बहिः प्रतिभासत इति विज्ञानवादिभिरभ्युपगतत्वेन तथागतमतमनुधावतीत्युक्तम्।

**चषक**:— **येनेति**। स्वोत्पादितातिशयविशेषितत्वं स्वनिरूपितविषयत्वमित्यर्थः। **अतिशयो हीति**। ज्ञानस्यातीन्द्रियतां ज्ञानजनितघटत्वादिप्रकारकज्ञाततालिङ्गकानुमानवेद्यतां चोरीकुर्वतां क्रियाजन्यफलशालित्वं कर्मत्वमभिदधानानां भट्टानां मतमनुरुध्याद्यः कल्पान्तरदिशेतरः। आद्यं प्रत्याह **अनभ्युपगमादिति**। नैयायिकेनेति पूरणीयम्। भट्टदिशाऽऽह **अभ्युपगमेऽपीति**। **युज्यत इति**। निरधिष्ठानोत्पत्तेरयोगादिति भावः। द्वितीये अभिलपनोपादानादिभेदेन कल्पद्वयमभिप्रेत्याऽऽद्यमपहस्तयते **अतदर्थिन इति**। समानविषयताप्रत्यासत्त्येच्छा-भिलपनयोर्हेतुहेतुमद्भावोपगतेरिति भावः। द्वितीयमपवदति **व्याघ्रेति**। तथागतमतं बौद्धमतम्। ज्ञानस्यार्थाकारता-मुपगच्छन्ति हि बौद्धाः।

**गूढ०**— अव्याप्तिमुक्त्वा अतिव्याप्तिमाह **व्याघ्रेति**। येन व्याघ्रादिज्ञानेन यस्य दण्डादेरतिशय-आनयनादिरुत्पद्यत इति दण्डादिरपि व्याघ्रादिज्ञानविषयः स्यादित्यर्थः। **यद्विज्ञानमिति**। ज्ञानस्य साकारवादा-पत्तेरिति भावः।

**प्रदीपः**— नन्वतीतादिषु कथं ज्ञातता नास्ति यतोऽतिशयाभावान्निर्विषयत्वं स्यादित्यत आह **न हीति**। **व्याघ्रेति**। दण्डाद्यादानवर्ण्यव्यवहारहेतुभूतं व्याघ्रादिज्ञानं दण्डादिविषयं स्यादित्यर्थः।

**३३१ सु०— यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते तत्तद्विषयमित्यपि न; रूपादिज्ञानस्या-काशादिविषयतापातात्। न हि रूपादिज्ञानमुत्पादयच्चक्षुराकाशादिना न सन्निकृष्यत इति युज्यते। प्रत्यभिज्ञा च तत्ताऽसन्निकृष्टकरणजन्या न तद्विषया स्यात्। न च वाक्यं वाक्यार्थेन सन्निकृष्यते येन तज्जनितज्ञानस्य वाक्यार्थो विषयः स्यात्, आकाशादिविषयतैवं चापद्येत। लिङ्गज्ञानाच्चात्मसन्निकृष्टाज्जायमानं लिङ्गिज्ञानमात्मविषयमापद्येत॥ तस्माद्यज्ज्ञानं यत्प्रति-भासं तदेव तस्यालम्बनमिति मन्तव्यम्॥ तत्र रजतज्ञाने शुक्तिरवभासते न वेति वक्तव्यम्। अवभासत इति ब्रुवाणः श्लाघनीयप्रज्ञो देवानां प्रियः। यदि संविदि बहुमानवान्नेति ब्रूयात्तदा कथं तच्छुक्तिकालम्बनं स्यात्। किञ्च रजतमवभासते शुक्तिकालम्बनं चेदतिप्रसङ्गः कथं**

**परिहरणीयः । ननु रजतावभासस्य रजतविषयकत्वे तेन रजतेन भवितव्यम् । कथं न भवितव्यम् । न हि संप्रतिपन्नसमीचीनरजतस्वीकारेऽपि निमित्तमस्त्यन्यद्रजतावभासात् । न ह्यन्य(तर)रजतप्रतिभासपक्षपाते कारणमस्ति । नास्त्यत्र रजतमित्यपि प्रतिभासोऽस्तीति चेत् । सत्यम् । प्रतिभाससामर्थ्याद्रजताभावोऽप्यङ्गीकृत एव पुरतः । प्रतीत्योर्विरोधः स्यादिति चेन्न । यथा न विरोधस्तथा वक्ष्यमाणत्वात् ।**

**बिन्दुः— यत्प्रतिभासमिति** । प्रतिभासत्वं च तदज्ञाननिवर्तकत्वं वा तद्वृत्तिधर्मप्रकारकत्वं वा रजतप्रतिभास इति प्रमाविशेष्यत्वं वा रजतं प्रतिभासत इति व्यवहारासाधारणकारणज्ञानत्वं चेत्यादि द्रष्टव्यम् । अतो नात्माश्रयादीति ध्येयम् । **कथं न भवितव्यमिति** । स्मरणात्मकं ज्ञानं मन्यमानस्य गूढाभिसन्धेरुत्तरम् । **पुरत इति** । स्मर्यमाणरजतस्य विप्रकृष्टत्वादिति भावः ।

**परि०— यज्ज्ञानमिति** । यदिति भिन्नं पदम् । न तु यस्य ज्ञानं यज्ज्ञानमिति समासः । पुनरव्याप्त्यतिव्याप्ती चाह **न च वाक्यमित्यादिना** । शब्द आकाशगुणो वायुगुणो वेतिमतेनाह **आकाशादीति** । आत्मसन्निकृष्टादात्मसमवेतादित्यर्थः । ज्ञानादेरात्मगुणत्वादिति भावः । देवानां प्रिय इत्येकं पदम् । अज्ञ इत्यर्थः । षष्ठस्य तृतीयपादे 'षष्ठ्या आक्रोशे' इति सूत्रे 'देवानां प्रिय इति वक्तव्यम्' इति वार्तिकादलुक् । श्लाघनीयप्रज्ञ इत्यपहासः काकुस्वरेण द्योत्यते **अतिप्रसङ्ग इति** । पटाद्यवभासकमपि ज्ञानं घटाद्यालम्बनं स्यादित्यतिप्रसङ्ग इत्यर्थः । शुक्तिकायामिदं रजतमिति ज्ञानस्य शुक्तिकालम्बनत्वाभावे रजतमेवालम्बनं स्यात् । तथाच रजतं वास्तवं स्यादिति शङ्कते **नन्विति** । इष्टापत्तिं मन्वान उत्तरमाह प्राभाकरः **कथं न भवितव्यमिति** । भवितव्यमेवेत्यर्थः । प्रतीतिविषयस्य सत्त्वेन भाव्यमित्येतदुपपादयति **न हीति** । **वक्ष्यमाणत्वादिति** । ननु तर्हीत्यादिना ग्रन्थेनेदमिति ज्ञानादगृहीतविवेकं रजतमिति स्मरणं नास्तीह रजतमिति त्वनुभवो विवेकग्रहरूप इत्यादिरूपेण वक्ष्यमाणत्वादित्यर्थः ।

**गु०दी०— ननु रजतावभासस्य रजतविषयकत्वे** इत्यत्र परकीयशङ्काव्याजेनेदं रजतमिति रजतज्ञानं रजतविषयं न भवतीति स्वसिद्धान्तरहस्यमुपोद्बलयितुं काञ्चन शङ्कामुत्थापयतीत्यर्थः । अन्यथा स्वमतविरुद्धशङ्कायास्तार्किकेण करणायोगात् । अत एव कथं न भवितव्यमिति पराशङ्कितप्रमेयस्यैव दृढीकरणं, तटस्थस्यैवेयं शङ्केति ज्ञेयम् ।

**यादु०— आकाशादिविषयतैवमिति** । शब्दरूपस्य वाक्यस्य आकाशसमवेतत्वादिति भावः । **यत्प्रतिभासमिति** । यदुल्लेखीत्यर्थः । एवमग्रेऽपि । **कथं न भवितव्यमिति** । एतन्मते रजतज्ञानस्य स्मृतिरूपत्वेन





सत्यरजतविषयकत्वादिति भावः । **यथा न विरोध इति** । भ्रमकाले पुरोवृत्तिग्रहणागृहीतभेदमन्यत्र विद्यमानरजतस्मरणं बाधकाले च पुरोदेशे विद्यमानरजताभावानुभवः अतो न रजततदभावप्रतीत्योर्विरोध इति वक्ष्यमाणत्वादित्यर्थः । यदि पुरोदेश एव रजतज्ञानं तदा परं विरोधः स्यान्न चैवमिति भावः ।

**वं०प०**— रजतज्ञानस्य शुक्तिविषयकत्वमनुभवविरुद्धं चेत्याह **तत्रेति** । देवानां प्रियो मूर्ख इत्यर्थः । **अतिप्रसङ्ग इति** । घटावभासस्यापि पटविषयकत्वं स्यादित्यर्थः । शुक्तिकायामिदं रजतमिति ज्ञानस्य शुक्तिकालम्बनत्वाभावे रजतमेवालम्बनं स्यात् । तथाच रजतं वास्तवं स्यादित्याशङ्कते **नन्विति** । इष्टापत्तिं मन्वानः प्राभाकर उत्तरमाह **कथं न भवितव्यमिति** । भवितव्यमित्यर्थः ।

**आनन्दः**— **प्रत्यभिज्ञा चेति** । यद्यपि तत्रांशे ज्ञानस्वरूपसन्निकर्षसद्भावात्तत्तासन्निकृष्टकरणजन्यत्वमस्त्येव । तथापि संयोगसमवाययोरभावाभिप्रायेण तथोक्तमिति ज्ञेयम् । **न च वाक्यमिति** । अत्रापि वाक्यगतपदवाच्यनिष्ठत्वरूपः सन्निकर्षो वाक्यस्य वाक्यार्थेन सहास्ति । तथापि संयोगाद्यभावाभिप्रायेणैव तथोक्तं **आकाशादीति** । वाक्यस्य शब्दात्मकत्वेनाकाशेन सह समवायरूपसन्निकर्षसत्त्वेन वाक्यजनितवाक्यार्थज्ञाने आकाशस्य विषयत्वं स्यादिति भावः । **लिङ्गज्ञानाच्चेति** । अत्रापि तद्व्याप्यलिङ्गविषयत्वरूपसन्निकर्षसत्त्वेऽपि संयोगाद्यभावाभिप्रायेण तथोक्तम् । **यत्प्रतिभासमिति** । यदर्थप्रतिभासरूपमित्यर्थः । **अवभासत इतीति** । रजतज्ञानस्य शुक्तिविषयत्वासंभवादिति भावः । **अतिप्रसङ्ग इति** । घटज्ञानस्यापि घटाद्यालम्बनत्वरूपातिप्रसङ्गः स्यादित्यर्थः । रजतावभासस्य रजतविषयकत्वेऽनुपपत्तिं शङ्कते **नन्विति** । रजतावभासस्य प्रत्यक्षावभासत्वात् प्रत्यक्षावभासे च विषयस्य कारणत्वात्तत्र रजताभावे प्रत्यक्षरजतावभास एव न स्यादिति भावः । नन्वान्तररजतावभासेन रजतसत्त्वमङ्गीक्रियते । अनेन तु नेत्यत आह **न हीति** । **पुरत इति** । पुरोवर्तिनीत्यर्थः । तथाच पुरोवर्तिनि रजताभावस्य देशान्तरे च रजतस्य च स्वीकारान्न विरोध इत्यर्थः । एतदेव विशदयति **प्रतीत्योरिति** । इदं रजतं नात्र रजतमिति प्रतीत्योरित्यर्थः । **वक्ष्यमाणत्वादिति** । भेदाग्रहप्रसञ्जितेत्यादिना वक्ष्यमाणत्वादित्यर्थः ।

**कं०रा०**— **तत्तेति** । तत्तयाऽसन्निकृष्टं यच्चक्षुर्लक्षणं करणं तज्जन्येत्यर्थः । **आकाशादीति** । वाक्यजनितज्ञानस्याकाशादिसन्निकृष्टवाक्यरूपकरणजनितत्वादाकाशादिविषयकतैवापाद्यत इत्यर्थः । आदिपदेन कालादिपरिग्रहः । **अवभासत इति** । स्तम्भज्ञाने स्तम्भ एवावभासते कुम्भज्ञाने कुम्भ एवावभासत इत्येवंरूपसंवित्स्वभावानुभवमुल्लंघ्य रजतज्ञाने शुक्तिरवभासत इति ब्रुवाणः श्लाघनीयप्रज्ञो विपरीतलक्षणया निन्द्यबुद्धिर्देवानां प्रियो मूर्ख इत्यर्थः । **यदीति** । संवित्स्वभावानुभवमनुसृत्य रजतज्ञाने शुक्तिर्नावभासत इति यदि ब्रूयादित्यर्थः । **अतिप्रसङ्ग इति** । स्तम्भाद्यवभासस्याप्यन्यालम्बनत्वं स्यादित्यतिप्रसङ्गः कथं परिहरणीयो, न कथञ्चिदित्यर्थः । **नन्विति** । रजतावभासस्य रजतविषयत्वनियमे शुक्तिकायामिदंरजतमित्यत्र रजतत्वेन प्रतीयमानं रजतं स्यादित्यर्थः । इष्टापत्त्या परिहरति **कथमिति** । इदं रजतमित्यत्र रजतत्वेन भासमानेन वस्तुना रजतेन कथं न भवितव्यम् ? तेन रजतेन भवितव्यमेव । तत्र रजतत्वेन भासमानं वस्तु रजतमेवेति यावत् । तत्र युक्तिं वक्ति





**न हीति** । सत्यस्थले संप्रतिपन्नसमीचीनरजतस्य विषयत्वस्वीकारेऽपि रजतावभासादन्यन्निमित्तं न ह्यस्ति । किन्तु रजतावभास एव निमित्तम् । तस्य च प्रकृतेऽपि सत्त्वादिति भावः । ननूभयत्र रजतावभासस्य तुल्यत्वेऽपि सत्यस्थलीयरजतावभासस्य रजतमेव विषयः । प्रकृते त्वरजतमेव विषय इति किं न स्यादित्यत आह **न हीति** । अन्यतरस्मिन्सत्यस्थल एव रजतस्य प्रतिभास इति पक्षपाते न हि कारणमस्तीत्यर्थः । **नास्तीति** । अत्र रजतं नास्तीत्यपि प्रतिभासो वर्तते तद्बलादिह रजतावभासस्यारजतविषयत्वं कल्प्यत इति शङ्काभिप्रायः । **प्रतिभासेति** । नास्त्यत्र रजतमिति प्रतिभासस्य पुरोदेशे रजताभावव्यवस्थापने सामर्थ्यात्पुरतो रजताभावोऽङ्गी-क्रियते । अपिशब्दाद्रजतसंवित्सामर्थ्याद्रजतविषयत्वं चाङ्गीक्रियते । नास्त्यत्र रजतमित्यवभासस्य रजतप्रतीते रजतविषयत्वव्यवस्थापने सामर्थ्याभावादित्यर्थः । **प्रतीत्यो** रजततदभावप्रतीत्योः । **यथा न विरोध इति** । शुक्ति-कायामिदं रजतमित्यत्र रजतज्ञानस्य प्रमुष्टतत्ताकस्मृतिरूपस्य देशान्तरीयरजतविषयतया नास्त्यत्र रजतमित्यव-भासस्य च पुरोदेशस्थरजताभावविषयत्वेन च विरोधो नेति वक्ष्यमाणत्वादित्यर्थः ।

**श्रीनिधि०— यत्प्रतिभासमिति** । यदुल्लेखीत्यर्थः । **तदालम्बनम्** । तद्विषयम् । **श्लाघनीयप्रज्ञ इति** । निन्दायां, अल्पप्रज्ञ इत्यर्थः । देवानां प्रिय इति च मूर्ख इति वार्तिकादलुक् समासः । विरोधादिति भावः । **संविदि बहुमानवानिति** । विरोधेन संवित् स्वरूपमेव न लीयेत यथा स्थितयैव संविदा भाव्यमिति बुद्धिमानित्यर्थः । कथं न भवितव्यमिति परिहारः । न ह्यन्यतररजतप्रतिभासपक्षपात इति संप्रतिपन्नासंप्रतिपन्नरजतयोरन्यतरस्य स्वतः प्रतिभासः अन्यतरस्यासतः इति पक्षपात इत्यर्थः । **यथा न विरोध इति** । इदमिति ग्रहणं रजतमिति देशान्तरीयस्य रजतस्य स्मरणमिति न विरोधः इति वक्ष्यमाणत्वात् इत्यर्थः ।

**वा०चं०— यत्सन्निकृष्टेति** । ज्ञानकरणनिष्ठसन्निकर्षप्रतियोगित्वमित्यर्थः । अस्यापि प्रत्यक्षस्थले-ऽतिव्याप्त्यव्याप्ती आह **रूपादीति** । सामानाधिकरण्यरूपव्याप्तिशरीरप्रविष्टसंयोगसमवायादिरूपसंबन्धस्यान्यथा-ख्यातिवादिभिरपि लिङ्गलिङ्गिनोः स्वीकारेण तदभावप्रयुक्ताव्याप्तेर्लिङ्गकरणतापक्षे तद्विषये वक्तुमशक्यत्वेन वाक्यस्य वाक्यार्थे शक्तेस्तार्किकादिभिरनङ्गीकारेण वाक्यकरणतापक्षे तद्विषये तत्संबन्धाभावप्रयुक्ताव्याप्तिमेवाह **न च वाक्यमिति** । वाक्यस्थलेऽतिव्याप्तिमप्याह **आकाशादीति** । आदिपदेन श्रोत्रग्रहणम् । यद्यपि साध्यधर्मिसन्निकृष्ट-लिङ्गजन्यलिङ्गिज्ञानविषयता साध्यधर्मिण्यपि लिङ्गकरणतापक्षे आपादयितुं शक्या तथाऽपि विषयताऽङ्गीकारेणापि परिहारसंभवान्नात्रापादिता सिद्धान्तदशायां त्ववश्याभ्युपगमनीयलिङ्गज्ञानकरणताभ्युपगमेन सुपरिहरत्वाद्धर्मिणो मुख्यविषयत्वाभावाभिप्रायेणाशङ्क्य परिहृतेति द्रष्टव्यम् । यद्यपि वाक्यार्थज्ञानस्यात्मविषयता वाक्यज्ञानकरणता-पक्षेऽप्यापादयितुं शक्याऽत एव न्यायामृते आदिशब्दस्तथाऽपि वाक्यकरणतापक्षेऽव्याप्त्यतिव्याप्त्योर्वाक्यस्थल उद्भावितत्वाज्ज्ञानकरणतापक्षाश्रयणेनातिव्याप्त्यनुद्भावनेऽप्यनुमानस्थले लिङ्गकरणतापक्षाश्रयणेन तदुद्भावना-संभवात् । ज्ञानकरणताश्रयणेनातिव्याप्तिमुपपादयति **लिङ्गज्ञानाच्चेति** । लिङ्गज्ञानकरणतापक्षे संबन्धाभाव-प्रयुक्ताव्याप्तेरापादनाभावस्तु लिङ्गलिङ्गिनोः संबन्धसंभवे तद्द्वारकस्तज्ज्ञानयोरपि संबन्धः संभवतीत्याशयेन





बोध्यः । वाक्यज्ञानस्य तत्संबन्धाभावप्रयुक्ताव्याप्त्यनुद्भावनं तु वाक्यस्य तत्संबन्धाभावप्रयुक्ताव्याप्त्युद्भावनेनैव ज्ञानस्थलेऽपि तस्याः सिद्धतामभिप्रेत्य सिद्धान्तदशायां तु लक्षणनिष्कर्षाय सर्वदूषणान्याशङ्क्य परिहृतानीति ध्येयम् । यदर्थं विषयत्वलक्षणान्तरनिराकरणं तदुक्तं विषयत्वं परिशेषयति **तस्मादिति** । एवं च रजतज्ञाने शुक्तेरालम्बनत्वं वदता तत्र तदवभासोऽङ्गीकार्यः । तथा च संविद्विरोध इत्याह **तत्रेति** । समूहालम्बनातिरिक्ते रजतमिति ज्ञाने संवित्स्वभावविरुद्धं शुक्तेरवभासं वदतोऽलौकिकं बुद्धिवैशद्यमित्याशयेन श्लाघनीयप्रज्ञ इति परिहासः । देवानां प्रियः पशुः । अनवभासे उक्तान्यथाख्यातिर्न सिद्ध्येदित्याशयेनाह **यदीति** । एतच्च संविद्विरोधस्वरूपं नयवीथ्यां स्पष्टमुक्तम् । 'अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते । वेद्यः स एव नान्यद्धि वेद्यं वेद्यस्य लक्षणम् । इदं रजतमित्यत्र रजतं चावभासते । तदेव तेन वेद्यं स्यान्न च शुक्तिरवेदनात् । तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम् । परस्मिन्भासमाने हि न परं भासते यत' इति । अस्तु वा यत्किञ्चिदालम्बनत्वं रजतावभासिज्ञाने शुक्त्यनवभासेऽपि शुक्तेरालम्बनत्वे घटावभासि पटानवभासिज्ञाने पटस्य पुरोवर्तिरजतज्ञाने शुक्तेश्चालम्बनत्वापत्तिश्चेत्याह **किञ्चेति** । नन्वतिप्रसङ्गादिना-ऽवभासिन एवालम्बनत्वे इदं रजतमिति ज्ञानस्य रजतावभासितया तदालम्बनत्वं वक्तव्यम् । तथा चासतो विषयत्वासंभवेन रजतस्य सत्त्वं च स्यादिति । **नन्विति** । असत्ख्यातिवादिनं प्रत्यस्यानिष्टत्वेऽपि मां प्रतीष्टापादनत्वात्तर्काभासोऽयमित्याह **कथमिति** । रजतसत्त्वस्य न तावत्प्रामाणिकहानरूपत्वादनिष्टत्वम् । अप्रामाणिककल्पनात्वेनानिष्टत्वे च तस्याप्रामाणिकत्वं साधकप्रमाणशून्यत्वं प्रमाणविरुद्धत्वं वा । नाद्यः । तदवभासस्यैव प्रमाणत्वात् । अन्यथा वस्तुमात्रस्यासत्त्वापत्तेरित्याशयेनाह **न हीति** । ननु निर्बाधकावभासस्य वस्तुसत्त्वसाधकत्वेऽपि न सबाधकस्य प्रकृतावभासस्य तथात्वमित्यतः प्रकृतेऽपि न तादृशबाधकमस्ती-त्याशयेन द्वितीयं निराह **न हीति** । प्रतिभासस्य विषयसत्त्वप्रयोजकत्वं वदता नास्त्यत्र रजतमिति प्रत्ययविषयोऽप्यङ्गीक्रियत एव । न च विरोधो विषयभेदादित्याह **सत्यमिति** । ननु न विषयभेदः । इदं रजतमिति प्रतीत्या पुरत एव रजतसत्त्वस्य विषयीकरणादित्याशङ्कते **प्रतीत्योरिति** । स्यादेतदेवं यदि नास्त्यत्र रजतमित्यस्य पुरतस्तत्सत्त्वाभावविषयकत्ववदिदंरजतमित्यस्य पुरतस्तत्सत्त्वविषयकत्वं स्यात् । न चैवम् । रजतमिदमिति द्वे विज्ञाने इत्यादिना ज्ञानद्वित्वस्योपपादयिष्यमाणत्वेन तस्य रजतस्वरूपमात्रविषयकत्वात् । तथा च विषयभेदान्न विरोध इत्याशयेनाह **यथेति** ।

**वा०२०— पशुरिति** । मूर्ख इत्यर्थः । अजेर्व्यघञपोरिति सूत्रभाष्ये प्राप्तिज्ञो देवानांप्रिय इत्युक्तस्य विवरणरूपकैयटे च देवशब्दो मूर्खवाची । मूर्खाणां च प्रियो मूर्ख एवेत्युक्तेः । 'अथ ह योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव९ स देवानाम्' इत्यव्याकृतब्राह्मणे बृहदारण्यके उक्तस्य व्याख्याने भाष्ये कृतं पशुवदीरितः 'देवानां पशुवच्चासौ देवान्यो जपति ज्ञानात्तस्मात्सुबहुगोरूपे देवानां तत्त्ववेदिनि । मनुष्याणां पशुर्हि सः । सम्यग् ज्ञानी तु देवानां पशुरित्यभिधीयते । विष्णुज्ञानी हि विष्णुप्रियः अतो देवानामपि स प्रियः इति भावबोधे च । तत्त्ववि. . . . .तत्रोक्तो नरगौश्चाप्यतत्त्ववित् । तस्माद्देवास्तत्त्वविदे श्रियं कुर्वन्त्यतन्द्रिताश्चे'ति प्रातिपदिकं तु भिन्नविषयमिति न दोषः ।

**स०व्र०**— रजतावभासस्य रजतविषयकत्वे असता तेन सन्निकर्षायोगात्सत्त्वमावश्यकमिति शङ्कते **ननु रजतावभासस्येति** । परिहरति **कथं न भवितव्यमिति** । रजतस्य पुरोदेशे अभावेऽपि विप्रकृष्टेन संयोगादिप्रत्यासत्त्यनुपपत्तावपि संस्काररूपायास्तस्याः सत्त्वाद्विषयत्वोपपत्तिरिति भावः । **यथा न विरोध इति** । भ्रमकाले पुरोवर्तिग्रहणागृहीतभेदं अन्यत्र विद्यमानं रजतस्मरणम् । बाधकाले च पुरोदेशे विद्यमानरजताभावानुवादः । न रजततदभावप्रतीत्योर्विरोध इति वक्ष्यमाणत्वादित्यर्थः । यदि हि पुरोदेश एव रजतज्ञानं तदा परं विरोधः स्यान्नैवमिति भावः ।

**विठ्ठ०**— तृतीयलक्षणमाशङ्क्य निराकरोति **यत्सन्निकृष्टेति** । **आकाशादिविषयतापातादिति** । तथा चाकाशादौ अलक्ष्ये विद्यमानत्वादतिव्याप्तमिति भावः । अव्याप्तिमप्याह **प्रत्यभिज्ञा चेति** । अव्याप्त्यन्तरमाह **न च वाक्यमिति** । **न सन्निकृष्यते इति** । संयोगसमवाययोरसंभवादिति भावः । अतिव्याप्तिमप्याह **आकाशादीति** । वाक्यस्य शब्दत्वेन आकाशसमवेतत्वादिति भावः । आदिपदेन श्रोत्रग्रहणं तस्याकाशात्मकत्वेऽपि इन्द्रियतया पृथग्ग्रहणोपपत्तेः । यत् प्रतिभासं यदुल्लेखि । **देवानां प्रिय इति** । अनुभवविरुद्धभाषिततया अतिमन्दमतित्वात् पशुप्राय इत्यर्थः । षष्ठ्या आक्रोश इत्यत्र देवानां प्रिय इति वक्तव्यमिति वार्तिकानुशासनात् अलुक्समासः । **अतिप्रसङ्ग इति** । घटावभासकमपि ज्ञानं पटावलम्बनं स्यादित्यतिप्रसङ्ग इत्यर्थः । शुक्तिकायां इदंरजतमिति ज्ञानस्य शुक्तिकावलम्बनत्वाभावे रजतावलम्बनत्वे रजतस्य सत्यत्वं स्यादिति शङ्कते **नन्विति** । रजतज्ञानस्य स्मरणात्मकत्वेन सत्यरजतविषयकत्वादिष्टापत्तिरित्याशयेनोत्तरमाह **कथमिति** । भवितव्यमेवेत्यर्थः । तदुपपादयति **न हीति** । संप्रतिपन्नस्थले रजतावभासस्यास्तु तत्सत्यतास्वीकारनिमित्तत्वं मास्तु शुक्तिकायां रजतावभासस्येत्यत आह **न ह्यन्यतरेति** । पक्षपातकारणमाशङ्कते **नास्त्यत्रेति** । यथा प्रतीयते तथा स्वीक्रियत एवेति समाधत्ते **सत्यमिति** । पुरत इत्यनेन रजताभावाङ्गीकारेऽपि न मम भीतिरिति सूचयति । तर्ह्यस्त्यत्र रजतमिति पूर्वोत्तरप्रतीत्योर्विरोधः उभयोरपि यथार्थत्वाङ्गीकारादिति शङ्कते **प्रतीत्योरिति** । **वक्ष्यमाणत्वादिति** । भ्रमकाले इदमिति ग्रहणात् अगृहीतविवेकं रजतत्वस्मरणं बाधकाले च पुरोदेशे रजताभावानुभव इति न रजततदभावयोर्विरोध इति वक्ष्यमाणत्वादिति भावः ।

**चषकः**— **यत्सन्निकृष्टेति** । स्वकरणानुयोगिकसन्निकर्षप्रतियोगित्वं स्वनिरूपितविषयत्वमित्यर्थः । **आकाशादीति** । रूपादिज्ञानोत्पादकेन चक्षुरादिना गगनादेर्विभुतया संयुक्तत्वादिति भावः । **तत्तेति** । प्रत्यभिज्ञोत्पादकेन करणेन अतीतायाः तद्देशतत्कालसंबन्धित्वरूपतत्तायाः सन्निकर्षाभावादिति भावः । वाक्यार्थे अव्याप्तिमाह **न हीति** । आकाशादावतिव्याप्तिं दर्शयति **आकाशादीति** । शब्दस्याकाशगुणत्वादिति भावः । आत्मन्यतिप्रसङ्गमभिदधाति **लिङ्गेति** । देवानां प्रिय इति समस्तम् । अलुक्प्रकरणे षष्ठ्या आक्रोश इति सूत्रे देवानां प्रिय इति वक्तव्यमिति कात्यायनवचनात् । **अतिप्रसङ्ग इति** । घटाद्यवभासकस्यापि पटाद्यालम्बनताऽऽपत्तेरिति भावः । **कथमिति** । गुरूणां मते रजतज्ञानस्य स्मृतिरूपतयाऽवास्तवरजतविषयकत्वाभावादिति भावः । **यथा न विरोध इति** । रजतस्मृतेः पुरोदेशवृत्तित्वानवगाहितयाऽभावांशे तद्वृत्तित्वावगाहिबाधज्ञानस्य न विरोध इत्यर्थः । ननु तर्हीत्यादिग्रन्थेनाभिधास्यमानत्वादित्यर्थः ।





**गूढ०— प्रत्यभिज्ञा चेति** । यद्यपि तत्रांशे ज्ञानरूपसन्निकर्षसद्भावात्तत्तासन्निकृष्टकरणजन्यत्वमस्त्येव । तथापि संयोगसमवाययोरभावाभिप्रायेण तथोक्तमिति ज्ञेयम् । **न च वाक्यमिति** । अत्रापि वाक्यगतपदवाच्यनिष्ठत्वरूपः सन्निकर्षो वाक्यस्य वाक्यार्थेन सहास्ति । तथापि संयोगाद्यभावाभिप्रायेणैव तथोक्तम् **आकाशादीति** । वाक्यस्य शब्दात्मकत्वेनाकाशेन सह समवायरूपसन्निकर्षसत्त्वेन वाक्यजनितवाक्यार्थज्ञाने आकाशस्य विषयत्वं स्यादिति भावः । **लिङ्गज्ञानाच्चेति** । अत्रापि तद्व्याप्यलिङ्गविषयत्वरूपसन्निकर्षसत्त्वेऽपि संयोगाद्यभावाभिप्रायेण तथोक्तम् । **यत्प्रतिभासमिति** । यदर्थप्रतिभासरूपमित्यर्थः । **अवभासत इतीति** । रजतज्ञानस्य शुक्तिविषयत्वासंभवादिति भावः । **अतिप्रसङ्ग इति** । घटज्ञानस्यापि पटाद्यालम्बनत्वरूपातिप्रसङ्गः स्यादित्यर्थः । रजतावभासस्य रजतविषयकत्वेऽनुपपत्तिं शङ्कते **नन्विति** । रजतावभासस्य प्रत्यक्षावभासत्वात्प्रत्यक्षावभासे च विषयस्य कारणत्वात्तत्र रजताभावे प्रत्यक्षरजतावभास एव न स्यादिति भावः । नन्वान्तररजतावभासेन रजतसत्त्वमङ्गीक्रियते । तेन तु नेत्यत आह **न हीति** । **पुरत इति** । पुरोवर्तिनीत्यर्थः । तथाच पुरोवर्तिनि रजताभावस्य देशान्तरे च रजतस्य च स्वीकारान्न विरोध इत्यर्थः । एतदेव विशदयति **प्रतीत्योरिति** । इदं रजतं नात्र रजतमिति प्रतीत्योरित्यर्थः । **वक्ष्यमाणत्वादिति** । भेदाग्रहप्रसञ्जितेत्यादिना वक्ष्यमाणत्वादित्यर्थः ।

**प्रदीपः— रूपादीति** । सन्निकर्षमात्रविवक्षया दूषणोपन्यासः श्लाघनीयप्रज्ञ इत्यपहसन् देवानां प्रियः पशुः । अनुभवविरुद्धाभिधानात् । **किञ्चेति** । इदं रजतमिति पुरोवर्तिरजतविषयज्ञानस्याप्यविषयत्वं स्यादित्यर्थः । **नन्विति** । एकज्ञानत्वं मत्वोक्तं ज्ञानद्वयमेतदित्यभिप्रेत्याह **कथं नेति** ।

**३३२ सु०— न चान्यथाख्यातिजनने कारणं पश्यामः । न च चक्षुरादिकमेव कारणम् । तस्य समीचीनज्ञानकरणतावधारणात् । न खलु जरामरणविध्वंसहेतुर्जातु सुधा तद्धेतुरपि भवति । कारणैक्ये कार्य(भेद)स्याकस्मिकत्वप्रसङ्गात् । न चादृष्टभेदात्कार्यभेदः । तस्य कार्यभेदनिश्चयोत्तरकालं निश्चेयत्वात् । कार्य(भेद)स्य च विप्रतिपन्नत्वात् । दोषसहकृतादिन्द्रियादेवान्यथाज्ञानजननमित्यप्यसत् । दोषा हि कारणानामौत्सर्गिककार्यजननसामर्थ्यं निघ्नन्ति । न तु विपरीतकार्यजननसामर्थ्यमादधति । न खलु दुष्टं कुटजबीजं वटं जनयति । किं नाम न जनयत्येव कुटजांकुरम् । न च वक्तव्यं दावदहनदग्धवेत्रबीजानां कदलीकाण्डजननसामर्थ्यमुपलब्धमिति । पाकेन द्रव्यान्तरोत्पत्तेस्तेषामबीजत्वात् ।**

**परि०— जात्विति** । कदाऽपीत्यर्थः । **कार्यस्य चेति** । अन्यथाख्यातिशब्दितभ्रमरूपकार्यस्य चेत्यर्थः । कार्यभेदस्य चेतिपाठे भ्रमप्रमारूपकार्यभेदस्य चेत्यर्थः । कुटजबीजं गिरिमल्लिकाबीजम् । **दावदहनदग्धेति** । वनवह्निदग्धेत्यर्थः । इति न च वक्तव्यमित्यन्वयः ।

**यादु०— तद्धेतुरपीति** । जरामरणहेतुरपीत्यर्थः । **कार्यभेदस्येति** । कार्यवैलक्षण्यस्येत्यर्थः । **विप्रतिपन्नत्वादिति** । भ्रमरूपविलक्षणकार्यस्याधुनाऽप्यसिद्धत्वादिति भावः । **दावदहनेति** । तथाच दोषाणामपि दावदहनवच्चक्षुरादिकरणसहकारित्वाद्विपरीतकार्यजननसामर्थ्याऽऽधायकत्वं युक्तमिति भावः । **पाकेन द्रव्यान्तरेति** । पाकेन वेत्रबीजानामापरमाण्वन्तभङ्गे पुनर्द्व्यणुकादिक्रमेण तेभ्यः परमाणुभ्यः कदलीकाण्डजननाङ्गीकारेण वेत्रबीजानां कदलीकाण्डजनकत्वाभावादित्यर्थः ।

**वं०प०—** नन्वेकस्यैव चक्षुरादेः समीचीनासमीचीनज्ञानद्वयजनकत्वमस्त्वित्यत आह **कारणैक्य इति** । **कुटजेति** । काजवारेत्यपभ्रष्टभाषा । **पाकेनेति** । दावदहनरूपतेजःसंयोगाख्यपाकेन वेत्रबीजनाशेन कदलीकाण्ड-बीजरूपद्रव्यान्तरोत्पत्तेस्तेषां वेत्रबीजानां कदलीकाण्डबीजत्वाभावादित्यर्थः ।

**आनन्दः—** कारणाभावेनाप्यन्यथाख्यातिं दूषयति **न चेति** । ननु समीचीनज्ञानकरणस्याप्यसमीचीन-ज्ञानकारणत्वमस्त्वित्यत्राह **न खल्विति** । अन्यथा सुधाया जरादावपि कारणत्वं स्यादित्यर्थः । **कारणैक्ये इति** । समीचीनासमीचीनज्ञानकारणैक्ये कार्यभेदे आकस्मिकः कारणाप्रयोज्य एव स्यादित्यर्थः । **कार्यभेद इति** । कार्यभेदे निश्चिते अदृष्टादिरूपकारणभेदः तत्सिद्धौ च ततः कार्यभेदसिद्धिरिति अन्योन्याश्रय इत्यर्थः । ननु कार्यं निश्चितमेवेत्यत्राह **कार्यस्येति** । ननु केवलस्य चक्षुरादिः समीचीनज्ञानकारणत्वेऽपि दोषसहकृतस्यासमीचीन-ज्ञानकारणत्वं स्यादित्याशङ्कते **दोषेति** । ननु दोषाणां विपरीतकार्यजनकत्वमपि दृष्टमित्याशङ्क्य निषेधति **न च वक्तव्यमिति** । **अबीजत्वादिति** । वेत्रबीजत्वाभावादित्यर्थः ।

**कं०रा०— तेषां** दावदहनदग्धानाम् । **शुक्तित्वसामान्यविशेषस्य** शुक्तित्वरूपजातिविशेषस्य ।

**श्रीनिधि०— तद्धेतुरपीति** । जरामरणहेतुरपीत्यर्थः । कुटजबीजमिति 'जया च कुटजः शक्रो वत्सको गिरिमल्लिके'त्यमरः । कोडशिगे कोडश इति कर्णाटकान्ध्रभाषयोः व्यवहारः । **तेषां** कदलीकाण्डजनकानाम् ।

**वा०चं०—** एवं स्वरूपनिर्वचनेनान्यथाख्यातिं निराकृत्य हेत्वसंभवेनापि तां निराकरोति **न चेति** । यद्वा ननु विशिष्टज्ञानसामग्रीबलेन तत्सिद्धेर्न ज्ञानद्वित्वकल्पनया विरोधपरिहार उपपन्न इत्यतस्तत्सामग्र्यभावमेवाह **न चेति** । समीचीनज्ञानहेतुतया क्लृप्तत्वमेवकारार्थः । **समीचीनेति** । विरोधस्फोरणाय चक्षुरादि नान्यथाख्यातिजनकम् । तद्विरोधिज्ञानसामग्रीत्वात् । वादिप्रसिद्ध्या च साध्यप्रसिद्धिरिति विवक्षितानुमाने या यद्विरोधिसामग्री न सा तद्धेतुरिति सामान्यव्याप्तौ दृष्टान्तमाह **न खल्विति** । अप्रयोजकतापरिहाराय कार्यवैचित्र्यानुपपत्तिरूपं बाधकमाह **कारणेति** । अन्यथोपपत्तिं शङ्कते **न चेति** । दोषाणां कार्यसहकारित्वमसिद्धमित्याह **दोषा हीति** । तेषामपि संस्कारादिव-त्कार्यान्तरजनकेन्द्रियादिसहकारित्वे दोषत्वेन प्रसिद्धिर्न स्यादिति हिशब्देनाह । ननु तेन तत्कार्याजनने तत्सामर्थ्यस्यैवाभावान्न प्रतिबन्धककल्पनेत्यतो दोषाभावदशायां तेन तज्जातीयेन वा कार्योत्पादेन तत्सामर्थ्यस्य सिद्धत्वाद्युक्ता प्रतिबन्धककल्पनेत्याशयेनौत्सर्गिकेति विशेषणम् । दोषाः कार्यजननसामर्थ्यनाशका न विपरीता-





कार्यजननसामर्थ्याधायकाश्च दोषत्वादित्यनुमानयोर्दृष्टान्तं सूचयन् अन्यथा कुटजबीजस्य वटजनकत्वं स्यादित्यादिविपक्षबाधकं च दर्शयति **न खल्विति**। द्वितीयानुमाने व्यभिचारमाशङ्क्य निषेधति **न चेति**।

**वा०र०**— न च चक्षुरादिकमेवेति वाक्यगतावधारणव्याख्यानं **समीचीनेत्यादि**। प्रतीकधारणं तु सामग्र्यभावमेवाहेत्यनेन अवतारस्य सामान्यतः कृतत्वात्पूर्वं न चेतीति प्रतीकधारणेनैव संपन्नमिति न पुरः कृतमिति ज्ञेयम्। न चान्यथाख्यातीत्येतद्वाक्यस्य न चेतीति प्रतीकोपादानानन्तरमथ पुनर्न च चक्षुरादीत्येतद्वाक्यस्य न चेतीति प्रतीकोपादानानन्तरं समीचीनेति पाठस्तु स्वरस इत्याहुः।

**स०व्र०**— कारणमपि दूषयति **न चेति**। नाऽपीत्यर्थः।

**विठ्ठ०**— अन्यथाख्यातिं हेत्वभावेन दूषयति **न च अन्यथाख्यातीति**। **जातु** कदाचिदपि। **तद्धेतुः** जरामरणहेतुः। **विप्रतिपन्नत्वादिति**। अन्यथाख्यातिरूपविलक्षणकार्यस्याप्रसिद्धेः। कार्यभेदे अदृष्टभेदः अदृष्टभेदे च कार्यभेदसिद्धिरिति अन्योन्याश्रय इति भावः। उष्टं उषप्लुषदाहेदग्धमित्यर्थः। कुटजं वनमल्लिका तस्य दावदहनस्य प्रायिकत्वात् ग्रहणम्। **पाकेनेति**। अग्निपाकेन वेत्रबीजानामापरमाण्वन्तभङ्गे पुनः तेभ्यः परमाणुभ्यः द्व्यणुकादिक्रमेण कदलीकाण्डजननाङ्गीकारेण वेत्रबीजानां तदजनकत्वादिति भावः।

**चषक**:— ननु रजतस्मृतिशुक्तिचक्षुःसन्निकर्षभेदाग्रहदोषादिघटितसामग्र्येदमंशधर्मिकरजतप्रकारकज्ञानस्यैवोदयेन ज्ञानद्वित्वोपगत्या विरोधसमाहितिर्न सङ्गच्छत इत्याशङ्कायां तादृशीं सामग्रीमेव प्रत्याख्याति **न चेति**। दोषपक्षकनैसर्गिककार्यजनकसामर्थ्यविघातकत्वविपरीतकार्यजननसामर्थ्याधायकत्वाभावसाध्यकदोषत्वहेतुकदुष्टकुटजबीजनिदर्शनकमनुमानद्वयमभिप्रेत्याद्यानुमानेऽप्रयोजकताशङ्कानिरासाय प्रकृतसाध्याभावापादककप्रकृतहेत्वभावापाद्यकदुष्टकुटजबीजगृहीततदुभयव्याप्तिकापत्तिं दर्शयति **दोषा हीति**। **औत्सर्गिकिति**। नैसर्गिकित्यर्थः। **कुटजबीजं** गिरिमल्लिकाबीजम्। द्वितीयानुमानेऽनैकान्त्यमाशङ्कते **दावेति**। समाधत्ते **पाकेनेति**। पीलुपाकप्रक्रियाऽऽश्रयणादिति भावः।

**गूढ०**— कारणाभावेनाप्यन्यथाख्यातिं दूषयति **न चेति**। ननु समीचीनज्ञानकारणस्याप्यसमीचीनज्ञानकारणत्वमस्त्वित्यत्राह **न खल्विति**। अन्यथा सुधाया जरादावपि कारणत्वं स्यादिति भावः। **कारणैक्य इति**। समीचीनासमीचीनज्ञानकारणैक्ये कार्यभेदे आकस्मिकः कारणाप्रयोज्य एव स्यादित्यर्थः। **कार्यभेद इति**। कार्यभेदे निश्चितेऽदृष्टादिरूपकारणभेदस्तत्सिद्धौ च ततः कार्यभेदसिद्धिरित्यन्योन्याश्रय इति भावः। ननु कार्यं निश्चितमेवेत्यत्राह **कार्यस्येति**। ननु केवलस्य चक्षुरादेः समीचीनज्ञानकारणत्वेऽपि दोषसहकृतस्यासमीचीनज्ञानकारणत्वं स्यादित्याशङ्कते **दोषेति**। ननु दोषाणां विपरीतकार्यजनकत्वमपि दृष्टमित्याशङ्क्य निषेधति **न च वक्तव्यमिति**। **अबीजत्वादिति**। वेत्रबीजत्वाभावादित्यर्थः।

**प्रदीपः**— एवमारोपितमर्थं प्रतिषिध्य मिथ्याज्ञानमपि विभजते **न चान्यथेति**। **न च वक्तव्यमिति**। दग्धानां वेत्रबीजत्वाभावात् न विपरीतकार्यकारित्वमित्यर्थः।

३३३ **सु०— किञ्च प्रदर्शिताकारव्यभिचारे प्रत्ययस्य सर्वत्र व्यभिचारशङ्का दुर्वारा स्यात्। तथा च कथं बाह्यार्थनिह्नवं निराकुर्मः। तथा हि ज्ञानमेव खलु सर्वत्र वस्तुव्यवस्थापकं नान्यत्। तच्चेत्क्वचिद् व्यभिचरति तदा तत्सर्वत्र शङ्कितव्यभिचारमेव। न च तच्छङ्का-पङ्कसङ्क्षालनक्षमं किञ्चिदन्यद्विज्ञानात्। तच्च सकलमपि शङ्काकलङ्कसङ्कोचितप्रभावं न प्रभवती-त्युक्तम्। ततश्च कुतो बाह्यार्थप्रत्याशा। न च वाच्यं यथा घटादेः पार्थिवस्य वह्निव्यभि-चारेऽपि न धूमस्यापि तद् व्यभिचारः शङ्क्यते एवमेकज्ञानस्यार्थव्यभिचारेऽपि न सर्वत्र व्यभिचारशङ्केति। वैषम्यात्। अस्ति हि तत्र पार्थिवत्वाविशेषेऽप्यव्यभिचारनिश्चयोपायो धूमत्वादिरेवावान्तरो विशेषः। न हि तत्र बाधकं किञ्चित्। तेनोपपद्यते तत्राश्वासः। प्रकृते तु न ज्ञानत्वावान्तरविशेषमनाश्वासनिरसनक्षममीक्षामहे। न च बाधकभावाभावरूपाद्विशेषाद् व्यवस्थेति वाच्यम्। बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वात्। न खलु बाधकस्य किमपि शृङ्गमस्ति। बाधकाभावश्चानुपसञ्जातबाधभ्रमे समानः। संवादकभावाभावाभ्यां विशेष इति चेन्न। उक्तोत्तरत्वात्। संवादकमपि ज्ञानमेवेति तदपि कथं संशयास्पदं न स्यात्। तत्रापि संवादकान्तरान्वेषणेऽनवस्था कुतो न भवेत्। अङ्गीकृतश्च परेण धारावाहिकभ्रमेऽन्योन्य-संवादः। एतेन ज्ञानजन्यव्यवहारविसंवादाविसंवादलक्षणोऽपि विशेषः परास्तो वेदितव्यः। तद्विशेषग्राहिण्यपि विश्वासकारणाभावात्।**

**बिन्दुः— बाह्यार्थनिन्हवमिति**। आन्तरपदार्थे सुखदुःखादौ कदापि भ्रमाभावस्य तूभयसिद्धत्वादिति भावः। यद्वा बाह्यैः शून्यवादिभिः स्वीकृतो योऽर्थनिन्हवस्तमित्यर्थः। अथवा विज्ञानवादिभिर्विज्ञानमान्तरपदार्थ एव तत्त्वं अर्थस्तु नास्त्येवेत्यातिष्ठद्भिः कृतो यो बाह्यपदार्थापलाप-स्तमित्यर्थः। तैरपि इदं रजतमिति विपर्ययं दृष्टान्तीकृत्य समीचीनज्ञानस्याप्यर्थशून्यतासाधनादिति भावः। **ज्ञानजन्यव्यवहारविषयसंवादेति**। दूरस्थस्य जायमानं यत् जलादिज्ञानं तेन सन्दिग्ध-प्रामाण्यकेनापि जन्यो यो व्यवहारः प्रवृत्यादिः तदुत्तरकालं समीपगतस्य जातो यो विषयसंवादः जलत्वव्याप्यसांसिद्धिकद्रवत्वशीतस्पर्शवत्वादिविशेषदर्शनत्वरूपो विशेष इत्यर्थः। व्यवहारोत्तरकालीनो विषयसंवाद इति। विगृह्य मध्यमपदलोपेन समासो द्रष्टव्यः।

**परि०**— एवं 'साकारवादादसतो न भानात्संविद्विरोधादथ हेत्वभावादि'त्यन्यथाख्यात्यनुपपत्तौ परोक्तहेतून् विवृत्य ज्ञानस्य व्यभिचारित्वे विश्वासः किंनिबन्धन इति परोक्तं व्यनक्ति **किञ्च प्रदर्शितेति**।





बाह्यार्थनिह्नवं बाह्यार्थापलापम् । आन्तरं ज्ञानमेव घटादिबाह्यार्थात्मनाऽवभासते । वस्तुतो बाह्यभूतोऽर्थो नास्तीति बौद्धैरुच्यमाने बाह्यार्थापलापमित्यर्थः । **तदिति** । ज्ञानमित्यर्थः । **न प्रभवतीति** । शङ्कानिवर्तने अर्थसत्त्वनिश्चये वा न क्षमत इत्युक्तमित्यर्थः । प्रत्याशा दुराशा । अन्ते अन्ततः । **शङ्केतीति** । न च वाच्यमिति पूर्वेणान्वयः । बाधकाभावोऽपि नाश्वासहेतुरित्याह **बाधकाभावश्चेति** । उत्तरोत्तरत्वादित्येतद्व्यनक्ति **संवादकमपीति** । **परेणेति** । अन्यथाख्यातिवादिना । **अन्यथाख्यातिवादिनां** भ्रमवादिनामित्यर्थः । तथात्वे भ्रान्तित्वाभावाऽऽपत्तेरिति भावः ।

**यादु०— बाह्यार्थनिह्नवमिति** । बाह्यार्थापलापमित्यर्थः । विज्ञानवादिनो हि बाह्यमर्थमपलपन्ति । तन्निराकरणं च प्रत्ययेनैव क्रियते । स चेद्व्यभिचारकलङ्कितः कथं तर्हि तन्निराकरणे क्षमः स्यादिति भावः । एतदुपपादयति **तथाहीति** । उत्तरोत्तरत्वादित्युक्तमेव विशदयति **संवादकमपीति** । स्वमते विभ्रमाभावादाह **परेणेति** । **ज्ञानजन्यव्यवहारेति** । अत्र व्यवहारपदेन प्रवृत्तिरेव विवक्षितेति ज्ञातव्यम् । **तद्विशेषग्राहिण्यपीति** । तस्यापि ज्ञानत्वादिति भावः । तदुक्तम् । 'अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन' इति ।

**वं०प०— वह्निव्यभिचारेऽपीति** । यत्र पटस्तत्र वह्निरिति व्याप्तेस्तन्तुषु व्यभिचारित्वादिति भावः । **धूमस्यापीति** । पार्थिवत्वाविशेषादित्यर्थः । अवान्तरविशेषः पृथिवीत्वावान्तरजातिरूपः । **तद्विशेषग्राहिण्यपीति** । अविसंवादिप्रवृत्तिजनकमिदं ज्ञानमिति ग्राहिण्यपि ज्ञान इत्यर्थः । पुरोवर्तिशुक्तिशकलम् ।

**आनन्दः—** अन्यथाख्यातिस्वीकारे धियामनाश्वासश्च स्यादित्याह **किञ्चेति** । तदेव विशदयति **तथा हीति** । ननु च बाध एव शङ्कापङ्कसङ्क्षालनक्षम इत्यत आह **तच्चेति** । तथापि बाधे कथं शङ्केत्यत आह **न खल्विति** । ननु बाधस्य न भ्रमत्वं बाधकाभावादित्यत आह **बाधकाभाव इति** । तथाच तस्यापि भ्रमत्वं न स्यादिति भावः । **विशेषः** भ्रमबाधकज्ञानयोः । उत्तरोत्तरत्वमेव विशदयति **संवादकमपीति** । **एतेनेति** । ज्ञानजन्यव्यवहारे यत्र विसंवादस्तत्र भ्रमत्वं यत्राविसंवादस्तत्र प्रमात्वमिति विशेषोऽपि एतेनैव दूषणेन निरस्त इत्यर्थः । अतिदेशार्थमाह **तद्विशेषेति** ।

**श्रीनिधि०— व्यभिचारे** विसंवादे । **बाह्यार्थनिह्नवम्** । बाह्यार्थापह्नवम् । बाह्यकृतम् । **न प्रभवति** । न समर्थं भवति । उक्तमिति किञ्च प्रदर्शिताकारव्यभिचार इत्यादिनेति भावः । **ज्ञानत्वावान्तरविशेषमिति** । प्रमात्वव्याप्यमिति भावः । **संवादभावाभावाभ्यामिति** । अनुपसञ्जातबाधभ्रमे संवादो नास्तीति भावः । **अङ्गीकृतश्चेति** । तथा च संवादो अप्रयोजक इति भावः ।

**वा०चं०**— नन्विदं रजतमित्यस्य विशिष्टविषयैकज्ञानत्वस्यानुभवबलेन सिद्धेः कार्यान्यथाऽनुपपत्त्या दोषाणां विपरीतकार्यजनकत्वं क्वचित्कल्पनीयमेवेत्यतः सति बाधके साधकमात्रेणार्थासिद्धेस्तदन्यथासिद्धिरेवो चितेत्याशयेनाह **किं चेति** । सर्वत्र व्यभिचारशङ्कायामपि न नः काचित्क्षतिरित्यतः साधकान्तराभावाज्ज्ञानस्याप्यसाधकत्वे ज्ञानातिरिक्तार्थासिद्ध्या स्वरूपत्वेन प्रतीयमानार्थाकारस्यालीकत्वानुपपत्त्या धीरेव तदाकारेति बाह्यार्थापलापिविज्ञानवादिनः प्रति मूकता स्यादित्याह **तथा चेति** । ननु ज्ञानस्यार्थव्यभिचारे तेनार्थसिद्धिरेव न स्यान्न तु सर्वथाऽर्थासिद्धिः । प्रमेयत्वस्य वह्निव्यभिचारेऽपि धूमेन तत्सिद्धिदर्शनात् । ज्ञानस्यैव तत्साधकत्वेऽपि व्यभिचारशङ्कानिवर्तकेन तन्निवृत्तौ ज्ञानादर्थसिद्धिः सुलभैवेत्यत आह **तथा हीति** । **उक्तमिति** । न हि स्वप्रतिबन्धकनिवर्तकं स्वयमेवेति भावः । ननु सति विशेषदर्शने साधारणधर्मदर्शनमात्रेण न व्यभिचारशङ्काऽतिप्रसङ्गादिति शङ्कते **न च वाच्यमिति** । अतिप्रसङ्गविषये विशेषदर्शनेऽपि न प्रकृते तदित्याह **वैषम्यादिति** । ननु प्रकृतविशेषवदयमप्यप्रयोजक इत्यतो वक्ष्यमाणबाधकवशेन प्रकृतविशेषानुपपत्तावपि नात्र काचिदनुपपत्तिरित्याह **न हीति** । नन्वत्रापि प्रमात्वादिरेव विशेष इत्यतोऽर्थाव्यभिचारिज्ञानत्वस्यैव प्रमात्वरूपत्वादर्थव्यभिचारशङ्कया तदनिश्चये उद्भाविते तेनैव शङ्कानिरासोक्तिरनुपपन्नेत्याशयेनोक्तमनाश्वासनिरसनदक्षमिति । ननु ज्ञानत्वावान्तरविशेष एव वक्तव्य इति न नियमः । शङ्कानिरासस्तु विशेषान्तरादपीत्याशयेन विशेषान्तरमाशङ्क्य निषेधति **न चेति** । ननु बाधकत्वादेव न तत्र शङ्केत्यत आह **न खल्विति** । एवं भ्रमत्वसाधकस्य बाधकवत्त्वहेतोरप्रयोजकत्वमुक्त्वा प्रमात्वसाधकस्य बाधकाभाववत्वहेतोर्व्यभिचारमाह **बाधकेति** । न हि संवादकस्य शृङ्गमस्तीत्युक्तोपपादनप्रकारस्यात्राप्यनुसन्धेयत्वं सूचयति **उक्तेति** । अधिकं वक्तुं सामान्यत उक्तं स्पष्टयति **संवादकमपीति** । संवादवत्त्वं व्यभिचारं च त्वद्रीत्येत्याह **अङ्गीकृतश्चेति** । संवादविसंवादौ नार्थतोऽपि तु फलतः । एवं च संवादादेरर्थप्राप्त्यादिरूपत्वेन संवादकमपि ज्ञानमेवेत्युक्तदूषणाप्राप्तिरिति विशेषशङ्कामतिदेशेन दूषयति **एतेनेति**। तत्तद्दूषणाप्रसक्तावपि तन्न्यायेन दूषणमनिवार्यमेवेत्याशयेनातिदेशार्थमाह **तदिति** ।

**वा०र०**— **तेनार्थसिद्धिरेव न स्यादिति** । तेन या अर्थसिद्धिस्तत्करणिकार्थसिद्धिरिति यावत् । सैव न स्यात् तेनैव करणेन या अर्थसिद्धिः सा न स्यात् । करणान्तरेण तत्सिद्धिस्तु स्यादेवेति भावः । साधारणधर्मदर्शनमात्रेण ज्ञानत्वरूपसाधारणधर्मेणेत्यर्थः । **प्रकृतविशेषवदिति** । प्रमात्वादिरूपज्ञानत्वावान्तरविशेषवदित्यर्थः । **वक्ष्यमाणेति** । न च बाधकभावाभावरूपादित्यादिनेति शेषः । **इत्युक्तोपपादनप्रकारेति** । इत्येवंरूपो यः उक्तोपपादनस्य प्रकार इत्यर्थः ।

**स०व्र०**— सति बाधके ज्ञानस्यार्थव्यभिचारित्वमित्यंशं तस्य बाधकत्वानुपपत्त्या प्रदूष्य बाधकाभावेऽर्थाव्यभिचारित्वमित्यंशं दूषयति **बाधकाभावश्चेति** । उक्तोत्तरत्वादित्युक्तमेव प्रपञ्चयति **संवादकमपीति** । सति संवादे ज्ञानस्यार्थाव्यभिचारित्वमित्यत्र व्यभिचारमाह **अङ्गीकृतश्चेति** ।





**विठ्ठ०**— धियामनाश्वसनीयत्वाच्च नान्यथाख्यातिरङ्गीकारार्हेत्याह **किञ्च प्रदर्शिताकारेति** । यदुल्लिखिताकारे तदुल्लिखिताकारस्य रजतादेस्तत्रासत्त्वेन ज्ञानस्योल्लिखितार्थव्यभिचारत्व इत्यर्थः । **बाह्यार्थनिह्नवमिति** । विज्ञानवादिनो हि आन्तरज्ञानव्यतिरेकेण बाह्यार्थाभावं मन्यन्ते तन्निराकरणं बाह्यार्थोल्लिखिततत्प्रत्ययेनैव कर्तव्यं स चेद्व्यभिचारदोषकलुषितः तर्हि कथं तन्मतं निराकुर्मः प्रत्ययस्य अविश्वसनीयतया तत्राक्षमत्वात् उपायान्तरस्याप्यदर्शनादिति भावः । एतदुपपादयति **तथा हीति** । भवतु यत्किञ्चिज्ज्ञानं शङ्कापरिहारमित्यत आह **तच्च सकलमपीति** । **न ज्ञानत्वावान्तरविशेषमिति** । ज्ञानत्वव्याप्यजात्यनङ्गीकारात् अङ्गीकारेऽपि तत्राश्वासकारणानिरूपणात् परमते विज्ञानस्याखण्डत्वादिति भावः । पूर्वप्रवृत्तज्ञानप्रसञ्जिताकारबाधकरूपत्वेन न तत्र शङ्केत्यत आह **न खल्विति** । बाधकं ज्ञानत्वमप्रयोजकमिति भावः । एवं बाधकभावस्याप्रयोजकत्वमुपपाद्य तदभावस्याप्युपपादयति **बाधकाभावश्चेति** । उक्तोत्तरत्वादित्युक्तं विशदयति **संवादकमपीति** । संवादकसद्भावोऽपि आश्वासकारणं नेत्याह **अङ्गीकृतश्चेति** । स्वमते विभ्रमाभावात् परेणेत्युक्तम् । **तद्विशेषग्राहिण्यपीति** । विसंवादादिलक्षणविशेषग्राहिणापि ज्ञानत्वाविशेषादिति भावः ।

**चषकः**— 'साकारवादादसतो न भानात्संविद्विरोधादथ हेत्वभावादि'ति प्राभाकराभिहितान्यथाख्यातिन्यक्कृतिहेतून्विशदीकृत्य 'धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्थे'ति । 'अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन' इति गुरूक्तबाधकानि स्फुटीकरोति **किं चेति** । निह्नवमपलापम् । आन्तरविज्ञानातिरेकेण बाह्यार्थस्यालीकतां मन्वाना विज्ञानवादिनो बाह्यार्थानपलपन्ति । प्रत्ययस्याप्रामाण्यशङ्कास्कन्दिततायां कथं तादृशप्रत्ययेन ते प्रत्याख्येया इति भावः । अथ वह्नित्वावच्छिन्ननिरूपितव्याप्यतावच्छेदकीभूतधूमत्वादिप्रतिसन्धानदशायां तद्व्याप्याव्याप्यसाधारणपार्थिवत्वादिप्रतिसंहितावपि तन्निरूपितव्याप्तितदभावकोटिकशङ्का यथा नोदेति तद्वत्प्रकृते प्रमाभ्रमोभयसाधारणज्ञानत्वादिप्रतिसन्धानेऽपि प्रमात्वव्याप्यतावच्छेदकीभूतविषयविसंवादविरहत्वावच्छिन्नस्य दर्शने कथं प्रमात्वतदभावकोटिकशङ्कोदीयादित्याशङ्कायां निदर्शने तत्समवधानेऽपि प्रकृते न तत्समवहितिरित्याह **न चेत्यादि** । **बाह्यैः** वेदप्रामाण्यानङ्गीकर्तृभिः ।

**गूढ०**— अन्यथाख्यातिस्वीकारे धियामनाश्वासश्च स्यादित्याह **किञ्चेति** । तदेव विशदयति **तथा हीति** । न च बाध एव शङ्कापङ्कसंक्षालनक्षम इत्यत आह **तच्चेति** । तथापि बाधे कथं शङ्केत्यत आह **न खल्विति** । ननु बाधस्य न भ्रमत्वं बाधकाभावादित्यत आह **बाधकाभाव इति** । तथाच तस्यापि भ्रमत्वं न स्यादिति भावः । **विशेषः** भ्रमबाधकज्ञानयोः । उक्तोत्तरत्वमेव विशदयति । **संवादकमपीति** । **एतेनेति** । ज्ञानजन्यव्यवहारे यत्र विसंवादस्तत्र भ्रमत्वं यत्राविसंवादस्तत्र प्रमात्वमिति विशेषोऽपि एतेनैव दूषणेन निरस्त इत्यर्थः । अतिदेशार्थमाह **तद्विशेषेति** ।





**३३४ सु०— अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यम् । न तावत्पुरोवर्तिनिष्ठ इतीष्टमन्यथाख्यातिवादिनाम् । बाधविरोधश्च तथा सति स्यात् । नापि देशान्तरवर्तीति वक्ष्यामः । ततश्च ज्ञानस्थ एवायमित्यापतितम् । तथा च जितं साकारविज्ञानवादिभिर्बौद्धैः ।**

**परि०— वक्ष्याम इति** । तार्किकाभिमतान्यथाख्यातिनिरासप्रस्तावे ।

**वं०प०— इष्टमिति** । अन्यथाख्यातिवादिभिस्तस्यान्यत्र सत्त्वाङ्गीकारादित्यर्थः । **बाधविरोधश्चेति** । नेदं रजतमिति पुरोवर्तिनिष्ठत्वाभावावगाहिबाधकप्रत्ययविरोधश्चेत्यर्थः । **वक्ष्याम इति** । न च विप्रकृष्टेन रजतेन सन्निकर्षोऽस्तीत्यनुपदमेव वक्ष्याम इत्यर्थः ।

**आनन्दः—** साकारवादापाताच्च नान्यथाख्यातिः स्वीकार्येत्याह **अपि चेति** । स हि पुरोवर्तिनिष्ठो वा देशान्तरवृत्तिर्वा ज्ञाननिष्ठ एव वा । नाद्य इत्याह **न तावदिति** । अपसिद्धान्तापातादिति भावः । **एवं सति** । पुरोवर्तिनिष्ठत्वे सति । द्वितीयं निराह **नापीति** । नान्त्य इत्याह **ततश्चेति** ।

**श्रीनिधि०— नापि देशान्तरवर्तीति** । देशान्तरवर्ती नानुभूयत इति वक्ष्याम इत्यर्थः । अन्यथा देशान्तरवर्तिनः स्मरणमित्यङ्गीकारविरोधः । सङ्ग्रहश्च 'साकारवादादसतो न भानात्संविद्विरोधादथ हेत्वभावात् । धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्थे'ति । अतो धीर्यथार्थेति संबन्धः ।

**वा०चं०—** ननु स्वतःप्रामाण्यवादिना प्रामाण्यग्राहके साक्षिणि साक्षित्वादिरूपविशेषस्य धूमत्वादेरिवानाश्वासनिरसनदक्षस्य स्वीकाराच्च तं प्रत्यनुपपत्तिरित्यत आह **अपि चेति** । रजताकारो बाह्य आन्तरो वा । आद्येऽपि पुरोवर्तिनिष्ठो देशान्तरनिष्ठो वेति विकल्पान्मनसि निधाय क्रमेण दूषयति **न तावदित्यादिना** ।

**वा०र०— क्रमेणेति** । आद्ये आद्यस्य निरासोऽन्यथाख्यातिवादिनां नेष्ट इति । **द्वितीयस्य नापि देशान्तरेति** । आन्तर इत्याद्यद्वितीयस्य ततश्चेतीति ज्ञेयम् ।

**स०व्र०— देशान्तरवर्तीति** । नैयायिकोक्तान्यथाख्यातिनिरासावसर इति शेषः ।

**विठ्ठ०— इष्टमन्यथाख्यातिवादिनामिति** । प्रतीतं रजतं देशान्तरे सदिति तैरङ्गीकृतत्वादिति भावः । **बाधविरोधश्चेति** । पुरोदेशे एव रजताभावग्रहणरूपबाधविरोधश्चेत्यर्थः । आपणादिवृत्तिरजताकार इति ब्रूम इत्यत आह **नापीति** । **वक्ष्याम इति** ।





**गूढ०**— साकारवादापाताच्च नान्यथाख्यातिः स्वीकार्येत्याह **अपि चेति** । स हि पुरोवर्तिनिष्ठो वा देशान्तरवृत्तिर्वा ज्ञाननिष्ठ एव वा । नाद्य इत्याह **न तावदिति** । अपसिद्धान्तापातादिति भावः । **एवं सतीति** । पुरोवर्तिनिष्ठत्वे सति । द्वितीयं निराह **नापीति**। नान्त्य इत्याह **ततश्चेति**।

**प्रदीपः**— ये बाह्यार्थम् अपलपन्ति तान्प्रत्यनुभवः प्रमाणीकरणीयः तस्य व्यभिचारशङ्कायां पदार्थसिद्धिर्न स्यात् विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदित्याह **अपि चेति** ।

**३३५ सु०— ननु तर्हीदं रजतमित्यादिप्रत्ययस्य का गतिः । उच्यते । रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात्तद्गतस्य शुक्तित्वसामान्यविशेषस्याग्रहणात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयति । सा च गृहीतग्रहणस्वभावाऽपि दोषवशाद् गृहीततत्तांऽशप्रमोषेण गृहीतिसरूपाऽवतिष्ठते । तथा च रजतस्मृतेः पुरोवृत्तिग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहणात् सन्निहितरजतज्ञानसारूप्येणेदंरजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । कुत एतदिति चेन्न । अन्यथाऽनुपपत्तेरुक्तत्वात् ।**

**बिन्दुः**— **गृहीतग्रहणस्वभावेति** । गृहीत इति ग्रहणं ज्ञानं तत् स्वभावः स्वरूपं यस्याः सेत्यर्थः । स देवदत्त इत्यादिस्मृतिर्हि देवदत्तं गृहीतत्वेन गृह्णाति । पूर्वानुभूतत्वस्यैव तत्तात्वादिति भावः । अत एव स देवदत्त इत्युक्त्वा मया पूर्वमनुभूत इति व्याकर्तारो भवन्ति । यद्यपि सिद्धान्ते अतीतकालसंबन्ध एव तत्ता स्थाने स्थास्यति तथाऽप्ययं ग्रन्थ एवं योज्यः । अन्यथा तत्तांशमोषेण गृहीतिसरूपेत्यसङ्गतं स्यात् । न हि तत्तांशमोषेऽपि देवदत्त इत्येव स्मरणेऽपि गृहीतग्रहणस्वभावत्वं हीयते देवदत्तस्यापि गृहीतत्वात् । न च यावद्गृहीतग्राहित्वं गृहीतग्रहणस्वभावत्वं, तथाच सिद्धान्ताभिमतातीतकालसंबन्धरूपायास्तत्तायाः अपि गृहीतत्वात्तद्ग्रहणे न गृहीतिसरूपत्वमुक्तमिति वाच्यम् । उष्णीषी दण्डी कुण्डली देवदत्त इत्यनुभूतवतोऽपि विशेषणानवगाहिनि स देवदत्त इति स्मरणगृहीतिसरूपतापत्तेः । अस्तु तर्हि तत्तानवगाहित्वमेव गृहीतिसरूपत्वम् । सैव तत्ताकेति विचार्यते । अस्तु सिद्धान्त्यभिमतेति चेत् । गृहीतग्रहणस्वभावापीत्यस्यासङ्गतत्वापत्तेः । गृहीतग्रहणस्वभावायास्तत्तांशप्रमोषेण गृहीतिरूपतां वदता हि गृहीतत्वमेव तत्तेत्यनुमतं भवतीति मत्कृतव्याख्याने न कोऽपि विरोधः । ननु तादृशगृहीतग्रहणस्वभावत्वं सोऽयं देवदत्त इत्यादि प्रत्यभिज्ञायां घटमहं जानामीत्याद्यनुव्यवसायेऽप्यस्तीति चेत् किं तावता । न हि वयं स्मृतेरिदं लक्षणमित्याचक्ष्महे । अन्यथा तवापि प्रत्यभिज्ञाविरोधसाम्यात् । गृहीतिः





अनुभवः संस्काराजन्यं ज्ञानमिति यावत् । **तत्स्वरूपा** तत्तानवगाहित्वेन सादृश्यमिति भावः । **अभेदव्यवहारं** अभिन्नमिदं ज्ञानमिति व्यवहारमित्यर्थः । तन्मते व्यवहारस्य भ्रमत्वाभ्युपगमादिति भावः । सामानाधिकरण्यव्यपदेशं इदं रजतमिति एकविभक्त्यन्तशब्दव्यवहारमित्यर्थः । तेन न पूर्वाभेदः ।

**परि०— सामान्यविशेषस्य** । जातिविशेषस्येत्यर्थः । **गृहीतग्रहणस्वभावाऽपीति** । अनुभूतवस्तुविषयीकरणस्वभावाऽपीत्यर्थः । **गृहीतीति** । अनुभवसदृशी । **सन्निहितेति** । चक्षुः-सन्निकृष्टरजतज्ञानं यथा तथैवेत्यर्थः । **कुत इति** । कस्मान्मानादेतज्ज्ञेयमित्यर्थः । विपक्षे बाधादित्याह **अन्यथेति** । एवं कल्पनाभावे । **अनुपपत्तेः** । परिणामपक्षे भ्रान्तिबाधानुपपत्तेः । अन्यात्मना भानपक्षे च 'असतोनभानात् साकारवादात्संविद्विरोधाद्धेत्वभावादि'त्याद्यनुपपत्तेरुक्तत्वादित्यर्थः ।

**यादु०—** एवं 'साकारवादादसतो न भानात्संविद्विरोधादथ हेत्वभावात् । धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्थे'त्यन्यथाख्यातिबाधकसङ्ग्राहकस्वाचार्यश्लोकोक्तबाधकानि परपक्षेऽभिधाय स्वपक्ष-साधनाय पूर्वपक्षमुत्थापयति **ननु तर्हीति** । **गृहीतिसरूपेति** । अनुभवसदृशीत्यर्थः । अनुभवो यथा तत्ताऽनुल्लेखी तथेदं रजतस्मरणमपीति भावः । **सन्निहितरजतज्ञानेति** । समीचीनरजतज्ञानसादृश्येन स्वरूपतो विषयतश्च भेदाग्रहणेत्यर्थः । इयांस्तु विशेषः । समीचीनरजतज्ञानेऽविद्यमानभेदाग्रहे अत्र तु विद्यमानभेदाग्रह इति ।

**आनन्दः—** ननु शुक्तित्वेनैव पुरोवर्तिद्रव्यं कुतो न गृह्यत इत्यत आह **दोषवशादिति** । तर्हि रजतस्मृतिः कथं भवतीत्यत आह **तन्मात्रं चेति** । तर्हि तद्रजतमिति तत्तोल्लेखः स्यादित्यत आह **सा चेति** । स्मृतिरित्यर्थः । **गृहीतग्रहणस्वभावा** गृहीतस्य तत्रांशस्य ग्रहणस्वभावा । **गृहीतसरूपेति** । अनुभवसरूपेत्यर्थः । ननु एवमपि विशिष्टज्ञानकार्यं सामानाधिकरण्यव्यपदेशादिकं ज्ञानद्वयेन कथं भवतीत्यत आह **तथा चेति** । सन्निहितं विद्यमानं यद्रजतं तज्ज्ञानसारूप्येण भेदाग्रहरूपेणेत्यर्थः । **कुत एतदिति** । एतत्सर्वं कुतः कल्प्यत इत्यर्थः । अन्यथाख्यातेरसंभवादेतत् कल्प्यत इत्याह **अन्यथेति** ।

**कं०रा०— तन्मात्रमिति** । रजतसदृशतया पुरोवर्ति द्रव्यमात्रं गृहीतं तत्संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयतीत्यर्थः । ननु रजतज्ञानं स्मृतिरूपं चेदनुभवतुल्यतया कथं तिष्ठतीत्यत आह **सा चेति** । अनुभवस्वभाव-रहिताऽपि सा रजतस्मृतिः प्रागनुभूततत्तांशस्य दोषवशात्प्रमुषिततयाऽनुभवसरूपत्वेनावतिष्ठत इत्यर्थः ।

**श्रीनिधि०— सामान्यविशेषस्य** जातिविशेषग्रहणस्य पुरोवर्तिविषयकानुभवस्य । **अभेदव्यवहारं** अभेदप्रवृत्तिम् । **सामानाधिकरण्यव्यपदेशम्** । इदंत्वरजतत्वयोः इदंरजतमित्येवम् ।

**वा०चं०—** नन्वनन्यथासिद्धेदं रजतमित्यादिप्रत्ययबलाद्बाधकानामन्यथोपपत्तिरेवोचितेत्याशङ्कते **नन्विति** । रजतमित्यस्य स्मृतित्वस्यैव मुख्यतः प्रतिपाद्यत्वात्तत्प्राधान्याभिप्रायेण रजतमिति स्मृतीति चादितो





ग्रहणम् । यद्वा स्मृतिशब्दस्याल्पाच्तरत्वेन पूर्वं प्रयोक्तव्यत्वे तदनुसारेण रजतमित्यस्यादितोग्रहणमिति द्रष्टव्यम् । **शुक्तित्वेति** । रजताद्भेदहेतोः शुक्तित्वजातिविशेषस्याग्रहादित्यर्थः । यद्वा शुक्तित्वरूपस्येदमात्मकसामान्यं प्रति विशेषस्याग्रहादिदमिति द्रव्यमात्रग्रहणं भवतीत्यर्थः । **गृहीतेति** । गृहीतमिदमिति प्रकाशनस्वभावेत्यर्थः । नन्वेवं ज्ञानद्वित्वेऽभेदव्यवहारादि न स्यादित्यत आह **तथा चेति** । ननु किमिदमेकैकं प्रवृत्तिहेतुर्मिलितं वा । नाद्यः । पृथक्प्रदेशे प्रवृत्तिप्रसङ्गात् । नान्त्यः । क्षणिकयोर्ज्ञानयोर्मेलनायोगादिति चेन्न । मेलनाभावेऽपि नैरन्तर्येणोत्पन्नयोरेव तथाविधप्रवृत्तिहेतुत्वोपपत्तेः । विनश्यदविनश्यतोः सहावस्थानाद्वेति भावः । **सन्निहितेति** । सन्निहितरजतगोचरं ज्ञानमिदमिति रजतमित्याकारयोरसंसर्गं न गृह्णाति तयोः संसृष्टत्वेनासंसर्गाभावात् । नापि स्वगतविवेक-मेकज्ञानत्वादेवमेते अपि ग्रहणस्मरणे परस्परं भिन्ने अपि स्वगतभेदं न गृह्णीतो नाप्यसन्निकृष्टौ स्वगोचरौ तथैव निवेदयत इति सारूप्यम् । तथोक्तं नयवीथ्याम् । 'नन्वेवं रजताभासः कथमेष घटिष्यते । उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् । शुक्तिकाया विशेषा ये रजताद्भेदहेतवः । ते न ज्ञाताऽभिभवात् ज्ञाता सामान्यरूपता ॥ अनन्तरं च रजते स्मृतिर्जाता तयाऽपि च । मनोदोषात्तदित्यंशपरामर्शविवर्जितम् ॥ रजतं विषयीकृत्य नैव शुक्तेर्विवेचितम् । स्मृत्यातो रजताभास उपपन्नो भविष्यति ॥ ग्रहणस्मरणे चेमे विवेकानवभासिनी । सम्यग्रजतबोधात्तु भिन्ने यद्यपि तत्त्वतः ॥ तथाऽपि भिन्ने नाभातो भेदाग्रहसमत्वतः । सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ॥ भेदानध्यव-सायादियमपि तादृक् परिस्फुरति ॥ साधारणं हि रूपं तस्या अस्याश्च विद्यते तेन । तन्मात्रप्रतिभानात्समानतामेव मन्यन्ते ॥ तत्तुल्यव्यवहारप्रसक्तिरपि युज्यते चात' इत्यादिना । ज्ञानद्वित्वं स्मृतौ तत्ताप्रमोषोऽभेदज्ञाननिबन्धना-भेदव्यवहारादेर्भेदाग्रहनिबन्धनत्वं चेति बहुकल्पना निर्मूलेत्याशङ्कते **कुत इति** । अन्यथाख्यातिबाधकाना-मेवैतत्कल्पनामूलत्वमित्याह **अन्यथाऽनुपपत्तेरिति** ।

**वा०र०— अभेदव्यवहारादीति** । तस्य विशिष्टज्ञानसाध्यतया कारणाभावे तस्यासंभवादित्यर्थः । अत्र तेनेति शेषः । तथा च ज्ञानद्वित्वे इदं रजतमिति ज्ञानस्य विशिष्टज्ञानत्वाभावेन विशिष्टज्ञानसाध्यव्यवहारादिकं तेन ज्ञानद्वयेन न स्यादित्यर्थः । तथाच रजतस्मृतेरिति भामतीवाक्यव्याख्यानावसरे कल्पतरुकृतं वचनमाह **ननु किमिदमेकैकमित्यादिना** । तदुक्तं **नयवीथ्यामिति** । एतत्प्रकरणं व्याख्येयमस्ति ।

**स०व्र०—** प्रतीतिं तु प्रकारान्तरेणोपपादयिष्याम इत्युक्तम् । तदुपपादयितुं शङ्कते **नन्विति** । **तत्रेद-मितीति** । अस्य च ज्ञानस्य स्वप्रकाशस्यापि स्वस्य स्वाविषयत्वे तस्मादविवेचकत्वस्य वक्ष्यमाणस्य विशेषा-नाकलनस्य च सिद्ध्यर्थं दोषवशादित्युक्तम् । ननु गृहीतग्रहणस्वभावायाः स्मृतेः तद्विपरीताद्ग्रहणाद् गृह्यमाणाच्चार्थस्य स्वस्य च किमिति न विवेचकत्वं तत्राह **सा चेति** । दुष्टमनोयोनित्वात्तद्देशकालवैशिष्ट्यं न गृह्णातीत्यविवेचकत्वम् । तथापि कथं स्वरूपतो विषयतश्च भिन्नाभ्यां संसृष्टप्रवृत्तिरिति तत्राह **तथा चेति** । नन्विदमिति ज्ञानमिदमंशे प्रवर्तयतु । रजतज्ञानं च रजते । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतस्तत्राह **स्वरूपतो विषयतश्चेति** । ननु किमिदमेकैकं व्यवहारहेतु मिलितं वा । नाद्यः पृथक् पृथक् प्रवृत्तिप्रसङ्गात् । नान्त्यः क्षणिकज्ञानयोर्मेलनासंभवादिति चेन्न । मेलनाऽभावेऽपि नैरन्तर्येणोत्पत्तेरेव तथाविधप्रवृत्तिहेतुत्वोपपत्तेः विनश्यदविनश्यतोः सहावस्थानाद्वेति ।





**विठ्ठ०**— एवं "साकारवादादसतो न भानात् संविद्विरोधादथ हेत्वभावात् । धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्थे"ति स्वाचार्योक्तबाधकानि परपक्षेऽभिधाय स्वपक्षं साधयितुं तदुत्थापनाय शङ्कते **ननु तर्हीति** । अन्यथाख्यात्यनङ्गीकारे अतद्वति तत्प्रकारकस्येदंरजतमित्यादिप्रत्ययस्य का गतिः इदंत्वरजतत्वयोः सामानाधिकरण्यानुपपत्तेरिति भावः । कारणस्य नयनसन्निकर्षस्य सत्त्वात् कथं तद्विशेषाग्रहणमित्यत आह **दोषवशादिति** । सामान्यविशेषस्य शुक्तित्वजातिरूपधर्मविशेषस्य । ननु तत्तायाः प्रागगृहीतत्वात् कथं गृहीततत्तांशप्रमोषेण परित्यागेनेत्युच्यत इति चेन्न तत्ताप्रकारेण प्रागग्रहणेऽपि प्राक्तत्कालवृत्तितया ग्रहणात् स्मरणकाले प्राक्कालीनत्वग्रहणमेव तत्ताग्रहणमित्युपपत्तेः । **गृहीतिसरूपेति** । गृहीतिरनुभवः सा यथा तत्तानुल्लेखिनी तथा रजतस्मरणमपीति भावः । **स्वरूपतो विषयतश्चेति** । स्मृत्यनुभवस्वरूपयोः तथा स्मृतिविषयस्य रजतत्वविशिष्टस्यानुभवविशिष्टस्येदन्तास्पदस्य च परस्परभेदस्याग्रहणादिति भावः । **सन्निहितरजतज्ञानेति** । संप्रतिपन्नरजतज्ञानसारूप्येणेत्यर्थः । इयांस्तु विशेषः समीचीनरजतज्ञाने भेदस्यैवाभावात् तदग्रहः अत्र तद्भावेऽपि दोषवशात् तदग्रह इति । **अन्यथेति** । अन्यथाख्यातिग्रहणे साकारवादादित्यनुपपत्तेरुक्तत्वात् तस्मात् भ्रमस्यासंभवेन तदन्यथानुपपत्त्या अगृहीतभेदज्ञानद्वयेनैवाभेदव्यवहारादिरित्यङ्गीकार्यमिति भावः ।

**चषकः**— प्राभाकरीयामन्यदीयपक्षे बाधकाभिधानभङ्गीं प्रदर्श्य तत्सिद्धान्तसमर्थनभङ्गीं प्रदिदर्शयिषया शङ्कते **ननु तर्हीति** । **तत्तांशमोषेण** तत्तांशाविषयीकरणेन । **गृहीतिसरूपा** अनुभवसदृशी । **स्वरूपतो विषयतश्चेति** । तादृशस्मृत्यनुयोगिकतादृगनुभवप्रतियोगिकभेदस्य तादृशानुभवानुयोगिकतादृक्स्मृतिप्रतियोगिकभेदस्य रजतप्रतियोगिकेदमंशानुयोगिकभेदस्येदमंशप्रतियोगिकरजतानुयोगिकभेदस्य चाग्रहणादित्यर्थः । **सन्निहितरजतज्ञानसारूप्येण** । आपणस्थरजतज्ञाननिरूपितेन भेदाविशेषितवस्तुविषयकत्वोक्तभेदग्रहाविषयत्वनियन्त्रितसादृश्येन । इदं तु वैशेष्यं वास्तवरजतस्थले ज्ञानविषययोर्भेदाग्रहः भेदासत्त्वनिबन्धनः प्रकृते तु तत्सत्त्वेऽपि तदग्रहः दोषनिबन्धन इति अभेदव्यवहारमिदं रजतमितिज्ञानम्, एकमिति व्यवहारम् । **सामानाधिकरण्यव्यपदेशं** इदमंशविशेष्यकं रजतत्वप्रकारकं चेदं ज्ञानमितिवाक्ये समानविभक्तिकानेकपदसमभिव्याहारम् । प्रपञ्चितं चैतन्नयवीथ्यां गुरूणां मतम् । उदाजहुश्च तानि वचनानि व्याकर्तार इति ।

**गूढ०**— ननु शुक्तित्वेनैव पुरोवर्तिद्रव्यं कुतो न गृह्यत इत्यत आह **दोषवशादिति** । ननु रजतस्मृतिः कथं भवतीत्यत आह **तन्मात्रं चेति** । तर्हि रजतमिति तत्तोल्लेखः स्यादित्यत आह **सा चेति** । स्मृतिरित्यर्थः । **गृहीतग्रहणस्वभावा** गृहीतस्य तत्रांशस्य ग्रहणस्वभावा । **गृहीतिसरूपेति** । अनुभवसरूपेत्यर्थः । ननु एवमपि विशिष्टज्ञानकार्यसामानाधिकरण्यव्यपदेशादिकं ज्ञानद्वयेन कथं भवतीत्यत आह **तथा चेति** । सन्निहितं विद्यमानं यद्रजतं तज्ज्ञानसारूप्येण भेदाग्रहरूपेणेत्यर्थः । **कुत एतदिति** । एतत्सर्वं कुतः कल्प्यत इत्यर्थः । अन्यथाख्यातेरसंभवादेतत्कल्प्यत इत्याह **अन्यथेति** ।





**प्रदीपः**— **ननु तर्हीति** । नायं विपर्ययश्चेदलौकिकमिदं ज्ञानं कथमित्यर्थः । किं सामग्रीं पृच्छसि किं वा ज्ञानमथ विषयं त्रयमप्येकोक्त्यैवाह **उच्यत इति** । शुक्तित्वरूपस्येदन्त्वसामान्यं प्रति विशेषस्याग्रहादिदमिति द्रव्यमात्रग्रहणं भवतीत्यर्थः । **गृहीतग्रहणेऽपीति** । गृहीतमिदमिति प्रकारज्ञानभावस्येत्यर्थः (?) । **सन्निहितेति** । सन्निहितरजतगोचरं हि ज्ञानमिदमिति रजतमित्याकारयोः संसर्गं न गृह्णाति तयोः संसृष्टत्वेनासंसर्गाभावात् ।

**३३६ सु०— किञ्चेदमिति पुरोवर्ति नयनसंप्रयोगजं ज्ञानमनुभव इत्यविवादम् । रजतज्ञानं च न तावदिन्द्रियजम् । इन्द्रियस्य सन्निकृष्टार्थ एव ज्ञानजननसामर्थ्यात् । अन्यथा सर्वसार्वज्ञप्रसङ्गात् । न च विप्रकृष्टेन रजतेन सन्निकर्षोऽस्ति । तत्कार्यस्य साक्षात्कारस्य कदाप्यदर्शनात् । न च शुक्तिशकलसन्निकर्षादिवेन्द्रियं रजतज्ञानमुत्पादयतीति सांप्रतम् । अतिप्रसङ्गात् । न च दोषसदसद्भावाभ्यां व्यवस्था । दोषाणां विपरीतकार्यकारिताया निरस्तत्वात् । भस्मकदोषदूषितस्य जाठरजातवेदसो बहुतराऽऽहारपरिणतिहेतुतोपलभ्यत इति चेन्न । विप्रतिपत्तेः । दोषस्यैवाऽऽहारविकारहेतुतोपपत्तेः । न च दहनकार्यं कथं दोषः करोतीति वाच्यम् । कार्येऽपि वैजात्योपलम्भात् । जाठराग्निपरिणता हि रसाः शरीरोपचयहेतवो न भस्मकपरिणतास्तथा । तस्मान्नेदमिन्द्रियजम् । न च लिङ्गाद्यनुसन्धानविधुराणामपि जायमानमनुमानादिप्रभवमिति वक्तुं शक्यते । अतः प्रत्युत्पन्नकरणाभावेऽप्युत्पद्यमानेनानेन परिशेषात्स्मरणेनैव भवितव्यम् ।**

**परि०**— परिशेषरूपप्रमाणाच्च ग्रहणस्मरणरूपं इदं रजतमिति ज्ञानमित्याह **किञ्चेत्यादिना** । अस्तु सन्निकर्ष इत्यत आह **न च विप्रकृष्टेनेति** । नास्तीति कथं ज्ञायत इत्यत आह **तत्कार्यस्येति** ।

**यादु०**— परिशेषादपि रजतज्ञानस्य स्मृतित्वं साधयितुमाह **रजतज्ञानं चेत्यादिना** । भस्मकलक्षणो दोषो व्याधिरूपः ।

**वं०प०**— अभेदव्यवहारमिदं रजतमिति तादात्म्यव्यवहारम् । सामानाधिकरण्यव्यपदेशमिदं रजतमित्येकविभक्त्यन्तपदवाच्यत्वव्यपदेशमित्यर्थः । इदंत्वरजतत्वरूपभिन्नप्रवृत्तिनिमित्तानामिदं रजतमित्यादिशब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमित्यप्याहुः । **तत्कार्यस्येति** । सन्निकर्षकार्यस्येत्यर्थः । **दोषस्यैवेति** । न तु तद्दूषितस्य जाठरजातवेदस इत्यर्थः । तदुपपादयति **जाठरेति** । **प्रत्युत्पन्नेति** । अव्यवहितपूर्वक्षणवर्तीन्द्रियार्थसन्निकर्षरूपकारणाभावेऽपीत्यर्थः । **अनेन** रजतज्ञानेन ।

**आनन्दः**— प्रकारान्तरेणापि रजतमिति ज्ञानं स्मृतिरूपमेव स्वीकर्तव्यमित्याह **किञ्चेयमिति** । रजतज्ञानस्यानुभवरूपे तत्किमिन्द्रियजन्य उतानुमानेनाथशब्देन । नाद्य इत्याह **न तावदिति** । **अन्यथेति** ।

इन्द्रियेणासन्निकृष्टार्थज्ञानजनन इत्यर्थः । ननु विप्रकृष्टेन सन्निकर्षो नास्तीति कुतोऽवगम्यते । सन्निकर्षस्या-तीन्द्रियत्वेन प्रत्यक्षेण ज्ञातुमशक्यत्वादित्यत आह **तत्कार्यस्येति** । **अतिप्रसङ्गादिति** । घटसन्निकर्षेण पटज्ञानमपि जन्येतेत्यतिप्रसङ्गादित्यर्थः । **विप्रतिपत्तेरिति** । भस्मकदूषितजातवेदसो बहुतराहारपरिणामहेतुत्वे विप्रतिपत्तेरित्यर्थः । तर्हि तत्र किं कारणमत आह **दोषस्येति** । कार्यवैजात्यमेवाह **जाठरेति** । न द्वितीय-तृतीयावित्याह **न चेति** । **प्रत्युत्पन्नकारणाभावेऽपीति** । तात्कालिककारणाभावेऽपीत्यर्थः ।

**कं०रा०**— **दोषस्यैव** भस्मकाख्यदोषस्यैव ।

**श्रीनिधि०**— अख्यातौ प्रमाणं चाह **किञ्चेति** । **तत्कार्यस्य** सन्निकर्षकार्यस्य । **अतिप्रसङ्गादिति** । घटादिज्ञानस्याप्यापत्तेरिति भावः । **लिङ्गाद्यनुसन्धानेति** । आदिपदेन शब्दः एवमुत्तरत्रापि । **प्रत्युत्पन्नेति** । तात्कालिकेत्यर्थः । **उत्पद्यमानेनेति** । चिरन्तनसंस्कारजन्यत्वं सिद्ध्यति । तथा च स्मृतित्वमपि सिद्ध्यतीति भावः ।

**वा०चं०**— नन्वन्यथाख्यातिबाधकवशात्प्रत्ययादीनामेव गतिः कल्पनीया वा प्रत्ययादिवशादसत एवाकारस्य ख्यातिं दोषाणां च विपरीतकार्यजनकत्वं च प्रकल्प्यान्यथाख्यातिबाधकान्येव परिहार्याणीत्येवं सन्देह एव स्यान्न तु निश्चय इत्यतो रजतमित्यस्यानुभवत्वानुपपत्त्या स्मृतित्वे सिद्धे ज्ञानद्वित्वादेः सर्वस्य सिद्ध्या निश्चयोपपत्तेरित्याशयेन रजतमित्यस्य स्मृतित्वे परिशेषमाह **किञ्चेति** । रजतमिति ज्ञानं स्मृतिः अनुभवत्वे कारणाभावेऽपि उत्पद्यमानज्ञानत्वात् इति विवक्षितानुमाने नासिद्धिः । प्रत्युत्पन्नबाधकोपपन्नत्वे सति ज्ञानत्वात् । न च विशेषणासिद्धिः । विमतं नानुभवः प्रत्युत्पन्नकारणं चेन्द्रियं लिङ्गादिकं वा । आद्येऽपि तदसन्निकृष्टं सन्निकृष्टं वा । सन्निकृष्टत्वेऽप्यारोप्यरजतसन्निकृष्टं वाऽधिष्ठानशुक्तिसन्निकृष्टं वेति विकल्पान्मनसि निधाय क्रमेण दूषयति **रजतज्ञानं चेत्यादिना** । योगिसार्वज्ञाभ्युपगमादिष्टापत्तिनिरासायोक्तं **सर्वेति** । विप्रकृष्टेनेति हेतुगर्भविशेषणम् । कार्यादर्शनमात्रस्य कारणत्वाभावासाधकत्वात्कदाऽपीति विशेषणम् । नन्वाहारविकाररूपकार्यान्यथाऽनुपपत्त्यैव दुष्टजातवेदसो हेतुत्वसिद्धेर्न विप्रतिपत्तिरित्यत आह **दोषस्येति** । नन्वेवं व्यभिचारान्नाग्नेरपि हेतुत्वमित्याशङ्क्य निषेधति **न चेति** । तदुक्तं नयवीथ्याम् । 'उच्यतेऽनन्यगतितः स्मृतिरत्रावगम्यते । न ह्यसन्निहितं तावत्प्रत्यक्षं रजतं भवेत् । लिङ्गाद्यभावाचान्यस्य प्रमाणस्य न गोचरः । परिशेषात्स्मृतिरि'ति निश्चयो जायते पुनः । तस्याः कारणसद्भावादिति ।

**विठ्ठ०**— परिशेषं चात्र प्रमाणमाह **किञ्चेति** । **संप्रयोगः** सन्निकर्षः । दोषस्य विपरीतकार्यकारित्वं शङ्कते **भस्मकेति** । विप्रतिपत्तिमेव दर्शयति **दोषस्यैवेति** । लिङ्गाद्यनुसन्धानेत्यत्र शब्दशक्त्यनुसन्धानग्रहणम् । **प्रत्युत्पन्नेति** । तत्कालसमुत्पन्नेन्द्रियार्थसन्निकर्षव्याप्त्यादिमल्लिङ्गानुसन्धानशक्तिस्मरणसहकृतशब्दश्रवणरूप कारणाभावेऽपीत्यर्थः ।





**चषकः— नयनसंप्रयोगः** । नयनसन्निकर्षः । रजतज्ञानरूपे धर्मिणि स्मृतित्वं पक्षान्तरप्रतिषेधविशेषित-परिशिष्यमाणत्वरूपपरिशेषेण सिषाधयिषुर्हेतुवाक्यघटकाद्यदलार्थमुपपादयति **रजतज्ञानं चेति** । **अतिप्रसङ्गादिति** । घटचक्षुःसन्निकर्षस्यापि पटादिचाक्षुषोत्पादकताप्रसङ्गादित्यर्थः । **भस्मकदोषः** आमयविशेषः । **प्रत्युत्पन्नेति** । रजतज्ञानं स्मृतिरूपं स्वाव्यवहितपूर्वक्षणावच्छिन्नोत्पत्तिकेन्द्रियसन्निकर्षलिङ्गपरामर्शाकाङ्क्षाज्ञानाद्यन्यतमासमव-धानदशायामुत्पद्यमानत्वादित्यनुमानेन स्मृतित्वं सेत्स्यतीत्यर्थः ।

**गूढ०—** प्रकारान्तरेणापि रजतमिति ज्ञानं स्मृतिरूपमित्येव स्वीकर्तव्यमित्याह **किञ्चेदमिति** । रजतज्ञानस्यानुभवरूपत्वे तत्किमिन्द्रियजन्यं उतानुमानेन अतथाशब्देन । नाद्य इत्याह **न तावदिति** । **अन्यथेति** । इन्द्रियेणासन्निकृष्टार्थज्ञानजनन इत्यर्थः । ननु विप्रकृष्टेन सन्निकर्षो नास्तीति कुतोऽवगम्यते । सन्निकर्षस्य अतीन्द्रियत्वेन प्रत्यक्षेण ज्ञातुमशक्यत्वादित्यत आह **तत्कार्यस्येति** । **अतिप्रसङ्गादिति** । घटसन्निकर्षेण पटज्ञानमपि जन्यतेत्यतिप्रसङ्गादित्यर्थः । **विप्रतिपत्तेरिति** । भस्मकदूषितजातवेदसो बहुतराहारपरिणामहेतुत्वे विप्रतिपत्ते-रित्यर्थः । तर्हि तत्र किं कारणमत आह **दोषस्येति** । कार्यवैजात्यमेवाह **जाठरेति** । न द्वितीयतृतीयावित्याह **न चेति** । **प्रत्युत्पन्नकारणाभावेऽपीति** । तात्कालिककारणाभावेऽपीत्यर्थः ।

**प्रदीपः—** न च स्वगतं विवेकमेकज्ञानत्वादेव ते अपि ग्रहणस्मरणे परस्परभिन्ने अपि स्वगतं भेदं न गृह्णीतः नाप्यसंसृष्टौ स्वगोचरौ तथैव वेदयत इति सारूप्यं परिशेषादपि रजतज्ञानस्य स्मृतित्वमाह **किञ्चेति** ।

**३३७ सु०— किञ्चेदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वात्संप्रतिपन्नस्मरणवत् । न चेदमस्मरणं तत्तांऽशविकलत्वात्संप्रतिपन्नवदिति युक्तम् । पदात्पदार्थस्मृतौ हरिहरादि-स्मृतौ च व्यभिचारात् । किञ्चानुभूतं तावन्न समस्तं स्मर्यते । तत्तांऽशश्चातीतदेशकालसंबन्धः स्मर्यमाणधर्मः । तथा च स्मरणं च भवतु । भवतु दोषवशात्प्रमुषिततत्तांऽशम् । न च विपक्षे बाधकं किञ्चिदित्यप्रयोजको हेतुः ।**

**परि०—** इदं रजतमिति ज्ञानद्वयं ग्रहणस्मरणात्मकं दोषवशादगृहीतशुक्तिविशेषं प्रमुषित-तत्ताकमित्यत्र अन्यथानुपपत्तिपरिशेषौ प्रमाणीकृत्यात्र पुनरविवादेदमंशज्ञानं हित्वा रजतज्ञानं स्मरण-मित्यंशेऽनुमानं च प्रमाणयति **किञ्चेदं स्मरणमिति** । **इदमिति** । रजतज्ञानमित्यर्थः । स्मरणमिति साध्यनिर्देशः । अनाकलितरजतस्यानुत्पद्यमानत्वादिति साधननिर्देशः । प्रतिपक्षमाशङ्क्य व्यभिचारा-प्रयोजकत्वदोषाभ्यां निराह **न चेत्यादिना हेतुरित्यन्तेन** । **पदार्थस्मृतौ** । व्युत्पन्नस्य पदाज्जायमान-पदार्थस्मृतावित्यर्थः ।





**यादु०**— **तथाच स्मरणं भवत्विति** । धर्मिमात्रावगाहि स्मरणं भवत्वित्यर्थः । ननु धर्मं विहाय कथं धर्मिमात्रं स्मर्तुं शक्यं धर्मस्याप्यनुभूतत्वादित्यत उक्तम् अनुभूतं समस्तं धर्मभूतं न स्मर्यत इति ।

**वं०प०**— **इदं** रजतमिति ज्ञानम् । **अनाकलितेति** । अननुभूतेत्यर्थः ।

**आनन्दः**— एवं परिशेषेण स्मृतित्वं व्यवस्थाप्यानुमानेनापि व्यवस्थापयति **किञ्चेति** । प्रतिपक्षं शङ्कते **न चेति** । अप्रयोजकत्वेऽपि दूषयति **किञ्चेति** ।

**कं०रा०**— **अनाकलितेति** । आकलितरजतस्योत्पद्यमानत्वादित्युक्ते घटाद्यनुभवे व्यभिचारः । तन्निरासाय अनाकलितरजतस्यानुत्पद्यमानत्वादित्युक्तम् । घटाद्यनुभवस्त्वनाकलितरजतस्यापि पुंस उत्पद्यत इति तेन तद्व्युदासः । **संप्रतिपन्नेति** । रजतानुभवजन्यं यत् तद्रजतमिति स्मरणं तद्वदित्यर्थः । **तत्तेति** । तत्तांशा-विषयत्वादित्यर्थः ।

**श्रीनिधि०**— **अनाकलितरजतस्येति** । पूर्वं रजतानुभवरहितस्य पुरुषस्य इत्यर्थः ।

**वा०चं०**— ननु दोषाणां विपरीतकार्यजनकत्वे कल्पिते प्रत्युत्पन्नदुष्टेन्द्रियजन्यत्वोपपत्तेः परिशेषो-ऽनुपपन्न इत्यत आह **किञ्चेति** । प्रतिपक्षं शङ्कते **न चेति** । पदार्थस्मृत्यादेः साधकाभावे स्मृतित्वस्यैव अभावापत्त्याऽवश्यवक्तव्यं स्मृतित्वादिसाधकं यत्तद्विकलत्वादेवास्यास्मृतित्वं साधयिष्यामीत्याशङ्कायामाह **किञ्चेति** । स्मर्यमाणरजतमात्रस्यास्य कथमस्मरणत्वमित्यत आह **तत्तांशश्चेति** ।

**स०व्र०**— **पदात्पदार्थस्मृताविति** । गृहीतसङ्गतिकस्य पदाज्जायमानायां पदार्थस्मृतौ तत्तांशस्य अप्रतीयमानत्वादिति भावः ।

**विठ्ठ०**— अनुमानं च तत्र प्रमाणयति **किञ्चेत्यादिना** । इदं स्मरणमिति प्रतिज्ञा । अनाकलितरजतस्य प्रागननुभूतरजतस्य पुरुषस्यानुत्पद्यमानत्वादिति हेतुः । यज्ज्ञानं प्राक् स्वविषयानुभवरहितस्य नोत्पद्यते संप्रतिपन्नवदित्युदाहरणम् । अनुत्पद्यमानत्वादित्युक्ते आकाशादौ व्यभिचारः । अनुत्पद्यमानज्ञानत्वादित्युक्तेऽपि तार्किकरीत्या ईश्वरज्ञाने व्यभिचारः अतः प्रागननुभूतरजतेत्युक्तम् । प्रतिपक्षमाशङ्क्य निषेधति **न चेति** । **पदार्थस्मृताविति** । गृहीतसङ्गतिकस्य पदाज्जायमानपदार्थस्मृतौ भक्त्युद्रेकसमुत्पन्नहरिहरादिस्मृतौ च तत्तोल्लेखा-भावात् व्यभिचार इति भावः । प्रतिपक्षानुमानमप्रयोजकमित्याह **किञ्चेति** । अनुभवसमानकालीनत्वरूपतत्तायाः अपि प्रागनुभूतत्वेन कथं तत्तांशप्रमोषेण स्मरणमित्यत उक्तम् **अनुभूतं तावन्न समस्तं स्मर्यत इति** । समस्तमित्यस्य यावद्धर्मसहितमित्यर्थः ।

**चषकः**— ननु दोषाणां विपरीतकार्यजनकतायां स्थितायां समनन्तरोत्पन्नदुष्टेन्द्रियसन्निकर्षजन्यत्वसिद्ध्या हेतोरसिद्धिरित्यरुचेः कल्पान्तरमनुसरति **किञ्चेति** । यथाश्रुतस्य गगनादावनैकान्त्यं तु स्वयमेवाभिधास्यति ।





प्रतिरोधमाशङ्क्य पराकुरुते **न चेत्यादि**। अनैकान्त्याप्रयोजकत्वे तत्तांशानवगाहित्वहेतोर्विशदयति **पदादित्यादिना हेतुरित्यन्तेन**।

**गूढ०**— एवं परिशेषेण स्मृतित्वं व्यवस्थाप्यानुमानेनापि व्यवस्थापयति **किञ्चेति**। प्रतिपक्षं शङ्कते **न चेति**। अप्रयोजकत्वेनापि दूषयति **किञ्चेति**।

**प्रदीपः**— एतदेव विस्पष्टानुमानेन द्रढयति **किञ्चेति**। स्मर्यमाणमशेषसंबन्धिसहितं स्मर्यत इति नियमाभावादतीतदेशकालसंबन्धाख्यस्य तत्तांशस्यास्मरणेऽपि तद्धर्मकवस्तुस्मरणोपपत्तेस्तत्तांशाविकलत्वादिति हेतुरप्रयोजकश्चेत्यर्थः।

**३३८ सु०— न च नेयं स्मृतिरिन्द्रियजन्यत्वात्। तच्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादिति वाच्यम्। स्मृतिबीजसंस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एवेन्द्रियव्यापारान्वयव्यतिरेकयोरुपक्षीणत्वात्।**

**परि०**— प्रतिपक्षान्तरमाशङ्क्यासिद्धिदोषेण निराह **न च नेयमि**त्यादिना **उपक्षीणत्वादि**त्यन्तेन। शङ्किताऽसिद्धिदोषमुद्धरति **तच्चेति**। इन्द्रियजन्यत्वमित्यर्थः। **स्मृतीति**। स्मृतिबीजं यः संस्कारोद्बोधः तस्य हेतुभूतं यत्पुरोवर्तिनः इदंत्वादिसाधारणाकारस्य ग्रहणं तत्रैवेत्यर्थः। तथाचेन्द्रियजन्यत्वस्यासिद्धिरेव साधकाभावादिति भावः।

**आनन्दः**— प्रतिपक्षान्तरं शङ्कते **न चेति**। किमत्र यथाकथञ्चिदिन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वेन इन्द्रियजन्यत्वं साध्यते। अन्यत्रानुपक्षीणेन तेनेति वा। नाद्यः। अनुमितेरपीन्द्रियजन्यत्वापत्तेः नान्त्य इत्याह **स्मृतीति**। स्मृतेर्बीजं संस्कारः तदुद्बोधहेतुभूतं यत्पुरोवर्तिसाधारणाकारग्रहणं तत्रेत्यर्थः।

**कं०रा०**— इन्द्रियजन्यत्वं चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादित्यत्र किं तावन्मात्रं हेतुरुतानन्यथासिद्धेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वम्। नाद्यः। व्यभिचारादिति मनसि निधाय द्वितीयमसिध्या निराचष्टे **स्मृतिबीजेति**।

**वा०चं०**— प्रतिपक्षान्तरं शङ्कते **न चेति**।

**विट्ठ०**— प्रतिपक्षान्तरमाशङ्क्य निराकरोति **न च नेयमिति**। हेत्वसिद्धिपरिहारायोक्तं **तच्चेति**। **स्मृतिबीजसंस्कारेति**। सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इत्युक्तेरत्र रजतस्मृतिबीजसंस्कारोद्बोध-





हेतुभूतपुरोवृत्तिशुक्तिकागतचाकचक्यादिग्रहणस्यावश्यकत्वात् तद्ग्रहण एवेन्द्रियव्यापारान्वयव्यतिरेकयोरुपक्षीण-त्वात् इन्द्रियजन्यत्वाभावात् असिद्धोऽयं प्रतिपक्षहेतुरिति भावः।

**चषकः**— प्रतिरोधान्तरमाशङ्क्य तत्रासिद्धिमाह **न चेति**।

**गूढ०**— प्रतिपक्षान्तरं शङ्कते **न चेति**। किमत्र यथाकथञ्चिदिन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वेन इन्द्रियजन्यत्वं साध्यते। अन्यत्रानुपक्षीणेन तेनेति वा। नाद्यः। अनुमितेरिन्द्रियजन्यत्वापत्तेः। नान्त्य इत्याह **स्मृतीति**। स्मृतेर्बीजं संस्कारः तदुद्बोधहेतुभूतं यत्पुरोवर्तिसाधारणाकारग्रहणं तत्रेत्यर्थः।

**३३९ सु०— नन्वेवं सत्यनास्वादिततिक्तस्य शिशोस्तिक्तस्मरणानुपपत्तेः कथं तिक्तो गुड इति प्रत्यय इति चेन्न। जन्मान्तरानुभूतत्वात्। अदृष्टवशाच्च कस्यचिदेव स्मरणमुपपद्यते। अथवा नायं नियमो ग्रहणस्मरणे एवागृहीतविवेके व्यवहारादिप्रवर्तके इति, किन्तु क्वचिद् ग्रहणे एव मिथोऽगृहीतभेदे। यथा पीतः शङ्ख इति। अत्र हि विनिर्यन्नयनरश्मिन्नर्तिनः पित्त-द्रव्यस्य पीतत्वं दोषवशाद् द्रव्यरहितं गृह्यते। शङ्खोऽपि गुणहीनः स्वरूपमात्रेण गृह्यते। तदनयोः गुणगुणिनोः इतरेतरापेक्षिणोरसंसर्गाग्रहात्सारूप्यात्पीतचिरबिल्वादिफलप्रत्यया-विशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च भवतः।**

**परि०— असंसर्गाग्रहात्सारूप्यादिति**। पीतचिरबिल्वफले इदं पीतमिति प्रत्ययस्यैकत्वेन तत्र गुणगुणिनोरसंसर्गाग्रहस्य सत्त्वाद्यथा तत्रासंसर्गाग्रहनिबन्धनः पीतमिदं फलमित्यभेदव्यवहार-सामानाधिकरण्यव्यपदेशौ भवतः तथा पीतः शङ्ख इत्यत्र ग्रहणरूपज्ञानद्वयसत्त्वेऽपि गुणगुणिनो-रसंसर्गाग्रहादभेदव्यवहारादिकमित्यर्थः।

**यादु०**— नन्वेवं जन्मान्तरानुभूतसर्वपदार्थस्मृतिः स्यादित्यत आह **अदृष्टवशाच्चेति**। कस्यचिदेवेत्य-नन्तरं पदार्थस्येति शेषः। **स्वरूपमात्रेणेति**। शङ्खत्वेनेत्यर्थः।

**आनन्दः**— ज्ञानद्वयाङ्गीकारेऽनुपपत्तिं शङ्कते **नन्विति**। ग्रहणयोः सामानाधिकरण्यव्यपदेशादि-प्रवर्तकत्वं विशदयति **अत्रेति**। **असंसर्गग्रहात्सारूप्यादिति**। असंसर्गाग्रहसारूप्यादित्यर्थः। पीतचिर-बिल्वादिफलं तत्प्रत्ययाविशेषेणेत्यर्थः।

**कं०रा०— विनिर्यदिति**। विनिर्गच्छन्तो ये नयनरश्मयस्तद्वर्तिन इत्यर्थः। **पीतेति**। पीतं यच्चिर-बिल्वादिफलं तत्र यः पीतत्वप्रत्ययस्तदविशेषेणेत्यर्थः। 'चिरबिल्वो नक्तमालः करजश्च करञ्जक' इत्यमरः।





**श्रीनिधि०**— **नन्वेवं सति** भ्रमस्थले ग्रहणस्मरणरूपविज्ञानद्वयाङ्गीकारे सति **अनास्वादित-तिक्तस्येति**। तथा च संस्कारानुत्पत्तिरिति भावः। **कथमिति**। तथा चात्रान्यथाख्यातिरेव स्वीकार्येति भावः। पूर्वजन्मानुभूतस्य स्मरणे तदानुभूतस्य सर्वस्य स्मृतिप्रसङ्ग इत्यत आह **अदृष्टवशात् कस्यचिदेवेति**। नायनरश्मिवर्तीत्यादार्जवावस्थितमिति भावः। **चिरबिल्वेति**। 'चिरबिल्वो नक्तमालः करजश्च करञ्जक' इत्यमरः। नुलगिनवृक्ष इत्यपभ्रष्टभाषायामाहुः। कानज इत्यान्ध्रभाषया। कोङ्गु इति तौळवभाषया।

**वा०चं०**— ननु नेयं स्मरणत्वकल्पनोपपद्यते। जातमात्रस्य शिशोः थूत्कारानुमेये तिक्तो गुड इत्यादि-प्रत्ययेऽस्यासंभवादित्याशङ्क्ते **नन्विति**। स्तनपानादिप्रवृत्त्यन्यथाऽनुपपत्त्या जन्मान्तरानुभूतस्मरणस्यावश्य-कल्पनीयतया नानुपपत्तिरित्याह **जन्मान्तरेति**। जन्मान्तरानुभवस्य सर्वत्र सुलभत्वादनुभवाभावेन स्मरणाभावः कुत्रापि न सिद्ध्येदित्यत आह **अदृष्टेति**। अस्मिन्पक्षेऽदृष्टप्रयुक्तजन्मान्तरानुभवस्य कल्पनीतया पक्षान्तरमाह **अथवेति**। अत्र तिक्तो गुड इत्यस्य प्रकृतत्वेऽपि पीतः शङ्ख इत्यादौ परेणोभयोरपि ग्रहणत्वोपपादनाद् गृह्यमाणारोपेऽसङ्कीर्णोदाहरणत्वाच्च तदतिदेशेन तिक्तो गुड इत्यस्योपपादनाय परोक्तस्थलमेवोदाहरति **यथेति**। विनिर्यदिति विशेषणेन पित्तस्यार्जवावस्थितत्वं दर्शयति। गुणगुणिनोरितरेतरसापेक्षत्वोक्तिरसंसर्गाग्रहोपपादनाय।

**स०व्र०**— जन्मान्तरानुभूतं च न स्मर्यत इति शबरस्वामिवचनादस्मर्यमाणत्वाच्च बालस्य तिक्ततास्मृतिः कथमिति चोदयति **नन्वेवमिति**। जन्मान्तरानुभूततिक्तस्मृतिः कल्प्यत इत्याह **नेति**। तर्हि जन्मान्तरानुभूतं किञ्चिदेव स्मर्यते न सर्वमिति कुत इत्यतः सहकारिवशादित्याह **अदृष्टवशादिति**।

**विठ्ठ०**— नन्वेवं सर्वत्र विभ्रमे अगृहीतविवेकं ग्रहणस्मरणरूपज्ञानद्वयमित्येवं सति प्रागननुभूततिक्तस्य शिशोः रोगवशात् तिक्तो गुड इति प्रत्ययानुपपत्तिप्रसङ्गः ततःपूर्वं तिक्तानुभवाभावेन तत्स्मरणानुपपत्तेरित्या-शङ्क्यास्मिन् जन्मन्यनुभवाभावेऽपि अस्ति जन्मान्तरे तिक्तानुभवोऽतोऽननुभूततिक्तस्य उत्पद्यमानतिक्तो गुड इति विभ्रमेऽपि गुडग्रहणं तिक्तस्मरणमित्युपपद्यत इत्याह **नन्वेवं सतीति**। तर्हि जन्मान्तरानुभूतसर्वस्मरणप्रसङ्ग इत्यत आह **अदृष्टवशादिति**। नन्वेवं सर्वविभ्रमे ग्रहणस्मरणाङ्गीकारो न युज्यते पीतः शङ्खः इत्यत्र स्मरणाभावात् स घटस्तत्रासीदित्यत्र ग्रहणाभावादित्यतः पक्षान्तरोक्त्या समाधत्ते **अथवेति**। **पित्तद्रव्यस्येति**। पित्तरोगप्राप्तस्येति भावः। पीतचिरबिल्वादिफलप्रत्ययाविशेषेणेति। **चिरबिल्वं** निम्बफलम्। चिरबिल्वफले इदं पीतमिति प्रत्यय-स्यैकत्वेन वा गुणगुणिनोरसंसर्गस्य सत्त्वेऽपि तदग्रहेणासंसर्गाग्रहात् सादृश्यात् अभेदव्यवहारादिरुपपद्यत इत्यर्थः। इतरेतरापेक्षिणोरिति असंसर्गाग्रहोपपादनायोक्तम्।

**चषकः**— शिशोस्तिक्तत्वगोचरानुभवजनितसंस्कारविरहेण तिक्तो गुड इति भ्रमस्थले तिक्तत्वांशे स्मृतिरिति कल्पना गुरुमते न सङ्गच्छत इत्याशङ्क्य समाधत्ते **नन्वित्यादि**। स्वरूपमात्रेण शङ्खत्वेन। असंसर्गाग्रहात्। शङ्खे पीतत्वप्रतियोगिकसंसर्गाभावविषयकग्रहाभावात्। व्यपेदशः शङ्खः पीत इति वाक्ये समानविभक्तिकपदप्रयोगः।





**गूढ०**— ज्ञानद्वयाङ्गीकारेऽनुपपत्तिं शङ्कते **नन्विति** । ग्रहणयोः सामानाधिकरण्यव्यपदेशादिप्रवर्तकत्वं विशदयति **अत्रेति** । **असंसर्गग्रहात्सारूप्यादिति** । असंसर्गाग्रहरूपसारूप्यादित्यर्थः । पीतचिरबिल्वादिफल-तत्प्रत्ययाविशेषेणेत्यर्थः ।

**प्रदीपः**— जन्मान्तरानुभूतं च न स्मर्यत इति शबरस्वामिवचनादस्मर्यमाणत्वाच्च बालस्य तिक्ततास्मृतिः कथमिति चोदयति **नन्वेवमिति** । जन्मान्तरानुभूततिक्तस्मृतिः कल्प्यत इत्यत आह **नेति** । तर्हि जन्मान्तरानुभूतं किञ्चिदेव स्मर्यते न सर्वमिति सहकारिवशादित्याह **अदृष्टेति** । जन्मान्तरीयस्मरणाभावमभ्युपेत्य ग्रहणरूपत्वेऽपि न भ्रान्त्यवकाश इत्याह **अथवेति** ।

**३४० सु०— यत्तु कज्जलकालिमाऽग्रहणं तत्तिर्यगवस्थानात् । कज्जलस्य अस्वच्छतया नयनरश्मिप्रतिबन्धकत्वाच्च । पित्तं तु आर्जवावस्थितं काचमिव स्वच्छं न प्रतिबन्धकमिति विशेषः । एवं तिक्तो गुड इति व्यवहारोऽपि । क्वचित्पुनः स्मरणे एवागृहीतविवेके । यथा स घटस्तत्रासीदिति । अनयैव दिशाऽलातचक्रादिव्यवहाराः सर्वेऽपि निर्वाह्याः । •**

**बिन्दुः**— **तिर्यगवस्थानादिति** । पक्ष्मपटलयोरेव कज्जललेपो न तु मध्ये गोलकस्य यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव तद्गच्छतीति छन्दोगश्रुतावप्यलेपस्योपन्यासात् । ननु तर्ह्यार्जवेन मध्ये धृतस्याञ्जनस्य कार्ष्ण्यं शुक्लपटादौ गृह्येतेत्यत उक्तम् **अस्वच्छतयेति** । पटादिसन्निकर्षस्यैव तदाऽसंभवादिति भावः । **आर्जवावस्थितं काचमिवेति** । उपनेत्रादिकमित्यर्थः ।

**परि०**— नन्वेवं पीतः शङ्ख इतिवन्नयनगतकज्जलकालिमग्रहणेन कालः शङ्ख इत्यपि धीः कदाचित्स्यात् । पीतत्वप्रत्ययोपपादकप्रक्रियाया अत्रापि सुवचत्वात् तदग्रहणे पीतत्वाग्रहणं च स्याद्विशेषाभावादित्यत आह **यत्त्विति** । अग्रहणमिति पदच्छेदः । यथा पीतः शङ्ख इति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह **एवमिति** । जिह्वाग्रवृत्तिरसनेन्द्रियेण तत्रत्यतिक्तद्रव्यगततिक्तरसमात्रस्य ग्रहे सति त्वगिन्द्रियोपनीतगुडद्रव्यतिक्तरसयोरसंसर्गाग्रहात्सारूप्यान्निम्बफलप्रत्ययाविशेषेणाभेदव्यवहार इत्यर्थः । **अनयैव दिशेति** । अनुभूतत्वे ग्रहणस्मरणे स्मरणरूपे वा न चेत् ग्रहणरूपे एवेत्येवमुक्तदिशेत्यर्थः ।

**यादु०**— ननु यदि नयनगतपित्तद्रव्यनिष्ठं पीतत्वं चक्षुर्ग्राह्यं स्यात्तर्हि नयनगतकज्जलकालिम्नोऽपि ग्रहणं स्यादविशेषात् । ततश्च नीलः शङ्ख इत्यपि भ्रमः स्यादित्यत आह **यत्तु कज्जलेति** । **तिर्यगवस्थानादिति** । कज्जलस्य वक्रतयाऽवस्थानादित्यर्थः । तेन यथा रश्मयो विनिर्गच्छन्ति तत्र न कज्जलावस्थानमपि तु नयनपार्श्वप्रदेश एवेति भावः । आर्जवावस्थानमभ्युपेत्याप्याह **अस्वच्छतयेति** । काचमिवेत्यत्र हरितद्रव्यविशेषः काचशब्दार्थः ।





**अलातचक्रादीति** । शीघ्रभ्रमितालातज्वालास्विदं चक्रमिति व्यवहार इत्यर्थः । आदिपदेन द्विचन्द्रदिङ्मोह-गन्धर्वनगरवंशोरगादिव्यवहारसङ्ग्रहः । तथाच द्वौ चन्द्रावित्यत्र प्रदेशविशेषगतं द्वित्वं गृहीतं सत् असंसर्गाग्रहा-चन्द्रनिष्ठतया व्यवह्रियते । मण्डूकवसाक्तनयनस्य वंशे स्मृतोरगभेदाग्रहादयमुरग इति व्यवहार इत्यादि ज्ञेयम् ।

**वं०प०— एवं तिक्तो गुड इति व्यवहारोऽपीति** । अत्रापि रसनेन्द्रियेण स्वनिष्ठतिक्तद्रव्यनिष्ठतिक्तत्वं दोषवशाद्व्यरहितं गृह्यते । गुडोऽपि दोषवशान्माधुर्यरसहीन एव रसनेन गृह्यते । तदनयोर्गुणगुणिनोरितरेतर-सापेक्षयोरसंसर्गाग्रहात्सारूप्यान्निम्बप्रत्ययाविशेषेणाभेदव्यवहारादिकं ग्रहणे एवागृहीतभेदे कुरुत इत्यर्थः । **स घटस्तत्रासीदिति** । स घट इत्येकं स्मरणम् । तत्रासीत् घटातिरिक्तमन्यत्किञ्चिद्वस्तु तत्रासीदित्यपरं स्मरणम् । तथाच एते स्मरणे एव स्वरूपयोस्तद्विषययोर्घटतदन्यवस्तुनोश्च भेदाग्रहात्स घटस्तत्रासीदित्यतीतदेशकालविशिष्ट-वस्त्वैक्यावगाहित्वेन व्यवहारप्रवर्तके भवत इत्यर्थः ।

**आनन्दः**— ननु पित्तद्रव्यगतपीतत्वं गृहीत्वा आरोप्यते कज्जलकालिमानं तं गृहीत्वा तदारोपः कुतो न भवतीत्यत आह **यत्विति** । कालिम्नः अग्रहणं कालिमाग्रहणमिति विग्रहः । **एवमिति** । जिह्वागतज्वरगतं तिक्तत्वं गृहीत्वा गुडे आरोप्यत इत्यर्थः । **अनयैव दिशेति** । तत्रापि चक्रगतं भ्रमणं गृहीत्वा गृहादावारोप्यत इत्यर्थः ।

**कं०रा०— एवमिति** । पीतः शंख इति व्यवहार इवास्यगतपित्तद्रव्यगततिक्तत्वग्रहणस्य दोषवशादगृहीत-माधुर्यकगुडग्रहणस्य च भेदाग्रहे सत्यगृहीतभेदाद्ग्रहणद्वयात्तिक्तो गुड इति व्यवहारोऽपीत्यर्थः ।

**श्रीनिधि०— कज्जलकालिमा** । नयनाञ्जनकार्ष्ण्यम् । ननु नयनगोलके कज्जललेपनेनार्जवावस्थिति-संभवेऽपि न तस्य शङ्खादौ ग्रहणं दृश्यते तद्वत् पित्तमपि न गृह्येतैवेत्यत आह **अस्वच्छतयेति** । **एवं तिक्तो गुड इति व्यवहारोऽपीति** । नावश्यं जन्मान्तरानुभूत इत्युक्तस्य स्मरणं कल्प्यम् किं नाम तत्रासन्नपित्तदोषगततिक्तता शुद्धयोः असंसर्गाग्रहादेव तिक्तः शुद्ध इत्यादि ज्ञानादिकमिति भावः । **क्वचित्पुनः स्मरण एवेति** । यदान्यत्र देवदत्तगृहे घटमनुभूय स घटस्तत्र यज्ञदत्तगृहे आसीदिति भ्रान्त्या स्मरति तदा स्मरणभेदो विवक्षित इति ज्ञेयम् । **अलातचक्रेति** । अलातशब्देनाग्नियुक्तकाष्ठमुच्यते । अलातस्यानुभवः । चक्रस्य स्मरणं तयोर्भेदाग्रह इत्याद्यूह्यमिति भावः । चक्रशब्देन वलयाकारोपेतमुच्यते ।

**वा०चं०**— अतसीपुष्पसङ्काशनयनमण्डलान्तःस्थितकज्जलस्य तेजोवृत्तिनिरोधकतया तिर्यगवस्थान-मिन्द्रियोपरिभागस्थार्थग्राहकविनिर्यन्नयनरश्मिवर्तिपित्तद्रव्यस्यार्जवावस्थितत्वम् । एवं च तद्रूपयोर्ग्रहणाग्रहणे युक्ते इत्याह **यत्त्विति** । काचो हरितद्रव्यविशेषः । एतच्चोक्तं नयवीथ्याम् । 'अतसीपुष्पसङ्काशं यत्तावन्नेत्रमण्डलम् । तत्रस्थमञ्जनं यत्तत्तेजोवृत्तिनिरोधकम् । मण्डलान्तरसंस्थं तु यन्नाम नयनेऽञ्जनम् । तस्यानार्जवदोषेण नीलिमा नावगम्यते । इन्द्रियोपरिभागेऽपि लिप्तेन स्वच्छभावतः । पित्तेन नायनं तेजः काचेनेव न रुध्यते । प्रसरन्नायनं तेजो ग्राहकं नेन्द्रियस्थितमि'ति । **एवमिति**। एतदप्युक्तं नयवीथ्याम् । 'मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्तिनः । तैक्त्यस्य

रसहीनस्य गुडस्य च परिग्रहादिति' । **अनयैव दिशेति** । स्वप्नस्थले स्मरणानां स्वरूपतो विषयतश्च भेदाग्रहः । द्विचन्द्रस्थलेऽङ्गुल्यवष्टम्भेनेन्द्रियस्य महसो भेदे सत्येकशीतगुविषयकयोर्जातयोर्द्वयोर्ग्रहणयोः परस्परं भेदाग्रहः । ग्रहणनिष्ठद्वित्वस्य च चन्द्रेण सहासंसर्गग्रहः । ततश्च द्वौ चन्द्राविति सामानाधिकरण्यव्यवहारः । अलातचक्रस्थले सर्वतो द्रुतभ्रमदलातविषयकानेकग्रहणेष्वलाते तत्तद्देशसंबन्धानां तद्ग्रहणानां च सत्यपि कालभेदे तदग्रहः । चक्रे च युगपत्सर्वदेशसंबन्धाद्भेदाभावादेव तद्ग्रहः । तथा च भेदाग्रहादेव चक्रव्यवहारः । तदुक्तं नयवीथ्याम् । 'एवं स्वप्नेऽपि वस्तूनि स्मर्यमाणानि सन्त्यपि । अनुभूतांशमोषेण भासन्ते गृह्यमाणवत् । संस्कारोद्बोधहेतुश्च तत्रादृष्टं प्रकल्प्यते । अदृष्टस्य तु हेतुत्वाज्जाग्रतस्तादृशी न धीः । अवस्थाऽपि ह्यदृष्टस्य सामग्रीफलसंभवे । तथा द्विचन्द्रबोधेऽपि भिन्नमेवेन्द्रियं महः । भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ । संवित्ती ते न भिद्येते तद् द्वित्वे सति मन्यते । भिन्नार्थबुद्धितुल्यत्वमत्रापि खलु पूर्ववत् । स्मरतोऽप्येकतां तेन भ्रमोऽयमुपपद्यते । न हि स्मृतिप्रमोषेण सर्वत्रैव भ्रमो मतः । दिङ्मोहेऽदृष्टसामर्थ्याद्दिक्स्वरूपानवग्रहात् । दिगन्तरस्वरूपस्य स्मरणाच्च भ्रमो मतः । अलातचक्रेऽलातस्य भ्रमतः सर्वतो द्रुतम् । निरन्तरधियो जाताश्चक्रबुद्धिसमा मताः । कालभेदस्तु शीघ्रत्वाद्धियां तासां न लक्ष्यते । चक्रधीर्व्यवहारश्च तेनास्मिन्नपि युज्यते' इत्यादिना ।

**वा०र०**— वक्ष्यमाणातसीपुष्पसङ्काशमित्यादिनयवीथीमनुसन्धायाह **अतसीति** । उदाहरिष्यमाणनय-वीथ्यनुसारेण व्याख्याति **स्वप्नस्थल इत्यादिना** ।

**स०व्र०— एवं तिक्तो गुड इतीति** । जिह्वास्थतिक्तद्रव्यगतं तिक्तत्वं दोषवशाद्द्रव्यरहितं गृह्यते । गुडोऽपि माधुर्यादिगुणहीनः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरितरेतरसापेक्षयोरसंसर्गग्रहात्तिक्तो गुड इति व्यवहार इत्यर्थः । **क्वचित्पुनः स्मरणे एवेति** । वल्मीके अयं घट इति प्रत्ययानन्तरं कालान्तरे जायमाने स्मर्यमाणे एवेत्यर्थः । **अलातचक्रव्यवहार इति** । भ्राम्यमाणोल्मुके चक्राकारत्वभ्रमोऽलातचक्रव्यवहारशब्देन ग्राह्यः । तत्रापि चक्रनिष्ठचक्राकारस्मरणे पुरोवर्तिग्रहणे विशिष्टव्यवहारमात्रमित्यर्थः । आदिपदेन मण्डूकवसाञ्जनाक्तनयनस्य वंशे उरगभ्रमादिग्रहणम् । तत्राप्युक्तन्यायेन ग्रहणस्मरणरूपज्ञानद्वयात्मकत्वमुपपादनीयमिति भावः ।

**विठ्ठ०**— ननु नयनगतपित्तद्रव्यवृत्तिपीतत्वं चक्षुर्ग्राह्यं तर्हि नयनानुलिप्तकज्जलकालिम्नोऽपि ग्रहणापत्त्या कदाचित् कालः शङ्खः इत्यपिप्रत्ययः स्यात् अविशेषादित्यत आह **यत्त्विति** । नयनपार्श्वप्रदेश एव कज्जलावस्थानात् नयनरश्मीनां मध्यप्रदेशादेव निर्गमनेन कज्जलसङ्कलनाभावात् न कालिम्नो ग्रहणमिति नोक्तदोषः । अस्तु वा नयनरश्मिप्रतिबन्धकत्वात् नैवं पित्तद्रव्यं तस्यार्जवावस्थानात् स्वच्छतया प्रतिबन्धकत्वाभावादिति भावः । **काचमिव** उपनेत्रमिव । तिक्तो गुड इति प्रत्ययस्यागृहीतविवेकग्रहणस्मरणात्मकत्वमुक्तमिदानीमुक्तप्रकारेणैव रसनेन्द्रियेण जिह्वाग्रवृत्तितिक्तद्रव्यगततिक्तगुणे दोषवशात् द्रव्यरहिते गृहीते गुडे च गुणहीने त्वगिन्द्रियेण गृहीते सत्यसंसर्गाग्रहात् तिक्तो गुड इति अभेदव्यवहार इत्याह **एवं तिक्तो गुड इति** । स घटस्तत्रासीदित्यत्र स घट इत्येकं स्मरणं तत्रासीदित्यपरमेवमगृहीतविवेकं स्मरणद्वयमेव पूर्वं संमुग्धतया वल्मीकं दृष्ट्वाऽन्यत्र गतवतः पश्चाद्घटस्तत्रासीद-





त्यभेदव्यवहारादिघटकं भवतीति भावः । **अलातचक्रादीति** । अलातग्रहणचक्रस्मरणयोः तथा चन्द्रस्मरणद्वित्व-ग्रहणयोः दण्डग्रहणचक्रस्मरणादीनां अलातशीघ्रभ्रमणाङ्गुल्यवष्टम्भदण्डाधिकरणजलसञ्चलनादि(?)दोषवशेन भेदाग्रहणासंसर्गाग्रहवशादभेदव्यवहारसामानाधिकरण्यव्यपदेशौ भवत इति भावः ।

**चषकः**— **तिर्यगिति** । वक्रतयेत्यर्थः । **अलातचक्रादीति** । द्विचन्द्रदिङ्मोहगन्धर्वनगरवंशोरगादि-घटितसमुदायः समासार्थः । द्रुतालातज्वालासु चक्रमिति व्यवहारः द्वौ चन्द्रावित्यत्र(अन्यत्र)गृहीतं द्वित्वं असंसर्गाग्रहाच्चन्द्रे मण्डूकवसाञ्जनेन वंशोरगभ्रमस्थलेऽपि तादृश्येव गतिरवसेया ।

**गूढ०**— ननु पित्तद्रव्यगतपीतत्वं गृहीत्वा आरोप्यते कज्जलकालिमानं गृहीत्वा तदारोपः कुतो न भवतीत्यत आह **यत्त्विति** । कालिम्नः अग्रहणं कालिमाग्रहणमिति विग्रहः । **एवमिति** । जिह्वागतज्वरगतं तिक्तत्वं गृहीत्वा गुडे आरोप्यत इत्यर्थः । **अनयैव दिशेति** । तत्रापि चक्रगतं भ्रमणं गृहीत्वा गृहादावारोप्यत इत्यर्थः ।

**३४१ सु०— किञ्च विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहो ग्राह्य एव । न हि विवेकग्रहे विपर्ययावकाशोऽस्ति । विरोधात् । अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः । तथा च तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनया ।**

**परि०**— ननु भ्रमवादिना विशिष्टज्ञानादभेदव्यवहार उच्यते त्वया तु विवेकाग्रहात् । को न्वत्र विशेष इत्यत आह **किञ्च विपर्ययमिति** । गृह्यमाणस्मर्यमाणयोर्विवेकाग्रहः स्वीकार्य एवेत्यर्थः । **विवेकेति** । पुरोवर्तिनि इदं रजतं नेति भेदग्रह इत्यर्थः ।

**यादु०**— विपर्ययाभ्युपगमे कल्पनागौरवमपि बाधकमाह **किञ्चेति** । **ग्राह्य एवेति** । स्वीकार्य एवेत्यर्थः ।

**वं०प०**— **ग्राह्यः** स्वीकर्तव्यः । **न हि विवेकग्रह इति** । इदं रजतमिति ज्ञानविषयीभूतेदमंशरजतयो-र्विवेकग्रहे सतीत्यर्थः । **अन्यथेति** । विवेकग्रहेऽपि विपर्ययाङ्गीकार इत्यर्थः । **तत एवेति** । विवेकाग्रहादेवेत्यर्थः । **सर्वस्येति** । विपर्ययकार्यस्य प्रवृत्त्यादेरित्यर्थः । तथाच कल्पनागौरवमिति भावः ।

**आनन्दः**— ननु त्वया विवेकाग्रहादयं व्यवहार इति स्वीक्रियते तत्राभावापेक्षया भावस्य लघुत्वा-द्विवेकाग्रहस्य चाभावरूपत्वादन्यथाख्यातेरेव व्यवहार इति स्वीकर्तव्यमित्यत आह **किञ्चेति** । **अन्यथेति** । विवेकग्रहेऽपि विपर्ययावकाशश्चेदित्यर्थः ।

**श्रीनिधि०**— तद्धेतोरेवास्तु किं तेनेति न्यायमनुसृत्याह **किञ्चेति** । **विरोधादिति** । भेदाभेदयोर्विरुद्धत्वेन विवेकग्रहे अभेदतद्व्याप्यासंसर्गग्रहरूपविपर्ययो नेत्यर्थः । **अन्यथेति** । विवेकग्रहेऽपि विपर्ययाङ्गीकारे ।





**निवृत्त्यनुपपत्तेरिति** । विवेकग्रह एव निवर्तक इति वाच्यम् । स च विपर्ययाविरोधीति त्वयैवोक्तम् । अन्यन्निवर्तकं नास्त्येवेति भावः ।

**वा०चं०**— एवं प्रमाणेन ज्ञानद्वित्वमुपपाद्यास्तु वोभयत्रापि कल्पना तथाऽपि कल्पनालाघवादख्याति-पक्षनिश्चयोपपत्तिरित्याह **किञ्चेति** ।

**वा०र०**— **एवं प्रमाणेनेति** । रजतमित्यस्य स्मृतित्वोपपादनादिना लब्धान्यथानुपपत्तिरूपप्रमाणेनेत्यर्थः ।

**विट्ठ०**— विपर्ययवादिनापि विवेकाग्रहस्य स्वीकार्यत्वात् तेनैवाभेदादिव्यवहारोपपत्तेः पुनर्विपर्ययाङ्गीकारे कल्पनागौरवमित्याह **किञ्च विपर्ययमिति** ।

**गूढ०**— ननु त्वया विवेकाग्रहादयं व्यवहार इति स्वीक्रियते । तत्राभावापेक्षया भावस्य लघुत्वाद्विवेकाग्रहस्य चाभावरूपत्वादन्यथाख्यातेरेव व्यवहार इति स्वीकर्तव्यमित्यत आह **किञ्चेति** । **अन्यथेति** । विवेकग्रहेऽपि विपर्ययावकाशश्चेदित्यर्थः ।

**प्रदीपः**— हरिद्रव्यविशेषकालशब्दार्थविपर्ययाभ्युपगमे कल्पनागौरवं चेत्याह **किञ्चेति** ।

**३४२ सु०— न चान्यथाख्यातौ किमपि प्रमाणमस्ति । भेदाग्रहप्रसञ्जिताभेदव्यवहार-बाधनेनैव नेदमिति विवेकज्ञानस्य बाधकत्वमप्युपपद्यते । तदुपपत्तौ चागृहीतविवेकस्य ज्ञानद्वयस्य भ्रान्तित्वमपि लोकसिद्धं सिद्धम् । तथा च प्रयोगः । विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्संप्रतिपन्नवत् ।**

**परि०**— स्वाभिमतेऽर्थेऽन्यथानुपपत्तिपरिशेषानुमानानि प्रमाणान्युक्त्वा परमतमप्रामाणिक-मित्याह **न चान्यथाख्याताविति** । ननु नेदं रजतमिति भेदज्ञानस्य बाधकत्वान्यथानुपपत्त्या तद्बाध्यमभेदज्ञानमुपेयम् । अन्यथा तस्य बाधकत्वानुपपत्तेः । अतस्तदनुपपत्तिरेव वा भ्रमत्वेन लोके प्रसिद्धिर्वाऽन्यथाख्यातौ प्रमाणमित्यत आह **भेदाग्रहप्रसञ्जितेति** । **विगीतः** विमतः ।

**यादु०**— ननु प्रामाणिकत्वान्न कल्पनागौरवं दोष इत्यत आह **न चान्यथाख्याताविति** ।

**वं०प०**— ननु नेदं रजतमिति विवेकज्ञानस्य बाधकत्वं लोकप्रसिद्धम् । तदन्यथाऽनुपपत्त्यैव तद्बाध्या-न्यथाख्यातिसिद्धिरित्यतो लोकप्रसिद्धेरन्यथासिद्धिमाह **भेदाग्रहेति** । ननु तथापीदं रजतमिति ज्ञानस्य लोकप्रसिद्ध्यन्यथाऽनुपपत्त्या भ्रमत्वसिद्धिरित्यत आह **तदुपपत्तौ चेति** । विवेकज्ञानस्य बाधकत्वोपपत्तौ चेत्यर्थः ।

**सिद्धमिति** । ज्ञानजन्यव्यवहारस्य बाध्यत्वादेवेत्यर्थः । भ्रान्तिस्थाने भेदाग्रहस्याभिषिक्तत्वादिति भावः । तथा चायथार्थत्वव्यवहारोऽस्ति नायथार्थज्ञानमिति द्रष्टव्यम् ।

**आनन्दः**— प्रमाणाभावाच्च नान्यथाख्यातिरेष्टव्येत्यत आह **न चेति** । ननु भ्रान्त्यभावेनेदमित्यस्य बाधत्वमनुपपन्नमित्यत आह **भेदाग्रहेति** । ननु भ्रान्त्यभावे इदंरजतमितिज्ञानं भ्रान्तिरिति लोकव्यवहारविरोध इत्यत आह **तदुपपत्तौ चेति** । अभेदव्यवहारबाधनेनैव विवेकज्ञानस्य बाधत्वोपपत्तावित्यर्थः । एवं च सति सिद्धं प्रमाणमाह **तथा चेति** ।

**कं०रा०**— नेदं रजतमिति ज्ञानस्य बाधकत्वान्यथाऽनुपपत्तिरन्यथाख्यातौ प्रमाणमित्यत आह **भेदाग्रहेति** । भेदाग्रहप्रसञ्जितो यो भेदव्यवहारस्तद्बाधनेनैव नेदं रजतमिति भेदज्ञानस्य बाधकत्वमुपपद्यत इत्यन्यथाख्यातिं विना तस्यानुपपत्तिर्नेत्यर्थः । नन्वेतावन्तं कालं मम भ्रान्तिरासीदिति लोकसिद्धं भ्रान्तित्वम् । अन्यथाख्यात्यभावे न संभवतीत्यत आह **तदुपपत्ताविति** । नेदं रजतमिति ज्ञानस्योक्तरीत्या बाधकत्वोपपत्तौ चागृहीतभेदज्ञानद्वयस्य तद्बाध्यव्यवहारजनकत्वेन लोकसिद्धं भ्रान्तित्वं संभवतीत्यर्थः । तथा चान्यथाख्यात्यभावे न कस्याप्यनुपपत्तिरिति भावः ।

**श्रीनिधि०**— ननु न किमपि प्रमाणमित्ययुक्तम् । बाधान्यथानुपपत्तेरेव तत्र प्रमाणत्वात् । विपर्ययातिरिक्तस्य बाध्यस्याभावादित्याशङ्क्य बाध्यस्यान्यथोपपत्तिमाह **भेदाग्रहप्रसञ्जितेत्यादिना** । **तदुपपत्तौ चेति** । बाधोपपत्तौ चेत्यर्थः । **भ्रान्तित्वमिति** । बाधिताभेदव्यवहारजनकत्वेन बाध्यत्वमिति भावः । **विगीतो** विप्रतिपन्नः ।

**वा०चं०**— ननु प्रामाणिकं गौरवं न्याय्यमेवेत्यत आह **न चेति** । यद्वा स्वपक्षे साधकं परपक्षे बाधकं चोपपाद्य साधकाभावं च परपक्षे दर्शयति **न चेति** । ननु बाधकज्ञानानुपपत्तिरेव भ्रान्तौ प्रमाणमित्यत आह **भेदाग्रहेति** । इतरेतराभावबोधादितरेतराभावाग्रहनिवृत्तौ तद्धेतुकव्यवहारनिवृत्तिर्बाधफलमित्यर्थः । तदप्युक्तं नयवीथ्याम् । 'बाधकप्रत्ययस्यापि बाधकत्वमतो मतम् । प्रसज्यमानरजतव्यवहारनिवारणादि'ति । माऽस्तु बाधकत्वानुपपत्तिर्भ्रान्तिविषयकप्रामाणिकव्यवहारानुपपत्तिस्तु तत्र प्रमाणं भविष्यतीत्यतः पूर्वोक्तार्थेनास्याप्यन्यथासिद्धिरित्याह **तदुपपत्तौ चेति** । एवं सामानाधिकरण्यप्रत्ययविरोधादिरूपबाह्यानुपपत्तावन्यथाख्यातौ साधकबाधकभावाभावाभ्यां व्यवहारादेरन्यथासिद्ध्या च तादृशप्रत्ययाभावेन परिहृतायां निष्कण्टकानुमानं स्वपक्षसाधकतयोपन्यस्यति **तथा चेति** ।

**वा०र०**— **इतरेतराभावेति** । अन्योन्याभावार्थकभेदपदव्याख्यानमेतत् । **बाह्यानुपपत्ताविति** । तादृशप्रत्ययाभावेन परिहृतायामित्युत्तरेणान्वयः । प्रत्ययाभावो द्वेधोपपादितः **अन्यथाख्यातौ साधकेत्यादिना** ।





**स०व्र०**— ननु प्रामाणिकत्वान्न गौरवदोष इत्यत आह **न चान्यथाख्याताविति** । **निर्विकल्पकज्ञानमिति** । इदमित्याकारं भ्रमजनकधर्मिज्ञानरूपमित्यर्थः । तस्येदंत्वप्रकारकत्वेऽपि शुक्तित्वादिविशेषाविषयकत्वान्निर्विकल्पकत्वोपचारः ।

**विठ्ठ०**— प्रामाणिकत्वात् न दोष इत्यत आह **न चेति** । नेदं रजतमिति ज्ञानं पूर्वज्ञानस्य बाधकमित्यविवादं अतस्तदन्यथानुपपत्तिर्वा भ्रमत्वेन लोकप्रसिद्धिर्वाऽन्यथाख्यातौ प्रमाणमित्यत आह **भेदाग्रहेति** ।

**चषकः**— **विगीतप्रत्यय इति** । याथार्थ्यायाथार्थ्यकोटिकशङ्कास्कन्दित इत्यर्थः । प्रकृतसाध्यतदभावरूपकोटिद्वयनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकाभिमतधर्मज्ञानमन्तरेण पक्षतावच्छेदकता विमतेर्दुर्निरूपैव ।

**गूढ०**— प्रमाणाभावाच्च नान्यथाख्यातिरेष्टव्येत्याह **न चेति** । ननु भ्रान्त्यभावेनेदमित्यस्य बाधत्वमनुपपन्नमित्यत आह **भेदाग्रहेति** । ननु भ्रान्त्यभावे इदंरजतमितिज्ञानं भ्रान्तिरिति लोकव्यवहार इत्यत आह **तदुपपत्तौ चेति** । अभेदव्यवहारे बाधनेनैव विवेकज्ञानस्य बाध्यत्वोपपत्तावित्यर्थः । एवं च सति प्रसिद्धं प्रमाणमाह **तथा चेति** ।

**प्रदीपः**— निषेध्यप्रमाभावे निषेधानुपपत्तिमाशङ्क्याह **भेदाग्रहेति** । इतरेतरभेदबोधादितरेतरभेदग्रहनिवृत्तौ तद्धेतुकव्यवहारनिवृत्तिबोधः फलमित्यर्थः । विवेकग्रहस्य बाधत्वे तदग्रहस्य भ्रान्तित्वमिति न लोकविरोध इत्याह **तदुपपत्तौ चेति**।

**३४३ सु०— नन्वत्र विगीतप्रत्ययो नाम किं पुरोवर्तिनिर्विकल्पकज्ञानमुत सदृशादर्शनोत्थं रजतस्मरणम् । किं वोभयमाहोस्विद्रजतपुरोवर्त्येकताज्ञानमाहोस्वित्प्रमुषितभेदं वेदनद्वयम् । तत्राद्यपक्षत्रये सिद्धसाधन(साध्य)ता । चतुर्थे वाद्याश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्च । पञ्चमे प्रतिवाद्याश्रयासिद्धतेति चेत् । मैवम् । अस्ति तावत्पुरोवर्ति निर्विकल्पकज्ञानम् । अस्ति च सदृशपुरोवर्तिदर्शनजनिता रजतस्मृतिः । तथाऽस्त्येव च तत्समुत्थं सविकल्पकमिदमिति वेदनात्सविवादभेदाभेदं रजतवेदनम् । तत्र विप्रतिपन्नौ भेदाभेदौ विहायेदं रजतमित्यवगममात्रमिदं रजतमित्यादिसामानाधिकरण्यव्यवहारकारणं पक्षत्वेन विवक्षितं चेत्को विरोधः ।**

**न हि विप्रतिपन्नाकारेणैव पक्षीकारः क्वचित् । मा हि भून्नित्यानित्याग्निमदनग्निमच्छब्दपर्वतपक्षीकारे प्रकृतदोषानुषङ्गाद्भङ्गोऽनुमानमुद्रायाः ।**

**परि०— निर्विकल्पकमिति** । शुक्तित्वाद्यसाधारणधर्माप्रकारकमिदंत्वादिसाधारणधर्म-प्रकारकमित्यर्थः । **वादीति** । अनुमानप्रयोक्त्रित्यर्थः । **व्याघातश्चेति** । शुक्तिरजतयोस्तादात्म्यज्ञान-रूपान्यथाख्यातिर्नेति वदता तदङ्गीकारे आश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्चेत्यर्थः । यद्वा रजत-पुरोवृत्तितादात्म्यज्ञानं पक्षीकृत्य याथार्थ्यं तादात्म्याविषयकमित्युक्ते व्याघात इत्यर्थः । **तत्समुत्थं सविकल्पकमिति** । रजतत्वरूपासाधारणधर्मप्रकारकमित्यर्थः । इदमितिज्ञानाद्रजतस्मृतौ पश्चादिदं रजतमिति पुनः पुरोवृत्तिरजतयोः ज्ञानजन्मेत्याशयेन तत्समुत्थमित्युक्तिः । न्यायमते विशेष्यता-व्यधिकरणप्रकारमेकं ज्ञानं प्राभाकरमते त्वगृहीतभेदं ज्ञानद्वयमिति ज्ञेयम् । किन्त्वेन पक्षीकरणमित्यत आह **इदं रजतमित्यादीति** । ननु मिथो भिन्नः प्रत्यय इति एकः प्रत्यय इति वा पक्षीकर्तव्य इत्यत आह **न हीति** । विप्रतिपन्नधर्मेणैव पक्षीकारो न हीत्यर्थः । एवमपक्षीकारः किमर्थमित्यत आह **मा हि भूदिति** । अनुमानमुद्रायाः अनुमानमर्यादाया भङ्गो मा भूदित्येतदर्थमित्यर्थः । अन्यथाऽनुमानप्रयोगप्रवृत्तिभङ्गः स्यादित्यर्थः । कुत इत्यत उक्तं **नित्येत्यादि** । नित्यः शब्द इति वा अनित्यः शब्द इति वा पक्षीकृत्य अनित्यत्वादिसाधने प्रकृतानां वाद्याश्रयासिद्धत्वापसिद्धान्तव्याघातरूपदोषाणामनुषङ्गात् तथाग्निमान्पर्वत इति वा अनग्निमान्पर्वत इति वा पक्षीकृत्याग्निमत्वादिसाधने सति प्रतिवाद्याश्रयासिद्धत्वदोषानु-षङ्गादित्यर्थः ।

**गु०दी०— विप्रतिपन्नौ भेदाभेदौ विहाय** इत्यत्र भेदाभेदौ विहाय सामानाधिकरण्यव्यवहारहेतुभूतस्य केवलमिदं रजतमिति ज्ञानस्य पक्षीकारे सत्यरजतज्ञानस्यापि पक्षीकारप्रसङ्ग इति चेत्सत्यम् । **भेदाभेदौ विहाय** इत्यस्य भेदाभेदाभ्यां विमतिविषयत्वं विहायेति नार्थः । किन्तु तदुरीकृत्य भिन्नं ज्ञानमिति वा, अभिन्नं ज्ञानमिति वा भेदाभेदयोः पक्षविशेषणताया एव त्याजितत्वादित्यर्थः ।

**यादु०— निर्विकल्पकज्ञानमिति** । इदमित्याकारं भ्रमजनकधर्मिज्ञानरूपमित्यर्थः । तस्येदन्त्वप्रकारत्वेऽपि शुक्तित्वादिविशेषाविषयकत्वान्निर्विकल्पकत्वोपचारः । **रजतस्मरणमिति** । भ्रमकारणविशेषणज्ञानरूपमित्यर्थः । ननु नाश्रयासिद्धत्वं मया तादृशज्ञानाङ्गीकारादित्यत आह **अपसिद्धान्त इति** । **व्याघात इति** । व्याघातो विरोधः । प्रमाणबाध इति यावत् । रजतपुरोवर्त्येकताज्ञाने याथार्थ्यं बाधितमिति भावः । अथवा रजपुरोवर्त्येकताज्ञानत्व-स्यायथार्थत्वव्याप्यत्वेनायथार्थत्वप्राप्त्या तत्र याथार्थ्यसाधने विरोधिव्याप्त्युक्त्या व्याघात इत्यर्थः । 'रमणं नातियत्नस्य विक्षेपादेव युज्यत' इत्यत्र नियामको रतिमांश्चेति व्याहतम् । नियमनस्य विक्षेपाविनाभूतत्वात् । विक्षेपस्य च रतिविरोधित्वादिति विरोधिव्याप्त्युक्तावपि व्याहत्युक्तिरग्र इत्यवधेयम् । **मा हि भूदिति** । नित्यानित्यशब्द-पक्षीकारेऽग्निमदनग्निमत्पर्वतपक्षीकारे च प्रकृतदोषानुषङ्गादनुमानमुद्राया भङ्गः स्यात्स मा भून्न भवेदेवेत्यर्थः । न हि विप्रतिपन्नाकारेणैव पक्षीकार इत्यन्वयः । मा भूदित्यस्यान्यथेत्यप्यर्थ इत्याहुः ।

**वं०प०— किञ्चोभयमिति । इदमिति** । निर्विकल्पकज्ञानरूपं विशेष्यज्ञानम् । विशेषणज्ञानरूपं रजतस्मरणं चेत्युभयमित्यर्थः । तथा तार्किकमते भ्रमरूपविशिष्टज्ञाने विशेषणविशेष्योभयज्ञानं कारणमेव प्राभाकरमतेऽपि तदुभयं ग्रहणस्मरणात्मकज्ञानद्वयेऽपि कारणमित्यङ्गीकृतमत उभयमिति कारणीभूतज्ञान-प्रश्नोऽयमित्यवगन्तव्यम् । प्रमुषितभेदं वेदनद्वयमिति तत्कार्यज्ञानद्वयप्रश्नोऽतो न तयोः पक्षयोः पौनरुक्त्य-मित्यनुपदमेव स्पष्टमिति ज्ञातव्यम् । **मा हि भूदिति** । न हि भवतीत्यर्थः । अन्यथा स स्यादिति भावः । **नित्यानित्येत्यादि** । अनित्यं शब्दमग्निमन्तं पर्वतं पक्षीकृत्यानित्यत्वाग्निमत्वयोः साधने सिद्धसाधनता । नित्यं शब्दमनग्निमन्तं च पर्वतं पक्षीकृत्यानित्यत्वाग्निमत्वयोः साधने बाध इति दोषानुषङ्गादित्यर्थः । तत्र यथा नित्यत्वादिकं विहाय शब्दादिमात्रं पक्षीक्रियते एवमिहापीति भावः।

**आनन्दः**— असिद्ध्यादिना पक्षं दूषयितुं विकल्पयति **नन्वत्रेति । रजतापुरोवर्त्येकताज्ञानमिति** । रजतपुरोवर्तिनोरेकताज्ञानमित्यर्थः । **तत्राद्येति** । यद्यपि निर्विकल्पकज्ञाने तद्वति तत्प्रकारत्वरूपयथार्थाभावात् न सिद्धसाधनं तथापि भ्रमभिन्नज्ञानत्वस्य विशेष्यावृत्यप्रकारकत्वस्य वा तत्र सत्त्वात्सिद्धिसाधनमिति द्रष्टव्यम् । यद्यपि च स्मरणे तद्वति तत्प्रकारकानुभवत्वरूपयाथार्थ्यभावस्तथापि अनुभवत्वस्य प्रमात्वाप्रवेशात्सिद्ध-साधनत्वमिति ज्ञेयम् । **वाद्याश्रयासिद्धत्वमिति** । परेणैकज्ञानस्यानङ्गीकारात्तदनङ्गीकारात्तस्य पक्षत्वे वादिमते आश्रयासिद्धत्वमित्यर्थः । **अपसिद्धान्त इति** । प्राभाकराचार्यैः एकताज्ञानस्यानङ्गीकारात्तदङ्गीकारेऽपसिद्धान्त इत्यर्थः । **व्याघातश्चेति** । रजतपुरोवर्त्येकताज्ञानस्य अयथार्थत्वात्तस्य यथार्थत्वे साध्यमाने व्याघात इत्यर्थः । नैयायकमतमालम्ब्य पक्षसिद्धिं समर्थयति **मैवमिति । तत्समुत्थमिति** । निर्विकल्पकरजतस्मृतिभ्यां समुत्पन्न-मित्यर्थः । **सविवादभेदाभेदमिति** । सविवादौ भेदाभेदौ यस्य तत् तथोक्तं रजतवेदनं इदमिति वेदनात्सविवाद-भेदाभेद इत्यन्वयः । अथवा स्वमतानुसारेण पक्षं समर्थयते **मैवमिति । तत्समुत्थमिति** । निर्विकल्पक-ज्ञानरजतस्मृत्योरगृहीतासंसर्गरूपत्वात् ताभ्यां समुत्थमित्युच्यते इत्यर्थः । यद्यपि तन्मते सर्वथा निष्प्रकारव-ज्ञानाभावः तथापि सामान्यप्रकारकज्ञानमेव निर्विकल्पकशब्देन विवक्षितं तच्चास्त्येव तन्मत इति भावः । एवमपि पक्षः कथं समर्थित इत्यत आह **तत्रेति** । तथाच सामानाधिकरण्यव्यवहारकारणमिदंरजतमित्यवगममात्रं पक्ष इत्युक्तं भवति । तच्चैकं वा ज्ञानद्वयं वेत्यन्यदेतदिति भावः । ननु विप्रतिपन्नाकारेणैव पक्षीकारः किं न स्यादित्यत आह **न हीति** । कुतो नेत्यत आह **मा हि भूदिति** । अन्यथानुमानोच्छेदः स्यादिति भावः ।

**कं०रा०— पुरोवर्तीति** । पुरोवर्तिविशेष्यकं साधारणाकारप्रकारकं ज्ञानमित्यर्थः । **मा हि भूदिति** । शब्दो नित्यः कृतकत्वादित्यत्र नित्यस्य शब्दस्य पक्षीकारे वाद्याश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्च । अनित्यस्य पक्षीकारे सिद्धसाध्यता । एवं पर्वतोऽग्निमान् धूमवत्त्वादित्यत्राग्निमतः पर्वतस्य पक्षीकारे सिद्धसाध्यता । अनग्निमतः पक्षीकारे वाद्याश्रयासिद्धत्वमिति प्रकृतदोषानुषङ्गादनुमानमुद्राया भङ्गो मा भूदित्यर्थः । तथा च तत्र यथा न विप्रतिपन्नाकारेण पक्षीकारः किन्तूभयवादिसिद्धेन शब्दत्वादिनैव । एवं प्रकृतेऽप्युभयवादिसिद्धेनेदं रजतमित्यादिव्यवहारकारणाव-गमत्वेन पक्षीकार इति भावः ।





**श्रीनिधि०— व्याघातश्चेति।** रजतपुरोवर्त्यैकताज्ञानस्य याथार्थ्यं विरुद्धमिति भावः। **भेदाभेदौ विना चेति।** भेदाभेदौदासीन्येनेत्यर्थः। रजतमित्यादि सामानाधिकरण्यस्य व्यवहारकारणमिति स्वरूपकथनम्। तस्मात्तस्य पक्षत्वे अतिप्रसङ्गाभावात्। **प्रकृतदोषानुषङ्गादिति।** वादिप्रतिवाद्याश्रयासिद्धिव्याघातादिदोषानुषङ्गादित्यर्थः।

**वा०चं०—** विमतिविषयतावच्छेदकानिरुक्त्या प्राप्तामान्तरानुपपत्तिं परिहर्तुं शङ्कते **नन्वत्रेति।** अत्राद्यकल्पत्रयमुभयसंमतप्रसक्तिमत्तत्रापि प्रत्येकमिलितभेदेनावान्तरविशेषोऽभिप्रेतः। उत्तरद्वयं तु क्रमेण वादिप्रतिवादिसंमत्या प्रसक्तमिति द्रष्टव्यम्। **निर्विकल्पकमिति।** इदन्त्ववैशिष्ट्यावगाहित्वेऽपि शुक्तिरजतत्वादि-जातिविशेषवैशिष्ट्यानवगाहित्वेनेयमुक्तिरिति द्रष्टव्यम्। उभयपक्षस्यान्तिमपक्षस्य चैकत्र वेदनयोः स्वरूपमात्र-विवक्षयाऽपरत्र च तयोः प्रमुषितभेदत्वस्य च विवक्षया भेद इति ध्येयम्। रजतपुरोवर्त्यैकताज्ञानस्य वस्तुतो वादिमतेऽभावादाश्रयासिद्धिस्तदङ्गीकारे चापसिद्धान्तोऽभिनवसिद्धान्ताभ्युपगमे व्याघात इत्याह **चतुर्थ इति।** पुरोवर्तिनिर्विकल्पकरजतस्मृतिजन्ये इदमिति वेदनाभिन्ने पुरोवर्तिनि रजतत्त्वादिजातिवैशिष्ट्यावगाहिनि रजतवेदने-ऽख्यातिवादिनां विप्रतिपत्तावप्युक्तनिर्विकल्पकस्मृत्योरेव प्रमुषितभेदत्वेऽन्यथाख्यातिवादिना विप्रतिपत्तावपि तदुभयस्वरूपमात्रे न तावत्कस्यापि विवाद इत्याह **अस्ति तावदिति।** एवं केवलमुभयसंमताकारं प्रदर्श्य तद्विवादविषयाक्रान्ततया तमेव दर्शयति **तथेति।** तदुभयसमुत्थं सविकल्पकमिदमिति वेदनाभिन्नं रजतवेदन-मस्तीत्येकः। न तादृग्वेदनं किन्तु तत्कारणत्वेन तवाप्यावश्यकं निर्विकल्पकस्मृतिरूपवेदनद्वयं तदेव प्रमुषितभेदमित्येवेत्यपरः। एवमेव भेदाभेदविवादोऽत्राभिमतो न तु तदुभयसमुत्थसविकल्पकरजतवेदने इदंमति-वेदनाद्भेदाभेदविवादः। असदनुवादापत्तेः। उच्यत इत्यादिपूर्वग्रन्थेन विमतौ चेत्याद्युत्तरग्रन्थेन च विरोधापत्तेः। अत एवोत्तरत्र भेद एवाख्यातिवादिभिरित्यनुक्त्वाऽपाकर्तव्यश्चेत्येतावदेव वक्ष्यतीति द्रष्टव्यम्। अतस्तत्समुत्थित-मित्यत्रत्यतच्छब्दपरामर्शविषयप्रदर्शनाय प्रवृत्ते नास्ति चेत्यादिपूर्वग्रन्थेन वादिमतेन विज्ञानस्वरूपं च दर्शितम्। तथेत्यनेन तु प्रतिवादिमतेनेति द्रष्टव्यम्। नन्वेतावताऽपि कः पक्षनिष्कर्ष इत्यतो वाद्यभिमतप्रमुषितभेदत्व-प्रतिवाद्यभिमतेदं वेदनाभिन्नसविकल्पकरजतज्ञानत्वयोस्तत्तदभिमतकार्यत्वकारणत्वादीनां चाविवक्षयोभयसंमतेदं-रजतावगममात्रस्य पक्षत्वे न कोऽपि दोष इत्याशयेनाह **तत्रेति।** ननु भिन्नस्याभिन्नस्य वा तादृशावगमस्य पक्षत्वे उक्तदोषानतिवृत्तिः। अवगमसामान्यस्य चानुगतावच्छेदकाभावान्न तत्त्वमित्यतोऽनुगतपक्षतावच्छेदकमाह **इदं रजतमित्यादीति।** ननु भिन्नस्याभिन्नस्य वेदं रजतमित्यवगमस्य सामानाधिकरण्यव्यवहारकारणत्वात्कथं भेदाभेदौ विहाय सामानाधिकरण्यव्यवहारकारणज्ञानरूपपक्षलाभः। तयोः पक्षकोटिनिवेशे चोक्तदोषानतिवृत्तिरित्यतो भिन्नावगमस्यापि तत्त्वेनापक्षत्वेऽप्युक्तव्यवहारकारणत्वेन पक्षत्वमिष्यत एवेति नोक्तदोषानुषङ्गः। अभिन्नत्वा-द्याकारेणापक्षत्वं च युक्तमेव। तस्य विप्रतिपन्नत्वेन तदाकारेण पक्षत्वस्यैवानुचितत्वात्। अन्यथाऽनुमानमात्रो-च्छेदापत्तिरित्याह **न हीति।** यद्वा ननु विप्रतिपन्नस्य परित्यागेऽनुमानवैयर्थ्यमित्यतो विमताकारस्य न पक्षकोटि-निवेशोऽनुमानमात्रोच्छेदप्रसङ्गात्साध्यकोटिनिवेशाच्च नानुमानवैयर्थ्यमित्याशयेनाह **न हीति।** अनुमानमुद्राया भङ्गो मा भून्न भवति हि यस्मात्तस्मान्न पक्षीकार इत्यन्वयः।

**वा०र०—** आद्यपक्षद्वयस्योभयमिति तृतीयपक्षाविशेष इत्यत आह **तत्रापि प्रत्येकेति** । आद्यद्वयं प्रत्येकमेकैकविषयम् । तृतीयपक्षस्तु मिलितोभयविषय इति भेदं इत्यर्थः । **वादिप्रतिवादिसंमत्येति** । अल्पाच्तरतया वादिपदस्य पूर्वप्रयोगः । प्रतिवादिसंमत्या वादिसंमत्या चेति क्रमेणेति योज्यमिति ज्ञेयम् । **निर्विकल्पकज्ञानमिति** मूलानुसारेण निर्विकल्पकेतीति पाठः स्वरसः । बुध्या विवेकेन प्रतीकोपादानमित्यप्याहुः । किं वोभयमित्याद्युपपादयति **उभयेति** । क्रमेणाश्रयासिध्यादित्रिकमुपपादयन्नवतारयति **रजतपुरोवर्त्येकतेति** । **पुरोवर्तीति** । निर्विकल्पकं च रजतस्मृतिश्च ताभ्यामित्यर्थः । निर्विकल्पकमितीति तु इदमिति वेदनेनाभिन्ने रजतवेदन इति संबन्धः । विप्रतिपत्तावपीति द्वितीयानन्तरं चशब्दः पूरणीयः । **तदुभयेति** । निर्विकल्पकस्मृतिरूपोभयेत्यर्थः । भेदाभेदविवादप्रकारं स्वाभिमतं दर्शयति **तदुभयसमुत्थमिति** । सविकल्पकस्येदमिति वेदनाभिन्नस्य रजतवेदनस्याभेदवादिसंमतत्ववत् । तादृशसविकल्पकयोरिदं रजतमिति वेदनयोर्भेद इति भेदवादिसंमतत्वं प्रतीयते । तन्न संभवति । तथा च सति पूर्वोत्तरविरोधात् । किन्तु सविवादभेदाभेदमित्यत्र सविकल्पकेदंरजतवेदनयोरभेद इत्येवाभिप्रेतम् । भेदस्तु कारणीभूतवेदनयोरेव न तु कार्यवेदनं नामास्तीति विवेकेनेदं योजनीयमिति भावः ।

**स०व्र०—** **रजतस्मरणमिति** । भ्रमकारणविशेषणज्ञानरूपमित्यर्थः । **व्याघातश्चेति** । प्रमाणविरोधश्चेत्यर्थः । बाध इति यावत् । रजतपुरोवर्त्येकताज्ञाने याथार्थ्यस्य बाधितत्वात् । अथवा रजतपुरोवर्त्येकताज्ञानत्वस्यायथार्थवृत्तिव्याप्यत्वेनायथार्थत्वप्रात्या तत्र याथार्थ्यसाधने व्याघात इत्यर्थः । अत एव 'नातियत्नस्य विक्षेपादेव युज्यते' इत्यत्र नियामको रतिमांश्चेति व्याहतमित्युक्तम् । नियमनस्य विक्षेपाविनाभूतत्वात् विक्षेपस्य च रतिविरोधात् । अतो विरोधव्याप्योक्तावपि व्याहत्युक्तिरुपपन्नेति ध्येयम् ।

**विठ्ठ०—** अत्रानुमाने पक्षतावच्छेदकस्यैव निरूपयितुमशक्यत्वात् नेदमनुमानं युक्तमित्याशयेन शङ्कते **नन्वत्रेति** । **निर्विकल्पकज्ञानमिति** । शुक्तित्वाद्यसाधारणाकारं परित्यज्य केवलमिदमित्याकारं ज्ञानमित्यर्थः । **किंवोभयम्** इत्यत्र गृहीतभेदमित्युपस्कर्तव्यम् । **एकताज्ञानमिति** । सविकल्पकमिदं रजतमित्येकं ज्ञानमित्यर्थः । **ज्ञानद्वयं** ग्रहणस्मरणार्थकम् । वाद्याश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्चेति । शुक्तिरजतयोस्तादात्म्यज्ञानरूपान्यथाख्यातिर्नेति वदता रजतपुरोवृत्त्येकताज्ञानानङ्गीकारादाश्रयासिद्धिः तदङ्गीकारेऽपसिद्धान्तः तस्य च याथार्थ्य(ज्ञान)साधने व्याघातः प्रमाणबाधः रजतपुरोवृत्त्येकताज्ञाने याथार्थ्यं प्रमाणबाधितमिति । एवमुभयवाद्यभ्युपगतं ज्ञानद्वयं प्रदर्श्य विवादविषयं दर्शयति **तथेति** । ज्ञानद्वित्वं साधयितुमुपक्रम्यैकत्वाङ्गीकारे व्याहतिरिति केत्यभिप्रायः । अविवेचितविशेषं भ्रमत्वाभिमतप्रत्ययत्वं इह पक्षतावच्छेदकं तत्र विशेषविकल्पविशेषेण दूषणाभिधानेऽनुमानमात्रोच्छेदः स्यादित्याशयेन परिहरति **मैवमित्यादिना** । अत्रैवं व्याचक्षते अस्ति तावत् पुरोवृत्तिविषयं इदमित्याकारकं निर्विकल्पकज्ञानं सदृशपुरोवृत्तिनिर्विकल्पसन्दर्शनजनिता देशान्तरीयरजतविषयिणी स्मृतिः (तथा रजतार्थिनः प्रवृत्तिहेतुभूतमगृहीतविवेकं प्रागुक्तनिर्विकल्पकज्ञानं सदृशपुरोवृत्तिनिर्विकल्पकदर्शनजनिता देशान्तरीयरजतविषयिंणी स्मृतिः) तथा रजतार्थिनः प्रवृत्तिहेतुभूतमगृहीतविवेकं प्रागुक्तनिर्विकल्पकस्मरणरूपज्ञानद्वय-





मेवेत्यख्यातिवादिनां मतमन्यथाख्यातिवादिमते तु तत्समुत्थमिदं रजतमिति सविकल्पकं ज्ञानं प्रवृत्तिहेतुभूतमिति । तथाचैवमिदमिति निर्विकल्पकज्ञानं तस्माद्भिन्नं रजतस्मरणमिति ज्ञानद्वयमगृहीतविवेकं प्रवर्तकमिति तदुभयसमुत्थं रजतपुरोवृत्त्येकताविषयं एकमेव सविकल्पकज्ञानं प्रवर्तकमित्येवमिदमिति वेदनात् सविवादभेदाभेदमिदं रजतमिति वेदनं तथाप्युभयवाद्यभ्युपगतानुगतपक्षतावच्छेदकं किं यत्रोक्तविकल्पदोषाभावः इत्यत आह **तत्र विप्रतिपन्नाविति**। विद्याधीशस्वामिचरणा एवं व्याचक्षते पुरोवृत्तिज्ञानरजतस्मृतिभ्यां जन्ये इदमिति वेदनाभिन्ने पुरोवृत्तिनि रजतत्वादिजातिवैशिष्ट्यावगाहिनि रजतवेदने ख्यातिवादिनां विप्रतिपत्तावपि उक्तनिर्विकल्पकस्मृत्योरेव प्रमुषितभेदत्वेऽन्यथाख्यातिवादिनां विप्रतिपत्तावपि तदुभयस्वरूपमात्रे कस्यापि तावन्न विवाद इत्याह **अस्ति तावदिति** । एवं केवलमुभयसंमताकारं प्रदर्श्य तद्विवादविषयाक्रान्ततया तदेव दर्शयति **तथेति** । तदुभयसमुत्थं सविकल्पकमिदमिति वेदनाभिन्नरजतवेदनमस्तीत्येकः न तादृग्वेदना किन्तु तत्कारणत्वे न तवाप्यावश्यकं निर्विकल्पकस्मृतिरूपवेदनाद्वयं तदेव प्रमुषितभेदमेवेत्यन्यः एवमेव भेदाभेदवादोऽत्राभिमतः न तु तदुभयसमुत्थ-सविकल्पकरजतवेदने इदमिति वेदनाद्भेदाभेदविवादः असदनुवादापत्तेः उच्यते इत्यादि पूर्वग्रन्थेन विमतौ चेत्याद्युत्तरग्रन्थेन विरोधापत्तेश्च । अत एवोत्तरत्राभेद एव अख्यातिवादिभिः समर्थनीयोऽन्यथाख्यातिवादिभि-रपाकर्तव्यश्चेत्येतावदेव वक्ष्यतीति द्रष्टव्यम् । तत्समुत्थेत्यत्र तच्छब्दपरामर्शविषयप्रदर्शनाय प्रवृत्ते नास्ति चेत्यादि पूर्वग्रन्थेन विज्ञानस्वरूपं वादिमतेन दर्शितं तथेत्यनेन तु प्रतिवादिमतेनेति द्रष्टव्यम् । नन्वेतावता किं पक्षनिष्कर्ष इत्यतो वाद्यभिमतप्रमुषितभेदत्वप्रतिवाद्यभिमतेदं वेदनाभिन्नसविकल्पकरजतज्ञानत्वयोस्तदभिमतकार्यकारणत्वादीना-मविवक्षोभयसंमतेदंरजतावगममात्रस्य पक्षत्वे न कोऽपि दोष इत्याशयेनाह **तत्रेति** । ननु भिन्नस्याभिन्नस्य वा तादृशावगमस्य पक्षत्वे उक्तदोषानतिवृत्तिः अवगमसामान्यस्यानुगतावच्छेदकाभावात् न पक्षत्वमित्यतोऽनुगत-पक्षतावच्छेदकमाह **इदं रजतमित्यादीति** । ननु प्रवर्तकप्रत्ययो भिन्नत्वाभिन्नत्वाकार एव विप्रतिपत्तेः विप्रतिपन्नाकारेणैव पक्षीकारो युक्त इत्यत आह **न हीति** । कुतो नेत्यत आह **मा हि भूदिति** । नित्यः शब्दः अनित्यः शब्दः इति अग्निमान् पर्वतः अनग्निमान् पर्वत इति विप्रतिपन्नाकारेण पक्षीकारे यथा योगमाश्रयासिद्ध्यपसिद्धान्त-बाधादिप्रकृतदूषणानुषङ्गात् अनुमानमुद्रायाः भङ्गः स्यात् सा मा भूदित्येवमर्थं न विप्रतिपन्नाकारेण पक्षीकारः क्रियत इत्यर्थः।

**चषकः**— घटादिप्रत्ययानामपि विशेषादर्शनदशायां दर्शितसन्देहास्कन्दिततया सिद्धसाधनाद्यापत्ते-रभिमतधर्मावच्छिन्नविशेष्यताकत्वेन विमतेः पक्षतावच्छेदकतामभिधित्समानः शङ्कते **नन्विति** । **पुरोवर्ति-निर्विकल्पकज्ञानमिति** । इदं रजतमिति ज्ञानमेकत्र द्वयमितिरीत्येदंत्वरजतत्वे नावगाहत एव तथा सति निर्धर्मितावच्छेदकतया नेदंरजतमिति बाधाप्रतिबध्यत्वप्रसङ्गेन तद्दशायामपि तदापत्तेः । किन्तु विशिष्टे वैशिष्ट्यमितिरीत्येदंत्वावच्छिन्ने रजतत्ववैशिष्ट्यावगाहितैवोपेयेति तादृशप्रतीतिहेतुभूतविशेष्यतावच्छेदक-प्रकारकज्ञानविधयोपेतव्येदंत्वप्रकारकज्ञानमेव शुक्तित्वाप्रकारकतामात्रेण निर्विकल्पकमित्युपचर्यत इति भावः । **रजतस्मरणमिति** । विशिष्टज्ञानरूपभ्रमहेतुभूतविशेषणज्ञानरूपमित्यर्थः । तादृशमपि ज्ञानमूरीक्रियत इति





वैय्यात्येनोक्तौ । **अपसिद्धान्त इति** । **व्याघात इति** । याथार्थ्यव्यतिरेकव्याप्यतदेकताज्ञानत्वोपगमे साध्याभाव-व्याप्यरूपप्रतिरोधापरपर्यायविरोध इत्यर्थः । विरोधोऽपि फलतः प्रतिरोध एवेति दीधितिकारोक्तेः । समाधत्ते **अस्ति तावदित्यादि** । दर्शितकोटिद्वयप्रकारतानिरूपिता या इदं रजतमित्यादिसमानविभक्तिकपदप्रयोग-हेतुत्वावच्छिन्नविशेष्यता तया प्रत्यासत्त्या ज्ञानत्वावच्छिन्नस्यैव पक्षतावच्छेदकत्वोपगमान्न क्षतिरित्याशयः ।

**गूढ०**— असिद्ध्यादिना पक्षं दूषयितुं विकल्पयति **नन्वत्रेति** । **रजतपुरोवर्त्येकताज्ञानमिति** । रजत-पुरोवर्तिनोरेकताज्ञानमित्यर्थः । **तत्राद्येति** । यद्यपि निर्विकल्पकज्ञाने तद्वति तत्प्रकारकत्वरूपयथार्थत्वाभावान्न सिद्धसाधनं तथापि भ्रमभिन्नज्ञानत्वस्य दिशेष्यावृत्त्यप्रकारकस्य वा तत्र सत्त्वात् सिद्धसाधनत्वमिति द्रष्टव्यम् । यद्यपि च स्मरणे तद्वति तत्प्रकारकानुभवत्वरूपयाथार्थ्यभावस्तथाप्यनुभवत्वस्य प्रमात्वाप्रवेशात्सिद्धसाधनमिति ज्ञेयम् । **वाद्याश्रयासिद्धत्वमिति** । परेणैकज्ञानस्यैवानङ्गीकारात्तस्य पक्षत्वे वादिमते आश्रयासिद्धत्वमित्यर्थः । **अपसिद्धान्त इति** । प्राभाकराचार्यैः एकताज्ञानस्यानङ्गीकारात्तदङ्गीकारेऽपसिद्धान्त इत्यर्थः । **व्याघातश्चेति** । रजतपुरोवर्त्येकताज्ञानस्यायथार्थत्वात्तस्य यथार्थत्वे साध्यमाने व्याघात इत्यर्थः । नैयायिकमतमालम्ब्य पक्षसिद्धं समर्थयते **मैवमिति** । **तत्समुत्थमिति** । निर्विकल्पकरजतस्मृतिभ्यां समुत्पन्नमित्यर्थः । **सविवादभेदाभेदमिति** । सविवादौ भेदाभेदौ यस्य तत्तथोक्तं रजतवेदनं इदमिति वेदनात् सविवादभेदाभेद इत्यन्वयः । अथवा स्वमतानुसारेण पक्षं समर्थयते **मैवमिति** । **तत्समुत्थमिति** । निर्विकल्परजतस्मृत्योरगृहीतसंसर्गरूपत्वात्ताभ्यां समुत्थमित्युच्यत इत्यर्थः । यद्यपि तन्मते सर्वथा निष्प्रकारकज्ञानाभावस्तथापि सामान्यप्रकारकज्ञानमेव निर्विकल्पकशब्देन विवक्षितं तच्चास्त्येव तन्मत इति भावः । एवमपि पक्षः कथं समर्थित इत्यत आह **तत्रेति** । तथाच सामानाधिकरण्य-व्यवहारकारणमिदंरजतमित्यवगममात्रं पक्ष इत्युक्तं भवति । तच्चैकं वा ज्ञानद्वयं वेत्यन्यदेतदिति भावः । ननु विप्रतिपन्नाकारेणैव पक्षीकारः किं न स्यादित्यत आह **न हीति** । कुतो नेत्यत आह **मा भूदिति** । अन्यथा अनुमानोच्छेदः स्यादिति भावः ।

**प्रदीपः**— **न** हीत्यनुमानमुद्राया भङ्गो मा भूदित्येवमर्थं विप्रतिपन्नाकारेणैव पक्षीकारः क्वचिदपि न भीत्यन्वयः । यद्वा **मा भूदिति** अन्यथेत्यर्थः ।

**३४४ सु०— किञ्च सिद्धस्यैव पक्षीकरणम् । विमताकारस्यापि सिद्धत्वे किं साध्येत । विमतौ च भेदाभेदौ विभ्रमगोचरविवादावसरे । भेदे हि वेदनयोरिदं वेदनं पुरोवर्तिमात्रगोचरम् । न रजतवार्तां वेत्ति । रजतवेदनमपि रजतमात्रग्राहि नेदमिति पुरोवर्तिनमनूद्य तस्यैव रजततामिदं रजतमिति विदधाति । किन्तु रजतमित्येव यस्य कस्यचिद्रजतत्वमनुसन्धत्ते । तच्च न प्रमाणविरुद्धमिति क्वान्यथाख्यातिः । अतस्तद्वादिभिरभेद एव वक्तव्योऽपाकर्तव्यश्चाख्याति-वादिभिरित्यस्त्येव विप्रतिपत्तिः । ततो विप्रतिपन्नाकारं परित्यज्येदं रजतमित्यवगम-**





**मात्रपक्षीकारे न कश्चिद्दोषः । कथमन्यथा ख्यातिवादीदं रजतमिति ज्ञानस्य पुरोवर्तिविषयत्वसाधनाय साधनमुपन्यस्यन्नितो दोषाद्विमुच्येत ।**

**बिन्दुः— सिद्धस्यैव पक्षीकरणमिति** । उभयवादिसिद्धत्वं पक्षतावच्छेदकेऽपेक्षितं, विप्रतिपन्नधर्मश्चातथात्वान्न पक्षतावच्छेदक इत्यर्थः । नन्वन्यथाख्यातौ विप्रतिपत्तिस्तथा च भेदाभेदयोः कुतो न पक्षतावच्छेदकत्वमित्यतोऽन्यथाख्यातिविषयापि विप्रतिपत्तिर्ज्ञानस्वरूपस्योभयवादिसिद्धत्वाद्विवक्षितविवेके भेदाभेदयोरेव विश्राम्यतीत्याशयेन सपरिकरमुपपादयति **विमतौ चेत्यादिना** ।

**परि०—** न केवलं सर्वत्रानुमानमात्रे प्रागुक्तदोषापातादेवमपक्षीकारः किन्त्वनुमानवैयर्थ्यापातादपीत्याह **किञ्चेति** । नन्वस्त्वेवं तथापि मिथो भिन्नमिदं ज्ञानमिति वाऽन्योन्यमभिन्नं ज्ञानमिति वा न पक्षीकर्तुं शक्यम् । भेदाभेदयोर्विमतत्वाभावात् । यथार्थत्वस्यैव साध्यत्वेन यथार्थमिदमयथार्थं वेत्येव विप्रतिपत्तेः । तथाच प्रागुक्तदोषस्तदवस्थ एवेत्यत आह **विमतौ चेति** । **विभ्रमेति** । भ्रान्तिरूपज्ञानमस्ति न वेति भ्रमविषयचिन्ताप्रस्ताव इत्यर्थः । विमतत्वं व्यनक्ति **भेदे हीत्यादिना** । इदं वेदनं इदमंशज्ञानम् । नेदमित्यत्र नेति नञो विदधातीति क्रिययाऽन्वयः । तत्र हेतुः **रजतमात्रग्राहीति** । **तद्वादिभिः** अन्यथाख्यातिवादिभिः । अभेद एवेति वेदनयोरित्यनुषङ्गः । **विप्रतिपत्तिरिति** । वेदनयोर्भेद इत्यनुषञ्जनीयम् । भेदाभेदयोरिति वा योज्यम् । भ्रान्तित्वसाधकेनाप्येवमेव पक्षीकर्तव्यम् । नो चेदुक्तदोषस्तस्यापीत्याह **कथमन्यथेति** । **ख्यातिवादी** भ्रान्तिरस्तीतिवादी । साधनमनुमानप्रयोगम् । **इतो दोषात्** वाद्याश्रयासिद्धत्वादिप्रागुक्तदोषात् ।

**यादु०— इतो दोषादिति** । पक्षविकल्परूपदोषादित्यर्थः । अत्राद्ये सिद्धसाध्यता । द्वितीये बाधः । तृतीये उभयम् । चतुर्थे प्रतिवाद्याश्रयासिद्धत्वम् । पञ्चमे वाद्याश्रयसिद्धत्वमपसिद्धान्तो व्याघातश्चेति दोषविवेको द्रष्टव्यः ।

**वं०प०— विमताकारस्यापीति** । विप्रतिपन्नाकारेण पक्षीकरणे सिद्धत्वं प्राप्तमित्यर्थः । भेदाभेदयोर्विमतत्वमुपपादयितुमाह **भेदे हीत्यादिना** । उक्तरीत्या ग्रहणस्मरणात्मकतया ज्ञानयोर्भेदे हि सति क्वान्यथाख्यातिरिति संबन्धः । तदुपपादयति **इदं वेदनमित्यादिना** । साधनमुपन्यस्य सन्नित्यनेन वादित्वं सूचितमिति ज्ञेयम् ।

**आनन्दः—** विप्रतिपन्नाकारेणैव पक्षीकारे दूषणान्तरमाह **किञ्चेति** । विमताकारेण कुतो न पक्षीकरणमिति चेत् तथा सति विमताकारस्यापि सिद्धत्वं वक्तव्यम् । एवं च साध्यभावापात इत्याह **विमतेति** । ननु विमताकार एव नास्तीत्यत आह **विमताविति** । ननु विगीतप्रत्ययस्य भेदविषयत्वेनायथार्थत्वात्तं पक्षीकृत्य





तस्य यथार्थत्वे साध्यमाने प्रमाणविरोधस्तथाच प्रमाणविरुद्धार्था प्रतिज्ञा कथं सेत्स्यतीत्यत आह **विभ्रमेति** । यद्वा भेदाभेदौ विमतावित्युक्तम् । अभेदस्य विभ्रमविषयत्वे तत्सिद्धत्वात्तथाच कथमभेदस्य विमतत्वमित्यत आह **विभ्रमेति** । **अत इति** । चन्दनयोर्भेदान्यथाख्यात्यसंभवादित्यर्थः । **तद्वादिभिरिति** । अथान्यथाख्यातिवादिभिरित्यर्थः । **अन्यथेति** । विप्रतिपन्नाकारं विहाय इदंरजतमित्यवगममात्रं चेन्न पक्षीक्रियत इत्यर्थः । इतो दोषात्कथं किमुच्यत इत्यन्वयः । **इतो दोषादिति** । ज्ञानद्वयं वा पक्ष उत एकज्ञानं वेत्यपि विकल्पपूर्वोक्तदोषादित्यर्थः ।

**कं०रा०**— **अत इति** । इदंवेदनरजतवेदनयोर्भेदेऽन्यथाख्यात्यभावादन्यथाख्यातिवादिभिर्वेदनयोरभेद एव वक्तव्योऽख्यातिवादिभिश्च स एव निराकर्तव्य इत्यस्त्येव भेदाभेदयोर्विमतिरित्यर्थः । **कथमन्यथेति** । अन्यथा विप्रतिपन्नाकारं विहायोभयसिद्धरूपेण पक्षीकार इत्यस्यानङ्गीकारे इदंरजतमिति ज्ञानस्य पुरोवर्तिविषयत्वसाधनाय हेतुमुपन्यस्यन्नन्यथाख्यातिवादी इतो दोषात्पक्षविकल्पदोषात्कथं विमुच्यते ? न कथञ्चिदित्यर्थः ।

**श्रीनिधि०**— नन्विदं रजतमिति ज्ञानं पुरोवर्ति रजतयोरभेदं विषयीकरोति न वेति विप्रतिपत्तिः । नन्विदं रजतज्ञानयोर्भेदाभेदयोरित्यत आह **विमतौ चेति** । **अख्यातिवादिभिरिति** । ख्यातिर्विशिष्टज्ञानम् । भ्रमस्थले तन्नास्तीति वादीत्यर्थः ।

**वा०चं०**— न केवलं विमताकारस्य पक्षत्वेऽतिप्रसङ्गः किन्तु साध्यस्वरूपस्यैवालाभ इत्याह **किञ्चेति** । ननु स्यादिदं यद्यनित्यत्वाग्निमत्त्वादिवदभेदाभेदयोर्विमतिविषयत्वं स्यात् । न चैवम् । किन्तु यथार्थत्वायथार्थत्वयोरेव तत् । एवं च भेदाभेदयोः पक्षकोटिनिवेशोऽपि नातिप्रसङ्गः । नापि साध्यस्वरूपालाभः । यथार्थत्वस्यैव साध्यत्वसंभवादित्यत आह **विमतौ चेति** । **अख्यातिवादिभिरिति** । संसर्गभेदख्यात्यभाववादिभिरित्यर्थः । उक्तप्रकारं परेणाप्यङ्गीकारयति **कथमिति** । **साधनमिति** । शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वतद्विषयव्यवहारजनकज्ञानत्वादिरूपं साधनमित्यर्थः । **इतो दोषादिति** । आद्ये पुरोवर्तिनिर्विकल्पस्य पुरोवर्तिविषयकतायाः सिद्धत्वात्सिद्धसाधनता । द्वितीये रजतस्मरणस्य पुरोवर्तिविषयकत्वाभावस्यैव सिद्धत्वाद्बाधः । तृतीये निर्विकल्पकांशे सिद्धसाधनता स्मरणांशे बाधः । चतुर्थे प्रतिवाद्याश्रयासिद्धिः । पञ्चमे वाद्याश्रयसिद्धिरपसिद्धान्तो व्याघातश्चेत्यर्थः ।

**विठ्ठ०**— न केवलमनुमानत्वे प्रागुक्तदोषापातादपक्षीकारेऽपि त्वदनुमानवैयर्थ्यापातादपीत्याह **किञ्चेति** । ननु भिन्नः प्रत्यय इति वा पक्षीकर्तुं शक्यत एव याथार्थ्यस्यैवात्र साध्यत्वेन विप्रतिपत्तिग्रस्तत्वात् भिन्नत्वादिप्रकारस्य चाविप्रतिपन्नत्वात् । तथैव पक्षीकारे प्रागुक्त एव दोष इत्यतो भ्रमरूपयथार्थज्ञानमस्ति न वेति भ्रमविषयचिन्ताप्रस्तावे भेदाभेदयोरपि विप्रतिपत्तिविषयत्वात् भिन्नत्वाद्याकारेण पक्षीकर्तुं शक्यते इत्याशयेन भेदाभेदयोरपि विप्रतिपत्तिविषयमुपपादयति **विमतावित्यादिना** । **तच्च न प्रमाणविरुद्धमिति** । नेदं रजतमिति





बाधकप्रमाणेन पुरोवृत्तिनि इदंत्वं वा यस्य कस्यचिद्रजतस्य रजतत्वं विरुद्धमित्यर्थः । **अत इति** । बाधकज्ञानविरुद्धत्वादन्यथाख्यातिवादिभिः वक्तव्यत्वादिदमित्यस्माद्रजतमिति ज्ञानस्यान्यत्वेऽन्यथाख्यात्यनुपपत्तेरभेद एव वक्तव्य इत्यर्थः । किञ्च भ्रमवादिना तत्साधनाय एवमेव पक्षीकर्तव्यं अन्यथा तस्याप्युक्तदोष इत्याह **कथमन्यथेति** । **साधनमिति** । पुरोवृत्तिविषयः पुरोवृत्तिशुक्तौ प्रवृत्तिप्रयोजकज्ञानत्वात् पुरोवृत्तिविषयकव्यवहारजनकज्ञानत्वादित्यादि साधनोपन्यासं कुर्वन् कथं पूर्ववत् पक्षं विकल्प्याद्ये सिद्धसाधनता द्वितीये बाधः तृतीये उभयं चतुर्थे प्रतिवाद्याश्रयासिद्धिः पञ्चमे वाद्याश्रयासिद्धिरपसिद्धान्तश्चेत्यादिदोषात् विमुच्यत इत्यर्थः ।

**गूढ०**— विप्रतिपन्नाकारेणैव पक्षीकारे दूषणान्तरमाह **किञ्चेति** । विमताकारेण कुतो न पक्षीकरणमिति चेत् । तथा सति विमताकारस्यापि सिद्धत्वं वक्तव्यम् । एवं च साध्याभावापात इत्याह **विमतेति** । ननु विमताकार एव नास्तीत्यत आह **विमताविति** । ननु विगीतप्रत्ययस्याभेदविषयत्वेनायथार्थत्वात्तं पक्षीकृत्य तस्य यथार्थत्वे साध्यमाने प्रमाणविरोधस्तथाच प्रमाणविरुद्धार्था प्रतिज्ञा कथं सेत्स्यतीत्यत आह **विभ्रमेति** । यद्वा भेदाभेदौ विमतावित्युक्तम् । अभेदस्य विभ्रमविषयत्वे तत्सिद्धत्वात्तथाच कथमभेदस्य विमतत्वमित्यत आह **विभ्रमेति** । **अत इति** । विदनयोर्भेदे अन्यथाख्यात्यसंभवादित्यर्थः । **तद्वादिभिरिति** । अन्यथाख्यातिवादिभिरित्यर्थः । **अन्यथेति** । विप्रतिपन्नाकारं विहाय इदंरजतमित्यवगममात्रं चेन्न पक्षीक्रियत इत्यर्थः । इतो दोषात्कथं विमुच्यत इत्यन्वयः । **इतो दोषादिति** । ज्ञानद्वयं वा पक्ष उतैकज्ञानं वेत्यपि विकल्प्य पूर्वोक्तदोषादित्यर्थः ।

**प्रदीपः**— **ततो विप्रतिपन्नेति** । अयथार्थव्यवहारहेतुत्वेन न मतो यः संमतप्रत्ययो धर्मीति नाश्रयासिद्धिः पुरोवर्तिनि वृत्तिबोधः फलं रजतमिदमिति सामानाधिकरण्यव्यपदेशस्तथा वृद्धप्रवृत्तिश्चास्तीति तावत्सर्वजनीनं तत्सामानाधिकरण्यप्रत्ययो रजतमिदमित्येवंरूपो भवति नान्यथेत्यर्थः । कथमन्यथेत्याद्ये पक्षत्रये सिद्धसाध्यता चतुर्थे प्रतिवाद्यनाश्रयासिद्धत्वं पञ्चमे वाद्याश्रयासिद्धतापसिद्धान्तो व्याघातश्चेति द्रष्टव्यम् ।

**३४९ सु०— अथ रजतार्थिनः शुक्तिकायां प्रवृत्तौ हेतुभूतं ज्ञानं मया पक्षीक्रियत इति चेन्मोच्चैर्वोचः परोऽपि श्रोष्यति । ईश्वरज्ञानेन सिद्धसाधनता स्यादिति चेत्तवापि बाधः कथं न स्यात् । प्रकृतप्रवृत्तिहेतुरनीश्वरज्ञानं पक्षीक्रियत इति चेन्ममापि तथैव स्यात् । त्वयेश्वरानभ्युपगमाद् व्यर्थं विशेषणमिति चेत्तर्हि मां प्रति तवापि कथं न व्यर्थम् । तथाऽपि व्याप्तिज्ञानेन सिद्धसाधनतेति चेत्तत्रैव तव बाधप्रसङ्गः । इदंज्ञानादगृहीतविवेकं रजतज्ञानमिति विप्रतिपत्तिविषयमुद्धाटयामीति चेत्सममेतन्ममापि ।**

**बिन्दुः— व्याप्तिज्ञानेन सिद्धसाधनमिति**। यद्यपि प्रवृत्तिहेतुभूतं ज्ञानं पक्षत्वेन विवक्षितं तच्च न केवलमिदं रजतमित्याकारं तस्य प्रवृत्त्यहेतुत्वात्। किन्तु तादृशपुरोवर्तिविषयेष्टतावच्छेदकप्रकारकज्ञानं पक्षतावच्छेदकज्ञानमेव, ततश्च यद्यद्रजतं तत्तदिष्टसाधनमिति व्याप्तिज्ञानानन्तरमिष्टसाधनत्वव्याप्य-रजतत्ववदिदमिति परामर्शजन्येष्टसाधनतानुमितिरिच्छाद्वारा प्रवृत्तिहेतुः, तथाच व्याप्तिज्ञानेन सिद्ध-साधनत्वमसंभव्येव। तथापि लिङ्गोपहितलैङ्गिकभानवादिमते परामर्शविषयस्यानुमितावपि भानात्तन्मता-भिप्रायेण व्याप्त्यंशे सिद्धसाधनमित्यभिप्रेत्येदमुक्तमिति ध्येयम्।

**परि०—** ख्यातिवादी स्वमते पक्षीकरणप्रकारमाशङ्कते **अथेति**। **मेति**। उच्चैर्मा वोचः परस्यापि श्रवणं भविष्यतीत्यपहासः। मयापि तथैव पक्षीकरणात्। इदं रजतमित्यादिसामानाधिकरण्यव्यवहार-कारणमित्युक्तत्वादिति भावः। यद्वा तादृक्प्रवृत्तिहेतुज्ञानमिदमिति ज्ञानं च भवतीत्यख्याति-वादिनोपगमात्तदयथार्थमिति त्वया साधने तव बाधः स्यादिति भावः। यद्वा यत्र शुक्तिका तदधस्ताद्रजतमिति श्रुतवतः शुक्तिकाज्ञानमपि रजतार्थिप्रवृत्तिहेतुर्भवतीति तदयथार्थमितिसाधने तव बाधः स्यादिति भावः। वस्तुतस्तु तादृशं ज्ञानम् अगृहीतभेदं ज्ञानद्वयमेवेति मदुक्तमेवागतमिति भावो बोध्यः। ननूक्तव्यवहारादिकारणं ज्ञानं यथार्थमित्युक्ते कार्यमात्रकारणमीश्वरज्ञानमादाय सिद्धसाधनमिति शङ्कते अन्यथाख्यातिवादी **ईश्वरेति**। अख्यातिवादी उत्तरमाह **तवापीति**। ख्यातिवादिन इत्यर्थः। तेनाप्येवमेव पक्षीकृत्यायथार्थमिति साधनीयत्वादिति भावः। ख्यातिवादी शङ्कते **प्रकृतेति**। रजतार्थिनः शुक्तिकायां प्रवृत्तिहेतुरित्यर्थः। अख्यातिवाद्याह **ममेति**। कथं न व्यर्थमित्यनन्तरं स्वरूपकथनार्थं चेन्ममापि तथास्त्विति योज्यम्। उभयसिद्धप्रयोजनवत्त्वं विशेषणदाने तन्त्रम्। न तु प्रयोजनस्योभय-सिद्धत्वम्। एवञ्च मन्मते बाधपरिहारेण त्वां प्रति उपरञ्जकत्वेनार्थवत्त्वं विशेषणस्येति यदि तर्हि तत्समं ममापि। त्वां प्रति सिद्धसाधनतापरिहारेण मां प्रति चोपरञ्जकत्वेनार्थवत्त्वमस्त्विति वा योज्यम्। ख्यातिवादी शङ्कते **तथापीति**। ईश्वरज्ञानेन सिद्धसाधनतानिरासेऽपि प्रवृत्तेरिष्टसाधनताज्ञानसाध्यत्वा-त्तस्य चानुमितिरूपत्वेन यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानसाध्यत्वात् प्रकृतप्रवृत्तिहेतुज्ञानं यथार्थमित्युक्ते प्रवृत्तिहेतुः यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानमपि भवतीति तेन सिद्धसाधनतेत्यर्थः। अख्यातिवाद्याह **तत्रैवेति**। तवान्यथाख्यातिवादिनः। उक्तप्रवृत्तिहेतुज्ञानमयथार्थमित्युक्ते बाधः स्यात्। व्याप्तिज्ञानस्य याथार्थ्यादिति भावः। **इदंज्ञानात्** इदमंशज्ञानादित्यर्थः। **विप्रतिपत्तिविषयं** विशेष्यतया विप्रतिपत्तिविषयम्। पक्षमिति यावत्। **ममापीति**। विगीतः प्रत्ययो यथार्थ इत्यनुमानप्रयोक्तुर्ममापि तथैव पक्षोऽस्त्वित्यर्थः।

गु०दी०— **तथापि व्याप्तिज्ञानेन सिद्धसाधनतेति चेत्** इत्यत्र रजतार्थिनः शुक्तौ प्रवृत्तिहेतुभूतज्ञानमिति पक्षतावच्छेदकमात्रसंपादनेऽपि यथार्थप्रत्ययत्वादिसाध्यं साधनं च प्राचीनमेव । अत्र च यः प्रत्ययः स यथार्थ इति व्याप्तिज्ञानेऽपि याथार्थ्यस्य परेणानङ्गीकारात् कथं सिद्धसाधनतेति चेत्सत्यम् । नैतदनुमानजनितं ज्ञानं रजतार्थिनः शुक्तिप्रवृत्तिजनकम् । किन्तु प्रवृत्तिजनकज्ञानस्य याथार्थ्यमात्रसाधकम् । प्रवृत्तिजनकं तु ज्ञानमिदमिष्टसाधनं रजतत्वात् यद्रजतं तदिष्टसाधनं तत्तदिष्टसाधनं यथा संप्रतिपन्नमित्यानुमानिकमिष्टसाधनताज्ञानमेव वक्तव्यम् । तत्र चानुमानिकं ज्ञानं प्रवर्तकमिति वदताऽपि साध्यमात्रज्ञानस्य प्रतिज्ञामात्ररूपत्वेन प्रवृत्त्यनङ्गत्वाद्यद्रजतं तदिष्टसाधनमितीष्टसाधन-तावगाहिव्याप्तिज्ञानमेव प्रवृत्तिजनकं ज्ञानं वक्तव्यम् । तस्य च याथार्थ्यं परस्याप्यभिमतमिति तेन सिद्धसाधनतायाः गूढाभिसन्धिना ग्रन्थकृता विवक्षितत्वादित्यर्थः ।

यादु०— **तवापीति** । इदं चायथार्थत्वस्य साध्यतामभिप्रेत्य न तु पुरोवर्तिविषयकत्वरूपसाध्याभिप्रायेण । तस्येश्वरज्ञानेऽपि सत्त्वेन बाधासंभवात् । **तथाऽपि व्याप्तिज्ञानेनेति** । प्रकृतप्रवृत्तिहेत्वनीश्वरज्ञानस्य पक्षत्वेऽपि इदमिष्टसाधनमित्यनुमितिद्वारा प्रकृतप्रवृत्तिहेतुभूतं रजतत्वमिष्टसाधनत्वव्याप्यमिति यद्व्याप्तिज्ञानमस्मदादीनां तेन सिद्धसाधनतेत्यर्थः । न चोक्तव्याप्तिज्ञानं प्रवृत्तिहेतुभूतेष्टसाधनतानुमितिजनकतयाऽन्यथासिद्धं न प्रवृत्तिजनकमिति वाच्यम् । तर्हीदं रजतमिति ज्ञानस्यापि पक्षज्ञानतया लिङ्गज्ञानतया वा तादृशानुमितिजनकस्यान्यथासिद्धतया न प्रवृत्तिजनकत्वमित्याश्रयासिद्ध्यापत्तेः । अतो यथाकथञ्चित्प्रवृत्तिहेतुत्वं विवक्षितमिति वक्तव्यम् । तच्चोक्तव्याप्ति-ज्ञानेऽप्यस्तीति सिद्धसाधनतैवेत्यभिप्रायः ।

वं०प०— **परोऽपि श्रोष्यतीति** । श्रुत्वाऽपि सोऽपि तथैव वदिष्यतीति भावः । ननु न परेणैवं वक्तुं शक्यम् । रजतार्थिनः शुक्तिकायां प्रवृत्तिहेतुभूतं ज्ञानमीश्वरज्ञानमपि भवति । तस्य सर्वोत्पत्तिमन्निमित्तकारणत्वात् तत्र च याथार्थ्यं सिद्धमिति सिद्धसाधनता स्यादित्याशङ्क्ते **ईश्वरज्ञानेनेति** । अख्यातिवाद्युत्तरमाह **तवापीति** । ख्यातिवादिनः । ख्यातिवादी शङ्कते **प्रकृतेति** । अख्यातिवाद्युत्तरमाह **ममेति** । ख्यातिवादी शङ्कते **तथाऽपीति** ।

**आनन्दः**— ननु मया प्रकारान्तरेणैव पक्षस्य क्रियमाणत्वान्नैतद्दोषप्रसर इत्याशङ्क्ते **अथेति** । सामान्येन समाधत्ते **मोच्चैरिति** । अथान्यथाख्यातेरधुनैव निरस्तत्वेन रजतार्थिनः शुक्तिकायां प्रवृत्तिहेतुज्ञानमसिद्धमित्याशयः । ननु तवैवं पक्षीकरणमयुक्तं ईश्वरज्ञानस्यापि प्रवृत्तिहेतुत्वात्तस्य च यथार्थत्वाङ्गीकारेण सिद्धसाधनत्वादित्याशङ्क्ते **ईश्वरज्ञानेनेति** । तर्हि त्वयाऽप्ययथार्थत्वसाधनायैवंरूपज्ञानपक्षीकारे तवापि बाधोऽपरिहार्य इत्याह **तवापीति** । तर्हि त्वयाऽप्ययथार्थत्वे साध्यमाने मां प्रति पक्षविशेषणानर्थक्यं स्यादेवेत्याह **तर्हीति** । ननु यदि प्रवृत्तिहेतुभूतं अनीश्वरज्ञानं पक्षीक्रियते तदा सिद्धसाधनता स्यादेव । तथाहि प्रवृत्तिर्हि इष्टसाधनताज्ञानसाध्या इष्टसाधनताज्ञानं चानुमितिरूपं तच्च व्याप्तिज्ञानसाध्यं व्याप्तिज्ञानं चेष्टसाधनताज्ञानद्वारा प्रवृत्तिहेतुभूतम् अनीश्वरज्ञानं भवत्येव । तस्य च यथार्थत्वाङ्गीकारासिद्धसाधनत्वमिति शङ्कते **तथापीति** । तर्हि तथाविधमनीश्वरज्ञानं पक्षीकृत्य अयथार्थत्वे साध्यमाने यथार्थोक्तविधज्ञानमादाय बाधः स्यादेवेत्याह **तत्रैवेति** । व्याप्तिज्ञान एवेत्यर्थः ।

**कं०रा०— अथेति** । रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिहेतुभूतज्ञानं मयाऽन्यथाख्यातिवादिना रजतत्वप्रकारकत्वावच्छिन्नशुक्तिविशेष्यकत्वसाधनाय स्वविषयताव्यधिकरणप्रकारकत्वसाधनाय वा पक्षीक्रियत इत्यर्थः । शुक्तिविषयप्रवृत्तिहेतुज्ञानमित्येवोक्ते शुक्त्यर्थिताजन्यशुक्तिप्रवृत्तिहेतुशुक्तित्वप्रकारकशुक्तिविशेष्यकज्ञानस्यापि पक्षत्वप्राप्त्यांऽशतो बाधः स्यात्तन्निरासाय रजतार्थिताजन्येत्युक्तम् । रजतार्थिताजन्यप्रवृत्तिहेतुज्ञानमित्येतावदुक्ते रजतार्थिताजन्यरजतविषयप्रवृत्तिहेतुरजतत्वप्रकारकसत्यरजतविशेष्यकज्ञानस्यापि पक्षत्वप्रास्त्यांऽशतो बाधः स्यात् तन्निरासाय शुक्तिविषयकेत्युक्तम् । ज्ञानपदं तु तादृशव्यधिकरणप्रकरण(?)प्रकारकेच्छायाः प्राभाकरमतेऽपि सत्वात्तामादाय यदंशतः सिद्धसाधनं प्रसक्तं तन्निरासायात्र च रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिजनकत्वे सति सविषयकत्वादिति वा तादृशप्रवृत्त्यसाधारणकारणत्वादिति वा हेतुरभिप्रेतो न तु रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिजनकज्ञानत्वादिति । येन दृष्टान्तत्वेनाभिप्रेतायां व्यधिकरणप्रकारकेच्छायां साधनवैकल्यं, हेतोरेव पक्षतावच्छेदकत्वेन हेतुसाध्यसामानाधिकरण्यग्राहकेणैव पक्षतावच्छेदकसामानाधिकरण्येन साध्यस्य सिद्धत्वात् सिद्धसाधनमिति च स्यात् । **मोच्चैरिति** । रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिहेतुभूतं ज्ञानं मया पक्षीक्रियत इत्युच्चैर्मा वोचः । उच्चैरुक्तं चेत्परोऽपि श्रोष्यति । श्रुत्वा च याथार्थ्यसाधनाय मयाऽपि तादृशज्ञानमेव पक्षीक्रियत इति ब्रूयादित्यर्थः । ननु परेण तादृशं ज्ञानं पक्षीकर्तुं न शक्यते । तथात्वे ईश्वरज्ञानस्यापि रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिहेतुत्वेन पक्षतया तत्र च याथार्थ्यरूपसाध्यस्य सिद्धत्वेन सिद्धसाधनत्वप्रसङ्गादिति शङ्कते **ईश्वरेति** । **तवापीति** । ईश्वरज्ञानस्यापि तादृशत्वेन पक्षतया तत्र च रजतत्वप्रकारकत्वावच्छिन्नशुक्तिविशेष्यकत्वरूपसाध्याभावात्तवापि बाधः कथं न स्यात् । स्यादेवेत्यर्थः । **प्रकृतेति** । रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिहेतुजीवज्ञानमित्यर्थः । **मां प्रतीति** । तथा च त्वदीयेऽन्यथाख्यातिसाधकेऽनुमाने पक्षेऽनीश्वरविशेषणस्य मां प्राभाकरं प्रत्युपरञ्जकत्वेन त्वां प्रति त्वीश्वरज्ञाने बाधवारणार्थत्वेन प्रयोजनवत्वाद्विशेषणत्वं सङ्गच्छते । उभयसिद्धप्रयोजनवत्त्वं हि तत्र तन्त्रं न त्वेकस्य प्रयोजनस्योभयसिद्धिरपीत्येव त्वया समाधेयम् । तच्च मदीये याथार्थ्यसाधकेऽनुमाने पक्षेऽनीश्वरविशेषणस्य त्वां प्रतीश्वरज्ञाने सिद्धसाधनवारणार्थत्वेन मां प्रति तूपरञ्जकत्वेन प्रयोजनवत्त्वान्ममापि सममिति भावः । **तथाऽपीति** । अनीश्वरेति विशेषणेनेश्वरज्ञानमादाय प्रसक्तसिद्धसाधनपरिहारेऽपि यद्रजतं तदिष्टसाधनमिति व्याप्तिस्मारकस्येदंरजतमितिज्ञानस्य व्याप्तिज्ञानतज्जन्येष्टसाधनतानुमितिभ्यां व्यवहितस्य रजतार्थिताजन्यशुक्तिविषयकप्रवृत्तिहेतुत्वेऽनुमितिमात्रव्यवहितस्य यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानस्य सुतरामुक्तप्रवृत्तिहेतुत्वेन पक्षत्वात्तत्र च याथार्थ्यरूपसाध्यस्य सिद्धत्वात्सिद्धसाधनतेत्यर्थः । **तत्रेति** । व्याप्तिज्ञान एवान्यथाख्यातिं साधयतो रजतत्वप्रकारकत्वावच्छिन्नशुक्तिविशेष्यकत्वादिरूपसाध्याभावाद्बाधप्रसङ्ग इत्यर्थः ।

**श्रीनिधि०— परोऽपि श्रोष्यतीति** । तदेव ज्ञानं स्वस्यापि पक्षो भविष्यतीति भावः । **अनीश्वरज्ञानमिति** । जीवाधिकरणं ज्ञानमित्यर्थः । तथा च नाप्रसिद्धविशेषणतेति केचित् । **तथापि व्याप्तिज्ञानेनेति** । ननु रजतार्थिनः शुक्तौ प्रवृत्तिहेतुभूतं ज्ञानमिति पक्षतावच्छेदकमात्रसंपादनेऽपि यथार्थप्रत्ययत्वादिति साध्यसाधने पूर्वं निर्दिष्टे एव । तथा च यः प्रत्ययः स यथार्थ इति व्याप्तिज्ञानेऽपि याथार्थस्यान्यथाख्यातिवादिना परेणानङ्गीकारात्





कथं सिद्धसाधनं चेत्सत्यम् । आदौ प्रत्यक्षेण शुक्तिं रजतत्वेन प्रतीत्यानन्तरं रजतमिदमिष्टसाधनरजतत्वादिति रजतस्येष्टसाधनतामनुमाय रजतार्थी तत्र प्रवर्तते । तत्र यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानस्यानुमिति-हेतुत्वेनानुमितिद्वारा प्रवृत्तिहेतुत्वात् । यथार्थत्वाच्च तत्र सिद्धसाधनता स्यात् । रजतार्थिनः पुरोवर्तिशुक्तिकायां प्रवृत्तिहेतुभूतज्ञानस्य पक्षीकृतत्वादिति ।

**वा०चं०**— अथ पूर्वपक्षी सामानाधिकरण्यव्यवहारकारणज्ञानस्य पक्षत्वमख्यातिवादिनाऽपि त्याजयितुं तत्समानयोगक्षेमं तथाऽपीत्युक्तदूषणान्तरप्रसक्तिमत्पक्षान्तरमाशङ्कते **अथेति** । शुक्तिप्रमायामंशतः सिद्ध-साधनतावारणाय रजतार्थिन इति विशेषणम् । तद्बलाच्च रजतार्थिताजन्यत्वं प्रवृत्तेर्लभ्यते तेनोभयार्थिनः शुक्तिप्रवृत्तिहेतुशुक्तिप्रमायां सिद्धसाधनतेत्यलग्नकं भवति । रजतप्रमायामंशतो बाधवारणाय **शुक्तिकायामिति** । रजतेच्छाजन्यशुक्तिप्रवृत्तिजनकरजतेच्छायामंशतः सिद्धसाधनतावारणाय **ज्ञानमिति** । न चैवमेव यथार्थत्व-साधनाय मया पक्षनिर्देशः क्रियत इति वाच्यम् । स्वतन्त्रोपस्थितेष्टभेदाग्रहस्य विसंवादिप्रवृत्तिहेतुत्वं वदता त्वया कारणतावच्छेदकत्वेनेष्टज्ञानस्य तथात्वानभ्युपगमात् । इदंज्ञानस्य प्रवृत्तिमात्रहेतुत्वाभ्युपगमेऽपि तद्याथार्थ्यस्य मां प्रति सिद्धतया सिद्धसाधनता स्यादित्याशयः शङ्कितुः । तर्हि भेदाग्रहहेतुत्ववादिनं मां प्रत्युक्तहेतुत एवेष्टज्ञान-हेतुत्वासिद्ध्याऽऽश्रयासिद्धिः । इदंज्ञानस्य प्रवृत्तिहेतुत्वेऽपि तस्य पुरोवर्तिविषयत्वस्य मां प्रति सिद्धतया सिद्धसाधनतेति समम् । यदि च कार्याभावव्याप्याभावप्रतियोगित्वरूपप्रयोजकत्वमेवात्र हेतुत्वमभिमतं तच्च कारणतावच्छेदकेष्टज्ञानेऽपि तवापि सममिति तस्य पुरोवर्तिविषयकत्वसाधने न कोऽपि दोष इति मतं तर्हि तस्यैव मया त्वां प्रति याथार्थ्यसाधने न कोऽपि दोष इत्याशयेन सोपहासमाह **मोचैरिति** । **ईश्वरेति** । ईश्वरज्ञानस्य कार्यमात्रकारणत्वादिति भावः । अत्रोत्तरोत्तरशङ्कनीयपरिहरणीयाभिसन्धिना पूर्वपूर्वशङ्कापरिहारा इति द्रष्टव्यम् । **अनीश्वरेति** । अत्र जीवज्ञानमित्यर्थः । यथाश्रुतेऽप्रसिद्धविशेषणत्वेऽपि वक्तव्ये व्यर्थविशेषणत्वमात्रोक्तेरयुक्तेः । एवं व्याख्याने च पक्षतावच्छेदकाप्रसिद्ध्यभावेन व्यर्थविशेषणतामात्रोक्तेरुपपत्तिरिति कश्चित् । तन्न । व्यावर्त्या-प्रसिद्धिप्रयुक्ताप्रसिद्धविशेषणस्थले व्यर्थविशेषणत्वस्यापि संभवेऽप्रसिद्धविशेषणत्वमेव वक्तव्यमिति । निर्बन्धा-योगात् । व्यावर्त्याप्रसिद्धिरूपप्रयोजकस्याश्रयासिद्धिसंपादकत्वरूपदूषकताबीजस्य च साम्येनैक्योक्त्यैवोपपत्तौ व्यर्थविशेषणत्वाप्रसिद्धविशेषणत्वयोर्द्वयोरपि पृथगवश्यावक्तव्यत्वात् । विशेषणव्यावर्त्याप्रसिद्धौ व्यावर्त्याभावेन तद्वैयर्थ्यस्यैवोपपन्नत्वाच्च । अत एव ठक्कुरादौ सामान्यलक्षणाद्यजन्येत्यादिविशेषणानां व्यावर्त्याप्रसिद्धिप्रयुक्त-वैयर्थ्यमेव व्याख्यातमिति यथाश्रुतेनैवोपपन्नत्वात् । अत्रोक्तरीत्या पक्षकोटिप्रविष्टहेतुत्वस्य प्रयोजकत्वरूपतया प्रवृत्तिहेतुभूतेष्टसाधनतानुमितिहेतुभूतस्य यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानस्य प्रवृत्तिप्रयोजकतया तस्य च याथार्थ्यस्य सिद्धतयांशे सिद्धसाधनतेति शङ्कते **तथाऽपीति** । नन्वेवं साधनद्वयस्याप्यनुपपत्त्या न निर्णय इत्यतः पक्षं परमुखेनैव निष्कर्षयितुं व्यवहारप्रवृत्तिप्रकारपरित्यागेन पक्षान्तरमुत्थापयति **इदंज्ञानादिति** ।

**वा०र०**— **त्याजयितुमिति** । न केवलं मया सामानाधिकरण्यव्यवहारकारणत्वेन पक्षता वाच्याऽपि तु अन्यथाख्यातिवादिना पुरोवर्तिविषयत्वसाधनावसरे इदंरजतमिति ज्ञानं उक्तरूपेणैव पक्षीकर्तव्यमित्युक्ते यदि तत्र

प्रकारान्तरं त्वयोच्यते तर्हि तदनुपपन्नमिति प्रतिपादयिष्यामि कथञ्चिद्विवक्षायां त्वहमपि तदेव वक्ष्यामीत्याशयः। इतो दोषाद्विमुच्यत इति पूर्ववाक्यस्य। तत्र अन्यथाख्यातिवादिना त्वत्पक्षे तदनुपपत्तिरिति प्रदर्शनाय प्रकारान्तरशङ्का अथेत्यनेन कृता। अख्यातिवादिना तु नेदं प्रकारान्तरम्। तत्त्वे वा साम्यं युक्तमिति मोचैरित्यनेन दूषितम्। परन्तु अन्यथाख्यातिवादिना प्रकारान्तरे उक्ते तदेव चेदख्यातिवादिनाऽप्यङ्गीकृतं तदा पूर्वोक्तसामानाधिकरण्यव्यवहार-कारणत्वाकारेण पक्षत्वं परित्यक्तं भविष्यत्येवेत्याशयः। तत्समानयोगक्षेममिति तस्याचातुर्यसूचनायापरपक्षे-ऽननुकूलस्य स्वपक्षे अनुकूलस्यैव पक्षान्तरस्य वक्तव्यत्वात् तथा पक्षान्तरे स्वयं दूषिते तत्परित्यागेन पक्षान्तरं वदताऽदुष्टस्यैव वक्तव्यत्वाच्चेत्याशयः। पूर्वोक्तत्यागेनाख्यातिवादिना यदि प्रकारान्तरमङ्गीकृतं तर्हि व्याप्तिज्ञानेन सिद्धसाधनतां प्रतिपादयिष्यामीत्याशयः। पूर्वपक्षिण इत्याशयेन तथापीत्युक्तदूषणान्तरप्रसक्तिमदित्युक्तम्। यद्यपि ईश्वरज्ञानेनेत्युक्तेति वाच्यम्। तथापि ईश्वरज्ञानेनेत्युक्ताक्षेपापेक्षया तथापीत्युक्ताक्षेपस्य सदलत्वाभिप्रायेण तस्यैवोक्तिः। अत एव ईश्वरज्ञानेनेत्यादिकं सामान्यत एवोक्त्वा व्याप्तिज्ञानेनेत्यत्र तथापीत्यधिकमुक्तं मूल इति बोध्यम्। **रजतार्थिताजन्यत्वमिति**। रजतार्थितामात्रजन्यत्वमित्यर्थः। अन्यथा सिद्धसाधनतापरिहारायोग इति ज्ञेयम्। इतःपरं अत्रोच्यते यत्तावदित्येतद्व्याख्यानपर्यन्तटीका व्याकर्तव्यास्ति। अत्रान्यथाख्यातिग्रन्थे ठक्कुरादिग्रन्थोऽप्यवलोकनीयः। तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यत्वमिति द्वितीयविप्रतिपत्तिविचारावसरे पक्षधरे। न च समानाधिकरणपदजन्यपदाद्युपादानमेव तदर्थं क्रियतामिति वाच्यम्। परमते व्यर्थविशेषणत्वादिति विशेषण-माशंक्य व्यावर्त्याभाव उक्तस्तत्रत्यठक्कुरग्रन्थस्तु तज्ज्ञानविषयकसमानाधिकरणज्ञानाजन्यसामान्यप्रत्यासत्य-जन्यजन्यज्ञानं ग्राह्यत्वं तज्ज्ञानविषयकजन्यज्ञानाजन्यसामान्यप्रत्यासत्यजन्यज्ञानेत्यादि विवक्ष्यतामित्यर्थः। **व्यर्थेति**। यद्यपि सिद्धसाधनवारकत्वेन सार्थकं तद्वत्येव व्याप्तीत्यादि तथापि सामान्येत्यादिविशेषणस्याप्रसिध्या वैयर्थ्यमितीति। रुचिदत्तादिकमादिपदार्थः। तथाहि तदुक्तिः। न च तज्ज्ञानविषयकसामानाधिकरणेत्यादिकानामपि तज्ज्ञानविषयकजन्यज्ञानेत्यादिका च।

**स०व्र०**— शुक्तौ रजतार्थिप्रवृत्तिहेतुभूतज्ञानपक्षीकरणे प्रत्ययत्वेन हेतुना याथार्थ्यसाधनमयुक्तं प्रवृत्तेरिष्टसाधनताज्ञानसाध्यत्वेनेष्टसाधनताज्ञानस्य च रजतमिष्टसाधनं रजतत्वादित्यनुमानजन्यत्वेन तत्र यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानस्य वक्तव्यत्वात्तस्यापि शुक्तौ रजतार्थिप्रवृत्तिहेतुत्वेन पक्षत्वापत्त्या तस्य च याथार्थ्यस्य सिद्धत्वेन सिद्धसाधनतेत्याह **तथाऽपि व्याप्तिज्ञानेनेति**। **विप्रतिपत्तिविषयमिति**। विप्रतिपत्तिधर्मिणमित्यर्थः।

**विठ्ठ०**— अन्यथाख्यातिवादी स्वमते पक्षीकरणप्रकारमाशङ्कते **अथेति**। मोचैर्वोच इत्यपहासोक्तिः मयापि तथैव पक्षीकर्तुं शक्यते इति भावः। उक्तरीत्या पक्षीकारे कार्यमात्रं प्रति कारणभूतेश्वरज्ञानमादाय सिद्धसाधनतेत्यन्यथाख्यातिवादी शङ्कते **ईश्वरेति**। **तवापीति**। भ्रमवादिनस्तवाप्येवमेव पक्षीकृत्य भ्रमत्वस्यासाधनीयत्वात् बाधः स्यादिति भावः। **अनीश्वरेति**। विशेषणेनेश्वरज्ञाने सिद्धसाधनतापरिहारेऽपि सर्वस्यापि प्रवृत्तेः इष्टसाधनताज्ञानादेः पुरस्सरत्वात् पुरोवृत्तिरजतेऽपि प्रवृत्तिहेतुभूतेष्टसाधनतावबोधनार्थं यद्रजतं





तदिष्टसाधनमिति व्याप्तिज्ञानस्यापेक्षितत्वात् व्याप्तिज्ञानमपि प्रकृतप्रवृत्तिहेतुः अनीश्वरज्ञानं यथार्थं भवतीति तेन व्याप्तिज्ञानेन सिद्धसाधनता स्यादित्यन्यथाख्यातिवादी शङ्कते **तथापि व्याप्तिज्ञानेनेति** । तर्हि व्याप्तिज्ञानस्य यथार्थत्वादेवान्यथाख्यातिवादिना प्रकृतप्रवृत्तिहेतुज्ञानं अयथार्थमिति साधने उक्तरूपव्याप्तिज्ञानमादाय बाधः स्यादित्याह **तत्रैवेति** । **अगृहीतविवेकमिति** । ज्ञानस्यैकत्वेन विवेकाभावादेवागृहीतविवेकत्वमिति शङ्कितु-र्भ्रमवादिनोऽभिप्रायः परमते सत्यपि विवेके तदग्रहणात्तं प्रत्येवमुक्तिरिति ध्येयम् । विप्रतिपत्तिविषयं विवादास्पदं पक्षमिति यावत् ।

**चषकः— अथ रजतार्थिन इति** । रजतत्त्वावच्छिन्ननिरूपितविषयिताघटितधर्मावच्छिन्नप्रवृत्तिनिष्ठ-जन्यतानिरूपितज्ञानवृत्तिजनकतावच्छेदकीभूतरजतत्त्वावच्छिन्ननिरूपकताकविषयितायां पुरोवर्तिनिष्ठविषयता-निरूपितत्वसाधन एव तात्पर्यमत्र विभावनीयम् । गुरूणां व्यधिकरणप्रकारकं ज्ञानमेव नास्तीति सिद्धान्तः । इच्छाप्रवृत्त्योस्तु व्यधिकरणप्रकारकत्वं तदङ्गीकृतमेवेत्याकरदर्शिनां निरूढः पन्थाः । इत्थं च रजतत्वावच्छिन्न-शुक्तिवृत्तिनिरूपकताकेच्छाप्रवृत्तिनिष्ठविषयितयोरपि रजतत्वावच्छिन्ननिरूपितविषयितात्वेन तदुभयवृत्तिजनकता-जन्यतयोरवच्छेदकत्वं गुरुमतसिद्धमपि भवत्येवेति नान्यतरदिशाश्रयासिद्ध्याद्यवतार इति भावः । षष्ठीसप्तम्योः ज्ञानान्विताधेयताविषयितार्थत्वमुपेत्य रजतार्थिनिष्ठा या शुक्तिकाविषयिणी प्रवृत्तिस्तद्धेतुभूतं ज्ञानमिति यथाश्रुता-थर्दिर्यत्र इमे रजतशुक्ती इति समूहालम्बनात् समूहालम्बनरूपतादृशेच्छाततस्तादृश्येव प्रवृत्तिस्तत्र सिद्धसाधनताया अशक्यवारणतापातात् । अथागृहीतासंसर्गकस्यागृहीतभेदस्य वा ग्रहणस्मरणात्मकज्ञानद्वयस्य प्रवृत्तिहेतुतामुपेयुषां गुरूणां मते तादृशप्रवृत्तिहेतुज्ञानत्वसामानाधिकरण्येन ग्रहणात्मकज्ञाने पुरोवर्तिविषयकतासिद्ध्या सिद्धसाधनतापत्त्या तादृशप्रवृत्तिहेतुज्ञानत्वावच्छेदेन इतरस्यान्यथाख्यातिवादिनः सिषाधयिषिततोपेया । इत्थं च तेनैव समूहालम्बनस्थलीयक्षतेरपि नावतारः । अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धेरविरोधित्वान्नोक्त-विवक्षावश्यं भाव इति चेन्न । तुल्यदिशा ख्यातिवादिनापि तथैव सुवचतया ईश्वरज्ञानेन सिद्धसाधनता स्यादित्युत्तरग्रन्थानवतारप्रसङ्गेनोक्तदिशा समाहितेरयोगात् । प्राचीनमतेऽभिहितक्षतेर्दुर्वारत्वाच्च । **तवापीति** । अन्यथाख्यातिवादिनोऽपीत्यर्थः । **बाध इति** । रजतत्वावच्छिन्ननिरूपितायामीश्वरज्ञानवृत्तिविषयितायां पुरोवर्ति-व्यक्तिनिष्ठविषयतानिरूपितत्वरूपसाध्याभावाद्बाध इत्यर्थः । व्याकर्तारस्तु इदं चायथार्थत्वस्य साध्यतामभिप्रेत्य न तु पुरोवर्तिविषयकत्वरूपसाध्याभिप्रायेण तस्येश्वरज्ञाने सत्त्वेन बाधाभावादिति सङ्गमयन्ति । **त्वया** प्राभाकरेण । मीमांसकानामीश्वरद्वेषित्वादिति भावः । **मां प्रति** प्राभाकरं प्रति । **तवापि** अन्यथाख्यातिवादिनोऽपि । तथापि प्रकृतप्रवृत्तिहेत्वनीश्वरज्ञानस्य पक्षत्वेऽपि । **व्याप्तिज्ञानेनेति** । इदमिष्टसाधनं रजतत्वादित्यनुमानाङ्गभूतव्याप्ति-गोचरज्ञानस्य प्रकृतपक्षतावच्छेदकीभूतप्रवृत्तिहेतुत्वाक्रान्ततया तस्य च याथार्थ्यादिति भावः । दर्शितव्याप्ति-ज्ञानस्यान्यथासिध्या न पक्षतावच्छेदकाक्रान्ततेत्युक्तौ तु तुल्यदिशा पक्षीकृतज्ञानेऽपि तथात्वस्य सुवचतया आश्रयासिद्धिप्रसङ्ग इति भावः । प्रयोजकसाधारणहेतुत्वस्य पक्षतावच्छेदकघटकतायां तूक्ततादवस्थ्यमिति भावः । **तत्रैव** व्याप्तिज्ञान एव । तादृशे उक्तदिशा व्यवहारप्रवृत्तिघटितपक्षतावच्छेदककल्पयोर्दूषिततया निर्णीतिप्रसङ्ग





इत्यतः परलपनेनैव तन्निर्णिनीषुः भङ्ग्यन्तरमाशङ्क्य प्रतिबन्दीं परिगृह्णाति **इदंज्ञानादित्यादि** । विप्रतिपत्तिविषयं विमतिनिरूपितविशेष्यतारूपविषयताविशेषितं पक्षम् । तथा चेदमंशावगाहिज्ञानप्रतियोगिकभेदप्रकारकग्रहनिष्ठ-स्वनिरूपितविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावविशेषितज्ञानत्वस्यैवोभयसंप्रतिपन्नस्य पक्षतावच्छेदक-त्वोरीकारात्सर्वसाञ्जस्यमिति भावः ।

**गूढ०**— ननु मया प्रकारान्तरेणैव पक्षस्य क्रियमाणत्वान्नैतद्दोषप्रसर इत्याशङ्कते **अथेति** । साम्येन समाधत्ते **मोचैरिति** । अन्यथाख्यातेरधुनैव निरस्तत्वेन शुक्तिरजतार्थिनः शुक्तिकायां प्रवृत्तिहेतुज्ञानमसिद्धमित्याशयः । ननु तवैवं पक्षीकरणमयुक्तं ईश्वरज्ञानस्यापि प्रवृत्तिहेतुत्वात्तस्य च यथार्थत्वाङ्गीकारेण सिद्धसाधनत्वादित्याशङ्कते **ईश्वरज्ञानेनेति** । त्वयाऽप्ययथार्थत्वसाधनायैवंरूपज्ञानपक्षीकारे तवापि बाधोऽपरिहार्य इत्यत आह **तवापीति** । तर्हि त्वयाऽप्ययथार्थत्वे साध्यमाने मां प्रति पक्षविशेषणानर्थक्यं स्यादेवेत्याह **तर्हीति** । ननु यदि प्रवृत्तिहेतुभूतं अनीश्वरज्ञानं पक्षीक्रियते तदा सिद्धसाधनता स्यादेव । तथाहि प्रवृत्तिर्हि इष्टसाधनताज्ञानसाध्या इष्टसाधनताज्ञानं चानुमितिरूपं तच्च व्याप्तिज्ञानसाध्यं व्याप्तिज्ञानं चेष्टसाधनताज्ञानद्वारा प्रवृत्तिहेतुभूतम् अनीश्वरज्ञानं भवत्येव । तस्य च यथार्थत्वाङ्गीकारात्सिद्धसाधनत्वमिति शङ्कते **तथापीति** । तर्हि तथाविधमनीश्वरज्ञानं पक्षीकृत्यायथार्थत्वे साध्यमाने यथार्थोक्तविधज्ञानमादाय बाधः स्यादेवेत्याह **तत्रैवेति** । व्याप्तिज्ञान एवेत्यर्थः ।

**प्रदीपः**— **मोचैरिति** । अन्यार्थिनोऽन्यत्र प्रवृत्तौ ज्ञानस्य हेतुत्वं नास्ति अन्यथाख्यातेरधुनैव निरस्तत्वादिति भावः ।

**३४६ सु०— किञ्च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात्सम्मतवत् । अत्रापि पूर्ववद्विमतिविषयो विवेचनीयः ।**

**परि०**— **पूर्ववदिति** । इदंज्ञानादगृहीतविवेकं रजतज्ञानमित्येवंरूपेणेत्यर्थः ।

**वं०प०**— **अत्रापीति** । इदंज्ञानादगृहीतविवेकं रजतज्ञानमित्यर्थः । **रजतविषयमिति** । पुरोवर्ति-विषयत्वेऽन्यथाख्यात्यापत्तिरित्याशयः ।

**आनन्दः**— अनुमानान्तरं चाह **किञ्चेति** । ननु पक्षीकृतरजतज्ञानम् इदंज्ञानात् भिन्नमभिन्नं वा । नाद्यः । न्यायमते तस्यासिद्धेस्तेन ज्ञानद्वयानङ्गीकारात् । न द्वितीयः । वाद्यसिद्धेरित्यत आह **अत्रापीति** । इदंज्ञानादगृहीत-विवेकं रजतज्ञानमिति पूर्ववदित्यर्थः ।

**वा०चं०**— रजतज्ञानस्य रजतविषयकत्वे साधितेऽन्यथाख्यात्यभावसिद्धिरित्याशयेनानुमानान्तरमाह **किञ्चेति** । रजतस्मरणमात्रस्य पक्षत्वे सिद्धसाधनता । रजतपुरोवर्त्येकताज्ञानस्य पक्षत्वे वाद्याश्रयासिद्धिरित्यतो





विवादाध्यासितमित्युक्तम् । नन्वत्रापि विमतिविषयतावच्छेदकानिरुक्तिरेवेत्यत इदंज्ञानादित्युक्तविमतिविषयोद्घाटनप्रकारोऽत्रापि द्रष्टव्य इत्याह **अत्रापीति** ।

**स०व्र०— विवादाध्यासितमिति** । न च रजतज्ञानस्य रजतविषयत्वोपपादनमसङ्गतं याथार्थ्यसाधनस्यैव प्रकृतत्वादिति वाच्यम् । यत्सन्निकृष्टकरणेनेत्यादिवक्ष्यमाणविषयत्वस्य रजते सिद्धौ तज्ज्ञाने याथार्थ्यस्यैव सिद्धत्वादिति भावः ।

**वि०ट०**— रजतज्ञानयाथार्थ्ये अनुमानान्तरमाह **किञ्चेति** । रजतज्ञानस्य शुक्तिविषयत्वे तु याथार्थ्यं लभ्यते इति भावः ।

**गूढ०**— अनुमानान्तरं चाह **किञ्चेति** । ननु पक्षीकृतरजतज्ञानं इदंज्ञानाद्भिन्नमभिन्नं वा । नाद्यः । न्यायमते तस्यासिद्धेः तेन ज्ञानद्वयानङ्गीकारात् । न द्वितीयः । वाद्यसिद्धेरित्यत आह **अत्रापीति** । इदंज्ञानादगृहीतविवेकं रजतज्ञानमिति पूर्ववदित्यर्थः ।

**३४७ सु०— स्यादेतत् । किमिदं रजतज्ञानं नाम रजतस्य ज्ञानं रजतज्ञानम्, रजतं च तद् ज्ञानं चेति वा, रजतशब्दोल्लेखिज्ञानं वा, रजतार्थिनः प्रवृत्तिहेतुज्ञानं वा, रजतमिति ज्ञानं वा । न प्रथमः । षष्ठ्यर्थस्य विषयविषयिभावव्यतिरेकेणासंभवात्साध्याविशिष्टत्वात् । न द्वितीयः उभयासिद्धेः । ज्ञानस्य निराकारत्वात् । न तृतीयः उल्लेखार्थस्य विषयत्वेऽसिद्धेः; तज्ज्ञानजनितस्मृतिमात्रयोनित्वे पूर्वपदमात्रज्ञानेनापि रजतपदस्य स्मरणसंभवेन व्यभिचारात् । न चतुर्थः । विवेकाग्रहवादिनामिदमितिज्ञानस्यापि शुक्तिकालम्बनस्य तद्धेतुत्वेन व्यभिचारात् । न पञ्चमः । पूर्वोक्तपक्षाबहिर्भावादिति ॥ मैवम् । अन्यथाख्यातिवादिना किं शुक्तिकाज्ञानं शुक्तिविषयमन्यथाख्यातिरुच्यते । उत रजतज्ञानं शुक्तिविषयम् । आद्ये न नो विवादो यथार्थख्यातित्वात् । द्वितीये रजतज्ञानशब्देन योऽर्थः परेण विवक्ष्यते स एवास्माकं हेतुर्भविष्यति । तथा हि न तावदाद्यः कल्पः परेणाङ्गीकर्तुमुचितः व्याघातप्रसङ्गात्, शुक्तिरजतयोरभेदप्रसङ्गाच्च । न द्वितीयः अनभ्युपगमात् । न तृतीयः कदाचिच्छुक्तिकाज्ञानस्यापि अन्यथासङ्केतितरजतशब्दस्मृतिहेतुत्वसंभवेन अन्यथाख्यातित्वप्रसङ्गात् । नापि चतुर्थः । यत्र शुक्तिका तदधस्ताद्रजतमस्तीति वाक्यं श्रुतवतः शुक्तिज्ञानमपि रजतार्थिप्रवृत्तिहेतुर्भवतीति तस्याप्यन्यथाख्यातितापातात् । नापि पञ्चमः । प्रागुक्तपक्षाबहिर्भावात् ॥ अतो रजतज्ञानं नामोक्तपक्षेषु किञ्चिदङ्गीकृत्य तद्दोषो वा परिहरणीयः, पक्षान्तरं वोत्प्रेक्षणीयम् । तत्त्वमेव मया हेतूकरिष्यत इति यत्किञ्चिदेतत् ।**

**बिन्दुः**— रजतज्ञानत्वादिति हेतुं परिष्कर्तुं पूर्वपक्षमुत्थापयति **स्यादेतदित्यादिना** । **उभयासिद्धेरिति** । द्वितीये पक्षे हि रजतं च ज्ञानं चेत्युक्त्या रजतात्मकत्वं ज्ञानात्मकत्वं च लभ्यते । तथाच रजताभिन्नज्ञानत्वादित्युक्तं भवति । एवं च उभयवादिमतेऽपि ज्ञानस्य निराकारत्वात्स्वरूपासिद्धि-रित्यर्थः । **तज्ज्ञानजनितस्मृतिमात्रयोनित्वे इति** । तस्य रजतशब्दस्य यत् ज्ञानं तज्जन्या या स्मृतिः रजतस्मृतिः । पदज्ञानस्य पदार्थस्मृतिकारणत्वात् । तन्मात्रयोनित्वं रजतस्मृतित्वासाधारणकारणत्वम् । तच्च संस्कारद्वारा रजतज्ञानस्यास्तीति तत्त्वं हेतुशरीरमित्यर्थः । तज्ज्ञानजनितस्मृतित्वादित्येवोक्ते अन्यतरासिद्धिः । तद्वारणाय विशेष्यांशस्य अनुमित्यौपयिकत्वमेव हेतुविशेषणसार्थकत्वे प्रयोजकं पक्षधर्मतासंपादकस्य च तथात्वमस्त्येव । व्यभिचाराप्रसिद्धिवारकविशेषणमेव सार्थकमित्येतत्तु तद्वादिनां कुलधर्ममात्रमिति । अत्र आत्मादौ व्यभिचारवारणाय मात्रपदम् । तस्य ज्ञानमात्रं प्रति कारणत्वात् । संस्कारे साध्यस्यापि सत्त्वेन ज्ञानत्वोपादानं, स्वरूपकथनार्थं **पूर्वपदेति** । पूर्वं च तत् पदज्ञानं चेति विग्रहः । रजतपदविषयकपूर्वानुभवेनेत्यर्थः । तथाच तज्ज्ञानं नाम रजतपदविषयं पूर्वानुभवरूपं ज्ञानं तज्जनिता स्मृतिः रजतपदविषयैव स्मृत्यनुभवयोः समानविषयत्वेन कार्यकारणभावावधारणात् । तद्योनित्वं पुनः उक्तविधस्य रजतपदविषयकपूर्वानुभवस्येति हेतोस्तत्र सत्त्वात् रजतपदानुभवस्य च पदमात्रविषयत्वेन रजतविषयत्वरूपसाध्याभावाच्च व्यभिचार इत्यर्थः । **व्याघातप्रसङ्गादिति** । रजतज्ञानं पक्षीकृत्य रजतविषयत्वाभावसाधने इत्यर्थः । ननु शुक्तिविषयत्वं साधयामीत्यत आह **शुक्तिरजत-योरिति** । शुक्तिविशेष्यकस्य रजतत्वप्रकारकत्वसाधने अद्याप्यन्यथाख्यातेरसिद्धत्वेन ज्ञानयाथार्थ्यनियमे बाधकाभावात् तादृशज्ञानविषयतयाऽभेदसिद्धिः स्यादिति भावः । **अन्यथासङ्केतितेति** । शुक्तौ सङ्केतितरजतशब्दज्ञानजनितश्रुतिस्मृतियोनिशुक्त्यनुभवस्य यथार्थस्याप्यन्यथाख्यातित्वापत्त्या रजत-विषयत्वाभावे न बाध इत्यर्थः ।

**परि०**— **उल्लेखार्थस्य** उल्लेखशब्दार्थस्य । **तज्ज्ञानेति** । यस्य ज्ञानस्योल्लेखित्वमुच्यते तज्ज्ञानजनिता या स्मृतिः रजतशब्दगोचरस्मृतिः तन्मात्रकारणत्वं रजतशब्दोल्लेखित्वम् । रजतशब्द-स्मृतिमात्रहेतुज्ञानत्वं रजतशब्दोल्लेखिज्ञानत्वमिति फलितार्थः । रजतज्ञानात् संबन्धिदर्शनादिति न्यायेन रजतशब्दस्मृतेर्जननात् । न तु रजतशब्दविषयकत्वमिति मात्रशब्दार्थः । **पूर्वेति** । क्वचिद्वाक्यविशेषे चन्द्रचूडावासरजताचलवासिनेत्यादौ रजतवाचकपदापेक्षया पूर्वं विद्यमानपदश्रवणेन तद्वाक्यपरिचयवतः रजतपदस्य स्मरणं भवति । इति पूर्वपदज्ञानस्य रजतपदस्मरणहेतुज्ञानत्वमस्ति । रजतविषयकत्वं नेति व्यभिचारादित्यर्थः । रजतशब्दस्मारकत्वं रजतशब्दोल्लेखित्वमित्यर्थमुपेत्याह **कदाचिदिति** । **अन्यथा-**





**सङ्केतितेति** । शुक्तिशब्दपर्यायतया सङ्केतितरजतशब्देत्यर्थः । **यत्किञ्चिदेतदिति** । मदीयहेतुखण्डनं यत्किञ्चिन्नातीव दोषावहम् । त्वयापि तस्य निर्वाह्यत्वेनोक्तत्वात् । 'यत्रोभयोस्समो दोष' इति न्यायादिति भावः ।

**गु०दी०— उल्लेखार्थस्य विषयत्वे असिद्धेः** इत्यत्र नामविकल्पे रजतशब्दोल्लेखसद्भावेऽपि रजतत्ववदिदं द्रव्यमित्यादिविकल्पे रजतशब्दोल्लेखाभावेनासिद्धेरित्यर्थः । **तज्ज्ञानजनितस्मृतिमात्रयोनित्व** इत्यत्र तज्ज्ञानेन रजतज्ञानेन जनिता या स्मृतिः रजतपदस्मृतिस्तस्याः योनित्व इत्यर्थः । रजतपदस्मृतिहेतुज्ञानत्व इति यावत् । सुवर्णं रजतं तण्डुलान्वा आदद्यादिति पदान्तरसमभिव्याहृततया अभ्यस्ते वाक्ये पूर्वसंगृहीतसुवर्णपदज्ञानेनाप्युत्तररजत-पदस्मृतिसंभवादिति भावः । **व्याघातप्रसङ्गात्** इत्यत्र अन्यार्थोल्लेख्यन्यालम्बनमन्यथाख्यातिरिति मते शुक्तिविषयत्वं विहाय रजतविषयत्वस्याप्यङ्गीकारे व्याघातापातादित्यर्थः । **शुक्तिरजतयोरभेदप्रसङ्गात्** इत्यत्र प्रवर्तकतया सर्वसंमते सत्यरजतज्ञाने रजतज्ञानविषयस्य पुरोवर्तिन एव रजताभेदस्य दर्शनादिहापि पुरोवर्तिन एव रजतज्ञानविषयत्वे तद्वदेव पुरोवर्तिनि रजताभेदः स्यात् । अन्यथा प्रवृत्तेरेवायोगादित्यर्थः । अविसंवादिप्रवृत्तिजनकदोषानपेक्षसत्यरजतस्थले तयोरभेदेऽपि विसंवादिप्रवृत्तिजनके वैपरीत्यापादकदोषसापेक्षे शुक्तिरजतस्थले नाभेदो वक्तुं शक्यः । तथा सति दोषस्यैव वैयर्थ्यप्रसङ्गात् । तस्मादविचारितरमणीयमेतद्दूषणमिति ज्ञेयम् ।

**यादु०— रजतं च तज्ज्ञानं चेति** । रजताकारं ज्ञानमित्यर्थः । रजतशब्दोल्लेखित्वं नाम रजतशब्दविषयकत्वं वा रजतशब्दस्मृतिहेतुत्वं वेति विकल्प्याद्यं दूषयति **उल्लेखार्थस्येति** । रजतविषयकज्ञानस्य रजतशब्दविषयक-त्वाभावेनासिद्धिरित्यर्थः । यद्यपि रजतशब्दवाच्यमिदमिति नाम सविकल्पकरूपरजतज्ञानस्य रजतशब्द-विषयकत्वमस्ति तथाऽपि पक्षीकृते रजतत्वप्रकारके जातिसविकल्पकरूपे रजतज्ञाने रजतशब्दविषयत्वाभावेना-सिद्धिरुक्तेत्यवधेयम् । द्वितीयं दूषयति **तज्ज्ञानजनितेति** । अत्र तच्छब्देन रजतपरामर्शः तथा च रजतज्ञानजनिता या रजतरूपार्थस्मृतिस्तन्मात्रयोनित्वे तत्कारणत्वमात्रस्य विवक्षितत्वे सतीत्यर्थः । इदं च पक्षीभूते रजतज्ञानेऽस्ति । रजतज्ञानस्य रजतस्मृतिकारणत्वात् । मात्रपदेन पूर्वोक्तस्य विषयत्वस्य व्यावृत्तिः । रजतशब्दविषयकमपि पक्षीभूतं रजतज्ञानं रजतशब्दविषयकस्मृतियोनित्वाद्रजतशब्दोल्लेखीत्युपचर्यते । तादृशमेवोल्लेखित्वं हेतुतया विवक्षितं न साक्षादुल्लेखित्वमतो नासिद्धिरिति भावः । अत्र यद्यपि रजतशब्दस्मृतियोनित्वे विवक्षिते इत्येव वक्तव्यम् । तथापि तज्ज्ञानजनितेति वचनं रजतशब्दस्मृतिं प्रति पक्षीभूतरजतज्ञानस्य योनित्वं 'पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षम' इति वचनात्प्रसिद्धमेवेति दर्शयितुमिति ज्ञातव्यम् । **पूर्वपदज्ञानेनापीति** । कस्मिंश्चिच्छ्लोके रजतादिपदापेक्षया पूर्वं यदि सुवर्णादिपदं निबद्धं तर्हि सुवर्णादिपदस्य पूर्वं विद्यमानस्य ज्ञानेन तदुत्तरस्य रजतादिपदस्य तच्छ्लोकाभ्यासपाटवात्स्मृतिरनुभवसिद्धेति भावः । **व्याघातप्रसङ्गादिति** । बाधप्रसङ्गादित्यर्थः । **अन्यथा-सङ्केतितेति** । रजतशब्दोल्लेखिज्ञानं शुक्तिविषयकमन्यथाख्यातिरित्युक्ते यत्र रजतशब्दः शुक्तावेव सङ्केतितस्तत्र शुक्तिज्ञानस्य रजतशब्दस्मृतिहेतुताऽस्तीति तादृशशुक्तिज्ञानमपि शुक्तिविषयकमन्यथाख्यातिः स्यादित्यर्थः ।





**वं०प०— तद्धेतुत्वेनेति** । रजतार्थिनः प्रवृत्तिहेतुत्वेनेत्यर्थः । **व्याघातप्रसङ्गादिति** । रजतविषयकज्ञानस्य शुक्तिविषयकत्वे विरोधप्रसङ्ग इत्यर्थः । शुक्तिरजतयोः ऐक्याभावे रजतविषयकं ज्ञानं कथं शुक्तिविषयकं स्यादित्यर्थः । तृतीयपक्षे रजतशब्दस्मृतिहेतुज्ञानमेव रजतशब्दोल्लेखिज्ञानत्वं विवक्षितं तत्र दूषणमाह **कदाचिदिति** । **यत्किञ्चिदेतदिति** । स्यादेतदित्यादिना यच्छङ्कते तद्यत्किञ्चित्तुच्छमित्यर्थः ।

**आनन्दः— हेतुं** दूषयितुं विकल्पयति **स्यादेतदिति** । रजतशब्दोल्लेखिज्ञानमित्यत्र रजतशब्दविषयकं ज्ञानमिति वा रजतशब्दज्ञानजनितस्मृतिहेतुज्ञानमिति वा विवक्षितम् । नाद्य इत्याह **उल्लेखेति** । न द्वितीय इत्याह **तज्ज्ञानेति** । एवं च रजतशब्दज्ञानजनितस्मृतिहेतुत्वं पक्षेऽस्ति । एकसंबन्धिदर्शनस्यापरसंबन्धिस्मारकत्वात् । तथाच शुक्लमित्यादिपूर्वपदज्ञाने व्यभिचारः । तत्र हि रजतशब्दज्ञानेन जनिता या रजतशब्दस्मृतिः । तां प्रत्यस्ति हेतुत्वं रजतविषयत्वं तु नास्ति । कदाचिच्छुक्लमित्यादिपूर्वपदज्ञानेनापि प्रकरणवशाद्रजतपदस्मरणसंभवादित्यर्थः । **यथार्थख्यातित्वादिति** । यथार्थत्वादित्यर्थः । **व्याघातप्रसङ्गादिति** । रजतज्ञानं पुनः शुक्तिविषयं चेत् व्याघात इत्यर्थः । षष्ठ्या रजतस्य ज्ञानं प्रति विषयताया उक्तत्वादिति भावः । **शुक्तीति** । रजतस्य ज्ञानं शुक्तिविषयकं चेदित्यर्थः । **कदाचिदिति** । यत्र रजतशब्दशुक्तिकायां सङ्केतितस्तत्र शुक्तिकायां दृष्टायां रजतं स्मरति तदेवेत्यर्थः ।

**कं०रा०— उभयेति** । वादिप्रतिवादिनोरसिद्धेरित्यर्थः । तामेव दर्शयति **ज्ञानस्येति** । ज्ञानस्यार्थाकारत्वे हि रजतं च तज्ज्ञानं चेत्यर्थस्य सिद्धिः स्यात् । तत्तु मतद्वयेऽपि नास्तीत्यसिद्धिरेवेति भावः । **असिद्धेरिति** । रजतज्ञानं प्रति रजतशब्दस्य विषयत्वाभावादिति भावः । ननु रजतशब्दस्योल्लेखो नाम तज्ज्ञानजनितस्मृतिमात्रयोगः । स चास्त्येव प्रकृते । वाच्यरजतदर्शनानन्तरं वाचकरजतशब्दस्मृतेरुत्पत्तेः । अतो नासिद्धिरित्यत आह **तज्ज्ञानेति** । तज्ज्ञानजनितस्मृतिमात्रयोगित्वमुल्लेखशब्दार्थश्चेत्तदा रजतशब्दस्मृतिहेतुज्ञानत्वं रजतशब्दोल्लेखिज्ञानत्वमित्युक्तं स्यात् । तच्च न हेतूकर्तुं युक्तम् । यत्र पद्यादौ पूर्वपदमन्यदुत्तरं च रजतपदं तत्र पूर्वपदज्ञानेनोत्तररजतपदस्मृत्युत्पत्तेः पूर्वं पदज्ञाने रजतशब्दस्मृतिहेतुज्ञानत्वरूपहेतोर्विद्यमानतया रजतविषयकत्वरूपसाध्यस्य चासत्त्वेन व्यभिचारादित्यर्थः । **तद्धेतुत्वेन** रजतार्थिप्रवृत्तिहेतुत्वेन । अनेनेदमिति ज्ञाने हेतुसत्त्वमुपपादितम् । शुक्तिकालम्बनस्येत्यनेन तु साध्याभावः । **पूर्वेति** । रजतमिति ज्ञानं रजतज्ञानमिति पञ्चमपक्षस्य रजतस्य ज्ञानं रजतज्ञानं वेत्यादिना पूर्वमुक्ता ये चत्वारः पक्षास्ततो बहिर्भावाभावादित्यर्थः । तथा च तत्पक्षदूषणेनैवास्यापि दूषितत्वादयं पक्षो न युक्त इति भावः । **शुक्तीति** । घटेऽयं घट इति घटविषयकज्ञानस्य पुरोवर्त्यालम्बनतायाः पुरोवर्तिघटयोरभेदे सत्येव दर्शनाद्रजतविषयज्ञानस्यापि शुक्तिकालम्बनतायाः शुक्तिरजतयोरभेदं विनाऽसंभवात्तयोरभेदप्रसङ्गादित्यर्थः । **नेति** । ज्ञानस्य रजताकारत्वानभ्युपगमाद्रजतं च तज्ज्ञानं चेति द्वितीयपक्षो न युक्त इत्यर्थः । **शुक्तीति** । शुक्तिज्ञानस्यापि कदाचिच्छुक्तिसङ्केतितरजतशब्दस्मृतिहेतुत्वसंभवेन रजतशब्दोल्लेखिज्ञानरूपतया रजतज्ञानत्वेन शुक्तिविषयकत्वेन च रजतज्ञानं शुक्तिविषयकं सदन्यथाख्यातिरिति त्वदुक्तरीत्यान्यथाख्यातित्वप्रसङ्गादित्यर्थः । **तत्त्वमिति** । रजतज्ञानं शुक्तिविषयकं सदन्यथाख्यातिरिति वदता त्वयोक्तदोषानास्पदं यद्रजतज्ञानं स्वीक्रियते तज्ज्ञानत्वमेव मया हेतूकरिष्यत इत्यर्थः ।

**श्रीनिधि०**— इष्टसाधनतानुमितिरेव प्रवृत्तिहेतुर्न तु व्याप्तिज्ञानमिति चेत्तर्हि पक्षीकृतधर्मिज्ञानस्यापि प्रवृत्तिहेतुत्वाभावप्रसङ्गात् परम्परया हेतुत्वस्य उभयत्रापि साम्यादिति । विप्रतिपत्तिविषयं विप्रतिपत्तिधर्मिणम् । ननु ज्ञानस्य बाह्यरजतात्मकत्वाभावेऽपि तदपि विषयताकारत्वेन रजतं च तज्ज्ञानं चेत् उपपद्यत इत्यत आह **ज्ञानस्येति** । **उल्लेखार्थस्येति** । उल्लेखशब्दार्थतया विषयत्वे उच्यमाने नामविकल्पादन्यत्र जात्यादिविकल्पे शब्दस्य विषयत्वाभावेनासिद्धेरित्यर्थः । **तज्ज्ञानजनितेति** । तज्ज्ञानेन रजतशब्दानुभवेन संस्कारद्वारा जनिता या स्मृतिस्तन्मात्रस्य कारणत्वे । रजतपदस्मृतिकारणत्व इति यावत् । रजतज्ञानस्य संबन्धिदर्शनतया संस्कारोद्बोधनाद्वा रजतपदस्मृतिहेतुत्वान्नासिद्धिः । तथापि 'तत्प्रीतये रजतपीठपुराधिवासी'त्यादि श्लोकपाठवतः तत्प्रीतय इत्यादि पूर्वपदश्रवणे सति तज्जनिते पूर्वपदज्ञानेन संस्कारोद्बोधद्वारा रजतपदस्मरणसंभवेन पूर्वपदज्ञाने व्यभिचारः । तस्य रजतविषयकत्वाभावादित्यर्थः । केचित्तु तज्ज्ञानजनिते रजतज्ञाने जनितेत्यर्थ इत्याहुः । **विवेकाग्रहेति** । अनेन न रजतमिदमिति ज्ञानस्य न रजतविषयतेति सूचयति । **आद्यः कल्पः** । रजतस्य ज्ञानं रजतज्ञानमिति कल्पः । **व्याघातप्रसङ्गादिति** । रजतस्य ज्ञानमिति । रजतविषयज्ञानमित्यर्थः । तथा च तस्य शुक्तिविषयत्वाङ्गीकारो न युक्तः । विरोधादित्यर्थः । अन्याकारोल्लेखि अन्यालम्बनं ज्ञानमन्यथाख्यातिरिति मते शुक्तिविषयत्वं विहाय रजतविषयत्वस्याङ्गीकारे व्याघातप्रसङ्गादित्यर्थ इत्येक आहुः । **अभेदप्रसङ्गाच्चेति** । रजतविशेष्यकस्य ज्ञानस्य शुक्तिविशेष्यकत्वे शुक्तिरूप्ययोरभेदप्रसङ्गादित्यर्थः । प्रवर्तकसत्यरजतज्ञानेन ज्ञानविषयस्य पुरोवर्तिन एव रजताभेददर्शनात् अत्रापि रजतज्ञानस्य पुरोवर्तिविषयकत्वाङ्गीकारे रजतपुरोवर्तिनो अभेदः स्यादित्यर्थ इत्यपरे आहुः । **अन्यथासङ्केतितेति** । रजतवाचित्वेऽपि शुक्तौ सङ्केतितेत्यर्थः । पक्षान्तरं उत्प्रेक्षितं रजतोल्लेखि-ज्ञानत्वं रजतज्ञानत्वमिति । तच्च विशेषण एव विशेष्यत्वौदासीन्येन विषयितादित्वमात्रम् । शुक्ति-विशेष्यकत्वं च साध्यमिति व्याघातादिपरिहारे ममापि रजतविशेष्यकत्वं साध्यमिति न साध्याविशेषादिप्रसङ्ग इति भावः ।

**वा०चं०**— हेत्वनुपपत्तिविषयां शङ्कामुत्थापयति **स्यादेतदिति** । षष्ठीतत्पुरुषाश्रयणेन प्रथमस्य साकारवादिमताश्रयणेन द्वितीयस्य ज्ञाने शब्दभाननियमनादिमताश्रयणेन तृतीयस्योभयवादिमताश्रयणेन चतुर्थस्य मध्यमपदलोपिसमासाश्रयणेन पञ्चमस्य प्रसक्तिरिति द्रष्टव्यम् । **असंभवादिति** । रजतज्ञानयोः संयोगसमवायादे-रभावादिति भावः । **उभयेति** । साकारवादिना तथाऽङ्गीकारेऽपि वादिप्रतिवादिमतेऽसिद्धिरेवेति भावः । **असिद्धेरिति** । न च गृहीतशक्तिकं प्रति शब्देनार्थस्येवार्थेन शब्दस्मरणे बाधकाभावाच्चाक्षुषबोधेऽपि व्यक्त्या स्मारितः शब्दो विशेषणमत एव गोत्वस्येव शब्दस्यापि व्यक्तिविशेषणत्वात्तत्संसर्गोऽपि तादात्म्यमेवास्त्वत एवाह 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यत' इति । एवं च वाच्यवाचकतादात्म्यादर्थज्ञानस्य शब्दविषयकत्वं नासिद्धमिति वाच्यम् । चाक्षुषबोधेन तावदचाक्षुषशब्दस्यानुपनीतस्य भानम् । अर्थज्ञानानन्तर-भाविस्मृत्युपनीतस्य च नार्थज्ञाने भानमुपपद्यते । न च तदुपनायकान्तरं निर्विकल्पकानङ्गीकारिणां नियमेन पूर्वमस्ति । तस्मान्न शब्दस्य व्यक्तिभाने भानम् । केवलमर्थज्ञानोत्तरं व्युत्पत्तिसमयावगतः स्मर्यते शब्दो न तस्य केनचित्संसर्गो

भासते । भाने वा व्यक्तिरियं घटपदवाच्या घटजातीयत्वादित्याद्यनुमानादेव । तादात्म्यसंबन्धोक्तिस्तु नानार्थस्थले एकस्य शब्दस्यानेकतादात्म्यानुपपत्त्याऽनुपपन्नैवेत्यर्थज्ञानस्य शब्दविषयकत्वमसिद्धमेवेति भावः । **तज्ज्ञानेति** । उल्लेखार्थस्येत्यनुवर्तते । येन ज्ञानेन यस्य शब्दस्य स्मृतिर्जन्यते तज्ज्ञानस्य तच्छब्दस्मृतिजनकत्वमेव तच्छब्दोल्लेखित्वमित्यर्थः । ज्ञानेतरकारणजन्यशब्दस्मृतिजनकत्वं ज्ञानेन तदुल्लेखित्वरूपमित्यतस्तज्ज्ञानजनितेति स्मृतिविशेषणम् । मात्रग्रहणेन तद्विषयकत्वं व्यावर्तयति । रजतशब्दज्ञानजनितरजतपदस्मरणयोनित्वं तज्ज्ञानेत्याद्यर्थ इति केचित् । तत्र रजतपदसङ्केतज्ञानवत एवार्थज्ञानाद्रजतपदस्मरणं नान्यस्येति द्योतयितुं तद्विशेषणमिति ज्ञेयम् । **विवेकेति** । सत्यपि विवेकाग्रहे प्रवृत्त्यभावेनेदंरजतमिति ज्ञानयोरावश्यकत्वाद्रजतज्ञानस्योपस्थितेष्टभेदाग्रह-हेतुतावच्छेदककोटिनिविष्टत्वेनान्यथासिद्धत्वेऽपीदमिति ज्ञानस्य तदभावेन हेतुत्वं प्राभाकराणां संमतमित्याशयः । प्रतिबन्दीमुखेन हेतुं निष्कर्षयितुं तस्या अन्यथाख्यातिस्वरूपनिष्कर्षाभावेऽनुदयादन्याकारमन्यालम्बनं ज्ञान-मन्यथाख्यातिरिति वदता रजतज्ञानं शुक्तिविषयं शुक्तिरजतस्थलेऽन्यथाख्यातिरिति वक्तव्यमिति पक्षं निष्कर्षयितुं पक्षान्तरं दूषणाय प्रसञ्जयति **मैवमन्यथेति** । विषयविषयिभावस्यैव षष्ठ्यर्थत्वाद्धर्मिण एव विषयत्वाद्विशिष्टज्ञान-स्यान्यधर्मिकस्यान्यधर्मिकत्वं व्याहतमित्याह **व्याघातेति** । व्याघातभयाच्छुक्तिरजतयोरन्यत्वं वा त्याज्यमित्याह **शुक्तीति** । अन्यथासङ्केतितत्वं शक्तिरहितशुक्तिसङ्केतितत्वम् । ननु चतुर्थपक्ष एवाङ्गीक्रियते । न चोक्तदोषः । इष्टतावच्छेदकप्रकारकत्वस्य प्रवृत्तिहेतुपदेन विवक्षणात् । यद्वा शुक्त्यनुसारिरजतविषयकव्यवहारजनकत्वं रजतज्ञानत्वं विवक्ष्यतेऽतो नानुपपत्तिरिति चेत्तस्यैव हेतुत्वेऽपि न मम क्षतिरित्याशयेनाह **अत इति** । धर्मिहेतुविकल्पप्रयुक्तदूषणाप्रसक्तये रीत्यन्तरमाह **अपि चेति** । सिद्धसाधनतानिरासाय साध्ये मात्रपदम् । अयथार्थव्यवहारादिवृत्तिसत्ताद्यनैकान्तिकतानिरासाय हेतौ तदिति ध्येयम् । एवं स्वपक्षसाधनमभिधायान्यथा-ख्यातिनिषेधाय स्पष्टमनुमानद्वयमाह **शुक्तिकेत्यादिना** । तत्राद्यं संसर्गतादात्म्यसाधारणं द्वितीयं प्रतिवादिप्रसिद्ध्या पक्षसिद्धिमभिप्रेत्य प्रवृत्तं तादात्म्यासाधारणमिति द्रष्टव्यम् ।

**स०व्र०— साध्याविशिष्टत्वादिति** । न च रजतविषयत्वस्य साध्यत्वाद्रजतविषयकज्ञानत्वस्य हेतुत्वान्न साध्यावैशिष्ट्यमिति वाच्यम् । साध्यवद्धेतोरपि सन्दिग्धत्वादित्यत्र तात्पर्यात् । रजतशब्दोल्लेखीत्यत्रोल्लेखो नाम विषयत्वं वा रजतशब्दज्ञानजनितरजतपदस्मृतिहेतुत्वं वेति विकल्पं हृदि निधायाद्यं दूषयति **उल्लेखार्थस्येति** । द्वितीयं निराचष्टे **तज्ज्ञानजनितेति** । रजतशब्दज्ञानजनितेत्यर्थ इत्याहुः । यद्वा रजतज्ञानजनितरजतशब्दस्मृति-जनकत्वमात्रे विवक्षिते इत्यर्थः । मात्रपदेन पूर्वोक्तविषयत्वव्यावृत्तिः । इदं च रजतशब्दस्योल्लेखः स्मृतिरस्यास्तीति निर्वचने जन्यजनकभावस्य च षष्ठ्यर्थत्वं लभ्यत इति द्रष्टव्यम् । रजतशब्दस्मृतिहेतुत्वं रजतज्ञानस्य स्फुटीकर्तुं तज्ज्ञानजनितेत्युक्तम् । तथा च रजतशब्दस्मृतिहेतुज्ञानत्वे रजतशब्दोल्लेखिज्ञानपदेन विवक्षित इत्यर्थः । **पूर्वपदमात्रज्ञानेनापीति** । कस्मिंश्चिच्छ्लोकादौ रजतपदापेक्षया पूर्वपदश्रवणे तच्छ्लोकादिपाठवतः रजतपदस्मरण-संभवात्तत्र पूर्वपदज्ञाने रजतविषयत्वाभावाद्व्यभिचार इत्यर्थः । **व्याघातप्रसङ्गादिति** । बाधप्रसङ्गादित्यर्थ इत्याहुः । न च रजतशुक्ती इति ज्ञाने रजतविषयकस्यापि शुक्तिविषयकत्वदर्शनान्न व्याघात इति वाच्यम् । तस्य

त्वयाऽन्यथाख्यातित्वानभ्युपगमादिति भावः । **पक्षान्तरमिति** । सामानाधिकरण्यव्यवहारजनकज्ञानत्वमिति पक्षान्तरमुत्प्रेक्षणीयमित्यर्थः ।

**विठ्ठ०— रजतं च तत् ज्ञानं चेति** । रजताकारज्ञानमित्यर्थः । पञ्चमविकल्पस्याविवेचितप्रकाररजतमिति सामान्यज्ञानमित्यर्थः । षष्ठ्यर्थस्य संबन्धस्य तथाच रजते विषयत्वमेव हेत्वर्थ इति साध्याविशिष्टतेति भावः । तृतीये रजतशब्दोल्लेखिज्ञानत्वं नाम रजतशब्दविषयकज्ञानत्वं वा रजतशब्दानुभवजनिता या रजतस्मृतिः तन्मात्रं प्रति कारणभूतज्ञानत्वं वेति विकल्प्याद्यं दूषयति **उल्लेखार्थस्येति** । उल्लेखशब्दार्थस्य विषयत्वे पक्षीकृते रजतविषयकज्ञाने रजतशब्दविषयकत्वरूपहेत्वभावेनासिद्धिरित्यर्थः । द्वितीयं दूषयति **तज्ज्ञानजनितेति** । 'सुवर्णरजताद्यैस्तु पूर्णं धान्यसमृद्धिमदि'त्यादिश्लोकाभ्यासपाटववतां पूर्वपदभूतसुवर्णादिपदज्ञानेनापि रजतपदस्मृतिसंभवेन साध्याभाववति सुवर्णादिपदज्ञाने रजतशब्दानुभवजनितरजतशब्दस्मृतिमात्रयोगित्वरूपहेतोः सत्त्वेन व्यभिचार इत्यर्थः । यद्वा तज्ज्ञानजनितरजतस्मृतिमात्रकारणत्व इत्यर्थः । रजतशब्दज्ञानत्वमिति । पक्षव्यावृत्त्यर्थे मात्रशब्दः । **व्यभिचारादिति** । शुक्तिमात्रविषयके इदमिति ज्ञाने रजतविषयत्वरूपसाध्यरहिते रजतार्थिनः प्रवृत्तिहेतुज्ञानत्वरूपहेतोस्सत्त्वाद् व्यभिचारः । न च वाच्यमिदमिति ज्ञानस्य कथं रजतार्थिनः प्रवृत्तिहेतुत्वमिति ज्ञानरजतस्मृत्योर्विवेकाग्रहेण प्रवृत्त्युपपत्तेरिति भावः । **व्याघातप्रसङ्गादिति** । रजतविषयकत्वस्यैव षष्ठ्यर्थत्वेन रजतविषयकत्वस्यैव सिद्धत्वेन तस्य रजतविषयकत्वत्यागेन शुक्तिकाविषयत्वाङ्गीकारे व्याघातप्रसङ्गादित्यर्थः । **अभेदप्रसङ्गादिति** । घटविषयकं ज्ञानं करीरविषयकमित्युक्ते घटकरीरयोरेकत्वस्य दृष्टत्वादिति भावः । अनभ्युपगमादित्यस्योभयासिद्धेरित्यर्थः । **अन्यथासङ्केतितेति** । रजतशब्दोल्लेखिज्ञानं शुक्तिकाविषयं अन्यथाख्यातिरित्युक्ते यत्र रजतशब्दः शुक्तिकायामेव सङ्केतितः तत्र पिण्ड एव हि दृष्टः सन्निति न्यायेन शुक्तिज्ञानस्यापि रजतशब्दस्मृतिहेतुत्वेन तादृशशुक्तिविषयज्ञानं अन्यथाख्यातिः स्यादित्यर्थः । **यत्किञ्चिदेतदिति** । अस्मत्पक्षे दोषोक्तिरयुक्ता तवापि तद्दोषप्राप्तेः यश्चोभयोस्समो दोषः परिहारोऽपि वा सम इति न्यायेन तादृशदोषाभिधाने अकौशल्यापत्तेरिति भावः ।

**चषकः**— रजतशब्दोल्लेखित्वं 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यत' इति वचनात्तच्छब्दविषयकत्वमेकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति तच्छब्दविषयकस्मृतिजनकतारूपं वेति कल्पद्वयमभिप्रेत्याद्यं प्रत्याह **असिद्धेरिति** । **तज्ज्ञानजनितेति** । रजतज्ञानेन जनिता या रजतशब्दविषयिणी स्मृतिस्तन्मात्रनिरूपितकारणत्वरूपत्व इत्यर्थः । मात्रपदेनाद्यकल्पो व्यवच्छेद्यते । **व्याघातप्रसङ्गादिति** । शुक्तिज्ञाने रजतविषयकत्वाभावेन बाधप्रसङ्गादित्यर्थः । **अन्यथासङ्केतितेति** । रजतशब्दाच्छुक्तिः प्रत्येतव्येति पुरुषविशेषपरिभाषाविषयीकृतेत्यर्थः ।

**गूढ०**— हेतुं दूषयितुं विकल्पयति **स्यादेतदिति** । उभयासिद्धमेवाह **ज्ञानस्येति** । रजतज्ञानयोरभेदे च साकारवादापातः स्यादिति भावः । रजतशब्दोल्लेखिज्ञानमित्यत्र रजतशब्दविषयकं ज्ञानमिति वा रजतशब्दज्ञान-

जनितस्मृतिहेतुज्ञानमिति वा विवक्षितम् । नाद्य इत्याह **उल्लेखेति** । न द्वितीय इत्याह **तज्ज्ञानेति** । एवं च रजतशब्दज्ञानजनितस्मृतिहेतुत्वं पक्षेऽस्ति । एकसंबन्धिदर्शनस्यापरसंबन्धिस्मारकत्वात् । तथाच शुक्लमित्यादि पूर्वपदज्ञाने व्यभिचारः । तत्र हि रजतशब्दज्ञानेन जनिताया रजतशब्दस्मृतेः । तां प्रत्यस्ति हेतुत्वं रजतविषयत्वं तु नास्ति । कदाचिच्छुक्लमित्यादिपूर्वपदज्ञानेनापि प्रकरणवशात् रजतपदस्मरणसंभवादित्यर्थः । **यथार्थख्यातित्वादिति** । यथार्थत्वादित्यर्थः । **व्याघातप्रसङ्गादिति** । रजतस्य ज्ञानं पुनः शुक्तिविषयकं चेद्व्याघात इत्यर्थः । षष्ठ्या रजतस्य ज्ञानं प्रति विषयताया उक्तत्वादिति भावः । **शुक्तीति** । रजतस्य ज्ञानं शुक्तिविषयकं चेदित्यर्थः । **कदाचिदिति** । यत्र रजतशब्दः शुक्तिकायां सङ्केतिकः तत्र शुक्तिकायां दृष्टायां रजतं स्मरति तदेवेत्यर्थः ।

**प्रदीपः**— उल्लेखशब्दस्य कोऽर्थः किं विषयत्वं रजतशब्दज्ञानजनिता या रजतपदस्मृतिः तद्धेतुत्वं वाद्ये रजतविषयज्ञाने रजतशब्दविषयत्वस्यासिद्धिरित्याह **उल्लेखार्थस्येति** । द्वितीये रजतशब्दस्मृतिहेतुत्वेन तदविनाभूतशुक्तिपदज्ञानस्य रजतविषयत्वं स्यादित्याह **तज्ज्ञानेति** ।

**३४८ सु०— केचित्पुना रजतविषयं ज्ञानमित्येव हेत्वर्थमुपगम्य रजतेतराविषयत्वं साध्यमङ्गीकृत्य साध्याविशिष्टतादोषं परिहरन्ति । तदसत् । रजतघटाविति ज्ञाने व्यभिचारात् । अन्यतरासिद्धेश्च । तस्मादुक्त एव परिहारः ।**

**बिन्दुः**— प्राभाकरः स्वैकदेशिमतं खण्डयितुमुपन्यस्यति **केचित्त्विति** ।

**परि०**— अख्यातिवाद्येकदेशिमतमनूद्य निराह पूर्वपक्षी **केचित्पुनरित्यादिना** । पुना रजतेति संहितायां 'रोरी'ति रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽण' इति दीर्घे पुना रजतेति साधु । एवमग्रेऽपि बोध्यम् । **अन्यतरेति** । ख्यातिवादिना शुक्तिविषयत्वाङ्गीकारात् । यत्सन्निकृष्टकरणेनेत्यादिना वक्ष्यमाणविषयत्वस्य शुक्तावेव भावेन रजतेऽभावादिति भावः । **उक्त एवेति** । अतो रजतज्ञानं नामेत्यादिनोक्त एवेत्यर्थः ।

**यादु०— अन्यतरेति** । रजतमिति ज्ञानस्य शुक्तिसन्निकृष्टकरणजन्यत्वेन शुक्तिविषयकत्वादिति भावः । साध्ये सिद्धसाधनतावारणाय मात्रपदम् । हेतौ मात्रपदं सत्तायां व्यभिचारं वारयितुम् अयथार्थव्यवहारेऽपि तस्याः सत्त्वेन तत्र साध्याभावसंभवात् ।





**वं०प०—** किञ्च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वादित्युक्तानुमाने हेतूकृतं रजतज्ञानं नाम किमित्येवं स्यादित्यादिना शङ्कितदोषस्य परिहारः । अतो रजतज्ञानं नामोक्तपक्षेष्वित्यादिनोक्तप्रकारेणैव नान्यथेत्याशयेन कैश्चित्स्वयूथ्यैरुक्तं हेत्वर्थमनूद्य दूषयत्यख्यातिवादी **केचित्पुनरित्यादि** ।

**आनन्दः—** स्वैकदेशिमतं दूषयितुमनुवदति **केचिदिति** । **व्यभिचारादिति** । रजतविषयत्वे सति रजतेतर-घटविषयत्वस्य सत्त्वेन व्यभिचार इत्यर्थः । **अन्यतर इति** । न्यायमत इत्यर्थः । तेन रजतविषयत्वस्यानङ्गीकारादिति भावः ।

**कं०रा०—** प्राभाकरस्त्वेकदेश्युक्तसमाधानमनूद्यावद्यति **केचित्पुनरित्यादिना** । **अन्यतरेति** । विवादा-ध्यासितरजतज्ञानस्यान्यथाख्यातिवादिमते शुक्तिविषयकत्वेन तत्र रजतविषयकज्ञानत्वरूपहेतोरसिद्धेरित्यर्थः । **तस्मादिति** । एकदेश्युक्तसमाधानस्यानुपपन्नत्वाद्रजतज्ञानं शुक्तिविषयकं सदन्यथाख्यातिरिति वदता यद्रजतज्ञानत्वं स्वीक्रियते तदेव मया हेतूकरिष्यत इत्युक्त एव परिहारः साधुरित्यर्थः ।

**श्रीनिधि०—** **अन्यतरासिद्धिरिति** । नैयायिकैरिदंरजतमिति ज्ञानस्य रजतविशेष्यकत्वानङ्गीकारादिति भावः ।.

**विठ्ठ०—** ख्यातिवादिष्वेकदेशिमतमनूद्य निराकरोति **केचित्पुनरित्यादिना** । **अन्यतरेति** । रजतमिति ज्ञानस्यान्यथाख्यातिवादिना शुक्तिसन्निकृष्टकरणजन्यतया शुक्तिविषयत्वाङ्गीकारात् रजतेतरविषयत्वस्यैव सद्भावेन नासिद्धेरित्यर्थः ।

**चषकः—** **अन्यतरेति** । गुरुमते रजतमितिज्ञानस्य रजतसन्निकृष्टकरणजन्यत्वाभावेन तदविषयकतया हेतोरसिद्धिरित्यर्थः ।

**गूढ०—** स्वैकदेशिमतं दूषयितुमनुवदति **केचिदिति** । **व्यभिचारादिति** । रजतविषयत्वे सति रजतेतरघटविषयत्वस्य, सत्त्वेन व्यभिचार इत्यर्थः । **अन्यतर इति** । न्यायमत इत्यर्थः । तेन रजतविषयत्व-स्यानङ्गीकारादिति भावः ।

**प्रदीपः—** **केचिदिति** । प्रथमपक्षमभ्युपगम्य साध्याविशिष्टतापरिहारे घटरजतोभयगोचरज्ञाने रजतेतरा-विषयत्वं नास्तीति व्यभिचारः शुक्तिविषयत्वस्य परेणाङ्गीकारादन्यतरासिद्धिश्चेत्यर्थः ।

**३४९ सु०— अपि च ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात्प्रमात्ववत् । शुक्तिका न रजतत्वेनावभासते तद्रूपेणासत्त्वात्; यद्यद्रूपेणासत्तत्तद्रूपेण नावभासते यथा मेरुः सर्षपत्वेन । इदं रजततादात्म्यं न प्रत्येतुं शक्यमसत्त्वात्कूर्मरोमवत् । तस्मादख्यातिपक्ष एव श्रेयानिति ।**

**वं०प०— यथार्थमात्रवृत्तीति** । यथार्थज्ञानमात्रवृत्तीत्यर्थः । अत्र मात्रपदत्यागे ज्ञानत्वस्य यथार्थज्ञानवृत्तित्वस्य परेणाङ्गीकृततया सिद्धत्वात्सिद्धसाधनता स्यादतो मात्रपदम् । हेतौ मात्रपदत्यागे सत्ताजातौ व्यभिचारः स्यात् । तत्र ज्ञानवृत्तित्वसद्भावेऽपि द्रव्यादावपि वृत्तित्वेन यथार्थज्ञानमात्रवृत्तित्वरूपसाध्याभावात् । अतो मात्रपदम् । ज्ञानेतरवृत्तित्वे सति तद्वृत्तित्वं मात्रशब्दार्थः । तथा च सत्तायां व्यभिचार इति द्रष्टव्यम् ।

**आनन्दः**— अनुमानान्तराण्यप्याह **अपि चेति** । यद्यप्यत्र रजततादात्म्यस्य परंप्रत्यसिद्धत्वान्न तत्पक्षीकरणं युक्तम् । तथापि परमतानुसारेण वा असिद्धस्यापि पक्षत्वाङ्गीकारेण वा तथोक्तमित्यवधेयम् ।

**कं०रा०— ज्ञानमात्रेति** । ज्ञानवृत्तित्वादित्युक्ते प्रमेयत्वादौ व्यभिचारः । तस्यायथार्थभूतेच्छावृत्तित्वेन यथार्थमात्रवृत्तित्वरूपसाध्यरहितत्वात्तन्निरासाय मात्रपदम् । प्रमेयत्वादेर्ज्ञानादितरस्मिन्नपि सत्त्वेन ज्ञानमात्रवृत्तित्वाभावात् । अवृत्तिगगनादौ व्यभिचारनिरासाय ज्ञानवृत्तीत्युक्तम् । तत्र ज्ञानपदं स्वरूपकथनपरम् । अवृत्तौ व्यभिचारस्य वृत्तिमत्त्वग्रहणेनैव निरस्तत्वात् । तथा च ज्ञानेतरावृत्तित्वे सति वृत्तिमत्त्वादित्यत्र तात्पर्यम् । नन्विदानीं ज्ञानत्वमिति प्रतीत्या ज्ञानत्वस्य ज्ञानेतरकालवर्तित्वादसिद्धिरिति चेन्नैवम् । ज्ञानेतरावृत्तित्वशब्देन जगदाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन ज्ञानेतरवृत्तित्वाभावस्य विवक्षितत्वात् । वस्तुतस्त्विदानीमाकाश इत्यादिप्रतीत्या गगनादेरपि कालवृत्तितया वृत्तिमत्त्वग्रहणमात्रेण तत्र व्यभिचारनिरासाभावाज्ज्ञानपदं सार्थकमेवेति द्रष्टव्यम् ।

**स०व्र०— ज्ञानत्वमिति** । सिद्धसाधनवारणाय मात्रपदम् । ज्ञानवृत्तित्वादित्युक्ते सत्तायामनैकान्त्यमयथार्थव्यवहारेऽपि तस्याः वृत्तेरत उक्तं **मात्रेति** ।

**विठ्ठ०— यथार्थमात्रवृत्ती**त्यत्र सत्यरजतज्ञानादिवृत्तित्वेन सिद्धसाधनतावारणाय मात्रपदम् । सत्तया व्यभिचारवारणाय हेतौ मात्रपदम् ।

**गूढ०**— अनुमानान्तराण्यप्याह **अपि चेति** । यद्यप्युत्तरत्र रजततादाम्यस्य परंप्रत्यसिद्धत्वान्न तत्पक्षीकरणं युक्तम् । तथापि परमतानुसारेण वा असिद्धस्यापि पक्षत्वाङ्गीकारेण वा तथोक्तमित्यवधेयम् ।

**प्रदीपः**— अन्यथाख्यातिमतमुपसंहरति **तस्मादिति** ।

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

सुधा वा पठनीया । वसुधा वा पालनीया ॥

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed At : Sudha Mudrana, Bangalore - 4 ✆ : 667 6942